## चाणक्यसूत्राणि



## मनुः

### याज्ञवल्क्यः



### कात्यायनः



### व्यासः



### देवलः



### यमः



### पराशरः



### बृहत्पराशरः



### कश्यपः



### बुधः



### आश्वलायनः

यात्रा– युद्धसामान्यविचारः –

शिबिरकरणं शिबिररक्षणं च २६६९.

यात्रा– व्यूहरचना–

क्रौञ्चश्येनादयो व्यूहाः २७३०.

यात्रा– धर्मयुद्धम्–

धर्मयुद्धे आततायिब्राह्मणवधे न दोषः २७८६.

यात्रा– विजयोत्तरकृत्यानि–

योधेभ्यो द्रव्यदानम्, पराजितानामाश्वासनं चिकित्सनं च २८२४.

राजाभिषेकः –

ऐन्द्रविधिना राजाभिषेकः २९४६.

## विश्वकर्मा

राजचिह्नानि राजोपकरणानि च–

भूषणेषु प्राणिविशेषाणां प्रतिकृतिः वर्ज्या २८२९.

## मत्स्यपुराणम्

यात्रा–उत्थानम्–

दैवं पौरुषं च स्वकर्मैव, दैवपौरुषकालाः त्रयः समुच्चित्य फलदाः २४०८.

यात्रा–यात्राकालः–

देशकालोपपन्ना यात्रा, शत्रोः प्रतिकूलानि आत्मनश्चानुकूलानि दैवचिह्नानि ऐहिकलक्षणानि च वीक्ष्य यात्रासमयनिर्णयः २४५५.

यात्रा–शुभाशुभनिमित्तादिविचारः–

मत्स्योक्तानि शुभानि अशुभानि च निमित्तानि २५०२. स्वप्नदृष्टानि शुभाशुभानि लक्षणानि, दुःस्वप्ननाशककर्माणि २५०३.

यात्रा–धर्मयुद्धम्–

युद्धे अनिवर्तित्वं क्षात्रधर्मः २७८६.

उत्पाताद्यनिष्टसूचकानि तच्छान्तयश्च–

महोत्पातेषु कर्तव्या शान्तिः २९१८. अशुभनिमित्तानि उत्पाताश्च, तेषु कर्तव्यं गर्गोक्तं शान्तिकर्म २९२०. ग्रहयज्ञः २९२८.

## लिङ्गपुराणम्

जयाभिषेकः–

युद्धे समुपस्थिते राज्ञा कर्तव्यो जयाभिषेकविधिः २९८७.

## स्कन्दपुराणम्

यात्रा–अभियास्यतो राज्ञः कर्तव्यानि–

संनद्धसैन्यस्य क्षत्रियस्य प्रथमं शत्रुभूमौ अभियानं कर्तव्यम् २५७३.

यात्रा–युद्धसामान्यविचारः–

शत्रुभूमिषु युद्धमिष्टम् २६६९.

यात्रा–धर्मयुद्धम्–

धर्मयुद्धे मरणं स्वर्ग्यम्, युद्धात्पलायनम् अधर्मः २७८६.

कौमुदीमहोत्सवः–

कौमुदीमहोत्सवः २८६२.

## विष्णुधर्मोत्तरपुराणम्

यात्रा–मुहूर्तविचारः–

यात्राकालनिर्णये दिगयनर्तुद्वारनक्षत्रतद्व्रतग्रहतिथ्यादिविवेकः इष्टानिष्टनिमित्तविवेकश्च २४६१.

यात्रा–शुभाशुभनिमित्तादिविचारः–

यात्राकाले शुभाशुभानि शकुनादीनि निमित्तानि २५०८. प्रश्नदेशकालानुसारेण प्रष्टुः शुभाशुभविवेकः २५१४.

यात्रा–दैवतकर्माणि–

युद्धसंभाराभिमन्त्रणम् २५३७. यात्रोद्यतस्य राज्ञः यात्रादिनाव्यवहितपूर्वसप्ताहे प्रतिदिनं कर्तव्यानि कर्माणि २५३९. यात्रादिनकर्माणि २५४१. सङ्ग्रामदिनाव्यवहितपूर्वस्मिन् दिने कर्तव्यानि कर्माणि २५४२.

यात्रा–युद्धसामान्यविचारः–

युद्धभूम्यनुरोधेन व्यूहनिवेशः, योधानामुत्तेजनम् २६६९. युद्धे अश्वरथरथिहस्त्यादीनां संनहनविधिः २६७०.

## गरुडपुराणम्

यात्रा— व्यूहरचना—

षड्विधबलस्य व्यूहनप्रतिव्यूहनप्रकाराः व्यूहप्रकाराश्च २७३२.

यात्रा—धर्मयुद्धम्—

धर्मयुद्धनियमाः, युद्धे वध्यावध्यविवेकः २७९०.

यात्रा— कूटयुद्धम्—

कूटयुद्धप्रकाराः २८०६.

यात्रा— विजयोत्तरकृत्यानि—

जितदेशाचारपालनम्, तद्देश्यानामवमाननं वर्ज्यम्, स्त्रीरक्षणम्, देवपूजनम्, जितशत्रोः तत्कुटुम्बस्य च रक्षणम्, संविभागः २८२५.

राजमहिषी—

धर्मलक्षणा महिषी वरणीया २८२८.

राजचिह्नानि राजोपकरणानि च—

राज्ञः चामरदण्डच्छत्रभद्रासनानां स्वरूपम् २८३१.

राज्ञो विविधानि कर्माणि—

जन्मनक्षत्रे प्रतिमासमगस्त्योदये चातुर्मास्ये च राज्ञः कर्तव्यानि २८५८.

इन्द्रध्वजोच्छ्रायविधिः—

शिबिरे ध्वजपूजाविधिः २८७३.

नीराजनविधिः—

नीराजनविधिः यथा— वाहनमन्दिरगमनम्, देवाष्टगजपूजा, हवनम्, गजानां स्नापनपिण्डदानादीनि, निष्क्रामणम्, राजलिङ्गपूजा, वाहनारोहणम्, गृहप्रत्यागमनं च २८८४.

देवीपूजाविधिः—

आश्विने मासे शुक्लपक्षे अष्टम्यां भद्रकाल्याः आयुधादिराजलिङ्गानां च पूजा नवम्यां च भद्रकाल्याः पूजा २८८९.

राजाभिषेकः —

राज्ञि मृते न कालनियमः राजाभिषेकस्य, पुरोहितेन कार्या ऐन्द्री शान्तिः, पुरोहितादिभिः कर्तव्यो राजाभिषेकः, राजकर्तव्यं देवतापूजनम्, पट्टमुकुटबन्धः, भद्रासने स्थितिः, अमात्यादिदर्शनम्, पुरोहितादिद्विजपूजा, वृषस्पर्शनम्, गोपूजनम्, अश्वगजपूजा, वाहनारोहणम्, राजमार्गपरिभ्रमणम्, सर्वपरिजनपूजा, गृहप्रवेशः २९७४. अभिषेकमन्त्राः २९७५.

## देवीपुराणम्

राजचिह्नानि राजोपकरणानि च —

राज्ञः भद्रासनलक्षणम्; राज्ञः पट्टलक्षणम् २८३१.

राज्ञो विविधानि कर्माणि—

स्वातिनक्षत्रयुक्तामाश्विनशुक्लप्रतिपदमारभ्य नवमीं यावत् साश्वैर्नरैः कर्तव्या अश्वपूजा २८५८.

इन्द्रध्वजोच्छ्रायविधिः—

ध्वजयष्टिवृक्षाः, यष्टिपरिमाणम्, वृक्षपूजनम्, वृक्षच्छेदनम्, यष्ट्यानयनम्, यष्ट्या अलंकरणम्, यष्टिलक्षणानि, समुच्छ्रायकर्म २८७४. ध्वजतदङ्गानां पातादिदोषे कर्तव्यानि २८७६.

देवीपूजाविधिः—

खड्गादिषु लिखितदेवीपूजनम्; प्रतिसंवत्सरं विशेषतः कन्यास्थिते रवौ महानवम्यां महिषासुरमर्दिन्या देव्याः पूजोत्सवः २८९४. कार्तिकारम्भे कर्तव्या देव्याः पूजा २८९६.

गवोत्सर्गविधिः—

कार्तिकामावास्यायां राज्ञा कर्तव्यो गवोत्सर्गः २८९८.

वसोर्धाराविधिः—

आश्विनादिमासतिथिविशेषेषु चन्द्रसूर्योपरागयोः तीर्थविशेषेषु व्रतबन्धादिशुभकर्मसु च राज्ञा कर्तव्यं वसोर्धाराकर्म २८९९.

## आदित्यपुराणम्

यात्रा— धर्मयुद्धम्—

युद्धात् निवर्तनम् अधर्मः, युद्धे मरणं स्वर्ग्यम्, धर्मयुद्धनिमित्तानि २७९०.

## कालिकापुराणम्

राज्ञो विविधानि कर्माणि—

आश्विनादिमासानां तिथिनक्षत्रविशेषेषु दुर्गाश्रीविष्णु-शक्रादिदेवतानां राज्ञा कर्तव्यानि पूजादीनि कर्माणि २८५८.

इन्द्रध्वजोच्छ्रायविधिः—

ध्वजयष्टिकृते प्रशस्ता वर्जनीयाश्च वृक्षाः, प्रशस्त-वृक्षपूजनम्, वृक्षच्छेदनम्, यष्टिपरिमाणतारतम्यम्, यष्ट्यधिवासनम्, शक्रादिपूजनम्, ध्वजोत्थापनम्, होमः, शक्रविसर्जनम्, केतुविसर्जनम् २८७७.

नीराजनविधिः—

चतुरङ्गबलस्य नीराजनविधिः, यथा—यज्ञमण्डप-विधानम्, अश्वपूजनम्, तोरणकरणम्, नवग्रहविश्वे-देवानां विष्णुप्रमुखानां पूजनम्, सप्ताहहोमः, अष्ट-कलशपूजा, यज्ञभूमौ राज्ञः सप्ताहवासः, गजाश्वपूजा, यज्ञभूमौ सूर्यपूजा, गजाश्वनयनं भक्तपिण्डदानं च, राज-पुत्राणां वाहनदर्शनम्, राज्ञः अश्वारोहणम्, बलनीरा-जनं च २८८५.

राजाभिषेकः—

राजाभिषेकः युवराजाभिषेकश्च २९७८.

पुष्याभिषेकः—

पुष्यस्नानकालः स्थानं च, पुष्यस्नानं शान्तिकर्मैव, स्थानाधिवासनम् २९८०. पुष्यस्नानरात्रौ राज्ञा दृष्ट-स्वप्नशुभाशुभं विज्ञेयम्, अशुभस्वप्नदर्शने कर्तव्यं कर्म च २९८१. पुष्याभिषेकस्वरूपम्, पुष्यस्नानविधिना राजाभिषेको युवराजाभिषेकश्च कर्तव्यः २९८२.

## कामन्दकीयनीतिसारः

यात्रा— उत्थानम्—

बुध्द्युत्साहयुक्ते पौरुषे विजयः २४०९.

यात्रा— यात्राकालः—

अप्रतिमशक्तिसंपन्ने व्यसनमुक्ते आत्मनि व्यसनग्रस्ते व्यसनमुक्ते वा शत्रौ च देशकालविशेषान् विचिन्त्य यात्राकालनिर्णयः २४५८.

यात्रा— शुभाशुभनिमित्तादिविचारः —

जयपराजययोः शुभाशुभनिमित्तानि २५१६.

यात्रा— अभियास्यतो राज्ञः कर्तव्यानि—

पश्चात्प्रकोपबाह्याभ्यन्तरप्रकोपपरामर्शः तत्प्रतिकार-चिन्ता च २५७३. विचार्याणि क्षयव्ययलाभलक्षणानि; लाभविघ्नाः कार्यव्यसनानि २५७६. सद्वृत्तः अनुरक्तः सप्तविधः पक्षः स्वसहायः २५७७. आत्मगुणाः शक्ति-त्रयं द्विविधा धीश्च अभियास्यतः संपदः २५७८. अभि-यानानुकूलदेशकालविवेकः २५८०. अभियाने नृपचर्या २५८४. अभियाने दूतप्रचारः २५८५. सामाद्युपायत्रये विफले दण्डप्रयोगः; षण्णां मौलादीनां बलानां गुण-तारतम्यविवेकः २५८९.

यात्रा— युद्धसामान्यविचारः—

यानकाले शत्रुवृत्तेरुच्छेदनं पुरःप्रदेशविचयनं पर-कर्मवेदनं मार्गशोधनमन्नोदकविधानं च कार्यम् २६७२. गजानामनुकूलः अभियानयोग्यः कालः २६७३. स्कन्धावारनिवेशपद्धतिः शत्रुदेशे रिपुपुरसंनिधौ २६७५. व्यसनप्रतिकारः; चतुर्णां सैन्याङ्गानां कर्माणि भूमयश्च २६८१. योधेभ्यः शत्रुविशेषघातिभ्यः द्रव्यदानम् २६८५. रिपुदोषान् वीक्ष्य रिपुबलहननं विशेषतो हस्तिबलहननं स्वसंरक्षणं च २६८६.

यात्रा— व्यूहरचना—

रिपुभयानुसारेण व्यूहनम्, व्यूहनप्रतिव्यूहनप्रकाराः, व्यूहप्रकाराः २७३४.

यात्रा— कूटयुद्धम्—

प्रकाशयुद्धासंभवे कूटयुद्धम्, कूटयुद्धानुकूलानि देश-कालादीनि कूटयुद्धप्रकाराश्च २८०७.

यात्रा— विजयोत्तरकृत्यानि—

जितपरराष्ट्ररञ्जनम् २८२५.

## शुक्रनीतिः

यात्रा—उत्थानम्—

सुगतिदुर्गतिकारणं कर्मैव, चातुर्वर्ण्यं गुणकर्मतः न जात्या, कर्माधीनो बुद्ध्युदयः, दैवं पौरुषं च स्वकर्मैव,

फलानुमेयं दैवम्, दैवपौरुषकालाः समुच्चित्य सिद्धिदाः २४१३.

यात्रा—यात्राकालः—

उत्तममध्यमाधमा ऋतवः, सुदैवचिह्ने अधिकबले चाऽऽत्मनि यात्राकालः, गोस्त्रीविप्रव्यसने न कालनियमः २४५९.

यात्रा—अभियास्यतो राज्ञः कर्तव्यानि—

युद्धार्हो राजा; अभियाने देशकालादिविवेकः २५९५. विजयप्रदं स्वसैन्यस्वरूपम् २५९६.

यात्रा—युद्धसामान्यविचारः—

सैन्याय पारितोष्यदानम्, याने राजादीनां मध्येऽवस्थानम् २६८७. युद्धलक्षणं युद्धप्रकाराश्च २६८८. युद्धस्वरूपनिरूपणम्, स्वसैन्यरक्षणं व्यसनेभ्यः २६८९. शत्रुवञ्चनमपि इष्टम्; भिन्ना स्वसेना नाश्या, विशिष्टयुक्तकर्मकर्तृभ्यः स्वयोधेभ्यः पारितोष्यदानम् २६९०. शत्रुपीडाप्रकाराः विविधा शत्रुनाशरीतिश्च २६९१.

यात्रा— व्यूहरचना—

रिपुभयानुसारेण व्यूहनम्, व्यूहनप्रतिव्यूहनप्रकाराः, व्यूहप्रकाराः २७४९.

यात्रा— धर्मयुद्धम्—

धर्मयुद्धनिमित्तानि, युद्धात् अनिवर्तनं धर्मः २७९१. अवध्यानां गुरुब्राह्मणादीनां युद्धे वधः न दोषः २७९२. युद्धात् निवर्तनम् अधर्मः २७९३. निमित्तविशेषे ब्राह्मणस्यापि युद्धं धर्मः; युद्धनियमाः; युद्धे वध्यावध्यविवेकः २७९४.

यात्रा— कूटयुद्धम्—

धर्मयुद्धकूटयुद्धयोर्विकल्पः २८१२.

यात्रा— विजयोत्तरकृत्यानि—

जितराज्यसंबन्धीनि कर्तव्यानि, जितद्रव्यसंविभागः २८२५.

## योगयात्रा

यात्रा— उत्थानम्—

अन्यजन्मकृतं कर्मैव दैवम्, ग्रहादिकं धर्मानुष्ठानं च दैवापेक्षमेव फलदम् २४१६.

यात्रा— यात्राकालः—

अनुकूलदेशकालविचारः, शरदृतुः वसन्तश्च यात्राकालः, रिपुदोषे न कालनियमः २४५९.

यात्रा— मुहूर्तविचारः—

यात्रायां शुभाशुभग्रहयोगाः २४६३.

यात्रा— शुभाशुभनिमित्तादिविचारः—

गुणान्वितस्य राज्ञ एव यात्रायां शुभनिमित्तानि शुभफलदानि, न दोषान्वितस्य २५१९. शुभाशुभानि शकुनादीनि निमित्तानि २५२०.

यात्रा— दैवतकर्माणि—

दिक्पतिभ्यः बल्युपहारः २५४६. नक्षत्रेषु विजयस्नानप्राशनानि २५४८.

यात्रा— अभियास्यतो राज्ञः कर्तव्यानि—

यानात्पूर्वं दुर्गरक्षणादीनि कर्तव्यानि २५९६.

यात्रा— युद्धसामान्यविचारः—

समर्थसैन्यलक्षणानि २६९१. स्वसैन्योत्साहनविधिः २६९२. युद्धकाले युद्धान्ते च शुभाशुभनिमित्तानि २६९४.

यात्रा— व्यूहरचना—

रविमङ्गलादिग्रहस्वामिकाः व्यूहप्रकाराः २७५०.

यात्रा— धर्मयुद्धम्—

धर्मयुद्धे अवध्याः २७९४.

यात्रा— विजयोत्तरकृत्यानि—

जितपुरदेशसंबन्धीनि कर्तव्यानि, ज्योतिःशास्त्रानुसारेण देशपुरगृहप्रवेशः २८२६.

## नीतिवाक्यामृतम्

यात्रा— उत्थानम्—

दैवमानुषलक्षणम्, दैवमचिन्त्यं पौरुषं चिन्त्यम्, दैवावलम्बनात् पौरुषालम्बनं श्रेयः २४१७. अन्यशस्त्रेभ्यः प्रज्ञाशस्त्रं बलवत्तरम् २४१८. निर्भयत्वमिष्टम्; आक्रमणे अपसरणे च समे विनाशे आक्रमणम्, अन्यथा आत्मरक्षणार्थमपसरणम् २४२०. सामसाध्ये न युद्धम्; सामापवादो दण्डेनैव साध्ये शत्रौ २४२१.

## युक्तिकल्पतरुः



## मानसोल्लासः

## भूपालवल्लभः

यात्रा– व्यूहरचना–

व्यूहाः बलाक–काक–श्येन–क्रौञ्च–शकट–सिंह–चक्र–पद्म–माला–पुष्करिणी–सर्पा–ग्नि–खलक–सौपर्ण–दण्ड–मकर–सूच्यादयः, व्यूहनप्रतिव्यूहनप्रकाराः २७५२.

## अनिर्दिष्टकर्तृकवचनानि

यात्रा– उत्थानम्–

दैवपौरुषयोर्विवेकः २४२१.

यात्रा– शुभाशुभनिमित्तादिविचारः–

शुभाशुभानि नेत्रस्फुरणानि निमित्तानि; दुःस्वप्ननाशनोपायाः २५३१.

यात्रा– व्यूहरचना–

वज्रव्यूहः २७५३.

यात्रा– कूटयुद्धम्–

येन केनाप्युपायेन शत्रोर्वधः इष्टः २८१३.

राजाभिषेकः –

राज्ञा कर्तव्यः राजपुत्रस्य राजाभिषेकः २९७८.

---

# परिशिष्टम्

## महाभारतम्

संघवृत्तम्–

गणविश्लेषकारणानि, गणरक्षणविवृद्धिकरा उपायाः ३.

## वाल्मीकिरामायणम्

राजकर्तव्यानि–

राजकर्तव्यं शरणागतरक्षणम् १.

प्रकृतयः– स्वामी–

सेनाप्रियराजगुणाः २.

## कौटिलीयमर्थशास्त्रम्

संघवृत्तम्–

गणविश्लेषणोपायप्रयोगाः, गणप्रकाराः, गणस्वायत्तीकरणविधिः ५.

## विष्णुधर्मोत्तरपुराणम्

राज्ञो धार्मिककृत्यानि– राज्ञो विविधानि कर्माणि–

प्रतिमासं कर्तव्योऽभिषेकः, मासविशेषतिथिविशेषेषु कर्तव्या देवताविशेषपूजा ११.

## ब्रह्मपुराणम्

राजदिनकृत्यम्–

राज्ञः संध्याकालकृत्यम् १.

## नीतिवाक्यामृतम्

उपायाः–दानम्–

बहुलाभार्थमल्पदानं श्रेयः २.

संघवृत्तम्–

संघातस्य बलीयस्त्वम् १०.

# शुद्धिपत्रम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १४(अनु.) | १ | २२ | नाम्न्यः | नाम्न्याः |
| १६ ,, | २ | ५ | २५०० | २५५० |
| २३७८ | ,, | २५ | स्वात् | स्यात् |
| २३८१ | १ | २ | नाम्न्यः | नाम्न्याः |
| २४१६ | ,, | २२ | प्रति | प्राति |
| २४२७ | २ | १० | वषवि | वर्षवि |
| २४३४ | ,, | १६ | वात्तुगृहि | वात्तु गृहि |
| २४३८ | १ | ३० | भिच्छति | मिच्छति |
| २४४६ | २ | २८ | मामु. | भामु. |
| २४५८ | ,, | ३२ | ( द्विहिता ) दहिता | द्विहिता ( दहिता ) |
| २४९१ | ,, | ६ | पथिवी | पृथिवी |
| २४९५ | १ | ८ | मृदड्गा | मृदङ्गा |
| २५२९ | ,, | ९ | मर्ध्ये | मर्घ्ये |
| ,, | २ | २१ | ॐ ह्रीं | ॐ ह्रीं |
| २५३० | ,, | ३४ | परित | परीत |
| २५४७ | १ | ७ | तिलोद | तिलौद |
| २५५३ | २ | ,, | तद्विहि | तद्विहि |
| २५६७ | १ | ४ | परिक्ष | परीक्ष |
| २५७० | २ | २४ | अर्थोह्यर्थ | अर्थो ह्यर्थ |
| २५८९ | ,, | ,, | च्छोका | च्छ्लोका |
| २६०९ | ,, | २ | तुशक्त | तुमशक्त |
| २६११ | १ | १४ | दीघका | दीर्घका |
| ,, | २ | ३१ | प्रार्वतं | पार्वतं |
| २६२८ | ,, | ११ | तद्वतं | तद्गतं |
| २६२९ | ,, | १२ | त्रैर्भातृ | त्रैर्भ्रातृ |
| २६४४ | १ | ६ | सत्यं | सख्यं |
| २६६७ | २ | २० | प्राप्युपा | प्राप्त्युपा |
| २६७५ | ,, | ३१ | रश्र ( रत्न ) | रश्रं ( रत्नं ) |
| २७०९ | २ | २ | मेवाऽसी | मेवाऽऽसी |
| २७१२ | १ | १ | दक्षिणा | दक्षिण |
| २७१७ | ,, | ११ | युत्सुवः | युत्सवः |
| २७३२ | ,, | १५ | शठा ( शटा ) | शठा भ ( शटाभ ) |
| २७५९ | २ | २६ | रैणे | रणे |
| २७६५ | ,, | ३५ | मानिकः | मानकः |
| २७७५ | १ | २२ | १५ उत्तरार्धे | १५ |
| ,, | १ | २३ | ३३ ( सक्त | ३३ उत्तरार्धे ( सक्त |
| २७८६ | २ | ८ | दैत्या | दैत्याः |
| २८३० | १ | १६ | सिंहः | सिंहाः |
| २८५७ | ,, | २ | कृत्स्ना | कृत्स्नां |
| २८६१ | २ | १६ | त्यक्वा | त्यक्त्वा |
| २८६४ | ,, | ४ | इद्रेण | इन्द्रेण |
| २८८५ | ,, | १ | चाश्वनां | चाश्वानां |
| २८९२ | १ | २० | गुरुत्मा | गरुत्मा |
| ,, | २ | ३१ | प्रदस्वं | प्रदस्त्वं |
| २९०० | १ | ४ | सताऽथ | सताथ |
| २९०७ | २ | २५ | ४५८. दी | ४५८ दी |
| २९१२ | ,, | २० | भर्तृणां | भर्तॄणां |
| २९२० | १ | २२ | पत्र | तत्र |
| २९२४ | २ | ३३ | ( चाऽथ ) | ( चाथ ) |
| २९३३ | ,, | २१ | राक. | राको. |
| २९५८ | ,, | १५ | ( रैवत ) | ( रेवत ) |
| २९९० | १ | १३ | ऐन्द्रं | ऐन्द्रे |
| ,, | २ | २० | स्रभिः | स्राभिः |
| २९९१ | ,, | २४ | मनका | मानका |
| २९९४ | ,, | ३२ | ( १ ) | ( ८ ) |
| २९९९ | ,, | ८ | शुणु | शृणु |

# धर्मकोशः

## राजनीतिकाण्डम्

### यात्रा

### उत्थानम्

**वृद्धहारीतः**

प्रजायाः स्वराष्ट्रस्य च रक्षणार्थं युद्धम्

[1]प्रजासंरक्षणार्थाय संग्रामं कारयेन्नृपः ॥

**विष्णुः**

अभियुक्तेन स्वराष्ट्ररक्षणं कर्तव्यम्

[2]परेणाभियुक्तश्च सर्वात्मना स्वं राष्ट्रं गोपायेत् ॥

**महाभारतम्**

जयहेतवः वीर्यं कर्म दैवं च, दैन्यं मोहश्च पराजयहेतू

**वैशंपायन उवाच—**

[3]पार्थः प्राप्य धनुःश्रेष्ठमक्षय्यौ च महेषुधी ।
रथं ध्वजं सभां चैव युधिष्ठिरमभाषत ॥

**अर्जुन उवाच—**

[4]धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् ।
प्राप्तमेतन्मया राजन् दुष्प्रापं यदभीप्सितम् ॥

वीर्यम् उत्साहः । पक्षः वासुदेवः । भूमिः मन्त्रपूर्वकः कार्यनिश्चयः । बलं शारीरसेनादिरूपं सामर्थ्यम् ।
नीटी.

(१) बृहास्मृ. ७।२२४.

(२) विस्मृ. ३।४३ ; राक. १४२ (स्वं० ) ; राप्र. ४१२ (स्वं० ).

(३) भा. २।१५।६ ; भामु. २।१६।६.

(४) भा. २।१५।७ (अर्जुन उवाच० ) ; भामु. २।१६।७ धनुरस्त्रं ( धनुः शस्त्रं ).

[1]कुले जन्म प्रशंसन्ति वैद्याः साधु सुनिष्ठिताः ।
बलेन सदृशं नास्ति वीर्यं तु मम रोचते ॥

वैद्याः विद्यावन्तः । बलेनेति । उत्साह एव श्रेयानित्यर्थः ।
नीटी.

[2]कृतवीर्यकुले जातो निर्वीर्यः किं करिष्यति ।
निर्वीर्ये तु कुले जातो वीर्यवांस्तु विशिष्यते ।
क्षत्रियः सर्वशो राजन् यस्य वृत्तिः पराजये ॥

[3]सर्वैरपि गुणैर्हीनो वीर्यवान् हि तरेद्रिपून् ।
सर्वैरपि गुणैर्युक्तो निर्वीर्यः किं करिष्यति ॥

[4]द्रव्यभूता गुणाः सर्वे तिष्ठन्ति हि पराक्रमे ।
जयस्य हेतुः सिद्धिर्हि कर्म दैवं च संश्रितम् ॥

सिद्धिः योगः । अत्यन्ताभिनिवेश इति यावत् । 'सिद्धिर्निष्पत्तियोगयोः' इति विश्वः । तच्च सिद्धिरूपं वीर्यम् । कर्म परिस्पन्दः । दैवं भाग्यम्, तदुभयापेक्षम् ।
नीटी.

(१) भा. २।१५।८ ; भामु. २।१६।८.

(२) भा. २।१५।९ द्वितीयार्धं नास्ति; भामु. २।१६।९–१० पराजये ( द्विषज्जये ).

(३) भा. २।१५।१० ; भामु. ३।१६।१०–११ प्रथमचरणे ( सर्वैर्गुणैर्विहीनोऽपि ).

(४) भा. २।१५।११; भामु. २।१६।११–१२ द्रव्य ( गुणी ).

[1]संयुक्तो हि बलैः कश्चित्प्रमादान्नोपयुज्यते।
तेन द्वारेण शत्रुभ्यः क्षीयते सबलो रिपुः॥

नोपयुज्यते न कार्यक्षमो भवति । तेन प्रमादेन । शत्रुभ्यः शत्रुतः । नीटी.

दैन्यं यथाऽबलवति तथा मोहो बलान्विते।
तावुभौ नाशकौ हेतू राज्ञा त्याज्यौ जयार्थिना॥

लोकवृत्तराजवृत्तयोर्भेदः, शत्रुबाधको योगः शस्त्रम्, शत्रुलक्षणम्, शत्रुर्नोपेक्ष्यः, संग्रामो राजधर्मः

*[2]लोकवृत्ताद्राजवृत्तमन्यदाह बृहस्पतिः।
तस्माद्राज्ञा प्रयत्नेन स्वार्थश्चिन्त्यः सदैव हि॥

'प्रशाम्य भरतर्षभ' इति त्वदुक्तो निवृत्तिरूपो धर्मः बुभूषूणामस्माकं नेष्ट इत्याह– लोकेत्यादिना । नीटी.

[3]क्षत्रियस्य महाराज जये वृत्तिः समाहिता।
स वै धर्मोऽस्त्वधर्मो वा स्ववृत्तौ भरतर्षभ॥

[4]प्रकालयेद्दिशः सर्वाः प्रतोदेनेव सारथिः।
प्रत्यमित्रश्रियं दीप्तां बुभूषुर्भरतर्षभ॥

[5]प्रच्छन्नो वा प्रकाशो वा यो योगो रिपुबाधनः।
तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतम्॥

[6]शत्रुश्चैव हि मित्रं च न लेख्यं न च मातृका।
यो वै संतापयति यं स शत्रुः प्रोच्यते नृप॥

ननु विप्रियकर्ता शत्रुः, न च पाण्डवास्तथा सन्तीत्याशङ्क्याऽऽह– शत्रुरिति । नीटी.

[1]असंतोषः श्रियो मूलं तस्मात्तं कामयाम्यहम्।
समुच्छ्रये यो यतते स राजन् परमो नयी॥

[2]ममत्वं हि न कर्तव्यमैश्वर्ये वा धनेऽपि वा।
पूर्वावाप्तं हरन्त्यन्ये राजधर्मं हि तं विदुः॥

[3]अद्रोहे समयं कृत्वा चिच्छेद नमुचेः शिरः।
शक्रः सा हि मता तस्य रिपौ वृत्तिः सनातनी॥

[4]द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम्॥

ब्राह्मणं संन्यासिनम् । नीटी.

नास्ति वै जातितः शत्रुः पुरुषस्य विशां पते।
येन साधारणी वृत्तिः स शत्रुर्नेतरो जनः॥

साधारणी तुल्या वृत्तिः जीविका एकामिषत्वमित्यर्थः । नीटी.

शत्रुपक्षं समृध्यन्तं यो मोहात् समुपेक्षते।
व्याधिराप्यायित इव तस्य मूलं छिनत्ति सः॥

[5]अल्पोऽपि ह्यरिरत्यन्तं वर्धमानपराक्रमः।
वल्मीको मूलज इव ग्रसते वृक्षमन्तिकात्॥

[6]आजमीढ रिपोर्लक्ष्मीर्मा ते रोचिष्ट भारत।
एष भारः सत्त्ववतां नयः शिरसि धिष्ठितः॥

मा ते रोचिष्ट रुचिकरी मा भूत् । सत्त्ववतां बुद्धिमताम् । नयः नीतिः । धिष्ठितः स्थितः । अयं नयः धीमद्भिः शिरसा वोढव्य इत्यर्थः । नीटी.

---

* दुर्योधनस्य प्रत्युक्तिरियं धृतराष्ट्रं प्रति ।

(१) भा.२।१५।१२–१३ ; भामु.२।१६।१२–१४.

(२) भा. २।५०।१४ ; भामु. २।५५।६ प्रयत्नेन (ऽप्रमत्तेन) ; शर. ६४ (=) पू.

(३) भा. २।५०।१५ ; भामु. २।५५।७ धर्मोऽस्त्व (धर्मस्त्व) भरतर्षभ (का परीक्षणा).

(४) भा. २।५०।१६ ; भामु. २।५५।८ बुभूषु (जिघृक्षु).

(५) भा. २।५०।१७ ; भामु. २।५५।९ द्वितीयचरणे (योगो योऽरिं प्रबाधते).

(६) भामु. २।५५।१०.

(१) भा. २।५०।१८ ; भामु. २।५५।११ नयी (नयः).

(२) भा. २।५०।१९ ; भामु. २।५५।१२.

(३) भा. २।५०।२० ; भामु. २।५५।१३ द्रोहे स (द्रोहस) हि मता (ऽभिमता).

(४) भा. २।५०।२१–२३ ; भामु. २।५५।१४-१६.

(५) भा. २।५०।२४ ; भामु. २।५५।१७ नपराक्रमः (नः पराक्रमैः).

(६) भा. २।५०।२५–२६ ; भामु. २।५५।१८–१९.

जन्मवृद्धिमिवार्थानां यो वृद्धिमभिकाङ्क्षते ।
एधते ज्ञातिषु स वै सद्योवृद्धिर्हि विक्रमः ॥

जन्मवृद्धिमिव जन्मप्रभृति जीवद्देहादेर्या वृद्धिः स्वाभाविकी तामिव । एधते वर्धते । सद्यः अर्थानां वृद्धिर्येन स सद्योवृद्धिः विक्रमः पराक्रमः । नीटी.

[१]नाप्राप्य पाण्डवैश्वर्यं संशयो मे भविष्यति ।
अवाप्स्ये वा श्रियं तां हि शेष्ये वा निहतो युधि ॥

पाण्डवैश्वर्यम् अप्राप्य अनवाप्य अदृष्ट्वेति यावत् । संशयः वितर्कः, न भविष्यति नाभविष्यत् । वितर्कमेवाऽऽह– अवाप्स्ये इति । पाण्डवैश्वर्यं दृष्ट्वा 'इदं हर्तव्यं वा मया मर्तव्यं वा' इत्येव वितर्को जात इत्यर्थः । नीटी.

[२]अताहशस्य किं मेऽद्य जीवितेन विशां पते ।
वर्धन्ते पाण्डवा नित्यं वयं तु स्थिरवृद्धयः ॥

अस्थिरा वृद्धिरहिता वृद्धिः संपत् येषाम् । नीटी.

द्रौपदीप्रोक्ता बृहस्पतिनीतिः– जङ्गमानां वृत्त्युपायः कर्म, मनुष्याणां ऐहिकपारत्रिकवृत्त्युपायः कर्मैव, पौरुषमहिमा

*[३]कर्म खल्विह कर्तव्यं जातेनामित्रकर्शन ।
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ॥

स्थावराः इतरे जना वा हि यस्मात् अकर्माणो न जीवन्ति अतः कर्म कर्तव्यमिति योजना । तथा चायं प्रयोगः– स्थावरजीविका प्राक्कर्मपूर्विका, जीविकात्वात्, पाकादिक्रियापूर्वकास्मदादिजीविकावदिति । नीटी.

* द्रौपद्या युधिष्ठिरं प्रति उक्तिरियम् ।

(१) भा. २।५०।२७ ; भाखु. २।५५।२० शेष्ये (शिष्ये).

(२) भा. २।५०।२८ ; भाखु. २।५५।२१ अता (पता) तु स्थिर (त्वस्थिर).

(३) भा. ३।३३।३ ; भाखु. ३।३२।३ जातेना (जानता).

[१]आ मातृस्तनपानाच्च यावच्छय्योपसर्पणम् ।
जङ्गमाः कर्मणा वृत्तिमाप्नुवन्ति युधिष्ठिर ॥

स्थावरेषूक्तं न्यायं तिर्यक्षु योजयति– यावदिति । सद्यो जातस्य गोवत्सस्य स्तनपानादिप्रवृत्तिरपि स्वजनकसंस्कारहेतुप्राक्तनकर्मसत्त्वे प्रमाणमित्यर्थः । यावद्गोस्तनपानात् गोस्तनपानादेरित्यर्थः । यावच्छायोपसेवनात् प्रतिमाद्वारकभोगादित्यर्थः । अयं भावः– कौलिकशास्त्रप्रसिद्ध्या शत्रुनिर्मितायां चैत्रप्रतिमायां शत्रुणा कण्टकादिना नुन्नायां चैत्रो व्यथते । तत्र व्यथानिमित्तम् आन्तरं धातुवैषम्यं बाह्यं वा कण्टकवेधादि न किंचित् दृष्टमस्ति, किंतु केवलमदृष्टमेव । अनेनैव न्यायेन जन्तवः कर्मणा प्राचीनेनैव वृत्तिं जीवनम् आप्नुवन्ति । नीटी.

[२]जङ्गमेषु विशेषेण मनुष्या भरतर्षभ ।
इच्छन्ति कर्मणा वृत्तिमवाप्तुं प्रेत्य चेह च ॥

प्रेत्य मृत्वा । नीटी.

उत्थानमभिजानन्ति सर्वभूतानि भारत ।
प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम् ॥

उत्थानम् उत्तिष्ठति प्रवर्तते अस्मादित्युत्थानं प्राक्कर्मसंस्कारः, तं सर्वेऽपि प्राणिनः अभिजानन्ति अनुभवन्ति । ततः कर्मसु प्रवर्तन्ते तत्फलं चाऽऽप्नुवन्ति । तस्मात् कर्मतत्संस्कारपरम्परेयमनादिरित्यर्थः । नीटी.

[३]पश्यामि स्वं समुत्थानमुपजीवन्ति जन्तवः ।
अपि धाता विधाता च यथाऽयमुदके बकः ॥

यथाऽयं बकः पूर्वसंस्कारात् वृत्त्यर्थी ध्यायति, एवं धाता ईश्वरोऽपि अनादिसंस्कारवशात् पूर्वपूर्वकल्पस्वरूपामेव सृष्टिं करोति, 'धाता यथापूर्वमकल्पयत्' इति

(१) भा. ३।३३।४ ; भाखु. ३।३२।४ पूर्वार्धे (यावद् गोस्तनपानाच्च यावच्छायोपसेवनात् ।) जङ्गमाः (जन्तवः).

(२) भा. ३।३३।५–६ ; भाखु. ३।३२।५–६.

(३) भा. ३।३३।७ ; भाखु. ३।३२।७ पश्यामि (सर्वे हि).

श्रुतेः । तथा विधाता धर्मोऽपि पूर्वसंस्कारानुरोधेनैव कर्मणि प्रवर्तयति । अन्यथा संसारानादित्वानभ्युपगमे कृतहानाकृताभ्यागमादिदोषः स्यादिति भावः । नीटी.

[1]अकर्मणां वै भूतानां वृत्तिः स्यान्न हि काचन ।
तदेवाभिप्रपद्येत न विहन्यात्कदाचन ॥

एवं प्राक्तनकर्मप्राबल्यमुपपाद्य ऐहिकानामपि तेषां प्राबल्यमाह— अकर्मणामिति । याञ्चामुखचालनादिदृष्टयत्नशून्या न जीविकाऽस्ति । अतस्तदेव दृष्टफलं कर्मैव न विहन्यात् । दैवपरो भूत्वा न त्यजेदित्यर्थः । नीटी.

[2]स्वकर्म कुरु मा ग्लासीः कर्मणा भव दंशितः ।
कृत्यं हि योऽभिजानाति सहस्रे नास्ति सोऽस्ति वा ॥

दंशितः संनद्धः । कृतं कर्म, कर्तुमिति शेषः । नीटी.

[3]तस्य चापि भवेत्कार्यं विवृद्धौ रक्षणे तथा ।
भक्ष्यमाणो ह्यनावापः क्षीयते हिमवानपि ॥

तस्य कर्मणः । कार्यं प्रयोजनम् । रक्षणे, अर्थानामिति शेषः । अनादानात् असंग्रहात् । लब्धेनार्थेन न संतोष्टव्यम्, किंतु तद्विवृद्ध्यर्थं कर्म कर्तव्यमित्यर्थः । नीटी.

[4]उत्सीदेरन्प्रजाः सर्वा न कुर्युः कर्म चेद्यदि ।
तथा ह्येता न वर्धेरन्कर्म चेदफलं भवेत् ॥

[5]अपि चाप्यफलं कर्म पश्यामः कुर्वतो जनान् ।
नान्यथा ह्यभिजानन्ति वृत्तिं लोके कथंचन ॥

कर्मणां क्वचिदफलत्वेऽपि आवश्यकत्वं नित्यमित्यर्थः । नीटी.

[1]यश्च दिष्टपरो लोके यश्चायं हठवादकः ।
उभावपसदावेतौ कर्मबुद्धिः प्रशस्यते ॥

दिष्टपरः मन्त्रौषधाद्यदृष्टद्वारैवार्थसाधनपरः कौलिकः । हठवादिकः प्राग्जन्माभावात् अकृतमेवोपस्थास्यतीति वदन् चार्वाकः । एतौ शठौ, प्राक्कर्मानङ्गीकारात् । पाठान्तरे अपसदौ अधमौ । कर्मबुद्धिः 'प्राक्तनं तात्कालिकं च कर्म सहितं सत् इष्टसाधनम्' इतिबुद्धिमान् । नीटी.

[2]यो हि दिष्टमुपासीनो निर्विचेष्टः सुखं स्वपेत् ।
अवसीदेत् सुदुर्बुद्धिरामो घट इवाम्भसि ॥

निर्विचेष्टः दृष्टयत्नहीनः । शयेत् शेयात् (?) । आमः अपक्वः । नीटी.

[3]तथैव हठबुद्धिर्यः शक्तः कर्मण्यकर्मकृत् ।
आसीत न चिरं जीवेदनाथ इव दुर्बलः ॥

[4]अकस्मादपि यः कश्चिदर्थं प्राप्नोति पूरुषः ।
तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥

हठादीन् व्याचष्टे— अकस्मादिति । अचिन्तितस्य अतर्कितस्य च लाभः हठः । नीटी.

[5]यच्चापि किंचित्पुरुषो दिष्टं नाम लभत्युत ।
दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् ॥

---

(१) भामु. ३।३२।८.

(२) भा. ३।३३।८ ; भामु. ३।३२।९ स्वकर्म (स कर्म) कृत्यं (कृतं) नास्ति सोऽस्ति वा (सोऽस्ति नास्ति च).

(३) भा. ३।३३।९ ; भामु. ३।३२।१० वापः क्षीयते (दानात् क्षीयेत).

(४) भा. ३।३३।१० द्वितीयार्धं नास्ति ; भामु. ३।३२।११ चेद्यदि (चेद्भुवि).

(५) भा. ३।३३।१० ; भामु. ३।३२।१२ ह्यभिजानन्ति (ह्यपि गच्छन्ति) लोके (लोकाः).

(१) भा. ३।३३।११ ; भामु. ३।३२।१३ श्चायं (श्चापि) दकः (दिकः) पसदा (पि शठा).

(२) भा. ३।३३।१२ ; भामु. ३।३२।१४ स्वपेत् (शयेत्) सुदु (स दु) इवाम्भसि (इवोदके).

(३) भा. ३।३३।१३ ; भामु. ३।३२।१५ बुद्धिर्यः (दुर्बुद्धिः).

(४) भा. ३।३३।१४ ; भामु. ३।३२।१६ दपि (दिह).

(५) भा. ३।३३।१५ ; भामु. ३।३२।१७ लभ (भज).

दैवं देवताराधनम् । नीटी.

'यत्स्वयं कर्मणा किंचित्फलमाप्नोति पूरुषः ।
प्रत्यक्षं चक्षुषा दृष्टं तत्पौरुषमिति स्मृतम् ॥

पौरुषं यथोक्तप्रतिग्रहादिवृत्तिः । नीटी.

'स्वभावतः प्रवृत्तोऽन्यः प्राप्नोत्यर्थानकारणात् ।
तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम ॥

स्वभावः यः प्राक्कर्मानुग्रहः, यथा नष्टकपर्दिकान्वेषणप्रवृत्तस्य रत्नलाभः । नीटी.

'एवं हठाच्च दैवाच्च स्वभावात्कर्मणस्तथा ।
यानि प्राप्नोति पुरुषस्तत्फलं पूर्वकर्मणः॥

एतच्चतुष्टयजोऽपि लाभः पूर्वकर्मफलमेव । नीटी.

'धाताऽपि हि स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः ।
विदधाति विभज्येह फलं पूर्वकृतं नृणाम् ॥

स्वकर्मैव कर्माधीन एव । विदधाति अर्पयति । पूर्वकृतं पूर्वकर्मजम् । नीटी.

यद्ध्ययं पुरुषः किंचित्कुरुते वै शुभाशुभम् ।
तद्धातृविहितं विद्धि पूर्वकर्मफलोदयम् ॥

एतदेव स्पष्टयति– यद्धीति । नीटी.

'कारणं तस्य देहोऽयं धातुः कर्मणि कर्मणि ।
स यथा प्रेरयत्येनं तथाऽयं कुरुतेऽवशः ॥

यः कर्मणि वर्तते सोऽयं मानुषदेहः प्राग्भवीयः तस्य प्रवर्तकस्य धातुरपि कारणं प्रवर्तकः । सः धाता । एनं वर्तमानदेहम् । बीजाङ्कुरवत् धातृप्रेर्यः देहः देहप्रेर्यश्च

'तेषु तेषु हि कृत्येषु विनियोक्ता महेश्वरः ।
सर्वभूतानि कौन्तेय कारयत्यवशान्यपि ॥

'मनसाऽर्थान्विनिश्चित्य पश्चात्प्राप्नोति कर्मणा ।
बुद्धिपूर्वं स्वयं धीरः पुरुषस्तत्र कारणम् ॥

ननु पूर्वकर्मैव प्रवर्तकं चेत्किं पुरुषकारेण ? इत्याशङ्क्याऽऽह– मनसेति । नीटी.

'संख्यातुं नैव शक्यानि कर्माणि पुरुषर्षभ ।
अगारनगराणां हि सिद्धिः पुरुषहैतुकी ॥

एतदपि प्राक्कर्मजमेवेत्याशङ्क्याऽऽह– संख्यातुमिति । संख्यातुम् 'प्राक्कर्मैव कारणम्, न पुरुषकारः' इति निश्चेतुम् । तत्र हेतुः– अगारेति । नीटी.

तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः ।
धिया धीरो विजानीयादुपायं चास्य सिद्धये ॥

पङ्ग्वन्धन्यायेन प्राक्कर्मसिद्धमेव पुरुषकारोऽभिव्यनक्तीत्यर्थः । अस्य तैलादेः सिद्धये प्राप्तये । नीटी.

'ततः प्रवर्तते पश्चात्कारणेष्वस्य सिद्धये ।
तां सिद्धिमुपजीवन्ति कर्मणामिह जन्तवः ॥

कारणैः यन्त्रनिपीडनादिभिः । तां सिद्धिं तैलादिप्राप्तिम् । 'कर्मणाम्' इति पाठे सिद्धिं फलम् । तां तैलप्राप्तिम् । नीटी.

'कुशलेन कृतं कर्म कर्त्रा साधु विनिश्चितम् ।
इदं त्वकुशलेनेति विशेषादुपलभ्यते ॥

तस्य स्मरन्ती वचनमाशंसे विजयं तव ।
तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः ॥
यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे ।
तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥

अर्थाभिनिर्वृत्तौ प्रयोजननिष्पत्तौ परे तत्संबन्धिनः तेनार्थेनाऽऽप्यायिता भवन्ति, तस्य तद्भाग्यादेवार्थसिद्धिः । नयेषु नीतिमार्गेषु । नीटी.

[1]समृद्धिरसमृद्धिर्वा पूर्वेषां मम संजय ।
एवं विद्वान् युद्धमना भव मा प्रत्युपाहर ॥

पूर्वेषां मम च युद्धे समृद्धिरसमृद्धिर्वाऽवश्यंभाविनीत्येवं विद्वान् युद्धमना भव । लाभालाभौ समौ कृत्वा युध्यस्वेति भावः । मा प्रत्युपाहरः प्रत्युपहारं युद्धोपसंहारं मा कार्षीरित्यर्थः । नीटी.

[2]नातः पापीयसीं कांचिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥

अयुध्यतो दरिद्रत्वं स्यात्तच्चानिष्टमित्याह– नात इति । नीटी.

पतिपुत्रवधादेतत् परमं दुःखमब्रवीत् ।
दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ॥

पर्यायमरणं दारिद्र्यं नामान्तरेण मरणमेवेत्यर्थः । नीटी.

[3]अहं महाकुले जाता ह्रदाद्ध्रदमिवाऽऽगता ।
ईश्वरी सर्वकल्याणैर्भर्त्रा परमपूजिता ॥
[4]महार्हमाल्याभरणां सुमृष्टाम्बरवाससम् ।
पुरा दृष्ट्वा सुहृद्वर्गो मामपश्यत् सुदुर्गताम् ॥

(१) भा. ५।१३२।११ ; भामु. ५।१३४।११ हर (हरः).

(२) भा. ५।१३२।१२–१३ ; भामु. ५।१३४।१२–१३.

(३) भा. ५।१३२।१४ ; भामु. ५।१३४।१४ ल्याणैर्भ (ल्याणी भ).

(४) भा. ५।१३२।१५ ; भामु. ५।१३४।१५ दृष्ट्वा (हृष्टः) दुर्ग (हृद्र).

[1]यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बले ।
न तदा जीवितेनार्थो भविता तव संजय ॥
[2]दासकर्मकरान् भृत्यानाचार्यर्त्विक्पुरोहितान् ।
अवृत्त्याऽस्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते ॥

अस्मान् प्रजहतः अस्मत्यागं कुर्वतः । नीटी.

[3]यदि कृत्यं न पश्यामि तवाद्येह यथा पुरा ॥
श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे ॥

कृत्यं कर्तव्यं पराक्रमम् । नीटी.

[4]नेति चेद् ब्राह्मणान् ब्रूयां दीर्यते हृदयं मम ।
न ह्यहं न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥
[5]वयमाश्रयणीयाः स्म नाऽऽश्रितारः परस्य च ।
साऽन्यानाश्रित्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥

श्रोतारः पराज्ञायाः । पाठान्तरे श्रेतारः आश्रयितारः । नीटी.

[6]अपारे भव नः पारमप्लवे भव नः प्लवः ।
कुरुष्व स्थानमस्थाने मृतान् संजीवयस्व नः ॥
[7]सर्वे ते शत्रवः सह्या न चेज्जीवितुमिच्छसि ।
अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे ॥

(१) भा. ५।१३२।१६ ; भामु. ५।१३४।१६ र्बले (र्बलाम्).

(२) भा. ५।१३२।१७ ; भामु. ५।१३४।१७.

(३) भा. ५।१३२।१८ ; भामु. ५।१३४।१८ द्येह (द्याहं).

(४) भा. ५।१३२।१९ ; भामु. ५।१३४।१९ ब्राह्मणान् (ब्राह्मणं) दीर्यते (दीर्येत).

(५) भा. ५।१३२।२० ; भामु. ५।१३४।२० नाऽऽश्रि (न श्रो) न्यानाश्रित्य (न्यमासाद्य).

(६) भा. ५।१३२।२१ ; भामु. ५।१३४।२१.

(७) भा. ५।१३२।२२ ; भामु. ५।१३४।२२ सह्या (शक्या) मिच्छसि (मर्हसि).

शक्याः, जेतुमिति शेषः। 'सह्याः' इति पाठे न सहनीयाः। नीटी.

[1]निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम्।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम्॥

निर्विण्णात्मा विरक्तचित्तः, यतो हतमनाः नष्टसंकल्पः। विश्रुतिं ख्यातिम्। नीटी.

इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत।
माहेन्द्रं च ग्रहं लेभे लोकानां चेश्वरोऽभवत्॥

ग्रहं सोमपात्रम्। 'प्रग्रहम्' इति पाठे नियमनं नियन्तृत्वमित्यर्थः। 'प्रग्रहश्च तुलासूत्रे बन्द्यां नियमने भुजे' इति विश्वः। नीटी.

[2]नाम विश्राव्य वा संख्ये शत्रूनाहूय दंशितान्।
सेनाग्रं वाऽपि विद्राव्य हत्वा वा पुरुषं वरम्॥

[3]यदैव लभते वीरः सुयुद्धेन महद्यशः।
तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च॥

[4]त्यक्त्वाऽऽत्मानं रणे दक्षं शूरं कापुरुषा जनाः।
अवशाः पूरयन्ति स्म सर्वकामसमृद्धिभिः॥

कापुरुषाः जनाः रणे आत्मानं देहं त्यक्त्वा रणे दक्षं शूरं समृद्धिभिस्तर्पयन्ति स्मेति संबन्धः। नीटी.

[5]राज्यं वाऽप्युग्रविभ्रंशं संशयो जीवितस्य वा।
प्रलब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः॥

उग्रविभ्रंशं महाप्रपातम्। जीवितस्य संशयः मरणम्। लब्धस्य जितस्य शेषं पुनः स्वल्पेन विभवेनावस्थापनम्। नीटी.

[1]स्वर्गद्वारोपमं राज्यमथवाऽप्यमृतोपमम्।
रुद्धमेकायने मत्वा पतोल्मुक इवारिषु॥

रुद्धं ग्रस्तं मत्वा एकायनं स्वर्गराज्ययोर्मध्य एकं मार्गं पत गच्छ। नीटी.

[2]जहि शत्रून् रणे राजन् स्वधर्ममनुपालय।
मा त्वा पश्येत् सुकृपणं शत्रुः श्रीमान् कदाचन॥

मा त्वेति। शत्रूणां भयवर्धनं भयच्छेदनम् अनुग्रत्वात् सुकृपणं दीनं त्वा त्वां मा दृशं मा द्राक्षम्। दृशमिति माङ्योगादडभावे 'इरितो वा' (पा. ३।१।५७) इत्यङ्पक्षे 'दृशिर् प्रेक्षणे' अस्य लुङुत्तमैकवचनम्। पाठान्तरं तु मूढजनकल्पितं नाऽऽदरणीयम्। नीटी.

[3]अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम्।
अपि त्वां नानुपश्येयं दीना दीनमवस्थितम्॥

[4]उष्य सौवीरकन्याभिः श्लाघस्वार्थैर्यथा पुरा।
मा च सैन्धवकन्यानामवसन्नो वशं गमः॥

हृष्य हर्षं प्राप्नुहि सौवीरकन्याभिः स्वदारैः। मा चेति। सैन्धवकन्यानां शत्रुदेशजकन्यानाम्। नीटी.

[5]युवा रूपेण संपन्नो विद्ययाऽभिजनेन च।
यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः।
वोढव्ये धुर्यनडुवन्मन्ये मरणमेव तत्॥

---

(१) भा. ५।१३२।२३–२४ ; भामु. ५।१३४।२३–२४.

(२) भा. ५।१३२।२५ ; भामु. ५।१३४।२५ वा संख्ये (वै संख्ये) वाऽपि (चापि).

(३) भा. ५।१३२।२६ ; भामु. ५।१३४।२६.

(४) भा. ५।१३२।२७ ; भामु. ५।१३४।२७ पूर (तर्प).

(५) भा. ५।१३२।२८ ; भामु. ५।१३४।२८ वाऽ (चा) प्रल (न ल).

(१) भा. ५।१३२।२९ ; भामु. ५।१३४।२९ कायने (कायनं).

(२) भा. ५।१३२।३० ; भामु. ५।१३४।३० त्वा पश्येत् (त्वा दृशं) चतुर्थचरणे (शत्रूणां भयवर्धनम्).

(३) भा. ५।१३२।३१ ; भामु. ५।१३४।३१ दीना दीनमव (दीनादीनमिवा).

(४) भा. ५।१३२।३२ ; भामु. ५।१३४।३२ उष्य (हृष्य).

(५) भा. ५।१३२।३३ ; भामु. ५।१३४।३३–३४ यस्त्वा (यत्त्वा) पञ्चमचरणे (अधुर्यवच्च वोढव्ये).

विकुर्वीत अपसरणं कुर्वीत । अधुर्यवत् अदान्तवृषभवत् । 'अनड्वानिव' इत्यपि पाठः । तत् विकारकरणम् । नीटी.

[1]यदि त्वामनुपश्यामि परस्य प्रियवादिनम् ।
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे ॥

[2]नास्मिञ्जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः।
न त्वं परस्यानुधुरं तात जीवितुमर्हसि ॥

[3]अहं हि क्षत्रहृदयं वेद यत् परिशाश्वतम् ।
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ।
शाश्वतं चाव्ययं चैव प्रजापतिविनिर्मितम् ॥

वेद वेद्मि । परिशाश्वतं सर्वथैवैकरूपम्, अक्षीणमित्यर्थः । पूर्वैः स्ववंशजैः, परैः अन्यवंशीयैः, परतरैः वृद्धैः । अव्ययम् अपक्षयहीनं क्षत्रहृदयं प्रोक्तमिति पूर्वेण संबन्धः । नीटी.

[4]यो वै कश्चिदिहाऽऽजातः क्षत्रियः क्षत्रधर्मवित् ।
भयाद् वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ॥

आजातः सम्यग्जातः कुले जात इत्यर्थः । य आजातः स भयात् कस्यचिन्न नमेत्, वृत्तिसमीक्षः वृत्तिं समीक्षमाणः वा न नमेत् । नीटी.

[5]उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ॥

उद्यच्छेत् उद्यमं कुर्यात् । अपर्वणि अकाण्डे, वृथाऽपीत्यर्थः । नीटी.

[1]मातङ्गो मत्त इव च परीयात् सुमहामनाः ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च संजय ॥

परीयात् पर्यटनं कुर्यात् । नीटी.

[2]नियच्छन्नितरान् वर्णान् विनिघ्नन् सर्वदुष्कृतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ॥

दुष्कृतः पापिष्ठान् । नीटी.

पुत्र उवाच–

[3]कृष्णायसस्येव च ते संहत्य हृदयं कृतम् ।
मम मातस्त्वकरुणे वैरप्रज्ञे ह्यमर्षणे ॥

कृष्णायसस्य लोहस्य । संहत्य पिण्डीकृत्य । नीटी.

[4]अहो क्षत्रसमाचारो यत्र मामपरं यथा ।
नियोजयसि युद्धाय परमातेव मां तथा ।
ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् ॥

एकजम् अभ्रातृकम् । नीटी.

[5]किं नु ते मामपश्यन्त्या पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ।
[6]मयि वा संगरहते प्रियपुत्रे विशेषतः ॥

मातोवाच–

[7]सर्वारम्भा हि विदुषां तात धर्मार्थकारणात् ।
तानेवाभिसमीक्ष्याहं संजय त्वामचूचुदम् ॥

(१) भा. ५।१३२।३४; भामु. ५।१३४।३४–३५.

(२) भा. ५।१३२।३५ ; भामु. ५।१३४।३५–३६ नुधुरं ( नुचरः ).

(३) भा. ५।१३२।३६ तृतीयार्धं नास्ति; भामु. ५।१३४।३६–३७.

(४) भा. ५।१३२।३७ ; भामु. ५।१३४।३८ धर्म ( कर्म ).

(५) भा. ५।१३२।३८ ; भामु. ५।१३४।३९ नमेदिह ( नमेतेह ).

(१) भा. ५।१३२।३९ ; भामु. ५।१३४।४० सुमहा ( स महा ).

(२) भा. ५।१३२।४० ; भामु. ५।१३४।४१.

(३) भा. ५।१३३।१ ; भामु. ५।१३५।१ वैर ( वीर ).

(४) भा. ५।१३३।२ द्वितीयार्धं नास्ति ; भामु. ५।१३५।२–३ मपरं ( मितरं ).

(५) भा. ५।१३३।३ ; भामु. ५।१३५।३–४ कृत्यं ते ( कृत्येन ).

(६) भामु. ५।१३५।४.

(७) भा. ५।१३३।४ ; भामु. ५।१३५।५ रम्भा ( वस्था ) तानेवा ( तावेवा ).

सर्वावस्था गार्हस्थ्यादिरूपा । 'सर्वारम्भाः' इति पाठान्तरम् । तावेव धर्मार्थाविव । अचूचुदं प्रेरितवत्यस्मि । नीटी.

[1]स समीक्ष्यक्रमोपेतो मुख्यः कालोऽयमागतः ।
अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ।
असंभावितरूपस्त्वं सुनृशंसं करिष्यसि ॥

समीक्ष्यक्रमोपेतः द्रष्टुं योग्येन पराक्रमेण युक्तः । अस्मिन् काले चेत् कार्यं कर्तव्यं युद्धं न प्रतिपद्यसे, आनृशंस्यं शत्रुषु स्वदेहे वा दयां करिष्यसि, तर्हि त्वम् असंभावितरूपः तिरस्कृतरूपः भविष्यसीति संबन्धः । नीटी.

[2]तं त्वामयशसा स्पृष्टं न ब्रूयां यदि संजय ।
खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम् ॥

उभयलोकानुपयुक्तेऽपि पुत्रे वृथा वात्सल्यं खरी करोति तद्वदहमपि स्यामित्यर्थः । नीटी.

सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ।
अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ॥
तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः ।
धर्मार्थगुणयुक्तेन नेतरेण कथंचन ।
दैवमानुषयुक्तेन सद्भिराचरितेन च ॥

अविद्या अनात्मनि देहे आत्मबुद्धिः, सा यदि तव स्यात् तर्हि सत् समीचीनं तव देहनाशादात्मनाशं पश्यतो वृत्तं शीलम् । उपहासार्थमिदमुच्यते । तेन देहात्मभावेन मम देहादन्यमात्मानं पश्यन्त्याः प्रियो भवेः । अयमप्युपहासः । देहात्मवादी दुर्वृत्तो मम द्वेष्यश्च भविष्यसीत्यर्थः । धर्मार्थेति । त्वया भाव्यमिति शेषः । नीटी.

[3]यो ह्येवमविनीतेन रमते पुत्रनप्तृणा ।
अनुत्थानवता चापि मोघं तस्य प्रजाफलम् ॥

(१) भा. ५।१३३।५ ; भामु. ५।१३५।६–७ सुनृशंसं (आनृशंसं).

(२) भा. ५।१३३।६–८ ; भामु. ५।१३५।७–१०.

(३) भा. ५।१३३।९ ; भामु. ५।१३५।११ चापि + (दुर्विनीतेन दुर्धिया । रमते यस्तु पुत्रेण).

[1]अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ।
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ॥

[2]युद्धाय क्षत्रियः सृष्टः संजयेह जयाय च ।
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ।
जयन् वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ॥

[3]न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम् ।
यदमित्रान् वशे कृत्वा क्षत्रियः सुखमश्नुते ॥

[4]मन्युना दह्यमानेन पुरुषेण मनस्विना ।
निकृतेनेह बहुशः शत्रून् प्रतिजिगीषया ॥

निकृतेन अपकृतेनापि शत्रून् प्रति जिगीषया, प्रस्थातव्यमेवेति शेषः । नीटी.

[5]आत्मानं वा परित्यज्य शत्रून् वा विनिपात्य वै ।
अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत् ॥

[6]इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति ।
यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥

स्वल्पमैश्वर्यम् अप्रियम् अनिष्टम् इच्छति मन्यते प्राज्ञः । यस्य तु अल्पमैश्वर्यं प्रियं तस्य ध्रुवं निश्चितं तदेवाल्पं प्रियत्वेन गृहीतम् अप्रियम् अनर्थकरं स्यात् । तेन राज्ञाऽल्पसंतुष्टेन न भवितव्यमित्यर्थः । नीटी.

प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥

अभावं नाशम् । नीटी.

(१) भा. ५।१३३।१० ; भामु. ५।१३५।१२–१३.

(२) भा. ५।१३३।११ ; भामु. ५।१३५।१३–१४ द्वितीयार्धं नास्ति.

(३) भा. ५।१३३।१२ ; भामु. ५।१३५।१४ मश्नुते (मेधते).

(४) भा. ५।१३३।१३ ; भामु. ५।१३५।१५.

(५) भा. ५।१३३।१४ ; भामु. ५।१३५।१६ शत्रून् (शत्रुं) वै (च).

(६) भा. ५।१३३।१५–१८ ; भामु. ५।१३५।१७–२०.

**पुत्र उवाच–**

**नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः ।**
**कारुण्यमेवात्र पश्य भूत्वेह जडमूकवत् ॥**

कारुण्यमेव पश्य, हितत्वेनेति शेषः । नीटी.

**मातोवाच–**

**अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि ।**
**चोद्यं मां चोदयस्येतद्भृशं वै चोदयामि ते ॥**

अतो वचनात् मे मम भूयसी नन्दिः समृद्धिः । भवितेति शेषः । यत् एवं कारुण्यं देहे कृपाम् अनुपश्यसि हितत्वेन । एवं सत्यपि त्वमेव चोद्यं पूर्वपक्षं चोदयसि प्रेरयसि कारुण्यं कुर्विति । अथापि वज्रहृदयाऽहं ते तुभ्यं चोदयामि । नीटी.

**[1]अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।**
**अहं पश्यामि विजयं कृत्स्नं भाविनमेव ते ॥**

सैन्धवान् हत्वा कृच्छ्रेण भावितं ते तव विजयं यदा पश्यामि द्रक्ष्यामि अथ त्वां पूजयिष्यामीति योजना । नीटी.

**पुत्र उवाच–**

**[2]अकोशस्यासहायस्य कुतःस्विद्विजयो मम ।**
**इत्यवस्थां विदित्वेमामात्मनाऽऽत्मनि दारुणाम् ।**
**राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतेः ॥**

एतामवस्थां दारुणामात्मनि आत्मना स्वयं विदित्वा मे मम भावः चित्तं राज्यान्निवृत्त इत्युत्तरेण संबन्धः । नीटी.

**[3]ईदृशं भवती कंचिदुपायमनुपश्यसि ।**
**तन्मे परिणतप्रज्ञे सम्यक् प्रब्रूहि पृच्छते ।**
**करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥**

(१) भा. ५।१३३।१९ ; भामु. ५।१३५।२१ कृत्स्नं भाविन (कृच्छ्रभावित).

(२) भा. ५।१३३।२० ; भामु. ५।१३५।२२–२३ कुतःस्विद्विजयो (कुतः सिद्धिर्जयो) त्वेमा (त्वैता) दुष्कृतेः (दुष्कृतः).

(३) भा. ५।१३३।२१ ; भामु. ५।१३५।२३–२४.

**मातोवाच–**

**[1]पुत्राऽऽत्मा नावमन्तव्यः पूर्वाभिरसमृद्धिभिः ।**
**अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ॥**
**[2]अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः ।**
**सर्वेषां कर्मणां तात फले नित्यमनित्यता ॥**

अर्थाः धर्माद्याः बालिशैरमर्षेणैव नाऽऽरब्धव्याः । पण्डितैस्तु आदरेण आरब्धव्या एवेति भावः । नीटी.

**अनित्यमिति जानन्तो न भवन्ति भवन्ति च ।**
**अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ॥**

अनित्यमिति जानन्तः पण्डिता आरभमाणाः न भवन्ति कदाचिदैश्वर्यं न लभन्ते, भवन्ति च कदाचित् सिद्धार्थाः । अकुर्वाणान्निन्दति– अथेति । नीटी.

**ऐकगुण्यमनीहायामभावः कर्मणां फलम् ।**
**अथ द्वैगुण्यमीहायां फलं भवति वा न वा ॥**

अनीहायां चेष्टाया अभावे ऐकगुण्यम् एकगुणमेव फलम्, यत् कर्मणामीप्सिततमानाम् अभावः अप्राप्तिः । ईहायां तु द्वैगुण्यं गुणद्वयम्, यत् 'फलं भवति वा न वा' इति । अभावनिश्चयापेक्षया पाक्षिकफलसद्भाववती प्रवृत्तिरेव श्रेष्ठेत्यर्थः । नीटी.

**यस्य प्रागेव विदिता सर्वार्थानामनित्यता ।**
**नुदेद् वृद्धिसमृद्धी स प्रतिकूले नृपात्मज ॥**

वृद्धिः पीडा । 'वृधु हिंसायाम्' इत्यस्य रूपम् । समृद्धिः ऐश्वर्यम् । ते उभे नुदेत् दूरीकुर्यात् । आत्मनः पीडां परस्यैश्वर्यं च नुदेदित्यर्थः । नीटी.

**[3]उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।**
**भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ।**
**मङ्गलानि पुरस्कृत्य ब्राह्मणैश्चेश्वरैः सह ॥**

(१) भा. ५।१३३।२२ ; भामु. ५।१३५।२५ पुत्राऽऽत्मा नाव (पुत्र नाऽऽत्माऽव).

(२) भा. ५।१३३।२३–२६ ; भामु. ५।१३५।२५–२९.

(३) भा. ५।१३३।२७ ; भामु. ५।१३५।२९–३० ब्राह्मणै (ब्राह्मणां).

योक्तव्यं सज्जीभवितव्यम् । ईश्वरैः देवैः । नीटी.

[1]**प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक ।**
**अभिवर्तेति लक्ष्मीस्तं प्राचीमिव दिवाकरः ॥**

**निदर्शनान्युपायांश्च बहून्युद्धर्षणानि च ।**
**अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम् ।**
**पुरुषार्थमभिप्रेतं समाहर्तुमिहार्हसि ॥**

उद्धर्षणानि प्रोत्साहनानि । अनुदर्शितं रूपं लोकवृत्तान्तः यस्मै स तथा । नीटी.

[2]**क्रुद्धाँल्लुब्धान्परिक्षीणानवक्षिप्तान्विमानितान् ।**
**स्पर्धिनश्चैव ये केचित्तान् युक्त उपधारय ॥**

[3]**एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान् ।**
**महावेग इवोद्धूतो मातरिश्वा बलाहकान् ॥**

[4]**तेषामग्रप्रदायी स्याः कल्योत्थायी प्रियंवदः ।**
**ते त्वां प्रियं करिष्यन्ति पुरो धास्यन्ति च ध्रुवम् ॥**

तेषां क्रुद्धादीनाम् अग्रप्रदायी । भक्तं वेतनं च सर्वेभ्यः प्रथमं देयम्, न चेत् सद्यः कुपितास्ते त्यजेयुरित्यर्थः । नीटी.

[5]**यदैव शत्रुर्जानीयात् सपत्नं त्यक्तजीवितम् ।**
**तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव ॥**

त्यक्तजीवितं युद्धे जीवितनिराकाङ्क्षम् । शत्रुर्जीविताकाङ्क्षी उद्विजते । नीटी.

**तं विदित्वा पराक्रान्तं वशे न कुरुते यदि ।**
**निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ॥**

तं शत्रुं पराक्रान्तं पराक्रमवन्तं विदित्वा अशक्त्या वशे स्वाज्ञायां यदि न करोति तर्हि एनं निर्वादैः परिनिष्ठितैर्दूतैः निर्वदेत् परिनिष्ठां प्रापयेत् । साम्ना दानेन वा तं पर्यवस्थापयेदित्यर्थः । ' निर्वादः स्यात् परीवादे परिनिष्ठितवादयोः ' इति विश्वः । अन्ततः फलतः तत् शत्रोर्वशीकरणं भविष्यति । नीटी.

**निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति ।**
**धनवन्तं हि मित्राणि भजन्ते चाऽऽश्रयन्ति च ॥**

तत्रोपायमाह— निर्वादादिति । एवं परिनिष्ठिततया आस्पदं स्थानं प्राप्तं चेत् शत्रुणाऽनुपद्रुतस्य धनवृद्ध्यादिकं सर्वं सेत्स्यतीत्यर्थः । नीटी.

[1]**स्खलितार्थं पुनस्तात संत्यजन्त्यपि बान्धवाः ।**
**अप्यस्मिन्नाऽऽश्रयन्ते च जुगुप्सन्ति च तादृशम् ॥**

स्खलितार्थं च्युतधनम् । न आश्वसन्ते इति छेदः । विश्वासं न कुर्वन्तीत्यर्थः । नीटी.

[2]**शत्रुं कृत्वा यः सहायं विश्वासमुपगच्छति ।**
**अतः संभाव्यमेवैतद्यद्राज्यं प्राप्नुयादिति ॥**

संभाव्यमेवैतदित्युपहासः । असंभावितमेतत् यच्छत्रौ विश्वासं कृत्वाऽपि राज्यं प्राप्नुयादिति । नीटी.

**मातोवाच—**

[3]**नैव राज्ञा दरः कार्यो जातु कस्यांचिदापदि ।**
**अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥**

दरः भयम् । जातु कदाचित् । दीर्णः भीतः । नीटी.

---

(१) भा. ५।१३३।२८–२९ ; भामु. ५।१३५।३१–३३.

(२) भा. ५।१३३।३० ; भामु. ५।१३५।३३–३४ क्षिप्तान् ( लिप्तान् ).

(३) भा. ५।१३३।३१ ; भामु. ५।१३५।३४–३५ द्धूतो ( द्भूतो ).

(४) भा. ५।१३३।३२ ; भामु. ५।१३५।३५–३६ कल्यो ( कल्पो ).

(५) भा. ५।१३३।३३–३५ ; भामु. ५।१३५।३६–३८.

(१) भा. ५।१३३।३६ ; भामु. ५।१३५।३९ स्तात ( स्तानि ) न्त्यपि ( न्ति च ) श्रयन्ते ( श्वसन्ते ) प्सन्ति ( प्सन्ते ).

(२) भा. ५।१३३।३७ ; भामु. ५।१३५।४०.

(३) भा. ५।१३४।१ ; भामु. ५।१३६।१.

[1]दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते ।
राष्ट्रं बलममात्याश्च पृथक् कुर्वन्ति ते मतिम् ॥

'महीम्' इति पाठे महीस्थान् लोकान् । नीटी.

[2]शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।
अन्वेके प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥

अपरे स्वीयाः । प्रजिहीर्षन्ति प्रहर्तुं ताडितुम् इच्छन्ति । नीटी.

[3]य एवात्यन्तसुहृदस्त एनं पर्युपासते ।
अशक्तयः स्वस्तिकामा बद्धवत्सा इडा इव ।
शोचन्तमनुशोचन्ति प्रतीतानिव बान्धवान् ॥

इलाः धेनवः, 'इला धेनुः सहवत्सा न आगात्' इति मन्त्रवर्णात् । नीटी.

[4]अपि ते पूजिताः पूर्वमपि ते सुहृदो मताः ।
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः ।
मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः ॥

ते तवापि सुहृदः सन्ति । ये राष्ट्रम् 'असदीयमिदमस्माभी रक्षणीयम्, राजा च व्यसनादुद्धर्तव्यः' इति अभिमन्यते अभिमानवन्तः । मा दीदरः मा विदारय । नीटी.

[5]प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।
उल्लपन्त्या समाश्वासं बलवानिव दुर्बलम् ॥

समाश्वासं धैर्यम् । नीटी.

[1]यद्येतत्संविजानासि यदि सम्यग् ब्रवीम्यहम् ।
कृत्वाऽसौम्यमिवाऽऽत्मानं जयायोत्तिष्ठ संजय ॥

[2]अस्ति नः कोशनिचयो महानविदितस्तव ।
तमहं वेद नान्यस्तमुपसंपादयामि ते ॥

[3]सन्ति नैकशता भूयः सुहृदस्तव संजय ।
सुखदुःखसहा वीर शतार्हा अनिवर्तिनः ॥

[4]तादृशा हि सहाया वै पुरुषस्य बुभूषतः ।
ईषदुज्जिहतः किंचित्सचिवाः शत्रुकर्शनाः ॥

पुत्र उवाच–

[5]कस्य त्वीदृशकं वाक्यं श्रुत्वाऽपि स्वल्पचेतसः ।
तमो न व्यपहन्येत सुचित्रार्थपदाक्षरम् ॥

स्वल्पचेतसोऽपि तस्य तमोऽपागमदिति संबन्धः । नीटी.

[6]उदके धूरियं धार्या सर्तव्यं प्रवणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतदर्शिनी ॥

उदके मज्जन्तीव भूः पित्र्यं राज्यम् । 'धूः' इति पाठेऽपि स एवार्थः । इयं मया धार्या मग्नं राज्यं वा

---

(१) भा. ५।१३४।२ ; भामु. ५।१३६।२ मतिम् (मतीः).

(२) भा. ५।१३४।३ ; भामु. ५।१३६।३ अन्वेके (अन्ये तु).

(३) भा. ५।१३४।४ ; भामु. ५।१३६।४–५ इडा (इला) प्रतीता (पतिता).

(४) भा. ५।१३४।५ ; भामु. ५।१३६।५–६.

(५) भा. ५।१३४।६ ; भामु. ५।१३६।७ उत्तरार्धे (विदधत्यां समाश्वासमुक्तं तेजोविवृद्धये ॥ ).

(१) भा. ५।१३४।७ ; भामु. ५।१३६।८ यद्ये (यदे).

(२) भा. ५।१३४।८ ; भामु. ५।१३६।९ महान (महान्ह्य).

(३) भा. ५।१३४।९ ; भामु. ५।१३६।१० शता (तमा) शतार्हा (संग्रामात्).

(४) भा. ५।१३४।१० ; भामु. ५।१३६।११ ईषदुज्जिहतः (इष्टं जिहीर्षतः) कर्शनाः (कर्शन).

(५) भा. ५।१३४।११ ; भामु. ५।१३६।१२ (पुत्र उवाच०) कस्य (यस्याः) तृतीयचरणे (तमस्त्वपागमत्तस्य).

(६) भा. ५।१३४।१२ ; भामु. ५।१३६।१३ श्लोकात् प्राक् 'पुत्र उवाच' इत्यधिकम् । धूरियं (भूरियं) सर्त (मर्त) द्भूत (द्भूति).

उद्धर्तव्यं प्रवणे प्रपाते वा युद्धाख्ये वा मर्तव्यम्, न तु एवमेव निर्व्यापारेण स्थेयम्। नेत्री शिक्षयित्री। नीटी.

[1]अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम्।
किंचित् किंचित् प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः॥

अपरापरम् अपरमपरम् उत्तरोत्तरमिति यावत्। प्रतिवदन् प्रतिकूलं वदन् 'आयसं हृदयं तव' इति, 'पुत्रे निःस्नेहाऽसि' इत्यादि। नीटी.

[2]अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात्।
उद्यच्छाम्येष शत्रूणां नियमाय जयाय च॥

बान्धवात् बन्धुतः। उद्यच्छामि उद्यमं करोमि। नियमार्थं निग्रहार्थम्। 'बान्धवान्' इति पाठे उद्यच्छामि धारयामि। नीटी.

कुन्त्युवाच–

[3]सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः।
तच्चकार तथा सर्वं यथावदनुशासनम्॥
इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम्।
राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितम्॥
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा।
महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्दति॥
इदं पुंसवनं चैव वीराजननमेव च।
अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते॥

पुंसवनं पुत्रप्रसवकरम्। वीराणामाजननं येन तद्वीराजननम्। प्रजायते जनयति। नीटी.

[4]विद्याशूरं तपःशूरं दमशूरं तपस्विनम्।
ब्राह्म्या श्रिया दीप्यमानं साधुवादेन संमतम्॥

(१) भा. ५।१३४।१३ ; भामु. ५।१३६।१४.

(२) भा. ५।१३४।१४ ; भामु. ५।१३६।१५ माय (मार्थं).

(३) भा. ५।१३४।१५–१८ ; भामु. ५।१३६। १६–१९.

(४) भा. ५।१३४।१९ ; भामु. ५।१३६।२० दम (दान) वादेन (वादे च).

[1]अर्चिष्मन्तं बलोपेतं महाभागं महारथम्।
धृष्टवन्तमनाधृष्यं जेतारमपराजितम्॥
[2]नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम्।
तदर्थं क्षत्रिया सूते वीरं सत्यपराक्रमम्॥

क्षात्रधर्मार्जिता अर्थाः प्रियाः

[3]विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम॥
[4]युध्यस्व यत्नमास्थाय मृत्युं कृत्वा निवर्तनम्।
यततस्तव तेषां च दैवं मार्गेण यास्यति॥

दैवमविगणय्य यत्नमेवाऽऽतिष्ठेत्याह– युध्यस्वेति। सुदृढोद्यमात् दैवमपि मार्गेण अनुकूलेन यास्यतीत्यर्थः। नीटी.

दैवसहितं पौरुषं श्रेयस्करं न केवलदैवावलम्बनम्

कृप उवाच–

[5]श्रुतं ते वचनं सर्वं हेतुयुक्तं मया विभो।
ममापि तु वचः किंचिच्छृणुष्वाद्य महाभुज॥
[6]आबद्धा मानुषाः सर्वे निर्बन्धाः कर्मणोर्द्वयोः।
दैवे पुरुषकारे च परं ताभ्यां न विद्यते॥

दैवे आसमन्तात् बद्धाः, पुरुषकारे निहीनतया बद्धाः। तेन दैवं प्रधानम्, पुरुषकार उपसर्जनमित्युक्तं भवति। नीटी.

(१) भा. ५।१३४।२० ; भामु. ५।१३६।२१ धृष्टवन्त (धृतिमन्त).

(२) भा. ५।१३४।२१ ; भामु. ५।१३६।२२ तदर्थं (ईदृशं).

(३) भा. ५।१३५।१४ ; भामु. ५।१३७।१५.

(४) भा. ७।१२७।२० ; भामु. ७।१५२।३० मृत्युं (दैवं) निवर्तनम् (निरर्थकम्).

(५) भा. १०।२।१ ; भामु. १०।२।१ हेतुयुक्तं मया (यद्यदुक्तं त्वया).

(६) भा. १०।२।२ ; भामु. १०।२।२ निर्बन्धाः (निबद्धाः) ; मेधा. ७।२०५ आबद्धा (आरम्भा) निर्बन्धाः (निदानं) परं ताभ्यां न (परतोऽन्यत्र).

[1]न हि दैवेन सिध्यन्ति कर्माण्येकेन सत्तम ।
न चापि कर्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः ॥
[2]ताभ्यामुभाभ्यां सर्वार्था निबद्धा ह्यधमोत्तमाः ।
प्रवृत्ताश्चैव दृश्यन्ते निवृत्ताश्चैव सर्वशः ॥
[3]पर्जन्यः पर्वते वर्षन् किं नु साधयते फलम् ।
कृष्टे क्षेत्रे तथाऽवर्षन् किं नु साधयते फलम् ॥

* वर्षन् किं फलं न साधयते ? अपि तु साधयत्येव । कृषिं विनाऽपि वनेचराः केवलं पर्जन्येन जीवन्ति, न तु कृषीवलाः केवलया कृष्या जीवन्ति । एवं पुरुषकारो दैवमपेक्षते, दैवं तु नातीव पुरुषकारापेक्षमिति भावः । नीटी.

[4]उत्थानं चाप्यदैवस्य ह्यनुत्थानस्य दैवतम् ।
व्यर्थं भवति सर्वत्र पूर्वं कस्तत्र निश्चयः ॥

एतदेवाऽऽह– उत्थानमिति । दैवस्य प्रधानस्य (?) उत्थानं पुरुषकारः व्यर्थं भवति, तथा अनुत्थानम् उत्थानहीनं दैवमपि व्यर्थमिति पक्षद्वयं सर्वत्र व्यवस्यति, तत्र पूर्व एव पक्षः श्रेयानित्यर्थः । नीटी.

[5]प्रवृष्टे च यथा देवे सम्यक् क्षेत्रे च कर्षिते ।
बीजं महागुणं भूयात्तथा सिद्धिर्हि मानुषी ॥

* उत्तरार्धे भामुवत् पाठमभिप्रयन् नीलकण्ठः पूर्वार्धेऽपि ' किं न ' इति पाठमभिप्रैति । अत एव पूर्वत्र आबद्धनिबद्धशब्दगतोपसर्गभेदवशात् दैवपुरुषकारयोः प्रधानोपसर्जनभावं व्याख्यातवान् । भा–भामुपाठौ तु तयोः समप्राधान्यपरौ ।

(१) भा. १०।२।३ ; भामु. १०।२।३ कर्मा (कार्या).

(२) भा. १०।२।४ ; भामु. १०।२।४ ह्यधमो (अधमो).

(३) भा. १०।२।५ ; भामु. १०।२।५ तथाऽवर्षन् किं नु (तथा वर्षन् किं न).

(४) भा. १०।२।६ ; भामु. १०।२।६ (उत्थानं चापि दैवस्य (?) ह्यनुत्थानं च दैवतम् । व्यर्थं भवति सर्वत्र पूर्वस्तत्र विनिश्चयः ॥ ).

(५) भा. १०।२।७ ; भामु. १०।२।७ प्रवृष्टे (सुवृष्टे).



द्वयोरानुकूल्यं श्रेष्ठतरमित्याह– सुवृष्ट इति । नीटी.

[1]तयोर्दैवं विनिश्चित्य स्ववशेनैव वर्तते ।
प्राज्ञाः पुरुषकारं तु घटन्ते दाक्ष्यमास्थिताः ॥

दैवम्, बलवदिति शेषः । यतः स्वयमपि पुरुषकारं विनाऽपि प्रवर्तते, फलं दातुमिति शेषः । तर्हि किं पुरुषकारेणेत्याशङ्क्याऽऽह– प्राज्ञा इति । पुरुषापराधनिवृत्तिमात्रं तत्फलमित्यर्थः । नीटी.

[2]ताभ्यां सर्वे हि कार्यार्था मनुष्याणां नरर्षभ ।
विचेष्टन्तश्च दृश्यन्ते निवृत्ताश्च तथैव हि ॥

विचेष्टन्तः प्रवृत्ताः दृश्यन्ते लोकदृष्ट्येत्यर्थः । नीटी.

[3]कृतः पुरुषकारः सन् सोऽपि दैवेन सिध्यति ।
तथाऽस्य कर्मणः कर्तुरभिनिर्वर्तते फलम् ॥
[4]उत्थानं तु मनुष्याणां दक्षाणां दैववर्जितम् ।
अफलं दृश्यते लोके सम्यगप्युपपादितम् ॥
[5]तत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः ।
उत्थानं ते विगर्हन्ति प्राज्ञानां तन्न रोचते ॥
[6]प्रायशो हि कृतं कर्म अफलं दृश्यते भुवि ।
अकृत्वा च पुनर्दुःखं कर्म दृश्येन्महाफलम् ॥

कर्म अकृत्वा दुःखं पश्येत् इत्यपि प्रायशः अस्ति । नीटी.

(१) भा. १०।२।८ ; भामु. १०।२।८ स्ववशेनैव (स्वयं चैव प्र) कारं तु घटन्ते (कारेषु वर्तन्ते) स्थिताः (श्रिताः).

(२) भा. १०।२।९ ; भामु. १०।२।९ न्तश्च (न्तः स) श्च तथैव हि (स्तु तथैव च).

(३) भा. १०।२।१० ; भामु. १०।२।१० कारः सन् (कारश्च).

(४) भा. १०।२।११ ; भामु. १०।२।११ तु (च).

(५) भा. १०।२।१२ ; भामु. १०।२।१२.

(६) भा. १०।२।१३ ; भामु. १०।२।१३ अफलं (नाफलं) दृश्ये (पश्ये).

[1]चेष्टामकुर्वंल्लभते यदि किंचिद्यदृच्छया ।
यो वा न लभते कृत्वा दुर्दशौ तावुभावपि ॥

दुर्दशौं दुर्लभौ । चेष्टावान् लभते, निश्चेष्टो न लभते इत्युत्सर्गमात्रमित्यर्थः । नीटी.

[2]शक्नोति जीवितुं दक्षो नालसः सुखमेधते ॥
दृश्यन्ते जीवलोकेऽस्मिन् दक्षाः प्रायो हितैषिणः ॥

[3]यदि दक्षः समारम्भात् कर्मणां नाश्नुते फलम् ।
नास्य वाच्यं भवेत्किंचित्तत्त्वं चाप्यधिगच्छति ॥

दक्षो निन्द्यतां न यातीति भावः । नीटी.

[4]अकृत्वा कर्म यो लोके फलं विन्दति विष्ठितः ।
स तु वक्तव्यतां याति द्वेष्यो भवति प्रायशः ॥

अदक्षस्तु परप्रयत्नार्जितेन जीवन्नपि भोक्तुमेवायं समर्थः, न अर्जयितुमिति निन्द्यते इत्याह– अकृत्वेति । नीटी.

[5]एवमेतदनादृत्य वर्तते यस्त्वतोऽन्यथा ।
स करोत्यात्मनोऽनर्थान्नैष बुद्धिमतां नयः ॥

एतत् दैवदाक्ष्ययोः साहित्यम् । अन्यथा तयोरन्यतरालम्बनेन । नीटी.

[6]हीनं पुरुषकारेण यदा दैवेन वा पुनः ।
कारणाभ्यामथैताभ्यामुत्थानमफलं भवेत् ।
हीनं पुरुषकारेण कर्म त्विह न सिध्यति ॥

एतदेव स्पष्टयति– हीनमिति । पुरुषकारेण हीनं दैवोत्थानमफलम् । एवं दैवहीनं पुरुषकारस्योत्थानमपि । तस्मात् द्वाभ्यामपि उत्थातव्यमित्यर्थः । कर्म दैवम् । नीटी.

[1]दैवतेभ्यो नमस्कृत्य यस्त्वर्थान् सम्यगीहते ।
दक्षो दाक्षिण्यसंपन्नो न स मोघं विहन्यते ॥

फलितमाह– दैवतेभ्य इति । नीटी.

[2]सम्यगीहा पुनरियं यो वृद्धानुपसेवते ।
आपृच्छति च यच्छ्रेयः करोति च हितं वचः ॥

ईहां विवृणोति– सम्यगिति । नीटी.

[3]उत्थायोत्थाय हि सदा प्रष्टव्या वृद्धसंमताः ।
तेऽस्य योगे परं मूलं तन्मूला सिद्धिरुच्यते ॥

योगे अलब्धलाभे । नीटी.

[4]वृद्धानां वचनं श्रुत्वा यो ह्युत्थानं प्रयोजयेत् ।
उत्थानस्य फलं सम्यक् तदा स लभतेऽचिरात् ॥

[5]रागात् क्रोधाद्भयाल्लोभाद्योऽर्थानीहेत मानवः ।
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः ॥

अनीशः अजितचित्तः । अवमानी परमवजानन् । नीटी.

[6]सोऽयं दुर्योधनेनार्थो लुब्धेनादीर्घदर्शिना ।
असमर्थ्य समारब्धो मूढत्वादविचिन्तितः ॥

---

(१) भा. १०।२।१४ ; भामु. १०।२।१४ दुर्दशौ (दुर्दर्शौ).

(२) भा. १०।२।१५ ; भामु. १०।२।१५.

(३) भा. १०।२।१६ ; भामु. १०।२।१६ कर्मणां (कर्मणो) त्तत्त्वं चाप्य (लब्धव्यं वा).

(४) भा. १०।२।१७ ; भामु. १०।२।१७ विष्ठितः (घिष्ठितः) प्रायशः (भूयशः).

(५) भा. १०।२।१८ ; भामु. १०।२।१८ न्नैष (नेष).

(६) भा. १०।२।१९ ; भामु. १०।२।१९–२० यदा (यदि).

(१) भा. १०।२।२० ; भामु. १०।२।२०–२१ मोघं (मोघैः).

(२) भा. १०।२।२१ ; भामु. १०।२।२१–२२.

(३) भा. १०।२।२२ ; भामु. १०।२।२२–२३ तेऽस्य (ते स).

(४) भा. १०।२।२३ ; भामु. १०।२।२३–२४ यो ह्यु (योऽभ्यु).

(५) भा. १०।२।२४ ; भामु. १०।२।२४–२५ नीहेत (नीहति).

(६) भा. १०।२।२५ ; भामु. १०।२।२५–२६ मर्थ्य (मर्थः).

[1]हितबुद्धीननादृत्य संमन्त्र्यासाधुभिः सह ।
वार्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरैः ॥
[2]पूर्वमप्यतिदुःशीलो न दैन्यं कर्तुमर्हति ।
तपत्यर्थे विपन्ने हि मित्राणामकृतं वचः ॥

तपति संतापं प्राप्नोति भीमेन भग्नोरुः सन् ।
नीटी.

[3]अन्वावर्तामहि वयं यत्तु तं पापपूरुषम् ।
अस्मानप्यनयस्तस्मात् प्राप्तोऽयं दारुणो महान् ॥
[4]अनेन तु ममाद्यापि व्यसनेनोपतापिता ।
बुद्धिश्चिन्तयतः किंचित् स्वं श्रेयो नावबुध्यते ॥
[5]मुह्यता तु मनुष्येण प्रष्टव्याः सुहृदो बुधाः ।
तत्रास्य बुद्धिर्विनयस्तत्र श्रेयश्च पश्यति ।
ततोऽस्य मूलं कार्याणां बुद्ध्या निश्चित्य वै बुधाः ।
ते च पृष्टा यथा ब्रूयुस्तत् कर्तव्यं तथा भवेत् ॥
[6]ते वयं धृतराष्ट्रं च गान्धारीं च समेत्य ह ।
उपपृच्छामहे गत्वा विदुरं च महामतिम् ॥
[7]ते पृष्टाश्च वदेयुर्यच्छ्रेयो नः समनन्तरम् ।
तदस्माभिः पुनः कार्यमिति मे नैष्ठिकी मतिः ॥

(१) भा. १०।२।२६ ; भामु. १०।२।२६–२७.

(२) भा. १०।२।२७ ; भामु. १०।२।२७–२८ दैन्यं ( धैर्यं ) णामकृतं ( णां न कृतं ).

(३) भा. १०।२।२८ ; भामु. १०।२।२८–२९ पूर्वार्धे ( अनुवर्तामहे यत्तु तं वयं पापपूरुषम् । ).

(४) भा. १०।२।२९ ; भामु. १०।२।२९–३० यतः ( यते ).

(५) भा. १०।२।३० ( तत्रास्य ... वै बुधाः० ) ; भामु. १०।२।३०–३२ दो बुधाः ( दो जनाः ) ते च ( तेऽत्र ).

(६) भा. १०।२।३१ ; भामु. १०।२।३२–३३.

(७) भा. १०।२।३२ ; भामु. १०।२।३३–३४ ष्टाश्च ( ष्टास्तु ).

[1]अनारम्भात्तु कार्याणां नार्थः संपद्यते क्वचित् ।
कृते पुरुषकारे च येषां कार्यं न सिद्ध्यति ।
दैवेनोपहतास्ते तु नात्र कार्या विचारणा ॥

पौरुषं दैवात् श्रेष्ठम्

[2]उत्थाने च सदा पुत्र प्रयतेथा युधिष्ठिर ।
न ह्युत्थानमृते दैवं राज्ञामर्थप्रसिद्धये ॥

उत्थानेन पुरुषकारेण प्रयतेथाः जयाद्यर्थे यतस्व । दैवं प्राग्भवीयं कर्म देवताराधनादिकं वा केवलमुत्थानं विना न राज्ञामिष्टमर्थं साधयेत् । नीटी.

[3]साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च ।
पौरुषं हि परं मन्ये दैवं निश्चित्यमुच्यते ॥

साधारणं रथचक्रवत् समानम् । तत्रापि पौरुषं परं श्रेष्ठम्, दृष्टद्वारत्वात् । दैवं तु फलद्वारा निश्चित्य मुच्यते अकरणदोषात् फलासिद्धौ, फलसिद्धौ तु दुःखान्मुच्यते । नीटी.

[4]विपन्ने च समारम्भे संतापं मा स्म वै कृथाः ।
घटते विनयस्तात राज्ञामेष नयः परः ॥

घटस्व घटयस्व । कर्षकवत् सकृद्यत्नवैफल्येऽपि यतस्वैवेत्यर्थः । नीटी.

वर्णानुसारेण प्रजानामनापदि आपदि च
शस्त्रग्रहणाधिकारविवेकः

युधिष्ठिर उवाच–

[5]अथ तात यदा सर्वाः शस्त्रमाददते प्रजाः ।
व्युत्क्रामन्ति स्वधर्मेभ्यः क्षत्रस्य क्षीयते बलम् ॥

(१) भा. १०।२।३३ ; भामु. १०।२।३४–३५ च ( तु ).

(२) भा. १२।५६।१४ ; भामु. १२।५६।१४ उत्थाने च ( उत्थानेन ) मर्थप्रसिद्धये ( मर्थं प्रसाधयेत् ).

(३) भा. १२।५६।१५ ; भामु. १२।५६।१५ श्चित्यमु ( श्चित्य मु ).

(४) भा. १२।५६।१६ ; भामु. १२।५६।१६ उत्तरार्धे ( घटस्वैव सदाऽऽत्मानं राज्ञामेष परो नयः ॥ ).

(५) भा. १२।७९।१२ ; भामु. १२।७८।१२.

**तस्य स्मरन्ती वचनमाशंसे विजयं तव ।**
**तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनः पुनः ॥**
**यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे ।**
**तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥**

अर्थाभिनिर्वृत्तौ प्रयोजननिष्पत्तौ परे तत्संबन्धिनः तेनार्थेनाऽऽप्यायिता भवन्ति, तस्य तद्भाग्यादेवार्थसिद्धिः । नयेषु नीतिमार्गेषु । नीटी.

[1]**समृद्धिरसमृद्धिर्वा पूर्वेषां मम संजय ।**
**एवं विद्वान् युद्धमना भव मा प्रत्युपाहर ॥**

पूर्वेषां मम च युद्धे समृद्धिरसमृद्धिर्वाऽवश्यंभाविनीत्येवं विद्वान् युद्धमना भव । लाभालाभौ समौ कृत्वा युध्यस्वेति भावः । मा प्रत्युपाहरः प्रत्युपहारं युद्धोपसंहारं मा कार्षीरित्यर्थः । नीटी.

[2]**नातः पापीयसीं कांचिदवस्थां शम्बरोऽब्रवीत् ।**
**यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥**

अयुध्यतो दरिद्रत्वं स्यात्तच्चानिष्टमित्याह– नात इति । नीटी.

**पतिपुत्रवधादेतत् परमं दुःखमब्रवीत् ।**
**दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ॥**

पर्यायमरणं दारिद्र्यं नामान्तरेण मरणमेवेत्यर्थः । नीटी.

[3]**अहं महाकुले जाता ह्रदाद्ध्रदमिवाऽऽगता ।**
**ईश्वरी सर्वकल्याणैर्भर्त्रा परमपूजिता ॥**
[4]**महार्हमाल्याभरणां सुमृष्टाम्बरवाससम् ।**
**पुरा दृष्ट्वा सुहृद्वर्गो मामपश्यत् सुदुर्गताम् ॥**

[1]**यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बले ।**
**न तदा जीवितेनार्थो भविता तव संजय ॥**
[2]**दासकर्मकरान् भृत्यानाचार्यर्त्विक्पुरोहितान् ।**
**अवृत्त्याऽस्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते ॥**

अस्मान् प्रजहतः अस्मत्यागं कुर्वतः । नीटी.

[3]**यदि कृत्यं न पश्यामि तवाद्येह यथा पुरा ॥**
**श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे ॥**

कृत्यं कर्तव्यं पराक्रमम् । नीटी.

[4]**नेति चेद् ब्राह्मणान् ब्रूयां दीर्यते हृदयं मम ।**
**न ह्यहं न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥**
[5]**वयमाश्रयणीयाः स्म नाऽऽश्रितारः परस्य च ।**
**साऽन्यानाश्रित्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥**

श्रोतारः पराज्ञायाः । पाठान्तरे श्रेतारः आश्रयितारः । नीटी.

[6]**अपारे भव नः पारमप्लवे भव नः प्लवः ।**
**कुरुष्व स्थानमस्थाने मृतान् संजीवयस्व नः ॥**
[7]**सर्वे ते शत्रवः सह्या न चेज्जीवितुमिच्छसि ।**
**अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे ॥**

---

(१) भा. ५।१३२।११ ; भामु. ५।१३४।११ हर (हरः).

(२) भा. ५।१३२।१२–१३ ; भामु. ५।१३४।१२–१३.

(३) भा. ५।१३२।१४ ; भामु. ५।१३४।१४ ल्याणैर्भ (ल्याणी भ).

(४) भा. ५।१३२।१५ ; भामु. ५।१३४।१५ दृष्ट्वा (हृष्टः) दुर्ग (हृद्र).

(१) भा. ५।१३२।१६ ; भामु. ५।१३४।१६ र्बले (र्बलाम्).

(२) भा. ५।१३२।१७ ; भामु. ५।१३४।१७.

(३) भा. ५।१३२।१८ ; भामु. ५।१३४।१८ द्येह (द्याहं).

(४) भा. ५।१३२।१९ ; भामु. ५।१३४।१९ ब्राह्मणान् (ब्राह्मणं) दीर्यते (दीर्यत).

(५) भा. ५।१३२।२० ; भामु. ५।१३४।२० नाऽऽश्रि (न श्रो) न्यानाश्रित्य (न्यमासाद्य).

(६) भा. ५।१३२।२१ ; भामु. ५।१३४।२१.

(७) भा. ५।१३२।२२ ; भामु. ५।१३४।२२ सह्या (शक्या) मिच्छसि (मर्हसि).

शक्याः, जेतुमिति शेषः । 'सह्याः' इति पाठे न सहनीयाः । नीटी.

[1]निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम् ।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥

निर्विण्णात्मा विरक्तचित्तः, यतो हतमनाः नष्टसंकल्पः । विश्रुतिं ख्यातिम् । नीटी.

इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
माहेन्द्रं च ग्रहं लेभे लोकानां चेश्वरोऽभवत् ॥

ग्रहं सोमपात्रम् । 'प्रग्रहम्' इति पाठे नियमनं नियन्तृत्वमित्यर्थः । 'प्रग्रहश्च तुलासूत्रे बन्द्यां नियमने भुजे' इति विश्वः । नीटी.

[2]नाम विश्राव्य वा संख्ये शत्रूनाहूय दंशितान् ।
सेनाग्रं वाऽपि विद्राव्य हत्वा वा पुरुषं वरम् ॥

[3]यदैव लभते वीरः सुयुद्धेन महद्यशः ।
तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च ॥

[4]त्यक्त्वाऽऽत्मानं रणे दक्षं शूरं कापुरुषा जनाः ।
अवशाः पूरयन्ति स्म सर्वकामसमृद्धिभिः ॥

कापुरुषाः जनाः रणे आत्मानं देहं त्यक्त्वा रणे दक्षं शूरं समृद्धिभिस्तर्पयन्ति स्मेति संबन्धः । नीटी.

[5]राज्यं वाऽप्युग्रविभ्रंशं संशयो जीवितस्य वा ।
प्रलब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः ॥

उग्रविभ्रंशं महाप्रपातम् । जीवितस्य संशयः मरणम् । लब्धस्य जितस्य शेषं पुनः स्वल्पेन विभवेनावस्थापनम् । नीटी.

[1]स्वर्गद्वारोपमं राज्यमथवाऽप्यमृतोपमम् ।
रुद्धमेकायने मत्वा पतोल्मुक इवारिषु ॥

रुद्धं ग्रस्तं मत्वा एकायनं स्वर्गराज्ययोर्मध्ये एकं मार्गं पत गच्छ । नीटी.

[2]जहि शत्रून् रणे राजन् स्वधर्ममनुपालय ।
मा त्वा पश्येत् सुकृपणं शत्रुः श्रीमान् कदाचन ॥

मा त्वेति । शत्रूणां भयवर्धनं भयच्छेदनम् अनुग्रत्वात् सुकृपणं दीनं त्वा त्वां मा दृशं मा द्राक्षम् । दृशमिति माङ्योगादडभावे 'इरितो वा' (पा. ३।१।५७) इत्यङ्पक्षे 'दृशिर् प्रेक्षणे' अस्य लुङुत्तमैकवचनम् । पाठान्तरं तु मूढजनकल्पितं नाऽऽदरणीयम् । नीटी.

[3]अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम् ।
अपि त्वां नानुपश्येयं दीना दीनमवस्थितम् ॥

[4]उष्य सौवीरकन्याभिः श्लाघस्वार्थैर्यथा पुरा ।
मा च सैन्धवकन्यानामवसन्नो वशं गमः ॥

हृष्य हर्षं प्राप्नुहि सौवीरकन्याभिः स्वदारैः । मा चेति । सैन्धवकन्यानां शत्रुदेशजकन्यानाम् । नीटी.

[5]युवा रूपेण संपन्नो विद्ययाऽभिजनेन च ।
यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः ।
वोढव्ये धुर्यनडुवन्मन्ये मरणमेव तत् ॥

---

(१) भा. ५।१३२।२३–२४ ; भामु. ५।१३४।२३–२४.

(२) भा. ५।१३२।२५ ; भामु. ५।१३४।२५ वा संख्ये (वै संख्ये) वाऽपि (चापि).

(३) भा. ५।१३२।२६ ; भामु. ५।१३४।२६.

(४) भा. ५।१३२।२७ ; भामु. ५।१३४।२७ पूर (तर्प).

(५) भा. ५।१३२।२८ ; भामु. ५।१३४।२८ वाऽ (चा) प्रल (न ल).

(१) भा. ५।१३२।२९ ; भामु. ५।१३४।२९ कायने (कायनं).

(२) भा. ५।१३२।३० ; भामु. ५।१३४।३० त्वा पश्येत् (त्वा दृशं) चतुर्थचरणे (शत्रूणां भयवर्धनम्).

(३) भा. ५।१३२।३१ ; भामु. ५।१३४।३१ दीना दीनमव (दीनाद्दीनमिवा).

(४) भा. ५।१३२।३२ ; भामु. ५।१३४।३२ उष्य (हृष्य).

(५) भा. ५।१३२।३३ ; भामु. ५।१३४।३३–३४ यस्त्वा (यत्त्वा) पञ्चमचरणे (अधुर्यवच्च वोढव्ये).

विक्कुर्वीत अपसरणं कुर्वीत । अधुर्यवत् अदान्तवृषभवत् । 'अनड्वानिव' इत्यपि पाठः । तत् विकारकरणम् । नीटी.

[1]यदि त्वामनुपश्यामि परस्य प्रियवादिनम् ।
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे ॥

[2]नास्मिञ्जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः ।
न त्वं परस्यानुधुरं तात जीवितुमर्हसि ॥

[3]अहं हि क्षत्रहृदयं वेद यत् परिशाश्वतम् ।
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ।
शाश्वतं चाव्ययं चैव प्रजापतिविनिर्मितम् ॥

वेद वेद्मि । परिशाश्वतं सर्वथैवैकरूपम्, अक्षीणमित्यर्थः । पूर्वैः स्ववंशजैः, परैः अन्यवंशीयैः, परतरैः वृद्धैः । अव्ययम् अपक्षयहीनं क्षत्रहृदयं प्रोक्तमिति पूर्वेण संबन्धः । नीटी.

[4]यो वै कश्चिदिहाऽऽजातः क्षत्रियः क्षत्रधर्मवित् ।
भयाद् वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ॥

आजातः सम्यग्जातः कुले जात इत्यर्थः । य आजातः स भयात् कस्यचिन्न नमेत्, वृत्तिसमीक्षः वृत्तिं समीक्षमाणः वा न नमेत् । नीटी.

[5]उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित् ॥

(१) भा. ५।१३२।३४; भामु. ५।१३४।३४–३५.

(२) भा. ५।१३२।३५ ; भामु. ५।१३४।३५–३६ नुधुरं ( नुचरः ).

(३) भा. ५।१३२।३६ तृतीयार्धं नास्ति; भामु. ५।१३४।३६–३७.

(४) भा. ५।१३२।३७ ; भामु. ५।१३४।३८ धर्म ( कर्म ).

(५) भा. ५।१३२।३८ ; भामु. ५।१३४।३९ नमेदिह ( नमेतेह ).

उद्यच्छेत् उद्यमं कुर्यात् । अपर्वणि अकाण्डे, वृथाऽपीत्यर्थः । नीटी.

[1]मातङ्गो मत्त इव च परीयात् सुमहामनाः ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च संजय ॥

परीयात् पर्यटनं कुर्यात् । नीटी.

[2]नियच्छन्नितरान् वर्णान् विनिघ्नन् सर्वदुष्कृतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ॥

दुष्कृतः पापिष्ठान् । नीटी.

पुत्र उवाच–

[3]कृष्णायसस्येव च ते संहत्य हृदयं कृतम् ।
मम मातस्त्वकरुणे वैरप्रज्ञे ह्यमर्षणे ॥

कृष्णायसस्य लोहस्य । संहत्य पिण्डीकृत्य । नीटी.

[4]अहो क्षत्रसमाचारो यत्र मामपरं यथा ।
नियोजयसि युद्धाय परमातेव मां तथा ।
ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् ॥

एकजम् अभ्रातृकम् । नीटी.

[5]किं नु ते मामपश्यन्त्या पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ।
[6]मयि वा संगरहते प्रियपुत्रे विशेषतः ॥

मातोवाच–

[7]सर्वारम्भा हि विदुषां तात धर्मार्थकारणात् ।
तानेवाभिसमीक्ष्याहं संजय त्वामचूचुदम् ॥

(१) भा. ५।१३२।३९ ; भामु. ५।१३४।४० सुमहा ( स महा ).

(२) भा. ५।१३२।४० ; भामु. ५।१३४।४१.

(३) भा. ५।१३३।१ ; भामु. ५।१३५।१ वैर ( वीर ).

(४) भा. ५।१३३।२ द्वितीयार्धं नास्ति ; भामु. ५।१३५।२–३ मपरं ( मितरं ).

(५) भा. ५।१३३।३ ; भामु. ५।१३५।३–४ कृत्यं ते ( कृत्येन ).

(६) भामु. ५।१३५।४.

(७) भा. ५।१३३।४ ; भामु. ५।१३५।५ रम्भा ( वस्था ) तानेवा ( तावेवा ).

सर्वावस्था गार्हस्थ्यादिरूपा । 'सर्वारम्भाः' इति पाठान्तरम् । तावेव धर्मार्थाविव । अचूचुदं प्रेरितवत्यस्मि । नीटी.

[1]स समीक्ष्यक्रमोपेतो मुख्यः कालोऽयमागतः ।
अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ।
असंभावितरूपस्त्वं सुनृशंसं करिष्यसि ॥

समीक्ष्यक्रमोपेतः द्रष्टुं योग्येन पराक्रमेण युक्तः । अस्मिन् काले चेत् कार्यं कर्तव्यं युद्धं न प्रतिपद्यसे, आनृशंस्यं शत्रुषु स्वदेहे वा दयां करिष्यसि, तर्हि त्वम् असंभावितरूपः तिरस्कृतरूपः भविष्यसीति संबन्धः । नीटी.

[2]तं त्वामयशसा स्पृष्टं न ब्रूयां यदि संजय ।
खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम् ॥

उभयलोकानुपयुक्तेऽपि पुत्रे वृथा वात्सल्यं खरी करोति तद्वदहमपि स्यामित्यर्थः । नीटी.

सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ।
अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ॥
तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः ।
धर्मार्थगुणयुक्तेन नेतरेण कथंचन ।
दैवमानुषयुक्तेन सद्भिराचरितेन च ॥

अविद्या अनात्मनि देहे आत्मबुद्धिः, सा यदि तव स्यात् तर्हि सत् समीचीनं तव देहनाशादात्मनाशं पश्यतो वृत्तं शीलम् । उपहासार्थमिदमुच्यते । तेन देहात्मभावेन मम देहादन्यमात्मानं पश्यन्त्याः प्रियो भवेः । अयमप्युपहासः । देहात्मवादी दुर्वृत्तो मम द्वेष्यश्च भविष्यसीत्यर्थः । धर्मार्थेति । त्वया भाव्यमिति शेषः । नीटी.

[3]यो ह्येवमविनीतेन रमते पुत्रनप्तृणा ।
अनुत्थानवता चापि मोघं तस्य प्रजाफलम् ॥

(१) भा. ५।१३३।५ ; भामु. ५।१३५।६–७ सुनृशंसं (आनृशंसं).

(२) भा. ५।१३३।६–८ ; भामु. ५।१३५।७–१०.

(३) भा. ५।१३३।९ ; भामु. ५।१३५।११ चापि + (दुर्विनीतेन दुर्धिया । रमते यस्तु पुत्रेण).

[1]अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ।
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ॥

[2]युद्धाय क्षत्रियः सृष्टः संजयेह जयाय च ।
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ।
जयन् वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ॥

[3]न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम् ।
यदमित्रान् वशे कृत्वा क्षत्रियः सुखमश्नुते ॥

[4]मन्युना दह्यमानेन पुरुषेण मनस्विना ।
निकृतेनेह बहुशः शत्रून् प्रतिजिगीषया ॥

निकृतेन अपकृतेनापि शत्रून् प्रति जिगीषया, प्रस्थातव्यमेवेति शेषः । नीटी.

[5]आत्मानं वा परित्यज्य शत्रून् वा विनिपात्य वै ।
अतोऽन्येन प्रकारेण शान्तिरस्य कुतो भवेत् ॥

[6]इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति ।
यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥

स्वल्पमैश्वर्यम् अप्रियम् अनिष्टम् इच्छति मन्यते प्राज्ञः । यस्य तु अल्पमैश्वर्यं प्रियं तस्य ध्रुवं निश्चितं तदेवाल्पं प्रियत्वेन गृहीतम् अप्रियम् अनर्थकरं स्यात् । तेन राज्ञाऽल्पसंतुष्टेन न भवितव्यमित्यर्थः । नीटी.

प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥

अभावं नाशम् । नीटी.

(१) भा. ५।१३३।१० ; भामु. ५।१३५।१२–१३.

(२) भा. ५।१३३।११ ; भामु. ५।१३५।१३–१४ द्वितीयार्धं नास्ति.

(३) भा. ५।१३३।१२ ; भामु. ५।१३५।१४ मश्नुते (मेधते).

(४) भा. ५।१३३।१३ ; भामु. ५।१३५।१५.

(५) भा. ५।१३३।१४ ; भामु. ५।१३५।१६ शत्रून् (शत्रुं) वै (च).

(६) भा. ५।१३३।१५–१८ ; भामु. ५।१३५।१७–२०.

**पुत्र उवाच–**

**नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः ।**
**कारुण्यमेवात्र पश्य भूत्वेह जडमूकवत् ॥**

कारुण्यमेव पश्य, हितत्वेनेति शेषः । नीटी.

**मातोवाच–**

**अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि ।**
**चोद्यं मां चोदयस्येतद्भृशं वै चोदयामि ते ॥**

अतो वचनात् मे मम भूयसी नन्दिः समृद्धिः । भवितेति शेषः । यत् एवं कारुण्यं देहे कृपाम् अनुपश्यसि हितत्वेन । एवं सत्यपि त्वमेव चोद्यं पूर्वपक्षं चोदयसि प्रेरयसि कारुण्यं कुर्विति । अथापि वज्रहृदयाऽहं ते तुभ्यं चोदयामि । नीटी.

**[1]अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।**
**अहं पश्यामि विजयं कृत्स्नं भाविनमेव ते ॥**

सैन्धवान् हत्वा कृच्छ्रेण भावितं ते तव विजयं यदा पश्यामि द्रक्ष्यामि अथ त्वां पूजयिष्यामीति योजना । नीटी.

**पुत्र उवाच–**

**[2]अकोशस्यासहायस्य कुतःस्विद्विजयो मम ।**
**इत्यवस्थां विदित्वेमामात्मनाऽऽत्मनि दारुणाम् ।**
**राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतेः ॥**

एतामवस्थां दारुणामात्मनि आत्मना स्वयं विदित्वा मे मम भावः चित्तं राज्यान्निवृत्त इत्युत्तरेण संबन्धः । नीटी.

**[3]ईदृशं भवती कंचिदुपायमनुपश्यसि ।**
**तन्मे परिणतप्रज्ञे सम्यक् प्रब्रूहि पृच्छते ।**
**करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥**

(१) भा. ५।१३३।१९ ; भामु. ५।१३५।२१ कृत्स्नं भाविन ( कृच्छ्रभावित ).

(२) भा. ५।१३३।२० ; भामु. ५।१३५।२२–२३ कुतःस्विद्विजयो ( कुतः सिद्धिर्जयो ) त्वेमा ( त्वैता ) दुष्कृतेः ( दुष्कृतः ).

(३) भा. ५।१३३।२१ ; भामु. ५।१३५।२३–२४.

**मातोवाच–**

**[1]पुत्राऽऽत्मा नावमन्तव्यः पूर्वाभिरसमृद्धिभिः ।**
**अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ॥**
**[2]अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः ।**
**सर्वेषां कर्मणां तात फले नित्यमनित्यता ॥**

अर्थाः धर्माद्याः बालिशैरमर्षेणैव नाऽऽरब्धव्याः । पण्डितैस्तु आदरेण आरब्धव्या एवेति भावः । नीटी.

**अनित्यमिति जानन्तो न भवन्ति भवन्ति च ।**
**अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ॥**

अनित्यमिति जानन्तः पण्डिता आरभमाणाः न भवन्ति कदाचिदैश्वर्यं न लभन्ते, भवन्ति च कदाचित् सिद्धार्थाः । अकुर्वाणान्निन्दति– अथेति । नीटी.

**ऐकगुण्यमनीहायामभावः कर्मणां फलम् ।**
**अथ द्वैगुण्यमीहायां फलं भवति वा न वा ॥**

अनीहायां चेष्टाया अभावे ऐकगुण्यम् एकगुणमेव फलम्, यत् कर्मणामीप्सिततमानाम् अभावः अप्राप्तिः । ईहायां तु द्वैगुण्यं गुणद्वयम्, यत् 'फलं भवति वा न वा' इति । अभावनिश्चयापेक्षया पाक्षिकफलसद्भाववती प्रवृत्तिरेव श्रेष्ठेत्यर्थः । नीटी.

**यस्य प्रागेव विदिता सर्वार्थानामनित्यता ।**
**नुदेद् वृद्धिसमृद्धी स प्रतिकूले नृपात्मज ॥**

वृद्धिः पीडा । 'वृधु हिंसायाम्' इत्यस्य रूपम् । समृद्धिः ऐश्वर्यम् । ते उभे नुदेत् दूरीकुर्यात् । आत्मनः पीडां परस्यैश्वर्यं च नुदेदित्यर्थः । नीटी.

**[3]उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।**
**भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ।**
**मङ्गलानि पुरस्कृत्य ब्राह्मणैश्चेश्वरैः सह ॥**

(१) भा. ५।१३३।२२ ; भामु. ५।१३५।२५ पुत्राऽऽत्मा नाव ( पुत्र नाऽऽत्माऽव ).

(२) भा. ५।१३३।२३–२६ ; भामु. ५।१३५।२५–२९.

(३) भा. ५।१३३।२७ ; भामु. ५।१३५।२९–३० ब्राह्मणै ( ब्राह्मणां ).

योक्तव्यं सज्जीभवितव्यम् । ईश्वरैः देवैः । नीटी.

[1]प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक ।
अभिवर्तेत लक्ष्मीस्तं प्राचीमिव दिवाकरः ॥

निदर्शनान्युपायांश्च बहून्युद्धर्षणानि च ।
अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम् ।
पुरुषार्थमभिप्रेतं समाहर्तुमिहार्हसि ॥

उद्धर्षणानि प्रोत्साहनानि । अनुदर्शितं रूपं लोकवृत्तान्तः यस्मै स तथा । नीटी.

[2]क्रुद्धाँल्लुब्धान्परिक्षीणानवक्षिप्तान्विमानितान् ।
स्पर्धिनश्चैव ये केचित्तान् युक्त उपधारय ॥

[3]एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान् ।
महावेग इवोद्धूतो मातरिश्वा बलाहकान् ॥

[4]तेषामग्रप्रदायी स्याः कल्योत्थायी प्रियंवदः ।
ते त्वां प्रियं करिष्यन्ति पुरो धास्यन्ति च ध्रुवम् ॥

तेषां क्रुद्धादीनाम् अग्रप्रदायी । भक्तं वेतनं च सर्वेभ्यः प्रथमं देयम्, न चेत् सद्यः कुपितास्ते त्यजेयुरित्यर्थः । नीटी.

[5]यदैव शत्रुर्जानीयात् सपत्नं त्यक्तजीवितम् ।
तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव ॥

त्यक्तजीवितं युद्धे जीवितनिराकाङ्क्षम् । शत्रुर्जीविताकाङ्क्षी उद्विजते । नीटी.

(१) भा. ५।१३३।२८–२९ ; भामु. ५।१३५।३१–३३.

(२) भा. ५।१३३।३० ; भामु. ५।१३५।३३–३४ क्षिप्तान् (लिप्तान्).

(३) भा. ५।१३३।३१ ; भामु. ५।१३५।३४–३५ द्धूतो (द्भूतो).

(४) भा. ५।१३३।३२ ; भामु. ५।१३५।३५–३६ कल्यो (कल्पो).

(५) भा. ५।१३३।३३–३५ ; भामु. ५।१३५।३६–३८.

तं विदित्वा पराक्रान्तं वशे न कुरुते यदि ।
निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ॥

तं शत्रुं पराक्रान्तं पराक्रमवन्तं विदित्वा अशक्त्या वशे स्वाज्ञायां यदि न करोति तर्हि एनं निर्वादैः परिनिष्ठितैर्दूतैः निर्वदेत् परिनिष्ठां प्रापयेत् । साम्ना दानेन वा तं पर्यवस्थापयेदित्यर्थः । 'निर्वादः स्यात् परीवादे परिनिष्ठितवादयोः' इति विश्वः । अन्ततः फलतः तत् शत्रोर्वशीकरणं भविष्यति । नीटी.

निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति ।
धनवन्तं हि मित्राणि भजन्ते चाऽऽश्रयन्ति च ॥

तत्रोपायमाह– निर्वादादिति । एवं परिनिष्ठिततया आस्पदं स्थानं प्राप्तं चेत् शत्रुणाऽनुपद्रुतस्य धनवृद्ध्यादिकं सर्वं सेत्स्यतीत्यर्थः । नीटी.

[1]स्खलितार्थं पुनस्तात संत्यजन्त्यपि बान्धवाः ।
अप्यस्मिन्नाऽऽश्रयन्ते च जुगुप्सन्ति च तादृशम् ॥

स्खलितार्थं च्युतधनम् । न आश्वसन्ते इति छेदः । विश्वासं न कुर्वन्तीत्यर्थः । नीटी.

[2]शत्रुं कृत्वा यः सहायं विश्वासमुपगच्छति ।
अतः संभाव्यमेवैतद्यद्राज्यं प्राप्नुयादिति ॥

संभाव्यमेवैतदित्युपहासः । असंभावितमेतत् यच्छत्रौ विश्वासं कृत्वाऽपि राज्यं प्राप्नुयादिति । नीटी.

मातोवाच–

[3]नैव राज्ञा दरः कार्यो जातु कस्यांचिदापदि ।
अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥

दरः भयम् । जातु कदाचित् । दीर्णः भीतः । नीटी.

(१) भा. ५।१३३।३६ ; भामु. ५।१३५।३९ स्तात (स्तानि) न्त्यपि (न्ति च) श्रयन्ते (श्वसन्ते) प्सन्ति (प्सन्ते).

(२) भा. ५।१३३।३७ ; भामु. ५।१३५।४०.

(३) भा. ५।१३४।१ ; भामु. ५।१३६।१.

[1]दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते ।
राष्ट्रं बलममात्याश्च पृथक् कुर्वन्ति ते मतिम् ॥

'महीम्' इति पाठे महीस्थान् लोकान् । नीटी.

[2]शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।
अन्वेके प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥

अपरे स्वीयाः । प्रजिहीर्षन्ति प्रहर्तुं ताडितुम् इच्छन्ति । नीटी.

[3]य एवात्यन्तसुहृदस्त एनं पर्युपासते ।
अशक्तयः स्वस्तिकामा बद्धवत्सा इडा इव ।
शोचन्तमनुशोचन्ति प्रतीतानिव बान्धवान् ॥

इलाः धेनवः, 'इला धेनुः सहवत्सा न आगात्' इति मन्त्रवर्णात् । नीटी.

[4]अपि ते पूजिताः पूर्वमपि ते सुहृदो मताः ।
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः ।
मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः ॥

ते तवापि सुहृदः सन्ति । ये राष्ट्रम् 'असदीयमिदमस्माभी रक्षणीयम्, राजा च व्यसनादुद्धर्तव्यः' इति अभिमन्यते अभिमानवन्तः । मा दीदरः मा विदारय । नीटी.

[5]प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।
उल्लपन्त्या समाश्वासं बलवानिव दुर्बलम् ॥

समाश्वासं धैर्यम् । नीटी.

(१) भा. ५।१३४।२ ; भामु. ५।१३६।२ मतिम् (मतीः).

(२) भा. ५।१३४।३ ; भामु. ५।१३६।३ अन्वेके (अन्ये तु).

(३) भा. ५।१३४।४ ; भामु. ५।१३६।४-५ इडा (इला) प्रतीता (पतिता).

(४) भा. ५।१३४।५ ; भामु. ५।१३६।५-६.

(५) भा. ५।१३४।६ ; भामु. ५।१३६।७ उत्तरार्धे (विदधत्या समाश्वासमुक्तं तेजोविवृद्धये ॥).

[1]यद्येतत्संविजानासि यदि सम्यग् ब्रवीम्यहम् ।
कृत्वाऽसौम्यमिवाऽऽत्मानं जयायोत्तिष्ठ संजय ॥

[2]अस्ति नः कोशनिचयो महानविदितस्तव ।
तमहं वेद नान्यस्तमुपसंपादयामि ते ॥

[3]सन्ति नैकशता भूयः सुहृदस्तव संजय ।
सुखदुःखसहा वीर शतार्हा अनिवर्तिनः ॥

[4]तादृशा हि सहाया वै पुरुषस्य बुभूषतः ।
ईषदुज्झिहतः किंचित्सचिवाः शत्रुकर्शनाः ॥

पुत्र उवाच—

[5]कस्य त्वीदृशकं वाक्यं श्रुत्वाऽपि स्वल्पचेतसः ।
तमो न व्यपहन्येत सुचित्रार्थपदाक्षरम् ॥

स्वल्पचेतसोऽपि तस्य तमोऽपागमदिति संबन्धः । नीटी.

[6]उदके धूरियं धार्या सर्तव्यं प्रवणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतदर्शिनी ॥

उदके मज्जन्तीव भूः पित्र्यं राज्यम् । 'धूः' इति पाठेऽपि स एवार्थः । इयं मया धार्या मग्नं राज्यं वा

(१) भा. ५।१३४।७ ; भामु. ५।१३६।८ यद्ये (यदे).

(२) भा. ५।१३४।८ ; भामु. ५।१३६।९ महान (महान्ह्य).

(३) भा. ५।१३४।९ ; भामु. ५।१३६।१० शता (तमा) शतार्हा (संग्रामात्).

(४) भा. ५।१३४।१० ; भामु. ५।१३६।११ ईषदुज्जिहतः (इष्टं जिहीर्षतः) कर्शनाः (कर्शन).

(५) भा. ५।१३४।११ ; भामु. ५।१३६।१२ (पुत्र उवाच०) कस्य (यस्याः) तृतीयचरणे (तमस्त्वपागमत्तस्य).

(६) भा. ५।१३४।१२ ; भामु. ५।१३६।१३ श्लोकात् प्राक् 'पुत्र उवाच' इत्यधिकम् । धूरियं (भूरियं) सर्त (मर्त) द्भूत (द्भूति).

उद्धर्तव्यं प्रवणे प्रपाते वा युद्धाख्ये वा मर्तव्यम् , न तु एवमेव निर्व्यापारेण स्थेयम् । नेत्री शिक्षयित्री । नीटी.

[1]अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम् ।
किंचित् किंचित् प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः ॥

अपरापरम् अपरमपरम् उत्तरोत्तरमिति यावत् । प्रतिवदन् प्रतिकूलं वदन् 'आयसं हृदयं तव' इति, 'पुत्रे निःस्नेहाऽसि' इत्यादि । नीटी.

[2]अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात् ।
उद्यच्छाम्येष शत्रूणां नियमाय जयाय च ॥

बान्धवात् बन्धुतः । उद्यच्छामि उद्यमं करोमि । नियमार्थं निग्रहार्थम् । 'बान्धवान्' इति पाठे उद्यच्छामि धारयामि । नीटी.

कुन्त्युवाच–

[3]सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः ।
तच्चकार तथा सर्वं यथावदनुशासनम् ॥
इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम् ।
राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितम् ॥
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्दति ॥
इदं पुंसवनं चैव वीराजननमेव च ।
अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते ॥

पुंसवनं पुत्रप्रसवकरम् । वीराणामाजननं येन तद्वीराजननम् । प्रजायते जनयति । नीटी.

[4]विद्याशूरं तपःशूरं दमशूरं तपस्विनम् ।
ब्राह्म्या श्रिया दीप्यमानं साधुवादेन संमतम् ॥

(१) भा. ५।१३४।१३ ; भामु. ५।१३६।१४.

(२) भा. ५।१३४।१४ ; भामु. ५।१३६।१५ माय (मार्थं).

(३) भा. ५।१३४।१५–१८ ; भामु. ५।१३६। १६–१९.

(४) भा. ५।१३४।१९ ; भामु. ५।१३६।२० दम (दान) वादेन (वादे च).

[1]अर्चिष्मन्तं बलोपेतं महाभागं महारथम् ।
धृष्टवन्तमनाधृष्यं जेतारमपराजितम् ॥
[2]नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
तदर्थं क्षत्रिया सूते वीरं सत्यपराक्रमम् ॥

क्षात्रधर्मार्जिता अर्थाः प्रियाः

[3]विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥
[4]युध्यस्व यत्नमास्थाय मृत्युं कृत्वा निवर्तनम् ।
यततस्तव तेषां च दैवं मार्गेण यास्यति ॥

दैवमविगणय्य यत्नमेवाऽऽतिष्ठेत्याह– युध्यस्वेति । सुदृढोद्यमात् दैवमपि मार्गेण अनुकूलेन यास्यतीत्यर्थः । नीटी.

दैवसहितं पौरुषं श्रेयस्करं न केवलदैवावलम्बनम्

कृप उवाच–

[5]श्रुतं ते वचनं सर्वं हेतुयुक्तं मया विभो ।
ममापि तु वचः किंचिच्छृणुष्वाद्य महाभुज ॥
[6]आबद्धा मानुषाः सर्वे निर्बन्धाः कर्मणोर्द्वयोः ।
दैवे पुरुषकारे च परं ताभ्यां न विद्यते ॥

दैवे आसमन्तात् बद्धाः, पुरुषकारे निहीनतया बद्धाः । तेन दैवं प्रधानम् , पुरुषकार उपसर्जनमित्युक्तं भवति । नीटी.

(१) भा. ५।१३४।२० ; भामु. ५।१३६।२१ धृष्टवन्त (धृतिमन्त).

(२) भा. ५।१३४।२१ ; भामु. ५।१३६।२२ तदर्थं (ईदृशं).

(३) भा. ५।१३५।१४ ; भामु. ५।१३७।१५.

(४) भा. ७।१२७।२० ; भामु. ७।१५२।३० मृत्युं (दैवं) निवर्तनम् (निरर्थकम्).

(५) भा. १०।२।१ ; भामु. १०।२।१ हेतुयुक्तं मया (यद्यदुक्तं त्वया).

(६) भा. १०।२।२ ; भामु. १०।२।२ निर्बन्धाः (निबद्धाः) ; मेधा. ७।२०५ आबद्धा (आरम्भा) निर्बन्धाः (निदानं) परं ताभ्यां न (परतोऽन्यत्र).

[1]न हि दैवेन सिध्यन्ति कर्माण्येकेन सत्तम ।
न चापि कर्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः ॥
[2]ताभ्यामुभाभ्यां सर्वार्था निबद्धा ह्यधमोत्तमाः ।
प्रवृत्ताश्चैव दृश्यन्ते निवृत्ताश्चैव सर्वशः ॥
[3]पर्जन्यः पर्वते वर्षन् किं नु साधयते फलम् ।
कृष्टे क्षेत्रे तथाऽवर्षन् किं नु साधयते फलम् ॥

* वर्षन् किं फलं न साधयते ? अपि तु साधयत्येव । कृषिं विनाऽपि वनेचराः केवलं पर्जन्येन जीवन्ति, न तु कृषीवलाः केवलया कृष्या जीवन्ति । एवं पुरुषकारो दैवमपेक्षते, दैवं तु नातीव पुरुषकारापेक्षमिति भावः । नीटी.

[4]उत्थानं चाप्यदैवस्य ह्यनुत्थानस्य दैवतम् ।
व्यर्थं भवति सर्वत्र पूर्वं कस्तत्र निश्चयः ॥

एतदेवाऽऽह– उत्थानमिति । दैवस्य प्रधानस्य ( ? ) उत्थानं पुरुषकारः व्यर्थं भवति, तथा अनुत्थानम् उत्थानहीनं दैवमपि व्यर्थमिति पक्षद्वयं सर्वत्र व्यवस्यति, तत्र पूर्व एव पक्षः श्रेयानित्यर्थः । नीटी.

[5]प्रवृष्टे च यथा देवे सम्यक् क्षेत्रे च कर्षिते ।
बीजं महागुणं भूयात्तथा सिद्धिर्हि मानुषी ॥

द्वयोरानुकूल्यं श्रेष्ठतरमित्याह– सुवृष्ट इति । नीटी.

[1]तयोर्दैवं विनिश्चित्य स्ववशेनैव वर्तते ।
प्राज्ञाः पुरुषकारं तु घटन्ते दाक्ष्यमास्थिताः ॥

दैवम्, बलवदिति शेषः । यतः स्वयमपि पुरुषकारं विनाऽपि प्रवर्तते, फलं दातुमिति शेषः । तर्हि किं पुरुषकारेणेत्याशङ्क्याऽऽह– प्राज्ञा इति । पुरुषापराधनिवृत्तिमात्रं तत्फलमित्यर्थः । नीटी.

[2]ताभ्यां सर्वे हि कार्यार्था मनुष्याणां नरर्षभ ।
विचेष्टन्तश्च दृश्यन्ते निवृत्ताश्च तथैव हि ॥

विचेष्टन्तः प्रवृत्ताः दृश्यन्ते लोकदृष्ट्येत्यर्थः । नीटी.

[3]कृतः पुरुषकारः सन् सोऽपि दैवेन सिध्यति ।
तथाऽस्य कर्मणः कर्तुरभिनिर्वर्तते फलम् ॥
[4]उत्थानं तु मनुष्याणां दक्षाणां दैववर्जितम् ।
अफलं दृश्यते लोके सम्यगप्युपपादितम् ॥
[5]तत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः ।
उत्थानं ते विगर्हन्ति प्राज्ञानां तन्न रोचते ॥
[6]प्रायशो हि कृतं कर्म अफलं दृश्यते भुवि ।
अकृत्वा च पुनर्दुःखं कर्म दृश्येन्महाफलम् ॥

कर्म अकृत्वा दुःखं पश्येत् इत्यपि प्रायशः अस्ति । नीटी.

---

* उत्तरार्धे भामुवत् पाठमभिप्रयन् नीलकण्ठः पूर्वार्धेऽपि ' किं न ' इति पाठमभिप्रैति । अत एव पूर्वत्र आबद्धनिबद्धशब्दगतोपसर्गभेदवशात् दैवपुरुषकारयोः प्रधानोपसर्जनभावं व्याख्यातवान् । भा–भामुपाठौ तु तयोः समप्राधान्यपरौ ।

( १ ) भा. १०।२।३ ; भामु. १०।२।३ कर्मा (कार्या).

( २ ) भा. १०।२।४ ; भामु. १०।२।४ ह्यधमो ( अधमो ).

( ३ ) भा. १०।२।५ ; भामु. १०।२।५ तथाऽवर्षन् किं नु ( तथा वर्षन् किं न ).

( ४ ) भा. १०।२।६ ; भामु. १०।२।६ ( उत्थानं चापि दैवस्य ( ? ) ह्यनुत्थानं च दैवतम् । व्यर्थं भवति सर्वत्र पूर्वस्तत्र विनिश्चयः ॥ ).

( ५ ) भा. १०।२।७ ; भामु. १०।२।७ प्रवृष्टे ( सुवृष्टे ).

( १ ) भा. १०।२।८ ; भामु. १०।२।८ स्ववशेनैव ( स्वयं चैव प्र ) कारं तु घटन्ते ( कारेषु वर्तन्ते ) स्थिताः (श्रिताः).

( २ ) भा. १०।२।९ ; भामु. १०।२।९ न्तश्च ( न्तः स ) श्च तथैव हि ( स्तु तथैव च ).

( ३ ) भा. १०।२।१० ; भामु. १०।२।१० कारः सन् ( कारश्च ).

( ४ ) भा. १०।२।११ ; भामु. १०।२।११ तु (च).

( ५ ) भा. १०।२।१२ ; भामु. १०।२।१२.

( ६ ) भा. १०।२।१३ ; भामु. १०।२।१३ अफलं (नाफलं ) दृश्ये ( पश्ये ).

[1]चेष्टामकुर्वँल्लभते यदि किंचिद्यदृच्छया ।
योवा न लभते कृत्वा दुर्दशौ तावुभावपि ॥

दुर्दर्शौ दुर्लभौ । चेष्टावान् लभते, निश्चेष्टो न लभते इत्युत्सर्गमात्रमित्यर्थः । नीटी.

[2]शक्नोति जीवितुं दक्षो नालसः सुखमेधते ॥
दृश्यन्ते जीवलोकेऽस्मिन् दक्षाः प्रायो हितैषिणः ॥

[3]यदि दक्षः समारम्भात् कर्मणां नाश्नुते फलम् ।
नास्य वाच्यं भवेत्किंचित्तत्त्वं चाप्यधिगच्छति ॥

दक्षो निन्द्यतां न यातीति भावः । नीटी.

[4]अकृत्वा कर्म यो लोके फलं विन्दति विष्ठितः ।
स तु वक्तव्यतां याति द्वेष्यो भवति प्रायशः ॥

अदक्षस्तु परप्रयत्नार्जितेन जीवन्नपि भोक्तुमेवायं समर्थः, न अर्जयितुमिति निन्द्यते इत्याह– अकृत्वेति । नीटी.

[5]एवमेतदनादृत्य वर्तते यस्त्वतोऽन्यथा ।
स करोत्यात्मनोऽनर्थान्नैष बुद्धिमतां नयः ॥

एतत् दैवदाक्ष्ययोः साहित्यम् । अन्यथा तयोरन्यतरालम्बनेन । नीटी.

[6]हीनं पुरुषकारेण यदा दैवेन वा पुनः ।
कारणाभ्यामथैताभ्यामुत्थानमफलं भवेत् ।
हीनं पुरुषकारेण कर्म त्विह न सिध्यति ॥

एतदेव स्पष्टयति– हीनमिति । पुरुषकारेण हीनं दैवोत्थानमफलम् । एवं दैवहीनं पुरुषकारस्योत्थानमपि । तस्मात् द्वाभ्यामपि उत्थातव्यमित्यर्थः । कर्म दैवम् । नीटी.

[1]दैवतेभ्यो नमस्कृत्य यस्त्वर्थान् सम्यगीहते ।
दक्षो दाक्षिण्यसंपन्नो न स मोघं विहन्यते ॥

फलितमाह– दैवतेभ्य इति । नीटी.

[2]सम्यगीहा पुनरियं यो वृद्धानुपसेवते ।
आपृच्छति च यच्छ्रेयः करोति च हितं वचः ॥

ईहां विवृणोति– सम्यगिति । नीटी.

[3]उत्थायोत्थाय हि सदा प्रष्टव्या वृद्धसंमताः ।
तेऽस्य योगे परं मूलं तन्मूला सिद्धिरुच्यते ॥

योगे अलब्धलाभे । नीटी.

[4]वृद्धानां वचनं श्रुत्वा यो ह्युत्थानं प्रयोजयेत् ।
उत्थानस्य फलं सम्यक् तदा स लभतेऽचिरात् ॥

[5]रागात् क्रोधाद्भयाल्लोभाद्योऽर्थानीहेत मानवः ।
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः ॥

अनीशः अजितचित्तः । अवमानी परमवजानन् । नीटी.

[6]सोऽयं दुर्योधनेनार्थो लुब्धेनादीर्घदर्शिना ।
असमर्थ्य समारब्धो मूढत्वादविचिन्तितः ॥

---

(१) भा. १०।२।१४ ; भामु. १०।२।१४ दुर्दर्शौ (दुर्दर्शौ).

(२) भा. १०।२।१५ ; भामु. १०।२।१५.

(३) भा. १०।२।१६ ; भामु. १०।२।१६ कर्मणां (कर्मणो) त्तत्त्वं चाप्य (लब्धव्यं वा).

(४) भा. १०।२।१७ ; भामु. १०।२।१७ विष्ठितः (धिष्ठितः) प्रायशः (भूयशः).

(५) भा. १०।२।१८ ; भामु. १०।२।१८ न्नैष (नेष).

(६) भा. १०।२।१९ ; भामु. १०।२।१९–२० यदा (यदि).

(१) भा. १०।२।२० ; भामु. १०।२।२०–२१ मोघं (मोघैः).

(२) भा. १०।२।२१ ; भामु. १०।२।२१–२२.

(३) भा. १०।२।२२ ; भामु. १०।२।२२–२३ तेऽस्य (ते स).

(४) भा. १०।२।२३ ; भामु. १०।२।२३–२४ यो ह्यु (योऽभ्यु).

(५) भा. १०।२।२४ ; भामु. १०।२।२४–२५ नीहेत (नीहति).

(६) भा. १०।२।२५ ; भामु. १०।२।२५–२६ मर्थ्य (मर्थः).

[1]हितबुद्धीननादृत्य संमन्त्र्यासाधुभिः सह ।
वार्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरैः ॥
[2]पूर्वमप्यतिदुःशीलो न दैन्यं कर्तुमर्हति ।
तपत्यर्थे विपन्ने हि मित्राणामकृतं वचः ॥

तपति संतापं प्राप्नोति भीमेन भग्नोरुः सन् । नीटी.

[3]अन्वावर्तामहि वयं यत्तु तं पापपूरुषम् ।
अस्मानप्यनयस्तस्मात् प्राप्तोऽयं दारुणो महान् ॥
[4]अनेन तु ममाद्यापि व्यसनेनोपतापिता ।
बुद्धिश्चिन्तयतः किंचित् स्वं श्रेयो नावबुध्यते ॥
[5]मुह्यता तु मनुष्येण प्रष्टव्याः सुहृदो बुधाः ।
तत्रास्य बुद्धिर्विनयस्तत्र श्रेयश्च पश्यति ।
ततोऽस्य मूलं कार्याणां बुद्ध्या निश्चित्य वै बुधाः ।
ते च पृष्टा यथा ब्रूयुस्तत् कर्तव्यं तथा भवेत् ॥
[6]ते वयं धृतराष्ट्रं च गान्धारीं च समेत्य ह ।
उपपृच्छामहे गत्वा विदुरं च महामतिम् ॥
[7]ते पृष्टाश्च वदेयुर्यच्छ्रेयो नः समनन्तरम् ।
तदस्माभिः पुनः कार्यमिति मे नैष्ठिकी मतिः ॥

(१) भा. १०।२।२६ ; भामु. १०।२।२६–२७.

(२) भा. १०।२।२७ ; भामु. १०।२।२७–२८ दैन्यं ( धैर्यं ) णामकृतं ( णां न कृतं ).

(३) भा. १०।२।२८ ; भामु. १०।२।२८–२९ पूर्वार्धे ( अनुवर्तामहे यत्तु तं वयं पापपूरुषम् । ).

(४) भा. १०।२।२९ ; भामु. १०।२।२९–३० यतः ( यते ).

(५) भा. १०।२।३० ( तत्रास्य ... वै बुधाः० ) ; भामु. १०।२।३०–३२ दो बुधाः ( दो जनाः ) ते च ( तेऽत्र ).

(६) भा. १०।२।३१ ; भामु. १०।२।३२–३३.

(७) भा. १०।२।३२ ; भामु. १०।२।३३–३४ ष्टाश्च ( ष्टास्तु ).

[1]अनारम्भात्तु कार्याणां नार्थः संपद्यते क्वचित् ।
कृते पुरुषकारे च येषां कार्यं न सिद्ध्यति ।
दैवेनोपहतास्ते तु नात्र कार्या विचारणा ॥

पौरुषं दैवात् श्रेष्ठम्

[2]उत्थाने च सदा पुत्र प्रयतेथा युधिष्ठिर ।
न ह्युत्थानमृते दैवं राज्ञामर्थप्रसिद्धये ॥

उत्थानेन पुरुषकारेण प्रयतेथाः जयाद्यर्थे यतस्व । दैवं प्राग्भवीयं कर्म देवताराधनादिकं वा केवलमुत्थानं विना न राज्ञामिष्टमर्थं साधयेत् । नीटी.

[3]साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च ।
पौरुषं हि परं मन्ये दैवं निश्चित्यमुच्यते ॥

साधारणं रथचक्रवत् समानम् । तत्रापि पौरुषं परं श्रेष्ठम्, दृष्टद्वारत्वात् । दैवं तु फलद्वारा निश्चित्य मुच्यते अकरणदोषात् फलासिद्धौ, फलसिद्धौ तु दुःखान्मुच्यते । नीटी.

[4]विपन्ने च समारम्भे संतापं मा स्म वै कृथाः ।
घटते विनयस्तात राज्ञामेष नयः परः ॥

घटस्व घटयस्व । कर्षकवत् सकृद्यत्नवैफल्येऽपि यतस्वैवेत्यर्थः । नीटी.

वर्णानुसारेण प्रजानामनापदि आपदि च शस्त्रग्रहणाधिकारविवेकः

युधिष्ठिर उवाच–

[5]अथ तात यदा सर्वाः शस्त्रमाददते प्रजाः ।
व्युत्क्रामन्ति स्वधर्मेभ्यः क्षत्रस्य क्षीयते बलम् ॥

(१) भा. १०।२।३३ ; भामु. १०।२।३४–३५ च ( तु ).

(२) भा. १२।५६।१४ ; भामु. १२।५६।१४ उत्थाने च ( उत्थानेन ) मर्थप्रसिद्धये ( मर्थं प्रसाधयेत् ).

(३) भा. १२।५६।१५ ; भामु. १२।५६।१५ श्चित्यमु ( श्चित्य मु ).

(४) भा. १२।५६।१६ ; भामु. १२।५६।१६ उत्तरार्धे ( घटस्वैव सदाऽऽत्मानं राज्ञामेष परो नयः ॥ ).

(५) भा. १२।७९।१२ ; भामु. १२।७८।१२.

प्रजाः वैश्यशूद्रान्त्यजाः । नीटी.

[1]राजा त्राता न लोके स्यात्किं तदा स्यात्परायणम् ।
एतन्मे संशयं ब्रूहि विस्तरेण पितामह ॥

भीष्म उवाच–

[2]दानेन तपसा यज्ञैरद्रोहेण दमेन च ।
ब्राह्मणप्रमुखा वर्णाः क्षेममिच्छेयुरात्मनः ॥

[3]तेषां ये वेदबलिनस्त उत्थाय समन्ततः ।
राज्ञो बलं वर्धयेयुर्महेन्द्रस्येव देवताः ॥

क्षीणबलो राजा कथमन्यांस्त्रायेतेत्याह द्वाभ्याम्– दानेनेति । नीटी.

[4]राज्ञो हि क्षीयमाणस्य ब्रह्मैवाऽऽहुः परायणम् ।
तस्माद्ब्रह्मबलेनैव समुत्थेयं विजानता ॥

[5]यदा तु विजयी राजा क्षेमं राष्ट्रेऽभिसंदधेत् ।
तदा वर्णा यथाधर्ममाविशेयुः स्वकर्मसु ॥

यदि ताः स्पर्धेरन् तर्हि राजा ब्राह्मणानेवाऽऽश्रित्य प्रजा वशीकुर्यादित्याह द्वाभ्याम्– राज्ञोऽपीति । नीटी.

[6]उन्मर्यादे प्रवृत्ते तु दस्युभिः संकरे कृते ।
सर्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर ॥

कालविशेषे सर्वेषामपि शस्त्रधारणं युक्तमित्याह– उन्मर्याद इति । नीटी.

युधिष्ठिर उवाच–

[1]अथ चेत्सर्वतः क्षत्रं प्रदुष्येद्ब्राह्मणान्प्रति ।
कस्तस्य ब्राह्मणस्त्राता को धर्मः किं परायणम् ॥

ब्राह्मणान् द्विषतः क्षत्रियस्य ब्रह्मैव परायणमिति प्रश्नपूर्वकमाह– अथेत्यादिना । नीटी.

भीष्म उवाच–

[2]तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च ।
अमायया मायया च नियन्तव्यं तदा भवेत् ॥

नियन्तव्यम्, क्षत्रं ब्राह्मणेनेति शेषः । नीटी.

[3]क्षत्रस्याभिप्रवृद्धस्य ब्राह्मणेषु विशेषतः ।
ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम् ॥

[4]अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥

[5]यदा छिनत्त्ययोऽश्मानमग्निश्चापोऽभिपद्यते ।
क्षत्रं च ब्राह्मणं द्वेष्टि तदा शाम्यन्ति ते त्रयः ॥

[6]तस्माद्ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर ।
समुदीर्णान्यजेयानि तेजांसि च बलानि च ॥

[7]ब्रह्मवीर्ये मृदूभूते क्षत्रवीर्ये च दुर्बले ।
दुष्टेषु सर्ववर्णेषु ब्राह्मणान्प्रति सर्वशः ॥

---

(१) भा. १२।७९।१३ ; भासु. १२।७८।१३ न लोके स्यात्किं तदा ( तु लोकस्य कथं च ) पितामह ( नराधिप ).

(२) भा. १२।७९।१४ ; भासु. १२।७८।१४.

(३) भा. १२।७९।१५ ; भासु. १२।७८।१५ स्त उत्थाय ( स्तेऽभ्युत्थाय ).

(४) भा. १२।७९।१६ ; भासु. १२।७८।१६ हि ( ऽपि ).

(५) भा. १२।७९।१७ ; भासु. १२।७८।१७ तु विजयी ( भुवि जयी ) धर्ममा ( धर्मं नि ) स्वकर्मसु ( कथंचन ).

(६) भा. १२।७९।१८ ; भासु. १२।७८।१८.

(१) भा. १२।७९।१९ ; भासु. १२।७८।१९ द्ब्राह्मणान् ( द्ब्राह्मणं ).

(२) भा. १२।७९।२० ; भासु. १२।७८।२०.

(३) भा. १२।७९।२१ ; भासु. १२।७८।२१ प्रथमचरणे ( क्षत्रियस्यातिवृत्तस्य ).

(४) भा. १२।७९।२२ ; भासु. १२।७८।२२.

(५) भा. १२।७९।२३ ; भासु. १२।७८।२३ पद्यते ( गच्छति ) शाम्यन्ति ( नश्यन्ति ).

(६) भा. १२।७९।२४ ; भासु. १२।७८।२४.

(७) भा. १२।७९।२५ ; भासु. १२।७८।२५ मृदू ( मृदु ).

सर्वैर्वर्णैः ब्रह्मक्षत्रयोरभिभवे ब्राह्मणार्थं क्षत्रेण मर्तव्यमेवेत्याह– ब्रह्मेत्यादिना । नीटी.

[1]ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः ।
ब्राह्मणान्परिरक्षन्तो धर्ममात्मानमेव च ॥

[2]मनस्विनो मन्युमन्तः पुण्यलोका भवन्ति ते ।
ब्राह्मणार्थं हि सर्वेषां शस्त्रग्रहणमिष्यते ॥

[3]अति स्विष्टस्वधीतानां लोकानति तपस्विनाम् ।
अनाशकाग्न्योर्विशतां शूरा यान्ति परां गतिम् ।

ब्राह्मणस्त्रिषु वर्णेषु शस्त्रं गृह्णन्न दुष्यति ।
एवमेवाऽऽत्मनस्त्यागान्नान्यं धर्मं विदुर्जनाः ॥

यज्ञाध्ययनतपोयुक्तानां अनशनाग्निप्रवेशकारिणामप्यपेक्षया ब्राह्मणार्थं म्रियमाण उत्कृष्टाल्लोकानाप्नोतीत्यर्थः । एवं युद्धधर्मेण । नीटी.

[4]तेभ्यो नमश्च भद्रं च ये शरीराणि जुह्वति ।
ब्रह्मद्विषो नियच्छन्तस्तेषां नोऽस्तु सलोकता ।
ब्रह्मलोकजितः स्वर्ग्यान्वीरांस्तान्मनुरब्रवीत् ॥

नः अस्माकम् अस्तु । नीटी.

[5]यथाऽश्वमेधावभृथे स्नाताः पूता भवन्त्युत ।
दुष्कृतः सुकृतश्चैव तथा शस्त्रहता रणे ॥

ततः तथा । नीटी.

(१) भा. १२।७९।२६ ; भासु. १२।७८।२६.

(२) भा. १२।७९।२७ ; भासु. १२।७८।२७ लोका (इलोका).

(३) भा. १२।७९।२८ तृतीयार्धं नास्ति ; भासु. १२।७८।२८–२९ अति स्विष्टस्वधी (अतिस्विष्टमधी) नति त (नतित) शका (शना).

(४) भा. १२।७९।२९ ; भासु. १२।७८।३० जुह्वति (जुह्वते).

(५) भा. १२।७९।३० ; भासु. १२।७८।३१ दुष्कृतः सुकृतश्चैव तथा (दुष्कृतस्य प्रणाशेन ततः).

धर्माधर्मविवेकः– देशकालभेदेन धर्मोऽपि अधर्मः अधर्मोऽपि धर्मः

[1]भवत्यधर्मो धर्मो हि धर्माधर्मावुभावपि ।
कारणाद्देशकालस्य देशकालः स तादृशः ॥

धर्माधर्मौ क्रमादधर्मो धर्मश्च भवतः, कारणविशेषात् । नीटी.

[2]मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम् ।
धर्म्याः पापानि कुर्वन्तो गच्छन्ति परमां गतिम् ॥

मैत्राः उत्तङ्कपराशरादयः । क्रूराणि सर्पराक्षससत्रादीनि । धर्म्याः धर्मादनपेताः क्षत्रियाः । पापानि परराष्ट्रावमर्दादीनि । अधर्मस्य धर्मत्वे उदाहरणद्वयमुक्तम् । इदमेव अहिंसाख्यधर्माश्रयेऽधर्मरूपमपि भवतीति ज्ञेयम् । नीटी.

[3]ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति ।
आत्मत्राणे वर्णदोषे दुर्गस्य नियमेषु च ॥

वर्णदोषे क्षत्रियादिषूत्पथगामिषु सत्सु । नीटी.

प्रजारक्षकः एव राजा, जन्मतः क्षत्रियादन्योऽपि दस्युभ्यः प्रजारक्षकः ब्राह्मणवैश्यशूद्रान्यतमः राजपदार्हः

युधिष्ठिर उवाच–

[4]अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसंकरे ।
संप्रमूढेषु वर्णेषु यद्यन्योऽभिभवेद्बली ॥

[5]ब्राह्मणो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
दस्युभ्योऽथ प्रजा रक्षेद्दण्डं धर्मेण धारयन् ॥

(१) भा. १२।७९।३१ ; भासु. १२।७८।३२.

(२) भा. १२।७९।३२ ; भासु. १२।७८।३३ पापानि कुर्वन्तो (पापानि कुर्वाणा).

(३) भा. १२।७९।३३ ; भासु. १२।७८।३४ दुर्गस्य नि (दुर्दम्यनि).

(४) भा. १२।७९।३४ ; भासु. १२।७८।३५ वर्णेषु (क्षत्रेषु).

(५) भा. १२।७९।३५ ; भासु. १२।७८।३६.

[1]कार्यं कुर्यान्न वा कुर्यात्संवार्यो वा भवेन्न वा ।
न स्म शस्त्रं ग्रहीतव्यमन्यत्र क्षत्रबन्धुतः ॥

दस्यूदये सति, क्षत्रार्थे प्रजापालननिमित्तम्, लोकेषु मूढेषु, वर्णसंकरे अन्योन्यं दारहरणादौ प्रवृत्ते सति यदि अन्यः अक्षत्रियः बली दस्यूनभिभवेत् प्रजाश्च दस्युभ्यो रक्षेत्तर्हि स राजकार्यं कुर्यान्न वा, आर्यः स्वामी च भवेन्न वा । आद्ये अक्षत्रियोऽपि मान्यः स्यात्, अन्त्ये सर्वनाश इत्याह त्रिभिः— अभ्युत्थित इति । नीटी.

**भीष्म उवाच—**

[2]अपारे यो भवेत्पारमप्लवे यः प्लवो भवेत् ।
शूद्रो वा यदि वाऽप्यन्यः सर्वथा मानमर्हति ॥

आद्यमेव पक्षमुपादत्ते— अपार इत्यादिना । नीटी.

[3]यमाश्रित्य नरा राजन्वर्तयेयुर्यथासुखम् ।
अनाथाः पाल्यमाना वै दस्युभिः परिपीडिताः ॥

[4]तमेव पूजयेरंस्ते प्रीत्या स्वमिव बान्धवम् ।
महद्ध्यभीक्ष्णं कौरव्य कर्ता सन्मानमर्हति ॥

[5]किमुक्ष्णाऽवहता कृत्यं किं धेन्वा चाप्यदुग्धया ।
वन्ध्यया भार्यया कोऽर्थः कोऽर्थो राज्ञाऽप्यरक्षता ॥

[6]यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
यथा ह्यनेत्रः शकटः पथि क्षेत्रं यथोषरम् ॥

(१) भा. १२।७९।३६ ; भामु. १२।७८।३७ स्संवार्यो ( त्स वाऽऽर्यो ) न स्म ( तस्मात् ).

(२) भा. १२।७९।३७ ; भामु. १२।७८।३८.

(३) भा. १२।७९।३८ ; भामु. १२।७८।३९ पाल्यमाना वै ( परिकाल्यन्तो ).

(४) भा. १२।७९।३९ ; भामु. १२।७८।४० रंस्ते ( युस्ते ) महद्ध्य ( अमीर ).

(५) भा. १२।७९।४० ; भामु. १२।७८।४१ पूर्वार्धे ( किं तैर्येऽनड्डुहो नोह्याः किं धेन्वा वाऽप्यदुग्धया । ).

(६) भा. १२।७९।४१ ; भामु. १२।७८।४२ ह्यनेत्रः शकटः पथि ( ह्यनर्थः षण्ढो वा पार्थ ).

[1]एवं ब्रह्मानधीयानं राजा यश्च न रक्षिता ।
न वर्षति च यो मेघः सर्वे एते निरर्थकाः ॥

[2]नित्यं यस्तु सतो रक्षेदसतश्च निबर्हयेत् ।
स एव राजा कर्तव्यस्तेन सर्वमिदं धृतम् ॥

शत्रुर्नोपेक्षणीयः

[3]बालोऽबालः स्थविरो वा रिपुर्यः
सदा प्रमत्तं पुरुषं निहन्यात् ।
कालेनान्यस्तस्य मूलं हरेत
कालज्ञाता पार्थिवानां वरिष्ठः ॥

अबालः अहीनः । अन्यः संपन्नः । नीटी.

[4]हरेत्कीर्तिं धर्ममस्योपरुन्ध्या-
दर्थे दीर्घं वीर्यमस्योपहन्यात् ।
रिपुर्द्वेष्टा दुर्बलो वा बली वा
तस्माच्छत्रौ नैव हेडेद्यतात्मा ॥

शत्रोः शत्रुं प्राप्य नैव हीयेत् नैव प्रमादी स्यात् । नीटी.

[5]क्षयं शत्रोः संचयं पालनं चा-
प्युभौ चार्थौ सहितौ धर्मकामौ ।
अतश्चान्यन्मतिमान्संदधीत
तस्माद्राजा बुद्धिमन्तं श्रयेत ॥

(१) भा. १२।७९।४२ ; भामु. १२।७८।४३ ब्रह्मा ( विप्रोऽ) यानं (यानो) उत्तरार्धे ( मेघो न वर्षते यश्च सर्वथा ते निरर्थकाः ॥ ).

(२) भा. १२।७९।४३ ; भामु. १२।७८।४४ निबर्ह ( निवर्त ).

(३) भा. १२।१२०।३७ ; भामु. १२।१२०।३९ बालः स्थविरो वा ( प्यबालः स्थविरो ).

(४) भा. १२।१२०।३८ ; भामु. १२।१२०।४० च्छत्रौ ( च्छत्रोः ) हेडे ( हीये ).

(५) भा. १२।१२०।३९ ; भामु. १२।१२०।४१ पूर्वार्धे ( क्षयं वृद्धिं पालनं संचयं वा बुद्ध्वाऽप्युभौ संहतौ सर्वकामौ । ) अत ( तत ) मन्तं ( भर्तां ).

अन्योन्याश्रितौ दैवपुरुषकारौ, दैवं नाऽऽश्रयणीयम्

[1]दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात् ।
उदात्तानां कर्म तन्त्रं दैवं क्लीबा उपासते ॥
[2]कर्म चाऽऽत्महितं कार्यं तीक्ष्णं वा यदि वा मृदु ।
ग्रस्यतेऽकर्मशीलस्तु सदाऽनर्थैरकिंचनः ॥

अकर्मशीलः इति च्छेदः । नीटी.

[3]तस्मात् संशयितेऽप्यर्थे कार्य एव पराक्रमः ॥

अर्थे कालदैवस्वभावाख्यम् । नीटी.

## वाल्मीकिरामायणम्

पौरुषं दैवात् बलीयः

[4]इत्युक्त्वा मातरं रामो भूयो लक्ष्मणमब्रवीत् ॥
[5]दैवस्वभावसंसिद्धिरचिन्त्येति च मे मतिः ।
तन्नूनं पतितं मूर्ध्नि मम भाग्यविपर्ययात् ॥
[6]कश्च दैवेन सौमित्रे योद्धुमुत्सहते सह ।
यस्येह निग्रहोपायः कथंचन न विद्यते ॥
[7]सुखदुःखभयोद्वेगलाभालाभभवाभवाः ।
नृणां भवन्ति दैवेन न भवन्ति च लक्ष्मण ॥

(१) भा. १२।१३७।७८ ; भामु. १२।१३९।८२ तृतीयचरणे ( उदाराणां तु सत्कर्म ).

(२) भा. १२।१३७।७९ ; भामु. १२।१३९।८३.

(३) भा. १२।१३७।८० ; भामु. १२।१३९।८४ संशयितेऽप्यर्थे ( सर्वं व्यपोह्यार्थं ).

(४) वारा. २।२२।१.

(५) वारा. २।२२।१५ ; वाराकु. २।२२।२० (यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते । व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः ॥ ).

(६) वारा. २।२२।१६ ; वाराकु. २।२२।२१ सह ( पुमान् ) उत्तरार्धे ( यस्य न ग्रहणं किंचित् कर्मणोऽन्यत्र दृश्यते ॥ ).

(७) वारा. २।२२।१७ ; वाराकु. २।२२।२२ (सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ । यच्च किंचित्तथाभूतं ननु दैवस्य कर्म तत् ॥ ).

[1]ऋषयोऽप्युग्रतपसो दैवेनाभिप्रपीडिताः ।
उत्सृज्य नियमांस्तीव्रान् भ्रश्यन्ते काममन्युभिः ॥

असंकल्पितमेवेह यदकस्मात् प्रवर्तते ।
निवर्त्याऽऽरम्भमारब्धं ननु दैवस्य कर्म तत् ॥
[2]अवश्यभाविव्यसनं ममैतदिति पश्यतः ।
व्याहतेऽप्यभिषेके मे परितापो न विद्यते ॥
[3]तस्मात्त्वमपि मे बुद्धिमनुवर्तितुमर्हसि ।
प्रतिसंचिन्तयाऽऽत्मानं मा च शोके मनः कृथाः ॥

[4]न लक्ष्मणास्मिन् मम राज्यविघ्ने
माता यवीयस्यभिशङ्कनीया ।
न चैव राजाऽत्र विशङ्कनीयो
दैवं हि कोऽतिक्रमितुं समर्थः ॥

[5]इति ब्रुवति रामे तु लक्ष्मणोऽधोमुखः स्थितः ॥
[6]संरम्भामर्षताम्राक्षस्ततो भ्रातरमब्रवीत् ॥
[7]अस्थाने संभ्रमो यस्ते जातोऽयं गमनं प्रति ।
धर्मलोपभयाद्देव लोकवादभयेन वा ॥

(१) वाराकु. २।२२।२३–२४.

(२) वारा. २।२२।१८ ; वाराकु. २।२२।२५ पूर्वार्धे ( एतया तत्त्वया बुद्ध्या संस्तभ्याऽऽत्मानमात्मना । ).

(३) वारा. २।२२।१९.

(४) वारा. २।२२।२० ; वाराकु. २।२२।३० मम राज्य ( खलु कर्म ) स्यभि ( स्यति ) उत्तरार्धे ( दैवाभिपन्ना हि वदत्यनिष्टं जानासि दैवं च तथाप्रभावम् ॥ ).

(५) वारा. २।२३।१ ; वाराकु. २।२३।१ धोमुखः स्थितः ( धःशिरा मुहुः ).

(६) वारा. २।२३।५ ; वाराकु. २।२३।४ ( अग्राक्षणा वीक्षमाणस्तु तिर्यग् भ्रातरमब्रवीत् ).

(७) वारा. २।२३।६ ; वाराकु. २।२३।५ ( अस्थाने संभ्रमो यस्य जातो वै सुमहानयम् । धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया ॥ ).

[1]कथमीदृगसंभ्रान्तस्त्वद्विधो वक्तुमर्हति ।
क्लीबं वाक्यमशौटीर्यं शौटीरः क्षत्रियान्वयः ॥
[2]किं नाम कृपणं दैवमशक्तमभिशंससि ॥
[3]तेजः क्षात्रं समालम्ब्य भ्रमाद्वक्तुं न चार्हसि ।
क्लीबा हि दैवमेवैकं प्रशंसन्ति न पौरुषम् ॥
प्रतीपमपि शक्नोषि व्यसनायाभ्युपागतम् ।
दैवं पुरुषकारेण प्रतियोद्धुमरिंदम ॥
[4]विक्लवो हीनवीर्योयः स दैवमनुवर्तते ।
अविक्लवस्तु तेजस्वी न दैवमनुवर्तते ॥
[5]दैवं पुरुषकारेण यतते योऽतिवर्तितुम् ।
न स दैवविपन्नार्थः कदाचिदपि सीदति ॥
[6]लोकः पश्यतु कृत्स्नोऽद्य दैवपौरुषयोरिदम् ।
अन्तरं कार्यसंसिद्धौ यद्युत्थातुं त्वमिच्छसि ॥
[7]अद्य तत्पौरुषहतं दैवं पश्यन्तु मानवाः ।
तव राज्यविघाताय प्रतीपं समुपागतम् ॥

---

(१) वारा. २।२३।७ ; वाराकु. २।२३।६ कथमीदृग (कथं ह्येतद) उत्तरार्धे (यथा दैवमशौण्डीरं शौण्डीर क्षत्रियर्षभ ॥ ).

(२) वाराकु. २।२३।७.

(३) वारा. २।२३।८–९.

(४) वारा. २।२३।१९–२० ; वाराकु. २।२३।१६ हीनवीर्यो (वीर्यहीनो) उत्तरार्धे (वीराः संभावितात्मानो न दैवं पर्युपासते ॥ ) ; राक. १४० ; राप्र. ३१४.

(५) वारा. २।२३।२०–२१ ; वाराकु. २।२३।१७ (दैवं पुरुषकारेण यः समर्थः प्रबाधितुम् । न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ॥ ) ; राक. १४१ योऽतिवर्तितुम् (यः प्रबाधितुम्) दपि सी (दवसी) ; राप्र. ३१४ राकवत्.

(६) वारा. २।२३।२१–२२ ; वाराकु. २।२३।१८ (द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च । दैवमानुषयोरद्य व्यक्ता व्यक्तिर्भविष्यति ॥ ).

(७) वारा. २।२३।२२–२३ ; वाराकु. २।२३।१९ (अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः । यद्दैवादाहतं तेऽद्य दृष्टं राज्याभिषेचनम् ॥ ).

[1]निरङ्कुशमिवोद्दामं गजं मदबलोद्धतम् ।
प्रतीपमागतं दैवं पौरुषेण निवर्तये ॥
[2]लोकपालाः सहेन्द्रेण यौवराज्याभिषेचनम् ।
प्रतिहन्तुं न शक्तास्ते किमुतैको नराधिपः ॥
[3]यैर्निवासस्तवारण्ये मिथ्या राम समर्थितः ।
अहं विवासयिष्यामि तानेवाद्य बलान्वितः ॥
[4]प्रतीपमागतं दैवं पौरुषेण निवर्तये ॥
प्रतीपमपि दुःखाय तव दैवमुपागतम् ।
प्रभविष्यति राम त्वां मत्पौरुषपराहतम् ॥
[5]प्रतिजानामि ते सत्यं मा भूवं वीरशब्दभाक् ।
यदि प्रतीपं दैवं ते न हरिष्याम्युपागतम् ॥
[6]फलमेवास्य दैवस्य प्रतीपस्य निवर्तये ।
तवैव तेजसेच्छामि दैवं लोकान्निवर्तितुम् ॥
अविषह्यतमं लोके विषह्यं केन किंचन ।
त्वदर्थमुत्सहे ह्येकः परिवर्तयितुं जगत् ॥

[7]प्रगृह्य मन्युं परिगृह्य पौरुषं
स लक्ष्मणो राममभिप्रसादयन् ।
उवाच भूयोऽपि पितुर्विनिग्रहे
यतस्व रामैष विनिश्चयो मम ॥

---

(१) वारा. २।२३।२३–२४ ; वाराकु. २।२३।२० निरङ्कुश (अत्यङ्कुश) प्रतीपमागतं (प्रधावितमहं).

(२) वारा. २।२३।२४–२५ ; वाराकु. २।२३।२१ (लोकपालाः समस्तास्ते नाद्य रामाभिषेचनम् । न च कृत्स्नास्त्रयो लोका विहन्युः किं पुनः पिता ॥ ).

(३) वारा. २।२३।२५–२६ ; वाराकु. २।२३।२२ (यैर्विवासस्तवारण्ये मिथो राजन् समर्थितः । अरण्ये ते विवत्स्यन्ति चतुर्दशसमास्तथा ॥ ).

(४) वारा. २।२३।२६–२७.

(५) वारा. २।२३।३१ ; वाराकु. २।२३।२८ (प्रतिजाने च ते वीर मा भूवं वीरलोकभाक् । ) पू.

(६) वारा. २।२३।३२–३३.

(७) वारा. २।२३।४६.

[1]नाति भारोऽस्ति दैवस्य पौरुषे नियता मतिः ।
दैवपौरुषसंयोगात्सिद्धिर्नित्यमवाप्यते ॥
[2]यस्तु नाऽऽरभते कार्यं नरो दैवपरायणः ।
क्षिप्रं भवति निर्द्रव्यः पलायनपरायणः ॥

## कौटिलीयमर्थशास्त्रम्

दैवमानुषलक्षणे, दैवस्य मानुषस्य च परिणामाः

*[3]मानुषं नयापनयौ । दैवमयानयौ । दैवमानुषं हि कर्म लोकं यापयति । अदृष्टकारितं दैवम् । तस्मिन्निष्टेन फलेन योगोऽयः । अनिष्टेनानयः । दृष्टकारितं मानुषम् । तस्मिन् योगक्षेमनिष्पत्तिर्नयः । विपत्तिरपनयः । तच्चिन्त्यम् । अचिन्त्यं दैवमिति ॥

## चाणक्यसूत्राणि

दैवमानुषसंबन्धः दैवमानुषदोषप्रतीकारोपायः, दैवप्रमाणकानां न कार्यसिद्धिः

[4]कार्यं पुरुषकारेण लक्ष्यं संपद्यते ॥
पुरुषकारमनुवर्तते दैवम् ॥
दैवं विनाऽतिप्रयत्नं करोति यत्तद्विफलम् ॥
[5]दैवहीनं कार्यं सुसाधमपि दुःसाधं भवति ॥
[6]ज्ञानवतामपि दैवमानुषदोषात् कार्याणि दुष्यन्ति ॥
दैवं शान्तिकर्मणा प्रतिषेद्धव्यम् ॥
मानुषीं कार्यविपत्तिं कौशलेन विनिवारयेत् ॥
कार्यविपत्तौ दोषान् वर्णयन्ति बालिशाः ॥
कार्यार्थिना दाक्षिण्यं न कर्तव्यम् ॥
क्षीरार्थी वत्सो मातुरूधः प्रतिहन्ति ॥
अप्रयत्नात् कार्यविपत्तिर्भवेत् ॥
न दैवप्रमाणानां कार्यसिद्धिः ॥
कार्यबाह्यो न पोषयत्याश्रितान् ॥

## मनुः

संग्रामः क्षात्रधर्मः

[1]समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः ।
न निवर्तेत सङ्ग्रामात् क्षात्रं धर्ममनुस्मरन् ॥

(१) सर्वोपायपरिक्षये राज्ञो विहितं युद्धम् । तत्र सङ्ग्रामभूमिगतस्याऽऽहूतस्य समन्यूनाधिकबलेन उपेक्षाप्रतिषेधार्थमिदं पदम् । न मन्तव्यं निकृष्टबलं न हन्मीति । अथवा ये शत्रवः आटविकादयः प्राक्स्थितां मर्यादामतिलङ्घ्य देशमुत्क्रामन्ति, शत्रुभिर्वा राज्ञः संदधते, न चेत्ते युद्धेन विना नियन्तुं शक्यन्ते, तदा निकृष्टबलैरपि तैर्योद्धव्यमेव । यद्यपि तैरसौ शब्देन नाऽऽहूतः, वस्तुतस्त्वाहूत एव भवति । एष हि क्षत्रियाणां धर्मः यदाहूतः प्रकृतैस्तैर्युद्धे सर्वेण सह योद्धव्यमेव, जातिवयःशिक्षापुरुषकारादि नापेक्षितव्यम् । एष धर्मः स्मर्तव्यः । मेधा.

(२) समाधिकहीनबलैः राजभिः युद्धार्थमाहूतः प्रजारक्षणोद्यतः 'क्षत्रियेणाऽऽहूतेनावश्यं योद्धव्यम्' इत्येवं क्षत्रधर्मं संभावयन् सङ्ग्रामात् न निवर्तेत । * गोरा.

(३) अधमः शूद्रः । आहूतो युद्धार्थम् । न निवर्तेत (न ?) प्रवर्तेत । मवि.

(४) राष्ट्रात् करमादाय यष्टव्यं च दातव्यं चेत्युक्तम् । इदानीं राष्ट्रप्रत्यर्थिभिराहूतेन योद्धव्यमित्याह— समेति । प्रजाः पालयन् प्रजापालनहेतोः । नन्द.

---

* अस्य व्याख्यानम् 'षाड्गुण्यम्– सामान्यविचारः' इत्यस्मिन् प्रकरणे (पृ. २०६९, २०७०) द्रष्टव्यम् ।

(१) वारा. ६।३८।१२.

(२) राक. १४० ; राप्र. ३१४.

(३) कौ. ६।२ ; मेधा. ७।२०५ (दैवं नयानययोर्मानुषं कर्म लोकं पालयति) एतावदेव, समानतन्त्रे ।

(४) चासू. ९७-९९.

(५) चासू. १११.

(६) चासू. १२२-१३०.

* ममु., मच., भाच. गोरागतम् ।

(१) अस्मृ. ७।८७ ; राक. १३१ पालयन् प्रजाः (समरे परैः) क्षात्रं धर्मं (क्षत्रधर्मं) ; राप्र. ४०५ पूर्वार्धं राकवत् ; नीम. ६२ क्षात्रं धर्मं (क्षत्रधर्मं).

**'सङ्ग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम् ।**
**शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम् ॥**

(१) त्रयाणां धर्माणां तुल्यफलत्वाय श्लोकोऽयम् । मेधा.

(२) युद्धेभ्योऽपराङ्मुखत्वम्, प्रजानां पालनम्, ब्राह्मणानां परिचर्या इत्येतत् राज्ञां प्रकृष्टं स्वर्गादिसाधनम् । * गोरा.

(३) प्रासङ्गिके फलमाह— सङ्ग्रामेष्विति । प्रजापरिपालनवत् द्विजशुश्रूषाया युद्धानिवर्तित्वस्यापि श्रेयस्करत्वमित्यर्थः । मच.

(४) कोऽयं क्षात्रो धर्मस्तमाह— सङ्ग्रामेष्विति । पालनशुश्रूषयोरुपन्यासो दृष्टान्तार्थः । नन्द.

**§'त्रयाणामप्युपायानां पूर्वोक्तानामसंभवे ।**
**तथा युध्येत संपन्नो विजयेत रिपून् यथा ॥**

दैवमचिन्त्यम्, मानुषं तु क्रियया विचार्यम्

**'सर्वं कर्मेदमायत्तं विधाने दैवमानुषे ।**
**तयोर्दैवमचिन्त्यं तु मानुषे विद्यते क्रिया ॥**

(१) यत्किंचिदतिक्रान्तं वक्ष्यमाणं किंचन तत्— सर्वमिति । समर्थादर्थ( ? सामर्थ्यादत्र )कर्मकार्यफलं कर्म । तत् सर्वम् अशेषम् आयत्तम् अधीनं क्वापि । विदधातीति विधानम्, कर्मफलं यद्दिशति । तद्विशेषयति— दैवमानुषे । दैवे धर्मादौ पूर्वकृतविहितप्रतिषिद्धविषये चाऽऽत्मनः कार्यकर्मफलं यदि फलं कर्म क्रिया दृष्टार्था नयानययोः । तथा च श्रुतिः— ' *विधिर्विधानं नियतिः स्वभावः कालो ग्रहेश्वरः कर्म दैवम् । भाग्यानि पुण्यानि भूतान्तयोगः पर्यायनामानि पुराकृतस्य ॥ ' । स्मृतिरपि— ' ‡दैवमात्मकृतं विद्यात् कर्म यत्पौर्वदेहिकम् । स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥ ' इति । दैवमानुषस्येति प्राप्ते मृतवशाद्दैवे मानुषस्यापि कारणता विवक्षिता । अस्मिन् कार्ये इदं क्रियाफलमायत्तम् । न दैवं पुरुषकाररहितं फलं ददाति । अवश्यं हि तेन पुरुषप्रयत्नोऽपेक्षितव्यः । न च पुरुषकारो दैवेनेति । † दैवाच्च पुरुषकारनिरपेक्षात् फलस्यापि पुरुषसंनिपातो भवेदपि गर्भस्य । असति गर्भे नियमैर्दैवसंनिपातात् फलसंभवोऽनुमेयः । एवं पुरुषप्रयत्नादपि यदि दैवनिरपेक्षा स्यात्, ततो व्यायामे सति सर्वदा सर्वेषां स्यात् । नैतदस्ति । तस्मादुभयं कारणम् । तथा च व्यास आह— 'आरम्भा मानुषाः सर्वे निदानं कर्मणोर्द्वयोः । दैवे पुरुषकारे च परतोऽन्यन्न विद्यते ॥ ' ( भा. १०।२।२ ) इति । समानतन्त्रेऽपि— ' $दैवं नयानययोर्मानुषं कर्म लोकं पालयति ' इति ।

---

* मनु. गोरावत् ।

§ अस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च ' उपायाः — सामान्यविचारः ' इत्यस्मिन् प्रकरणे ( पृ. १९३४ ) द्रष्टव्यः ।

(१) **मस्मृ.** ७।८८ ; **राक.** १५४ चैव पा ( परिपा ) उत्तरार्धे (ब्राह्मणानां च शुश्रूषा राज्ञो निःश्रेयसं परम् ॥ ) ; **रार.** ५५ ; **पमा.** ४१३ राज्ञां ( राज्ञः ).

(२) **मस्मृ.** ७।२००.

(३) **मस्मृ.** ७।२०५ ; **गोरा.** तयोर्दैव ( तत्र दैव ) ; **राक.** १३९ विधाने ( विधानं ) तु ( च ) शेषं गोरावत् ; **राप्र.** ३१२–३१३ गोरावत्.

* अयं श्लोकः राजनीतिकल्पतरौ (पृ. १४१) राजनीतिप्रकाशे ( पृ. ३१५ ) च व्यासकर्तृकत्वेन निर्दिष्टः । उभयत्र ' ग्रहेश्वरः कर्म ' इत्यत्र ' ग्रहा ईश्वरकर्म ' इति ' भूतान्तयोगः ' इत्यत्र च ' कृतान्तयोगः ' इति पाठान्तरम् ।

‡ अयं श्लोकः राजनीतिकल्पतरौ ( पृ. १४१ ) राजनीतिप्रकाशे ( पृ. ३१५) दीपकलिकायां च ( १।३४९ ) व्यासकर्तृकत्वेन निर्दिष्टः ।

† राजनीतिकल्पतरौ ( पृ. १४० ) राजनीतिप्रकाशे च ( पृ. ३१३ ) ' दैवमानुषसद्भावे नार्या गर्भः प्रसिद्ध्यति । पुंसा सत्यपि संयोगे दैवाभावे न सिद्ध्यति ॥ ' इति श्लोकः मनुकर्तृकत्वेन निर्दिष्टः । अत्र मेधाव्याख्यानेऽपि तदनुसारि एव किंचित् अभिधित्सितं स्यात् ।

$ अयम् ' दैवमयानयौ । दैवमानुषं हि कर्म लोकं यापयति ' इति कौटिलीयवचनस्य ( कौ. ६।२ ) निर्देशो भवेत् ।

अत्र दैवकारणा आहुः– दैवमेवात्र कारणम् । दृश्यन्ते हि जडक्लीबपङ्ग्वादयः कुणयः पुरुषकाररहिता अपि सुखिनो निष्प्रतीकारा अन्योपाधिककर्मफलं लभमानाः । तथाऽलंप्रतीकारा अप्यव्यङ्गशूराः प्रवीणाश्च शास्त्रे दक्षाश्च दुःखिनो यतमानाश्च । तथा पुरुषकारनिरपेक्षं दैवमात्राभिधानाद्धनाधिगमाशनिनिपातादिभिरिष्टानिष्टफलमुत्पाद्यमानमुपलभन्ते । एवं च कृत्वा परलोकहेतवः क्रियारम्भोपदेशाः सुतरामर्थवन्तो भवन्ति । तथा च 'यत्नेन पूर्वकृतानीहोपभुञ्ज्महे, इह कृतान्यपि परत उपभोक्ष्यामहे' इति विजानन्तोऽविचिकित्सा मनुष्याः । धर्मे एवं प्रयतितव्यम् । तथा चोदाहरन्ति– 'जानामि धर्मं न च तत्करोमि पापं च जानामि न मे निवृत्तिः । धात्रा निसृष्टोऽस्मि यथा तथाऽहं नातः परं शासयिताऽस्ति कश्चित् ॥' इति । पुरुषकारिणो ह्याहुः– पुरुषकार एवात्र कारणम् । कृषित्वमनलसः कुर्वन् स्वव्यापारफलं कर्तृकरणकार्यं कृष्यादिषु प्राप्नुयात् । तथा चोक्तम्– 'कर्मैवेहानसाधूनामालम्ब्यानुपसेविता । कर्म कृत्वा हि पुरुषो भुङ्क्ते चैव न चात्ति न ॥' । सत्यपि चान्नसंभवे न ह्यभुञ्जन्तस्तृप्यन्ति तदा तत्र चाभ्यवहारैः यत्समनन्तरं च फलं तन्निमित्तफलोत्पाद इति न्यायः । तस्मादत्र अदृष्टव्यापारः । एवं च कृत्वाऽर्थवन्तः क्रियारम्भोपदेशा भवन्ति । तथा चाऽऽहुः– 'प्रतिहन्ति मुनिर्येन दैवमापतितं क्वचित् । शीतोष्णे च तथा वर्षमुत्थापयति हन्ति च ॥' । एवमास्थितेभ्य उभयं कारणम्, अन्यतराभावे फलाभावात् । क्वचित् तु केचित्प्राधान्येन वर्तन्त इति तत्परिगृह्यते । कृतोऽपि पुरुषकारो बलवता दैवेनाभिभूतो विशीर्यते । आर्द्रमिव दारु अल्पाग्नौ प्रक्षिप्तं न ज्वलति । एवं यदि दुर्बलं दैवं महता यत्नेन पुरुषकारेण पुरस्कृतं फलति, यथा आर्द्रमपि दारु महत्यग्निस्कन्धे प्रक्षिप्तम् । नाग्निस्तदापयाति । 'दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते । दैवेन चेतनं कर्म विशिष्टेनोपहन्यते ॥' इत्येव परिकल्प्याऽऽह– तयोः दैवपुरुषकारयोः दैवमेव अचिन्त्यम् । तुशब्दोऽवधारणार्थः । अपरिज्ञातस्वरूपम् । कस्मिन्काले तन्निमित्तेन फलं दास्यति इत्येवमचिन्त्यम् । शास्त्रादते चास्य (अ)परिज्ञानादेवाविचार्यत्वात्प्रयोक्तुमशक्यत्वादशक्यमिति । तत्र दैवं निष्फलम् । मनुष्येषु पुरुषकारो वक्ष्यते क्रिया, प्रकृतत्वात् । वित्तं च (? विद्यते च) क्रिया मानुषे । किंचित् ज्ञानं कृष्यादिभिः शक्यं चिन्तयितुम् 'ईदृशं मया कृष्यादि कर्तव्यमेतैः साधनैर्दैवादिभिरेव च, तस्य चेदृशं फलम्' इति । तदेवं प्रारब्धं यदाऽऽरम्भमध्यावसानेषु विवत्सते (? विपद्यते) तदैवं समाधेयम्, न विपन्नानामप्येवं कर्तव्यमिति यावत्फलवेदनम् । इत्यतो दैवस्याचिन्त्यत्वान्न तत्परेणाऽऽसितव्यम् । मनुष्यकर्म चिन्तयित्वा यद्यत्कार्यं तदनुष्ठेयम् । यत्किंचनकारी हि विनश्यतीति ।

* शक्तित्रययोगात् पुरुषकारेण च युक्तस्य परराष्ट्रविजयचिकीर्षा यत्र दैवमानुषसंपन्ना भवति सैव सर्वार्थसाधिका भवति । तथाऽपि तस्यामतिशयं दैवं (न) प्रवर्तते । अतिरिक्तः पुरुषकार एव भवतीत्यर्थः । न हि विजिगीषोर्दैवमन्तरेण तदा यातव्यस्य व्यसनं दैवं मानुषं भवति । पौरुषं समं दैवेन नातिव्यूढं द्वयोर्वा समं तुल्यम् । मेधा.

(२) यत्किंचित्संपाद्यं तत्प्राग्जन्मशुभाशुभरूपे कर्मणि तथेहलोककृते च मनुष्यव्यापारे आयत्तम् । तत्र तयोर्मध्ये दैवं चिन्तयितुमशक्यम् । मानुषे पुनः पर्यालोचनं भवति । अतस्तद्द्वारेण कार्यसिद्ध्यर्थं यतितव्यम् । निरीहेन (न) भाव्यम् । § गोरा.

(३) अचिन्त्यं पुरुषकारेण न तस्य प्रतीकारश्चिन्त्यः । क्रिया प्रतिक्रिया । मवि.

(४) जयादेरदृष्टसाध्यत्वादलं प्रयत्नेनेति, तत्राऽऽह –सर्वमिति । विधाने व्यापारे दैवमानुषे दृष्टादृष्टे ।

---

* 'दैवमानुषसंपन्ना यात्रा सर्वार्थसाधिका । तस्यामतिशये दैवं वर्तते पौरुषं समम् ॥' इत्ययं श्लोकः राजनीतिकल्पतरौ (पृ. १४०) राजनीतिप्रकाशे च (पृ. ३१३) मनुकर्तृकत्वेन निर्दिष्टः । उपरिष्टादुध्दृतं व्याख्यानमस्यैव श्लोकस्येति स्फुटं प्रतीयते । ततश्चानुमीयते मेधाव्याख्यानस्य मूलपाठादयं श्लोकः प्रभ्रष्ट इति ।

§ ममु. गोरावत्, भाच. गोरागतं मविगतं च ।

तयोर्मध्ये ऐहिकभोगहेतुप्रबलादृष्टस्येदानीमसाध्यत्वेऽपि दृष्टं तु शक्यसंपादमित्याह— मानुषेति । क्रिया पुरुषकारः । मच.

(५) एवं प्रतिपादितं नीतिमार्गमनुसृत्य राज्ञा पौरुषेण भवितव्यम्, न दैवमनुसृत्य तूष्णींभूतेनेत्यभिप्रायेणाऽऽह— सर्वमिति । दैवमानुषे दैवपुरुषसंबन्धिनि विधाने कर्मणि सर्वमिदं कर्म कर्मफलमिति यावत्, आयत्तम् आस( ? अधी )नम् । तयोः दैवमानुषयोः, दैवम् अचिन्त्यम् अनुकूलमननुकूलं वेति निश्चेतुमशक्यम् । किंतु मानुषे पुरुषकारे सति तस्य दैवस्य क्रिया विद्यते ज्ञायते । यत एवं तस्मात् पुरुषकारो विधातव्य इत्यभिप्रायः । नन्द.

दैवबलसहिते तद्रहिते च मानुषे साफल्यासाफल्यविचारः

**'दैवेन विधिनाऽयुक्तं मानुष्यं यत् प्रवर्तते ।**
**परिक्लेशेन महता तदर्थस्य समाधकम् ॥**

तत् ( ? यत् ) अयुक्तम् दैवेन विधानेन पराङ्मुखे दैवे मानुष्यं पुरुषकारः प्रवर्तते अष्टविधकर्मणि, तन्महता क्लेशेन अर्थं फलं साधयति, निष्फलं वा भवति । अतः क्लेशेनाप्यसिद्धो वा दैवापेक्षो भूत्वा न परितुष्येत् । मेधा.

**पुरुषार्थस्तु दैवेन संयुक्तो यः प्रवर्तते ।**
**अक्लेशेन स सर्वेषामर्थानामेव साधकः ॥**

पुरुषार्थः पुरुषकारः । स एव यदाऽत्यन्त( ? ऽनु )गुणे दैवे अनुष्ठीयते तदा क्लेशेन विना एकान्तेन समग्रफलसाधको भवति । मेधा.

**केचिद्युद्ध(? च्छुद्ध)मपि क्षेत्रं युक्तं पुरुषकर्मणा।**
**दैवहीनाय तु फलं कस्य( ? कस्मै )चित् संप्रयच्छति ।**
***केचित् क्षेत्रस्य भृतमित्युक्तं पुरुषकर्मणा ॥**

अस्य दार्ढ्यार्थमुदाहरणं श्लोकद्वयेनाऽऽह— केचिदिति । पुनः पुनर्दृष्टेषु शोधितं यथावच्चोक्त( ? म )मित्याद्युपकारकलक्षणेन दैवेन हीनाय फलं न ददातीति । मेधा.

**संयुक्तस्यापि दैवेन पुरुषकारेण वर्जितम् ।**
**विना पुरुषकारेण फलं क्षेत्रं प्रयच्छति ॥**

संयुक्तस्यापि दैवेनेति । दैवयोगस्तु तस्मात् फलादानादनुमीयते । एवं च पूर्वस्य तदाभावः दैवभावः । अन्ये त्वाहुः— दैवं यथाकालं पर्याप्तं दृष्टाद्युपलम्भादेव कृतत्वान्न कृतमिति यथा तत्पुरुषकाराभावं दर्शयति बीजवर्जितमित्यबीजम् । मेधा.

**चन्द्रार्काद्या ग्रहा वायुरग्निरापस्तथैव च ।**
**इह दैवेन साध्यन्ते पौरुषेण प्रयत्नतः ॥**

चन्द्रार्काद्यास्तावत् ग्रहाः पुरुषाणां प्रकृतधर्माधर्मसंज्ञकेन दैवेन सुखदुःखोपभोगनिमित्तं साध्यन्ते । अनिष्टस्थानप्राप्ताश्च पौरुषेण शान्त्यादिकारणप्रकारेण समतामापद्यन्ते । इष्टस्थानस्थिताः अव्यभिचारानुगुणाः क्रियन्ते । पुरुषज्ञानलोकज्ञानपुरुषविशेषज्ञोऽनुरूपमुपकारी भवति । मेधा.

दैवकर्मसहिता यात्रा कर्तव्या

**'एवं धर्म्याणि कार्याणि सम्यक्कुर्वन् महीपतिः ।**
**देशानलब्धाँल्लिप्सेत लब्धांश्च परिपालयेत् ॥**

(१) अलब्धांल्लिप्सेतेति । संतोषपरेण न भवितव्यमित्यर्थः । मेधा.

(२) राजकृत्यशेषमाह— एवमिति । मवि.

(३) अनेनोक्तप्रकारेण धर्मादनपेतान् व्यवहारान् निर्णयन् राजा जनानुरागादलब्धान्देशाँल्लब्धुमिच्छेत् लब्धांश्च सम्यक्पालयेत् । एवं सम्यग्व्यवहारदर्शनस्यालब्धप्रदेशप्राप्त्यर्थत्वमुक्तम् । ममु.

(४) महीपतित्वं द्योतयति— देशानिति । मच.

(५) कुर्वन् लिप्सेत, नाकुर्वन् । नन्द.

(६) अलब्धानमात्यान् लिप्सेत । भाच.

---

* एतदर्धं न व्याख्यातमिति प्रमादपतितमिति भाति ।

(१) मस्मृ. ७।२०५ इति श्लोकादूर्ध्वं मेधातिथिना धृता व्याख्याताश्च श्लोकाः .

(१) मस्मृ. ९।२५१.

दैवसहितं पौरुषं सफलम्

[1]दैवमानुषसंपन्ना यात्रा सर्वार्थसाधिका ।
तस्यामतिशयेद्दैवं वर्तते पौरुषं समम् ॥
[2]केचित्पुरुषकारेण केचिद्दैवेन कर्मणा ।
उभाभ्यां केचिदिच्छन्ति फलं कुशलबुद्धयः ॥
दैवमानुषसद्भावे नार्या गर्भः प्रसिध्यति ।
पुंसा सत्यपि संयोगे दैवाभावे न सिध्यति ॥
[3]न हि दैवमुदासीनं कदाचिदपि मानवम् ।
अर्थानर्थफलेनेह संयुनक्त्यवशं हि तत् ॥
[4]काकतालीयवद्दैवात् दृष्ट्वाऽपि निधिमग्रतः ।
न पौरुषादृते तेन निधिना युज्यते पुमान् ॥

## याज्ञवल्क्यः

दैवपौरुषसमुच्चयः फलदः

[5]दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥

(१) ननु एवं सकल एवाऽऽरम्भोऽनर्थकः, सुसमृद्धानामपि विपर्ययदर्शनात् । तथा च सुयोधनस्य विराटं प्रति घोषयात्रायां च दृष्टमेव । उक्तं च— 'ग्रहाधीना नरेन्द्राणामुच्छ्र्याः पतनानि च ।' (यास्मृ. १।३०८) इति । अतो दैवतन्त्रत्वात् राज्यस्य, अपभ्रष्टमूलामिवेमां स्मृतिं मन्यामहे । पुरुषकारानभिज्ञ, मैवम्— दैव इति । न दैव एवेत्यभिप्रायः । किंच, दैवस्वरूपमप्यनिरूपितमायुष्मता । यतः— तत्रेति । जन्मान्तरीयपुरुषकार एव दैवमित्युच्यते, नान्यदित्यर्थः । 　विश्व.

(२) प्राणिनामभ्युदयविनिपातानां दैवायत्तत्वाद्यदि दैवमस्ति तदा स्वयमेव परराष्ट्रादि वशीभविष्यति, अथ नास्ति, कृतेऽपि पौरुषे न भविष्यति । अतो व्यर्थ एवायं यात्राप्रयास इत्यत आह— दैव इति । कर्मसिद्धिः फलप्राप्तिः इष्टानिष्टलक्षणा । सा न केवलं दैवे व्यवस्थिता, अपि तु पुरुषकारेऽपि, लोके तथा दर्शनात् चिकित्सकादिशास्त्रवैयर्थ्याच्च । अपि च, पुरुषकाराभावे दैवमेव नास्तीत्याह— तत्र दैवमिति । यतः पूर्वदेहार्जितं पौरुषमेव दैवमुच्यते । अल्पपुरुषकारानन्तरं महाफलोदयाभिव्यक्तं पौरुषं पौर्वदेहिकं कर्म । तस्मात्पुरुषकाराभावे न दैवमस्तीति पुरुषकारे यत्नो विधातव्यः । 　मिता.

(३) न च यात्राया अनियतफलत्वेन पुरुषेण प्रवर्तितव्यमित्यत्र हेतुमाह— दैव इति । दैवे पुरुषकारे च सति कर्मणः कर्मफलस्य सिद्धिः व्यवस्थिता नियता । सत्यपि पुरुषकारे दैवाभावे न फलं सिध्यति । न च प्राक्प्रवृत्तेर्दैवाभावः शक्यः परिच्छेत्तुम् । अतोऽर्थसंशयाद्यात्रादौ प्रवृत्तिरुपपद्यत इत्यभिप्रायः । तत्र दैवं नाम पूर्वदेहप्रभवं पौरुषं पुरुषस्य व्यापारः प्रयत्नाख्योऽपूर्वपर्यन्तः । तत्र पौर्वदैहिकमिति बाहुल्याभिप्रायम्, कारीर्यादीनामनुष्ठाने फलोपभोगे च देहैक्यात् । 　अप.

(४) दैवं पौर्वदेहिकम् । पुरुषकारः ऐहिकपुरुषप्रयत्नः । पौरुषं तपोदानयागादिष्वभिव्यक्तम्, तेनार्जितमदृष्टमुच्यते । एतयोः कर्मसिद्धिर्नियता । तदाह व्यासः— 'दैवमात्मकृतं विद्यात्कर्म यत्पौर्वदेहिकम् । स्मृतः पुरुषकारश्च क्रियते यदिहापरम् ॥' । अतः शुभयुक्तं दैवं निश्चित्य प्रयतेत । 　दीक.

(५) ननु मन्त्रः उपायप्रयोगः षाड्गुण्यपरिकल्पनं च व्यर्थम्, प्राणिनामभ्युदयविपत्त्योर्दैवाधीनत्वात्, इत्यत आह— दैव इति । दैवे पुरुषकारे कर्मसिद्धिः कर्मफलप्राप्तिर्व्यवस्थिता वादिभेदेन नियता । तत्र तयोर्मध्ये पौर्वदेहिकं पूर्वदेहोपार्जितम् अदृष्टविशेषरूपं दैवम्, अभिव्यक्तम् अस्मिन् देहे प्रत्यक्षीक्रियमाणं युद्धादिपुरुषव्यापाररूपं पौरुषमुच्यते । चकारः कालस्वभावयोर्वक्ष्यमाणयोः संग्रहार्थः । तयोर्लक्षणं स्पष्टत्वादुपेक्षितम् । 　वीमि.

(१) राक. १४० शयेद्दै (शये दै); राप्र. ३१३.

(२) राक. १४०; राप्र. ३१३.

(३) राक. १४० हि तत् (क्वचित्); राप्र. ३१३ फलेनेह (फलं नेह).

(४) राक. १४० निधिना (विधिना); राप्र. ३१३.

(५) यास्मृ. १।३४९; विश्व. १।३४५ द्वितीयचरणे (द्वये सिद्धिः प्रतिष्ठिता); मिता.; अप. १।३४७—३४८ देहि (दैहि); वीमि.; राप्र. ३१२.

(६) दैवं पौर्वदेहिकमिति संबन्धः। राप्र. ३१२

**'केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः।**
**संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः॥**

(१) ननु एवमपि षाड्गुण्यनिरूपणं व्यर्थमेव। उच्यते– यदि हि सर्वं दैवाधीनमेव स्यात् तदैवं स्यात्। अपि तु, यदा तु– केचिदिति। तदैतदचोद्यमिति शेषः। किं च– तेषामिति। तेषां दैवहठपुरुषकाराणां पौरुषमेव योनिः कारणमित्यर्थः। हठोऽपि योऽध्यवसायातिशयः वेतालसाधनादिकः सोऽपि च पुरुषकारातिशय एवेत्यर्थः। अतः सूक्तं तेषां योनिस्तु पौरुषमिति। विश्व.

(२) इदानीं मतान्तराण्याह– केचिदिति। केचिदिष्टानिष्टलक्षणं फलं दैवादेवेच्छन्ति। केचित्स्वभावात् स्वयमेव भवति, न कारणमपेक्षते इति। केचित्कालात्। केचित्पुरुषकारत एवेति। स्वमतमाह– दैवादीनां संयोगे समुच्चये फलं भवतीति कुशलबुद्धयः मन्वादयो मन्यन्ते। मिता.

(३) एवं तर्हि पुरुषकारापेक्षणीयं दैवमेवास्तु फलसाधकम्, किं पुरुषकारेणेत्यत आह– केचिदिति। वृष्टिमहापातविद्युत्पातादयो मनुष्यादीनां प्राणिनामुपकारका अपकारका वा दैवाद्भवन्ति। हठात् परकीयपुरुषकारात् केचित्। यथाऽनिच्छन्तमपि सुतं माता पयः पाययति, पिताऽध्यापयति, व्याघ्रः सर्पो वा देहिनो व्यापादयति। केचित्पुनरर्थाः स्वकीयादेव यत्नात्सिध्यन्ति। यथाऽग्निहोत्रादयो हिंसास्तेयादयश्च। तेषां सर्वेषां पौरुषं प्रयत्नः योनिः कारणम्। केषुचित् अन्वयव्यतिरेकाभ्यामेव प्रयत्नस्य कारणत्वमवगम्यते। येषां तु विद्युत्पातादिकारणतया प्रयत्नो न प्रमाणान्तरादवगम्यते तेषां वेदादेव तदवगतिः। कारीर्यादिप्रयत्नो वृष्टिहेतुतया वचनसिद्ध एव। विद्युत्पातादयस्तु दुःखहेतुत्वेन अधर्मप्रयत्नजन्यतया सामान्यतः शास्त्रादेवावगम्यन्ते। तस्माद्यात्रादौ यतितव्यमेव। अप.

(४) स्वभावात् वस्तुसामर्थ्यात्। कालात् विशिष्टकालभावात्। संयोगे अमीषां साहित्ये। तथा च मत्स्यपुराणम्– 'दैवं पुरुषकारश्च कालश्च पुरुषोत्तम। त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलाय वै॥ कृषिवृष्टिसमायोगे दृश्यन्ते फलशालयः। वर्षाकाले प्रहृष्यन्ते नैवाकाले कथंचन॥' (मत्स्य. २२१।८–९)। दीक.

(५) केचिच्च कुशलबुद्धयः विचारनिपुणधियः कालदैवपुरुषकाराणां संयोगात् परस्परमिलनात् फलमिच्छन्ति। कार्यवस्तुस्वभावस्य फलत्वेन तद्धेतुत्वानुपपत्तिरिति द्रष्टव्यम्। 'कुशलबुद्धयः' इत्यनेन चरमकल्पस्य सिद्धान्तत्वं दर्शितम्। * वीमि.

**'यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत्।**
**एवं पुरुषकारेण विना दैवं न सिध्यति॥**

(१) नन्वेवमप्यपरिहृतमेवास्मचोद्यम्। अहो तु खल्वतिशयवान् मातृमतो विवेकः। पश्य– यथेति। सुष्ठ्वपि हि दैवसंपन्नाः पदार्थस्थितिं नैवातिवर्तन्ते। न जातुचित् उपनीतमपि भोज्यं व्यापारमन्तरेण मुखं प्रविशति। व्यापारोऽपि हि दैवादेवेति चेत्। न। दैवस्यापि तत्पूर्वकत्वादित्युक्तं प्राक्तने एव कर्मणि दैवशब्द इति। तदपि दैवान्तरेणेति चेत्, अव्यवस्थैवं सति स्यात्। भवतु, अनादित्वान्निर्दोषेति चेन्न, निर्निमित्तत्वप्रसङ्गात्। तदभिधाने चावस्थितं पुरुषकारस्यानपेक्षत्वम्। दृष्टानुगुण्येन चादृष्टकल्पना युक्ता, न दृष्टबाधेन। आम्नायस्य चैवमप्रामाण्यप्रसङ्गः। निमित्तान्तरकल्पने चादृष्टकल्पना दुष्परिहार्यैव स्यात्। अतः

---

(१) यास्मृ. १।३५०; विश्व. १।३४६ (केचिद् दैवाद्धठात् केचित् केचित् पुरुषकारतः। सिध्यन्त्यर्था मनुष्याणां तेषां योनिस्तु पौरुषम्॥); मिता.; अप. १।३४८–३४९ विश्ववत्; वीमि. भावाद्वा (भावाच्च) योगे (योगात्); राप्र. ३१२ विश्ववत्.

* शेषं मितागतम्।

(१) यास्मृ. १।३५१; विश्व. १।३४७; मिता.; अप. १।३४९–३५०; वीमि. रथस्य न (न रथस्य); राप्र. ३१२; नीम. ५२ वीमिवत्.

पुरुषकारप्राधान्यात् युक्तः कृत्स्न एवायमुपदेशः इति स्थितम् । विश्व.

( २ ) एकैकस्मात्फलं न भवतीत्यत्र दृष्टान्तमाह– यथेति । नात्र तिरोहितमस्ति । मिता.

( ३ ) इदानीं दैवपुरुषकारयोरन्योन्यसापेक्षतामाह– यथेति । यथा रथगतिकारणत्वेन प्रमितमपि रथादिचक्रमेकम् एकाकि चक्रान्तरविधुरं रथं न गमयति, एवं सुखदुःखानुभवात्मककार्यजननतया प्रमितमपि दैवं न पुरुषकारेण सहकारिणा विना कार्यपर्यन्तेन रूपेण सिध्यति । विद्युन्निपाताद्यपि साधयतो दैवस्य देशविशेषे पुरुषस्यावस्थानापादकं पौरुषं भवत्येव सहकारि । तस्मात्फलार्थिना न केवलं दैवपरेण भवितव्यम् । अप.

( ४ ) दैवं न सिध्यति फलं न साधयतीत्यर्थः । अतो दैवपुरुषकारद्वयसाध्ये एकतरं तत्र न साधकमिति तात्पर्यम् । दीक.

( ५ ) हिशब्दश्चार्थो दैवमित्यत्रान्वितः । तेन कालसमुच्चयः । न सिध्यति न फलं जनयति । एतच्च प्रस्तुतोपयोगित्वादुक्तम् । वस्तुतस्तु त्रयाणामेकैकं विना परस्परं न सिध्यतीति बोध्यम् । वीमि.

( ६ ) ननु जयपराजयादीकं सर्वं कर्माधीनम्, तत्र किं बलादिनेति चेत्, उच्यते– न केवलं सर्वं कर्माधीनम्, किंतु पुरुषकाराधीनमपीत्याह– यथेति । माघेऽपि ' नालम्बते दैष्टिकतां न निषीदति पौरुषे । शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ ' इति । कथं तर्हि क्वचित् पुरुषकारे कृतेऽपि न फलप्राप्तिः ? उच्यते– न वयं कर्मणः कारणत्वमेव खण्डयामः, किंतु तन्मात्रस्य । वस्तुतस्तु न हि कर्म पुरुषकारापेक्षया भिन्नमस्ति । पूर्वजन्मार्जितः पुरुषकारो हि कर्मोच्यते । अतो यदिह जन्मनि द्वाभ्यामेकजातीये प्रयत्ने कृते फलावाप्तिरेकस्य, एकस्य न, ततो नूनमेकस्य प्राक्तनः पुरुषकारो नास्ति, पापरूपो वा स प्रतिबन्धक इति कल्प्यते । अतः सर्वं कर्मापरपर्यायं ( दैवं ) पुरुषकाराधीनमेव । अत एवोक्तं भारते– ' स्वकर्मणाऽशुभेनापि शुभेनाप्यथवा जनः । फलं तदनुरूपं हि प्राप्नोति भरतर्षभ ॥ ' । अत एवोत्तरमीमांसायां कस्यचित् वर्तमानजन्मनि कर्मभिः पापक्षये जाते संन्यासोत्तरं मुक्तिः, यत्र तु कर्मसु अकृतेषु संन्यासोत्तरं मुक्तिः तत्र पूर्वजन्मार्जितानि कर्माणि कल्प्यन्ते । अत एव क्षत्रियजनकस्य ज्ञानोत्पत्तिं दृष्ट्वा प्राक्तनः संन्यासोऽपि कल्प्यते इत्युक्तम् । अतो यत्र लोकतः शास्त्रतो दृढतरः कार्यकारणभावोऽवगतः तत्र कार्यं दृष्ट्वा कारणमनुमीयते इति । अतः सर्वत्र प्राक्तनः ऐहिको वा पुरुषकारः कारणमिति । अतः पुरुषकार एव राज्ञा कर्तव्य इति । नीम. ५२–५३

## बृहत्पराशरः

सततोद्यमः विजयाय, दैवपौरुषसमुच्चयः सिद्धिदः, दैवमहिमा

[1]सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ।
विजिगीषुर्नृपो नान्यैः कदाचिदभिभूयते ॥

तदैवं हृदि संधाय धृतोत्साहो नृपो भवेत् ।
दैवपौरुषसंयोगे सर्वाः सिद्ध्यन्ति सिद्धयः ॥

नैकेन चक्रेण रथः प्रयाति
न चैकपक्षो दिवि याति पक्षी ।
एवं हि दैवेन न केवलेन
पुंसोऽर्थसिद्धिर्नरकारतो वा ॥

केचिद्धि दैवस्य तु केवलस्य
प्राधान्यमिच्छन्ति मतिप्रवीणाः ।
पुंस्कारयुक्तस्य नरस्य केचि-
दप्यत्र इष्टा पुरुषार्थसिद्धिः ॥

अत्युच्चनीचकृतहेतिपरिश्रमी च
शौर्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ।
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमन्नमात्रम् ॥

( १ ) बृपसं. १२।६६–७८.

शुभ्राणि हर्म्याणि वराङ्गनाश्च
नानाप्रकारो विभवो नरस्य ।
उर्वीपतित्वं नृपकारता च
सर्वं हि मङ्क्षु क्षयमेति दैवात् ॥

केषां हि पुंसां महतो हि दैवात्
स्थानस्थितानामपि चार्थसिद्धिः ।
केषां प्रभुत्वं बहुजीवितं च
एको हि देवो बलवानतोऽत्र ॥

पुंस्त्रीप्रयोगादथ शुक्रशोणितात्
को देहमध्ये विदधाति गर्भम् ।
स्त्रीणां तु तद्विप्र न चापि पुंसां
सर्वाऽपि चैषा ननु दैवचेष्टा ॥

कासां तु गर्भस्य न संभवोऽस्ति
केषां च शुक्रं ननु वीर्यहीनम् ।
दधाति गर्भं ननु काऽपि दैवात्
काचित्तु गर्भं न दधाति दैवात् ॥

धाता विधाता निजकर्मयोगा-
द्विधेस्त्वभीष्टं त्वनुभावभाव्यम् ।
देवासुराणां सह दैत्यकानां
स ह्येव कर्ता च मनूद्भवानाम् ॥

दैवान्मघोनोऽपि सहस्रमक्ष्णां
दैवाद्धिमांशोः क्षयरोगिताऽभूत् ।
दैवात्पयोधेर्लवणोदकत्वं
दैवाद्भवेच्चित्रतरा च वृष्टिः ॥

यद्यप्यमुष्मान्न परोऽस्ति दैवात्
कुर्यात्तथाऽपीह नरो नृकारम् ।
उद्दीपयेत्कर्मकरो नृकारा-
दुद्दीपितं कर्म करोति लक्ष्मीः ॥

दैवेन केचित्प्रसभेन केचित्
केचिन्नृकारेण नरस्य चार्थाः ।
सिध्यन्ति यत्नेन विधीयमाना-
स्तेषां प्रधानं नरकारमाहुः ॥

## मत्स्यपुराणम्

दैवं पौरुषं च स्वकर्मैव, दैवपौरुषकालाः त्रयः समुच्चित्य फलदाः

[1]सर्वं कर्मेदमायत्तं विधाने देवमानुषे ।
तयोर्दैवमचिन्त्यं च पौरुषे विद्यते क्रिया ॥

मनुरुवाच–

[2]दैवे पुरुषकारे च किं ज्यायस्तद् ब्रवीहि मे ।
अत्र मे संशयो देव च्छेत्तुमर्हस्यशेषतः ॥

मत्स्य उवाच–

[3]स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् ।
तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥

[4]प्रतिकूलं तथा दैवं पौरुषेण विहन्यते ।
मङ्गलाचारयुक्तानां नित्यमुत्थानशालिनाम् ॥

येषां पूर्वकृतं कर्म सात्त्विकं मनुजोत्तम ।
पौरुषेण विना तेषां केषांचिद् दृश्यते फलम् ॥

[5]कर्मणा प्राप्यते लोके राजसस्य तथा फलम् ।
कृच्छ्रेण कर्मणा विद्धि तामसस्य तथा फलम् ॥

---

(१) मत्स्य. २२०।४६ ; विध. २।६५।७५ विधाने देवमानुषे (विधानं चैव पौरुषम्) च (हि).

(२) मत्स्य. २२१।१ ; विध. २।६६।१ मनुरु (राम उ) ब्रवीहि (वदस्व) चतुर्थचरणे (संशयच्छिद्-भवांस्तथा) ; राप्र. ३१३ उत्तरार्धं विधवत्, 'मत्स्यविष्णुधर्मोत्तरयोः' इत्युपक्रम्य सर्वोऽप्यध्यायः समुद्धृतः.

(३) मत्स्य. २२१।२ ; विध. २।६६।२ मत्स्य (पुष्कर) ; राप्र. ३१३.

(४) मत्स्य. २२१।३-४ ; विध. २।६६।३-४ ; राप्र. ३१३.

(५) मत्स्य. २२१।५ ; विध. २।६६।५ राजसस्य (राजन् सम्यक्) उत्तरार्धं नास्ति ; राप्र. ३१३-३१४.

[1]पौरुषेणाऽऽप्यते राजन् प्रार्थितव्यं फलं नरैः ।
दैवमेव विजानन्ति नराः पौरुषवर्जिताः ॥

[2]तस्माद्धि कालसंयुक्तं दैवं तु सफलं भवेत् ।
पौरुषं दैवसंपत्त्या काले फलति पार्थिव ॥

[3]दैवं पुरुषकारश्च कालश्च पुरुषोत्तम ।
त्रयमेतन्मनुष्यस्य पिण्डितं स्यात् फलावहम् ॥

[4]कृषिवृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः ।
तास्तु काले प्रदृश्यन्ते नैवाकाले कथंचन ॥

[5]तस्मात् सदैव कर्तव्यं सधर्मं पौरुषं नरैः ।
विपत्तावपि यस्येह परलोके ध्रुवं फलम् ॥

[6]नालसाः प्राप्नुवन्त्यर्थान्न च दैवपरायणाः ।
तस्मात् सर्वप्रयत्नेन पौरुषे यत्नमाचरेत् ॥

(१) मत्स्य. २२१।६ ; विध. २।६६।५–६ राजन् प्रार्थि ( राम मार्गि ) उत्तरार्धे ( दैवमेव न जानाति नरः पौरुषवर्जितः ॥ ) ; राप्र. ३१४ प्रथमचरणवर्जं विधवत् .

(२) मत्स्य. २२१।७ द्धि कालसं ( त्रिकालं सं ) ; विध. २।६६।६–७ प्रथमचरणे ( तस्मात् सत्कार्ययुक्तस्य ) दैव ( चैव ) पार्थिव ( भार्गव ) ; राप्र. ३१४.

(३) मत्स्य. २२१।८ ; विध. २।६६।७–८ पुरुषो ( मनुजो ) ; राक. १४१ वहम् ( य वै ) ; दीक. १।३५० राकवत् ; वीमि. १।३५० पिण्डितं स्यात् ( पण्डितस्य ) शेषं राकवत् ; राप्र. ३१४ पुरुषोत्तम ( मनुजेश्वर ).

(४) मत्स्य. २२१।९ ; विध. २।६६।८–९ काले प्रदृश्यन्ते ( कालेन दृश्यन्ते ) ; राक. १४१ तृतीयचरणे (वर्षाकाले प्रशसन्ते ) ; दीक. १।३५० कृषिवृष्टि ( कृषेर्वृष्टि ) योगाद् ( योगे ) सिद्धयः ( शालयः ) तृतीयचरणे ( वर्षाकाले प्रहृष्यन्ते ) ; राप्र. ३१४ तृतीयचरणे ' वर्षाकाले प्रदृश्यन्ते ' इति कल्पतरुपाठमपि निर्दिशति.

(५) मत्स्य. २२१।१० ; विध. २।६६।९–१० नरैः ( नृभिः ) ध्रुवं फलम् ( फलं ध्रुवम् ) ; राप्र. ३१४ नरैः ( नृभिः ).

(६) मत्स्य. २२१।११ ; विध. २।६६।१० ; राप्र. ३१४.

[1]त्यक्त्वाऽलसान् दैवपरान् मनुष्या-
नुत्थानयुक्तान् पुरुषान् हि लक्ष्मीः ।
अन्विष्य यत्नाद् वृणुयान्नृपेन्द्र
तस्मात् सदोत्थानवता हि भाव्यम् ॥

## गरुडपुराणम्

षड्विधोत्साहसंयुक्तं पौरुषं दैवात् बलवत्तरम्, दैवगमकमुद्योगासाफल्यम्

[2]उद्योगः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः ।
षड्विधो यस्य उत्साहस्तस्य देवोऽपि शङ्कते ॥
उद्योगेन कृते कार्ये सिद्धिर्यस्य न विद्यते ।
दैवं तस्य प्रमाणं हि कर्तव्यं पौरुषं सदा ॥

## अग्निपुराणम्

दैवं पौरुषं च स्वकर्मैव, दैवपौरुषकालाः समुचिताः सिद्धिदाः

पुष्कर उवाच–

[3]स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् ।
तस्मात् पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥
प्रतिकूलं तथा दैवं पौरुषेण विहन्यते ।
सात्त्विकात् कर्मणः पूर्वात् सिद्धिः स्यात् पौरुषं विना ॥
पौरुषं दैवसंपत्त्या काले फलति भार्गव ।
दैवं पुरुषकारश्च द्वयं पुंसः फलावहम् ॥
कृषेर्वृष्टिसमायोगात् काले स्युः फलसिद्धयः ।
सधर्मं पौरुषं कुर्यान्नालसो न च दैववान् ॥

## कामन्दकीयनीतिसारः

बुद्ध्युत्साहयुक्ते पौरुषे विजयः

[4]अन्वहं चरचर्याभिर्विफले दूतचेष्टिते ।
यायाद् यथोक्तयानस्तु सूक्ष्मबुद्धिपुरःसरः ॥

(१) मत्स्य. २२१।१२; विध. २।६६।११ त्यक्त्वा ( त्यक्ता ) यान्नृपे ( ते द्विजे ) सदो ( समु ) ; राप्र. ३१४ त्यक्त्वा ( त्यक्ता ) यान्नृ ( ते नृ ).

(२) गरुड. १।१११।३२–३३.

(३) अग्नि. २२६।१–४.

(४) कानी. १४।१.

(१) संधिविग्रहार्थे प्रहितेऽपि दूते यथाभिहिततापसव्यञ्जनादिप्रणिधानप्रकारेण च यथाप्रस्तुतकार्यासिद्धौ स्वयमेव यायादित्याह– अन्वहमित्यादि। चरचर्याभिरिति चारप्रचारैः सह विफले। इदमुक्तं भवति– संधाने यो मन्त्रिव्यापारः चाराणां च कृत्यपक्षोपजापादौ ये अन्वहं प्रचाराः तेषु विफलेषु, यदि वा चरैरेव कृतोपजापत्वात् विफलीकृते दूतचेष्टिते यथोक्तयानः 'उत्कृष्टबलवीर्यस्य... गुणानुरक्तप्रकृतेर्यात्रा यानम्' (कानी. ११।१)।

इत्यनेन शक्तिदेशकालबलान्वितो यायादित्यर्थः। सूक्ष्मबुद्धिपुरःसरः सूक्ष्मया बुद्धया प्राङ्निरूपिताभ्युच्चयत्वात् तत्पुरःसरः। जम.

(२) अनन्तरोक्तदूतप्रचारचरविकल्पयोः संबन्धं दर्शयन् उत्साहप्रशंसा प्रकृतिकर्म प्रकृतिव्यसनादि च दर्शयन्नाह– अन्वहमिति। अन्वहं प्रतिदिनं चरचर्याभिः गूढपुरुषगत्यागमैः विफले दूतचेष्टिते, निर्णीते इति वाक्यशेषः। दूतचेष्टितवैफल्यं च संधेरभावात्। सूक्ष्मबुद्धिपुरःसरः सूक्ष्मा अतिदुर्लक्ष्या सर्वत्र अप्रतिहतप्रवेशा बुद्धिः पुरःसरा यस्य सः, यथोक्तयानः यथोक्तं यथाकथितं यथाविहितं यानं युद्धयात्रा यस्य तादृशो विजिगीषुः यायात् विजयार्थं यात्रां कुर्यात्। 'विफले' इत्यत्र 'विमलम्', 'दूतचेष्टिते' इत्यत्र 'दूतचेष्टितम्', 'यथोक्तयानः' इत्यत्र 'यथोक्तलाभः' इति मुद्रितपुस्तकपाठः। उनिसा.

**[1]सूक्ष्मा सत्त्वप्रयत्नाभ्यां दृढं बुद्धिरधिष्ठिता।**
**प्रसूते हि फलं श्रीमदरणीव हुताशनम्॥**

(१) अभ्युच्चयश्च व्यसनिनो न संभवतीति तत्प्रतीकारार्थं तावत् सर्गद्वयेन षाड्गुण्यशेषभूता व्यसनचिन्ता क्रियते। तत्रास्मिन् सर्गे प्रकरणत्रयम्– उत्साहप्रशंसा, प्रकृतिकर्म, प्रकृतिव्यसनानि च। तत्रोत्साहपूर्वकत्वात् (? त्वं) यानादिचिन्ताया इति तत्प्रशंसोच्यते षोडशभिः श्लोकैः। तत्र सूक्ष्माऽपि बुद्धिः सत्त्वानधिष्ठिता निष्प्रयत्ना चाफलेत्याह–सूक्ष्मेत्यादि। सत्त्वप्रयत्नाभ्यामिति। सत्त्वं व्यसनेऽभ्युदये चाविकारकरम् अध्यवसायकरं वा, प्रयत्नः बुद्धेर्व्यापारः ऊहापोहलक्षणः, आभ्यां दृढम् अत्यर्थम्, अधिष्ठिता सूक्ष्मा बुद्धिः फलं प्रसूते। श्रीमत् उत्कृष्टम्। जम.

(२) सूक्ष्माया बुद्धेः सामर्थ्यं दर्शयन्नाह–सूक्ष्मा इति। सत्त्वं नाम गुणः येन व्यसने अभ्युदये च मनो न विकृतं भवति। प्रयत्नः व्यवसायः। ताभ्याम् अधिष्ठिता व्याप्ता, सूक्ष्मा, दृढा स्थिरा बुद्धिः अरणी शमीप्रभृतिकाष्ठं हुताशनमिव श्रीमत् रमणीयं फलं प्रसूते। उनिसा.

**[1]धातोश्चामीकरमिव सर्पिर्निर्मथनादिव।**
**बुद्धिप्रयत्नोपगताद् व्यवसायाद् ध्रुवं फलम्॥**

(१) उत्साहोऽपि बुद्धिप्रयत्नपूर्वकः क्रियमाणः फलवान् इत्याह– धातोरित्यादि। बुद्धिप्रयत्नोपगतादिति। यः सत्त्वाधिष्ठिताया बुद्धेर्व्यापारः तद्युक्तादित्यर्थः। व्यवसायादिति। समुत्थानम् उत्साहः व्यवसायः इत्येकार्थाः। तस्मात् त्रितययोगादेव फलम्। जम.

(२) एतदेव द्रढयति– धातोरिति। धातोः मृत्पाषाणादेः चामीकरं सुवर्णमिव, निर्मथनात् दधिविलोडनात् घृतमिव, बुद्धिप्रयत्नोपगतात् अध्यवसायात् बुद्धिप्रयत्नोपष्टम्भितात् व्यवसायात् फलं ध्रुवं निश्चितं भवति। तस्मात् निश्चितफलार्थिना पुरुषेण मन्त्रशक्त्युपष्टम्भितोत्साहशक्तिरवलम्बनीयेति भावः। उनिसा.

**[2]धीमानुत्साहसंपन्नो व्यवसायसमन्वितः।**
**भाजनं परमं श्रीणामपामिव महार्णवः॥**

(१) तदेव स्फुटयन्नाह– धीमानुत्साहसंपन्नो व्यवसायसमन्वित इति। तत्र बुद्धेः कार्यालोचनम्, उत्साहात् योगक्षेमसाधनम्, सत्त्वात् फलाध्यवसानमिति। जम.

(२) उत्साहसंपन्नः प्रभुशक्त्या समन्वितो धीमान् उत्साहशक्त्या प्रभुशक्त्या धीशक्त्या च समन्वितः युक्तः

---

(१) कानी. १४।२ ; उनिसा. दृढं (दृढा).

(१) कानी. १४।३ ; उनिसा. गताद् व्यव (गताध्यव).

(२) कानी. १४।४ ; उनिसा. व्यवसाय (प्रभुशक्त्या) तृतीयचरणे (श्रियः स्यात् परमं पात्र).

विजिगीषुः महार्णवः अपामिव श्रियः लक्ष्म्याः परमं पात्रम् असाधारणः आश्रयः स्यात् । उनिसा.

**[1]नलिनीवाम्बुसंपत्त्या बुद्ध्या श्रीः परिपाल्यते ।**
**उत्थानाध्यवसायाभ्यां विस्तारमुपनीयते ॥**

(१) तमेव व्यापारं दर्शयति– नलिनीवेत्यादिना । बुद्ध्या श्रीः परिपाल्यते, तया रक्षणोपायस्य चिन्त्यमानत्वात् । उत्थानाध्यवसायाभ्यां विस्तारमुपनीयते, अनुद्युक्तस्य अनध्यवस्यतः भूतिविस्तारासंभवात् । जम.

(२) तदेव दर्शयन्नाह– नलिनीति । परिपाल्यते रक्ष्यते उच्छेदात् इत्यर्थः । उत्थानाध्यवसायाभ्यां वातातपसमानाभ्यां सा नलिनीवत् श्रीः विस्तारमुपनीयते । नहि नलिनी वातातपवर्जिते जलसंनिधावपि विस्तारमुपयाति । उनिसा.

**लक्ष्मीरुत्साहसंपन्नाद्बुद्धिशुद्धं प्रसर्पतः ।**
**नापैति कायाच्छायेव विस्तारं चोपगच्छति ॥**

(१) तथा त्रितययोगात् विभूतेस्तद्भावभाविता प्रतीपप्रार्थना चेति श्लोकद्वयेन दर्शयति– लक्ष्मीरित्यादि । बुद्धिशुद्धमिति क्रियाविशेषणम् । प्रसर्पतः लक्ष्मीमध्यवस्यत इत्यर्थः । नापैति छायेवेति तद्भावभावितां दर्शयति । जम.

(२) एतदेव पुनरुच्यते– लक्ष्मीरिति । बुद्धिशुद्धं बुद्ध्यनुसारेण प्रसर्पतः बुद्धिं गच्छतः उत्साहसंपन्नात् लक्ष्मीर्न अपैति । स्पष्टमन्यत् । 'उत्साहसंपन्नात्' इत्यत्र 'उत्साहसंपन्नान्' इति पाठो न समीचीनः । उनिसा.

**[2]वीतव्यसनमश्रान्तं महोत्साहं महामतिम् ।**
**प्रविशन्ति महालक्ष्म्यः सरित्पतिमिवापगाः ॥**

(१) वीतव्यसनं त्रितययोगादेव । अश्रान्तम् असंतुष्टं महासत्त्वम् । महामतिं सूक्ष्मबुद्धिम् । प्रविशन्ति लक्ष्म्य इति । ता एव प्रतीपं प्रार्थयन्ते इत्यर्थः । जम.

(२) वीतं विरहितं व्यसनं यस्य तम्, अश्रान्तं सततोद्योगेऽपि यस्य श्रमो नास्ति तम्, अत एव महोत्साहम्, महामतिं महती मतिः मन्त्रशक्तिः यस्य तम्, तादृशं विजिगीषुम् आपगाः सरित्पतिमिव सदा लक्ष्म्यः प्रविशन्ति । उनिसा.

**[1]सत्त्वबुद्ध्युपपन्नोऽपि व्यसनग्रस्तमानसः ।**
**श्रीभिः षण्ड इव स्त्रीभिरलसः परिभूयते ॥**

(१) त्रयाणामप्युत्साहः प्रधानम्, तस्य साधकतमत्वादित्याह– सत्त्वबुद्ध्युपपन्नोऽपीत्यादि । व्यसनग्रस्तमानसः उत्साहवैकल्यादेव । जम.

(२) उत्साहप्रशंसामभिधाय प्रकृतिकर्म प्रकृतिव्यसनानि च अभिधत्ते– सत्त्वबुद्ध्युपपन्नोऽपीति । सत्त्वगुणसंपन्नः बुद्धियुक्तोऽपि यदि व्यसनासक्तमानसः अलसश्च उत्साहशक्तिविहीन इत्यर्थः, स्यात् तदा स्त्रीभिः षण्ड इव श्रीभिः परिभूयते । उनिसा.

**[2]उत्थानेनैधयेत् सत्त्वमिन्धनेनेव पावकम् ।**
**श्रियो हि सततोत्थायी दुर्बलोऽपि समश्नुते ॥**

(१) उत्थानेनैधयेत् सत्त्वमिति उत्साहस्यैव प्राधान्यं दर्शयति । सततमुत्साहेन संवर्धयेत् सत्त्वम्, अन्यथा तदागन्तुकत्वादपैत्यपि । ततश्चाध्यवसायाभावान्नासौ फलमश्नुते । सततोत्थायितायां तु नायं दोष इत्याह– श्रियो हीत्यादि । दुर्बलोऽपि कोशदण्डहीनोऽपि । जम.

(२) उत्साहप्रशंसामाह– उत्थानेनेति । उत्थानयोगेन सत्त्वं व्यसने अभ्युदये च यदविकारि तत् एधयेत् वृद्धिं नयेत्, इन्धनेन काष्ठादिना पावकम् अग्निम् इव । हि यतः सततोत्थायी सदैवोद्युक्तः दुर्बलोऽपि श्रियं समश्नुते प्राप्नोति । उनिसा.

**[3]भोक्तुं पुरुषकारेण दुष्टां स्त्रियमिव श्रियम् ।**
**व्यवसायं सदैवेच्छेन्न हि क्लीबवदाचरेत् ॥**

---

(१) कानी. १४।५–६.

(२) कानी. १४।७ ; उनिसा. महाल ( सदा ल ).

(१) कानी. १४।८.

(२) कानी. १४।९ ; उनिसा. श्रियो ( श्रियं ).

(३) कानी. १४।१० ; उनिसा. दुष्टां ( दुष्ट ).

( १ ) शौर्यम् अमर्षः शैघ्र्यं दाक्ष्यं चेत्युत्साहगुणाश्चत्वारः । तत्र 'श्रीभिरलसः परिभूयते' (कानी. १४।८) इत्यनेन दाक्ष्यमुदाहृतम् । शेषानपि श्लोकपञ्चकेन दर्शयति— भोक्तुमित्यादि । पुरुषकारेण शौर्येण व्यवसायमिच्छेत् । अन्यथा कथं पुरुषकारं कुर्यात्, तस्योत्साहगुणत्वात् । जम.

( २ ) एतदेव समर्थयन्नाह— भोक्तुमिति । दुष्टस्त्रियमिव अविनीतां योषितमिव श्रियं भोक्तुं पुरुषकारेण सदैव व्यवसायम् उद्योगम् इच्छेत् । न हि क्लीबवत् षण्डवत् आचरेत् । उनिसा.

**[1]वशे श्रियं सदोत्थायी सैंहीं वृत्तिं समाश्रितः ।**
**कचग्रहेण कुर्वीत दुर्वृत्तामिव योषितम् ॥**

( १ ) वशे श्रियं कुर्वीतेति संबन्धः । सैंहीं वृत्तिं शौर्यलक्षणाम् । जम.

( २ ) सदोत्साही सदोद्युक्तः सैंहीं सिंहसंबन्धिनीं वृत्तिम् उपाश्रितः सन् श्रियं लक्ष्मीं दुर्विनीतां दुर्वृत्तां स्त्रियमिव कचग्रहेण केशग्रहणेन वशे कुर्वीत स्वायत्तां कुर्यात् । उनिसा.

**[2]किरीटमणिचित्रेषु मूर्धसु त्राणधारिषु ।**
**नाकृत्वा विद्विषां पादं पुरुषो भद्रमश्नुते ॥**

( १ ) मूर्धसु विद्विषामिति संबन्धः । त्राणधारिषु शिरस्त्राणप्रधानेषु । अपकारिणां शिरःसु पदमकृत्वा न भद्रमश्नुते । जम.

( २ ) भूयोऽप्युत्साहप्रशंसामेवाऽऽह— किरीटेति । किरीटमणिभिः चित्रेषु रञ्जितेषु त्राणसारिषु रक्षार्थं शिरस्त्राणत्रातेषु विद्विषां शत्रूणां मूर्धसु पादम् अकृत्वा न निधाय पुरुषः भद्रं कल्याणं नाश्नुते न प्राप्नोति । उनिसा.

**[3]प्रयत्नप्रेर्यमाणेन महता चित्तहस्तिना ।**
**रूढवैरिद्रुमोत्खातमकृत्वेह कुतः सुखम् ॥**

( १ ) तथा रूढवैरिद्रुमोत्खातमकृत्वा कुतः सुखमिति परिभवासहिष्णुतालक्षणममर्षं दर्शयति— प्रयत्नप्रेर्यमाणेनेति । यदा चेतसि संरम्भात्मकः प्रयत्नविशेष उत्पद्यते तदा तेन प्रेर्यमाणं चित्तं हस्तिस्थानीयं रूढवैरिद्रुमानुत्खातुं प्रवर्तते । जम.

( २ ) एतदेव समर्थयन्नाह— प्रयत्नेति । प्रयत्नप्रेर्यमाणेन व्यवसायप्रेरितेन महता चित्तहस्तिना रूढवैरिद्रुमोत्खातं रूढः बद्धमूलः यो वैरिरूपो वृक्षः तस्य उत्खातम् उन्मूलनम् अकृत्वा सुखं कुतः ? अनुन्मूलिते शत्रुद्रुमे जगति सुखं नास्तीति भावः । उनिसा.

**[1]हेलाकृष्टस्फुरत्तीक्ष्णखड्गांशुपरिपिञ्जरैः ।**
**श्रीमत्करिकराकारैराह्रियन्ते भुजैः श्रियः ॥**

( १ ) हेलेत्यादिना शीघ्रतां दर्शयति । हेलया क्षिप्रकारितया आकृष्टाः स्फुरन्तः तीक्ष्णाः ये खड्गाः तेषामंशुभिः परिपिञ्जरैः भुजैरिति संबन्धः । जम.

( २ ) तथा हेलया निराकुलत्वेन आकृष्टः, अत एव स्फुरन्ती उज्वला कान्तिर्यस्य तादृशो यः खड्गः तस्य अंशुभिः किरणैः परिपिञ्जरैः रञ्जितैः, श्रीमतां शोभमानानां करिकराणां हस्तिशुण्डानाम् आकार इव आकारो येषां तैः भुजैः श्रियः विभूतयः आक्रीयन्ते आह्रियन्ते । उनिसा.

**[2]उच्चैरुच्चैस्तरामिच्छन् पदान्यायच्छते महान् ।**
**नीचो नीचैस्तरां याति निपातभयशङ्कया ॥**

( १ ) इदानीमुत्साहसंवर्धितस्य सत्त्वस्य माहात्म्यं दर्शयति— उच्चैरित्यादिना । उच्चैः पदान्यायच्छते इति संबन्धः । महान् सत्त्वाधिकः केसरीव । नीचः सत्त्वहीनः करीव । जम.

( २ ) महान् महापुरुषः उच्चैः पदम् इच्छन् उच्चैस्तरां पदानि आयच्छते निक्षिपति । अत्युच्चतरं पर्वतशिखरमारोढुमिच्छुः अत्युच्चतरपदविन्यासात् अभिमत-

( १ ) कानी. १४।११ ; उनिसा. त्थायी ( त्साही ) समा ( उपा ) चतुर्थचरणे ( दुर्विनीतामिव स्त्रियम् ).

( २ ) कानी. १४।१२ ; उनिसा. धारिषु ( सारिषु ).

( ३ ) कानी. १४।१३.

( १ ) कानी. १४।१४ ; उनिसा. तीक्ष्ण ( कान्ति ) राह्रि ( राक्री ).

( २ ) कानी. १४।१५ ; उनिसा. नीचो ( नीचैः ).

स्थानं प्राप्नोति, नान्यथेति भावः । निपातभयशङ्कया नीचैः नीचैस्तरां याति पदानि आयच्छते इत्यर्थः ।

उनिसा.

**'प्रमाणाभ्यधिकस्यापि महत्सत्त्वमधिष्ठितः ।**
**करोत्येव पदं मूर्ध्नि केसरी मत्तहस्तिनः ॥**

( १ ) तदेव स्फुटयन्नाह– प्रमाणाभ्यधिकस्यापीति । महत् सत्त्वमधिष्ठितः महति सत्त्वे स्थित इत्यर्थः ।

जम.

( २ ) एतदेव समर्थयन्नाह– प्रमाणेति । केशरी यथा करिणः शिरसि पदं धत्ते तथा महत्सत्त्वं महाबलम् अधिष्ठितः आश्रितो जनः प्रमाणाभ्यधिकस्यापि बृहत्परिमाणस्यापि जनस्य शिरसि पदं धत्ते । शेषार्धे 'पदं तु धत्ते शिरसि केशरी मत्तदन्तिनः' इति पुस्तकान्तरस्य पाठः ।

उनिसा.

**'गतभीर्भीतिजननं भोगं भोगीव दर्शयेत् ।**
**यथाबलं च कुर्वीत रिपोर्दण्डनिपातनम् ॥**

( १ ) गतभीरित्यादिना प्रकरणार्थमुपसंहरति । गतभीरिति सत्त्वाधिष्ठानं दर्शयति । भोगं शौर्याद्याभोगम् । यथाबलमिति बुद्धिव्यापारं सूचयति । दण्डनिपातनं शस्त्रव्यापारणम् ।

जम.

( २ ) यद्यप्युत्साहप्रशंसापरैरेवमभिधीयते तथाऽपि परबलाबलविमर्षपूर्वकं विचेष्टितव्यमिति दर्शयन्नाह– गतभीरिति । गतभीः निर्भयः भूत्वा भोगीव सर्प इव भीतिजननं भयजनकं भोगं शरीरम् आटोपं च दर्शयेत् । यथाबलं स्वबलापेक्षया रिपौ दण्डनिपातनं कुर्वीत ।

उनिसा.

---

( १ ) कानी. १४।१६ ; उनिसा. उत्तरार्धे ( पदं स धत्ते शिरसि करिणः केशरी यथा ॥ ).

( २ ) कानी. १४।१७ ; उनिसा. रिपोर्द ( रिपौ द ).

## शुक्रनीतिः

सुगतिदुर्गतिकारणं कर्मैव, चातुर्वर्ण्यं गुणकर्मतः न जात्या, कर्माधीनो बुद्ध्युदयः, दैवं पौरुषं च स्वकर्मैव, फलानुमेयं दैवम्, दैवपौरुषकालाः समुचित्य सिद्धिदाः

**'सत्त्वस्य तमसः साम्यान्मानुषं जन्म जायते ।**
**यद्यदाश्रयते मर्त्यस्तत्तुल्यो दिष्टतो भवेत् ॥**

सत्त्वस्य तमसश्च गुणयोरेतयोः साम्यात् समानत्वात् मानुषं जन्म जायते । अयं भावः– यत्र यादृशः सत्त्वगुणः तादृश एव तमोगुणः विद्यते स मनुष्यत्वं लभत इति । पूर्वं केवलरजसा मनुष्यत्वं लभ्यते, इह तु सत्त्वतमसोः साम्येनेति न पुनरुक्तिरिति बोध्यम् । अतः मर्त्यः यद्यदाश्रयते यदाचारी भवतीत्यर्थः, दिष्टतः भाग्येन तत्तुल्यः तदनुरूपः भवेत् ।

शुनीटी.

**कर्मैव कारणं चात्र सुगतिं दुर्गतिं प्रति ।**
**कर्मैव प्राक्तनमपि क्षणं किं कोऽस्ति चाक्रियः ॥**

अत्र संसारे कर्मैव सुगतिं वा दुर्गतिं प्रति कारणम् । कर्मबलेनैव लोकः सुगतिं वा दुर्गतिं भजते इत्यर्थः । प्राक्तनं पूर्वजन्मकृतं यत् तदपि कर्म एव । कोऽपि जनः किं क्षणमपि अक्रियः कर्मशून्यः अस्ति ? नैवेत्यर्थः । सर्वमेव कर्मायत्तमिति भावः ।

शुनीटी.

**न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव न ।**
**न शूद्रो न च वै म्लेच्छो भेदिता गुणकर्मभिः ॥**

अत्र संसारे जात्या कश्चित् ब्राह्मणः क्षत्रियश्च न विद्यते इति शेषः । तथा वैश्यः न, शूद्रश्च न, म्लेच्छश्च न, अस्तीति शेषः । तर्हि किमित्याह– भेदिता इति । गुणकर्मभिः गुणैः तत्तज्जातिनिष्ठैः गुणैः धर्मैः कर्मभिश्च भेदिताः, एते इति शेषः । गुणकर्मप्रभेदेन केऽपि ब्राह्मणाः, केऽपि क्षत्रियाः, केऽपि वैश्याः, अपरे शूद्राः, अन्ये म्लेच्छाश्चेति संज्ञया निर्दिश्यन्ते इत्यर्थः ।

शुनीटी.

---

( १ ) शुनी. १।३६–५८.

**ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं नु ब्राह्मणाः ।**
**न वर्णतो न जनकाद् ब्राह्मतेजः प्रपद्यते ॥**

सर्वे ते पूर्वोक्ता ब्राह्मणाः ब्रह्मणः विधातुः समुत्पन्नाः, अतः ब्राह्मणाः किं नैवेत्यर्थः । नुशब्दो वितर्के । वर्णतः आदिमवर्णतया ब्राह्मतेजः न प्रपद्यते न प्राप्यते । तथा जनकात् जनकसंबन्धात् ब्रह्मजातत्वादित्यर्थः, वा ब्राह्मतेजः न प्रपद्यते न प्राप्यते । शुनीटी.

**ज्ञानकर्मोपासनाभिर्देवताराधने रतः ।**
**शान्तो दान्तो दयालुश्च ब्राह्मणश्च गुणैः कृतः ॥**

अहो ! ब्राह्मणः कथं जायते इत्याह— ज्ञानेति । यः ज्ञानस्य कर्मणां च उपासनाभिः अनुशीलनानुष्ठानतपोभिः गुणैः उपलक्षितः, देवताराधने रतः, शान्तः जितेन्द्रियः, दान्तः विनयरतः, तथा दयालुः, स ब्राह्मणः कृतः, विधात्रेति शेषः । शुनीटी.

**लोकसंरक्षणे दक्षः शूरो दान्तः पराक्रमी ।**
**दुष्टनिग्रहशीलो यः स वै क्षत्रिय उच्यते ॥**

यश्च लोकरक्षणे प्रजापालने दक्षः निपुणः, शूरः बलवान्, दान्तः निगृहीतेन्द्रियः, पराक्रमी, तथा दुष्टानां निग्रहे समर्थः, स क्षत्रिय उच्यते । वैशब्दः अवधारणे । शुनीटी.

**क्रयविक्रयकुशला ये नित्यं पण्यजीविनः ।**
**पशुरक्षाः कृषिकरास्ते वैश्याः कीर्तिता भुवि ॥**

ये नित्यं क्रयविक्रयकुशलाः सन्तः पण्यजीविनः व्यवसायिन इत्यर्थः, तथा पशुरक्षाः पशुपालनरताः, कृषिकराश्च, ते भुवि पृथिव्यां वैश्याः कीर्तिताः । शुनीटी.

**द्विजसेवार्चनरताः शूराः शान्ता जितेन्द्रियाः ।**
**सीरकाष्ठतृणवहास्ते नीचाः शूद्रसंज्ञकाः ॥**

ये द्विजानां ब्राह्मणक्षत्रियवैश्यानां सेवायां परिचर्यायाम् अर्चने च पूजने च रताः, शूराः बलवन्तः कार्यक्षमा इत्यर्थः, शान्ताः सुशीलाः, जितेन्द्रियाः वशीकृतेन्द्रियाः, सीरं लाङ्गलं काष्ठं तृणं च वहन्तीति तथोक्ताः, अत एव नीचाः क्षुद्रकर्मरताः, ते शूद्रसंज्ञकाः शूद्रा इत्यभिहिता इत्यर्थः । शुनीटी.

**त्यक्तस्वधर्माचरणा निर्घृणाः परपीडकाः ।**
**चण्डाश्च हिंसका नित्यं म्लेच्छास्ते ह्यविवेकिनः ॥**

ये च त्यक्तस्वधर्माचरणाः धर्माचारवर्जिता इत्यर्थः, निर्घृणाः निर्दयाः, परपीडकाः, चण्डाः उग्राः, नित्यं सततं हिंसकाः हिंसाशीलाः, तथा अविवेकिनः विवेकरहिताः यथेच्छाचारिण इत्यर्थः, ते म्लेच्छाः । हिशब्दः अवधारणे । शुनीटी.

**प्राक्कर्मफलभोगार्हा बुद्धिः संजायते नृणाम् ।**
**पापकर्मणि पुण्ये वा कर्तुं शक्तो न चान्यथा ॥**

नृणां मनुष्याणां प्राक्कर्मफलभोगार्हा प्राक्तनशुभाशुभकर्मफलभोगविषयी बुद्धिः संजायते । अन्यथा पापकर्माणि पुण्यं वा कर्तुं न च शक्तः न शक्नोतीत्यर्थः । प्राक्तनकर्मबलेनैव कोऽपि पापकर्मणि कोऽपि वा पुण्यकर्मणि प्रवर्तते इति फलितार्थः । शुनीटी.

**बुद्धिरुत्पद्यते तादृग्यादृक्कर्मफलोदयः ।**
**सहायास्तादृशा एव यादृशी भवितव्यता ॥**

यादृक् कर्मफलस्य उदयः तादृक् बुद्धिः उत्पद्यते । भवितव्यता नियतिः यादृशी तादृशा एव सहायाः, भवन्तीति शेषः । शुनीटी.

**प्राक्कर्मवशतः सर्वं भवत्येवेति निश्चितम् ।**
**तदोपदेशा व्यर्थाः स्युः कार्याकार्यप्रबोधकाः ॥**

प्राक्कर्मवशतः प्राक्तनकर्मबलात् सर्वं शुभाशुभं भवत्येव इति निश्चितम्, यदीत्यध्याहार्यम्, तदा कार्याकार्यप्रबोधकाः कर्तव्याकर्तव्यप्रतिपादकाः उपदेशाः व्यर्थाः विफलाः स्युः भवेयुः । केवलप्राक्तनाङ्गीकारे पुरुषकारो व्यर्थ इति भावः । शुनीटी.

**धीमन्तो वन्द्यचरिता मन्यन्ते पौरुषं महत् ।**
**अशक्ताः पौरुषं कर्तुं क्लीबा दैवमुपासते ॥**

वन्द्यचरिताः महनीयचरित्राः धीमन्तः बुद्धिमन्तः पौरुषं पुरुषकारं महत् मन्यन्ते, न तु दैवम् । क्लीबाः अक्षमास्तु पौरुषं कर्तुम् अशक्ताः सन्तः दैवं प्राक्तनभयम् उपासते आश्रयन्ति । शुनीटी.

**दैवे पुरुषकारे च खलु सर्वं प्रतिष्ठितम् ।**
**पूर्वजन्मकृतं कर्मेहार्जितं तद् द्विधाकृतम् ॥**

सर्वं शुभाशुभं दैवे पुरुषकारे च प्रतिष्ठितं खलु निश्चितम् । सर्वमेव दैवाधीनम्, परं पुरुषकारमपेक्षते इति भावः । तत् फलोत्पत्तिसाधनं द्विधाकृतं द्वैविध्येन व्यवस्थापितम्– एकं पूर्वजन्मकृतं कर्म दैवमित्यर्थः, अपरम् इहार्जितम् ऐहिकं पौरुषमित्यर्थः । शुनीटी.

**बलवान् प्रतिकारी स्याद्दुर्बलस्य सदैव हि ।**
**सबलाबलयोर्ज्ञानं फलप्राप्त्याऽन्यथा न हि ॥**

बलवान् प्रबलः जनः सदैव दुर्बलस्य प्रतिकारी अपकारी अथवा उपकारी स्यात् । हिशब्दः पादपूरणार्थः । *स बलाबलयोः ज्ञानस्य फलस्य प्राप्त्या, तत् करोतीति शेषः । अन्यथा न हि । बलाबलयोः स्वपरनिष्ठयोः ज्ञानेन फलप्राप्त्या च तस्य दुर्बलप्रतीकार इति भावः । शुनीटी.

**फलोपलब्धिः प्रत्यक्षहेतुना नैव दृश्यते ।**
**प्राक्कर्महैतुकी सा तु नान्यथैवेति निश्चयः ॥**

प्रत्यक्षहेतुना दृश्यमानकारणेन फलोपलब्धिः फललाभः नैव दृश्यते । सा तु फलोपलब्धिः प्राक्कर्महैतुकी प्राक्तनकर्माधीना, अन्यथा नैवेति निश्चयः । शुनीटी.

**यज्जायतेऽल्पक्रियया नृणां वाऽपि महत् फलम् ।**
**तदपि प्राक्तनादेव केचित् प्रागिहकर्मजम् ॥**

वाऽपि अथवा अल्पक्रियया अल्पेन पुरुषकारेण नृणां यत् महत् फलं जायते तदपि प्राक्तनात् पूर्वजन्मकृतात् कर्मणः एव, भवतीति शेषः । केचित् तत् प्रागिहकर्मजं प्राक्तनैहिककर्मभ्यां जातम् । वदन्तीति उत्तरश्लोकीयक्रियापदेनान्वयः । शुनीटी.

**वदन्तीहैव क्रियया जायते पौरुषं नृणाम् ।**
**सस्नेहवर्तिदीपस्य रक्षा वातात् प्रयत्नतः ॥**

वदन्तीति । इहैव क्रियया नृणां पौरुषं जायते । तथाहि–प्रयत्नतः पुरुषकारात् सस्नेहवर्तिदीपस्य तैलाक्तदशान्वितस्य दीपस्य वातात् रक्षा, भवतीति शेषः । इत्यपि वदन्ति केचिदिति पूर्वेणान्वयः । शुनीटी.

**अवश्यंभाविभावानां प्रतीकारो न चेद्यदि ।**
**दुष्टानां क्षपणं श्रेयो यावद्बुद्धिबलोदयम् ॥**

अवश्यं भाविनां भावानां विषयाणां यदि प्रतीकारो न वै नैव, भवतीति शेषः । वैशब्दः अवधारणे । तदा यावद्बुद्धिबलोदयं बुद्धिबलानुसारेणेत्यर्थः, दुष्टानाम् अपकारिणां रोगादीनां शत्रूणां क्षपणम् * अप्रतिकरणं श्रेयः शुभावहम्, भवतु इति शेषः । शुनीटी.

**प्रतिकूलानुकूलाभ्यां फलाभ्यां च नृपोऽप्यतः ।**
**‡ईषन्मध्याधिकाभ्यां च त्रिधा दैवं विचिन्तयेत् ॥**

अतः कारणात् नृपः अपि प्रतिकूलानुकूलाभ्यां तथा ईषन्मध्याधिकाभ्यां फलाभ्यां दैवं त्रिधा विचिन्तयेत्– अल्पप्रतिकूलानुकूलफलकमेकम्, मध्यविधप्रतिकूलानुकूलफलकं द्वितीयम्, अधिकप्रतिकूलानुकूलफलकं तृतीयमिति । शुनीटी.

**रावणस्य च भीष्मादेर्वनभङ्गे च गोग्रहे ।**
**प्रातिकूल्यं तु विज्ञातमेकस्माद्वानरान्नरात् ॥**

रावणस्य एकस्मात् वानरात् हनुमत इत्यर्थः, वनभङ्गे मधुवनमर्दने, तथा भीष्मादेः भीष्मः आदिः श्रेष्ठः यस्य

* अपपाठमाश्रित्येदं व्याख्यानम् ।

* प्रकृतश्लोकस्य पूर्वपक्षपरत्वाभावात् पौरुषाभावपरमिदं व्याख्यानं न श्लिष्यते । किंच, अस्मिन्पक्षे 'यावद्बुद्धिबलोदयम्' इति विशेषणमपि नोपपद्यते । तस्मात् 'क्षपणं नाशनम्' इत्येव व्याख्यातुमुचितम् ।

‡ ईषच्च मध्यं च अधिकं चेत्येतेषां समाहारः ईषन्मध्याधिकम् । ईषन्मध्याधिकं चेषन्मध्याधिकं चेतीषन्मध्याधिके इत्येकशेषः । प्रातिकूल्यानुकूल्यद्वारा फलविशेषणमेतत् । तथाच फलस्य 'ईषत्प्रतिकूलम्, मध्यप्रतिकूलम्, अधिकप्रतिकूलम्, ईषदनुकूलम्, मध्यानुकूलम्, अधिकानुकूलम्' इति षड्विधत्वेऽपि प्रातिकूल्यानुकूल्यपक्षयोः प्रत्येकं त्रिविधत्वात् फलस्य त्रैविध्यमभिप्रेतम् । तादृशेन त्रिविधेन फलेन तादृशमेव ईषत्प्रतिकूलादिरूपं त्रिविधं दैवमनुमिनुयादित्यर्थः ।

तस्य दुर्योधनस्य इत्यर्थः, एकस्मात् नरात् अर्जुनादित्यर्थः, गोग्रहे विराटराजस्य गवां प्रत्याहरणे प्रातिकूल्यम्, दैवस्येति शेषः, विज्ञातम् । *रावणस्य भीष्मादेरिति कर्तरि षष्ठी । शुनीटी.

**कालानुकूल्यं विस्पष्टं राघवस्यार्जुनस्य च ।**
**अनुकूले यदा दैवे क्रियाऽल्पा सुफला भवेत् ॥**

राघवस्य रामस्य अर्जुनस्य च कालानुकूल्यं कालस्य समयस्य आनुकूल्यं सहकारित्वं विस्पष्टं विशेषेण व्यक्तमित्यर्थः । यदा दैवम् अनुकूलं तदा अल्पा क्रिया अल्पपुरुषकारः सुफला भवेत् । यथा एकेन हनुमता मधुवनभङ्गः, तथा एकेन अर्जुनेन गोप्रत्याहरणमिति भावः । शुनीटी.

**महती सत्क्रियाऽनिष्टफला स्यात् प्रतिकूलके ।**
**बलिर्दानेन संबद्धो हरिश्चन्द्रस्तथैव च ॥**

प्रतिकूलके प्रातिकूल्ये, §दैवस्येति शेषः । महती सत्क्रिया साध्वी क्रिया अनिष्टफला स्यात् । तथाहि— बलिः तथा हरिश्चन्द्रः दानेन संबद्धः, आसीदिति शेषः । शुनीटी.

---

* प्रमादविलसितमेतत्, वनभङ्गे रावणस्य कर्तृत्वाभावात् यथाश्रुतगोग्रहे भीष्मादेः कर्तृत्वेऽपि व्याख्यात्रा व्याख्याते गोप्रत्याहरणरूपे गोग्रहपदार्थे भीष्मादेरपि कर्तृत्वाभावात् । नापि— प्रतिकूल्यविज्ञाननिरूपितकर्तृत्वाभिप्रायेणोक्तिरियमिति— वाच्यम्, 'न लोकाव्ययनिष्ठा०' (पा. २।३।६९) इतिस्मृतिविरोधात्, व्याख्यातृकृतपदयोजनातस्तदप्रतीतेः अस्मदादीनामपीदानीं तादृशविज्ञानकर्तृत्वस्योपपत्तौ तयोस्तत्कर्तृत्वकल्पनाया असामञ्जस्याच्च ।

§ 'प्रतिकूलके' इति विशिष्टार्थकपदस्य विशेषणमात्रपरत्वमशुद्धं व्याख्याय षष्ठ्यन्तेन शेषपूरणं भ्रान्तिमूलम् । 'प्रतिकूलके प्रतिकूले, दैवे इति शेषः' इत्येव युक्तम् ।

## योगयात्रा

अन्यजन्मकृतं कर्मैव दैवम्, ग्रहादिकं धर्मानुष्ठानं च दैवापेक्षमेव फलदम्

**(1)कर्मान्यजन्मनि कृतं सदसच्च दैवं**
**तत् केवलं भवति जन्मनि सत्कुलाढ्ये ।**
**बाल्यात् परं विनयसौष्ठवपात्रताऽपि**
**पुंदैवजा कृषिवदित्युत उद्यमेत ॥**

**सामन्तकालवसुधोद्यममन्त्रभृत्यै-**
**र्दैवेन चेति कृषिवन्नृपतेः फलाप्तिः ।**
**स्याच्छिद्रमेकमपि चेत्तत एव सर्वं**
**नाशं प्रयाति हि दृतेश्चरणादिवाम्भः ॥**

***(2)ग्रहर्क्षतिथ्युद्गमराशिहोरा-**
**द्रेष्काणभागाद्यनुकूलमात्रम् ।**
**भवेद् यियासोर्यदि सिद्धिहेतुः**
**स्वयं भवेद् दैवविदेव राजा ॥**

**मन्त्राभिषेकमणिबन्धनशान्तिकर्म-**
**होमोपवाससुरयागजपादिमात्रम् ।**
**स्यात् सिद्धिहेतुरथ चेद्विजिगीषतोऽरीन्**
**कस्मात्तदा नरपतिर्न भवेत् पुरोधाः ॥**

**बुद्ध्वाऽऽर्थशास्त्राण्यपि मन्त्रिणोऽपि**
**कुर्युः प्रणामं न नरेश्वराणाम् ।**
**यद्याभिजात्यद्विपवाजिपत्ति-**
**कोशाद्यपेक्षा न भवेत् प्रधाना ॥**

---

* एतदादिश्लोकत्रयस्य व्याख्यानं शेषस्थलादिनिर्देशश्च 'प्रकृतयः— बलम्' इत्यस्मिन्प्रकरणे (पृ. १५३५) द्रष्टव्यम् ।

(१) योया. १।३–४.

(२) योया. १।५–७.

'स्वदेशे संतुष्टः करितुरगकोशे सति न यो
भवेद् यायी सोऽन्यैः कृतपरि-
भवो याति विलयम् ।
स्वचक्रेणैवासौ क्षपितधनराष्ट्रो भवति वा
गतोऽन्यानादत्ते सुनयचरितो
नीतिविधुरान् ॥

## नीतिवाक्यामृतम्

देवमानुषलक्षणम्, दैवमचित्यं पौरुषं चिन्त्यम्,
दैवावलम्बनात् पौरुषालम्बनं श्रेयः

**दैवं धर्माधर्मौ ॥**

अथ दैवस्य कर्मणः स्वरूपमाह– दैवमिति । यः पुरुषो धर्मं करोति, अधर्मं च पापलक्षणं करोति तद्दैवम्। दैवशब्देन प्राक्तनीयं कर्म प्रोच्यते । येन अन्यजन्मनि शुभं कृतं तत् (? स) शुभं करोति । येन पापं कृतं स पापं करोति । तथा च व्यासः– 'येन यच्च कृतं पूर्वं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन तच्चैवाभ्यस्यते पुनः ॥'। नीवाटी.

**मानुषं नयानयौ ॥**

अथ मानुषस्य कर्मणः स्वरूपमाह– मानुषमिति । यत्पुनः पुरुषो नयेन अनयेन वर्तते तन्मानुषम् ऐहिकं कर्म पुरुषकारलक्षणम् । तत्र पौरुषेण भवतीत्यर्थः । तथा च गर्गः– 'नयो वाऽप्यनयो वाऽपि पौरुषेण प्रजायते । तस्मान्नयः प्रकर्तव्यो नानयश्च विपश्चिता ॥'।
नीवाटी.

**दैवं मानुषं च कर्म लोकं यापयति ॥**

अथ दैवस्य मानुषस्य च कर्मणः स्वरूपमाह– दैवमिति । यापयति नियोजयति । कम् ? कर्मतापन्नं लोकम् । किं तत् ? कर्म । किंविशिष्टम् ? दैवं मानुषं च । द्वाभ्यां संयोगेन पुरुषस्य सिद्धिर्भवति, न चैकेन । तथा च गुरुः– 'यथा नैकेन हस्तेन ताला संजायते नृणाम् । तथा न जायते सिद्धिरेकेनैव च कर्मणा ॥'। नीवाटी.

**तच्चिन्त्यमचिन्त्यं वा दैवम् ॥**

अथ दैवस्य कर्मणः स्वरूपमाह– तच्चिन्त्यमिति । तद्दैवं कर्म, पुरुषेण चिन्तनीयं किं वा सानुकूलं किं वा मम सर्वाणि कर्माणि सिद्धिं यान्ति किं वा न यान्तीति, ततः कर्मारम्भः कार्यः । अथवा (ऽ)चिन्त्यं दैवं पृष्ठतः कृत्वा पौरुषं कार्यं कदाचित्सिद्ध्यतीति । तथा च वल्लभदेवः– 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवं हि दैवमिति कापुरुषा वदन्ति । दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥'। नीवाटी.

**अचिन्तितोपस्थितोऽर्थसंबन्धो दैवायत्तः ॥**

अथ दैवायत्तस्य संबन्धस्य स्वरूपमाह– अचिन्तितोपेति । यदन्यत्कार्यं चिन्तयमानस्य अन्योऽर्थसंबन्ध उपस्थानं करोति स दैवायत्तः पूर्वकर्मसमुद्भवः शुभो वाऽशुभो वा । तथा च शुक्रः– 'अन्यच्चिन्तयमानस्य यदन्यदपि जायते । शुभं वा यदि वा पापं ज्ञेयं दैवकृतं च तत् ॥'। नीवाटी.

**बुद्धिपूर्वहिताहितप्राप्तिपरिहारसंबन्धो मानुषायत्तः ॥**

अथ मानुषायत्तस्य स्वरूपमाह– बुद्धीति । तथा च शुक्रः– 'बुद्धिपूर्वं तु यत्कर्म क्रियतेऽत्र शुभाशुभम् । नरायत्तं च तज्ज्ञेयं सिद्धं वाऽसिद्धमेव च ॥'।
नीवाटी.

**सत्यपि दैवेऽनुकूले न निष्कर्मणो भद्रमस्ति ॥**

अथानुकूले दैवे उद्यमरहितस्य यद्भवति तदाह– सत्यपीति । नास्ति न विद्यते । किं तत् ? भद्रं कल्याणम् । कस्य ? निष्कर्मणः उद्यमरहितस्य पुरुषस्य । कस्मिन् सति ? अनुकूले प्राञ्जले सति । कस्मिन् ? दैवे प्राक्तनकर्मणि । तथा च वल्लभदेवः– 'उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः । न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥'। नीवाटी.

---

(१) योया. ११८.

(२) नीवा. २९१३–१५.

**न खलु दैवमीहमानस्य कृतमप्यन्नं मुखे स्वयं प्रविशति ॥**

अथ केवलं दैवपरस्य पुरुषस्य दृष्टान्तमाह— न खल्विति । यावद्धस्तेन नोद्यमं करोति । तस्मान्न दैवं प्रमाणीकृत्योद्यमं परित्यजेत् । तथा च भागुरिः— 'प्राप्तं दैववशादन्नं क्षुधार्तस्यापि चेच्छुभम् । तावन्न प्रविशेद् वक्त्रे यावत्प्रेषति नोत्करः ( ? नो करः ) ॥ ' ।

नीवाटी.

**न हि दैवमवलम्बमानस्य धनुः स्वयमेव शरान् संधत्ते ॥**

अन्यदपि(?मपि) उद्यमविषये दृष्टान्तमाह— नेति । दैवमवलम्बमानस्य केवलं दैवमाश्रितस्य पुरुषस्य न किंचिद्भवति । यथा शराश्चापं स्वयमेव न गच्छन्ति । तस्मादुद्यमः कार्यः । तथा च जैमिनिः— 'नोद्यमेन विना सिद्धिं कार्यं गच्छति किंचन । यथा चापं न गच्छन्ति उद्यमेन विना शराः ॥ ' । नीवाटी.

**पौरुषमवलम्बमानस्यार्थानर्थयोः संदेहः ॥**

अथ केवलं पौरुषमवलम्बमानस्य पुरुषस्य यद्भवति तदाह— पौरुषमिति । केवलं पौरुषमवलम्बमानस्य अर्थानर्थयोः संदेहः । पौरुषे कृते अर्थो भवति अथवा अनर्थो भवति । तथा च वशिष्ठः— 'पौरुषाश्रितलोकस्य नूनमेकतमं भवेत् । धनं वा मरणं वाऽथ वशिष्ठस्य वचो यथा ॥ ' । नीवाटी.

**निश्चित एवानर्थो दैवपरस्य ॥**

अथ दैवपरस्य पुरुषस्य यद्भवति तदाह— निश्चित इति । दैवपरस्य पुरुषस्य निश्चित एवानर्थः, संदेहो नास्तीति । तथा च नारदः— 'प्रमाणीकृत्य यो दैवं नोद्यमं कुरुते नरः । स नूनं नाशमायाति नारदस्य वचो यथा ॥ ' । नीवाटी.

**आयुरौषधयोरिव दैवपुरुषकारयोः परस्परसंयोगः समीहितमर्थं साधयति ॥**

अथ दैवपुरुषकारयोः संयोगे यद्भवति तदाह— आयुरिति । निष्पत्तिं नयति । कम् ? समीहितमर्थं मनोऽभिलषितं प्रयोजनम् । कोऽसौ ? परस्परसंयोगः अन्योन्यानुबन्धः । कयोरिव ? आयुरौषधयोरिव । यथा आयुरौषधयोः परस्परसंबन्धः । एकं तावत्पुरुषस्याऽयुर्भवति, तदर्हमौषधं भवति, तत्पुरुषो जीवत्येव । अथाऽऽयुर्न भवति, तदर्हमपि तदौषधं (न ?) मिलति, अथवाऽऽयुर्भवति, औषधं (न) मिलति, तदपि दीर्घायुः समीहितं न भवति । तथा च भारद्वाजः— 'विनाऽऽयुषं न जीवेत भेषजानां शतैरपि । न भेषजैर्विना रोगः कथंचिदपि शाम्यति ॥ ' ।

नीवाटी.

**अनुष्ठीयमानः स्वफलमनुभावयन्न कश्चिद्धर्मोऽधर्ममनुबध्नाति ॥**

अथानुष्ठीयमानस्य यद्भवति तदाह— अनुष्ठीयमान इति । न अनुबध्नाति न जनयति । कम् ? अधर्मम् । कोऽसौ ? धर्मः । किंविशिष्टः ? अनुष्ठीयमानः क्रियमाणः । पुनः किंविशिष्टः ? कश्चित् कोऽपि अष्टप्रकारमध्यात् । किं कुर्वन्नधर्मं न जनयति ? स्वफलमनुभावयन् आत्मीयफलं प्रयच्छन् । एतदुक्तं भवति— धर्मं कुर्वतोऽधर्मो न भवति । किं विशिष्टः सः ? (?)— 'इष्टा( ? ज्या )ध्ययनदानादि तपः सत्यं क्षमा धृतिः । अलोभ इति वर्गोऽयं पंचा(?धर्मस्या)ष्टविधः स्मृतः ॥ ' इति । तथा च भागुरिः— यः कश्चित् क्रियते कर्म( ? धर्मः) प्राणिभिः श्रद्धयाऽन्वितैः । स एव हरति प्रायः स्वफलेऽत्र प्रपातकम् ॥ ' । नीवाटी.

अन्यशास्त्रेभ्यः प्रज्ञाशास्त्रं बलवत्तरम्

**[1]स किं मन्त्री मित्रं वा यः प्रथममेव युद्धोद्योगं भूमित्यागं चोपदिशति, स्वामिनः संपादयति च महान्तमनर्थसंशयम् ॥**

अथ युद्धसमुद्देशो व्याख्यायते । तत्राऽऽदावेव मन्त्रिमित्राभ्यां दूषणमाह— स इति । यः शत्रावुपस्थिते प्रथममेव मन्त्रकाले स्वामिने उपदिशति उपदेशं ददाति । किंविशिष्टम् ? युद्धात्मकम् युद्धस्वरूपम्, भूमित्यागाय

(१) नीवा. ३०।१–१५, २४–२६, ३९–४२.

देशान्तरगमनाय । स मन्त्री न भवति, तन्मित्रं न भवति । वैरिरूपिणौ द्वावपि तौ । तथा संभावयति महान्तमनर्थसंशयम् । तथा च गर्गः– 'उपस्थिते रिपौ मन्त्री युद्धबुद्धिं ददाति यः । मन्त्रिरूपेण वैरी स देशत्यागं च यो वदेत् ॥' ।  नीवाटी.

**सङ्ग्रामे को नामाऽऽत्मवानादावेव स्वामिनं प्राणसंदेहतुलायामारोपयति ॥**

अथ मन्त्रिणो दूषणमाह– सङ्ग्राम इति । ...... प्राणसंदेहतुलायां प्राणसंदेहाग्रे । क्व ? युद्धे संग्रामे । तस्मात् मन्त्रिणा शत्रावुपस्थिते युद्धार्थं स्वामी (न) संयोजयितव्यः । तथा च गौतमः– 'उपस्थिते रिपौ स्वामी( ? ) पूर्वं युद्धे नियो( न यो )जयेत् । उपायं दापयेद् व्यर्थे गते पश्चान्नियोजयेत् ॥' ।

नीवाटी.

**भूम्यर्थं नृपाणां नयो विक्रमश्च, न भूमित्यागाय ॥**

अथ भूम्यर्थे पार्थिवेन यत् कार्यं तदाह– भूम्यर्थमिति । भूमिनिमित्तं नृपाणां राज्ञां कौ युक्तौ ? नयः नीतिः पराक्रमश्च । वीरवृत्तिपरौ द्वावपि कर्तव्यौ । न देशत्यागः कार्यः । तथा च शुक्रः– 'भूम्यर्थं भूमिपैः कार्यो नयो विक्रम एव च । देशत्यागो न कार्यस्तु प्राणत्यागेऽपि संस्थिते ॥' ।  नीवाटी.

**बुद्धियुद्धेन परं जेतुमशक्तः शस्त्रयुद्धमुपक्रमेत् ॥**

अथ शत्रोर्बलयुक्तेन यत्कर्तव्यं तदाह– बुद्धीति । प्रथमं तावत् बुद्धियुद्धं कर्तव्यम् । यदि बुद्धियुद्धेन न शक्तः शत्रुं जेतुं ततः शस्त्रयुद्धं कुर्यात् । तथा च गर्गः– 'युद्धं बुद्ध्यात्मकं कुर्यात् प्रथमं शत्रुणा सह । व्यर्थे अस्मिन् समुत्पन्ने ततः शस्त्ररणं भवेत् ॥' ।

नीवाटी.

**न तथेषवः प्रभवन्ति यथा प्रज्ञावतां प्रज्ञाः ॥**

अथ बुद्धियुक्तस्य माहात्म्यं भूयोऽप्याह– नेति । तथा तेन प्रकारेण न प्रभवन्ति समर्था भवन्ति । के ? इषवः बाणाः । यथा बुद्धिमतां बुद्धयः प्रभवन्ति समर्था भवन्ति । तथा च गौतमः– 'न तथाऽत्र शरास्तीक्ष्णाः समर्थाः स्यू. रिपोर्वधे । यथा बुद्धिमतां प्रज्ञा तस्मात्तां संनियोजयेत् ॥' ।  नीवाटी.

**दृष्टेऽप्यर्थे संभवन्त्यपराद्धेषवो* धनुष्मतोऽदृष्टमर्थं साधु साधयति प्रज्ञावान् ॥**

अथ भूयोऽपि बुद्धिमाहात्म्यमाह– दृष्ट इति । दृष्टेऽपि अर्थे लक्ष्ये अपराद्धाः व्यर्थाः इषवः बाणाः यस्य तस्य धनुष्मतः । धानुष्कस्य दृष्टेऽप्यर्थे लक्ष्ये (बाणा व्यर्थाः संभवन्ति) । यः पुमान् प्रज्ञावान् पुरुषः, अदृष्टमपि पदार्थं साधु यथा भवति एवं साधयति । तथा च शुक्रः– 'धानुष्कस्य शरो व्यर्थो दृष्टे लक्ष्येऽपि याति च । अदृष्टान्यपि कार्याणि बुद्धिमान् संप्रसाधयेत् ॥' ।  नीवाटी.

**श्रूयते हि किल दूरस्थोऽपि माधवपिता कामन्दकीयप्रयोगेण माधवाय मालतीं साधयामास ॥**

अथ माधवमालतीसंविधानकमाह– श्रूयत इति । एतत्संविधानकं मालतीमाधवनाटके ज्ञेयम् ।  नीवाटी.

**प्रज्ञा ह्यमोघं शस्त्रं कुशलबुद्धीनाम् ॥**

अथ भूयोऽपि प्रज्ञामाहात्म्यमाह– प्रज्ञेति । प्रज्ञा बुद्धिरेव अमोघं सफलम् आयुधम् । केषाम् ? कुशलबुद्धीनां पण्डितानाम् । ये प्रज्ञाहता भवन्ति भूमिभृतः ते भूयोऽपि शत्रुरूपा न भवन्ति ।  नीवाटी.

**प्रज्ञाहताः कुलिशहता इव न प्रादुर्भवन्ति भूमिभृतः ॥**

तत्रार्थे दृष्टान्तमाह– प्रज्ञाहता इति । प्रज्ञा एव कुलिशम्, तेन हता भूभृतः पर्वता इव राजानोऽपि न प्रभवन्तीति । तथा च गुरुः– 'प्रज्ञा शस्त्रममोघं च विज्ञानाद् बुद्धिरूपिणी । तया हता न जायन्ते पर्वता इव भूमिपाः ॥' ।

नीवाटी.

---

* टीकासंमतोऽयं षष्ठ्यन्तः पाठः । तत्र टीकायाम् 'कस्य ?' इतिप्रश्नस्थाने 'यस्य तस्य' इति यत्तदोः सहप्रयोगो लेखकप्रमादः, 'अपराद्धेषवः' इत्यत्र अविमृष्टविधेयांशत्वं दोषश्च । 'धनुष्मन्तः' इतिशुद्धपाठकल्पना तु श्रेयसी ।

निर्भयत्वमिष्टम्

**परैः स्वस्याभियोगमपश्यतो भयं नदीमपश्यत उपानत्परित्यजनमिव ॥**

अथ अदृष्टेऽपि शत्रौ यो भयं करोति स किं करोति? तस्य स्वरूपमाह— परैरिति । परैः शत्रुभिः सह स्वस्य आत्मनः अभियोगं समागमम् अपश्यन् अनवलोकयन् यो राजा भयं करोति स उपानत्यागं करोति । किं कुर्वन्? अपश्यन् अनवलोकयन् । काम्? नदीम् । हास्यतां यातीत्यर्थः । यथा नद्या अदर्शनेनोपानत्परिमोचनं तद्वत् शत्रावदृष्टेऽपि भयं प्रतिभाति । तथा च शुक्रः— 'यथा चादर्शने नद्या उपानत्परिमोचनम् । तथा शत्रावदृष्टेऽपि भयं हास्याय भूभुजाम् ॥' । नीवाटी.

**अतितीक्ष्णो बलवानपि शरभ इव न चिरं नन्दति ॥**

अथातितीक्ष्णस्य यत् भवति तदाह— अतितीक्ष्ण इति । यो राजा अतितीक्ष्णो भवति शत्रुमुन्नतं दृष्ट्वा अनल्पबलोऽपि कोपात् युध्यति स शरभ इव न चिरं नन्दति न चिरकालं राज्यं करोति शरभवत् । यथा शरभः अष्टापदः मेघमुन्नतं शब्दं कुर्वाणं श्रुत्वाऽसहमानः पर्वताग्रात् हस्तिनं मत्वा गर्जनं कुर्वाणः भूमौ पतन् शतधा व्रजति, तथा राजाऽपि अतितीक्ष्णतया विनश्यति । तथा च बादरायणः— 'अतितीक्ष्णतया शत्रुं बलाढ्यो दुर्बलो व्रजेत् । स द्रुतं नश्यते यद्वच्छरभो मेघनिःस्वनैः ॥' । नीवाटी.

आक्रमणे अपसरणे च समे विनाशे आक्रमणम्, अन्यथा आत्मरक्षार्थमपसरणम्

**प्रहरतोऽपसरतो वा समे विनाशे वरं प्रहारो नैकान्तिको विनाशः ॥**

अथ राज्ञो युध्यमानस्य स्वरूपमाह— प्रहरत इति । सङ्ग्रामे राज्ञः प्रहरतः युध्यमानस्य अपसरतः व्याघुट्य-(?ट)मानस्य वा समे विनाशे यत्र केवलो विनाशः* ... । नीवाटी.

* अस्मात्परो ग्रन्थः प्रभ्रष्टः ।

**कुटिला हि गतिर्दैवस्य मुमूर्षुमपि जीवयति जिजीविषुं मारयति ॥**

अथ दैवस्य माहात्म्यमाह— कुटिलेति । दैवशब्देन प्राक्तनं कर्म उच्यते । तस्य कुटिला वक्रा गतिः । यतः मुमूर्षुमपि मर्तुकाममपि प्राणिनं जीवयति दीर्घायुषं करोति, तथा जिजीविषुमपि जीवितुकाममपि मारयतीति । तथा च कौशिकः— 'मर्तुकामोऽपि चेन्मर्त्यः कर्मणा क्रियते हि सः । दीर्घायुर्जीवितेच्छाढ्यो म्रियते तद्वक्तो-(?)ऽपि सः ॥' । नीवाटी.

**दीपशिखायां पतङ्गवदैकान्तिके विनाशेऽविचारमपसरेत् ॥**

अथ भूभुजा बलवति शत्रौ समायाते यत् कर्तव्यं तदाह— दीपेति । अपसरेत् व्याघुटेत्, न युद्धं कुर्यात् अविचारं विचाररहितम् । कस्मिन्? विनाशे सति । किंविशिष्टे विनाशे? ऐकान्तिके सुनिश्चिते । कथम्? पतङ्गवत् । कस्याम्? दीपशिखायाम् । यथा दीपशिखायां पतितः पतङ्गो निश्चितं विनाशमवाप्नोति तथा बलवति शत्रौ दुर्बलोऽपि । तस्मादपसरणं कार्यम् । तथा च गौतमः— 'बलवन्तं रिपुं प्राप्य यो(?को) न नश्यति दुर्बलः । स नूनं नाशमभ्येति पतङ्गो दीपमाश्रितः ॥' । नीवाटी.

**जीवितसंभवे दैवो देयात् कालबलम् ॥**

अथ दैवस्य लक्षणमाह— जीवितेति । यदा पुरुषे जीवितसंभवो भवति दीर्घायुर्भवति तदा दैवं प्राक्तनं कर्म तस्य कालबलं तस्मिन् काले तत् ददाति येन दुर्बलोऽपि बलवन्तं व्यापादयतीति । तथा च शुक्रः— 'पुरुषस्य यदाऽऽयुः स्याद्दुर्बलोऽपि तदा परम् । हिनस्ति चेद्बलोपेतं निजकर्मप्रभावतः ॥' । नीवाटी.

**आत्मशक्तिमविज्ञायोत्साहः शिरसा पर्वतभेदनमिव ॥**

अथ आत्मशक्तिमजानतः परैः सह युध्यतो यद् भवति तदाह— आत्मशक्तिमिति । आत्मशक्तिम् अविज्ञाय अज्ञात्वा अजानन् यः परेण युद्धं करोति तस्यैतत्

युद्धं कीदृशम् ? शिरसा मस्तकेन पर्वतभेदनमिव पर्वतस्फोटनमिव । तथा च कौशिकः– 'आत्मशक्तिमजानानो युद्धं कुर्याद् बलीयसा । सार्धं स च करोत्येव शिरसा गिरिभेदनम् ॥' । नीवाटी.

सामसाध्ये न युद्धम्

**सामसाध्यं युद्धसाध्यं न कुर्यात् ॥**

अथ राज्ञा यथा कार्यं तदाह– सामेति । यत् कार्यं प्रयोजनं साम्ना सिध्यति तत् युद्धेन न सिध्यति । तथा च वल्लभदेवः– 'साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधैर्विनियोज्यः । पित्तं यदि शर्करया शाम्यति तत्किं पटोलेन ॥' । नीवाटी.

**गुडादभिप्रेतसिद्धौ को नाम विषं भुञ्जीत ॥**

अथ भूयोऽपि साममाहात्म्यमाह– गुडादिति । गुडेन भक्षितेन यदि अभिप्रेतसिद्धिः वाञ्छितसिद्धिर्भवति शरीरस्य, तत् को नाम अहो, विषमुपभुञ्जीत विषं भक्षयेत् ? तथा च हारीतः– 'गुडास्वादनतः शक्तिर्यदि गात्रस्य जायते । आरोग्यलक्षणा नाम तद्भक्षयति को विषम् ॥' । नीवाटी.

सामापवादो दण्डेनैव साध्ये शत्रौ

**दण्डसाध्ये रिपावुपायान्तरमग्नावाहुतिप्रदानमिव ॥**

अथ दण्डसाध्यस्य रिपोर्यः सामादीनुपायान् करोति तस्य यद्भवति तदाह– दण्डेति । यो राजा दण्डसाध्ये युद्धसाध्ये शत्रौ उपायान्तरं करोति तत्तस्य उपायान्तरं किंविशिष्टम् ? अग्नौ घृताहुतिप्रदानमिव । यथा वैश्वानरो घृताहुत्या ज्वालां मुञ्चति तथा शत्रुरपि क्रोधमुद्गिरति । तथा च माघः– 'सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः । प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥' (शि. व. २।५५.) । नीवाटी.

**यन्त्रशस्त्राग्निक्षारप्रतीकारे व्याधौ किंनामान्यौषधं कुर्यात् ॥**

अथ औषधव्याजेन यथा शत्रोरुपायान्तरं न क्रियते तदाह– यन्त्रेति । यदा असाध्यो व्याधिर्भवति तत्र वैद्यस्य * ······ शस्त्रविशेषम् । शस्त्रम् आयुधम् । ······ । नीवाटी.

**उत्पाटितदंष्ट्रो भुजङ्गो रज्जुरिव ॥**

··· सामर्थ्यं सर्पद्वारेणाऽऽह– उत्पाटितेति । यथा उत्पाटितदंष्ट्रः भुजङ्गः सर्पः रज्जुरिव भवति तथा शत्रुरपि हृतार्थो गतपरिवारो भवति । तथा च नारदः– 'दंष्ट्राविरहितः सर्पो भग्नशृङ्गोऽथवा वृषः । तथा वैरी परिज्ञेयो यस्य नार्थो न सेवकाः ॥' । नीवाटी.

**प्रतिहतप्रतापोऽङ्गारः संपतितोऽपि किं कुर्यात् ॥**

अथ भूयोऽप्यङ्गारव्याजेन गतश्रीकस्य शत्रोः स्वरूपमाह– प्रतिहतेति । यथाऽङ्गारः प्रतिहतप्रतापो भस्मविशेषो भवति तदा शरीरोपरि पतितः किं करोति ? एवं शत्रुरपि गतश्रीकः अङ्गारसदृशो भवति । नीवाटी.

## अनिर्दिष्टकर्तृकवचनानि

दैवपौरुषयोर्विवेकः

**'कर्मैवेहानसाधूनामालभ्यानुपसेविता ।**
**कर्म कृत्वा हि पुरुषो भुङ्क्ते चैव न चाप्ति न ॥**
**प्रतिहन्ति मुनिर्येन दैवमापतितं क्वचित् ।**
**शीतोष्णे च तथा वर्षमुत्थापयति हन्ति च ॥**
**दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते ।**
**दैवेन चेतनं कर्म विशिष्टेनोपहन्यते ॥**

* अत्र उत्तरत्र च शून्यपङ्क्तिस्थाने ग्रन्थः प्रभ्रष्टः ।

(१) मेधा. ७।२०५.

# यात्रा- युद्धधर्म्याधर्म्यत्वविचारः

## महाभारतम्

ज्ञातिमित्रक्षयरूपे युद्धे जयः पराजय एव, शान्तिरुत्तमा

**युधिष्ठिर उवाच–**

[1]समागताः पाण्डवाः सृञ्जयाश्च
जनार्दनो युयुधानो विराटः ।
यत्ते वाक्यं धृतराष्ट्रानुशिष्टं
गावल्गणे ब्रूहि तत्सूतपुत्र ॥

**संजय उवाच–**

अजातशत्रुं च वृकोदरं च
धनंजयं माद्रवतीसुतौ च ।
आमन्त्रये वासुदेवं च शौरिं
युयुधानं चेकितानं विराटम् ॥

[2]पाञ्चालानामधिपं चैव वृद्धं
धृष्टद्युम्नं पार्षतं याज्ञसेनिम् ।
सर्वे वाचं शृणुतेमां मदीयां
वक्ष्यामि यां भूतिमिच्छन् कुरू-
णाम् ॥

[3]शमं राजा धृतराष्ट्रोऽभिनन्द-
न्नयोजयत्त्वरमाणो रथं मे ।
सभ्रातृपुत्रस्वजनस्य राज्ञ-
स्तद्रोचतां पाण्डवानां शमोऽस्तु ॥

रथम् अयोजयत् इह आगन्तुम् । राज्ञो वचनं पाण्डवानां रोचताम्, ततश्च शमोऽस्तु । नीटी.

[1]सर्वैर्धर्मैः समुपेताः स्थ पार्थाः
प्रस्थानेन मार्दवेनाऽऽर्जवेन ।
जाताः कुले अनृशंसा वदान्या
ह्रीनिषेधाः कर्मणां निश्चयज्ञाः ॥

संस्थानेन आकारेण । मार्दवेन कृपया । आर्जवेन अकौटिल्येन । अनृशंसाः अनुग्राः । ह्रीनिषेवाः लज्जा-परायणाः । नीटी.

[2]न युज्यते कर्म युष्मासु हीनं
सत्त्वं हि वस्तादृशं भीमसेनाः ।
उद्भासते ह्यञ्जनबिन्दुवत्त-
च्छुक्ले वस्त्रे यद्भवेत्किल्बिषं वः ॥

हीनं हिंस्रम् । सत्त्वं बुद्धिसत्त्वं साधुत्वं वा । भीमसेनाः भीषणसैन्याः । नीटी.

[3]सर्वक्षयो दृश्यते यत्र कृत्स्नः
पापोदयो निरयोऽभावसंस्थः ।
कस्तत्कुर्याज्जातु कर्म प्रजानन्
पराजयो यत्र समो जयश्च ॥

सर्वक्षयः अभावसंस्थः शून्ये एव परिसमाप्तः क्षयः । तत्र तत् । प्रथमार्थे त्रल् । जयोऽपि बन्धुनाशात् पराजय एव । नीटी.

---

(१) भा. ५।२५।१–२ ; भामु. ५।२५।१–२.

(२) भा. ५।२५।३ ; भामु. ५।२५।३ पाञ्चा (पञ्चा).

(३) भा. ५।२५।४ ; भामु. ५।२५।४.

(१) भा. ५।२५।५ ; भामु. ५।२५।५ ताः स्थ (तास्तु) प्रस्था (संस्था) अनृ (ह्यनृ) निषेधाः (निषेवाः).

(२) भा. ५।२५।६ ; भामु. ५।२५।६ च्छुक्ले (च्छुभ्रे).

(३) भा. ५।२५।७ ; भामु. ५।२५।७ स्तत्कुर्या (स्तत्र कुर्या).

[1]ते वै धन्या यैः कृतं ज्ञातिकार्यं
ये वः पुत्राः सुहृदो बान्धवाश्च ।
उपक्रुष्टं जीवितं संत्यजेयु-
स्ततः कुरूणां नियतो वै भवः स्यात् ॥

ज्ञातीनां दुर्योधनादीनां कार्यं घोषयात्रायां गन्धर्वेभ्यो मोचनादिकम् । उपक्रुष्टं निन्दितम् । नीटी.

[2]ते चेत्कुरूननुशास्य स्थ पार्था
निनीय सर्वान् द्विषतो निगृह्य ।
समं वस्तज्जीवितं मृत्युना स्या-
द्यज्जीवध्वं ज्ञातिवधे न साधु ॥

निर्णीय निश्चयं कृत्वा । निगृह्य हत्वेत्यर्थः । नीटी.

[3]को ह्येव युष्मान् सह केशवेन
सचेकितानान् पार्षतबाहुगुप्तान् ।
ससात्यकीन् विषहेत प्रजेतुं
लब्ध्वाऽपि देवान् सचिवान् सहेन्द्रान् ॥

ननु युद्धे जयपराजयावनित्यावित्याह– को हीति द्वाभ्याम् । नीटी.

[4]को वा कुरून् द्रोणभीष्माभिगुप्ता-
नश्वत्थाम्ना शल्यकृपादिभिश्च ।
रणे प्रसोढुं विषहेत राजन्
राधेयगुप्तान् सह भूमिपालैः ॥

(१) भा. ५।२५।८ ; भासु. ५।२५।८ ये वः (ते वै) स्ततः (यंतः).

(२) भा. ५।२५।९ ; भासु. ५।२५।९ शास्य स्थ (शिष्याथ) निनीय (निर्णीय).

(३) भा. ५।२५।१० ; भासु. ५।२५।१०.

(४) भा. ५।२५।११ ; भासु. ५।२५।११ प्रसोढुं (विजेतुं).

[1]महद्बलं धार्तराष्ट्रस्य राज्ञः
को वै शक्तो हन्तुमक्षीयमाणः ।
सोऽहं जये चैव पराजये च
निःश्रेयसं नाधिगच्छामि किंचित् ॥

निःश्रेयसं निश्चयम् । नीटी.

[2]कथं हि नीचा इव दौष्कुलेया
निर्धर्मार्थं कर्म कुर्युश्च पार्थाः ।
सोऽहं प्रसाद्य प्रणतो वासुदेवं
पाञ्चालानामधिपं चैव वृद्धम् ॥

निर्धर्मार्थं धर्मार्थयोर्विरुद्धं कर्म कथं कुर्युः ? प्रणतः, अस्मीति शेषः । नीटी.

[3]कृताञ्जलिः शरणं वः प्रपद्ये
कथं स्वस्ति स्यात् कुरुसृञ्जयानाम् ।
न ह्येव ते वचनं वासुदेवो
धनंजयो वा जातु किंचिन्न कुर्यात् ॥

'एवमेवं वचनम्' इति द्विरुक्त्या विकल्पवाक्यं न कुर्यात् । नीटी.

[4]प्राणानादौ याच्यमानः कुतोऽन्य-
देतद्विद्वन् साधनार्थं ब्रवीमि ।
एतद्राज्ञो भीष्मपुरोगमस्य
मतं यद्वः शान्तिरिहोत्तमा स्यात् ॥

एतत् 'भवतां जयोऽपि पराजय एव' इति दीनवचनम्, 'को वा कुरून् जयेत' इति तीक्ष्णवचनम्, 'कथं स्वस्ति स्यात्' इत्युभयनाशवचनं च साधनार्थं संधिकार्यस्य सिद्धयर्थं ब्रवीमि, न तु युष्मान् भीषयामीत्यर्थः । नीटी.

(१) भा. ५।२५।१२ ; भासु. ५।२५।१२.

(२) भा. ५।२५।१३ ; भासु. ५।२५।१३ पाञ्चा (पञ्चा).

(३) भा. ५।२५।१४ ; भासु. ५।२५।१४ ह्येव ते (ह्येवमेवं).

(४) भा. ५।२५।१५ ; भासु. ५।२५।१५ नादौ याच्य (न्दद्याद्याच).

अयुद्धं युद्धात् गरीयः

युधिष्ठिर उवाच–

[1]कां नु वाचं संजय मे शृणोषि
युद्धैषिणीं येन युद्धाद्बिभेषि ।
अयुद्धं वै तात युद्धाद्गरीयः
कस्तल्लब्ध्वा जातु युध्येत सूत ॥

अकुर्वतश्चेत् पुरुषस्य संजय
सिध्येत् संकल्पो मनसा यं यमिच्छेत् ।
न कर्म कुर्याद्विदितं ममैत-
दन्यत्र युद्धाद्बहु यल्लघीयः ॥

अकुर्वतश्चेत्संकल्पः सिध्येत् तर्हि कर्म न कुर्यात् । असिद्धावपि युद्धात् अन्यत्र अन्यत् । अत्राऽपि प्रथमार्थे त्रल् । लघीयोऽपि कर्म कुर्यात्, न तु युद्धम् । नीटी.

[2]कुतो युद्धं जातु नरः प्रजानन्
को दैवशप्तोऽभिवृणीत युद्धम् ।
सुखैषिणः कर्म कुर्वन्ति पार्था
धर्मादहीनं यच्च लोकस्य पथ्यम् ॥

अहीनम् अनपगतम् । नीटी.

[3]कर्मोदयं सुखमाशंसमानः
कृच्छ्रोपायं तत्त्वतः कर्म दुःखम् ।
सुखप्रेप्सुर्विजिघांसुश्च दुःखं
य इन्द्रियाणां प्रीतिवशानुगामी ।
कामाभिध्या स्वशरीरं दुनोति
यया प्रयुक्तोऽनुकरोति दुःखम् ॥

धर्मोदयं सुखं निदाघे गङ्गावगाहादिजम्, न त्वधर्मोदयं हिंसादिजम् । तत्त्वतः वस्तुतस्तु सर्वं कर्म दुःखमेव । यतः कृच्छ्रोपायं क्लेशसाध्यम् । तर्हि कुतः कर्म कुर्वन्तीत्याशङ्क्याऽऽह– सुखमिति । कामाभिध्या विषयध्यानम् । ययेति । सर्वात्मना विषयविस्मरणे महत्सुखमस्तीति भावः । नीटी.

[1]यथेध्यमानस्य समिद्धतेजसो
भूयो बलं वर्धते पावकस्य ।
कामार्थलाभेन तथैव भूयो
न तृप्यते सर्पिषेवाग्निरिद्धः ।
संपश्येमं भोगचयं महान्तं
सहास्माभिर्धृतराष्ट्रस्य राज्ञः ॥

भोगात् निष्कामता न संभवतीत्याह– यथेति । उक्तमर्थं प्रकृते योजयति– संपश्येति । अस्माभिरित्यत्र धार्तराष्ट्रान् अन्तर्भाव्याऽऽह । पञ्चाधिकेन पुत्रशतेन सह धृतराष्ट्रस्य भोगं महान्तं पश्य । अथापि कृत्स्नं स्वस्यैव भवत्विति बुद्ध्या अस्मान् राज्यात् दूरीकृत्य ततो भोगात् तृप्तिं न लभते इति भावः । नीटी.

[2]नाश्रेयसामीश्वरो विग्रहाणां
नाश्रेयसां गीतशब्दं शृणोति ।
नाश्रेयसः सेवते माल्यगन्धान्
न चाप्यश्रेयांस्यनुलेपनानि ॥

पितृव्यनिन्दादोषाद्भीतः पुनराह– नाश्रेयानिति । यः पुण्यवत्तरः स विग्रहाणामीश्वरो भवति परैः सह विरोधं कृत्वा स्वोत्कर्षं करोति । अन्यस्तु तेनैव नश्यति । अतः स पुण्यवत्तर एव । अस्मद्दोषात्तु वयं वने दुःखमनुभवामः, न तु परापराधेनेति भावः । नीटी.

---

(१) भा. ५।२६।१–२ ; भासु. ५।२६।१–२.

(२) भा. ५।२६।३ ; भासु. ५।२६।३ नरः प्रजानन् ( नरोऽवगच्छेत् ) दैवशप्तोऽभि ( देवशप्तो हि ).

(३) भा. ५।२६।४ ; भासु. ५।२६।४–५ कर्मो ( धर्मो ) मानः ( मानाः ) सुखप्रे ( सुखं प्रे ) वशा (रसा) प्रयुक्तोऽनु ( प्रमुक्तो न ).

(१) भा. ५ २६।५ ; भासु. ५।२६।५–६.

(२) भा. ५।२६।६ ; भासु. ५।२६।७ श्रेयसामी ( श्रेयानी ) नाश्रेयसां ( नाश्रेयान् वै ) नाश्रेयसः ( नाश्रेयान् वै ) श्रेयांस्यनु ( श्रेयाननु ).

[1]नाश्रेयसः प्रावरानध्यवस्ते
कथं त्वस्मान् संप्रणुदेत् कुरुभ्यः।
अत्रैव च स्यादवधूय एष
कामः शरीरे हृदयं दुनोति ॥

प्रावारान् दिव्यवासांसि संविवस्ते परिधत्ते। अन्यथा अश्रेयांश्चेद्राजा तर्हि अस्मान् कुरुभ्यः कथं संप्रणुदेत् दूरीकुर्यात्? शत्रूणां राज्याद्भ्रंशनं हि पुण्यवतामेव कर्म, नाश्रेयसामिति भावः। अत्रेति। यद्यप्येवं तथाऽपि अन्तर्दाहकरोऽयं कामः अबुधस्य दुर्योधनादेरेव उचितः, न बुधस्य अस्मदादेरित्यर्थः। शरीरे शरीरमध्ये स्थितं हृदयं दुनोति खेदयति। नीटी.

[2]स्वयं राजा विषमस्थः परेषु
सामस्थ्यमन्विच्छति तन्न साधु।
यथाऽऽत्मनः पश्यति वृत्तमेव
तथा परेषामपि सोऽभ्युपैति ॥

अबुधत्वमेवाऽऽह– स्वयमिति। विषमस्थः संकटस्थः सन्। परेषु कर्णादिषु। आत्मनः वृत्तम् अशक्तत्वम्। तथा परेषां कर्णादीनामपि सः दुर्योधनः अभ्युपैति। नीटी.

[3]आसन्नमग्निं तु निदाघकाले
गम्भीरकक्षे गहने विसृज्य।
यथा वृद्धं वायुवशेन शोचेत्
क्षेमं मुमुक्षुः शिशिरव्यपाये ॥

गम्भीरकक्षे बहुतृणे गहने वने। क्षेमं शोचेत् मम सुखं नास्तीति शोकं कुर्यात्। मुमुक्षुः तस्माद्दाहादात्मानं मोचयितुमिच्छुः। शिशिरव्यपाये वसन्ते। तत्रापि निदाघकाले दाहकाले मध्याह्ने। नीटी.

[1]प्राप्तैश्वर्यो धृतराष्ट्रोऽद्य राजा
लालप्यते संजय कस्य हेतोः।
प्रगृह्य दुर्बुद्धिमनार्जवे रतं
पुत्रं मन्दं मूढममन्त्रिणं तु ॥

लालप्यते दीनवत् भाषते। मन्दम् अभाग्यम्। नीटी.

[2]अनाप्तः सन्नाप्ततमस्य वाचं
सुयोधनो विदुरस्यावमन्य।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
संबुध्यमानो विशतेऽधर्ममेव ॥

विदुरस्य वाचः अवमत्य सुतस्य प्रियैषी अधर्ममेव संविशते आश्रयते। नीटी.

[3]मेधाविनं ह्यर्थकामं कुरूणां
बहुश्रुतं वाग्मिनं शीलवन्तम्।
सूत राजा धृतराष्ट्रः कुरुभ्यो
न सोऽस्मरद्विदुरं पुत्रकाम्यात् ॥

कुरुभ्यः कुरूणां हितार्थं न सस्मार नाऽऽदृतवान्। पुत्रकाम्यात् पुत्रलोभात्। नीटी.

[4]मानघ्नस्य आत्मकामस्य चेर्ष्योः
संरम्भिणश्चार्थधर्मातिगस्य।
दुर्भाषिणो मन्युवशानुगस्य
कामात्मनो दुर्हृदो भावनस्य ॥

---

(१) भा. ५।२६।७ ; भामु. ५।२६।८ प्रथमचरणे ( नाश्रेयान् वै प्रावारान् संविवस्ते ) च स्यादवधूय एष कामः ( स्यादबुधस्यैव कामः प्रायः ).

(२) भा. ५।२६।८ ; भामु. ५।२६।९ सामस्थ्य ( सामर्थ्य ).

(३) भा. ५।२६।९ ; भामु. ५।२६।१० वृद्धं ( विवृद्धं ).

(१) भा. ५।२६।१० ; भामु. ५।२६।११.

(२) भा. ५।२६।११ ; भामु. ५।२६।१२ प्रथमचरणे ( अनाप्तवच्चाऽऽप्ततमस्य वाचः ) मन्य ( मत्य ).

(३) भा. ५।२६।१२ ; भामु. ५।२६।१३ सूत ( स तं ) सोऽस्मरद् ( सस्मार ).

(४) भा. ५।२६।१३ ; भामु. ५।२६।१४ घ्नस्य आत्म ( घ्नस्यासौ मान ) चेर्ष्योः ( चेर्षोः ) दुर्हृदो भावनस्य ( दौर्हृदैर्भावितस्य ).

[1]अनेयस्याश्रेयसो दीर्घमन्यो-
मित्रद्रुहः संजय पापबुद्धेः ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
प्रपश्यमानः प्रजहाद्धर्मकामौ ॥

असौ राजा सुतस्य प्रियैषी धर्मकामौ प्राजहात् त्यक्तवानिति द्वयोः संबन्धः । ईर्षोः परोत्कर्षासहिष्णोः । संरम्भिणः क्रोधिनः । मन्युवशानुगस्य दैन्यभाजां कर्णादीनामनुगस्य । दौर्हृदैः पापैः भावितस्य पूजितस्य । अनेयस्य अशिक्षणीयस्य । अश्रेयसः अभाग्यस्य । प्रपश्यमानः पश्यन्नपि । नीटी.

[2]तदैव मे संजय दीव्यतोऽभू-
न्नो चेत् कुरूनागतः स्यादभावः ।
काव्यां वाचं विदुरो भाषमाणो
न विन्दते धृतराष्ट्रात्प्रशंसाम् ॥

प्रशंसां विदुरेण सम्यगुक्तमिति स्तुतिं धार्तराष्ट्राद्विदुरो न लेभे । नीटी.

[3]क्षत्तुर्यदा अन्ववर्तन्त बुद्धिं
कृच्छ्रं कुरून्न तदाऽभ्याजगाम ।
यावत्प्रज्ञामन्ववर्तन्त तस्य
तावत्तेषां राष्ट्रवृद्धिर्बभूव ॥

[4]तदर्थलुब्धस्य निबोध मेऽद्य
ये मन्त्रिणो धार्तराष्ट्रस्य सूत ।
दुःशासनः शकुनिः सूतपुत्रो
गावल्गणे पश्य संमोहमस्य ॥

(१) भा. ५।२६।१४ ; भामु. ५।२६।१५ प्रजहा (प्राजहा).

(२) भा. ५।२६।१५ ; भामु. ५।२६।१६ न्नो चेत् कुरूना (न्मतिः कुरूणामा) धृत (यद्धार्त).

(३) भा. ५।२६।१६ ; भामु. ५।२६।१७ अन्व (नान्व) कुरून्न (कुरून् सूत).

(४) भा. ५।२६।१७–१८ ; भामु. ५।२६।१८–१९.

सोऽहं न पश्यामि परीक्षमाणः
कथं स्वस्ति स्यात् कुरुसृञ्जयानाम् ।
आत्तैश्वर्यो धृतराष्ट्रः परेभ्यः
प्रव्राजिते विदुरे दीर्घदृष्टौ ॥

[1]आशंसते वै धृतराष्ट्रः सपुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलं नोपलभ्यो
अत्यासन्नं मद्गतं मन्यतेऽर्थम् ॥

तस्मिन् लुब्धे शमः न उपलभ्यः, यः मद्गते मम वनं प्रति गमने सति सर्वं स्वकमेवार्थं मन्यते इति योज्यम् । नीटी.

[2]यत्तत्कर्णो मन्यते पारणीयं
युद्धे गृहीतायुधमर्जुनेन ।
आसंश्च युद्धानि पुरा महान्ति
कथं कर्णो नाभवद्द्वीप एषाम् ॥

पारणीयं जेतुं शक्यम् । युद्धानि गोग्रहादौ आसन् । द्वीपः द्वीपवत् युद्धप्रवाहेणोह्यमानस्याऽऽश्रयः । नीटी.

[3]कर्णश्च जानाति सुयोधनश्च
द्रोणश्च जानाति पितामहश्च ।
अन्ये च ये कुरवस्तत्र सन्ति
यथाऽर्जुनान्नास्त्यपरो धनुर्धरः ॥

यथेति गन्धर्वतो बन्धनप्राप्तिं सूचयति । नीटी.

[4]जानन्त्येते कुरवः सर्व एव
ये चाप्यन्ये भूमिपालाः समेताः ।
दुर्योधनं चापराधे चरन्त-
मरिंदमे फल्गुनेऽविद्यमाने ॥

(१) भा. ५।२६।१९ ; भामु. ५।२६।२० अत्यासन्नं मद्गतं (सर्वं स्वकं मद्गते).

(२) भा. ५।२६।२० ; भामु. ५।२६।२१ मर्जुनेन (मर्जुनं वै).

(३) भा. ५।२६।२१ ; भामु. ५।२६।२२.

(४) भा. ५।२६।२२ ; भामु. ५।२६।२३ न्त्येते (न्त्येतत्) उत्तरार्धे (दुर्योधने राज्यमिहाभवद्यथा अरिंदमे फाल्गुनेऽविद्यमाने ॥).

अविद्यमाने इति छेदः । नीटी.

[1]तेनार्थबद्धं मन्यते धार्तराष्ट्रः
शक्यं हर्तुं पाण्डवानां ममत्वम् ।
किरीटिना तालमात्रायुधेन
तद्वेदिना संयुगं तत्र गत्वा ॥

अनुबन्धम्– बध्नातीति बन्धः राज्यादिः, तमनुसृत्य वर्तमानं पाण्डवानां ममत्वं धार्तराष्ट्रः हर्तुं शक्यं मन्यते । किं कृत्वा ? तेन किरीटिना सह तत्र राज्ये निमित्ते सति संयुगं सङ्ग्रामं गत्वा प्राप्य । तालः हस्तचतुष्टयम् । तद्वेदिना धनुर्विद्यावेदिना । नीटी.

[2]गाण्डीवविस्फारितशब्दमाजा-
वशृण्वाना धार्तराष्ट्रा ध्रियन्ते ।
क्रुद्धस्य चेद्भीमसेनस्य वेगात्
सुयोधनो मन्यते सिद्धमर्थम् ॥

ध्रियन्ते जीवन्ति । नीटी.

[3]इन्द्रोऽप्येतन्नोत्सहेत्तात हर्तु-
मैश्वर्यं नो जीवति भीमसेने ।
धनंजये नकुले चैव सूत
तथा वीरे सहदेवे मदीये ॥

[4]स चेदेतां प्रतिपद्येत बुद्धिं
वृद्धो राजा सह पुत्रेण सूत ।
एवं रणे पाण्डवकोपदग्धा
न नश्येयुः संजय धार्तराष्ट्राः ॥

(१) भा. ५।२६।२३ ; भासु. ५।२६।२४ र्थबद्धं (नुबन्धं).

(२) भा. ५।२६।२४ ; भासु. ५।२६।२५ तृतीयचरणे (क्रुद्धं न चेदीक्षते भीमसेनं).

(३) भा. ५।२६।२५ ; भासु. ५।२६।२६ मदीये (सहिष्णौ).

(४) भा. ५।२६।२६–२८ ; भासु. ५।२६।२७–२९.

एतां बुद्धिम् 'राज्यस्य अप्रदाने नाशोऽस्ति' इत्येवंरूपाम् । नीटी.

जानासि त्वं क्लेशमसाधु वृत्तं
त्वां पूजयन् संजयाहं क्षमेयम् ।
यच्चास्माकं कौरवैर्भूतपूर्वं
या नो वृत्तिर्धार्तराष्ट्रे तदासीत् ॥

भूतपूर्वं भीमबन्धनजतुगृहदाहादि । नीटी.

अद्यापि तत्तत्र तथैव वर्ततां
शान्तिं गमिष्यामि यथा त्वमात्थ ।
इन्द्रप्रस्थे भवतु ममैव राज्यं
सुयोधनो यच्छतु भारताग्र्यः ॥

'इन्द्रप्रस्थे' इति उपराज्यं मम भवतु, 'भारताग्र्यः' इति हस्तिनापुरं सुयोधनस्य भवतु इति सूचितम् । नीटी.

युद्धम् अधर्म एव, क्षमा श्रेयसी

संजय उवाच–

[1]धर्मे नित्या पाण्डव ते विचेष्टा
लोके श्रुता दृश्यते चापि पार्थ ।
महास्रावं जीवितं चाप्यनित्यं
संपश्य त्वं पाण्डव मा विनीनशः ॥

महान् श्रावः श्रवणं यस्य । महाकीर्तिरित्यर्थः । पाठान्तरे तु महान् स्रावः गतिः यस्य । अतिचञ्चलमित्यर्थः । मा व्यनीनशः क्रोधेन धार्तराष्ट्रान् मा नाशय । नीटी.

[2]न चेद्भागं कुरवोऽन्यत्र युद्धात्
प्रयच्छन्ते तुभ्यमजातशत्रो ।
भैक्षचर्यामन्धकवृष्णिराज्ये
श्रेयो मन्ये न तु युद्धेन राज्यम् ॥

(१) भा. ५।२७।१ ; भासु. ५।२७।१ धर्मे नित्या (धर्मनित्या) स्रावं (श्रावं) विनी (व्यनी).

(२) भा. ५।२७।२ ; भासु. ५।२७।२ यच्छन्ते (यच्छेरन्).

[1]अल्पकालं जीवितं यन्मनुष्ये
महास्रावं नित्यदुःखं चलं च ।
भूयश्च तद्वयसो नानुरूपं
तस्मात् पापं पाण्डव मा प्रसार्षीः ॥

[2]कामा मनुष्यं प्रसजन्त एव
धर्मस्य ये विघ्नमूलं नरेन्द्र ।
पूर्वं नरस्तान् धृतिमान् विनिघ्न-
ल्लँोके प्रशंसां लभतेऽनवद्याम् ॥

प्रसजन्ते स्पृशन्ति । नीटी.

[3]निबन्धनी ह्यर्थतृष्णेह पार्थ
तामेषतो बाध्यते धर्म एव ।
धर्मं तु यः प्रवृणीते स बुद्धः
कामे गृद्धो हीयतेऽर्थानुरोधात् ॥

गृध्नः स्पृहावान् । नीटी.

[4]धर्मं कृत्वा कर्मणां तात मुख्यं
महाप्रतापः सवितेव भाति ।
हानेन धर्मस्य महीमपीमां
लब्ध्वा नरः सीदति पापबुद्धिः ॥

कर्मणाम् अर्थकामाद्यर्थानां मध्ये । नीटी.

[5]वेदोऽधीतश्चरितं ब्रह्मचर्यं
यज्ञैरिष्टं ब्राह्मणेभ्यश्च दत्तम् ।
परं स्थानं मन्यमानेन भूय
आत्मा दत्तो वर्षपूगं सुखेभ्यः ॥

(१) भा. ५।२७।३ ; भामु. ५।२७।३ तद्वयसो (तद्यशसो) प्रसार्षीः (कृथास्त्वम्).

(२) भा. ५।२७।४ ; भामु. ५।२७।४ एव (एते) धृति (मति) विनि (प्रणि).

(३) भा. ५।२७।५ ; भामु. ५।२७।५ मेषतो (मिच्छतां) गृद्धो (गृध्नो).

(४) भा. ५।२७।६ ; भामु. ५।२७।६ हानेन धर्मस्य (हीनो हि धर्मेण).

(५) भा. ५।२७।७–८ ; भामु. ५।२७।७–८.

परं स्थानं परलोकं मन्यमानेन मानयता वर्षपूगं वर्षगणं तत्रत्यसुखेभ्यः तदर्थं त्वया आत्माऽपि दत्तः । नीटी.

सुखप्रिये सेवमानोऽतिवेलं
योगाभ्यासे यो न करोति कर्म ।
वित्तक्षये हीनसुखोऽतिवेलं
दुःखं शेते कामवेगप्रणुन्नः ॥

सुखप्रिये भोगान् पुत्रादींश्च सेवमानः योगाभ्यासे चित्तवृत्तिनिरोधमभ्यसितुं कर्म आसनप्राणायामादिकं न करोति । नीटी.

[1]एवं पुनरर्थचर्याप्रसक्तो
हित्वा धर्मं यः प्रकरोत्यधर्मम् ।
अश्रद्दधत् परलोकाय मूढो
हित्वा देहं तप्यते प्रेत्य मन्दः ॥

ब्रह्मचर्येति । ब्रह्मणि चर्या आत्मानुसन्धानम्, तत्र अप्रसक्तः प्रकर्षेण अनासक्तः योगाद्व्यावृत्तः धर्मं च यज्ञादिरूपं हित्वा यः अधर्ममेव प्रकरोति संचिनोति । नीटी.

[2]न कर्मणां विप्रणाशोऽस्त्यमुत्र
पुण्यानां वाऽप्यथ वा पापकानाम् ।
पूर्वं कर्तुर्गच्छति पुण्यपापं
पश्चात्त्वेतदनुयात्येव कर्ता ॥

ननु 'धर्मेण पापमपनुदति' इति श्रुतेः कालान्तरे अधर्मस्य नाशार्थं धर्ममप्यनुष्ठास्यामः, किं मुक्त्या ? इत्याशङ्क्याऽऽह– न कर्मणामिति । कृतं कर्म भोगं विना आत्मज्ञानं विना वा न नश्यतीत्यर्थः, 'नाभुक्तं क्षीयते कर्म' 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिवाक्येभ्यः । उदाहृतश्रुतिस्तु प्रायश्चित्तादिना पापनाशो भवति, सोऽपि अत्रैव व्यवहार्यत्वमापा-

(१) भा. ५।२७।९ ; भामु. ५।२७।९ रर्थ (ब्रह्म).

(२) भा. ५।२७।१० ; भामु. ५।२७।१० त्वेतदनु (त्वेनमनु).

दयति, न तु परलोकेऽपि पापास्पर्शाय प्रभवतीत्येवंपरा* । नीटी.

'न्यायोपेतं ब्राह्मणेभ्यो यदन्नं
श्रद्धापूतं गन्धरसोपपन्नम् ।
अन्वाहार्येषूत्तमदक्षिणेषु
तथारूपं कर्म विख्यायते ते ॥

अन्वाहार्येष्वित्यनेन श्रौतमिष्टयादिकं लक्ष्यते । तत्र हि अन्वाहार्यो दक्षिणात्वेन दीयते । नीटी.

'इह क्षेत्रे क्रियते पार्थ कार्यं
न वै किंचिद्विद्यते प्रेत्य कार्यम् ।
कृतं त्वया पारलोक्यं च कार्यं
पुण्यं महत्सद्भिरनुप्रशस्तम् ॥

कार्यं धर्मः । प्रेत्य मृत्वा । नीटी.

'जहाति मृत्युं च जरां भयं च
न क्षुत्पिपासे मनसश्चाप्रियाणि ।
न कर्तव्यं विद्यते तत्र किंचि-
दन्यत्र वै इन्द्रियप्रीणनार्थात् ॥

परलोके कर्म नास्तीत्याह– जहातीति । नीटी.

* अत्रेदं चिन्तनीयम्– 'प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायते ॥' (यास्मृ. ३।२२६) इत्यादिस्मृतिप्रामाण्यात् मिताक्षरादिमहानिबन्धप्रामाण्याच्च प्रायश्चित्तानामपि सर्वथा अज्ञानकृतपापनाशकत्वमस्त्येव । ज्ञानकृतपापविषये केवलं व्यवहार्यताप्रतिबन्धकशक्तिमात्रनाशकत्वम् । अत्र ज्ञानकामौ अज्ञानाकामौ च समव्याप्तत्वान्न पृथग्विचारविषयौ । अत एवोक्तवचने अज्ञानप्रतियोगित्वेन कामशब्दप्रयोगः ।

(१) भा. ५।२७।११ ; भामु. ५।२७।११ यदन्नं (ऽथ दत्तं).

(२) भा. ५।२७।१२ ; भामु. ५।२७।१२ द्विद्यते (त्क्रियते) च कार्यं (च कर्म) रनुप्र (रतिप्र).

(३) भा. ५।२७।१३ ; भामु. ५।२७।१३ सश्चाप्रियाणि (सोऽप्रियाणि) इन्द्रियप्रीणनार्थात् (चेन्द्रियप्रीणनाद्धि).

'एवंरूपं कर्मफलं नरेन्द्र
मात्रावता हृदयस्य प्रियेण ।
स क्रोधजं पाण्डव हर्षजं च
लोकावुभौ मा प्रहासीश्चिराय ॥

हृदयस्य प्रियेण कामेन ईदृशं क्षयिष्णु इन्द्रियप्रीतिमात्रहेतुः कर्मफलम् । तत् अत्र अस्मिन् लोके माऽवहं नैव वहेयम् । अत्र कर्म कुर्वन् कामवशादमुत्र फलं न प्रार्थयेतेत्यर्थः । ततश्च को लाभ इत्यत आह– स इति । सः त्वमेवं निष्कामकर्मकृत् क्रोधजं लोकं नरकं हर्षजं स्वर्गं चेत्युभौ लोकौ चिराय अपुनरावृत्तये मा प्रहासीः मा गच्छ । 'ओहाङ्' गतौ इत्यस्य रूपम् । तङभाव आर्षः । कर्मजं फलं त्यक्त्वा परेण वैराग्येण संपन्नो मोक्षार्थं योगाभ्यासमेव कुरुष्व, किं राज्येन बन्धुनाशलभ्येन ? इत्यर्थः । नीटी.

'अन्तं गत्वा कर्मणां या प्रशंसा
सत्यं दमश्चाऽऽर्जवमानृशंस्यम् ।
अश्वमेधो राजसूयस्तथेष्टः
पापस्यान्तं कर्मणो मा पुनर्गाः ॥

एवं ज्ञानेन कर्मणाम् अन्तं नाशं गत्वा प्राप्य, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन' इति भगवद्वचनात्, बुद्धतत्त्वोऽपि कृतकृत्योऽपि सत्यादिकं मा त्यज । अश्वमेधादीनि कर्माण्यपि लोकसंग्रहार्थं कुरु । परंतु पापस्य कर्मणः अन्तं समीपं पुनर्मा गाः । ज्ञानोत्तरकालं कृतमपि कर्म न ज्ञानिनं स्पृशतीति भावः, 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापकं कर्म न श्लिष्यते' इति श्रुतेः । नीटी.

(१) भा. ५।२७।१४ ; भामु. ५।२७।१४ मात्रावता (माऽत्रावहं).

(२) भा. ५।२७।१५ ; भामु. ५।२७।१५ या प्रशंसा (मा प्रजह्याः) दमश्चा (दमं चा) मेधो (मेधं) सूयस्तथेष्टः (सूयं तथेज्याः).

[1]तच्चेदेवं देशरूपेण पार्थाः
करिष्यध्वं कर्म पापं चिराय ।
निवसध्वं वर्षपूगान् वनेषु
दुःखं वासं पाण्डवा धर्महेतोः ।

भोः पार्थाः भोः पाण्डवाः, तत् पापं कर्म गोत्रवधरूपं द्वेषरूपेण चिराय प्रागेव चेत्करिष्यध्वं तर्हि यत् वने वर्षपूगान् दुःखं वासं निवसध्वं तद्धर्म एवेति यत्तत्पदाध्याहारेण योज्यम् । राज्यार्थं सर्वलोकनाशमिच्छतां भवतां दुर्योधनेन यो वनवासः कारितः स धर्म एवेत्यर्थः । नीटी.

[2]अप्रव्रज्ये योजयित्वा पुरस्ता-
दात्माधीनं यद्बलं ते तदासीत् ।
नित्यं पाञ्चालाः सचिवास्तवेमे
जनार्दनो युयुधानश्च वीरः ॥

ननु तदानीं सहायाभावादस्माभिर्वनवासोऽङ्गीकृतः, न दुर्योधनाशयेत्याशङ्क्याऽऽह– अप्रव्रज्येति । इमा इमानि राज्यादीनि । 'सुपां सुलुक् ०' (पा. ७।१।३९) इति सुपो डादेशः । पुरस्तात् प्रव्रजनकाले एव हित्वा, धाञो रूपम्, बलेन धृत्वा अप्रव्रज्य वने प्रव्रजनमकृत्वैव आस्म भवेम वयम् । पाण्डवान् आत्मन्यन्तर्भाव्य उत्तमपुरुषप्रयोगः । यत् यतः पुरस्तादपि एतद्बलम् आत्माधीनमेवाऽऽसीत् । नीटी.

[3]मत्स्यो राजा रुक्मरथः सपुत्रः
प्रहारिभिः सह पुत्रैर्विराटः ।
राजानश्च ये विजिताः पुरस्तात्
त्वामेव ते संश्रयेयुः समस्ताः ॥

महासहायः प्रतपन् बलस्थः
पुरस्कृतो वासुदेवार्जुनाभ्याम् ।
वरान् हनिष्यन् द्विषतो रङ्गमध्ये
व्यनेष्यथा धार्तराष्ट्रस्य दर्पम् ॥

बलं कस्माद्वर्धयित्वा परस्य
निजान् कस्मात् कर्शयित्वा सहायान् ।
निरुष्य कस्माद्वर्षपूगान् वनेषु
युयुत्ससे पाण्डव हीनकालम् ॥

हीनकालं गते काले इत्यर्थः । नीटी.

[1]अप्रज्ञो वा पाण्डव युध्यमानो-
ऽधर्मज्ञो वा भूतिपथाद्व्यपैति ।
प्रज्ञावान् वा बुध्यमानोऽपि धर्मं
संरम्भाद्वा सोऽपि भूतेरपैति ॥

एवं पूर्वं युद्धमकुर्वता इदानीमपि तन्न कर्तव्यमित्युक्तम् । अथ सर्वथाऽपि युद्धं न कर्तव्यम्, जयपराजययोरव्यवस्थितत्वादित्याह– अप्राज्ञ इति । मूढः अधर्मज्ञो वा युध्यन् ऐश्वर्यं लभते, प्राज्ञः धर्मज्ञः अयुद्धन् दैवात् ऐश्वर्यात् भ्रश्यतीत्यर्थः । नीटी.

[2]नाधर्मे ते धीयते पार्थ बुद्धि-
र्न संरम्भात् कर्म चकर्थ पापम् ।
अद्धा किं तत्कारणं यस्य हेतोः
प्रज्ञाविरुद्धं कर्म चिकीर्षसीदम् ॥

ग्रन्थतात्पर्यमाह– नेति । संरम्भात् कोपात् । पूर्वमपि पापभयादेव त्वया न कृतं तर्हि इदानीं प्रज्ञाविरुद्धं तत्किमर्थं चिकीर्षसीति भावः । नीटी.

---

(१) भा. ५।२७।१६ ; भामु. ५।२७।१६ देश (द्वेष) हेतोः (एव).

(२) भा. ५।२७।१७ ; भामु. ५।२७।१७ योजयित्वा (मा स्म हित्वा) ते तदा (ह्येतदा) पाञ्चालाः (च वश्याः).

(३) भा. ५।२७।१८–२० ; भामु. ५।२७।१८–२०.

(१) भा. ५।२७।२१ ; भामु. ५।२७।२१ प्रज्ञो (प्राज्ञो) पथाद् व्यपैति (मथोऽभ्युपैति) संरम्भा (संस्तम्भा) भूते (भूतै).

(२) भा. ५।२७।२२ ; भामु. ५।२७।२२ अद्धा (आत्थ).

[1]अव्याधिजं कटुकं शीर्षरोगं
यशोमुखं पापफलोदयं च ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥

अव्याधिजं कटुकं पित्तादिकं विनाऽपि अरोचकं यशोमुषं यशोहरं पेयं गिलनीयं मन्युं क्रोधं प्रशाम्य शान्तो भव । नीटी.

[2]पापानुबन्धं को नु तं कामयेत
क्षमैव ते ज्यायसी नोत भोगाः ।
यत्र भीष्मः शान्तनवो हतः स्या-
द्यत्र द्रोणः सहपुत्रो हतः स्यात् ॥

पापेऽनुबध्नाति तं तथाविधं पापस्य मूलम् । तं मन्युम् । यत्र भोगेषु निमित्तेषु । एतेन भीष्मादीनां गुरूणामपि वधो राज्यार्थिनस्त्वत्तो भविष्यतीति दर्शितम् । नीटी.

कृपः शल्यः सौमदत्तिर्विकर्णो
विविंशतिः कर्णदुर्योधनौ च ।
एतान् हत्वा कीदृशं तत्सुखं स्या-
द्यद्विन्देथास्तदनुब्रूहि पार्थ ॥

[3]लब्ध्वाऽपीमां पृथिवीं सागरान्तां
जरामृत्यू नैव हि त्वं प्रजह्याः ।
प्रियाप्रिये सुखदुःखे च राज-
न्नेवं विद्वान्नैव युद्धं कुरुष्व ॥

[4]अमात्यानां यदि कामस्य हेतो-
रेवंयुक्तं कर्म चिकीर्षसि त्वम् ।
अपाक्रमेः संप्रदाय स्वमेभ्यो
मा गास्त्वं वै देवयानात् पथोऽद्य ॥

देवयानात्पथः अर्चिरादिमार्गात् अपुनरावृत्तिफलात् गोत्रद्रोहेण मा गा इत्यर्थः । नीटी.

बुद्ध्या धर्माधर्मपरीक्षा कर्तव्या– अधर्मोऽपि आपदि धर्मः, धर्मोऽपि आपदि अधर्मः

युधिष्ठिर उवाच–

[1]असंशयं संजय सत्यमेतत्
धर्मो वरः कर्मणां यत्त्वमात्थ ।
ज्ञात्वा तु मां संजय गर्हयेस्त्वं
यदि धर्मं यद्यधर्मं चरामि ॥

असंशयं यदि धर्मं चरेयं यदि वा अधर्मं तदुभयं ज्ञात्वा परीक्ष्य अधर्माचरणमुपलभ्य गर्हयेः निन्दस्व । नीटी.

[2]यत्राधर्मो धर्मरूपाणि बिभ्रद्
धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः ।
तथा धर्मो धारयन् धर्मरूपं
विद्वांसस्तं संप्रपश्यन्ति बुद्ध्या ॥

धर्माधर्मपरीक्षायां त्रैविध्यमाह– यत्रेति । यत्र पुरुषे दम्भादिमति अधर्मः अभिचारार्थं मन्त्रजपादिः धर्म इत्येवान्ये जानन्ति । तथा प्रच्छन्नयोगिनि दत्तात्रेयादौ धर्मः रागद्वेषादिशून्यतारूपो योगधर्मोऽपि उन्मत्तवदाचरणात् अधर्मरूप इव दृश्यते । यत्र वसिष्ठादौ धर्मः धर्मरूप एव । यद्यपि चाण्डालादौ अधर्मोऽपि अधर्मरूप एवास्ति तथाऽपि तस्यानुपादेयत्वात् त्रयमेव विचार्यम् । पाठान्तरे अधर्मेति छेदः । एतच्च त्वयाऽपि विदुषा मयि विचार्यमित्याशयः । नीटी.

[3]एवमेतावापदि लिङ्गमेत-
द्धर्माधर्मौ वृत्तिनित्यौ भजेताम् ।
आद्यं लिङ्गं यस्य तस्य प्रमाण-
मापद्धर्मं संजय तं निबोध ॥

---

(१) भा. ५।२७।२३ ; भामु. ५।२७।२३ रोगं (रोगि) च (वा).

(२) भा. ५।२७।२४–२५ ; भामु.५।२७।२४–२५.

(३) भा. ५।२७।२६ ; भामु. ५।२७।२६ कुरुष्व (कुरु त्वम्).

(४) भा. ५।२७।२७ ; भामु. ५।२७।२७ तृतीयचरणे (अपक्रामेः स्वं प्रदायैव तेषां).

(१) भा. ५।२८।१ ; भामु. ५।२८।१ चरामि (चरेयम्).

(२) भा. ५।२८।२ ; भामु. ५।२८।२ बिभ्रद् (धत्ते) तृतीयचरणे (बिभ्रद्धर्मो धर्मरूपं तथा च).

(३) भा. ५।२८।३ ; भामु. ५।२८।३ एवमेतावा (एवं तथैवाऽऽ) वृत्तिनित्यौ (नित्यवृत्ती).

अत्र आद्ययोः प्रच्छन्नत्वात् चिरकालेन तत्त्वनिश्चयः, अन्त्ये तु प्रत्यक्षलिङ्गेऽपि आपत्कालवशात् धर्माधर्मयोर्व्यत्यासो जायते इत्याह– एवमिति । एतदेव रूपं लोकप्रत्यक्षं लिङ्गं ब्राह्मणस्य स्वाध्यायप्रवचनादि, क्षत्रियस्य शौर्यादि, वैश्यस्य कृष्यादि, तत्तथैव यथोक्तमेव । तथाऽपि नित्यवृत्ती नित्यं वर्तेते तौ नित्यवृत्ती धर्माधर्मौ तल्लिङ्गं भजेताम् । अयं भावः– क्षत्रलिङ्गं ब्राह्मणवैश्ययोरापदि धर्मः, अनापदि अधर्मः । तथा च एकस्यैव लिङ्गस्य वर्णान्तरे अवस्थाभेदात् धर्मत्वमधर्मत्वं च नित्यमिति । तत्रापि विशेषमाह– आद्यमिति । आद्यं ब्राह्मणलिङ्गं याजनादि यस्यास्ति ब्राह्मणस्य तस्यैव तत् प्रमाणम् अव्यभिचारि । आपद्यपि क्षत्रियेण याजनाध्यापनादिकं न कर्तव्यमित्यर्थः । एवंविधं तमापद्धर्मं शास्त्रात् निबोध बुध्यस्व । नीटी.

[१]लुप्तायां तु प्रकृतौ येन कर्म
निष्पादयेत् तत् परीप्सेद्विहीनः ।
प्रकृतिस्थश्चाऽऽपदि वर्तमान
उभौ गर्ह्यौ भवतः संजयैतौ ॥

ननु कथं तर्हि एकचक्रायां भिक्षाटनं ब्राह्मणस्यैवासाधारणत्वेन विहितं भवद्भिः कृतमित्याशङ्क्याऽऽह– लुप्तायामिति । प्रकृतिः जीविका हेतुभूतं धनम् । तच्च क्षत्रियस्य भूमिशस्त्रादिकम्, वैश्यस्य धनपश्वादिकम् । तस्मिन् सर्वात्मना नष्टे सति येन कर्म संध्योपासनादिकं निष्पादयेत् तत् भिक्षाटनादिकमपि परीप्सेत् कर्तुमिच्छेत् । अन्यथा जीविकायाः अभावात् कर्मलोपः प्राणनाशश्च स्यात् । अतोऽत्यन्तापदि तावान् विप्रधर्मोऽपि इतरैरनुष्ठेय एव । प्रकृतिस्थश्चेति । आपदि आपद्धर्मे । प्रकृतिस्थोऽपि यद्यापद्धर्ममनुसरेत् स लोभाद्गर्ह्यः, आपत्स्थोऽपि यदि प्राकृतं धर्ममनुसरेत् स जीवनलोपात् कुटुम्बहिंसया च गर्ह्य इत्यर्थः । नीटी.

(१) भा. ५।२८।४ ; भामु. ५।२८।४.

[१]अविलोपमिच्छतां ब्राह्मणानां
प्रायश्चित्तं विहितं यद्विधात्रा ।
आपद्यथाकर्मसु वर्तमानान्
विकर्मस्थान् संजय गर्हयेत ॥

यत् यस्माद्धेतोः विधात्रा अविनाशः वृत्त्यन्तरोपजीवनेन ब्राह्मण्यस्य नाशः विनाशः तदभावम् इच्छतां ब्राह्मणानामापदुत्तीर्णानां प्रायश्चित्तं विहितम्, तस्माद्धेतोरापदि अन्यस्यान्यधर्माश्रयणं प्रसक्तमेवेति ज्ञायते । अत एव एकचक्रायामस्माभिः कृतं भिक्षाटनं नानुचितमित्यर्थः । एवमनापदि कर्मसु वर्तमानान् आपदि च विकर्मस्थान् संपश्येथाः सम्यगेवेदमिति पश्येथाः । अन्यथा तु आपदि कर्मस्थान् आत्मपरहिंस्रान् अनापदि विकर्मस्थांश्च अतिलुब्धान् विगर्हयेस्त्वम् । नीटी.

[२]मनीषिणां तत्त्वविच्छेदनाय
विधीयते सत्सु वृत्तिः सदैव ।
अब्राह्मणाः सन्ति तु ये न वैद्याः
सर्वोच्छेदं साधु मन्येत तेभ्यः ॥

किंच, मनीषिणां मनसः निग्रहं नाशं कर्तुमिच्छताम् । 'ईष गतिहिंसादर्शनेषु' इत्यस्य रूपम् । सत्त्वविच्छेदनाय सत्त्वस्य बुद्धिसत्त्वस्य चिदात्मना सह एकलोलीभूतस्य विच्छेदनाय मुञ्जेषीकान्यायेन पृथक्करणाय सत्सु सतां गृहेषु वृत्तिः जीविका शास्त्रे विधीयते । 'वेदानिमं लोकममुं च परित्यज्याऽऽत्मनाऽऽत्मानमन्विच्छेत्' इति श्रुत्या आत्मान्वेषणाय सर्वसंन्यासपूर्वकं भिक्षाचर्यविधानात् न ब्राह्मी वृत्तिः कस्यापि निन्द्या । ये तु अब्राह्मणा अपि वैद्याः विद्यानिष्ठाः न भवन्ति तेषां भिक्षाचर्यस्याविधानात् तेभ्यः तेषामर्थे सर्वोत्सङ्गं सर्वेषाम् उत्सङ्गं समीपं स्वधर्मसंयोगम् आपदनापदोरुचितं साधु मन्येत । 'सर्वोच्छेदम्' इति पाठे– तेभ्यः तेषामर्थे भिक्षाद्यटनं सर्वधर्मोच्छेदाय मन्येतेत्यर्थः । नीटी.

(१) भा. ५।२८।५ ; भामु. ५।२८।५ लोप (नाश) आपद्यथा (संपश्येथाः) गर्हयेत (गर्हयेस्त्वम्).

(२) भा. ५।२८।६ ; भामु. ५।२८।६ तत्त्व (सत्त्व) च्छेदं (त्सङ्गं).

[1]तदर्था नः पितरो ये च पूर्वे
पितामहा ये च तेभ्यः परेऽन्ये ।
प्रज्ञैषिणो ये च हि कर्म चक्रु-
र्नास्त्यन्ततो नास्ति नास्तीति मन्ये ॥

पित्रादयः यशैषिणो ये ते सर्वे तदध्वानः स एव मयोक्तः अध्वा मार्गः येषां ते तदध्वानः अभूवन् । हि प्रसिद्धम् । ये च कर्म न कुर्युः, संन्यासिन इत्यर्थः, ते सर्वे तदध्वानः । अहमपि आस्तिकोऽस्मीति ततोऽन्यमध्वानं न मन्ये । नीटी.

[2]यत्किंचिदेतद्वित्तमस्यां पृथिव्यां
यद्देवानां त्रिदशानां परत्र ।
प्राजापत्यं त्रिदिवं ब्रह्मलोकं
नाधर्मतः संजय कामये तत् ॥

एवं स्वस्य नीतिज्ञत्वप्रकाशनप्रसङ्गादापद्धर्मान् योगिधर्मांश्चोक्त्वा प्रकृतमनुसरति– यत्किंचेति । नीटी.

वासुदेवकृष्णप्रोक्तो युद्धनीतिपथः

[3]धर्मेश्वरः कुशलो नीतिमांश्चा-
प्युपासिता ब्राह्मणानां मनीषी ।
नानाविधांश्चैव महाबलांश्च
राजन्यभोजाननुशास्ति कृष्णः ॥

धर्मेश्वरः धर्मफलस्य दाता । नीटी.

[4]यदि ह्ययं विसृजन् स्यामगर्ह्यो
युध्यमानो यदि जह्यां स्वधर्मम् ।
महायशाः केशवस्तद्ब्रवीतु
वासुदेवस्तूभयोरर्थकामः ॥

यदि साम विसृजन् स्यां तर्हि गर्ह्यः स्याम् । यदि वा युध्यमानः स्वधर्मं जह्यां तदा गर्ह्यः स्याम् । मम तु द्वयमपीष्टमेवेति भावः । नीटी.

[1]शैनेया हि चैत्रकाश्चान्धकाश्च
वार्ष्णेयभोजाः कौकुराः सृञ्जयाश्च ।
उपासीना वासुदेवस्य बुद्धिं
निगृह्य शत्रून् सुहृदो नन्दयन्ति ॥

[2]वृष्ण्यन्धका ह्युग्रसेनादयो वै
कृष्णप्रणीताः सर्व एवेन्द्रकल्पाः ।
मनस्विनः सत्यपराक्रमाश्च
महाबला यादवा भोगवन्तः ॥

कृष्णप्रणीताः कृष्णेनैव नीतिपथं नीताः । नीटी.

[3]काश्यो बभ्रुः श्रियमुत्तमां गतो
लब्ध्वा कृष्णं भ्रातरमीशितारम् ।
यस्मै कामान् वर्षति वासुदेवो
ग्रीष्मात्यये मेघ इव प्रजाभ्यः ॥

[4]ईदृशोऽयं केशवस्तात भूयो
विद्मो ह्येनं कर्मणां निश्चयज्ञम् ।
प्रियश्च नः साधुतमश्च कृष्णो
नातिक्रमे वचनं केशवस्य ॥

वासुदेव उवाच–

[5]अविनाशं संजय पाण्डवाना-
मिच्छाम्यहं भूतिमेषां प्रियं च ।
तथा राज्ञो धृतराष्ट्रस्य सूत
सदाऽऽशंसे बहुपुत्रस्य वृद्धिम् ॥

(१) भा. ५।२८।७ ; भामु. ५।२८।७ तदर्था नः (तदध्वानः) उत्तरार्धे (यज्ञैषिणो ये च हि कर्म कुर्युर्नान्यं ततो नास्तिकोऽस्मीति मन्ये ॥ ).

(२) भा. ५।२८।८ ; भामु. ५।२८।८ यत्किंचिदेतद्वि (यत्किंचनेदं वि) परत्र (परं यत्) ये तत् (येयम्).

(३) भा. ५।२८।९ ; भामु. ५।२८।९.

(४) भा. ५।२८।१० ; भामु. ५।२८।१० स्यामगर्ह्यो (साम गर्ह्यो) युध्य (नियुध्य).

(१) भा. ५।२८।११ ; भामु. ५।२८।११ शैनेया हि चैत्रका (शैनेयोऽयं चेदय) कौकु (कुकु).

(२) भा. ५।२८।१२ ; भामु. ५।२८।१२ क्रमाश्च (यणाश्च).

(३) भा. ५।२८।१३ ; भामु. ५।२८।१३.

(४) भा. ५।२८।१४ ; भामु. ५।२८।१४ भूयो विद्मो (विद्वान् विद्धि) क्रमे (क्रामे).

(५) भा. ५।२९।१ ; भामु. ५।२९।१ सदा (समा)

'कामो हि मे संजय नित्यमेव
नान्यद्ब्रूयां तान् प्रति शाम्यतेति ।
राज्ञश्च हि प्रियमेतच्छृणोमि
मन्ये चैतत् पाण्डवानां समर्थम् ॥

शाम्यतेति वचनादन्यत् तान्प्रति न ब्रूयाम् । पाण्डवानां समक्षं राज्ञो युधिष्ठिराच्च एतदेव शृणोमि । अहं च एतत् मन्ये मानयामि । नीटी.

शमः श्रेष्ठः, सत्यधर्मपालनादेवराज्यलाभः,
विद्यया कर्मणः समुच्चयः इष्टः

'सुदुष्करश्चात्र शमो हि नूनं
प्रदर्शितः संजय पाण्डवेन ।
यस्मिन् गृद्धो धृतराष्ट्रः सपुत्रः
कस्मादेषां कलहो नात्र मूर्च्छेत् ॥

तत्र राज्ये निमित्ते । गृद्धः लिप्सावान् । एवं सति एषां कौरवाणां कस्माद्धेतोः कलहः नावमूर्च्छेत् ? नीटी.

'तत्त्वं धर्मं विचरन् संजयेह
मत्तश्च जानासि युधिष्ठिराच्च ।
अथो कस्मात् संजय पाण्डवस्य
उत्साहिनः पूरयतः स्वकर्म ।
यथाख्यातमावसतः कुटुम्बं
पुराकल्पात् साधु विलोपमात्थ ॥

विचरं विचलितम् । पूरयतः पालयतः । यथाख्यातं प्रसिद्धिमनतिक्रम्य आवसतः अधितिष्ठतः साधुविलोपं धर्मलोपं युधिष्ठिरे कस्माद्धेतोः आत्थ उक्तवान् त्वम् ? नीटी.

'अस्मिन् विधौ वर्तमाने यथाव-
दुच्चावचा मतयो ब्राह्मणानाम् ।
कर्मणाऽऽहुः सिद्धिमेके परत्र
हित्वा कर्म विद्यया सिद्धिमेके ।
नाभुञ्जानो भक्ष्यभोज्यस्य तृप्ये-
द्विद्वानपीह विदितं ब्राह्मणानाम् ॥

अस्मिन्विधौ '*शुचिरद्रोही कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो यावदायुष्यं वर्तेयेत्' इत्येवंरूपे वर्तमानेऽपि ब्राह्मणानामुच्चावचाः मतयो गार्हस्थ्यस्य अपरिग्रहे वा त्यागे वा नैष्ठिकब्रह्मचर्ये पारिव्राज्ये वा भवन्ति । तत्र हेतुमाह– कर्मणेति । सिद्धिं मोक्षम् एके 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (भ. गी. ३।२०) इत्येके आहुः । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' (नाउ. १२।३) इत्येके आहुः । यद्यपि एवं कुटुम्बेऽवस्थितिः संन्यासश्च द्वयमपि तुल्यवत् शास्त्रेण विहितम्, तथाऽपि 'कृत्स्नभावात्तुगृहिणोपसंहार'–न्यायेन (ब्रसू. ३।४।४८) आश्रमान्तरसाध्यं ज्ञानं गृहस्थेन साधयितुं शक्यम्, न तु गृहस्थेन साध्यं यज्ञादिकमाश्रमान्तरेऽप्यस्तीति कृत्स्नो धर्मो गार्हस्थ्ये एव प्राप्यते इत्याशयेनाऽऽह– नाभुञ्जान इति । यतो विद्वानपि अभुञ्जानो न तृप्यति, यतश्च ब्राह्मणानां संन्यासिनामपि गृहस्थगृहे विहितं भोजनादिकम् । नीटी.

'या वै विद्याः साधयन्तीह कर्म ।
तासां फलं विद्यते नेतरासाम् ।
तत्रेह वै दृष्टफलं तु कर्म
पीत्वोदकं शाम्यति तृष्णयाऽऽर्तः ॥

तेन कर्मणामनुकूला या विद्यास्ता एव फलवत्यः, न तु तत्प्रतिकूला इत्याह– या इति । तथाहि– 'सर्वाणि

(१) भा. ५।२९।२ ; भामु. ५।२९।२ समर्थम् (समक्षम्).

(२) भा. ५।२९।३ ; भामु. ५।२९।३ श्चात्र (स्तत्र) नात्र (नाव).

(३) भा. ५।२९।४ ; भामु. ५।२९।४–५ चरन् (चरं) कुटुम्बं पुराकल्पात् साधु वि (कुटुम्बे पुरा कस्मात् साधुवि).

* छान्दोग्योपनिषद्वचनस्य (छाउ. ८।१५।१) अर्थानुवादोऽयम् ।

(१) भा. ५।२९।५ ; भामु. ५।२९।५–६ विदितं (विहितं).

(२) भा. ५।२९।६ ; भामु. ५।२९।७.

ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता' (छाउ. १।११।५) इति छान्दोग्ये सर्वभूतसंवेशनोद्गमनलिङ्गेन जगत्कारणतया निश्चितस्य प्राणाख्यपरमात्मनो विद्यायाः प्रस्तावकर्मसाधकत्वं दृष्टम्। तासां कर्मसाधकानां विद्यानां फलमस्ति, नेतरासां स्वतन्त्राणाम्। अयं भावः– गृहस्थः स्वात्मानमन्यांश्च पित्रादींस्तारयति यतींश्च पुष्णाति। यतिस्तु आत्मानमेव तारयति, न पित्रादीन्। पोषणं च स्वस्यापि न करोति, भैक्षोपजीवित्वात्। अतो गार्हपत्यमेव श्रेष्ठमिति। किंच, नैष्कर्म्यं दृष्टविरुद्धमपीत्याह– तत्रेति। तत्र कर्मतदभावतारतम्ये विचारणीये कर्म इहैव दृष्टफलम्। नीटी.

[1]सोऽयं विधिर्विहितः कर्मणैव
तद्वर्तते संजय तत्र कर्म।
तत्र योऽन्यत् कर्मणः साधु मन्ये-
न्मोघं तस्य लपितं दुर्बलस्य॥

सोऽयं ज्ञानविधिः कर्मणैव सह विहितः। तत्र च अनुष्ठीयमाने कर्म उद्वर्तते उच्छिद्यते। कर्मसमवेतमेव ज्ञानं सकलकर्मोच्छेदहेतुरित्यर्थः। कर्मणोऽन्यत् संन्यासम्। मन्येत् मन्यते। नीटी.

[2]कर्मणाऽमी भान्ति देवाः परत्र
कर्मणैवेह प्लवते मातरिश्वा।
अहोरात्रे विदधत् कर्मणैव
अतन्द्रितो नित्यमुदेति सूर्यः॥

कर्मसमुचितं ज्ञानं स्तौति– कर्मणाऽमी भान्तीत्यादिना, 'ब्रह्मविद्यां ब्रह्मचर्यं क्रियां च निषेवमाणाः' इत्युपसंहारात्। नीटी.

(१) भा. ५।२९।७; भामु. ५।२९।८ तद्व (संव) तस्य ल (तस्याऽऽल).

(२) भा. ५।२९।८; भामु. ५।२९।९.

[1]मासार्धमासानथ नक्षत्रयोगा-
नतन्द्रितश्चन्द्रमा अभ्युपैति।
अतन्द्रितो दहते जातवेदाः
समिध्यमानः कर्म कुर्वन्
प्रजाभ्यः॥

[2]अतन्द्रिता भारमिमं महान्तं
बिभर्ति देवी पृथिवी बलेन।
अतन्द्रिताः शीघ्रमपो वहन्ति
संतर्पयन्त्यः सर्वभूतानि नद्यः॥

[3]अतन्द्रितो वर्षति भूरितेजाः
संनादयन्नन्तरिक्षं दिवं च।
अतन्द्रितो ब्रह्मचर्यं चचार
श्रेष्ठत्वमिच्छन् बलभिद्देवतानाम्॥

[4]हित्वा सुखं मनसश्च प्रियाणि
तेन शक्रः कर्मणा श्रैष्ठ्यमाप।
सत्यं धर्मं पालयन्नप्रमत्तो
दमं तितिक्षां समतां प्रियं च।
एतानि सर्वाण्युपसेवमानो
देवराज्यं मघवान् प्राप मुख्यम्॥

[5]बृहस्पतिर्ब्रह्मचर्यं चचार
समाहितः संशितात्मा यथावत्।
हित्वा सुखं प्रतिरुध्येन्द्रियाणि
तेन देवानामगमद्गौरवं सः॥

(१) भा. ५।२९।९; भामु. ५।२९।१० मा अभ्यु (माश्चाभ्यु).

(२) भा. ५।२९।१०; भामु. ५।२९।११.

(३) भा. ५।२९।११; भामु. ५।२९।१२ दिवं च (दिशश्च).

(४) भा. ५।२९।१२; भामु. ५।२९।१३–१४ मानो दे (मानः स दे).

(५) भा. ५।२९।१३; भामु. ५।२९।१४–१५.

[1]नक्षत्राणि कर्मणाऽमुत्र भान्ति
रुद्रादित्या वसवोऽथापि विश्वे ।
यमो राजा वैश्रवणः कुबेरो
गन्धर्वयक्षाप्सरसश्च शुभ्राः ।
ब्रह्मचर्यं वेदविद्याः क्रियाश्च
निषेवमाणा मुनयोऽमुत्र भान्ति ॥

[2]जानन्निमं सर्वलोकस्य धर्मं
ब्राह्मणानां क्षत्रियाणां विशां च ।
स कस्मात् त्वं जानतां ज्ञानवान् सन्
व्यायच्छसे संजय कौरवार्थे ॥

व्यायच्छसे निग्रहं करोषि । नीटी.

[3]आम्नायेषु नित्यसंयोगमस्य
तथाऽश्वमेधे राजसूये च विद्धि ।
संयुज्यते धनुषा वर्मणा च
हस्तत्राणै रथशस्त्रैश्च भूयः ॥

विद्या धर्मः शौर्यं च युधिष्ठिरे पुष्कलमस्तीति नायमन्येन शिक्षणीयो जेतुं वा शक्य इत्यर्थः । नीटी.

[4]ते चेदिमे कौरवाणामुपाय-
मधिगच्छेयुरवधेनैव पार्थाः ।
धर्मत्राणं पुण्यमेषां कृतं स्या-
दार्ये वृत्ते भीमसेनं निगृह्य ॥

कौरवाणामवधेन उपायम्, राज्यप्राप्ताविति शेषः । एषाम् एतैः भीमसेनम् आर्ये वृत्ते अहिंसायां निगृह्य पुण्यमेव कृतं स्यात् । नीटी.

(१) भा. ५।२९।१४ ; भामु. ५।२९।१५-१६ नक्ष (तथा नक्ष) शुभ्राः (सूत) तृतीयार्धे (ब्रह्मविद्यां ब्रह्मचर्यं क्रियां च निषेवमाणा ऋषयोऽमुत्र भान्ति ॥).

(२) भा. ५।२९।१५ ; भामु. ५।२९।१७ ब्राह्मणानां (विप्रेन्द्राणां)

(३) भा. ५।२९।१६ ; भामु. ५।२९।१८ हस्तत्राणै (हस्त्यश्वाद्यै).

(४) भा. ५।२९।१७ ; भामु. ५।२९।१९ मधि (मव) वृत्रे (वृत्ते).

[1]ते चेत् पित्र्ये कर्मणि वर्तमाना
आपद्येरन् दिष्टवशेन मृत्युम् ।
यथाशक्त्या पूरयन्तः स्वकर्म
तदप्येषां निधनं स्यात् प्रशस्तम् ॥

पित्र्ये कर्मणि क्षात्रधर्मे युद्धे । पूरयन्तः पालयन्तः । नीटी.

चातुर्वर्ण्यतत्त्वानुसारेण क्षत्रियाणां राज्ञां धर्मः युद्धं दुष्टानुशासनार्थम्

[2]उताहो त्वं मन्यसे सर्वमेव
राज्ञां युद्धे वर्तते धर्मतन्त्रम् ।
अयुद्धे वा वर्तते धर्मतन्त्रं
तथैव ते वाचमिमां शृणोमि ॥

शाम्यमेव शमः कार्य एवेति मन्यसे तर्हि धर्मतन्त्रं धर्मानुष्ठानं युद्धपक्षेऽस्ति, उत अयुद्धपक्षे ? तयोर्मध्ये यदेव वक्ष्यसि तथैव ते वाचं शृणोमि करिष्यामीत्यर्थः । नीटी.

[3]चातुर्वर्ण्यस्य प्रथमं विभाग-
मवेक्ष्य त्वं संजय स्वं च कर्म ।
निशम्याथो पाण्डवानां स्वकर्म
प्रशंस वा निन्द वा या मतिस्ते ॥

ननु क्षत्रधर्मलोपेऽपि गोत्रवधो न कर्तव्य इत्याशङ्क्याऽऽह—चातुर्वर्ण्यस्येत्यादिना । नीटी.

[4]अधीयीत ब्राह्मणोऽथो यजेत
दद्यादियात् तीर्थमुख्यानि चैव ।
अध्यापयेद्याजयेच्चापि याज्यान्
प्रतिग्रहान्वा विदितान्प्रतीच्छेत् ॥

प्रतीच्छेत् प्रतिगृह्णीयात् । नीटी.

(१) भा. ५।२९।१८ ; भामु. ५।२९।२०.

(२) भा. ५।२९।१९ ; भामु. ५।२९।२१ सर्व (शाम्य).

(३) भा. ५।२९।२० ; भामु. ५।२९।२२ विभाग (संविभाग) स्वकर्म (च कर्म).

(४) भा. ५।२९।२१ ; भामु. ५।२९।२३ ऽथो (वै) दद्यादि (दद्यादी) विदिता (विहिता).

[1]तथा राजन्यो रक्षणं वै प्रजानां
कृत्वा धर्मेणाप्रमत्तोऽथ दत्त्वा ।
यज्ञैरिष्ट्वा सर्ववेदानधीत्य
दारान् कृत्वा पुण्यकृदावसेद्गृहान् ॥
[2]स धर्मात्मा धर्ममधीत्य पुण्यं
यदिच्छया व्रजति ब्रह्मलोकम् ॥

सः क्षत्रियः । अधीत्य प्राप्य । यदिच्छया यस्य धर्मस्य इच्छया बलेन ब्रह्मलोकं गच्छति । नोचेत् जनकादिवदिहैव कृतकृत्यो भवतीत्यर्थः । भोगमोक्षकरः क्षात्रो धर्मो दुस्त्यज इति भावः । नीटी.

[3]वैश्योऽधीत्य कृषिगोरक्षपण्यै-
र्वित्तं चिन्वन् पालयन्नप्रमत्तः ।
प्रियं कुर्वन् ब्राह्मणक्षत्रियाणां
धर्मशीलः पुण्यकृदावसेद्गृहान् ॥
[4]परिचर्या वन्दनं ब्राह्मणानां
नाधीयीत प्रतिषिद्धोऽस्य यज्ञः ।
नित्योत्थितो भूतयेऽतन्द्रितः स्या-
देष स्मृतः शूद्रधर्मः पुराणः ॥

नाधीयीत वेदाध्ययनं न कुर्यात् । यज्ञः श्रौतः स्मार्तश्च प्रतिषिद्धः, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुतेः । नीटी.

[5]एतान् राजा पालयन्नप्रमत्तो
नियोजयन् सर्ववर्णान् स्वधर्मे ।
अकामात्मा समवृत्तिः प्रजासु
नाधार्मिकाननुरुध्येत कामान् ॥

यथा सर्वाश्रमपालकत्वात् गृहस्थस्य श्रैष्ठ्यं तथा सर्ववर्णपालकत्वात् धर्मेण राज्यकरणमपि श्रेष्ठतममित्यर्थः । नीटी.

(१) भा. ५।२९।२२ ; भामु. ५।२९।२४.
(२) भामु. ५।२९।२५.
(३) भा. ५।२९।२३ ; भामु. ५।२९।२५–२६.
(४) भा. ५।२९।२४ ; भामु. ५।२९।२६ देष (देवं).
(५) भा. ५।२९।२५ ; भामु. ५।२९।२७.

[1]श्रेयांस्तस्माद्यदि विद्येत कश्चि-
दभिज्ञातः सर्वधर्मोपपन्नः ।
स तं दुष्टमनुशिष्यात् प्रजान-
न्न चेद्गृध्येदिति तस्मिन्न साधु ॥

तस्मात् राज्ञः श्रेयान् प्रशस्ततरः अभिज्ञातः ज्ञानतः धर्मतश्च यदि कश्चिदस्ति सः तं युधिष्ठिरं प्रजानाम्, कर्मणि षष्ठी, प्रजाः द्रष्टुं राज्यं प्राप्तुमित्यर्थः, अनुशिष्यन् अनुशासितुमिच्छन् एतत् मदुक्तं धर्मजातं युधिष्ठिरेऽस्तीति बुध्येत् । न च तस्मिन्नसाधुः युधिष्ठिरे असाधुधर्मो न चास्तीत्यपि बुध्येत् । यद्वा, एवं सत्यपि तस्मिन्ननुशास्तरि राजा साधुर्न इति न, अपि तु साधुरेव । यदि तेन इतोऽधिकं ज्ञायते उच्यते च तर्हि तस्यापि वचनं करिष्यत्येवेत्यर्थः । 'अनुशिष्यात् प्रजानां न चेद्गृध्येदिति तस्मिन्न साधु' इति पाठे– श्रेयांश्चेत् द्रष्टुं धर्मं दर्शयितुमनुशिष्यात्, न चेत् प्रजानाम्, प्रजाः राज्यम्, न गृध्येत् इति हेतोस्तस्मिन् युधिष्ठिरे साध्वेव, वर्तते इति शेषः । नीटी.

परभूमिधनादिहर्तुः दस्योर्वधः धर्म्य एव, धर्म्ये युद्धे देहपातः धर्म्यः

[2]यदा गृध्येत् परभूमिं नृशंसो
विधिप्रकोपाद्बलमाददानः ।
ततो राज्ञां भविता युद्धमेतत्
तत्र जातं वर्म शस्त्रं धनुश्च ।
इन्द्रेणेदं दस्युवधाय कर्म
उत्पादितं वर्म शस्त्रं धनुश्च ॥

धर्मतस्तु नृशंसत्वात् दुर्योधनो धार्मिकेण राज्ञा वध्य एवेति सूचयन्नाह– यदेत्यादिना सार्धेन । परभूतौ परैश्वर्ये नृशंसः चोरकल्पो राजा विधिप्रकोपात् दैवप्राति-

(१) भा. ५।२९।२६ ; भामु. ५।२९।२८ उत्तरार्धे (स तं द्रष्टुमनुशिष्यन् प्रजानां न चैतद् बुध्येदिति तस्मिन्नसाधुः).
(२) भा. ५।२९।२७ ; भामु. ५।२९।२९–३० भूमिं (भूतौ) राज्ञां भविता (राज्ञामभवद्) णेदं (णैतद्).

कूल्यात् गृध्येत्, ततो हेतोः राज्ञां परस्परं युद्धं समभवत्। अनेन युद्धाख्यस्य कर्मणः उत्पत्तिरुक्ता। कर्म युद्धम्। तत्रोत्पत्तिशिष्टं गुणत्रयमाह— वर्म कवचम्, शस्त्रं खड्गादि, धनुश्चेति। यत् इन्द्रेण दस्युवधार्थे तत्त्रयमुत्पादितम् अतः एतैरेव धर्मो दस्युं दुर्योधनं यदि हन्यात् स एव धर्म इति भावः। नीटी.

[1]तत्र पुण्यं दस्युवधेन लभ्यते
सोऽयं दोषः कुरुभिस्तीव्ररूपः।
अधर्मज्ञैर्धर्ममबुध्यमानैः
प्रादुर्भूतः संजय साधु तन्न॥

दुर्योधने दस्युत्वं निरूपयति— तत्रेत्यादिना। कुरुभिः निमित्तभूतैः अयं दोषः वञ्चनारूपः प्रादुर्भूतः। पारदार्यदोष इव इन्द्रात्। नीटी.

तत्र राजा धृतराष्ट्रः सपुत्रो
धर्म्यं हरेत्पाण्डवानामकस्मात्।
नावेक्षन्ते राजधर्मं पुराणं
तदन्वयाः कुरवः सर्व एव॥

धर्म्यं धर्मादागतं पित्र्यं राज्यम्। तदन्वयाः तदनुसारिणः। नीटी.

[2]स्तेनो हरेद्यत्र धनं ह्यदृष्टः
प्रसह्य वा यत्र हरेत दृष्टः।
उभौ गर्ह्यौ भवतः संजयैतौ
किं वै पृथक्त्वं धृतराष्ट्रस्य पुत्रे।
योऽयं लोभान्मन्यते धर्ममेतं
यमिच्छते मन्युवशानुगामी॥

पृथक्त्वं स्तेनादन्यत्वम्। एतं छलेन राज्यापहारम्। नीटी.

(१) भामु. ५।२९।३१–३२.

(२) भा. ५।२९।२८; भामु. ५।२९।३३–३४ योऽयं ( सोऽयं ) मिच्छते मन्यु ( मिच्छति क्रोध ).

[1]भागः पुनः पाण्डवानां निविष्ट-
स्तं नोऽकस्मादाददीरन् परे वै।
अस्मिन् पदे युध्यतां नो वधोऽपि
श्लाघ्यः पित्र्यः परराज्याद्विशिष्टः।
एतान् धर्मान् कौरवाणां पुराणा-
नाचक्षीथाः संजय राज्यमध्ये॥

निविष्टः वनवासादूर्ध्वं राज्यं ग्राह्यमिति कौरवेषु न्यासरूपेण स्थितः। तं भागं नः अस्माकं परे कस्मात् आददीरन् गृहीतवन्तः? पदे पदनीये अवश्यग्राह्ये भागे निमित्ते। नीटी.

[2]ये ते मन्दा मृत्युवशाभिपन्नाः
समानीता धार्तराष्ट्रेण मूढाः।
इदं पुनः कर्म पापीय एव
सभामध्ये पश्य वृत्तं कुरूणाम्॥

[3]प्रियां भार्यां द्रौपदीं पाण्डवानां
यशस्विनीं शीलवृत्तोपपन्नाम्।
यदुपेक्षन्त कुरवो भीष्ममुख्याः
कामानुगेनोपरुद्धां रुदन्तीम्॥

कामानुगेन रजसा उपरुद्धां गृहकर्मतो निरुद्धाम्। पाठान्तरे रजसा उपरुद्धं यथा स्यात्तथा व्रजन्तीम्। नीटी.

[4]तं चेत्तदा ते सकुमारवृद्धा
अवारयिष्यन् कुरवः समेताः।
मम प्रियं धृतराष्ट्रोऽकरिष्यत्
पुत्राणां च कृतमस्याभविष्यत्॥

(१) भा. ५।२९।२९; भामु. ५।२९।३४–३५ नोऽकस्मा ( नः कस्मा ) पित्र्यः ( पित्र्यं ) शिष्टः ( शिष्टम् ) राज्य ( राज ).

(२) भा. ५।२९।३०; भामु. ५।२९।३६ ये ते मन्दा ( एते मदात् ).

(३) भा. ५।२९।३१; भामु. ५।२९।३७ यदुपे ( यदुपै ) रुदन्तीम् ( व्रजन्तीम् ).

(४) भा. ५।२९।३२; भामु. ५।२९।३८.

तं दुःशासनं यद्यवारयिष्यत् तदा मम प्रियं अकरिष्यत्, अस्य पुत्राणां च दुर्योधनादीनां प्रियं कृतमभविष्यत्। दुःशासनस्यानिवारणान्मत्प्रियस्याकरणाच्च तत्पुत्राणां नाशो भविष्यतीति तत्त्वोक्तिः। नीटी.

[1]दुःशासनः प्रातिलोम्यान्निनाय
सभामध्ये श्वशुराणां च कृष्णाम्।
सा तत्र नीता करुणान्यवोच-
न्नान्यं क्षत्तुर्नाथमदृष्ट कंचित्॥

प्रातिलोम्यात् अक्रमेण श्वशुराणां मध्ये कृष्णां सभां निनायेति संबन्धः। किंचित्करुणं व्यपेक्ष्य। दीनं यथा स्यात्तथा किंचिदालोच्येत्यर्थः। क्षत्तुरन्यं नाथं रक्षितारं न अवाप। नीटी.

[2]कार्पण्यादेव सहितास्तत्र राज्ञो
नाशक्नुवन् प्रतिवक्तुं सभायाम्।
एकः क्षत्ता धर्म्यमर्थं ब्रुवाणो
धर्मं बुद्ध्वा प्रत्युवाचाल्पबुद्धिम्॥

कार्पण्यात् दैन्यात्। नीटी.

[3]अनुक्त्वा त्वं धर्ममेवं सभाया-
मथेच्छसे पाण्डवस्योपदेष्टुम्।
कृष्णा त्वेतत् कर्म चकार शुद्धं
सुदुष्करं तद्धि सभां समेत्य।
येन कृच्छ्रात् पाण्डवानुज्जहार
तथाऽऽत्मानं नौरिव सागरौघात्॥

पाण्डवस्य धर्ममुपदेष्टुमिच्छसे, हे संजयेति शेषः। नीटी.

(१) भा. ५।२९।३३; भामु. ५।२९।३९ करुणान्यवोचन्ना (करुणं व्यपेक्ष्य ना) मदृष्ट कंचित् (मवाप किंचित्).

(२) भा. ५।२९।३४; भामु. ५।२९।४० राज्ञो (भूपा) धर्मं बुद्ध्वा (धर्मबुद्ध्या).

(३) भा. ५।२९।३५; भामु. ५।२९।४१–४२ अनुक्त्वा (अबुद्ध्वा) मेवं (मेतं) तद्धि (तत्र).

[1]यत्राब्रवीत् सूतपुत्रः सभायां
कृष्णां स्थितां श्वशुराणां समीपे।
न ते गतिर्विद्यते याज्ञसेनि
प्रपद्येदानीं धार्तराष्ट्रस्य वेश्म।
पराजितास्ते पतयो न सन्ति
पतिं चान्यं भामिनि त्वं वृणीष्व॥

प्रपद्य गच्छ। नीटी.

[2]यो बीभत्सोर्हृदये प्रौढ आसी-
दस्थिप्रच्छिन्मर्मघाती सुघोरः।
कर्णाच्छरो वाङ्मयस्तिग्मतेजाः
प्रतिष्ठितो हृदये फल्गुनस्य॥

[3]कृष्णाजिनानि परिधित्समानान्
दुःशासनः कटुकान्यभ्यभाषत्।
एते सर्वे षण्ढतिला विनष्टाः
क्षयं गता नरकं दीर्घकालम्॥

परिधित्समानान् परिधातुमिच्छतः। नीटी.

[4]गान्धारराजः शकुनिर्निकृत्या
यदब्रवीत् द्यूतकाले स पार्थान्।
पराजितो नकुलः किं तवास्ति
कृष्णया त्वं दीव्य वै याज्ञसेन्या॥

नन्दनः आनन्दयिता कनिष्ठभ्राता। नीटी.

[5]जानासि त्वं संजय सर्वमेतत्
द्यूतेऽवाच्यं वाक्यमेवं यथोक्तम्।
स्वयं त्वहं प्रार्थये तत्र गन्तुं
समाधातुं कार्यमेतद्विपन्नम्॥

(१) भा. ५।२९।३६; भामु. ५।२९।४२–४३ द्येदानीं (द्य दासी) भामिनि (भाविनि).

(२) भा. ५।२९।३७; भामु. ५।२९।४४ प्रौढ (प्रोत) प्रच्छिन्म (छिन्दन्म) फल्गु (फाल्गु).

(३) भा. ५।२९।३८; भामु. ५।२९।४५.

(४) भा. ५।२९।३९; भामु. ५।२९।४६ पार्थान् (पार्थम्) नकुलः (नन्दनः).

(५) भा. ५।२९।४०; भामु. ५।२९।४७ ऽवाच्यं वाक्य (वाक्यं गर्ह्यं).

विपन्नं नष्टं समाधातुं समीकर्तुम् । नीटी.

[1]अहापयित्वा यदि पाण्डवार्थं
शमं कुरूणामथ चेच्चरेयम् ।
पुण्यं च मे स्याच्चरितं महोदयं
मुच्येरंश्च कुरवो मृत्युपाशात् ॥

शकेयं शक्तश्चेत्स्याम् । नीटी.

[2]अपि वाचं भाषमाणस्य काव्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अवेक्षेरन् धार्तराष्ट्राः समक्षं
मां च प्राप्तं कुरवः पूजयेयुः ॥

काव्यां शौक्रीम् । नीतियुक्तामित्यर्थः । नीटी.

[3]अतोऽन्यथा रथिना फल्गुनेन
भीमेन चैवाऽऽहवदंशितेन ।
परासिक्तान् धार्तराष्ट्रांस्तु विद्धि
प्रदह्यमानान् कर्मणा स्वेन मन्दान् ॥

परासिक्तान् निर्धूतान् संपदा हीनान् । नीटी.

[4]पराजितान् पाण्डवेयांस्तु वाचो
रौद्ररूपा भाषते धार्तराष्ट्रः ।
गदाहस्तो भीमसेनोऽप्रमत्तो
दुर्योधनं स्मारयिता हि काले ॥

रौद्राः मर्मच्छिदः । रूक्षाः निःस्नेहाः । भाषते द्यूतावसाने अभाषत । नीटी.

[1]सुयोधनो मन्युमयो महाद्रुमः
स्कन्धः कर्णः शकुनिस्तस्य शाखाः ।
दुःशासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषी ॥

[2]युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।
माद्रीपुत्रौ पुष्पफले समृद्धे
मूलं त्वहं ब्रह्म च ब्राह्मणाश्च ॥

अहम् ईश्वरः, ब्रह्म वेदः, ब्राह्मणाश्च । धार्तराष्ट्रोच्छेदे एको धृतराष्ट्र एव शोच्यो भवेत्, पाण्डवोच्छेदे तु वयं त्रयोऽपि शोच्या भविष्याम इति श्लोकद्वयस्यार्थः । बहूनामुच्छेदो न भविष्यतीति तात्पर्यम् । नीटी.

युद्धं विहाय शमेन वनव्याघ्रवत् उपकार्योपकारकभावेन उभयाभ्यां पक्षाभ्यां वर्तितव्यम्

[3]वनं राजा धृतराष्ट्रः सपुत्रो
व्याघ्रा वने संजय पाण्डवेयाः ।
मा वनं छिन्धि सव्याघ्रं
मा व्याघ्रान्नीनशो वनात् ॥

[4]निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम् ।
तस्माद्व्याघ्रो वनं रक्षेद्वनं व्याघ्रं च पालयेत् ॥

[5]लताधर्मा धार्तराष्ट्राः शालाः संजय पाण्डवाः ।
न लता वर्धते जातु अनाश्रित्य महाद्रुमम् ॥

---

(१) भा. ५।२९।४१ ; भामु. ५।२९।४८ मथ चेच्चरेयम् ( मपि चेच्छकेयम् ).

(२) भा. ५।२९।४२ ; भामु. ५।२९।४९ अपि + ( मे ).

(३) भा. ५।२९।४३ ; भामु. ५।२९।५० फल्गु ( फाल्गु ) राष्ट्रांस्तु ( राष्ट्रांश्च ) मन्दान् ( पापान् ).

(४) भा. ५।२९।४४ ; भामु. ५।२९।५१ रौद्ररूपा ( रौद्रा रूक्षा ).

(१) भा. ५।२९।४५ भामु. ५।२९।५२ ; शाखाः ( शाखा ).

(२) भा. ५।२९।४६ ; भामु. ५।२९।५३ शाखाः ( शाखा ).

(३) भा. ५।२९।४७ ; भामु. ५।२९।५४ वने ( ते वै ) पाण्डवेयाः ( पाण्डुपुत्राः ) न्नीनशो ( न्नीनशन् ).

(४) भा. ५।२९।४८ ; भामु. ५।२९।५५.

(५) भा. ५।२९।४९ ; भामु. ५।२९।५६ चतुर्थचरणे( महाद्रुममनाश्रिता ).

पाण्डवाश्रयेणैव धार्तराष्ट्राणां जीवनम्, नान्यथेति भावः। नीटी.

[1]स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिंदमाः।
यत्कृत्यं धृतराष्ट्रस्य तत्करोतु नराधिपः॥
[2]स्थिताः शमे महात्मानः पाण्डवा धर्मचारिणः।
योधाः समृद्धास्तद्विद्वन्नाचक्षीथा यथातथम्॥

महाक्षयकरं युद्धम् अधर्मः

[3]संयुगे वै महाराज दृश्यते सुमहान् क्षयः।
क्षये चोभयतो राजन् कं धर्ममनुपश्यसि॥

युधिष्ठिरमते दुष्टनाशहेतोः राज्यहेतोर्वा आचरणीयः क्षात्रधर्मः युद्धमधर्म एव, अहिंसा क्षमा च परमो धर्मः

**वैशंपायन उवाच–**

[4]युधिष्ठिरस्तु धर्मात्मा शोकव्याकुलचेतनः।
शुशोच दुःखसंतप्तः स्मृत्वा कर्णं महारथम्॥
आविष्टो दुःखशोकाभ्यां निःश्वसंश्च पुनः पुनः।
दृष्ट्वाऽर्जुनमुवाचेदं वचनं शोककर्शितः॥

दुःखं देहेन्द्रियादीनां तापः, शोकः तत्कृतं वैकल्यम्, ताभ्याम् आविष्टः व्याप्तः। कर्शितः कृशीकृतः। नीटी.

**युधिष्ठिर उवाच–**

[5]यद्भैक्षमाचरिष्याम वृष्ण्यन्धकपुरे वयम्।
ज्ञातीन् निष्पुरुषान् कृत्वा नेमां प्राप्स्याम दुर्गतिम्॥

यत् यदि भैक्ष्यमाचीर्णं स्यात् तर्हि ज्ञातिवधाज्जाता दुर्गतिर्न प्राप्ता स्यादित्यर्थः। 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' (पा. सू. ३।३।१३९)। नीटी.

---

(१) भा. ५।२९।५० ; भामु. ५।२९।५७.

(२) भा. ५।२९।५१ ; भामु. ५।२९।५८ समृद्धा (समर्था).

(३) भा. ५।९३।२८ ; भामु ५।९५।२८.

(४) भा. १२।७।१–२ ; भामु. १२।७।१–२.

(५) भा. १२।७।३ (युधिष्ठिर उवाच०) ; भामु. १२।७।३ द्भैक्ष (द्भैक्ष्य).



[1]अमित्रा नः समृद्धार्था वृत्तार्थाः कुरवः किल।
आत्मानमात्मना हत्वा किं धर्मफलमाप्नुमः॥

यतो वयं वृत्तार्थाः संक्षिप्तपुरुषार्थाः ज्ञातिवधेन हतभाग्याः स्मः ततो हेतोः नः अस्माकम् अमित्राः समृद्धार्था इत्यर्थः। ज्ञातिवधोऽप्यस्माकं धर्मवध एवेत्याशङ्क्याऽऽह– आत्मानमिति। धर्मफलं यशःस्वर्गौ किमाप्नुमः? उभयमपि नास्तीत्यर्थः। नीटी.

[2]धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम्।
धिगस्त्वमर्षं येनेमामापदं गमिता वयम्॥

सत्यपि शास्त्रदृष्टे फले बीभत्सत्वात् निन्द्य एवायं धर्म इत्याह– धिगिति। बलं सहायादि। पौरुषं पराक्रमः। अमर्षः क्रोधः। येन आचारादिना। आपदं शोकम्। नीटी.

[3]साधु क्षमा दमः शौचमवैरोध्यममत्सरः।
अहिंसा सत्यवचनं नित्यानि वनचारिणाम्॥

तर्हि को धर्मः श्रेष्ठ इत्यत आह– साध्विति। क्षमादिकमेव श्रेष्ठमित्यर्थः। नीटी.

[4]वयं तु लोभान्मोहाच्च स्तम्भं मानं च संश्रिताः।
इमामवस्थामापन्ना राज्यलेशबुभुक्षया॥
[5]त्रैलोक्यस्यापि राज्येन नास्मान् कश्चित् प्रहर्षयेत्।
बान्धवान्निहतान् दृष्ट्वा पृथिव्यामामिषैषिणः॥

---

(१) भा. १२।७।४ ; भामु. १२।७।४.

(२) भा. १२।७।५ ; भामु. १२।७।५ मौरसम् (पौरुषम्).

(३) भा. १२।७।६ ; भामु. १२।७।६ चमवैरोध्यम (चं वैराग्यं चाप्य).

(४) भा. १२।७।७ ; भामु. १२।७।७ स्तम्भं (दम्भं) उत्तरार्धे (इमामवस्थां संप्राप्ता राज्यलाभबुभुत्सया॥).

(५) भा. १२।७।८ ; भामु. १२।७।८ व्यामामिषै (व्यां विजयै).

ननु युद्धे जयश्चेद्राज्यलाभः, मृत्युश्चेत् स्वर्गलाभ इत्युभयलोकहितं युद्धमित्याशङ्क्य आद्यं निरस्यति— त्रैलोक्यस्येति । नीटी.

**[1]ते वयं पृथिवीहेतोरवध्यान् पृथिवीसमान् ।**
**संपरित्यज्य जीवामो हीनार्था हतबान्धवाः ॥**

**[2]आमिषे गृध्यमानानामशुनां नः शुनामिव ।**
**आमिषं चैव नो नष्टमामिषस्य च भोजिनः ॥**

हीनार्थत्वमेवाऽऽह— आमिष इति । आमिषे राज्यनिमित्ते । अशुभं ज्ञातिद्रोहाख्यं शुनामिव इतरेषां भवति । नो हि अस्माकं तु आमिषं च आमिषस्य विवर्जनं चेति द्वयमपीष्टम् । नीटी.

**[3]न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।**
**न गवाश्वेन सर्वेण ते त्याज्या य इमे हताः ॥**

एतदेव विभजते— न पृथिव्येति । पृथिव्यादेरामिषस्य वर्जनमिष्टम्, बन्धुरूपं तु आमिषमिष्टमेव । बन्धूनामर्थे सर्वं त्याज्यमित्यर्थः । नीटी.

**[4]संयुक्ताः काममन्युभ्यां क्रोधामर्षसमन्विताः ।**
**मृत्युयानं समारुह्य गता वैवस्वतक्षयम् ॥**

मृत्युयानं मृत्युमार्गम् । युद्धे मृतानां स्वर्गोऽपि नास्ति, किंतु कामाद्याक्रान्तत्वान्नरक एवास्तीत्यर्थः । नीटी.

**[5]बहु कल्याणमिच्छन्त ईहन्ते पितरः सुतान् ।**
**तपसा ब्रह्मचर्येण वन्दनेन तितिक्षया ॥**

(१) भा. १२।७।९ ; भामु. १२।७।९ वीसमान् (वीश्वरान्).

(२) भा. १२।७।१० ; भामु. १२।७।१० मशुनां नः (मशुभं वै) नष्ट (हीष्ट) च भोजिनः (विवर्जनम्).

(३) भा. १२।७।११ ; भामु. १२।७।११.

(४) भा. १२।७।१२ ; भामु. १२।७।१२ पूर्वार्धे (काममन्युपरीतास्ते क्रोधहर्षसमन्विताः ।).

(५) भा. १२।७।१३ ; भामु. १२।७।१३ पूर्वार्धे (बहुकल्याणसंयुक्तानिच्छन्ति पितरः सुतान् ।) वन्दनेन (सत्येन च).

एवं हि नृणां पापहतानां नरकं चोपपाद्य तत्संबन्धिनां शोकं च व्युत्पादयति— बहुकल्याणेत्यादिना । नीटी.

**[1]उपवासैस्तथेज्याभिर्व्रतकौतुकमङ्गलैः ।**
**लभन्ते मातरो गर्भांस्तान् मासान् दश बिभ्रति ॥**

व्रतानि गौरीव्रतादीनि, कौतुकानि दुर्गोत्सवादीनि, मङ्गलानि लक्ष्मीनारायणशिलादीनि, तैः । नीटी.

**[2]यदि स्वस्ति प्रजायन्ते जाता जीवन्ति वा यदि ।**
**संभाविता जातबलास्ते दद्युर्यदि नः सुखम् ।**
**इह चामुत्र चैवेति कृपणाः फलहेतुकाः ॥**

**[3]तासामयं समारम्भो निवृत्तः केवलोऽफलः ।**
**यदासां निहताः पुत्रा युवानो मृष्टकुण्डलाः ॥**

**[4]अभुक्त्वा पार्थिवान् भोगानृणान्यनवदाय च ।**
**पितृभ्यो देवताभ्यश्च गता वैवस्वतक्षयम् ॥**

अनपहाय अपरिहृत्य । 'अनवदाय' इति पाठे अपरिशोध्य । * पितृभ्यः इति षष्ठ्यर्थे चतुर्थी । नीटी.

**[5]यदैषामङ्ग पितरौ जातौ काममयाविव ।**
**संजातबलरूपेषु तदैव निहता नृपाः ॥**

* इदं 'देवताभ्यः' इत्यस्योपलक्षणम् ।

(१) भा. १२।७।१४ ; भामु. १२।७।१४ गर्भांस्तान् मासान् दश (गर्भान् मासान् दश च).

(२) भा. १२।७।१५ ; भामु. १२।७।१५–१६ हेतुकाः (हेतवः).

(३) भा. १२।७।१६ ; भामु. १२।७।१६–१७ समारम्भो निवृत्तः (समुद्योगो निर्वृत्तः).

(४) भा. १२।७।१७ ; भामु. १२।७।१८ वदाय (पहाय).

(५) भा. १२।७।१८ ; भामु. १२।७।१९ पूर्वार्धे (यदैषामम्ब पितरौ जातकामावुभावपि ।) बलरूपेषु (धनरत्नेषु).

अर्जुनेन सह वदन्नपि संनिहितां मातरमुक्तार्थसंवादाय संबोधयति– हे अम्बेति । पितरौ मातापितरौ गान्धारीधृतराष्ट्रौ यदैव जातकामौ तदैव ते नृपाः दुर्योधनप्रभृतयः हताः । नीटी.

[1]संयुक्ताः काममन्युभ्यां क्रोधहर्षासमञ्जसाः ।
न ते जन्मफलं किंचिद्भोक्तारो जातु कर्हिचित् ॥

कामः अर्थस्याभिलाषः । मन्युः तदलाभे दैन्यम् । क्रोधः कामप्रतिबन्धे सति अत्युत्तप्तता । हर्षः लाभे सति अत्युत्फुल्लता । *तैः असमञ्जसाः । ह्रस्वपाठे 'असमञ्जस्' इति सकारान्तः शब्दः । विषमा ये पुरुषास्ते जयफलं भूमेः स्वर्गस्य वा जयेन यत्फलं तन्न भोक्तारः न भोक्ष्यन्ति । जातु कदाचित् जीवने मरणे वा । कर्हिचित् कचिद्देशे इह परत्र वा । नीटी.

[2]पाञ्चालानां कुरूणां च हता एव हि येऽहताः ।
ते वयं त्वधर्मांल्लोकान् प्रपद्येम स्वकर्मभिः ॥

ननु ये हतास्ते स्वर्गं भोक्ष्यन्त्येवेत्याशङ्क्याऽऽह– पञ्चालानामिति । ये हतास्ते हता एव, न तु स्वर्गं गताः, कामाद्युपेतत्वादित्युक्तहेतोः । एवं न चेत्, अपहन्ता स्वेनैव कर्मणा निमित्तेन स्वर्गतांस्तान् पश्येत्, न च पश्यतीति लोकायतमतमाश्रित्योक्तम् । नीटी.

[3]वयमेवास्य लोकस्य विनाशे कारणं स्मृताः ।
धृतराष्ट्रस्य पुत्रेण निकृत्या प्रत्यपत्स्महि ॥

तत्सर्वं विनाशकारणत्वं प्रतिपत्स्यति पर्यवस्यति । वयं राज्यलोभाद्विनाशे अवान्तरकारणम्, मुख्यं कारणं तु अस्मद्राज्यापहारात् धार्तराष्ट्र एवेति भावः । नीटी.

[1]सदैव निकृतिप्रज्ञो द्वेष्टा मायोपजीवनः ।
मिथ्यावृत्तः स सततमस्मास्वनपकारिषु ॥

तदेवाऽऽह– सदैवेत्यादिना । निकृतिः वञ्चनम्, तन्निष्ठैव प्रज्ञा यस्येति निकृतिप्रज्ञः, मायया कपटद्यूतादिना उपजीवनं यस्य स तथा, मिथ्याविनीतश्च धृतराष्ट्र एवात्र ग्राह्यः, सर्वमूलत्वात् । नीटी.

[2]अंशकामा वयं ते च न चास्माभिर्न तैर्जितम् ।
न तैर्भुक्तेयमवनिर्न नार्यो गीतवादितम् ॥

युध्यतां लोकद्वयनाशमुपपाद्योपसंहरत्यर्धेन– न सकामा इति । नीटी.

[3]नामात्यसमितौ कथ्यं न च श्रुतवतां श्रुतम् ।
न रत्नानि परार्ध्यानि न भूर्न द्रविणागमः ॥

श्रुतवतां पण्डितानाम् । रत्नानीत्यादौ भुक्तानीत्यादिर्यथालिङ्गं शेषः । नीटी.

[4]अस्मद्द्वेषेण संततः सुखं न स्मेह विन्दति ॥

[5]ऋद्धिमस्मासु तां दृष्ट्वा विवर्णो हरिणः कृशः ।
धृतराष्ट्रस्य नृपतेः सौबलेन निवेदितः ॥

---

* बहुवचनमिदं चिन्त्यम्, काममन्युपदार्थयोः संयुक्तपदार्थान्वयात् ।

(१) भा. १२।७।१९ ; भामु. १२।७।२० जन्म ( जय ).

(२) भा. १२।७।२० ; भामु. १२।७।२१ पाञ्चा ( पञ्चा ) ऽहताः ( हताः ) उत्तरार्धे ( न चेत्सर्वानयं लोकः पश्येत् स्वेनैव कर्मणा ॥ ).

(३) भा. १२।७।२१ ; भामु. १२।७।२२ उत्तरार्धे ( धृतराष्ट्रस्य पुत्रेषु तत्सर्वं प्रतिपत्स्यति ॥ ).

(१) भा. १२।७।२२ ; भामु. १२।७।२३ वृत्तः स ( विनीतः ).

(२) भा. १२।७।२३ ; भामु. १२।७।२४ अंशकामा ( न सकामा ).

(३) भा. १२।७।२४ ; भामु. १२।७।२५ समितौ कथ्यं ( सुहृदां वाक्यं ).

(४) भामु. १२।७।२६.

(५) भा. १२।७।२५ ; भामु. १२।७।२६–२७ स्य नृपतेः ( श्च नृपतिः ).

तत्र हेतुः– असमदिति । हरिणः पाण्डुरः । नीटी.

[1]तं पिता पुत्रगृद्धित्वादनुमेनेऽनये स्थितम् ।
अनवेक्ष्यैष पितरं गाङ्गेयं विदुरं तथा ।
असंशयं धृतराष्ट्रो यथैवाहं तथा गतः ॥

तथागतः बुद्धमुनिः । क्षणिकबुद्धिरिति यावत् । यथाऽहमनवस्थितबुद्धिस्तथा धृतराष्ट्रोऽपीत्यर्थः । नीटी.

[2]अनियम्याशुचिं लुब्धं पुत्रं कामवशानुगम् ।
पतितो यशसो दीप्ताद्घातयित्वा सहोदरान् ॥

एतत्फलमाह– अनियम्येति । नीटी.

[3]इमौ वृद्धौ च शोकाग्नौ प्रक्षिप्य स सुयोधनः ।
अस्मत्प्रद्वेषसंयुक्तः पापबुद्धिः सदैव हि ॥

प्रक्षिप्य, गत इति शेषः । नीटी.

[4]को हि बन्धुः कुलीनः संस्तथा ब्रूयात् सुहृज्जने ।
यथाऽसावुक्तवान् क्षुद्रो युयुत्सुर्वार्ष्णेयसंनिधौ ॥

युयुत्सुः योद्धुकामः । वाक्यम् असद्द्वेषेण ' पाण्डवा नष्टाः ' इत्येवंरूपम् । नीटी.

[5]आत्मनो हि वयं दोषाद्विनष्टाः शाश्वतीः समाः ।
प्रदहन्तो दिशः सर्वास्तेजसा भास्करा इव ॥

तदेवार्थत आह– आत्मन इति । दुर्योधनेऽप्युपचारादात्मपदप्रयोगः । आत्मनः दुर्योधनस्य । नीटी.

[1]सोऽस्माकं वैरपुरुषो दुर्मन्त्रिप्रग्रहं गतः ।
दुर्योधनकृते ह्येतत्कुलं नो विनिपातितम् ।
अवध्यानां वधं कृत्वा लोके प्राप्ताः स्म वाच्यताम् ॥

प्रग्रहं दृढबन्धनं गतः प्राप्तः । नः अस्माभिः । अवध्यानाम् अवध्यकल्पानां भीष्मादीनाम्, गुरुत्वाद्वा वधानर्हाणाम् । नीटी.

[2]कुलस्यास्यान्तकरणं दुर्मतिं पापकारिणम् ।
राजा राष्ट्रेश्वरं कृत्वा धृतराष्ट्रोऽद्य शोचति ॥

[3]हताः शूराः कृतं पापं विषयः स्वो विनाशितः ।
हत्वा नो विगतो मन्युः शोको मां रुन्धयत्ययम् ॥

विषयः आमिषम् । नः अस्माकं सर्वेषाम् । मन्युः क्रोधः तान् हत्वा विगतः । मां तु एकं शोको रुन्धयति रुणद्धि । ' रोधयति ' इति वक्तव्ये ' रुन्धयति ' इति प्रयोगो वक्तुर्वैक्लव्यं सूचयति । नीटी.

[4]धनंजय कृतं पापं कल्याणेनोपहन्यते ॥

कल्याणेन उपकारेण । नीटी.

[5]ख्यापनेनानुतापेन दानेन तपसाऽपि वा ।
निवृत्त्या तीर्थगमनाच्छ्रुतिस्मृतिजपेन वा ॥

निवृत्त्या त्यागेन । नीटी.

[6]त्यागवांश्च पुनः पापं नालं कर्तुमिति श्रुतिः ॥

[7]त्यागवाञ्जन्ममरणे नाऽऽप्नोतीति श्रुतिर्यदा ।
प्राप्तवर्त्मा कृतमतिर्ब्रह्म संपद्यते तदा ॥

---

(१) भा. १२।७।२६ ; भामु. १२।७।२७–२८ मेनेऽनये स्थितम् ( मेने नये स्थितः ) वेक्ष्यैष ( पेक्ष्यैव ) धृतराष्ट्रो ( क्षयं राजा ).

(२) भा. १२।७।२७ ; भामु. १२।७।२९ पतितो यशसो ( यशसः पतितो ).

(३) भा. १२।७।२८ ; भामु. १२।७।३० वृद्धौ च ( हि वृद्धौ ) हि ( ह ).

(४) भा. १२।७।२९ ; भामु. १२।७।३१ वुक्तवान् क्षुद्रो ( ववदद्वाक्यं ) त्सुर्वार्ष्णेय ( त्सुः कृष्ण ).

(५) भा. १२।७।३० ; भामु. १२।७।३२ चतुर्थचरणे ( भास्वरा इव तेजसा ).

(१) भा. १२।७।३१ ; भामु. १२।७।३३–३४ दुर्मन्त्रि ( दुर्मतिः ).

(२) भा. १२।७।३२ ; भामु. १२।७।३४–३५ कारिणम् ( पूरुषम् ).

(३) भा. १२।७।३३ ; भामु. १२।७।३५–३६.

(४) भा. १२।७।३४ ; भामु. १२।७।३६.

(५) भामु. १२।७।३७.

(६) भा. १२।७।३४ ; भामु. १२।७।३८.

(७) भा.१२।७।३५–३७ ; भामु.१२।७।३८–४१.

एतेषु त्यागमेव प्रशंसति– त्यागवानिति । श्रुतिः 'त्यागेनैके अमृतत्वमानशुः' (नाउ. १२।३) इति यदा यत् आह तस्मात् प्राप्तवर्त्मा लब्धयोगमार्गः कृतमतिः श्रवणमननादिना 'अहं ब्रह्मास्मि' (बृउ. १।४।१०) इति निश्चितबुद्धिः ब्रह्म अखण्डानन्दं संपद्यते ऐक्येन प्राप्नोति । नीटी.

**स धनंजय निर्द्वन्द्वो मुनिर्ज्ञानसमन्वितः ।**
**वनमामन्त्र्य वः सर्वान् गमिष्यामि परंतपः ॥**

एवं त्यागफलं जानन् अहं निर्द्वन्द्वः परिग्रहशून्यः मुनिः ध्याननिष्ठः ज्ञानेन ब्रह्मात्मैक्यविषयेण समन्वितः भवितुमिच्छुः समन्वितः सन् वा वनं गमिष्यामि । नीटी.

**न हि कृत्स्नतमो धर्मः शक्यः प्राप्तुमिति श्रुतिः ।**
**परिग्रहवता तन्मे प्रत्यक्षमरिसूदन ॥**

कृत्स्नो धर्मः योगेनाऽऽत्मदर्शनम् । यदाह याज्ञवल्क्यः– 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम् ॥' (यास्मृ. १।८) इति । कृत्स्नतमो धर्मस्तु पार्यन्तिकं जीवन्मुक्तिसुखं परिग्रहवता गृहस्थेन न हि प्राप्तुं शक्यम् । एतेन याज्ञवल्क्यादिवत् स्वस्यापि विद्वत्संन्यासेऽधिकारो दर्शितः । नीटी.

**[1]मया निसृष्टं पापं हि परिग्रहमभीप्सता ।**
**जन्मक्षयनिमित्तं च शक्यं प्राप्तुमिति श्रुतिः ॥**

परिग्रहसत्त्वे दोषमाह– मयेति । परिग्रहात् पापकरणम्, ततश्च जन्मादिहेतोर्मोहस्य पुनः प्राप्तिरित्यर्थः । अत्र श्रुतिः– 'तत्त्वेव भयं विदुषोऽमन्वानस्य' (तैउ. २।७) । तदेव ब्रह्म भयहेतुः विदुषोऽपि अमन्वानस्य ध्यानशून्यस्येति श्रुत्यर्थः । नीटी.

(१) भा. १२।७।३८ ; भामु. १२।७।४१–४२ शक्यं प्राप्तु (प्राप्तुं शक्य).

**[1]स परिग्रहमुत्सृज्य कृत्स्नं राज्यं तथैव च ।**
**गमिष्यामि विनिर्मुक्तो विशोको विज्वरस्तथा ॥**

फलितमाह– स इति । गमिष्यामि निर्विक्षेपेण ध्यानसिद्ध्यर्थम् । क्वचिदिति अज्ञातदेशत्वं दर्शितम् । नीटी.

**[2]प्रशाधि त्वमिमामुर्वीं क्षेमां निहतकण्टकाम् ।**
**न ममार्थोऽस्ति राज्येन न भोगैर्वा कुरूत्तम ॥**

चतुर्विधविकल्पयुता व्यासस्य कर्मोपपत्तिः– ईश्वरकारितं पुरुषकृतं हठ( प्रकृति )कारितं पूर्वपापपुण्यकारितं वा कर्म सर्वथा, तद्धि अपरिहार्यमेव

***[3]मया ह्यवध्या बहवो घातिता राज्यकारणात् ।**
**तान्यकार्याणि मे ब्रह्मन् दहन्ति च तपन्ति च ॥**

मे मां दहन्ति । हृदयं पचन्ति शरीरं शोषयन्ति । नीटी.

व्यास उवाच–

**[4]ईश्वरो वा भवेत् कर्ता पुरुषो वाऽपि भारत ।**
**हठो वा वर्तते लोके कर्मजं वा फलं स्मृतम् ॥**

'मया बहवो घातिताः' इत्युक्तं तत् किं हननक्रियायां तव प्रयोज्यकर्तृत्वं प्रयोजककर्तृत्वं वा, वध्यस्य च कर्मत्वं वा प्राक्तनकर्मफलभोक्तृत्वं वा ? इति विकल्पानाह– ईश्वर इति । नीटी.

* युधिष्ठिरस्योक्तिरियम् ।

(१) भा. १२।७।३९ ; भामु. १२।७।४२–४३ स परि (सपरि) तथैव (सुखानि) विज्वरस्तथा (निर्ममः क्वचित्).

(२) भा. १२।७।४० ; भामु. १२।७।४३–४४ चतुर्थचरणे (भोगैर्वा कुरुनन्दन).

(३) भा. १२।३२।१० ; भामु. १२।३२।११ ह्यव (त्वव) तान्यकार्याणि (तानि कर्माणि) तप (पच).

(४) भा. १२।३२।११ ; भामु. १२।३२।१२.

[1]ईश्वरेण नियुक्ता हि साध्वसाधु च पार्थिव ।
कुर्वन्ति पुरुषाः कर्म फलमीश्वरगामि तत् ॥

नाऽऽद्य इत्याह– ईश्वरेणेति । परशोरिव परप्रयोज्यस्य तव हन्तृत्वं नास्तीत्यर्थः । नीटी.

[2]यथा हि पुरुषश्छिन्द्याद्वृक्षं परशुना वने ।
छेत्तुरेव भवेत् पापं परशोर्न कथंचन ॥

[3]अथवा तदुपादानात् प्राप्नुयुः कर्मणः फलम् ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥

परप्रयोज्योऽप्यहं परशोः प्रयोक्ताऽसि, न तु परशुवदचेतनोऽस्मीति मम पापसंबन्धोऽस्त्येवेत्याह– अथवेति । प्राप्नुयात् परशोरुपादाता । एवं तर्हि येन परशोर्दण्डः शस्त्रं परशुश्च कृतः तमेव पापं कर्तृ प्राप्नुयात्, तस्य प्रथमप्रयोज्यत्वात् । पुरुषे उपादातरि तन्न विद्यते, तस्य जघन्यत्वात् । नीटी.

[4]न चैतदिष्टं कौन्तेय यदन्येन फलं कृतम् ।
प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय ॥

यदि च एतन्नेष्टम् । एतत् किम् ? यत् अन्येन प्रहर्त्रा कृतं पापं तस्य फलं शस्त्रकर्ता आप्नुयादिति । तर्हि जघन्यप्रयोज्ये त्वय्यपि पापाभावात् ईश्वरे एव तन्निवेशय । नीटी.

[5]अथवा पुरुषः कर्ता कर्मणोः शुभपापयोः ।
न परं विद्यते तस्मादेवमन्यच्छुभं कुरु ॥

यदा पुरुष एव कर्ता, परः ईश्वरः नास्ति, तस्मादपि हेतोः त्वया एतच्छुभमेव कृतम् । नीटी.

[1]न हि कश्चित् क्वचिद्राजन् दिष्टात् प्रतिनिवर्तते ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥

यतः कश्चिदपि दिष्टं प्रति अदृष्टस्य प्रतिकूलो भूत्वा अवश्यंभाविनः कर्मणः सकाशात् न निवर्तते । दैवस्य दुर्लङ्घ्यत्वादिति भावः । ननु दिष्टमपि जन्मान्तरीयः स्वस्यैवापराधः इत्याशङ्क्याऽऽह– दण्डेति । पूर्वपूर्वापराधस्य उत्तरोत्तरहेतुत्वमित्यनादित्वादिदानींतनस्य कर्तुर्नापराधोऽस्तीत्यतः प्राचीनकर्ता दण्डशस्त्रकृदिव न पर्यनुयोज्य इति भावः । नीटी.

[2]यदि वा मन्यसे राजन् हठे लोकं प्रतिष्ठितम् ।
एवमप्यशुभं कर्म न भूतं न भविष्यति ॥

तृतीयं पक्षं दूषयति– यदीति । प्रतिष्ठितं निश्चितं यथा स्यात्तथा यदि पुरुषं हतं हननक्रियायाः कर्मीभूतमेव मन्यसे तर्हि स्वभाववादिनस्ते भूतभाव्यशुभाभावात् वृथैव शोक इत्यर्थः । नीटी.

[3]अथाभिपत्तिर्लोकस्य कर्तव्या शुभपापयोः ।
अभिपन्नतमं लोके राज्ञामुद्यतदण्डनम् ॥

चतुर्थपक्षमाह– अथेति । पुण्यपापयोः सुखदुःखयोः अभिपत्तिः उपपत्तिः कर्तव्या । सा च धर्माधर्मावन्तरेण न घटते । तौ च शास्त्रैकगम्यौ इति चेत् राज्ञाम् उद्यतदण्डनम् उद्धतदमनं लोके शास्त्रे चोपपन्नतरमित्यर्थः । नीटी.

---

(१) भा. १२।३२।१२ ; भामु. १२।३२।१३ युक्ता ( युक्तो ) पार्थिव ( भारत ) कुर्वन्ति पुरुषाः ( कुरुते पुरुषः ).

(२) भा. १२।३२।१३ ; भामु. १२।३२।१४.

(३) भा. १२।३२।१४ ; भामु. १२।३२।१५ प्नुयुः ( प्नुयात् ).

(४) भा. १२।३२।१५ ; भामु. १२।३२।१६ फलं कृतम् ( कृतं फलम् ) तस्मा ( यस्मा ).

(५) भा. १२।३२।१६ ; भामु. १२।३२।१७ अथवा ( अथापि ) परं ( परो ) मन्यच्छुभं कुरु ( मेतच्छुभं कृतम् ).

(१) भा. १२।३२।१७ ; भामु. १२।३२।१८ दिष्टात् ( दिष्टं ).

(२) भा. १२।३२।१८ ; भामु. १२।३२।१९ हठे लोकं ( हतमेकं ).

(३) भा. १२।३२।१९ ; भामु. १२।३२।२० शुभ ( पुण्य ) तमं ( मिदं ).

[1]अथापि लोके कर्माणि समावर्तन्त भारत ।
शुभाशुभफलं चेमे प्राप्नुवन्तीति मे मतिः ॥

अत्र शङ्कते– तथापीति । यद्यपि एवं तथापि लोके शास्यमाने कर्माणि शुभानि अशुभानि च समापतन्ति अवश्यमायान्ति, फलं च प्रयच्छन्ति, अतो मम प्रायोपवेशनमेव वरमिति भावः । नीटी.

[2]एवं सत्यं शुभादेशं कर्मणस्तत्फलं ध्रुवम् ।
त्यज तद्राजशार्दूल मैवं शोके मनः कृथाः ॥

समाधत्ते– एवमिति । यस्मात् कर्मणः पापात् अशुभफलात्मकं पापप्रवृत्तिरूपं कर्म भवति तत् पापमूलं कर्म त्यज । नीटी.

अपरिहार्ये सापवादे सदोषे स्वधर्मे कृते
प्रायश्चित्तेन दोषक्षयः

[3]स्वधर्मे वर्तमानस्य सापवादेऽपि भारत ।
एवमात्मपरित्यागस्तव राजन्न शोभनः ॥

सापवादे निन्द्येऽपि स्वधर्मे स्थितस्य ते आत्मत्यागो नोचित इत्यर्थः । नीटी.

[4]विहितानीह कौन्तेय प्रायश्चित्तानि कर्मिणाम् ।
शरीरवांस्तानि कुर्यादशरीरः पराभवेत् ॥

ननु तथापि निन्द्यात् कर्मणः पापं भवति इत्याशङ्क्याऽऽह– विहितानीति । नीटी.

[5]तद्राजञ्जीवमानस्त्वं प्रायश्चित्तं चरिष्यसि ।
प्रायश्चित्तमकृत्वा तु प्रेत्य तप्तासि भारत ॥

(१) भा. १२।३२।२० ; भामु. १२।३२।२१ अथापि ( तथापि ) वर्तन्त ( वर्तन्ति ) चेमे ( चैते ).

(२) भा. १२।३२।२१ ; भामु. १२।३२।२२ पूर्वार्धे ( एवमप्यशुभं कर्म कर्मणस्तत्फलात्मकम् । ) तद्राज ( त्वं राज ).

(३) भा. १२।३२।२२ ; भामु. १२।३२।२३.

(४) भा. १२।३२।२३ ; भामु. १२।३२।२४ नीह ( नि हि ) कर्मि ( कर्म ).

(५) भा. १२।३२।२४ ; भामु. १२।३२।२५ चरि ( करि ).

व्यासस्य कालतत्त्वज्ञानम् , कालकृतं कालवशमेव
सर्वम् , कालकारितयुद्धकर्मदोषः
प्रायश्चित्तेन नाश्यः

युधिष्ठिर उवाच–

[1]हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा ।
श्वशुरा गुरवश्चैव मातुलाः सपितामहाः ॥

[2]क्षत्रियाश्च महात्मानः संबन्धिसुहृदस्तथा ।
वयस्या ज्ञातयश्चैव भ्रातरश्च पितामह ॥

[3]बहवश्च मनुष्येन्द्रा नानादेशसमागताः ।
घातिता राज्यलुब्धेन मयैकेन पितामह ॥
तांस्तादृशानहं हत्वा धर्मनित्यान् महीक्षितः ।
असकृत्सोमपान्वीरान् किं प्राप्स्यामि तपोधन ॥

[4]दह्याम्यनिशमद्याहं चिन्तयानः पुनः पुनः ।
हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ॥

[5]दृष्ट्वा ज्ञातिवधं घोरं हतांश्च शतशः परान् ।
कोटिशश्च नरानन्यान् परितप्ये पितामह ॥

[6]का नु तासां वरस्त्रीणामवस्थाऽद्य भविष्यति ।
विहीनानां स्वतनयैः पतिभिर्भ्रातृभिस्तथा ॥

[7]अस्मानन्तकरान्घोरान्पाण्डवान्वृष्णिसंहितान् ।
आक्रोशन्त्यः कृशा दीना निपतन्त्यश्च भूतले ॥

(१) भा. १२।३३।१ ; भामु. १२।३३।१ लाः स ( लाश्च ).

(२) भा. १२।३३।२ ; भामु. १२।३३।२ ज्ञातयश्चैव भ्रातरश्च ( भागिनेयाश्च ज्ञातयश्च ).

(३) भा. १२।३३।३–४ ; भामु. १२।३३।३–४.

(४) भा. १२।३३।५ ; भामु. १२।३३।५ मद्याहं ( मद्यापि ).

(५) भा. १२।३३।६ ; भामु. १२।३३।६.

(६) भा. १२।३३।७ ; भामु. १२।३३।७ स्वतन ( तु तन ).

(७) भा. १२।३३।८ ; भामु. १२।३३।८ हितान् ( हतान् ) निपतन्त्यश्च ( प्रपतिष्यन्ति ).

[1]अपश्यन्त्यः पितॄन्भ्रातॄन्पतीन्पुत्रांश्च योषितः ।
त्यक्त्वा प्राणान् प्रियान् सर्वा गमिष्यन्ति यमक्षयम् ॥

[2]वत्सलत्वाद्द्विजश्रेष्ठ तत्र मे नास्ति संशयः ।
व्यक्तं सौक्ष्म्याच्च धर्मस्य प्राप्स्यामः स्त्रीवधं वयम् ॥

[3]ते वयं सुहृदो हत्वा कृत्वा पापमनन्तकम् ।
नरके निपतिष्यामो ह्यधःशिरस एव च ॥

अनन्तकं प्रायश्चित्तैरपि अविनाश्यम् । नीटी.

[4]शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम ।
आश्रमांश्च विशेषांस्त्वं ममाऽऽचक्ष्व पितामह ॥

मम तु तप एव प्रशस्तमिति निश्चयोऽस्ति, तथापि आश्रमाणां मध्ये विशेषं श्रेष्ठम् उक्तदोषनिवर्तनक्षमम् आचक्ष्वेत्यर्थः । नीटी.

वैशंपायन उवाच–

[5]युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा ।
समीक्ष्य निपुणं बुद्ध्या ऋषिः प्रोवाच पाण्डवम् ॥

व्यास उवाच–

[6]मा विषादं कृथा राजन् क्षत्रधर्ममनुस्मर ।
स्वधर्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ ॥

(१) भा. १२।३३।९ ; भामु. १२।३३।९ प्रियान् ( स्त्रियः ).

(२) भा. १२।३३।१० ; भामु. १२।३३।१०.

(३) भा. १२।३३।११ ; भामु. १२।३३।११ ते वयं ( यद्वयं ) च ( ह ).

(४) भा. १२।३३।१२ ; भामु. १२।३३।१२ उत्तरार्धे ( आश्रमाणां विशेषं त्वमथाऽऽचक्ष्व पितामह ॥ ).

(५) भा. १२।३४।१ ; भामु. १२।३३।१३ समी ( निरी ).

(६) भा. १२।३४।२ ( व्यास उवाच० ) ; भामु. १२।३३।१४ स्मर ( स्मरन् ).

[1]काङ्क्षमाणाः श्रियं कृत्स्नां पृथिव्यां च महद्यशः ।
कृतान्तविधिसंयुक्ताः कालेन निधनं गताः ॥

कृतान्तविधिः परप्राणहरणम्, तेन संयुक्ताः स्वापराधेनैव हता इत्यर्थः । नीटी.

[2]न त्वं हन्ता न भीमोऽपि नार्जुनो न यमावपि ।
कालः पर्यायधर्मेण प्राणानादत्त देहिनाम् ॥

वस्तुतस्तु तेषामपि स्वातन्त्र्यं नास्तीत्याह– न त्वमिति । पर्यायधर्मेण मरणविधिना । आदत्त गृहीतवान् । नीटी.

[3]न यस्य मातापितरौ नानुग्राह्योऽस्ति कश्चन ।
कर्मसाक्षी प्रजानां यस्तेन कालेन संहृताः ॥

[4]हेतुमात्रमिदं तस्य कालस्य पुरुषर्षभ ।
यद्धन्ति भूतैर्भूतानि तदस्मै रूपमैश्वरम् ॥

हेतुमात्रं निमित्तमात्रम् इदं युद्धम् । तस्य तेन । असै अस्य । ऐश्वरं नियन्तृत्वम् । नीटी.

[5]कर्ममूर्त्यात्मकं विद्धि साक्षिणं शुभपापयोः ।
सुखदुःखगुणोदर्कं कालं कालफलप्रदम् ॥

कर्मैव सूत्रं बन्धनम्, तदात्मकं तत्प्रधानम् । ईश्वरोऽपि कर्मानुसारेण फलं ददत् न वैषम्यनैर्घृण्यदोषौ भजतीत्यर्थः । कालम्, कर्मापि काल एवेत्यर्थः । नीटी.

[6]तेषामपि महाबाहो कर्माणि परिचिन्तय ।
विनाशहेतुकारित्वे यैस्ते कालवशं गताः ॥

(१) भा. १२।३४।३ ; भामु. १२।३३।१५.

(२) भा. १२।३४।४ ; भामु. १२।३३।१६ ऽपि ( ऽयं ).

(३) भा. १२।३४।५ ; भामु. १२।३३।१७ यस्य ( तस्य ) ऽस्ति ( हि ).

(४) भा. १२।३४।६ ; भामु. १२।३३।१८ कालस्य पुरुष ( विहितं भरत ).

(५) भा. १२।३४।७ ; भामु. १२।३३।१९ मूर्त्या ( सूत्रा ).

(६) भा. १२।३४।८ ; भामु. १२।३३।२० कारित्वे ( कानि त्वं ).

[1]आत्मनश्च विजानीहि नियमव्रतशीलताम् ।
यदा त्वमीदृशं कर्म विधिनाऽऽक्रम्य कारिताः ॥

शान्तस्यापि तव हिंस्रे कर्मणि प्रवृत्तिरिति कालस्यैवैतन्माहात्म्यमित्यर्थः । नीटी.

[2]त्वष्ट्रेव विहितं यन्त्रं यथा स्थापयितुर्वशे ।
कर्मणा कालयुक्तेन तथेदं भ्राम्यते जगत् ॥

[3]पुरुषस्य हि दृष्ट्वेमामुत्पत्तिमनिमित्ततः ।
यदृच्छया विनाशं च शोकहर्षावनर्थकौ ॥

उत्पत्तिवत् विनाशोऽपि यादृच्छिक एवेति भावः । नीटी.

[4]व्यलीकं चापि यत्त्वत्र चित्तवैतंसिकं तव ।
तदर्थमिष्यते राजन् प्रायश्चित्तं तदाचर ॥

व्यलीकम् अनृतम् । चित्तवैतंसिकं चित्तबन्धनम् । तदर्थं तन्निवृत्त्यर्थम् । मृषाभूतमपि हन्तृत्वादिकं यदि सत्यमिति मन्यसे तर्हि प्रायश्चित्तं कुर्वित्यर्थः । नीटी.

[5]इदं च श्रूयते पार्थ युद्धे देवासुरे पुरा ।
असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः ॥

यवीयसः यवीयांसः । नीटी.

[6]तेषामपि श्रीनिमित्तं महानासीत् समुच्छ्रयः ।
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत् किल ॥

समुच्छ्रयः विरोधः । नीटी.

(१) भा. १२।३४।९ ; भामु. १२।३३।२१ यम (यत) शीलताम् (शासनम्).

(२) भा. १२।३४।१० ; भामु. १२।३३।२२ स्थाप (चेष्ट) भ्राम्य (चेष्ट).

(३) भा. १२।३४।११ ; भामु. १२।३३।२३.

(४) भा. १२।३४।१२ ; भामु. १२।३३।२४ कं चापि (कमपि).

(५) भा. १२।३४।१३ ; भामु. १२।३३।२५ च (तु).

(६) भा. १२।३४।१४ ; भामु. १२।३३।२६.

[1]एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम् ।
जघ्नुर्दैत्यांस्तदा देवास्त्रिदिवं चैव लेभिरे ॥

[2]तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः ।
संश्रिता दानवानां वै साह्यार्थे दर्पमोहिताः ॥

संश्रिताः संनद्धाः । साह्यार्थे साहाय्यार्थम् । नीटी.

[3]शालावृका इति ख्यातास्त्रिषु लोकेषु भारत ।
अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ॥
धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्तकाः ।
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः ॥

अधर्मस्येति छेदः । नीटी.

[4]एकं हत्वा यदि कुले शिष्टानां स्यादनामयम् ।
कुलं हत्वाऽथ राष्ट्रं वा न तद्वृत्तोपघातकम् ॥

राष्ट्रे अनामयं स्यात् तर्हि तदेकस्य कुलस्य वा हननं वृत्तोपघातकं धर्मनाशकं न भवति । नीटी.

[5]अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप ।
धर्मश्चाधर्मरूपोऽस्ति तच्च ज्ञेयं विपश्चिता ॥

अधर्मरूपः अधर्मवद्भाति धर्मः, यथा शालावृकाख्यब्राह्मणवधः । धर्मश्चाधर्मः, यथा कर्णपर्वोक्तसत्यवादिनः चौरेभ्यः कार्पटिकमार्गं प्रदिशतः । नीटी.

तस्मात् संस्तम्भयाऽऽत्मानं श्रुतवानसि पाण्डव ।
देवैः पूर्वगतं मार्गमनुयातोऽसि भारत ॥

(१) भा. १२।३४।१५ ; भामु. १२।३३।२७ स्तदा (स्तथा) चैव ले (चामिले).

(२) भा. १२।३४।१६ ; भामु. १२।३३।२८ ह्यार्थे (ह्यार्थं).

(३) भा. १२।३४।१७–१८ ; भामु. १२।३३।२९–३०.

(४) भा. १२।३४।१९ ; भामु. १२।३३।३१ ऽथ राष्ट्रं वा (च राष्ट्रे च).

(५) भा. १२।३४।२०–२६ ; भामु. १२।३३।३२–३८.

न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ ।
भ्रातॄनाश्वासयैतांस्त्वं सुहृदश्च परंतप ॥
यो हि पापसमारम्भे कार्ये तद्भावभावितः ।
कुर्वन्नपि तथैव स्यात् कृत्वा च निरपत्रपः ॥

तद्भावभावितः पापभावनां गतः । कुर्वन्, पापमिति वर्तते । नीटी.

तस्मिंस्तत्कलुषं सर्वं समाप्तमिति शब्दितम् ।
प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्मणः ॥

तस्य अपश्चात्तापिनः निर्लज्जस्य प्रायश्चित्तं वा तेन पापह्रासो वा नास्तीत्यर्थः । नीटी.

त्वं तु शुक्लाभिजातीयः परदोषेण कारितः ।
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥

परदोषेण दुर्योधनदोषेण । नीटी.

अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् ।
तमाहर महाराज विपाप्मैवं भविष्यसि ॥

[1]मरुद्भिः सह जित्वाऽरीन् मघवान् पाकशासनः ।
एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः ॥

[2]पूतपाप्मा जितस्वर्गो लोकान् प्राप्य सुखोदयान् ।
मरुद्गणवृतः शक्रः शुशुभे भासयन्दिशः ॥

[3]स्वर्गलोके महीयन्तमप्सरोभिः शचीपतिम् ।
ऋषयः पर्युपासन्ते देवाश्च विबुधेश्वरम् ॥

महीयन्तं महीयमानम् । नीटी.

[4]सोऽयं त्वमिह संक्रान्तो विक्रमेण वसुंधराम् ।
निर्जिताश्च महीपाला विक्रमेण त्वयाऽनघ ॥

[5]तेषां पुराणि राष्ट्राणि गत्वा राजन् सुहृद्वृतः ।
भ्रातॄन् पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ॥

हतनाथानां स्त्रीणां शोकेन मम दोषोऽनन्त इत्युक्तं तत्राऽऽह– तेषामिति । नीटी.

[6]बालानपि च गर्भस्थान् सान्त्वानि समुदाचरन् ।
रञ्जयन् प्रकृतीः सर्वाः परिपाहि वसुंधराम् ॥

[7]कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय ।
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यति ॥

कामाः आशेरते अस्मिन् कामाशयः, पूर्णकाम इत्यर्थः । नीटी.

[8]एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत ।
यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा ॥
अशोच्यास्ते महात्मानः क्षत्रियाः क्षत्रियर्षभ ।
स्वकर्मभिर्गता नाशं कृतान्तबलमोहिताः ॥

[9]अवाप्तः क्षत्रधर्मस्ते राज्यं प्राप्तमकल्मषम् ।
चरस्व धर्मं कौन्तेय श्रेयान् यः प्रेत्य भाविकः ॥

भीष्ममते युद्धे देहपातनं दुष्टहननं च धर्म एव

भीष्म उवाच–

[10]ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः ।
क्षत्रियाणां तथा कृष्ण समरे देहपातनम् ॥

---

(१) भा. १२।३४।२७ ; भामु. १२।३३।३९ मघ ( भग ).

(२) भा. १२।३४।२८ ; भामु. १२।३३।४० पूत ( धूत ) णवृतः ( णैर्वृतः ).

(३) भा. १२।३४।२९ ; भामु. १२।३३।४१ स्वर्ग ( स्वर्गे ).

(४) भा. १२।३४।३० ; भामु. १२।३३।४२ पूर्वार्धे ( सेयं त्वामनुसंप्राप्ता विक्रमेण वसुंधरा । ).

(१) भा. १२।३४।३१ ; भामु. १२।३३।४३.

(२) भा. १२।३४।३२ ; भामु. १२।३३।४४ सान्त्वानि ( सान्त्वेन ).

(३) भा. १२।३४।३३ ; भामु. १२।३३।४५ स्यति ( स्यसि ).

(४) भा. १२।३४।३४–३५ ; भामु. १२।३३।४६–४७.

(५) भा. १२।३४।३६ ; भामु. १२।३३।४८ कल्मषम् ( कण्टकम् ) चर ( रक्ष ) भाविकः ( भारत ).

(६) भा. १२।५५।१४ ; भामु. १२।५५।१४.

गोत्रवधजां ग्लानिं धर्मराजस्यापनेष्यन् भीष्म उवाच– ब्राह्मणानामिति । नीटी.

[1]पितॄन् पैतामहान् पुत्रान् गुरून् संबन्धिबान्धवान् ।
मिथ्याप्रवृत्तान् यः संख्ये निहन्याद्धर्म एव सः ॥

[2]समयत्यागिनो लुब्धान् गुरूनपि च केशव ।
निहन्ति समरे पापान् क्षत्रियो यः स धर्मवित् ॥

(१) भा. १२।५५।१५ ; भामु. १२।५५।१५ पुत्रान् (भ्रातॄन्).

(२) भा. १२।५५।१६ ; भामु. १२।५५।१६.

[1]यो लोभान्न समीक्षेत धर्मसेतुं सनातनम् ।
निहन्ति यस्तं समरे क्षत्रियो वै स धर्मवित् ॥

तं लोभिनम् । नीटी.

लोहितोदां केशतृणां गजशैलां ध्वजद्रुमाम् ।
महीं करोति युद्धेषु क्षत्रियो यः स धर्मवित् ॥

[2]आहूतेन रणे नित्यं योद्धव्यं क्षत्रबन्धुना ।
धर्म्यं स्वर्ग्यं च लोक्यं च युद्धं हि मनुरब्रवीत् ॥

युद्धं सर्वथा अधर्मः

[3]पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः ॥

(१) भामु. १२।५५।१७–१८.

(२) भा. १२।५५।१७ ; भामु. १२।५५।१९.

(३) राम्र. ४१२.

# यात्रा- यात्राकालः

## विष्णुः

चैत्रो मार्गशीर्षो वा यात्राकालः

**[1]चैत्रे मार्गशीर्षे वा यात्रां यायात् ॥**

विष्णुर्यात्रामासानाह— चैत्र इति । वाशब्दोऽनुक्तसमुच्चये, तेन फाल्गुनोऽपि ग्राह्यः । यथाऽऽह मनुः— ' मार्गशीर्षे शुभे मासे यायाद्यात्रां महीपतिः । फाल्गुनं वाऽथ चैत्रं वा मासौ प्रति यथाबलम् ॥ अन्येष्वपि तु कालेषु यदा पश्येद् ध्रुवं जयम् । तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः ॥ ' (मस्मृ. ७।१८२, १८३) । राप्र. ३३०

**[2]परस्य व्यसने वा ॥**

## शङ्खलिखितौ

देशकालशक्तिसंपन्न एव यात्रायामर्हः

**[3]राजक्रतुरेवाश्वमेधस्तं नासार्वभौमः प्रतिपादयितुमर्हति । ' अश्वमेधेन यक्ष्ये ' इति परविषयमभियायाद्देशकालशक्तिसंपन्नः प्रभूतयवसेन्धनोदकाविच्छिन्नसांपरायिकः ॥**

## महाभारतम्

सौम्यमासः अमावास्या च सङ्ग्रामकालः

**[4]कर्णस्य वचनं श्रुत्वा केशवः परवीरहा ।
उवाच प्रहसन् वाक्यं स्मितपूर्वमिदं तदा ॥
[5]ब्रूयाः कर्ण इतो गत्वा द्रोणं शान्तनवं कृपम् ।
सौम्योऽयं वर्तते मासः सुप्रापयवसेन्धनः ॥**

सौम्यः चन्द्रिकया अभिरामः । नीटी.

(१) विस्मृ. ३।४० ; राप्र. ३३०.

(२) विस्मृ. ३।४१.

(३) राक. १२५ ; राप्र. ४०२.

(४) भा. ५।१४०।१ ; भामु. ५।१४२।१ तदा ( यथा ).

(५) भा. ५।१४०।१६ ; भामु. ५।१४२।१६.

**[1]पक्वौषधिवनस्फीतः फलवानल्पमक्षिकः ।
निष्पङ्को रसवत्तोयो नात्युष्णशिशिरः सुखः ॥
[2]सप्तमाच्चापि दिवसादमावास्या भविष्यति ।
सङ्ग्रामं योजयेत्तत्र तां ह्याहुः शक्रदेवताम् ॥**

सङ्ग्रामः सङ्ग्रामसाधनकलापः युज्यताम् एकीभूयावतिष्ठताम् । सङ्ग्रामारम्भस्तु दिनान्तरे एवेति वक्ष्यते । नीटी.

चैत्रः मार्गशीर्षो वा नात्युष्णशीतः कालः सङ्ग्रामार्हः

**[3]चैत्र्यां वा मार्गशीर्ष्यां वा सेनायोगः प्रशस्यते ।
पक्वसस्या हि पृथिवी भवत्यम्बुमती तथा ॥
[4]नैवातिशीतो नात्युष्णः कालो भवति भारत ।
तस्मात्तदा योजयेत परेषां व्यसनेषु वा ।
एतेषु योगाः सेनायाः प्रशस्ताः परबाधने ॥**

## वाल्मीकिरामायणम्

वर्षाकालः न सङ्ग्रामयोग्यः

**[5]पूर्वोऽयं वार्षिको मासः श्रावणः सलिलागमः ।
प्रवृत्ताः सौम्य चत्वारो मासा वार्षिकसंज्ञिकाः ॥**

(१) भा. ५।१४०।१७ ; भामु. ५।१४२।१७ पक्वौ ( सर्वौ ).

(२) भा. ५।१४०।१८ ; भामु. ५।१४२।१८ उत्तरार्धे (सङ्ग्रामो युज्यतां तस्यां तामाहुः शक्रदेवताम् ॥ ).

(३) भा. १२।१०१।९ ; भामु. १२।१००।१०–११ तथा ( तदा ) ; पमा. ३९९ चैत्र्यां ( चैत्रे ) शीर्ष्यां ( शीर्षे ) सस्या ( शस्या ).

(४) भा. १२।१०१।१० ; भामु. १२।१००।११–१२ षु वा ( ऽथवा ) एतेषु ( एते हि ) ; पमा. ३९९–४०० येत ( यीत ) एतेषु ( एते हि ).

(५) वारा. ४।१९।१३ संज्ञिकाः ( शारदाः ) ; वाराकु. ४।२६।१३.

[1]नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् ।
अस्मिन्वत्स्याम्यहं सौम्य पर्वते सहलक्ष्मणः ॥
[2]कार्तिकं समनुक्रम्य कुरु यत्नं रिपोर्वधे ।
एष नः समयः सौम्य प्रविश त्वं स्वमालयम् ॥
[3]अयं लक्ष्मण संप्राप्तः समयोऽद्य जलागमे ।
संपश्य हि नभो मेघैरावृतं भूरिवर्षिभिः ॥
[4]सर्वमासगतं गर्भं भास्करस्य गभस्तिभिः ।
रसं सर्वमुपादाय द्यौः प्रसूते रसायनम् ॥
[5]जातु यात्रा नरेन्द्राणां लोकेऽस्मिन्न प्रवर्तते ।
मार्गाश्च सह वैरेण सलिलेन समीकृताः ॥
[6]रजः प्रशान्तं स च मेघवायु-
निंदाघदोषप्रसरः प्रशान्तः ।
स्थिरा हि यात्रा वसुधाधिपानां
प्रवासिनो यान्ति नराः स्वदेशान् ॥
[7]अन्योन्यं बद्धवैराणां मानिनां विजिगीषताम् ।
इयं सा प्रथमा यात्रा नरेन्द्राणां जयैषिणाम् ।
उद्योगसमयः सौम्य पार्थिवानां नृपात्मज ॥

(१) वारा. ४।१९।१४ उत्तरार्धे (इह वत्स्याम्यहं तावत् पर्वते नियतेन्द्रियः ॥); वाराकु. ४।२६।१४.

(२) वारा. ४।१९।१६–१७; वाराकु. ४।२६।१६ पूर्वार्धे (कार्तिके समनुप्राप्ते त्वं रावणवधे यत ।).

(३) वारा. ४।२१।२; वाराकु. ४।२८।२ लक्ष्मण (स कालः) गमे (गमः) उत्तरार्धे (संपश्य त्वं नभो मेघैः संवृतं गिरिसंनिभैः ॥).

(४) वारा. ४।२१।३; वाराकु. ४।२८।३ सर्व (नव) गतं (धृतं) तृतीयचरणे (पीत्वा रसं समुद्राणां).

(५) वारा. ४।२१।४.

(६) वारा. ४।२१।२१; वाराकु. ४।२८।१५ स च मेघ (सहिमोघ) सरः (सराः) शान्तः (शान्ताः) स्थिरा (स्थिता).

(७) वारा. ४।२३।२०–२१; वाराकु. ४।३०।६२–६३ (अन्योन्यबद्धवैराणां जिगीषूणां नृपात्मज । उद्योगसमयः सौम्य पार्थिवानामुपस्थितः । इयं सा प्रथमा यात्रा पार्थिवानां नृपात्मज ॥).

उत्तराफल्गुनी रामेण निर्णीतः यात्राकालः

[1]अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचये ।
युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः ॥
[2]फाल्गुन्यामुत्तरे ह्यस्य मम चैवार्थसाधने ।
अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ॥

## कौटिलीयमर्थशास्त्रम्

### कालनिरूपणम्

*[3]कालः शीतोष्णवर्षात्मा । तस्य रात्रिरहः पक्षो मास ऋतुरयनं संवत्सरो युगमिति विशेषाः । तेषु यथास्वबलवृद्धिकरं कर्म प्रयुञ्जीत । यत्राऽऽत्मनः सैन्यव्यायामानामृतुरनृतुः परस्य स उत्तमः कालः । विपरीतोऽधमः । साधारणो मध्यमः ॥

### शत्रुदेशविशेषादिकमनुरुध्य यः कोऽपि मासः ऋतुर्वा यात्रार्हः कालः

तैरभ्युच्चितस्तृतीयं चतुर्थं वा दण्डस्यांशं मूले पार्ष्ण्यां प्रत्यन्ताटवीषु च रक्षां विधाय कार्यसाधनसहं कोशदण्डं चाऽऽदाय क्षीणपुराणभक्तमगृहीतनवभक्तमसंस्कृतदुर्गममित्रं वार्षिकं चास्य सस्यं हैमनं च मुष्टिमुपहन्तुं मार्गशीर्षीं यात्रां यायात् । हैमनं चास्य सस्यं वासन्तिकं च मुष्टिमुपहन्तुं चैत्रीं यात्रां यायात् । क्षीणतृणकाष्ठोदकमसंस्कृतदुर्गममित्रं वासन्तिकं चास्य सस्यं वार्षिकीं वा मुष्टिमुपहन्तुं ज्येष्ठामूलीयां यात्रां यायात् । अत्युष्णमल्पयवसेन्धनोदकं वा देशं हेमन्ते यायात् । तुषारदुर्दिनमगाधनिम्नप्रायं गहनतृणवृक्षं वा देशं ग्रीष्मे

* एतदादिकौटिलीयार्थशास्त्रस्य व्याख्यानम् 'अभियास्यतो राज्ञः कर्तव्यानि' इत्यस्मिन्प्रकरणे द्रष्टव्यम् ।

(१) वारा. ५।७१।२; वाराकु. ६।४।३.

(२) वारा. ५।७१।३; वाराकु. ६।४।६ पूर्वार्धे (उत्तराफल्गुनी ह्यद्य श्वस्तु हस्तेन योक्ष्यते ।).

(३) कौ. ९।१.

यायात् । स्वसैन्यव्यायामयोग्यं परस्यायोग्यं वर्षति यायात् । मार्गशीर्षं तैषं चान्तरेण दीर्घकालां यात्रां यायात् । चैत्रं वैशाखं चान्तरेण मध्यमकालाम्, ज्येष्ठामूलीयमाषाढं चान्तरेण ह्रस्वकालामुपोषिष्यन् । व्यसने चतुर्थीम् । व्यसनाभियानं विगृह्ययाने व्याख्यातम् । प्रायशश्चाऽऽचार्याः परव्यसने यातव्यमित्युपदिशन्ति । शक्त्युदये यातव्यमनैकान्तिकत्वाद् व्यसनानामिति कौटल्यः । यदा वा प्रयातः कर्शयितुमुच्छेत्तुं वा शक्नुयादमित्रं तदा यायात् । अत्युष्णोपक्षीणे कालेऽहस्तिबलप्रायो यायात् । हस्तिनो ह्यन्तःस्वेदाः कुष्ठिनो भवन्ति । अनवगाहमानास्तोयमपिबन्तश्चान्तरवक्षाराश्चान्धीभवन्ति । तस्मात् प्रभूतोदके देशे वर्षति च हस्तिबलप्रायो यायात् । विपर्यये खरोष्ट्राश्वबलप्रायः । देशमल्पवर्षपङ्कं वर्षति मरुप्रायं चतुरङ्गबलो यायात् । समविषमनिम्नस्थलह्रस्वदीर्घवशेन वाऽध्वनो यात्रां विभजेत् ॥

सर्वा वा ह्रस्वकालाः स्युर्यातव्याः कार्यलाघवात् ।
दीर्घाः कार्यगुरुत्वाद्वा वर्षावासः परत्र च ॥

## मनुः

शुभो मार्गशीर्षः फाल्गुनः चैत्रो वा अन्यो वा
भुवजयानुकूलः यः कोऽपि मासः यात्राकालः

'मार्गशीर्षे शुभे मासि यायाद्यात्रां महीपतिः ।
फाल्गुनं वाऽथ चैत्रं वा मासौ प्रति यथाबलम् ॥

(१) यातव्यापेक्षया बलापेक्षया दीर्घे योद्धुमिच्छन् बलप्रायः शारदवासन्तिकसस्यप्रायं परराष्ट्रं मार्गशीर्षे यायात् । अत्र हि गच्छन् शारदं फलं गृहादिगतं सुखं गृह्णाति, वासन्तं सस्यमुपहरति, कालश्च महान् दुर्गोपरोधादिकार्यक्षमः, मार्गश्च प्रसिद्धवक्रपथोपभृतकाशोदकवीरुधो न भवन्ति (?), कालश्च नात्युष्णशीतः, उपचितमपि न सस्यं नानाप्रयुक्तं प्रियं सस्यत्रयोपघातकालविप्रकर्षापेक्षया च पर आश्रयं संधत्ते, उभयसस्योपघातावकर्षणं सम्यक्कृतं भवति, आत्मनश्च बलापचय इति । उपघातमात्रचिकीर्षया परदेशादेरल्पकालसाध्ये वा यातव्ये बलप्रायः फाल्गुनचैत्रयोर्यायात् वासन्तिकसस्यप्रायदेशम् । तदाऽप्यात्मनो यवसादि भवति, परोपघातक्षेत्रगतसस्योपघातात् । यथाबलमिति येन प्रकारेण बलानुरूपं यायादित्यर्थः । मेधा.

(२) मार्गशीर्षे इति मुख्यः पक्षः, तत्कालेऽन्नबाहुल्यात् । शुभे ग्रहशुद्ध्यादियुक्ते । फाल्गुनं चैत्रमिति मध्यमः, तदाऽपि यवान्नसंभवात् । मवि.

(३) यश्चतुरङ्गबलोपेतो राजा करिरथादिगमनविलम्बेन विलम्बितप्रयाणः तथा हैमन्तिकसस्यबहुलं च परराष्ट्रं जिगमिषुः स उपगमनाय शोभने मार्गशीर्षे मासि यात्रां कुर्यात् । यः पुनरश्वबलप्रायो नृपतिः शीघ्रगतिर्वा सर्वसस्यबहुलं परराष्ट्रं यियासुः स फाल्गुने चैत्रे वा मासि स्वबलयोग्यकालानतिक्रमेण यायात् । अत एव मन्वर्थव्यापारपरं संक्षेपेण याज्ञवल्क्यवचनम्— 'यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत्' (यास्मृ. १।३४८) । * ममु.

(४) मार्गशीर्षे अग्रहणे । स्वेच्छागमनमुक्तमिदम्, नाऽऽह्वानेन गमनादौ, तदाऽगमने प्रत्यवायप्रसङ्गात् । इदं पूर्वकृत्यम् । § रार. ३५

(५) अत्र मार्गशीर्षादिर्व्यवस्थितविकल्पपरः । तत्र रथप्रधानः पार्थिवो मार्गशीर्षे गच्छेत्, चक्रवाताद्यभावात् । अश्वप्रधानः फाल्गुने । पदातिप्रधानश्चैत्रे । मच.

(१) मस्मृ. ७।१८२ ; राक. ११५ मासि (मासे) ; रार. ३५ ; पमा. ४००–४०१ राकवत् ; राप्र. ३३० राकवत् ; नीम. ४५ मासि ( मासे ) फाल्गुनं ( फाल्गुने ) चैत्रं ( चैत्रे ) मासौ ( मासं ).

* गोरा. , नन्द. , भाच. ममुगतम् ।
§ शेषं ममुगतम् ।

[1]अन्येष्वपि तु कालेषु यदा पश्येद् ध्रुवं जयम् ।
तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः ॥

(१) अस्यापवादः– अन्येष्विति । एतद्व्यतिरेकेण अन्येष्वपि प्रावृडादिकालेषु यदा मन्येताऽऽत्मनोऽवश्यंभाविविजयं तदा यायात् । यदा हस्त्यश्वबलप्रायं वर्षासु अश्वबलं हस्तिबलं तदा हि स्वबलकालप्रभावादैकान्तिको जयः । व्यसनं परस्य स्वबलकोशादिगतम् । तस्मिन्नुत्पन्ने स्वबलकालनिरपेक्षो यायात् । व्यसनपीडितो हि शत्रुः साध्यो भवति । काष्ठमिव घुणोपभुक्तं संनियोगमात्रादेव विनश्यति । विगृह्येति । यातव्यमेवावष्टभ्य आहूय यायात् । महानस्मिन्नेवावगम्यते । मेधा.

(२) अन्येष्वपीति त्वधमः । कार्यविशेषोदयश्चात्र निमित्तम् । विगृह्य विग्रहं भाविनमुद्घुष्य, कथंचिद्विग्रहज्ञानमात्रेण परस्य प्रणतिसंभवात् । रिपोर्व्यसने चोत्थिते न कालनियम इति तदा सर्व एव मुख्यः काल इत्यर्थः । * मवि.

(३) उक्तकालव्यतिरिक्तेषु यदाऽऽत्मनो निश्चितं जयमवगच्छेत्तदा स्वबलयोग्यकाले ग्रीष्मादावपि हस्त्यश्वादिबलप्रायो विगृह्यैव यात्रां कुर्यात् । शत्रोश्चामात्यादिप्रकृतिगोचरदण्डपारुष्यादिव्यसने जाते अरिपक्षभूतायां तत्प्रकृतावप्युक्तकालादन्यत्रापि यायात् । $ ममु.

(४) नौगजप्रधानो वर्षास्वित्याह– अन्येष्वपीति । कर्दमनदीप्लवनादेरन्यैरसाध्यत्वात् । विगृह्य विग्रहं करिष्यामीति । उक्तव्यवस्थितिं निराह– व्यसने चोत्थित इति । दैवात् सैन्यामात्यादीनां दण्डपारुष्यादिना कोपे सतीत्यर्थः । मच.

---

* राप्र., भाच. मविगतम् ।

$ गोरा., नन्द. ममुगतम् ।

(१) मस्मृ. ७।१८३ ; राक. ११५ चोत्थि (वोत्थि) ; रार. ३५ ; पमा. ४०१ पि तु का (प्यृतुका) ; राप्र. ३३० ; नीम. ४५ तु कालेषु (च मासेषु) तदा (यदा).

## याज्ञवल्क्यः

यात्रानुकूलकालस्वरूपम्

*[1]यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ।
परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥

## बृहत्पराशरः

सुसैन्ये आत्मनि हीने रिपौ सस्यादिसंपन्ने च परराष्ट्रे मार्गशीर्षः यात्राकालः

[2]धान्येक्षुतृणतोयैश्च संपन्नं परमण्डलम् ।
हीनवाहनपुंस्त्वं तु मत्वैतत् प्रविशेन्नृपः ॥
मासे सहसि यात्रार्थी कृतपुण्याहघोषवान् ।
विधिवद्यानकं कुर्याद्व्यूहे रक्षयन् बलम् ॥

## मत्स्यपुराणम्

देशकालोपपन्ना यात्रा, शत्रोः प्रतिकूलानि आत्मनश्चानुकूलानि दैवचिह्नानि ऐहिकलक्षणानि च वीक्ष्य यात्रासमयनिर्णयः

मनुरुवाच–
[3]इदानीं सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
यात्राकालविधानं मे कथयस्व महीक्षिताम् ॥
मत्स्य उवाच–
[4]यदा मन्येत नृपतिराक्रन्देन बलीयसा ।
पार्ष्णिग्राहाभिभूतोऽरिस्तदा यात्रां प्रयोजयेत् ॥

---

* अस्य व्याख्यानसंग्रहः शेषः स्थलादिनिर्देशश्च ' षाड्गुण्यम्– यानम् ' इत्यस्मिन् प्रकरणे (पृ. २१७०) द्रष्टव्यः ।

(१) यास्मृ. १।३४८. (२) बृपसं. १२।२५–२६.

(३) मत्स्य. २४०।१ ; विध. २।१६३।१ मनु (राम) इदानीं (भगवन्) विशारद (विदां वर) ; राप्र. ३२९ मनु (राम) प्रथमचरणे (भगवन् धर्मशास्त्रज्ञ) विष्णुधर्मोत्तरे मात्स्ये च.

(४) मत्स्य. २४०।२ ; विध. २।१६३।२ मत्स्य (पुष्कर) तृतीयचरणे (पार्ष्णिग्राहेऽभिभूणा तं) ; अग्नि. २२८।१ मत्स्य (पुष्कर) ऽरिस्त (मे त) ; राक. ११५ ऽरिस्त (ऽयं त) ; राप्र. ३२९ मत्स्य (पुष्कर) विष्णुधर्मोत्तरे मात्स्ये च.

[1]योधान् मत्वा प्रभूतांश्च प्रभूतं च बलं मम।
मूलरक्षासमर्थोऽस्मि तदा यात्रां प्रयोजयेत्॥

मूलं स्वदेशः। राप्र. ३२९

[2]अशुद्धपार्ष्णिर्नृपतिर्न तु यात्रां प्रयोजयेत्।
पार्ष्णिग्राहाधिकं सैन्यं मूले निक्षिप्य च व्रजेत्॥

[3]चैत्र्यां वा मार्गशीर्ष्यां वा यात्रां यायान्नराधिपः।
चैत्र्यां पश्येच्च नैदाघं हन्ति पुष्टिं च शारदीम्॥

इदमुपलक्षणम्। अन्याऽपि ज्योतिःशास्त्रोक्ता सर्वाऽपि कालशुद्धिर्ग्राह्या। राप्र. ३३१

[4]एतदेव विपर्यस्तं मार्गशीर्ष्यां नराधिपः।
शत्रोर्वा व्यसने यायात् काल एव सुदुर्लभः॥

[5]दिव्यान्तरिक्षक्षितिजैरुत्पातैः पीडितं परम्।
षडक्षपीडासंतप्तं पीडितं च तथा ग्रहैः॥

[1]ज्वलन्ती च तथैवोल्का दिशं यां च प्रपद्यते।
भूकम्पोल्कादि संयाति यां च केतुः प्रसूयते॥

[2]निर्घातश्च पतेद्यत्र तां यायाद् वसुधाधिपः।
स्वबलव्यसनोपेतं तथा दुर्भिक्षपीडितम्॥

[3]संभूतान्तरकोपं च क्षिप्रं प्रायादरिं नृपः।
यूकामाक्षीकबहुलं बहुपङ्कं तथाऽऽविलम्॥

[4]नास्तिकं भिन्नमर्यादं तथाऽमङ्गलवादिनम्।
अपेतप्रकृतिं चैव निःसारं च तथा जयेत्॥

एतादृशं यदा परसैन्यं तदा यायादित्यनुषङ्गः। राप्र. ३३०

[5]विद्विष्टनायकं सैन्यं तथा भिन्नं परस्परम्।
व्यसनासक्तनृपतिं बलं राजाऽभियोजयेत्॥

---

(१) मत्स्य. २४०।३ ; विध. २।१६३।३ प्रथमचरणे (पुष्टा मेऽद्य भृता भृत्या) ; अग्नि. २२८।२ प्रथमचरणे (पुष्टा योधा भृता भृत्याः) चतुर्थचरणे (तैर्वृत्वा शिबिरे व्रजेत्) ; राप्र. ; ३२९ प्रथमचरणे (उच्छ्रायो वा भृता भृत्याः) विष्णुधर्मोत्तरे मात्स्ये च.

(२) मत्स्य. २४०।४ ; विध. २।१६३।४ च (वा) उत्त. ; राक. ११६ उत्त. ; राप्र. ३२९ च (वा) विष्णुधर्मोत्तरे मात्स्ये च.

(३) मत्स्य. २४०।५ ; विध. २।१६३।४–५ चैत्र्यां (चैत्रं) शीर्ष्यां (शीर्षे) उत्तरार्धे (चैत्र्यां सस्यं हि नैदाघं हन्ति पुष्टिं च शारदम्॥) ; राप्र. ३३१ चैत्र्यां (चैत्रे) शीर्ष्यां (शीर्षे) पू. विष्णुधर्मोत्तरे.

(४) मत्स्य. २४०।६ ; विध. २।१६३।५-६ ; अग्नि. २२८।३ चतुर्थचरणे (दैवाद्यैः पीडितं परम्) उत्त. ; राप्र. ३२९ एव (एष) उत्त.

(५) मत्स्य. २४०।७ ; विध. २।१६३।६–७ परम् (भृशम्) तृतीयचरणे (षड्क्षपीडनात् तृप्तं) ; राक. ११६ षडक्ष (तमृक्ष) तथा (यथा) ; राप्र. ३२९ षडक्ष (तमृक्ष) विष्णुधर्मोत्तरे मात्स्ये च.

(१) मत्स्य. २४०।८ ; विध. २।१६३।७–८ ज्वलन्ती च (प्रज्वलन्ति) यां च (यस्य) उत्तरार्धे (भूकम्पो यां दिशं याति यां च केतुः प्रधूमयेत्॥) ; अग्नि. २२८।३ उत्तरार्धे (भूकम्पो यां दिशं याति यां च केतुर्व्यदूषयत्॥) उत्त. ; राप्र. ३३० ज्वलन्ती च (प्रज्वलन्ति) दिशं यां च (दिशि यस्यां) शेषं विधवत्, विष्णुधर्मोत्तरे.

(२) मत्स्य. २४०।९ ; विध. २।१६३।८–९ श्पतेद्य (श्रूयते य) ; राक. ११६ उत्त. ; राप्र. ३३० पू. विष्णुधर्मोत्तरे : ३२९ उत्त. विष्णुधर्मोत्तरे मात्स्ये च.

(३) मत्स्य. २४०।१० ; विध. २।१६३।९–१० प्राया (याया) माक्षी (मक्षि) पङ्कं (विघ्नं) ; राक. ११६ प्राया (याया) पू. ; राप्र. ३२९ सर्वं राकवत्, विष्णुधर्मोत्तरे मात्स्ये च : ३३० उत्तरार्धे (यूकामाक्षिकबहुलं बहुरोगाकुलं तथा॥) उत्त. विष्णुधर्मोत्तरे.

(४) मत्स्य. २४०।११ ; विध. २।१६३।१०–११ वादिनम् (वादि च) निःसारं (निराशं) ; राप्र. ३३० निःसारं (निराशं) जयेत् (जये), विष्णुधर्मोत्तरे.

(५) मत्स्य. २४०।१२ ; विध. २।१६३।११–१२ विद्विष्टनायकं (विष्टिनायककं) भिन्नं (भिन्न) ऽभि (नि) द्वितीयार्धानन्तरम् + (गच्छेत्तु पश्चाद्भंग्ज पुरस्तात्तु विगर्हितैः॥) ; राप्र. ३३० विद्विष्टनायकं (विष्टिनायककं) पू., विष्णुधर्मोत्तरे.

विष्टिनायककम्– विष्टिः बलादाकृष्टः कर्मकरः, स नायको यत्र तादृशम्। राप्र. ३३०

[1]सैनिकानां न शस्त्राणि स्फुरन्त्यङ्गानि यत्र च।
दुःस्वप्नानि च पश्यन्ति बलं तदभियोजयेत्॥
उत्साहबलसंपन्नः स्वानुरक्तबलस्तथा।
तुष्टपुष्टबलो राजा परानभिमुखो व्रजेत्॥
[2]शरीरस्फुरणे धन्ये तथा दुःस्वप्ननाशने।
निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत्॥

सुस्वप्नदर्शने यात्रा उक्ता– शरीरेति। राप्र. ३३३

[3]ऋक्षेषु षट्सु शुद्धेषु ग्रहेष्वनुगुणेषु च।
प्रश्नकाले शुभे जाते परान् यायान्नराधिपः॥
एवं तु दैवसंपन्नस्तथा पौरुषसंयुतः।
देशकालोपपन्नां तु यात्रां कुर्यान्नराधिपः॥
स्थले नक्रस्तु नागस्य तस्यापि स जले वशे।
उलूकस्य निशि ध्वाङ्क्षः स च तस्य दिवा वशे॥
[4]एवं देशं च कालं च ज्ञात्वा यात्रां प्रयोजयेत्।
पदातिनागबहुलां सेनां प्रावृषि योजयेत्॥

कालविशेषेण सेनायां विशेष उक्तः–पदातीत्यादिना। राप्र. ३९७

[5]हेमन्ते शिशिरे चैव रथवाजिसमाकुलाम्।
खरोष्ट्रबहुलां सेनां तथा ग्रीष्मे नराधिपः॥

---

(१) मत्स्य. २४०।१३–१४.

(२) मत्स्य. २४०।१५; अग्नि. २२८।४–५ दुःस्वप्ननाशने (सुस्वप्नदर्शने); राक. ११६ अग्निवत्; राप्र. ३३३ अग्निवत्.

(३) मत्स्य. २४०।१६–१८.

(४) मत्स्य. २४०।१९; अग्नि. २२८।५ उत्त.; राक. १२३ उत्त.; राप्र. ३९७ उत्त.

(५) मत्स्य. २४०।२०; अग्नि. २२८।६ पू.; राक. १२३; राप्र. ३९७.



[1]चतुरङ्गबलोपेतां वसन्ते वा शरद्यथ।
सेना पदातिबहुला यस्य स्यात् पृथिवीपतेः॥
[2]अभियोज्यो भवेत्तेन शत्रुर्विषममाश्रितः।
गम्ये वृक्षावृते देशे स्थितं शत्रुं तथैव च॥
[3]किंचित्पङ्के तथा यायाद् बहुनागो नराधिपः।
रथाश्वबहुलो यायाच्छत्रुं समपथस्थितम्॥
[4]तमाश्रयन्तो बहुलास्तांस्तु राजा प्रपूजयेत्।
खरोष्ट्रबहुलो राजा शत्रुबन्धेन संस्थितः॥
[5]बन्धनस्थोऽभियोज्योऽरिस्तथा प्रावृषि भूभुजा।
हिमपातयुते देशे स्थितं ग्रीष्मेऽभियोजयेत्॥
[6]यवसेन्धनसंयुक्तः कालः पार्थिव हैमनः।
शरद्वसन्तौ धर्मज्ञ कालौ साधारणौ स्मृतौ॥

---

(१) मत्स्य. २४०।२१; अग्नि. २२८।६–७ यथ (न्मुखे) चतुर्थचरणे (शत्रूञ्जयति सर्वदा); राक. १२३ रङ्ग (र्विध); राप्र. ३९७ राकवत्.

(२) मत्स्य. २४०।२२; राक. १२३ गम्ये (रम्ये); राप्र. ३९७ षम (षय).

(३) मत्स्य. २४०।२३; राक. १२३ च्छत्रुं (त्क्षेत्रं) थस्थितम् (थाश्रयम्); राप्र. ३९७ थस्थितम् (थाश्रयम्).

(४) मत्स्य. २४०।२४; राक. १२३ (जलाश्रयं नौबहुलस्तथा राजा रिपूञ्जयेत्। खरोष्ट्रबहुलो राजा शत्रुं बन्धनसंस्थितम्॥); राप्र. ३९७ (जलाश्रयं नौबहुलस्तथा राजा रिपुं जयेत्। खरोष्ट्रबहुलो राजा शत्रुं च वनसंस्थितम्॥).

(५) मत्स्य. २४०।२५; राक. १२३–१२४ स्थोऽभि (स्थोऽपि) रिस्तथा (रिः सदा); राप्र. ३९७ बन्धन (न वन) रिस्तथा (रिः सदा).

(६) मत्स्य. २४०।२६; राक. १२४ युक्तः कालः (युक्तं काले) हैमनः (हैमजे); राप्र. ३९७ युक्तः कालः (युक्तं काले) हैमनः (हैमने) स्मृतौ (मतौ).

[1]विज्ञाय राजा द्विज देशकालौ
दैवं त्रिकालं च तथैव बुद्ध्वा ।
यायात् परं कालविदां मतेन
संचिन्त्य सार्धं द्विजमन्त्रविद्भिः ॥

## अग्निपुराणम्

अभियानयोग्या शत्रुस्थितिः

[2]यायादरिं व्यसनिनं निष्फले दूतचेष्टिते ।
प्रकृतिव्यसनं यत्स्यात्तत्समीक्ष्य समुत्पतेत् ॥

## कामन्दकीयनीतिसारः

अप्रतिमशक्तिसंपन्ने व्यसनमुक्ते आत्मनि व्यसनग्रस्ते व्यसनमुक्ते वा शत्रौ च देशकालविशेषान् विचिन्त्य यात्राकालनिर्णयः

[3]नानाप्रकारैर्व्यसनैर्वियुक्तः
शक्तित्रयेणाप्रतिमेन युक्तः ।
परं दुरन्तव्यसनोपपन्नं
यायान्नरेन्द्रो विजयाभिकाङ्क्षी ॥

(१) एवं यथोक्तव्यसनविनिर्मुक्तः परं व्यसनिनं कथं यायात् अभियुञ्जीत वेति अस्मिन् सर्गे यानशेषभूतमभियास्यतां यात्राभियोक्तृप्रदर्शनमुच्यते— शक्त्यादीनामानुकूल्येन यात्रायाः, स्वव्यापारतया अभियोक्तुः । तत्र त्रिचत्वारिंशता श्लोकैर्यात्रा प्रदर्श्यते— नानेत्यादि । शक्तिग्रहणमुपलक्षणार्थम्, शक्तिदेशकालादिना युक्त इत्यर्थः । अप्रतिमेन परस्मादुत्कृष्टेन, यदा परोऽपि शक्त्यादियुक्तः स्यात् । जम.

(२) व्यसनविहीनस्य विजिगीषोः कार्यमाह— नानाप्रकारैरिति । विजयाभिकाङ्क्षी विजिगीषुः नरेन्द्रः नानाप्रकारैः पूर्वनिरूपितैः व्यसनैः व्यस्यन्ति निराकुर्वन्ति श्रेयांसि यानि तानि तैः विमुक्तः विरहितः सन् अप्रतिमेन असामान्येन शक्तित्रयेण प्रभुशक्तिमन्त्रशक्त्युत्साहशक्तिरूपेण युक्तः विशिष्टश्च सन् दुरन्तव्यसनोपपन्नं दुरपनेयप्रकृतिसप्तकव्यसनदूषितं परं यातव्यं यायात् विजयार्थम् । उनिसा.

[1]प्रायेण सन्तो व्यसने रिपूणां
यातव्यमित्येव समादिशन्ति ।
तन्नैष पक्षो व्यसनं ह्यनित्यं
क्षमस्तु सन्नभ्युदितो हि यायात् ॥

(१) मतान्तरमाह— प्रायेणेत्यादि । सन्तः आचार्याः । तन्नैष पक्षः कौटिल्यस्य । अनित्यं कादाचित्कम् । स्वयं क्षम एव यायात् व्यसनिनमव्यसनिनं वा । कः पुनः क्षम इत्याह— अभ्युदित इति । शक्तिदेशकालाभ्युच्चितः, तस्यैव हि परं हन्तुं क्षमत्वात् । जम.

(२) सन्तः विपश्चितः प्रायेण रिपूणां विजेयानां व्यसने यातव्यं युद्धयात्रा कर्तव्या इत्यर्थः, इत्येव समादिशन्ति कथयन्ति । हि निश्चये । तत्र व्यसने विपक्षप्रकृतिसप्तकनिष्ठे व्यसने सति नित्यं नियतम् एष पक्षः । अवलम्बनीय इति शेषः । क्षमः समर्थश्चेत् अभ्युदितः अभ्युदययुक्तः सन् अभियायात् । शत्रोर्व्यसनाभावेऽपीति शेषः । 'तन्नैष पक्षो व्यसने हि नित्यम्' इत्यत्र 'तत्रैव पक्षो व्यसने हि नित्यम्' इति, 'तन्नैष पक्षो व्यसनं ह्यनित्यम्' इति च पाठान्तरम् । उनिसा.

[2]यदा क्षमस्तु प्रसभं निहन्तुं
पराक्रमादूर्जितमप्यमित्रम् ।
तदाऽपि यायाद्विहितानि कर्तुं
परस्य वा पीडनकर्शनानि ॥

(१) तदेव स्फुटयन्नाह— यदेत्यादि । निहन्तुम् उच्छेत्तुम् । ऊर्जितम् अभ्युच्चितमपीति । स हि नानात्मनो (?)

---

(१) मत्स्य. २४०।२७ ; राक. १२४ न्त्य सार्धं (न्त्यमानं) ; राप्र. ३९७ द्विज देश (हितदेश) शेषं राकवत्.

(२) अग्नि. २४१।१३.

(३) कानी. १६।१ ; उनिसा. वियुक्तः (विमुक्तः).

(१) कानी. १६।२ ; उनिसा. व्यसनं ह्यनित्यं (व्यसने हि नित्यं).

(२) कानी. १६।३ ; उनिसा. (द्विहिता) दहिता कर्तुं (कुर्वन्) कर्शना (कर्षणा).

मित्राणि च शक्त्यादिभिः परिच्छेद्य यायादिति । अगत्या कर्शनपीडनान्यपि विहितानि कर्तुं यदा क्षमः तदाऽपि यायात् । तथा चोक्तम्– 'प्रायश्चाऽऽचार्याः परव्यसने यातव्यमित्युपदिशन्ति । स्वशक्त्युपचये यातव्यम्, अनैकान्तिकत्वाद् व्यसनानामिति कौटिल्यः । यदा वा प्रयाता कर्शयितुमुच्छेत्तुं वा शक्नुयादमित्रं तदा यायात्' (कौ. ९।१) इति । जम.

(२) यदा ऊर्जितं प्रबलम् अमित्रं शत्रुं पराक्रमात् बलेन प्रसभं निहन्तुं क्षमः समर्थः तदा परस्य यातव्यस्य पीडनकर्षणानि पीडनं प्रपीडनं कर्षणं धनधान्यादीनामाकर्षणम् इत्यादीनि अहितानि अनिष्टाचरणानि कुर्वन् यायात् अभिगच्छेत् । 'पीडनकर्षणानि' इत्यत्र 'कर्षणपीडनानि' इति मुद्रितपाठः । उनिसा.

***'कालो गजानां सजलाभ्रजालो**
**यातुं तदन्यश्च तुरंगमानाम् ।**
**नात्यर्थवर्षोष्णतुषारयुक्तः**
**संपन्नसस्यस्त्विति कालसंपत् ॥**
**'रात्रावुलूको विनिहन्ति काकान्**
**काकोऽप्युलूकान् रजनीव्यपाये ।**
**इति स कालं समुदीक्ष्य यायात्**
**काले फलन्तीह समीहितानि ॥**

## शुक्रनीतिः

उत्तममध्यमाधमा ऋतवः, सुदैवचिह्ने अधिकबले चाऽऽत्मनि यात्राकालः, गोस्त्रीविप्रव्यसने न कालनियमः

**'शरद्धेमन्तशिशिरकालो युद्धेषु चोत्तमः ।**
**वसन्तो मध्यमो ज्ञेयोऽधमो ग्रीष्मः स्मृतः सदा ॥**

युद्धेषु शरत् हेमन्तः शिशिरकालश्च उत्तमः । वसन्तः मध्यमः ज्ञेयः । ग्रीष्मस्तु सदा अधमः स्मृतः । शुनीटी.

**वर्षासु न प्रशंसन्ति युद्धं साम स्मृतं तदा ॥**

वर्षासु युद्धं न प्रशंसन्ति । तदा वर्षास्वित्यर्थः, साम संधिः स्मृतम् । शुनीटी.

**युद्धसंभारसंपन्नो यदाऽधिकबलो नृपः ।**
**मनोत्साही सुशकुनोत्पाती कालस्तदा शुभः ॥**

यदा नृपः युद्धसंभारसंपन्नः सङ्ग्रामसामग्रीपरिपुष्टः, अधिकबलः, मनोत्साही उत्साहान्वितमनाः । संधिरत्राऽऽर्षः । तदा सुशकुनोत्पाती सुशकुनानां सुलक्षणानां उत्पातः उत्पतनम् उदय इत्यर्थः, यस्मिन् तथाभूतः अत एव शुभः सुमङ्गलः कालः । सङ्ग्रामस्येति शेषः । शुनीटी.

**कार्येऽत्यावश्यके प्राप्ते कालो नो चेद्यदा शुभः ।**
**विधाय हृदि विश्वेशं गेहे भक्त्याऽन्वियात्तदा ॥**

यदा चेत् यदि शुभः कालः नो प्राप्यत इत्यर्थः, तदा अत्यावश्यके कार्ये प्राप्ते आपतिते हृदि हृदयरूपे गेहे विश्वेशं भक्त्या विधाय नु निधाय इयात् गच्छेत् । सङ्ग्रामायेति शेषः । शुनीटी.

**न कालनियमस्तत्र गोस्त्रीविप्रविनाशने ॥**

गोस्त्रीविप्रविनाशने गवां स्त्रीणां विप्राणां वा विनाशने सति तत्र युद्धे न कालनियमः । सर्वस्मिन्नेव काले सङ्ग्रामाय यायादिति भावः । शुनीटी.

## योगयात्रा

अनुकूलदेशकालविचारः, शरदृतुः वसन्तश्च यात्राकालः, रिपुदोषे न कालनियमः

**'उलूकस्य ध्वाङ्क्षो निशि बलिभुजां सोऽह्नि वशगः**
**स्थले नक्रं सिंहो मृगपमुदके हन्ति जलजः ।**
**अबुद्ध्वा यः कालं व्रजति नृपतिर्देशमथवा**
**हते दर्पे वाक्यं स्मरति विदुषां सोऽरिवशगः ॥**

---

* अनयोः श्लोकयोर्व्याख्यानम् 'अभियास्यतो राज्ञः कर्तव्यानि' इत्यस्मिन् प्रकरणे द्रष्टव्यम् ।

(१) कानी. १६।३६.

(२) कानी. १६।३७ ; उनिसा. काकान् (काकं) लूकान् (लूकं) समुदी (प्रसमी).

(३) शुनी. ४।७।२२४–२२८.

(१) योया. १।९.

[1]यात्रा नृपस्य शरदीष्टफला मधौ च
छिद्रे रिपोर्न नियमोऽत्र च केचि-
दाहुः ॥
[2]कालोऽभ्युपैति सकृदेव परं कथंचित्
प्राप्नोति तन्न समयं खलु काल-
काङ्क्षी ।
कालेन गोचरगताननन( ? नु )पेक्ष्य
भक्षान्
मन्दक्रमोऽप्यजगरः समुपैति
सिद्धिम् ॥

(१) योया. ११९.
(२) योया. १।२१–२२.

दुर्गस्थितं फलमपक्वमनल्पयत्नात्
संसिद्धमप्युपकरोति गुणं न पुंसाम् ।
साधारणं स्वपतितं च भवेद् यतोऽतः
कालेऽभियुक्तपतितं रसवत्सुखाय ॥

## मानसोल्लासः

शरदि वसन्ते रिपुदोषे निमित्तानुकूल्ये च यात्रा

[1]शरत्काले वसन्ते वा रिपोर्नाशमु( ? श उ )प-
स्थिते ।
निमित्तं शकुनं लब्ध्वा यात्रां कुर्वीत भूपतिः ॥

(१) मासो. २।७४५.

# यात्रा- मुहूर्तविचारः

## महाभारतम्

यात्रायामशुभा ग्रहयोगाः

***[1]प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः ।**
**शनैश्चरः पीडयति पीडयन् प्राणिनोऽधिकम् ॥**

प्राजापत्यं रोहिणीनक्षत्रम् । प्रजानां पतिः दुर्योधनः, तदीयं नामनक्षत्रमुत्तराभाद्रपदाख्यमिति वा । तेन पत्युः पीडया प्राणिनामपि पीडेति युक्तम् । यद्वा, पृथ्वीकूर्मोदरस्थां रोहिणीं शनैश्चरः पीडयति । तेन मध्यदेशे महान् क्षयो राज्ञो नाशश्चेति भावः । नीटी.

**[2]कृत्वा चाङ्गारको वक्रं ज्येष्ठायां मधुसूदन ।**
**अनुराधां प्रार्थयते मैत्रं संशमयन्निव ॥**

ज्येष्ठामप्राप्य यदि भौमो वक्रीभवेत् तर्हि ज्येष्ठस्य राज्ञो ये मित्रभूतास्ते सर्वे नश्येयुरिति भावः । मैत्रं मित्रसमूहम् । संगमथन् नाशयन्, 'वैवस्वतं संगमनं जनानाम्' इत्यादौ संपूर्वस्य गमेर्मारणार्थत्वदर्शनात् । नीटी.

**[3]नूनं महद्भयं कृष्ण कुरूणां समुपस्थितम् ।**
**विशेषेण हि वार्ष्णेय चित्रां पीडयते ग्रहः ॥**

चित्रां ग्रहः महापाताख्यो ज्योतिःशास्त्रप्रसिद्धः । तेन राकारस्य वेधात् राजजातीयानां क्षयो भवितेति भावः । नीटी.

**[4]सोमस्य लक्ष्म व्यावृत्तं राहुरर्कमुपेष्यति ॥**

लक्ष्म व्यावृत्तम्, क्षीणत्वादमावास्यासांनिध्यात् । क्षीणचन्द्रोऽपि पाप एव । तस्मिंश्चामावास्यायामर्केण युक्ते उभयोः शत्रुः सदा वक्री राहुरर्कमुपैति चेदयं कर्तरीयोगः सोमवंश्यानां सूर्यवंश्यानां च राज्ञां क्षयकर इत्यर्थः । नीटी.

* केशवं प्रति कर्णोक्तिरियम् ।

(१) भा. ५।१४१।७ ; भामु. ५।१४३।८.

(२) भा. ५।१४१।८ ; भामु. ५।१४३।९ शम (गम)。 (३) भा. ५।१४१।९ ; भामु. ५।१४३।१०.

(४) भा. ५।१४१।१० ; भामु. ५।१४३।११ मुपेष्यति ( मुपैति च ).

## विष्णुधर्मोत्तरपुराणम्

यात्राकालनिर्णये दिगयनर्तुद्वारनक्षत्रतद्गतग्रहतिथ्यादिविवेकः इष्टानिष्टनिमित्तविवेकश्च

**श्रीपरशुराम उवाच–**

**[1]भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ।**
**जिगीषूणां समाचक्ष्व यात्राकालं महीक्षिताम् ॥**

**पुष्कर उवाच–**

**सर्वेषामेव वर्णानां यात्राकालं निबोध मे ।**
**अधिकृत्य महीनाथं विजिगीषोर्गुणान्वितम् ॥**
**पूर्वे कपाले पौरोऽर्कै यायी भवति चापरे ।**
**यायिग्रहौ शुक्रकुजौ शेषाः पौराः प्रकीर्तिताः ॥**
**पौरग्रहैर्बलोपेतैर्न यात्रां संप्रयोजयेत् ।**
**यायिग्रहबले राजा नित्यं यात्रां प्रयोजयेत् ॥**
**अस्तं गते नीचगते विवशे रिपुराशिगे ।**
**प्रतिलोमं च विध्वस्ते शुक्रे यात्रां विवर्जयेत् ॥**
**प्रतिलोमे बुधे यात्रा दिक्पतौ च तथा ग्रहे ।**
**विष्टौ वृष्ट्यां वाति वाते वात्यायां च विवर्जयेत् ॥**

**वैधृते च व्यतीपाते नागे च शकुनौ तथा ।**
**चतुष्पदे च किंस्तुघ्ने तथा यात्रां विवर्जयेत् ॥**
**विपत्करे नैधने च प्रत्यरौ भे च जन्मनि ।**
**गणे विवर्जयेद्यात्रां रिक्तायां च तिथावपि ॥**
**उदीची च तथा प्राची तयोरैक्यं प्रकीर्तितम् ।**
**पश्चिमा दक्षिणा या दिक् तयोरैक्यं तथैव च ॥**
**वाय्वग्निदिक्समुद्भूतं परिधिं तु न लङ्घयेत् ।**
**राम संवत्सराद्येषु सर्वेष्वेव महीपतिः ॥**

(१) विध. २।१७५।१–५६.

संवत्सरमदिक्प्राची परिपूर्वस्य दक्षिणा ।
तत्पूर्वस्यापरा ज्ञेया चानुपूर्वस्य दक्षिणा ॥
अद्वारस्तु विनिर्दिष्टस्तथा वत्सरसंज्ञितः ।
उत्तरायणगे सूर्ये प्राचीं यायाद्दिशं नृपः ॥
चन्द्रे च ब्राह्मणश्रेष्ठ पश्चिमां दक्षिणस्थिते ।
तयोरयनभेदेन यायात् सूर्यायनं दिवा ॥
रात्रौ चान्द्रायणं यायाद्या दिगुक्ता मया तव ।
वसन्त उत्तरद्वारे ग्रीष्मः प्राग्द्वारिकस्तथा ॥
शरच्च पश्चिमद्वारः शिशिरश्चोत्तरामुखः ।
हेमन्तः सर्वतोद्वारः प्रावृड्द्वारिका स्मृता ॥
नक्षत्रवद्देवताभिर्या यस्य तु दिगुच्यते ।
मासार्धेऽस्य महाभाग तथैव परिकीर्तिता ॥
आदित्यचन्द्रसौरार्क( ? रार )दिवसास्तु न शोभनाः ।
त एव चानुकूलस्य दिवसो न प्रशस्यते ॥
प्राग्द्वारो भास्करो ज्ञेयो दक्षिणेन तथा कुजः ।
पश्चिमेन शनैश्चारी उदग्द्वारस्तु चन्द्रमाः ॥
सर्वद्वाराः स्मृता राम जीवशुक्रेन्दुनन्दनाः ।
तेषां हि दिवसाः शस्ता विशेषेण गमिष्यताम् ॥
समागमे जितो यस्तु जीवो मित्रगृहे स्थितः ।
स्फुरणो रश्मिहीनश्च न प्रशंसन्ति तद्दिनम् ॥
उच्चस्थो मित्रगृहगः स्वक्षेत्रस्थश्च यो ग्रहः ।
विजयी रश्मिवान्स्थूलो दिनं तस्य प्रशस्यते ॥
कृत्तिकाद्यानि पूर्वेण मघाद्यानि च याम्यतः ।
मैत्राद्याः पश्चिमेनाथ वासवाद्यानि चाप्युदक् ॥
सर्वद्वाराणि तत्रापि दिवाद्यानि विनिर्दिशेत् ।
भवन्ति स्तम्भसंज्ञानि तानि दिङ्मध्यगानि च ॥
स्तम्भर्क्षाद्यानि पूर्वाणि तानि प्रावेशिकानि तु ।
निर्गमर्क्षाणि जानीयात् स्तम्भर्क्षादुत्तराणि तु ॥
प्रवेशभेषु दुष्टेषु यायिनां विजयं वदेत् ।
स्तम्भभेषु तु दुष्टेषु दुर्गाणां ग्रहणे तदा ॥
निर्गमर्क्षेषु दुष्टेषु नागराणां जयं वदेत् ।
ऋक्षे पापग्रहाक्रान्ते तथा चास्तमिते द्विज ॥
दग्धे च धूमिते वाऽपि रजसोपहतेऽथ वा ।
केतुना धूमिते वाऽपि परिविष्टेऽथ वा पुनः ॥
उत्पातदर्शनं च स्याद्येन चर्क्षेण भार्गव ।
संक्रान्तिर्वा ग्रहस्य स्याद्येन चास्तोदयौ तथा ॥
भिन्नश्चन्द्रमसा यश्च ग्रहेणान्येन वा पुनः ।
यन्नक्षत्रगतौ ग्रस्तौ स्यातां वा शशिभास्करौ ॥
न तेन नृपतिर्यायान्नक्षत्रेण कदाचन ।
अष्टवर्गानुकूलस्थचन्द्रे यात्रां प्रयोजयेत् ॥
पूर्वद्वारस्थिता नन्दा भद्रा दक्षिणतः स्थिता ।
जया च पश्चिमद्वारा रिक्ता चोदक्प्रकीर्तिता ॥
पूर्णा तु सर्वतोद्वारा तिथिरुक्ता महाभुज ।
नक्षत्रदेवतातुल्या मुहूर्तानां तु दिग्भवेत् ॥
त्रिदिग्द्वाराऽभिजिज्ज्ञेया दक्षिणेन विगर्हिता ।
प्राग्द्वाराः कथिता राम मेषसिंहधनुर्धराः ॥
तथा च पश्चिमद्वाराः कन्यामकरगोवृषाः ।
तुलामकरकुम्भाश्च ज्ञेयाः पश्चिमदिङ्मुखाः ॥
कीटवृश्चिकमीनाश्च तथा चोदक्प्रकीर्तिताः ।
लग्नेन दिङ्मुखं यत्नाज्ज्ञेयं प्राङ्मुखमंशकम् ॥
सौराः सर्वे प्रशस्यन्ते कालरोधं विवर्जयेत् ।
विशाखाद्यं भत्रितयं दीने सूर्ये विवर्जयेत् ॥
आषाढात्रितयं चन्द्रे तथा ब्राह्मणसंज्ञकम् ।
धनिष्ठाद्यत्रयं भौमे पौष्णाद्यत्रितयं बुधे ॥
रोहिण्याद्यं तथा जीवे पुष्याद्यं च तथा सिते ।
अर्यम्णाद्यं तथा सौरे प्रयत्नेन महाभुज ॥
मूलं च श्रवणं चैव आहिर्बुध्न्यं तथैव च ।
आग्नेयमथ चाऽऽदित्यं भाग्यं वायव्यमेव वा ॥
आदित्यादिदिनेष्वेते सिद्धियोगाः प्रकीर्तिताः ।
सिद्धियोगान् विशेषेण तिथिष्वपि निबोध मे ॥
ग्रहक्रमेण धर्मज्ञ सर्वकर्मसु सिद्धिदान् ।
द्वितीया च तृतीया च प्रतिपच्चाष्टमी तथा ॥
सप्तमी च चतुर्थी च पञ्चमी च तथा तिथिः ।
अन्याश्च सिद्धयोगेषु तिथयस्त्वं शृणु क्रमात् ॥

एकादशी च दशमी नवमी पञ्चदश्यपि ।
चतुर्दशी द्वादशी च तथा राम त्रयोदशी ॥
छायाप्रमाणं वक्ष्यामि सिद्धियोगेष्वतः क्रमात् ।
तत्र काले कृतं कर्म सकृत् संपद्यते ध्रुवम् ॥
आदित्ये विंशतिर्ज्ञेयाश्चन्द्रे षोडश कीर्तिताः ।
भौमे पञ्चदशैवोक्ताश्चतुर्दश तथा बुधे ॥
त्रयोदश तथा जीवे शुक्रे द्वादश कीर्तिताः ।
उदितेनोत्तरां गच्छेत् प्राचीं मध्यस्थिते रवौ ॥
दक्षिणामपराह्णे तु अर्धरात्रे तु पश्चिमाम् ।
जन्मराश्युदये यात्रा न प्रशस्ता महाभुज ॥
ताभ्यामुपचयर्क्षे तु यात्रा शस्ता तथा भवेत् ।
शेषेषु वर्जयेद्यात्रां भूतिकामो नराधिपः ॥
यात्रा शुभफला ज्ञेया सौम्यग्रहनवांशके ।
पापग्रहांशके यात्रां प्रयत्नेन विवर्जयेत् ॥
जन्मभे नैधने चैव तथाऽऽधाने विपत्करे ।
प्रत्यरौ भगणे यात्रां प्रयत्नेन विवर्जयेत् ॥
क्षेमे संपत्करे मैत्रे साधके चातिमैत्रके ।
कर्मभे च तथा यात्रा प्रशस्ता मनुजोत्तम ॥
दिव्यान्तरिक्षक्षितिजे दृष्टे राम महाद्भुते ।
सप्ताहं वर्जयेद्यात्रां प्रयत्नेन महाभुज ॥
लग्ने तु विबले यात्रां शून्ये केन्द्रे च वर्जयेत् ।
जन्मपे लग्नपे राम बलहीने विशेषतः ॥
दिक्पतावनुकूले तु शुभा यात्रा प्रकीर्तिता ।
संमुखे शक्रचापे तु यात्रां यत्नेन वर्जयेत् ॥
न च गच्छेत्तथा राम द्वाराभिहतमस्तकः ।
दृष्ट्वा द्रव्यममङ्गल्यं खिन्नचेतास्तथैव च ।
तुष्टे मनसि गन्तव्यं प्रयत्नेन महीभुजा ॥

त्रिकोणकेन्द्रोपगतास्तु सौम्याः
पापास्तथा चोपचयर्क्षसंस्थाः ।
भवन्ति लग्नस्य तु यस्य तेन
यात्रा प्रयुक्ता तु शुभावहा स्यात् ॥

## अग्निपुराणम्

यात्राकालनिर्णये ग्रहयोगदिङ्नक्षत्रद्वारच्छायामान-शकुनादिविवेकः

पुष्कर उवाच—

[1]सर्वयात्रां प्रवक्ष्यामि राजधर्मसमाश्रयात् ।
अस्तं गते नीचगते विकले रिपुराशिगे ॥
प्रतिलोमे च विध्वस्ते शुक्रे यात्रां विवर्जयेत् ।
प्रतिलोमे बुधे यात्रां दिक्पतौ च तथा ग्रहे ॥
वैधृतौ च व्यतीपाते नागे च शकुनौ तथा ।
चतुष्पादे च किंस्तुघ्ने तथा यात्रां विवर्जयेत् ॥
विपत्तारे नैधने च प्रत्यरौ चाथ जन्मनि ।
गण्डे विवर्जयेद् यात्रां रिक्तायां च तिथावपि ॥
उदीची च तथा प्राची तयोरैक्यं प्रकीर्तितम् ।
पश्चिमा दक्षिणा या दिक्तयोरैक्यं तथैव च ॥
वाय्वग्निदिक्समुद्भूतं परिघं न तु लङ्घयेत् ।
आदित्यचन्द्रसौरास्तु दिवसाश्च न शोभनाः ॥
कृत्तिकाद्यानि पूर्वेण मघाद्यानि च याम्यतः ।
मैत्राद्यान्यपरे चाथ वासवाद्यानि वाऽप्युदक् ॥
सर्वद्वाराणि शस्तानि च्छायामानं वदामि ते ।
आदित्ये विंशतिर्ज्ञेयाश्चन्द्रे षोडश कीर्तिताः ॥
भौमे पञ्चदशैवोक्ताश्चतुर्दश तथा बुधे ।
त्रयोदश तथा जीवे शुक्रे द्वादश कीर्तिताः ॥
एकादश तथा सौरे सर्वकर्मसु कीर्तिताः ।
जन्मलग्ने शक्रचापे संमुखे न व्रजेन्नरः ॥
शकुनादौ शुभे यायाज्जयाय हरिमास्मरन् ॥

## योगयात्रा

यात्रायां शुभाशुभग्रहयोगाः

[2]गुणैः समस्तैरपि संप्रयुक्ता
कन्येव यात्रा विगुणाय दत्ता ।
करोत्यकीर्तिं सुखवित्तहानिं
यात्रान्तरज्ञानजडस्य दातुः ॥

(१) अग्नि. २३३।१-११.
(२) योया. २।१४-१६.

गुणान्वितस्यैव गुणान् करोति
यात्रा शुभर्क्षग्रहलग्नयोगात् ।
व्यर्था सदोषस्य गुणान्विताऽपि
वीणेव शब्दाश्रयवर्जितस्य ॥

यात्रा विशुद्धाऽपि समं प्रवृत्ता
पात्रानुरूपाणि फलानि धत्ते ।
जगत्युदीर्णाऽपि तु कौशिकस्य
भा भानवी नैव तमः प्रमार्ष्टि ॥

[1]देहः कोशो योद्धा बाह्यं मन्त्रः शत्रुर्मार्गोऽथाऽऽयुः ।
चित्तं कर्म प्राप्तिर्मन्त्री प्राग्लग्नाद्या भावाश्चिन्त्याः ॥

त्रिलाभवर्जं रविसौरिभौमा
विघ्नन्ति नो कर्मणि सौरिभौमाः ।
पुष्णन्ति सौम्या रिपुराशिवर्जं
नास्तं भृगुर्मृत्युविलग्नमिन्दुः ॥

तिथ्युद्गमेन्दुकरणर्क्षदिनक्षणेषु
पापेष्वभीष्टफलदा नृपतेर्यथा स्यात् ।
यात्रा तथाऽपरमिदं कथयामि गुह्यं
शिष्याय नैतदचिराध्युषिताय दद्याः ॥

योगैः क्षितिपा विनिर्गताः
शकुनैस्तस्करचारणादयः ।
नक्षत्रगुणैर्द्विजातयः
क्षणवीर्यादितरो जनोऽर्थभाक् ॥

यद्वद्योगवशाद्व्रजत्यगदतां द्रव्यैर्विषं योजितं
संयुक्तं मधुना घृतं च विषतां गच्छद्यथा दृश्यते ।
तद्वद्योगसमुद्भवं प्रकुरुते हित्वा ग्रहः स्वं फलं
यस्मात्तेन समुद्यतोऽस्मि गदितुं योगान्विचित्रानिमान् ॥

(१) योया. ४१।१–५८.

अथ योगाः–

लग्ने गुरुर्बुधभृगू हिबुकात्मजस्थौ
षष्ठे कुजार्कतनयौ दिनकृत्तृतीये ।
चन्द्रश्च यस्य दशमे भवति प्रयाणे
तस्याभिवाञ्छितफलातिरलं नृपस्य ॥

होरातृतीयरिपुलाभगतैः क्रमेण
जीवार्कभौमरविभिर्भृगुजेऽनुकूले ।
यातोऽतिदृप्तमपि शत्रुबलं निहन्ति
नैशं तमिस्रमिव तिग्ममयूखमाली ॥

उदयारिनभस्थलगैर्दिनकृद्यमशीतकरैः ।
न भवन्त्यरयोऽभिमुखा हरिणा इव केसरिणः ॥

गुरुरुदये रिपुराशिगतोऽर्को
यदि निधने न च शीतमयूखः ।
भवति गतोऽत्र शशीव नरेन्द्रो
रिपुवनिताननतामरसानाम् ॥

शुक्रवाक्पतिबुधैर्धनसंस्थैः
सप्तमे शशिनि लग्नगतेऽर्के ।
निर्गतो नृपतिरेति कृतार्थो
वैनतेयवदरीन् विनिगृह्य ॥

मूर्तिवित्तसहजेषु संस्थिताः
शुक्रचन्द्रसुततिग्मरश्मयः ।
यस्य यानसमये रणानले
तस्य यान्ति शलभा इवारयः ॥

सूर्येन्दू बलवर्जितौ बलयुतौ जन्मेशलग्नेश्वरौ
पाताले दशमेऽपि वा शशिसुतो लग्नस्थितो वाक्पतिः ।
षट्सप्ताष्टमवर्जितेषु भृगुजः स्थानेषु यस्य स्थितो
यातुस्तस्य न विद्विषो रणमुखे तिष्ठन्ति योषा इव ॥

सौरे भौमे लग्नगेऽर्के स्वमध्ये
कर्मण्याये भार्गवे चन्द्रजे च ।
यायाद्भूपः शत्रुदेशं निहन्तुं
दृप्तं शत्रुं कालवत्क्रूरचेष्टः ॥

लाभशत्रुसहजेषु यमारौ
सौम्यशुक्रगुरवो बलयुक्ताः ।
गच्छतो यदि ततोऽस्य धरित्री
सागराम्बुरसना वशमेति ॥

पापास्तृतीये हिबुके सितज्ञौ
जीवो विलग्ने मृगलाञ्छनोऽस्ते ।
यस्योद्यमे तस्य बलं रिपूणां
कृतं कृतघ्नेष्विव याति नाशम् ॥

चन्द्रेऽस्तगे देवगुरौ विलग्ने
ज्ञशुक्रयोः कर्मणि लाभगेऽर्के ।
सौरारयोर्भ्रातृगयोश्च यातो
नृपः स्वभृत्यानिव शास्ति शत्रून् ॥

गुरौ विलग्ने यदि वा शशाङ्के
षष्ठे रवौ कर्मगतेऽर्कपुत्रे ।
सितज्ञयोर्बन्धुसुतस्थयोश्च
यात्रा जनित्रीव हितानि धत्ते ॥

पत्यौ गिरां लग्नगतेऽवशेषै-
रेकादशार्थोपगतैर्थियासोः ।
विदार्यते शत्रुबलं समन्ताद्
धर्मो यथा हेतुशतैर्युगान्ते ॥

त्रिषड्नवान्त्येष्वबलः शशाङ्क-
श्चान्द्रिर्बली यस्य गुरुश्च केन्द्रे ।
तस्यारियोषाभरणैः प्रियाणि
प्रियाः प्रियाणां जनयन्ति सैन्ये ॥

केन्द्रोपगतेन वीक्षिते
गुरुणा त्र्यायचतुर्थगे सिते ।
पापैरनवाष्टसप्तगै-
र्वसु किं तन्न यदाप्नुयाद्गतः ॥

लग्नारिकर्महिबुकेषु शुभेक्षिते ज्ञे
द्यूनान्त्यलग्नरहितेष्वशुभग्रहेषु ।
यातुर्भयं न भवति प्रतरेत्समुद्रं
यद्यश्मना किमुत शत्रुसमागमेषु ॥

यस्योदयास्तारिचतुस्त्रिसंस्थाः
शुक्राङ्गिरोङ्गारकसौम्यसौराः ।
द्विषद्वलस्त्रीवदनानि तस्य
क्लान्तानि कान्ता न विलोकयन्ति ॥

पूर्वोक्तयोगे धनगो बुधश्चेत्
शशाङ्कसूर्यौ च दशायसंस्थौ ।
अस्मिन्गतस्यालिकुलोपगीता
नानावनोत्था द्विरदा भवन्ति ॥

सूर्यादयोऽरिसहजाम्बरशत्रुलग्न-
बन्ध्वायगाः सुरगुरोर्दिवसश्च
यस्य ।
यानेऽरिसैन्यमुपगच्छति तस्य नाशं
मीमांसकः श्रवणकेष्विव तीर्थ-
पुण्यम् ॥

त्रिनिधनतनुसप्तमारिसंस्थाः
कुजसितजीवबुधा रविश्च यस्य ।
खलजनजनितेव लोकयात्रा
न भवति तस्य चिराय शत्रुसेना ॥

कुजरविजयुतेऽरिभे गतानां
बलसहजोपगतैः सितार्कजीवैः ।
रिपुबलमुपयाति नाशमाशु
श्रुतमधनस्य कुटुम्बचिन्तयेव ॥

लग्नत्रिधर्मारिदशायगेषु
सितार्कजीवेन्दुकुजेन्दुभेषु ।
सार्के बुधे चारिबलं विनाश-
मायाति गुह्यं पिशुनेष्विवोक्तम् ॥

एकान्तरर्क्षे भृगुजात्कुजाद्वा
सौम्ये स्थिते सूर्यसुताद्गुरोर्वा ।
प्रध्वंसतेऽरिर्न चिराद्गतस्य
वेषाधिको भृत्य इवेश्वरस्य ॥

निरन्तरं यदि भवनेषु पञ्चसु
ग्रहाः स्थिता दिवसकरेण वर्जिताः ।
यियासतो यदि च भवन्ति पृष्ठत-
स्तदा परान् बलभिदिवावकृन्तति ॥

एकान्तरा यदि गता भवनेषु षट्सु
पृष्ठस्थितश्च सुरशत्रुगुरुः प्रयाणे ।
यातस्य नात्र रिपवो विषहन्ति वीर्यं
विष्णोरिवोद्यतगदा रथपादपाणेः ॥

भृगुपुत्रमहेन्द्रगुरू गमने
सहितौ यदि भं युगपत्त्यजतः ।
ज्ञगुरू यदि वांऽशकमेकमितौ
समरेऽमरराडिव भाति तदा ॥

निस्त्रिंशवक्रोपगते च वक्रे
वक्रेण वक्रं नृपतिर्निहन्यात् ।
पानप्रसक्तं निशि वा प्रसुप्तं
तस्यैव चाऽऽस्ते यदि वांऽशकः
स्यात् ॥

पुत्रो धरित्र्या दिनकृत्सुतश्च
यदा त्यजेतां युगपन्नवांशम् ।
तदा ह्यवस्कन्दगतो नरेन्द्रो
भुङ्क्ते रिपूंस्तार्क्ष्य इव द्विजिह्वान् ॥

बुधभार्गवमध्यगते हिमगौ
हिबुकोपगते च नृपः प्रवसन् ।
पुरुहूतदिशं यदि वाऽन्तकृतः
पुरुहूतयमप्रतिमो भवति ॥

सितेन्दुजौ चतुर्थगौ निशाकरश्च सप्तमे ।
यदा तदा गतो नृपः प्रशास्त्यरीन् विना
रणात् ॥

शशिनि चतुर्थगृहं समुपेते
बुधसहितेऽस्तगते भृगुपुत्रे ।
गमनमवाप्य पतिर्मनुजानां
जयति रिपून्समरेण विनैव ॥

क्षितितनययुतान्नवांशकाद्
यदि शतगो भृगुजोऽथवा गुरुः ।
शतगुणमपि हन्त्यरेर्बलं
विषमिव कायमसत्कृपथोपगम् ॥

शतांशकादूर्ध्वमवस्थिते बुधे
यमारयोस्तत्र गतस्य भूभृतः ।
प्रयाति नाशं समरे द्विषद्बलं
यथाऽर्थिभावोपगतस्य गौरवम् ॥

नक्षत्रमेकं युगपत्प्रविष्टौ
यदा धरित्रीतनयामरेज्यौ ।
कुर्यात्तदाऽन्तं द्विषतां बलस्य
द्रौणिर्यथाऽरेर्निशि सौप्तिकेन ॥

ऋक्षं गुरुज्ञौ बुधभार्गवौ वा
यदा प्रविष्टौ युगपत्समेतौ ।
अर्थानवाप्नोति तदा विचित्रां-
श्छात्रः सुतीर्थाद्गुरुपूजयेव ॥

यात्रादिगीशाद्यदि पञ्चमेऽन्यो
गृहे ग्रहो वीर्ययुतोऽवतिष्ठेत् ।
समुद्यताशाकथितानि भङ्क्त्वा
फलानि वीर्यान्नयति स्वकाष्ठाम् ॥

एकोऽपि जीवज्ञसितासितानां
कुजात्त्रिकोणे रवितोऽथवेन्दुः ।
यत्रोद्यतस्तत्र न याति याता
तयोर्बलीयान्नयति स्वकाष्ठाम् ॥

जन्मोदयर्क्षे हिबुकास्तसंस्थं
यस्याशुभैर्दृष्टयुतं न सौम्यैः ।
स शाण्डिलीं प्राप्य यथा गरुत्मान्
दैन्यं गतोऽभ्येति हृतस्वपक्षः ॥

होराष्टमे जन्मगृहाष्टमे वा
स्याच्छत्रुभाच्छत्रुगृहोदये वा ।
तद्राशिपैर्वा गमनं विलग्ने
तुल्यं नराणां विषभक्षणेन ॥

रिपुनिधनविलग्ने स्वात्त्रिषड्लाभगे वा
बलवति भवनेशे स्वे कृशे शत्रुपक्षे ।
अनभिमुखदिगीशे दिक्पतौ स्वस्थिते वा
व्रजति यदि यथेष्टं प्राप्नुयात्तत्र
याता ॥

केन्द्रत्रिकोणेषु शुभाः प्रशस्ता-
स्तेष्वेव पापा न शुभप्रदाः स्युः ।
पापोऽपि कामं बलवान्नियोज्यः
केन्द्रेषु शून्यं न शिवाय लग्नम् ॥

केन्द्रेषु शून्येष्वबले च चन्द्रे
सौम्यैर्गता वीर्यविवर्जितैश्च ।
दत्ता गयायामिव जारजातैः
पिण्डाः पितॄणां क्षितिपा भ्रमन्ति ॥

सौम्यैश्च पापैश्च चतुष्टयस्थैः
कृच्छ्रेण सिद्धिं समुपैति याता ।
प्रपातयानप्रतिघातवक्रा
नदीव धात्रीधरकन्दरेषु ॥

गुरौ विलग्ने भृगुजेऽरिसंस्थे
चन्द्रेऽष्टमे हन्ति गतोऽरिसेनाम् ।
वृष्टिं यथा दक्षिणमार्गचारी
रूक्षो यदा ह्रस्वतनुश्च शुक्रः ॥

सिंहाजतौलिमिथुनं मृगकर्कटौ च
स्वेशान्विता भवति यस्य शनिश्च लग्ने ।
तत्सैनिकाः परबलं क्षपयन्ति यातु-
र्मूर्खस्य वित्तमिव चारणचाटचक्षाः ॥

उदये गुरुसौम्यभार्गवैः
सहजेऽर्कार्किकुजैश्च गच्छतः ।
न भवन्त्यरयो रणे स्थिराः
कितवानामिव वित्तसंचयाः ॥

जातकोक्तनृपयोगगतानां
प्रतिदिनं भवति राज्यविवृद्धिः ।
वातघूर्णितमिवार्णवयानं
परबलं हि समुपैति विनाशम् ॥

होराश्रिते देवगुरौ प्रयाता
क्रूरग्रहैः कर्मणि लाभगैर्वा ।
कृत्वा रिपूणां क्षयमक्षताङ्गः
क्षयं क्षितीशोऽक्षयकोश ऐति ॥

लाभार्थलग्नेषु शुभो रविः खे
यस्याऽऽरसौरौ सहजेऽरिभे वा ।
तस्यार्थकोशः समुपैति वृद्धिं
लोभो यथा प्रत्यहमर्थवृद्ध्या ॥

स्वोच्चोपगैर्जीवकुजार्कजार्कै-
रेभिस्त्रिभिर्वा कथितैकलग्ने ।
राज्ञः प्रणाशं समुपैति शत्रुः
सौख्यं द्विभार्यस्य यथाऽधनस्य ॥

एकोऽपि जीवार्ककुजार्कजानां
स्वोच्चे विलग्ने स्वगृहे यदीन्दुः ।
यातस्य यात्यत्र परः प्रणाशं
महाकुलानीव कुटुम्बभेदैः ॥

लग्नाच्चतुर्थेऽतिबले शशाङ्के
योगाद्विना चन्द्रबलेन यातः ।
लब्ध्वाऽपि लक्ष्मीं बहुरत्नपूर्णां
क्षिप्रं क्षयं याति यथा शशाङ्कः ॥

येषां गमे नवमपञ्चमकण्टकस्थाः
सौम्यास्तृतीयरिपुलाभगताश्च
पापाः ।
आयान्ति ते स्वभवनानि पुनः कृतार्था
दत्ता द्विजातिषु पुरा विधिवद्यथा-
ऽर्थाः ॥

[1]पूर्वादितस्त्रिपरिवर्तगतैरजाद्यै-
र्भैः सप्तकैरनलभाच्च गमो जयाय ।
वाय्वग्निदिक्स्थपरिघस्य समाधेगैश्च
मैत्राश्विहस्तगुरुभेषु च सर्वदिक्षु ॥

पूर्वेणेन्द्रं दक्षिणेनाजपादं
रोहिण्योऽतश्चार्यमाख्यं च शूलम् ।
कामं यायात्सांपरायेषु कार्ये-
ष्वद्वारेषु प्रोज्झ्य शूलानि तानि ॥

(१) योया. ५।१–३५.

विवर्जयेत्त्वाष्ट्रयमोरगाणा-
मर्धं द्वितीयं गमने जयेप्सुः ।
पूर्वार्धमाग्नेयमघानिलानां
स्वातिं मघां वोशनसः समस्ताम् ॥

उत्पातपापग्रहपीडिते भे
ये यान्ति भूरि ग्रहसंयुते वा ।
ते पूर्ववित्तान्यपि नाशयन्ति
धातुप्रसक्ता इव वार्तिकेन्द्राः ॥

रविसुतकुजराहुसौरचन्द्रा
ज्ञगुरुयुताः पुरतः क्रमाद्दिगीशाः ।
व्रजति यदि ललाटगे दिगीशे
पतति ततो द्रुमवत्सरित्तटस्थः ॥

यातोऽयनस्य प्रतिलोमकाष्ठां
यः स्यात्स्वतन्त्रोऽपि जितः परेषाम् ।
स केवलं व्याकरणाभियुक्तः
काव्यज्ञगोष्ठ्यामिव हास्यमेति ॥

अयनेन गतोऽर्कसोमयो-
र्द्युनिशं वा स्थितयोः पृथक् पृथक् ।
विदुषामिव सर्वशास्त्रवित्
समवाये द्विषतां विराजते ॥

तिथिं चतुर्थीं नवमीं चतुर्दशीं
विहाय विष्टिं करणं च गच्छतः ।
भवन्ति चामीकरवाजिवारणा-
श्चतुर्थिपूर्वाश्च तदाप्तिवारणाः ॥

ऋक्षे तिथौ वा व्यतिपातदुष्टे
यो याति मोहात्खलु वैधृते वा ।
स नाशमायात्यचिरेण याता
राजेव दैवज्ञविलोमचेष्टः ॥

आरोग्यमृक्षेण धनं क्षणेन
कार्यस्य सिद्धिस्तिथिना शुभेन ।
राश्युद्गमेनाध्वनि सिद्धिमाहुः
प्रायः शुभानि क्षणदाकरेण ॥

न राजते भूरिगुणान्वितापि
व्यर्थव्ययस्य क्षितिपस्य यात्रा ।
शुक्रे विनष्टे धनदर्पितस्य
विवाहयात्रेव जरार्दितस्य ॥

प्रतिशुक्रबुधाशनिवृष्टिहता
दिगधः कुरुते नृपतिं गमने ।
मदिरामुदिता मदनाकुलिता
प्रमदेव कुलं परवेश्मरता ॥

वीर्यान्वितैर्यायिभिरात्मभद्रैः
क्लेशाद्विना हन्ति चमूमरीणाम् ।
त्रैलोक्यलाभेऽप्यसमाप्तकार्यं
तृष्णां यथा चीरफलाम्बुतुष्टः ॥

सर्पिस्तिलोदनझषैः पयसा च भुक्त्वा
पूर्वादिवारणरथाश्वनरैर्गतस्य ।
सोढुं प्रतापमरयो न नृपस्य शक्ता
गन्धद्विपस्य कलभा इव दानगन्धम् ॥

एकतश्च सकलानि निमित्ता-
न्येकतश्च मनसः परिशुद्धिः ।
चेतसोऽस्ति सहयानरणे भी-
र्मारुतोऽपि विजयाजयहेतुः ॥

भूरिशूरवरवाजिकुञ्जरा
ज्ञातयुद्धगतयोऽभिमानिनः ।
क्वापि यान्ति धनतूलराशिव-
न्मारुताभिहतवक्षसोऽरयः ॥

अनुलोमगते प्रदक्षिणे
सुरभौ देहसुखेऽनिले गतः ।
तिमिराणि गभस्तिमानिव
प्रसभं हन्ति बलानि विद्विषाम् ॥

उपपत्तिरयत्नतो यदा
तृणपानाशनरत्नवाससाम् ।
प्रमदाक्षितिनागवाजिनां
विजयद्वारमपावृतं तदा ॥

लग्नस्य येंऽशा ह्युदिता ग्रहो य-
स्तेषु स्थितो लग्नफलं स धत्ते ।
यस्तानतीतः स भवेद्द्वितीयः
स्थानेषु शेषेष्वपि चिन्त्यमेतत् ॥

गतोऽनुकूलैर्ग्रहभाग्निमारुतै-
र्मनोब्दविद्युत्स्वनवृष्टिकार्मुकैः ।
रिपोः प्रमथ्नाति रणाजिरे चमूं
द्विपः समूलां सरसीव पद्मिनीम् ॥

दैवेन हीनः परभीषणार्थं
यातोऽतिकृच्छ्रेण नयत्यहानि ।
स्वशक्त्यतीतो नृपवेश्मनीव
कृत्वा प्रतिज्ञां प्रतिवादिभीतः ॥

दैवान्वितः साधुजनोपकारी
प्रभावमन्त्रोद्यमशक्तियुक्तः ।
भुङ्क्ते महीं सम्यगवाप्य यात्रां
ससह्यविन्ध्याचलपारियात्राम् ॥

गोचरेण शुभदः शशी न चे-
दष्टवर्गपरिशोधितोऽथवा ।
पूर्ववायुरिव पुष्पकालजो
यायिनां फलविनाशकृद्भवेत् ॥

आश्रित्य चेन्द्रस्य बलाबलानि
ग्रहाः प्रयच्छन्ति शुभाशुभानि ।
मनःसमेतानि यथेन्द्रियाणि
कर्मण्यतां यान्ति न केवलानि ॥

सर्वतः क्षुतमशोभनमुक्तं
गोक्षुतं मरणमेव करोति ।
केचिदाहुरफलं च बलाद्यद्
वृद्धपीनसितबालकृतं च ॥

शकुनतिथिभलाभे छत्रशय्यासनाढ्यं
पदमपि विजिगीषुश्चालयेच्छ्रद्दधानः ।
यदि शकुननिमित्तेऽस्य स्वचेतोविशुद्धि-
र्न भवति तदनिष्टं सर्वकार्येषु
यानम् ॥

दिनकृद्दिवसे तथांऽशके
यात्रालग्नगतेऽथवा रवौ ।
संतापयति स्मरातुरं
वेश्येवार्थविवर्जितं नरम् ॥

उदये शशिनोंऽशकेऽह्नि वा
भवति गतो न चिरेण दुर्मनाः ।
प्रमदामिव यातयौवनां
रत्यर्थं समवाप्य कर्कशः ॥

भौमोदयेंऽशेऽहनि वाऽस्य यात्रा
करोति बन्धं वधमर्थनाशम् ।
संसेविता पापपराङ्मुखेन
मनोभवान्धेन पराङ्गनेव ॥

बुधस्य लग्नांशकवासरेषु
यात्रा नरं प्रीणयति प्रकामम् ।
भावानुरक्ता प्रवराङ्गनेव
विदग्धचेष्टा मदनाभितप्तम् ॥

गुरोर्विलग्नांशदिनेषु यात्रा
हितानुबन्धेप्सितकामदा च ।
जायेव भर्तुर्मनसोऽनुकूला
कुलाभिवृद्ध्यै रतिदा हिता च ॥

यात्रा भृगोरंशदिनोदयेषु
प्रीणाति कामैर्विविधैर्यियासुम् ।
विलासिनीकामवशोपयातं
भावैरनेकैर्मदनातुरेव ॥

द्विलग्नभागेषु शनैश्च यात्रा
प्राणच्छिदादीन् प्रचिनोति दोषान् ।
अन्यप्रसक्ता वनितेव मोहा-
न्निषेविता मन्मथमोहितेन ॥

लग्नेन हीनाऽन्यगुणान्विताऽपि
प्रीतिं न यात्रा मनसः करोति ।
स्वलंकृता रूपसमन्विताऽपि
प्रभ्रष्टशीला वनितेव पुंसाम् ॥

लग्नस्य शुद्धिः शकुनैर्निमित्तै-
विज्ञायतेऽन्तःकरणेन सम्यक् ।
अनन्यभावाश्रयसंप्रवृत्तैः
कौलीव पुंसश्चरितैर्विदेशे ॥

## युक्तिकल्पतरुः

यात्राकालद्वैविध्यम्, ग्रहस्थितिनक्षत्रदिक्-
शूलनिमित्तादिविवेकः

अथ यात्रायुक्तिः । तत्र समयः –
[1]यात्रायां द्विविधः कालो वैकालः सहजस्तथा ।
प्रोक्तमात्ययिके कार्ये विकारो नात्र निर्णयः ॥
सहजः स्वेच्छया राज्ञां तस्य निर्णय उच्यते ॥
यात्राऽजसिंह .......
मध्या शनैश्चरबुधोशनसां गृहेषु ।
भानौ कुलीरवृषवृश्चिकगोभिर्दीर्घा
शस्तस्तु देवलमतेऽध्वनि पृष्ठतोऽर्कः ॥
अश्विनी रेवती ज्येष्ठा तथा पुष्या पुनर्वसु ।
मैत्रं मृगशिरो मूला यात्रायामुत्तमाः स्मृताः ॥
भरणी कृत्तिकाऽऽश्लेषा विशाखा चोत्त-
रात्रयम् ।
मघा पशुपतिश्चैव यात्रायां मरणप्रदाः ॥
पूर्वे कुबेरे दहने निशाटे
यमे जलेशे पवने महेशे ।
त्याज्यं नरस्य प्रतिपत्क्रमेण
युग्मं तिथीनां प्रवदन्ति तज्ज्ञाः ।
स्यात् संमुखे यानमसुक्षयाय
पश्चाद् भवेत् सर्वशुभाय पुंसाम् ॥
सूर्यः शुक्रः कुजो राहुर्मन्दश्चन्द्रो गुरुर्बुधः ।
अग्रतः शोभना यात्रा पृष्ठतो मरणं ध्रुवम् ॥
पूर्वेणेन्द्रं दक्षिणे यानपादं
रोहिण्येतच्चार्यमाख्यं च शूलम् ।
कामं यायात् सांपरायेषु कार्ये-
ष्वन्यद्वाऽपि प्रेक्ष्य शूलानि भानि ॥

तत्र दिक्शूलम्–
षष्ठयष्टमी चतुर्थी च नवमी द्वादशी तथा ।
चतुर्दशी कुहूस्त्याज्या यात्रायामशुभप्रदाः ॥

प्रायो जगुः सहजशत्रुदशायसंस्थाः
पापाः शुभाः सवितृजं परिमुच्य
स्वस्थम् ।
सर्वत्रगाः शुभफलं जनयन्ति सौम्या-
स्त्यक्त्वाऽरिसंस्थममरारिगुरुं
जिगीषोः ॥

नाकालवर्षविद्युत्स्तनितेष्विष्टं कथंचिदपि
यानम् ।
आ सप्ताहाद्दिव्यान्तरिक्षभौमैस्तथोत्पातैः ॥

## मानसोल्लासः

सिद्धियोगाः, सुधायोगाः, सिद्धतिथिलक्षणम्, तिथि-
भेदेन फलभेदः, शस्ताशस्तास्तिथयो वाराश्च,
वर्ज्यावर्ज्यलग्नादयः

[1]देशं कालं तथा मित्रं निमित्तं बलमात्मनः ।
विचार्य कुर्वतो नित्यं यात्रा भवति सिद्धिदा ॥
मूलेऽर्के श्रवणे सौम्ये भौमेऽहिर्बुध्न्यदैवते ।
कृत्तिकायां बुधो युक्तो वाक्पतिस्तु पुनर्वसौ ॥
भाग्ये शुक्रः शनिः स्वातौ तिष्ठन्तः
सर्वसिद्धिदाः ।
तस्मादेते समाख्याताः सिद्धियोगा मनीषिभिः ॥
सहस्रकिरणो हस्ते मृगाङ्को मृगशीर्षके ।
अश्विन्यां च धरापुत्रो मैत्रे चन्द्रमसः सुतः ॥
दिवौकसां गुरुः पुष्ये रेवत्यां भृगुनन्दनः ।
रोहिण्यां शनिवारे तु सुधायोगाः प्रकीर्तिताः ॥
रिक्तासु सूर्यजे सूर्ये नन्दासु भृगुनन्दने ।
जयासु धरणीपुत्रे भद्रासु च बुधे विधौ ॥

(१) युक. १७६–१७७।७७–८७.

(१) मासो. २।७५४–८०३, १०८२–११४५.

पूर्णासु त्रिदशाचार्ये स्थिते सिद्धा तिथिर्भवेत् ।
सर्वकार्यकरी नृणां यात्रायां च विशेषतः ॥
प्रतिपद्गमने शस्ता द्वितीया क्षेमदा भवेत् ।
तृतीया धनलाभाय चतुर्थी निन्दिता सदा ॥
पञ्चमी श्रीकरी ज्ञेया षष्ठी यानेऽतिकुत्सिता ।
सप्तमी सर्वलाभाय कुत्सिता चाष्टमी तिथिः ॥
नवमी च सदा निन्द्या भूमिदा दशमी भवेत् ।
वैष्णवी जयदा नित्यं द्वादशी परिवर्जिता ॥
किं पुनर्बहुनोक्तेन सर्वसिद्धा त्रयोदशी ।
असिते च सिते पक्षे वर्जनीया चतुर्दशी ॥
पूर्वभागं परित्यज्य पूर्णिमा गमने वरा ।
अमावास्या विशेषेण शशिहीना विवर्जिता ॥
उत्तरात्रितयं पुष्यो रविवारे शुभप्रदः ।
रोहिणी श्रवणं चित्रा सोमवारे सुखावहाः ॥
अहिर्बुध्न्यं च पौष्णं च भौमवारे प्रशस्यते ।
पुनर्वसुर्गुरोर्वारे भाग्यं च श्रवणे स्थिते ॥
हरिदैवं द्विदैवं च वह्निदैवं शनेर्दिने ।
धिष्ण्यान्येतानि शस्तानि वारेष्वेतेषु सर्वदा ॥
हस्तः पुनर्वसुः पुष्यो रेवती मृगशीर्षकम् ।
अनुराधाऽश्विनी श्रोत्रं शस्तानि गमने नृणाम् ॥
चरलग्ने प्रयातव्यं द्विस्वभावेऽथवा नृपैः ।
लग्ने स्थिरे न गन्तव्यं यात्रायां क्षेममिच्छुभिः ॥
अष्टमं जन्मतस्त्यक्त्वा लग्नं द्वादशमेव च ।
ग्रहाणां च बलं प्राप्य गच्छेदिच्छन् जयं नृपः ॥
गुरुर्लग्ने बुधस्तुर्ये पञ्चमे भृगुनन्दनः ।
षष्ठे कुजार्कतनयौ तृतीये चण्डदीधितिः ॥
चन्द्रमा दशमो यस्य स यात्रायां जयी भवेत् ।
क्षेमेण गमनं तस्य क्षेमेण च निवर्तते ॥
बुधजीवसितानां च यदि केन्द्रत्रिकोणगः ।
एको भवेद्ग्रहो यस्य तस्य यात्रा सुखप्रदा ॥
द्वौ चेत्केन्द्रत्रिकोणस्थावतियोगः स कथ्यते ।
तत्र यात्रा नरेन्द्राणां क्षेमदा रिपुनाशिनी ॥
योगाधियोगः कथितस्त्रिभिः केन्द्रत्रिकोणगैः ।
तत्र यातुर्भवेत्क्षेमो भुवो लाभो रिपोर्वधः ॥

केन्द्रत्रिकोणगाः सौम्याः पापाः षष्ठत्रिलाभगाः ।
ग्रहा यस्य प्रयाणे स्युस्तस्य लाभो जयो भवेत् ॥
योगयात्रा भवेच्छस्ता नृपाणां भूतिमिच्छताम् ।
तारागुणे द्विजातीनामन्येषां शकुनादिभिः ॥
उत्तरासु विशाखायां रोहिण्यां गमने नृपः ।
दिवसस्य तृतीयांशमाद्यभागं विवर्जयेत् ॥
सार्पराक्षसरौद्रेषु ज्येष्ठायां वासरस्य हि ।
वर्जयेन्मध्यमं भागं यात्रायां पृथिवीपतिः ॥
स्वात्यश्विपुष्यहस्तेषु यात्रायां परिवर्जयेत् ।
दिनस्य पश्चिमं भागं जयमिच्छन् महीपतिः ॥
मैत्रैन्द्रत्वाष्ट्रपौष्णेषु त्याज्यो यत्नान्महीभुजा ।
रजन्याः प्रथमो भागः सदा विजयमिच्छता ॥
याम्ये पूर्वात्रये मैत्रे निशामध्यं परित्यजेत् ।
गमने भूपतिर्दक्षो रिपुघाती जयोत्सुकः ॥
श्रवणादित्रये त्याज्यो नक्षत्रे दितिदैवते ।
निशायाश्चरमो भागः प्रयाणे पृथिवीभुजा ॥
श्रवणे च तथा हस्ते पुष्ये च मृगमस्तके ।
सर्वदा गमनं शस्तं नृपाणां सिद्धिमिच्छताम् ॥
मैत्राश्विपुष्यहस्ताश्च सर्वदिक्षु शुभावहाः ।
यात्रायां सुप्रशस्तास्ते सर्वद्वारिकसंज्ञिताः ॥
गच्छेत्प्राचीमुदीचीं च कृत्तिकादिषु सप्तसु ।
मघादिसप्तके गच्छेद्दक्षिणां पश्चिमां दिशम् ॥
मैत्रादिसप्तके यायात्पश्चिमां दक्षिणां दिशम् ।
धनिष्ठादिषु धिष्ण्येषु व्रजेद्यक्षेन्द्रयोर्दिशोः ॥
वैपरीत्याद्यदा गच्छेत्परिघो लङ्घितो भवेत् ।
लङ्घितः परिघो हन्ति सर्वकार्याणि यायिनाम् ॥
वायव्यामानलीमाशां समाक्रम्य स तिष्ठति ।
परिघो दण्डवत्तस्माद्यात्रायां तं विवर्जयेत् ॥
गमनं केचिदिच्छन्ति कृत्तिकादिषु सप्तसु ।
आग्नेय्यां दिशि प्राच्यां च न दोषः परिघोद्भवः ॥
मघादिषु तथाऽऽग्नेयीं प्राचीं गच्छन्न दुष्यति ।
मैत्रादिषु दिशं वायोर्धनदस्य दिशं व्रजेत् ॥

धनिष्ठादिषु धिष्ण्येषु वायव्यामथ वारुणीम् ।
ककुभं गच्छता नैव परिघो लङ्घितो भवेत् ॥
ज्येष्ठा प्राचीदिशं हन्ति गच्छतां कामितं फलम् ।
पूर्वाभाद्रपदा याम्यां प्रतीचीमपि रोहिणी ॥
उत्तराफल्गुनी तद्वदुत्तरां ककुभं सदा ।
यातॄणां च भवेत्क्लेशः संदेहेन निवर्तनम् ॥
शुक्रादित्यदिने गन्ता वर्जयेत्पश्चिमां दिशाम् ।
बुधे भौमे च कौबेरीं ककुभं परिवर्जयेत् ॥
सोमे शनैश्चरे वारे दिशं प्राचीं परित्यजेत् ।
गुरोर्वारे न गन्तव्यं दक्षिणां ककुभं प्रति ॥
वारशूलमिदं प्रोक्तमाचार्यैः कैश्चिदेव हि ।
तस्मादस्मिन्न गन्तव्यं वारशूले विचक्षणैः ॥
आदित्यस्य दिने वर्ज्या धनिष्ठा कृत्तिका मघा ।
अनुराधा तथाऽऽश्लेषा भरणी गमने बुधैः ॥
आषाढे द्वे विशाखा च त्याज्याः सोमस्य वासरे ।
धनिष्ठाऽऽर्द्रा शतभिषग्भौमवारे विवर्जिताः ॥
कृत्तिका रेवती मूलमनुराधा तथाऽश्विनी ।
वर्ज्या शतभिषक् चैव बुधवारे शुभेच्छुभिः ॥
मृगं शतभिषक् पौष्णं वर्जयेद् गुरुवासरे ।
पुष्याश्लेषामघा ब्राह्मीं याने शुक्रदिने त्यजेत् ॥
आषाढयुगलं हस्तं चित्रामुत्तरफाल्गुनीम् ।
मन्दवारे त्यजेत् प्राज्ञो यात्रायां पार्थिवोत्तमः ॥

स्वरबलचक्राश्रयणेन शुभाशुभदेशकालयोर्निर्णयः

ज्ञात्वा स्वरबलं राजा बलं भूमेस्तथैव च ।
कुर्वीत सर्वकार्याणि सङ्ग्रामं तु विशेषतः ॥
अतः स्वरबलं वक्ष्ये दशधा प्रविभाजितम् ।
मात्रा वर्णो ग्रहो जीवो राशिरेवं च पञ्चधा ॥
बालः कुमारस्तरुणो वृद्धश्चास्तंगतः स्वरः ।
द्वितीयः पञ्चभेदोऽयमित्थं दशविधः स्मृतः ॥
अकारः प्रथमस्तस्मिन्निकारस्तदनन्तरम् ।
उकारश्चैवमेकार ओकारो मातृका पुरा ॥
ककारादिहकारान्तान् वर्णान् ङञणवर्जितान् ।
पञ्चत्रिंशत्सु कोष्ठेषु पञ्च पञ्च क्रमान्न्यसेत् ॥
रेखाः षडूर्ध्वकाः कार्यास्तिर्यगष्टौ च राजयः ।
पञ्चत्रिंशद्भवन्त्येवं कोष्ठास्तत्संनिवेशतः ॥
तत्रादिपञ्चकोष्ठेषु पञ्चमात्रास्वरान् क्रमात् ।
लिखेद्वर्णानधस्तेषां कादीन् ङञणवर्जितान् ॥
अकारपङ्क्तौ ये वर्णा अधोऽधः संव्यवस्थिताः ।
अकारसमधर्माणः सर्वे वर्णाः स्वराश्च ते ॥
इकारादिस्वरेष्वेवमधस्ताद्ये व्यवस्थिताः ।
तत्तद्धर्माण एव स्युस्ते वर्णाः स्वरसंज्ञिताः ॥
नामादौ यो भवेद्वर्णः स स्वरः परिकीर्तितः ।
संयोगे प्रथमो ग्राह्यः स्वराणां नियमो न हि ॥
मात्रास्वराः समाख्यातास्तथा वर्णस्वरा मया ।
ग्रहस्वरा निरूप्यन्ते सांप्रतं राशिभेदतः ॥
मेषवृश्चिकसिंहानामकारः स्याद्ग्रहस्वरः ।
एवं ग्रहस्वराः प्रोक्ताः कथ्यन्ते जीवसंज्ञिताः ॥
यत्र नामनि यावन्तो वर्णाः स्वरसमन्विताः ।
तांश्च वर्गक्रमेणैव गणयेच्च स्वरांस्तथा ॥
गणयित्वा कृतं राशिं विभजेत्पञ्चभिः पुनः ।
अवशिष्टस्तु यो राशिर्जीवस्वर इतीरितः ॥
ग्रहस्वरः समाख्यातः प्रोक्तो जीवस्वरस्तथा ।
राशिस्वरमतो वक्ष्ये स्वरशास्त्रानुसारतः ॥
प्रोक्तो राशिस्वरोऽकारो रेवत्यादिषु सप्तसु ।
एवं परेष्विकाराद्याः स्वराः पञ्चसु पञ्चसु ॥
राशिस्वराः समाख्याता वक्ष्यन्ते उदितादयः ।
उदेत्यकारो नन्दायां भद्रायामिः स्वरः सदा ॥
जयासूकारः सर्वासु भवेदुदयवान् सदा ।
उदेति रिक्तास्वेकार ओकारः पूर्णके तिथौ ॥
उदितः प्रथमेऽह्नि स्याद्द्वितीयेऽह्नि कुमारकः ।
तृतीये तरुणः ख्यातश्चतुर्थे स्थविरो भवेत् ॥
पञ्चमेऽहनि पञ्चत्वं स्वरो याति विनिश्चितम् ।
अकारादिषु सर्वेषु क्रमोऽयं परिकीर्तितः ॥
अकारादिस्वराः पञ्च प्रकृतित्वेन रूपिताः ।
वर्णादिस्वरभेदोऽपि ककारादिषु संगतः ॥
यस्य कस्यापि नामादौ योऽसौ वर्णः प्रदृश्यते ।
अवस्थां तस्य वर्णस्य विचार्य फलमादिशेत् ॥

मेषादिराशियोगेषु संप्रोक्ता ये ग्रहस्वराः ।
तेषां बलं विजानीयाज् ज्ञात्वा कर्म समाचरेत् ॥
सिंहस्याधिपतिः सूर्यः कर्कटस्य निशापतिः ।
मेषवृश्चिकयोर्भौमः कन्यामिथुनयोर्बुधः ॥
चापमीने सुराचार्यस्तुलायां वृषभे कविः ।
कुम्भे च मकरे सौरिः प्रभुरूपेण कीर्तिताः ॥
ऋतुकालदिशारुद्रैः सूर्यः शुभकरो भवेत् ।
जन्मसंध्यर्तुसूर्याश्च दिगीशानैः शुभः शशी ॥
हरनेत्रकुमारास्यरुद्रैर्भौमः शुभावहः ।
पक्षाब्धिरसदिङ्नागपङ्क्तिरुद्रैर्बुधः शुभः ॥
नराङ्घ्रिबाणमुनिभिर्ग्रहरुद्रैर्गुरुः शुभः ।
एकद्वित्रिचतुःपञ्चवसुरत्नेशभास्करैः ॥
सुराणां च गुरुः शुक्रः स्थानैरेभिः शुभावहः ।
कृशानुरसरुद्रैश्च शुभकारी शनैश्चरः ॥
स्वस्य ग्रहबलं प्राप्य परेषां ग्रहदूषणम् ।
कुर्वीत तुमुलं युद्धं शत्रुसंहारकारकम् ॥
जीवस्वरगतान् वर्णान् गणयित्वा विचक्षणः ।
यत्र नास्ति निजाधिक्यं तत्र कुर्वीत संगरम् ॥
रेवत्यादिषु धिष्ण्येषु संगता यत्र ये ग्रहाः ।
राशिस्वरे विचार्यास्ते शुभाश्चेद्युद्धमाचरेत् ॥
एकः स्वरश्चेदुभयोः प्रीतिं प्रकुरुते पराम् ।
द्वितीयः कुरुते मानं तृतीयः कार्यपोषकः ॥
उपेक्षकश्चतुर्थश्च पञ्चमो जयनाशनः ।
स्वरमैत्रीं विदित्वैवं नृपः कुर्वीत संगरम् ॥
मात्रास्वरो यदोदेति तदा कुर्वीत शोभनम् ।
गर्भाधानादिकं कर्म निधिधान्यादिसंग्रहम् ॥
वापनं सर्वसस्यानां पुरवेश्मप्रवेशनम् ।
रसायनप्रयोगं च व्याधीनां च चिकित्सितम् ॥
मात्रास्वरे कुमारे तु विवाहः प्रीतिकृद् भवेत् ।
भृत्यानां संग्रहः शस्तः स्वामिसंश्रयणं तथा ॥
उत्कोचनमरातीनां ग्रामगेहप्रवेशनम् ।
वैरिनिर्मूलनोद्युक्तो यात्रां कुर्वीत भूपतिः ॥

यूनि मात्रास्वरे जाते पट्टबन्धाभिषेचनम् ।
गजाद्यारोहणं शस्तं वरनारीसमागमः ।
द्यूतमाहवकर्माणि यात्रा लेखविसर्जनम् ॥
कुर्वीत कदनं राजा रिपूणां प्राणखण्डनम् ॥
यदा मात्रास्वरो वृद्धस्तदा संधिर्विधीयते ।
शान्तिकं पौष्टिकं कर्म मोक्षदीक्षां समाचरेत् ॥
मृते मात्रास्वरे जाते कुर्यादनशनं व्रतम् ॥

योगिनीचक्राश्रयेण शुभाशुभदेशकालनिर्णयः

आरभ्य पूर्वदिग्भागाद् रेखामावर्तयेत् सुधीः ॥
पूर्वान्नयेत वायव्यं वायव्याद् याम्यमानयेत् ।
याम्यादीशानदिग्भागमैशानात् पश्चिमं नयेत् ॥
पश्चिमात् कोणमाग्नेयमाग्नेयादुत्तरं नयेत् ।
उत्तरान्नैर्ऋतं कोणं नैर्ऋतादैन्द्रमानयेत् ॥
एवमष्टाश्रितं चक्रं जायते संनिवेशतः ।
तत्र चैत्रादिमासानां विन्यासो दिक्षु वक्ष्यते ॥
चैत्रमासोऽर्धवैशाखः पूर्वभागे भवेत् सदा ।
अर्धं वैशाखमासस्य ज्येष्ठं वायव्यतः क्षिपेत् ॥
आषाढं श्रावणस्यार्धं याम्यभागे प्रकल्पयेत् ।
श्रावणस्यार्धमैशान्यां नभस्यं च विनिक्षिपेत् ॥
आश्विनं कार्तिकस्यार्धं वारुण्यां दिशि विन्यसेत् ।
अर्धकार्तिकमार्गौ च हुताशनदिशि क्षिपेत् ॥
पौषमर्धं च माघस्य कौबेर्यां ककुभि क्षिपेत् ।
माघस्यार्धं फाल्गुनं च नैर्ऋत्यां दिशि कल्पयेत् ॥
यस्यां दिशि स्थितो मासः सार्धस्तत्रोदयो भवेत् ।
तावत्कालं भुवः सोऽपि यावन्नाडीचतुष्टयम् ॥
यामार्धं तु बलं भूमेः क्रमाद् दिक्षु व्यवस्थितम् ।
रेखाविन्यासमार्गेण क्रमाद् भ्राम्यति मेदिनी ॥
उदयादस्तपर्यन्तमस्तादप्युदयावधि ।
चतुर्यामेषु मेदिन्यां दिक्षु भ्रमणमष्टसु ॥

भूबलं पृष्ठतः कार्यं दक्षिणे वा जिगीषुणा ।
एवमन्यानि कार्याणि सिद्धिं यान्ति विनिश्चयम् ॥

अस्यैव चक्रराजस्य कोणानाश्रित्य विन्यसेत् ।
अष्टौ वर्गानकारादीन् प्रादक्षिण्येन पूर्वतः ॥
अवर्गे गरुडः प्रोक्तः कवर्गे वृषदंशकः ।
चवर्गे मृगराजः स्यात् टवर्गे सरमासुतः ॥
तवर्गे पन्नगः प्रोक्तः पवर्गे मूषकस्तथा ।
यवर्गे तु मृगः प्रोक्तः शवर्गे मेष इष्यते ॥
पूर्वान्नैर्ऋतपर्यन्तं भक्षकाः समवस्थिताः ।
पश्चिमाद् रौद्रदिग्भागं यावद् भक्ष्या व्यवस्थिताः ॥

भक्षकात् पञ्चमे स्थाने स्थितो भजति भक्ष्यताम् ।
तस्माद् विचार्य यत्नेन शत्रुं पञ्चमतां नयेत् ॥

एवं नामबलं चक्रे विचार्य पृथिवीपतिः ।
द्यूतं समाह्वयं युद्धं नाऽऽरभेत जयोत्सुकः ॥

ब्रह्माणी पूर्वदिग्भागे प्रतिपन्नवमे तिथौ ।
द्वितीयायां दशम्यां च माहेशी सौम्यदिग्गता ॥

एकादश्यां तृतीयायां कौबेरी वह्निदिक्स्थिता ।
द्वादश्यां च चतुर्थ्यां च वैष्णवी नैर्ऋते स्थिता ॥

पञ्चम्यां च त्रयोदश्यां वाराह्या दक्षिणे स्थितिः ।
चतुर्दश्यां तथा षष्ठ्यामिन्द्राणी पश्चिमोदया ॥

सप्तम्यां पौर्णमास्यां च वायव्ये चण्डिकास्थितिः ।
अमावास्याऽष्टमीतिथ्योर्महालक्ष्मीस्तथेशगा ॥

दक्षिणे पृष्ठतः कार्या योगिन्यो विजिगीषुणा ।
योगिनीनां बलं त्वेवं कथितं सोमभूभुजा ॥

# यात्रा- शुभाशुभनिमित्तादिविचारः

## वेदाः

शकुनानि जाग्रत्स्वप्नदृष्टनिमित्तानि च

**[1]कनिक्रदज्जनुषं प्रब्रुवाण**
**इयर्ति वाचमरितेव नावम् ।**
**सुमङ्गलश्च शकुने भवासि**
**मा त्वा का चिदभिभा विश्व्या विदत् ॥**

कनिक्रदत् पुनः पुनः शब्दायमानः जनुषं जनिष्यमाणमर्थं प्रब्रुवाणः सूचयन् कपिञ्जलः अरितेव कर्णधार इव नावं वाचम् इयर्ति प्रेरयति । अथ प्रत्यक्षकृतः । हे शकुने कपिञ्जल, त्वं सुमङ्गलः प्रकृष्टकल्याणः च भवासि भव । किंच, का चिदभिभा कोऽप्यभिभवः त्वा त्वां विश्व्या विश्वतः सर्वासु दिक्षु मा विदत् मा प्रापत् । 'शकुनिः शक्नोत्युन्नेतुमात्मानम्' 'न्यक्रन्दीज्जन्म प्रब्रुवाणो यथाऽस्य शब्दस्तथा नामेरयति वाचमीरयितेव नावम् । सुमङ्गलश्च शकुने भव कल्याणमङ्गलो मङ्गलं गिरतेर्गृणात्यर्थे गिरत्यनर्थानिति वा' (नि. ९।३।४) इति यास्कः । ऋसा.

**मा त्वा श्येन उद्वधीन्मा सुपर्णो**
**मा त्वा विददिषुमान्वीरो अस्ता ।**
**पित्र्यामनु प्रदिशं कनिक्रदत्**
**सुमङ्गलो भद्रवादी वदेह ॥**

हे शकुने, त्वा त्वां श्येनः प्रबलः पक्षिविशेषः मा वधीत् मा हिंसीत् । उत अपिच सुपर्णः गरुडः पक्षी मा वधीत् । तथा इषुमान् बाणवान् वीरो अस्ता शराणां क्षेप्ता धन्वी त्वा त्वां मा विदत् मा प्रापत् । किंच, पित्र्यां प्रदिशं दक्षिणां दिशम् अनु । दक्षिणस्यां दिशीत्यर्थः । कनिक्रदत् पुनः पुनः शब्दं कुर्वन् सुमङ्गलः कल्याणमङ्गलः भद्रवादी शोभनवादी सन् इह अस्मद्विषये वद मङ्गलं सूचय । ऋसा.

**अव क्रन्द दक्षिणतो गृहाणां**
**सुमङ्गलो भद्रवादी शकुन्ते ।**
**मा नः स्तेन ईशत माघशंसो**
**बृहद्वदेम विदथे सुवीराः ॥**

शकुन्ते हे कपिञ्जल, त्वं सुमङ्गलो भद्रवादी च सन् गृहाणां दक्षिणतः दक्षिणस्यां दिशि अव क्रन्द शब्दं कुरु । दक्षिणतः शब्दायमानः शकुन्तो मङ्गलसूचको हि । नः अस्माकं स्तेनः तस्करः मा ईशत मा ईशिष्ट । अघशंसः अनर्थकानां शंसकोऽपि मा ईशिष्ट । उत्तमः पादो व्याख्यातचरः । ऋसा.

**प्रदक्षिणिदभि गृणन्ति कारवो**
**वयो वदन्त ऋतुथा शकुन्तयः ।**
**उभे वाचौ वदति सामगाइव**
**गायत्रं च त्रैष्टुभं चानु राजति ॥**

शकुन्तयः कपिञ्जलाः ऋतुथा काले काले वयः अन्नं वदन्तः सूचयन्तः कारवः स्तोतार इव प्रदक्षिणित् प्रदक्षिणम् अभि गृणन्ति अभिवदन्तु । बहुवचनं पूजार्थम् । किंच, उभे वाचौ गानं च श्रौतं च सामगाः गायत्रं त्रैष्टुभं च सामनी इव शकुन्तिः वदति अनु राजति च । शृण्वतोऽनुरक्तान् करोतीत्यर्थः । ऋसा.

**उद्गातेव शकुने साम गायसि**
**ब्रह्मपुत्रइव सवनेषु शंससि ।**
**वृषेव वाजी शिशुमतीरपीत्या**
**सर्वतो नः शकुने भद्रमा वद**
**विश्वतो नः शकुने पुण्यमा वद ॥**

शकुने हे कपिञ्जल, उद्गातेव साम यथोद्गाता साम गायति तथा त्वं गायसि गानस्वनं करोषि । ब्रह्मपुत्रइव यथा ब्राह्मणाच्छंसी सवनेषु शस्त्राणि शंसति तथा त्वं कालेषु शंससि श्रौतस्वरं करोषि । वृषेव वाजी सेचनसमर्थोऽश्वः शिशुमतीः वडवाः अपीत्य अभिगत्य यथा शब्दं करोति तथा त्वमपि वद । शिष्टं स्पष्टम् । ऋसा.

---

(१) ऋसं. २।४२, ४३.

**आवदंस्त्वं शकुने भद्रमा वद**
**तूष्णीमासीनः सुमतिं चिकिद्धि नः।**
**यदुत्पतन्वदसि कर्करिर्यथा**
**बृहद्वदेम विदथे सुवीराः ॥**

शकुने हे कपिञ्जल, आवदन् शब्दं कुर्वन् त्वं भद्रमा वद मङ्गलं वद । तूष्णीमासीनः तूष्णीं तिष्ठन्नपि नः अस्माकं सुमतिं चिकिद्धि बुध्यस्व । यत् यदा उत्पतन् वदसि तदा कर्करिर्यथा कर्करिरिव वदसि । कर्करिर्वाद्यविशेषः । अन्यद्व्याख्यातचरम् । ऋसा.

[1]**अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।**
**परा दुःष्वप्न्यं सुव ॥**

हे सवितः देव, नः अस्मभ्यम् अद्य अस्मिन् यागदिने प्रजावत् पुत्राद्युपेतं सौभगं धनं सावीः प्रेरय । दुःष्वप्न्यं दुःस्वप्नं दुःस्वप्नवद्दुःखकरं दारिद्र्यं परा सुव दूरे प्रेरय । ऋसा.

[2]**शिवः कपोत इषितो नो अ-**
**स्त्वनागा देवाः शकुनो गृहेषु ।**
**अग्निर्हि विप्रो जुषतां हविर्नः**
**परि हेतिः पक्षिणी नो वृणक्तु ॥**

हे देवाः, नः अस्माकं गृहेषु इषितः गतः कपोताख्यः शकुनः पक्षी शिवः सुखकरः अनागाः अपापहेतुश्च अस्तु । हि यस्मात् विप्रः मेधावी अग्निः नः अस्माकं हविः युष्मभ्यं परिकल्पितं जुषतां जुषते । अतो युष्मत्प्रसादात् पक्षिणी पक्षोपेता हेतिः हननहेतुः कपोतः नः अस्मान् परि वृणक्तु अस्मान् परित्यजतु । मा बाधतामित्यर्थः । ऋसा.

[3]**हेतिः पक्षिणी न दभात्यस्मा-**
**नाष्ट्र्यां पदं कृणुते अग्निधाने ।**
**शं नो गोभ्यश्च पुरुषेभ्यश्चास्तु**
**मा नो हिंसीदिह देवाः कपोतः ॥**

पक्षिणी पक्षोपेता हेतिः हननहेतुः कपोतः अस्मान् न दभाति न हिनस्तु । आष्ट्र्यां व्याप्तायामरण्यान्याम् अग्निधाने अग्निर्निधीयतेऽस्मिन्नित्यग्निसहिते प्रदेशे पदं स्थानं कृणुते करोति । तत्रैव प्रदेशे निवसत्वित्यर्थः । यद्वा, अश्नन्त्यस्मिन्नित्याष्ट्री पचनशाला, तस्याम् अग्निधाने यत्र पचनाग्निर्निधीयते तस्मिन् प्रदेशे पदं पादनिधानं कृणुते करोति । तद्धेतुको बाधो नः अस्माकं न भवत्वित्यर्थः । अपिच, नः अस्माकं गोभ्यश्च पुरुषेभ्यश्च शं सुखं शंसनीयानां दोषाणां शान्तिर्वा अस्तु भवतु । हे देवाः, इह अस्मिन् गृहे कपोतः नः अस्मान् मा हिंसीत् युष्मदनुग्रहात् मा बाधताम् । ऋसा.

[1]**यदुलूको वदति मोघमेत-**
**द्यत्कपोतः पदमग्नौ कृणोति ।**
**यस्य दूतः प्रहित एष एत-**
**त्तस्मै यमाय नमो अस्तु मृत्यवे ॥**

उलूकः घूकसंज्ञः पक्षी यत् अशोभनं वदति ब्रवीति आत्मीयेन शब्देन सूचयति एतत् मोघं निष्फलमस्तु । कपोतः च अग्नौ अग्निमति गृहमध्ये यत् पदं कृणोति करोति एतदपि मोघं निर्वीर्यम् अस्तु । प्रहितः प्रेषितः एषः कपोतः यस्य स्वामिनः दूतः अनुचरः भवति तस्मै नाम मृत्यवे मारयित्रे यमाय एतत् नमः प्रणामः अस्तु भवतु । ऋसा.

[2]**ऋचा कपोतं नुदत प्रणोद-**
**मिषं मदन्तः परि गां नयध्वम् ।**
**संयोपयन्तो दुरितानि विश्वा**
**हित्वा न ऊर्जं प्र पतात्पतिष्ठः ॥**

हे देवाः, ऋचा मन्त्रेण स्तूयमानाः सन्तो यूयं प्रणोदं प्रकर्षेण नोदनीयं बहिष्कर्तव्यं कपोतं पक्षिणं नुदत

---

(१) ऋसं. ५।८२।४.

(२) ऋसं. १०।१६५।२ ; असं. ६।२७।२ गृहेषु ( गृहं नः ).

(३) ऋसं. १०।१६५।३ ; असं. ६।२७।३ नाष्ट्र्यां ( नाष्ट्री ) उत्तरार्धे ( शिवो गोभ्य उत पुरुषेभ्यो नो अस्तु मा नो देवा इह हिंसीत्कपोतः ॥ ).

(१) ऋसं. १०।१६५।४.

(२) ऋसं. १०।१६५।५ ; असं. ६।२८।१ नयध्वम् ( नयामः ) उत्तरार्धे ( संलोभयन्तो दुरिता पदानि हित्वा न ऊर्जं प्र पदात्पथिष्ठः ॥ ).

अस्मात् गृहात् प्रेरयत निर्गमयत । तथा मदन्तः अस्माभिर्दत्तैर्हविर्भिर्माद्यन्तः इषम् अन्नं गां च परिणयध्वं परितोऽस्मभ्यं प्रापयत । किं कुर्वन्तः ? विश्वा विश्वानि सर्वाणि दुरितानि कपोतोपहतिजन्यानि दोषजातानि संयोपयन्तः अदृश्यानि कुर्वन्तः । अपिच, पतिष्ठः अतिशयेन पतिता शीघ्रोत्पातकः कपोतः नः अस्माकम् ऊर्जम् अन्नं हित्वा परित्यज्य प्र पतात् प्रकर्षेण पततु पक्षाभ्यामुत्पततु । ऋसा.

**[3]शश्वत्सौपर्णौ विषितस्तुकं वायसं**
**विश्वभुजः पथिरक्षी नृचक्षसौ ।**
**इयं हि त्वा दयमानं पृचद्भिर्मा**
**वायसो दोषाद्दयमानो अबूबुधत् ॥**

**[2]भद्रं वद दक्षिणतो भद्रमुत्तरतो वद ।**
**भद्रं पुरस्तान्नो वद भद्रं पश्चात् कपिञ्जल ॥**
**भद्रं वद पुत्रैर्भद्रं वद गृहेषु च ।**
**भद्रमस्माकं वद भद्रं नो अभयं वद ॥**
**भद्रमधस्तान्नो वद भद्रमुपरिष्टान्नो वद ।**
**भद्रंभद्रं न आ वद भद्रं नः सर्वतो वद ॥**
**असपत्नं पुरस्तान्नः शिवं दक्षिणतस्कृधि ।**
**अभयं सततं पश्चाद्भद्रमुत्तरतो गृहे ॥**
**यौवनानि महयसि जिग्युषामिव दुन्दुभिः ।**
**शाकुन्तक प्रदक्षिणं शतपत्राभि नो वद ॥**

**[3]देवाः कपोत इषितो यदिच्छन्**
**दूतो निर्ऋत्या इदमाजगाम ।**
**तस्मा अर्चाम कृणवाम निष्कृतिं**
**शं नो अस्तु द्विपदे शं चतुष्पदे ॥**

हे देवाः, निर्ऋत्याः पापदेवताया दूतः कर्मकरः इषितः प्रेषितः ( कपोतः ) कपोताख्यः पक्षी यत् बाधनम् इच्छन् इदम् अस्मदीयं गृहम् आजगाम आगतवान् तस्मै तन्निवृत्त्यर्थम् अर्चाम युष्मान् हविषा पूजयाम । निष्कृतिं तद्दोषशान्तिं कृणवाम करवाम । नः अस्माकं द्विपदे पादद्वयोपेताय पुत्रभृत्यादये (शम्) चतुष्पदे पादचतुष्टयोपेताय गवाश्वादये च शं रोगादीनां शमनं कपोतप्रवेशजनितदोषशान्तिश्च अस्तु भवतु । असा.

**[1]अमून् हेतिः पतत्रिणी न्येतु यदुलूको वदति मोघमेतत् ।**
**यद्वा कपोतः पदमग्नौ कृणोति ॥**

अमून् दूरे दृश्यमानान् अस्मदीयान् शत्रून् पतत्रिणी पक्ष्यात्मिका हेतिः नि एतु नितरां गच्छतु । उलूकः घूकः यत् अशोभनं वदति एतत् मोघं निर्वीर्यं भवतु । वाशब्दः अप्यर्थे । कपोतः कपोताख्यः पक्षी अशुभसूचनाय यत् पदम् अग्नौ पचनाग्निसमीपे कृणोति करोति । तदपि निर्वीर्यं भवत्वित्यर्थः । असा.

**यौ ते दूतौ निर्ऋत इदमेतोऽप्रहितौ प्रहितौ वा गृहं नः ।**
**कपोतोलूकाभ्यामपदं तदस्तु ॥**

हे निर्ऋते पापदेवते, ते त्वदीयौ कपोतोलूकात्मकौ यौ दूतौ अप्रहितौ त्वया अप्रेषितौ प्रहितौ वा प्रेषितौ वा नः अस्माकम् इदं गृहम् एतौ आगतौ तद्गृहं ताभ्यां कपोतोलूकाभ्याम् अपदम् अनाश्रयभूतम् अस्तु भवतु । असा.

**[2]यो न जीवोऽसि न मृतो देवानाममृतगर्भोऽसि स्वप्न ।**
**वरुणानी ते माता यमः पितारुर्नामासि ॥**

हे स्वप्न, यस्त्वं जीवः प्राणधारको नासि न भवसि । किं तर्हि मृतः ? नेत्याह– मृतः त्यक्तप्राणोऽपि न भवसि । मिथ्यापरिकल्पितस्वभावत्वात् स्वप्नस्य जीवनमरणयोः प्राणिधर्मयोरसंभव इत्यर्थः । किंरूपस्तर्हि स्वप्न इति, तत्राऽऽह– देवानाम् अग्न्यादीनाम् इन्द्रियाधिष्ठातॄणाम् ( अमृतगर्भः ) अमृतमयगर्भस्त्वम् असि । स्वप्नस्य

---

( १ ) ऋसं. ( खिलम् ) १।२।११.
( २ ) ऋसं. ( खिलम् ) २।२.
( ३ ) असं. ६।२७।१.

( १ ) असं. ६।२९।१–२.
( २ ) असं. ६।४६।१–३.

जाग्रदनुभवजनितवासनामयत्वात् वासनायाश्च स्थायित्वादिति भावः। देवगर्भत्वमेव प्रतिपादयति– हे स्वप्न, ते तव वरुणानी वरुणस्य पत्नी माता, ( यमः ) यच्छति नियच्छति प्राणिनो दुष्कृतिनो निगृह्णातीति यमो वरुणः, स पिता जनयिता उत्पादयिता। हे स्वप्न, त्वम् अररुर्नाम, ( अररुः ) आर्तिकरोऽसुरः, स एवासि भवसि। नामशब्दः श्रुत्यन्तरप्रसिद्धिं द्योतयति। श्रूयते हि तैत्तिरीयके– ' अररुर्वै नामासुर आसीत् ' ( तैब्रा. ३।२।९ ) इति। असा.

**विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः।**
**अन्तकोऽसि मृत्युरसि।**
**तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्पाहि॥**

हे ( स्वप्न ) स्वप्नाभिमानिन् देव, ते तव जनित्रं जन्म विद्म जानीमः। जनेः औणादिक इत्रप्रत्ययः। उक्त एवार्थो विव्रियते– देवजामीनां देवस्त्रीणां वरुणानीप्रभृतीनां पुत्रः तनयः असि, ताभिरुत्पाद्यमानत्वात्। देवस्त्रियो हि मायारूपाः पुरुषस्य शुभाशुभात्मकं भावि फलं सूचयितुं स्वप्नमुत्पादयन्तीति प्रसिद्धिः। स्वप्नस्य शुभाशुभफलसूचकत्वं श्रुतिर्दर्शयति– ' यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् ' इति, ' अथ स्वप्नाः। पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति ' ( ऐआ. ३।२।४) इत्यादि च। अतो यमस्य करणः। यमशब्दः प्राणापहरणलक्षणं तद्व्यापारं लक्षयति। तस्य कर्ता भवसि। अत एव अन्तकः अन्तकरः जीवनावसानस्य कर्ता असि भवसि। मृत्युरसि प्राणत्यागस्य कारयिता भवसि। हे स्वप्न, तं तादृशं ( त्वा ) त्वां तथा प्रागुक्तप्रकारेण सं विद्म सम्यक् जानीमः। हे स्वप्न, ( स त्वं ) नः अस्मान् दुःस्वप्न्यात् दुःस्वप्नजनितात् भयात् पाहि रक्ष। असा.

**यथा कलां यथा शफं यथर्णं संनयन्ति।**
**एवा दुष्वप्न्यं सर्वं द्विषते सं नयामसि॥**

गोरवयवैकदेशः कला। शफः खुरः। दोषदूषितं कलादिकम् अङ्गं यथा छेदनादिना अपगमयन्ति, यथा वा ऋणम् अधमर्णाः पुरुषाः संनयन्ति संप्रदानेन गमयन्ति, एव एवं सर्वं दुष्वप्न्यं दुःस्वप्नजनितं भयं द्विषते द्वेष्ट्रे जनाय सं नयामसि सम्यक् प्रापयामः। असा.

**[1]पर्यावर्ते दुष्वप्न्यात्पापात्स्वप्न्यादभूत्याः।**
**ब्रह्माहमन्तरं कृण्वे परा स्वप्नमुखाः शुचः॥**

दुष्वप्न्यात् दुष्टस्वप्नप्रभवात् पापात् पर्यावर्ते प्रतिनिवृत्तो भवामि। अपसरामीत्यर्थः। वृतु वर्तने। लटि उत्तमे रूपम्। तथा स्वप्नात्। पापादित्यनुषज्यते। दुष्टात् स्वप्नात्, जनिताया इति शेषः, अभूत्याः असंपदः अश्रेयसः। पर्यावर्ते इति संबन्धः। किंच, अहं ब्रह्म मन्त्रम् अन्तरं दुःस्वप्ननिवारकं व्यवधायकं कृण्वे कुर्वे। यथा दुःस्वप्नजनितं दुरितं मां न प्राप्नोति तथा तन्निर्हरणसमर्थं मन्त्रसंघं कवचं करोमीत्यर्थः। तेन व्यवधिकरणेन स्वप्नमुखाः। मुखशब्द उपाये वर्तते। स्वप्नद्वारिकाः दुःस्वप्ननिबन्धनाः शुचः शोकाः परा। भवन्तु इति क्रियाध्याहारः। असा.

**यत्स्वप्ने अन्नमश्नामि न प्रातरधिगम्यते।**
**सर्वं तदस्तु मे शिवं नहि तद्दृश्यते दिवा॥**

यत् अन्नं स्वप्ने अश्नामि भक्षयामि। अश भोजने, क्र्यादिः। तत् अन्नं प्रातर्नाधिगम्यते न दृश्यते। हि यस्मात् तत् अन्नं दिवा अहनि न दृश्यते अतः तत् स्वप्ने अन्नभोजनं सर्वम् अन्नभोजनसदृशम् अखाद्यभक्षणादिकं मे मम शिवं मङ्गलकारि अस्तु भवतु। स्वप्ने अन्नभोजनेन यत् अरिष्टं भवति तत् अनेन मन्त्रजपेन ( न केवलं ) शाम्यतु, प्रत्युत कल्याणकारि भवत्वित्यर्थः। असा.

**[2]विद्म ते स्वप्न जनित्रं ग्राह्याः पुत्रोऽसि यमस्य करणः॥**

---

( १ ) असं. ७।१००, १०१.
( २ ) असं. १६।५।१–१०.

अन्तकोऽसि मृत्युरसि ॥
तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न
दुष्वप्न्यात्पाहि ॥
विद्म ते स्वप्न जनित्रं निर्ऋत्याः पुत्रोऽसि
यमस्य करणः ।
अन्तकोऽसि मृत्युरसि । तं त्वा स्वप्न० ॥
विद्म ते स्वप्न जनित्रमभूत्याः पुत्रोऽसि
यमस्य करणः ।
अन्तकोऽसि मृत्युरसि । तं त्वा स्वप्न० ॥
विद्म ते स्वप्न जनित्रं निर्भूत्याः पुत्रोऽसि
यमस्य करणः ।
अन्तकोऽसि मृत्युरसि । तं त्वा स्वप्न० ॥
विद्म ते स्वप्न जनित्रं पराभूत्याः पुत्रोऽसि
यमस्य करणः ।
अन्तकोऽसि मृत्युरसि । तं त्वा स्वप्न० ॥
विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोऽसि
यमस्य करणः ॥
अन्तकोऽसि मृत्युरसि ॥
तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न
दुष्वप्न्यात्पाहि ॥

[1]उषो यस्माद्दुष्वप्न्यादभैष्माप तदुच्छतु ॥
जाग्रद्दुष्वप्न्यं स्वप्नेदुष्वप्न्यम् ॥

[2]शं नो मित्रः शं वरुणः शं विवस्वांछमन्तकः ।
उत्पाताः पार्थिवान्तरिक्षाः शं नो दिविचरा
ग्रहाः ॥

मित्रावरुणौ व्याख्यातौ । विवस्वान् विवासयति अपगमयति तम इति विवस्वान् । विपूर्वात् वसेर्वसुः । यद्वा धनस्य नाम विव इति । तदस्यास्तीति मतुप् । 'मादुपधायाः ०' (पा. ८।२।९) इति वत्वम् । अन्तकः सर्वेषां प्राणिनाम् । अन्तम् अवसानं करोतीति अन्तकः । अन्तोपपदात् करोतेः '*डोऽन्यत्रापि दृश्यते' इति डः । पार्थिवाः पृथिव्यां भवाः, (आन्तरिक्षाः) अन्तरिक्षे मध्यमलोके भवा उत्पाताः । शं भवन्तु इति शेषः । (दिविचराः) दिवि द्युलोके चराः संचरन्तो ग्रहाः कालचक्रवशात् परिभ्राम्यन्तः अङ्गारकाद्याः । मित्रादयः सर्वेऽपि नः अस्माकं शं दोषशमकाः सुखकरा भवन्तु । असा.

[1]स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम । तौ यत्र विहीयेते । चन्द्रमा इवाऽऽदित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति । लोहिनी द्यौर्भवति यथा मञ्जिष्ठा । व्यस्तः पायुः । काककुलायगन्धिकमस्य शिरो वायति । संपरेतोऽस्याऽऽत्मा न चिरमिव जीविष्यतीति विद्यात् ॥

अथाल्पायुषः परमपुरुषार्थसाधनोपायमुपदेष्टुमायुषोऽल्पत्वज्ञापकानि कानिचिदरिष्टान्युदाहरति– स इति । आदित्यमण्डले स्वशरीरे च तत्त्वमेकमेवेति वयं यदवोचाम तदेकत्वं तिरोधाय तावादित्यस्वशरीरपुरुषौ यत्र विहीयेते यदा विमुक्तौ भवतः । वियोगस्य लिङ्गमुच्यते– चन्द्रवदादित्यः शीतरश्मिर्भासते, न तु दृष्टिप्रतिघातकरा उष्णरश्मयः प्रादुर्भवन्ति । तदिदमेकमरिष्टम् । तथा मञ्जिष्ठासाम्येन द्यौर्लोहिता दृश्यते । तदिदं द्वितीयम् । पायुद्वारं चात्यन्तविवृतं भवति, न तु संकोचयितुं शक्यते । तदिदं तृतीयम् । काकस्य कुलायः नीडम्, तत्र यादृशो गन्धस्तादृशदुर्गन्धोपेतमस्य शिरो भवति । तच्च शिरः स्वकीयं दुर्गन्धं वायति दूरदेशे प्रसारयति । एतच्चतुर्थम् । एतेषामन्यतमस्मिन्* उत्पन्ने सत्यस्य पुरुषस्य आत्मा जीवः संपरेतः मृतः, न त्वितः परं दीर्घकालं जीविष्यतीति निश्चिनुयात् । ‡ऐआसा.

* 'अन्येष्वपि दृश्यते' (पा. ३।२।१०१) इति पाणिनीयं सूत्रम् ।

(१) असं. १६।६।२, ९.

(२) असं. १९।९।७.

* असर्वनामत्वात् 'अन्यतमे' इति साधु ।

‡ राप्र. ऐआसागतम् ।

(१) ऐआ. ३।२।४ ; राप्र. ३३७–३३८, ३४८–३४९.

**स यत्करणीयं मन्येत तत्कुर्वीत । 'यदन्ति यच्च दूरके' इति सप्त जपेत् । 'आदित्प्रत्नस्य रेतसः' इत्येका । 'यत्र ब्रह्मा पवमानः' इति षट् । 'उद्वयं तमसस्परि' इत्येका ॥**

अस्त्वेवं निश्चयः, किं तत इत्याशङ्क्याऽऽह– स इति । अरिष्टदर्शनेन प्रत्यासन्नं मरणं निश्चित्यावस्थितः स पुमाँल्लौकिकं वैदिकं वा कर्तव्यशेषं यन्मनसि धारयति तदानीं तत्सर्वं सहसा कुर्वीत । तावद्विलम्बसिद्ध्यर्थं यदन्तीत्यादिका विहिता ऋचस्तत्तत्संख्याकाः सर्वा जपेत् ।

* ऐआसा.

**अथापि यत्र च्छिद्र इवाऽऽदित्यो दृश्यते रथनाभिरिवाभिख्यायेत । च्छिद्रां वा छायां पश्येत् । तदप्येवमेव विद्यात् ॥**

अरिष्टान्तरं दर्शयति– अथेति । अथापि पुनरपि, अन्यदरिष्टमुदाह्रियते इति शेषः । यत्र यदा आदित्यश्छिद्रोपेत इव दृश्यते, यथा रथचक्रस्य नाभिः सच्छिद्रो भवति तद्वदादित्यस्य मण्डलं सच्छिद्रं प्रतीयेत, यदा स्वदेहच्छायां सच्छिद्रां पश्येत्, तदपि तदानीमपि एवमेव 'संपरेतोऽस्याऽऽत्मा' इत्यारभ्य 'उद्वयं तमसस्परीत्येका' इत्यन्तेन ग्रन्थेनोक्तप्रकारमेव विद्यात् ।

* ऐआसा.

**अथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वाऽऽत्मानं पश्येत् । विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयाताम् । तदप्येवमेव विद्यात् ॥**

अरिष्टान्तरं दर्शयति– अथेति । आदर्शः दर्पणः, तेनोदकेन च प्रतिबिम्बयोग्यानि स्वच्छानि खड्गादिद्रव्याण्युपलक्ष्यन्ते । तेषु द्रव्येषु स्वकीयं देहप्रतिबिम्बं जिह्मशिरसं कुटिलशिरस्कं पश्येत्, यद्वा शिरोरहितं पश्येत् । अथवा कन्याके कनीनिके प्रतिबिम्बस्य चक्षुर्गते शुक्लकृष्णमण्डले विपर्यस्ते विद्यमानसंनिवेशाद्विपरीते । शुक्लमण्डलमध्ये कृष्णमण्डलमित्यसौ विद्यमानसंनिवेशः, तद्विपर्ययः कृष्णमण्डलमध्ये शुक्लमण्डलम् । यद्वा, यथावस्थितमार्जवं परित्यज्य जिह्मेन वक्रत्वेन कनीनिके दृश्येयाताम् । तान्येतानि चत्वार्यरिष्टानि ।

* ऐआसा.

**अथाप्यपिधायाक्षिणी उपेक्षेत । तद्यथा बटरकाणि संपतन्तीव दृश्यन्ते तानि यदा न पश्येत् । तदप्येवमेव विद्यात् ॥**

पुनरप्यरिष्टान्तरं दर्शयति– अथेति । लोके सर्वोऽपि पुरुषश्चक्षुषी निमील्य नेत्रस्यापाङ्गमवष्टभ्योपेक्षेत नेत्रसमीपं पश्येत्, तत् तदानीम् अनुभवतो यथा भवति तथोदाह्रियते– बटरकाणि वर्तुलानि सूक्ष्माणि शुक्लवर्णानि केशोण्डुकशब्दाभिधेयानि संपतन्तीव सम्यङ्नेत्रान्निर्गच्छन्तीव सर्वैर्दृश्यन्ते । तानि बटरकाणि यदा न पश्येत्तदानीमप्यरिष्टं विज्ञेयम् ।

* ऐआसा.

**अथाप्यपिधाय कर्णौ उपशृणुयात्स एषोऽग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुयात् । तदप्येवमेव विद्यात् ॥**

अरिष्टान्तरं दर्शयति– अथेति । सर्वोऽपि जनः स्वकर्णावुभावप्यङ्गुलिभ्यां दृढमपिधाय देहमध्ये किंचिच्छब्दं शृणुयात्तस्य दृष्टान्तद्वयमुच्यते– प्रकर्षेण ज्वलतो वह्नेः प्रौढस्य शब्दो यादृशो भवति, रथस्य त्वरया गच्छत उपब्दिः घोषः यादृशो भवति, स एष देहमध्ये श्रूयमाणः शब्दस्तादृशः । तं यदा न शृणुयात्तदानीमरिष्टं विद्यात् ।

* ऐआसा.

**अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा । अमेघे वा विद्युतं पश्येत् । मेघे वा विद्युतं न पश्येत् । महामेघे वा मरीचीरिव पश्येत । तदप्येवमेव विद्यात् ॥**

अरिष्टान्तरं दर्शयति– अथेति । यथा मयूरस्य ग्रीवा लोकेऽतिशयेन नीलवर्णा तद्वत्प्रौढो वह्निर्ज्वलन् यदा नील इव दृश्यते, तथा मेघरहिते निर्मल आकाशे केनाप्यन्येनादृश्यमानां महतीं विद्युतं पश्येत्, मेघे वा प्रौढे सर्वैर्दृश्यमानां विद्युतं स्वयं न पश्येत्, यद्वा

* राप्र. ऐआसागतम् ।

* राप्र. ऐआसागतम् ।

वर्षर्तुमध्ये भूमौ सर्वत्रान्धकारमापादयन्प्रौढो मेघो मध्याह्नादिकाले कदाचिद्भवति तस्मिन्मेघे भासुरा मरीचीरिव पश्यति, तान्येतानि चत्वार्यरिष्टानि । * ऐआसा.

**अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत । तदप्येवमेव विद्यात् ॥**

अरिष्टान्तरं दर्शयति– अथेति । शुष्कतृणकाष्ठादिरहिता केवला मृत्तिकैव प्रौढज्वालायुक्ता यदा दृश्यते तदानीमरिष्टं विद्यात् । * ऐआसा.

**इति प्रत्यक्षदर्शनानि ॥**

उदाहृतान्यरिष्टान्युपसंहरति– इतीति । इत्येवं पूर्वमुक्तानि 'तौ यत्र विहीयेते चन्द्रमा इवाऽऽदित्यो दृश्यते' इत्यारभ्य 'भूमिं ज्वलन्तीमिव पश्येत' इत्यन्तानि जागरणावस्थायां प्रत्यक्षेण दृश्यमानान्यरिष्टानि विज्ञेयानि । * ऐआसा.

**अथ स्वप्नाः ॥**

वक्ष्यमाणं प्रतिजानीते– अथेति । जागरणप्रत्यक्षारिष्टकथनानन्तरं स्वप्नगताः, अरिष्टविशेषाः कथ्यन्ते इति शेषः । * ऐआसा.

**पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति । वराह एनं हन्ति । मर्कट एनमास्कन्दयति । आशु वायुरेनं प्रवहति । सुवर्णं खादित्वाऽपगिरति । मध्वश्नाति । बिसानि भक्षयति । एकपुण्डरीकं धारयति । खरैर्वराहैर्युक्तैर्याति । कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति ॥**

दशसंख्याकानि स्वप्नारिष्टानि दर्शयति– पुरुषमिति । स्वप्ने साकल्येनात्यन्तं कृष्णवर्णं पुरुषदेहं कृष्णवर्णैर्दन्तैर्युक्तं पश्यति । स च पुरुष आगत्यैनं स्वप्नद्रष्टारं हन्ति स्वप्नमध्ये मारयति । तदिदमेकमरिष्टम् । तथा अरण्यमध्ये प्रौढो वराह आगत्य मारयति । तदिदं द्वितीयम् । मर्कटः कश्चिदागत्यैनं स्वप्नद्रष्टारमास्कन्दयति समन्तान्मूर्धपर्यन्तमारोहति । तदिदं तृतीयम् । अतिशीघ्रगामी प्रौढो वायुरेनं गृहीत्वा निम्नदेशे जलवत्प्रवहति । एतच्चतुर्थम् । सुवर्णनिर्मितमाभरणं लड्डुकादिवद्भक्षयित्वा पुनरपि वमति । एतत्पञ्चमम् । माक्षिकं यन्मधु तदाकण्ठमश्नाति । एतत्षष्ठम् । बिसानि पद्मादीनां नालानि भक्षयति । एतत्सप्तमम् । एकपुण्डरीकम् । रक्तवर्णमिति संप्रदायः । तच्छिरसि धारयति । एतदष्टमम् । युक्तैः अश्ववत्सन्नीकृतैः गर्दभैर्वराहैर्वा ग्रामान्तरं गच्छति । एतन्नवमम् । नलदमाली रक्तकुसुमग्रथितस्रग्वी दक्षिणदिगभिमुखो भूत्वा कांचित्कृष्णवत्सोपेतां कृष्णां धेनुं व्राजयति देशान्तरं प्रेरयति । एतद्दशमम् । * ऐआसा.

**स यद्येतेषां किंचित्पश्येत् । उपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात् ॥**

एतैर्जागरणस्वप्नगतैररिष्टैः प्रत्यासन्नं मरणं निश्चित्यानन्तरं यत्कर्तव्यं तद्दर्शयति– स इति । स पुमानेतेषामरिष्टानां मध्ये यत्किमप्यरिष्टं यदा पश्येत् तस्मिन्दिने स्वयमुपवासं कृत्वा स्थालीपाकविधानोपेतं पायसं (श्रपयित्वा) 'रात्री व्यख्यदायती' (ऋसं. १०। १२७) इत्यस्मिन्सूक्ते प्रतिमन्त्रं पायसं हुत्वा स्वगृहे निष्पादितेनान्नेन यथाशक्ति ब्राह्मणान् भोजयित्वा पश्चाद्धोमशेषं चरुं स्वयं प्राश्नीयात् । एतावता संपादनीयस्य पुरुषार्थस्योपस्थितो विघ्नः परिहृतो भवति । * ऐआसा.

**[१]स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम । तौ यत्र विप्रदृश्येते । चन्द्रमा इवाऽऽदित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति । लोहिनी द्यौर्भवति यथा मञ्जिष्ठा । व्यस्तः पायुर्भवति । संपरेतोऽस्याऽऽत्मा न चिरमिव जीविष्यतीति विद्यात् । स यत्करणीयं मन्येत तत्कुर्यात् । अथाप्यादर्शे वोदके वा**

* राप्र. ऐआसागतम् ।

* राप्र. ऐआसागतम् ।

(१) शाआ. ८।६–७.

जिह्मशिरसं वाऽशिरसं वाऽऽत्मानं पश्येन्न वा पश्येत् । तदप्येवमेव विद्यात् । अथापि च्छिद्रा छाया भवति न वा भवति । तदप्येवमेव विद्यात् । अथापि च्छिद्र इवाऽऽदित्यो रथनाभिरिवाऽऽख्यायेत् । तदप्येवमेव विद्यात् । अथापि नील इवाग्निर्दृश्यते यथा मयूरग्रीवा । महामेघे मरीचीरिव पश्येत् । अनभ्रे वा विद्युतः पश्येत् । अभ्र एनां न पश्येत् । तदप्येवमेव विद्यात् । अथाप्यपिधायाक्षिणी उपेक्षेत । यत्रैतद्वराटकानीव न पश्येत् । तदप्येवमेव विद्यात् । अथाप्यपिधाय कर्णौ उपासीत । य एषोऽग्नेरिव ज्वलतः शब्दो रथस्येवोपब्दिस्तं न यदा शृणुयात् । तदप्येवमेव विद्यात् । अथापि विपर्यस्ते कनीनिके दृश्येते । द्विजिह्वे वा न वा दृश्येते । तदप्येवमेव विद्यात् ॥

[1]अथ स्वप्नाः । पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति । वराह एनं हन्ति । मर्कट एनं हन्ति । बिसानि खादयति । सुवर्णं भक्षयित्वाऽवगिरति । एकः(?) पौण्डरीकं धारयति । गां सवत्सां दक्षिणामुखो नलदमाली व्राजयति । स य एतेषां किंचित्पश्येत् । पाण्डुरदर्शनां कालीं स्त्रीं मुक्तकेशां मुण्डांस्तैलाभ्यक्तः कौसुम्भपरिधानं गीतान्युष्ट्रारोहणं दक्षिणाशागमनादीनि वीक्ष्योपोष्य पायसं स्थालीपाकं श्रपयित्वा सरूपवत्सायाः गोः पयसि न त्वेव तु कृष्णाया अग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वाच्य स्रुवेणाऽऽज्याहुतीर्जुहोति ॥

वाचि मेऽग्निः प्रतिष्ठितः स्वाहा । प्राणे मे वायुः प्रतिष्ठितः स्वाहा । अपाने मे वैद्युतः प्रतिष्ठितः स्वाहा । उदाने मे पर्जन्यः प्रतिष्ठितः स्वाहा । चक्षुषि म आदित्यः प्रतिष्ठितः स्वाहा । मनसि मे चन्द्रमाः प्रतिष्ठितः स्वाहा । श्रोत्रे मे दिशः प्रतिष्ठिताः स्वाहा । शरीरे मे पृथिवी प्रतिष्ठिता स्वाहा । रेतसि म आपः प्रतिष्ठिताः स्वाहा । बले म इन्द्रः प्रतिष्ठितः स्वाहा । मन्यौ म ईशानः प्रतिष्ठितः स्वाहा । मूर्धनि म आकाशः प्रतिष्ठितः स्वाहा । आत्मनि मे ब्रह्म प्रतिष्ठितं स्वाहेति । अथैतदाज्यावशेषं स्थालीपाके समवनिनीय स्थालीपाकस्योपघातं जुहोति ॥

वाचि मेऽग्निः प्रतिष्ठितो वाग्हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । प्राणे मे वायुः प्रतिष्ठितः प्राणो हृदये० * । अपाने मे वैद्युतः प्रतिष्ठितोऽपानो हृदये० । उदाने मे पर्जन्यः प्रतिष्ठित उदानो हृदये० । चक्षुषि म आदित्यः प्रतिष्ठितश्चक्षुर्हृदये० । मनसि मे चन्द्रमाः प्रतिष्ठितो मनो हृदये० । श्रोत्रे मे दिशः प्रतिष्ठिताः श्रोत्रं हृदये० । शरीरे मे पृथिवी प्रतिष्ठिता शरीरं हृदये० । रेतसि म आपः प्रतिष्ठिता रेतो हृदये० । बले म इन्द्रः प्रतिष्ठितो बलं हृदये० । मन्यौ म ईशानः प्रतिष्ठितो मन्युर्हृदये० । मूर्धनि म आकाशः प्रतिष्ठितो मूर्धा हृदये० । आत्मनि मे ब्रह्म प्रतिष्ठितमात्मा हृदये हृदयमात्मनि तत्सत्यं देवानां माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहेति । अथैतत्स्थालीपाकशेषमात्मनि समवनिनीय जुहोति ॥

अश्मा जागतमयस्त्रैष्टुभं लोहमौष्णिहं सीसं काकुभं रजतं स्वाराज्यं सुवर्णं गायत्रमन्नं वैराजं तृप्तिरानुष्टुभं नाकं साम्राज्यं बृहस्पतिर्बार्हतं ब्रह्म पाङ्क्तं प्रजापतिरातिच्छन्दसं सावित्री सर्ववेदच्छन्दसेन च्छदसेति ॥

---

(१) शाआ. ११।४-८.

* 'हृदयमात्मनि' इत्यादिर्मन्त्रशेषः प्रथममन्त्रवत्सर्वेषु मन्त्रेषु समानः ।

अश्मेव स्थिरो वसानि जागतेन च्छन्दसा पुरुषो मणिः प्राणः सूत्रमन्नं ग्रन्थिस्तद्ग्रन्थिमुद्ग्रथ्नाम्यन्नकामो मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहा । अय इव स्थिरो वसानि त्रैष्टुभेन च्छन्दसा० * । लोहमिव स्थिरो वसान्यौष्णिहेन च्छन्दसा० । सीसमिव स्थिरो वसानि काकुभेन च्छन्दसा० । रजतमिव स्थिरो वसानि स्वाराज्येन च्छन्दसा० । सुवर्णमिव स्थिरो वसानि गायत्रेण च्छन्दसा० । अन्नमिव स्थिरो वसानि वैराजेन च्छन्दसा० । तृप्तिरिव स्थिरो वसान्यानुष्टुभेन च्छन्दसा० । नाकमिव स्थिरो वसानि साम्राज्येन च्छन्दसा० । बृहस्पतिरिव स्थिरो वसानि बार्हतेन च्छन्दसा० । ब्रह्मेव स्थिरो वसानि पाङ्क्तेन च्छन्दसा० । प्रजापतिरिव स्थिरो वसान्यातिच्छन्दसेन च्छन्दसा० । सावित्रीव स्थिरो वसानि सर्ववेदच्छन्दसेन च्छन्दसा० । मृत्यवे ब्राह्मणमपि सर्वमायुरशीयाऽऽयुष्मान्माऽहमकामो मरिष्याम्यन्नवानन्नादो भूयासं स्वाहेति । प्रियायै वा जायायै प्रियायै (? य) वाऽन्तेवासिनेऽन्यस्मै वाऽपि यस्मै कामयेत तस्मा उच्छिष्टं दद्यात् । सहापि शतं वर्षाणि जीवति । पुनः पुनः प्रयुञ्जानो जीवत्येव जीवत्येव ॥

[1]तदेष श्लोकः–

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ॥

तदेतस्मिन्नर्थे एष श्लोकः मन्त्रोऽपि भवति । यदा कर्मसु काम्येषु कामार्थेषु स्त्रियं स्वप्नेषु स्वप्नदर्शनेषु स्वप्नकालेषु वा पश्यति, समृद्धिं तत्र जानीयात् कर्मणां फलनिष्पत्तिर्भविष्यतीति जानीयादित्यर्थः । तस्मिन् स्त्र्यादिप्रशस्तस्वप्नदर्शने सतीत्यभिप्रायः । – शंकर.

* 'पुरुषो मणिः' इत्यादिर्मन्त्रशेषः प्रथममन्त्रवत्सर्वेषु मन्त्रेषु समानः ।

(१) छान्द. ५।२।९.

## महाभारतम्

राष्ट्रदेशस्थानराजब्राह्मणादीनां क्षोभभयनाशसूचकानि सूर्यादिग्रहसंबन्धीनि भूम्यन्तरिक्षसंबन्धीनि च निमित्तानि

वैशंपायनः–

[1]ततो युद्धाय संनद्धं चेदिराजं युधिष्ठिरः ।
दृष्ट्वा मतिमतां श्रेष्ठो नारदं समुवाच ह ॥

युधिष्ठिरः–

अन्तरिक्षे च भूमौ च न तेऽस्त्यविदितं क्वचित् ।
यानि राजविनाशाय भौमानि च खगानि च ॥
निमित्तानीह जायन्ते उत्पाताश्च पृथग्विधाः ।
एतदिच्छामि कार्त्स्न्येन श्रोतुं त्वत्तो महामुने ॥

वैशंपायनः–

इत्येवं मतिमान् विप्रः कुरुराजस्य धीमतः ।
पृच्छतः सर्वमव्यग्रमाचचक्षे महायशाः ॥

नारदः–

पराक्रमं च मार्गं च संनिपातं समुच्छ्रयम् ।
आरोहणं कुरुश्रेष्ठ अन्योन्यं प्रतिसर्पणम् ॥
रश्मीनां व्यतिसंसर्गं व्यायामं वृत्तिपीडनम् ।
दर्शनादर्शनं चैव अदृश्यानां च दर्शनम् ॥
हानिं वृद्धिं च ह्रासं च वर्णस्थानं बलाबलम् ।
सर्वमेतत् परीक्षेत ग्रहाणां ग्रहकोविदः ॥
भौमाः पूर्वं प्रवर्तन्ते खेचराश्च ततः परम् ।
उत्पद्यन्ते च लोकेऽस्मिन्नुत्पाता देवनिर्मिताः ॥
यदा तु सर्वभूतानां छाया न परिवर्तते ।
अपरेण गते सूर्ये तत्पराभवलक्षणम् ॥
अच्छाये विमलच्छाया प्रतिच्छायेव लक्ष्यते ।
यत्र चैत्यकवृक्षाणां तत्र विद्यान्महद् भयम् ॥

(१) भा. २।४२।१६ इति श्लोकानन्तरं परिशिष्टे (१।२८) समुद्धृताः श्लोकाः.

शीर्णपर्णप्रवालाश्च शुष्कपर्णाश्च चैत्यकाः ।
अपभ्रष्टप्रवालाश्च तत्राभावं विनिर्दिशेत् ॥
स्निग्धपत्रप्रवालाश्च दृश्यन्ते यत्र चैत्यकाः ।
ईहमानाश्च दृष्टाश्च भावस्तत्र न संशयः ॥
पुष्पे पुष्पं प्रजायेत फले वा फलमाश्रितम् ।
राजा वा राजमात्रो वा मरणायोपपद्यते ॥
प्रावृट्छरदि हेमन्ते वसन्ते वाऽपि सर्वशः ।
अकालजं पुष्पफलं राष्ट्रक्षोभं विनिर्दिशेत् ।
नदीनां स्रोतसोऽकाले द्योतयन्ति महाभयम् ॥
वनस्पतिः पूज्यमानः पूजितोऽपूजितोऽपि वा ।
यदा भज्येत वातेन भिद्यते नमतेऽपि वा ॥
अग्निवायुभयं विद्याच्छ्रेष्ठो वाऽत्र विनश्यति ।
दिशः सर्वाश्च दीप्यन्ते जायन्ते राजविभ्रमाः ॥
छिद्यमानो यदा वृक्षो विनदेच्चापि पातितः ।
सह राष्ट्रं च नदति न तं वृक्षं प्रपातयेत् ॥
अथैनं छेदयेत् कश्चित् प्रतिक्रुद्धो वनस्पतिम् ।
छेत्ता भेत्ता पतिश्चैव क्षिप्रमेव विनश्यति ॥
देवतानां च पतनं मण्डपानां च घुष्टनम् ।
अचलानां प्रकम्पश्च तत्पराभवलक्षणम् ॥
निशि चेन्द्रधनुर्दृष्टं ततोऽपि च महद्भयम् ।
तद्द्रष्टुरेव भीतिः स्यान्नान्येषां भरतर्षभ ।
रात्राविन्द्रधनुर्दृष्ट्वा तद्राष्ट्रं परिवर्जयेत् ॥
देवता यत्र नृत्यन्ति नदन्ति च हसन्ति च ।
उन्मीलन्ति निमीलन्ति राष्ट्रक्षोभं विनिर्दिशेत् ॥
शिला यत्र प्रसिञ्चन्ति स्नेहांश्चोदकसंभवान् ।
अन्यद्वा विकृतं किंचित्तद्भयस्य निदर्शनम् ॥
म्रियते वा महामात्रो राजा सपरिवारकः ।
पुरस्य वा भवेद्व्याधी राष्ट्रे देशे च विभ्रमः ॥
देवतानां यदावासे राज्ञां वा यत्र वेश्मनि ।
भाण्डागारायुधागारे निविशेत यदा मधु ॥
सर्वं तद्दाहयेत्स्थानं हन्यमानं बलीयसा ।
आगन्तुकं भयं तत्र भवेदित्येव निर्दिशेत् ॥

पादपश्चैव यो यत्र रक्तं स्रवति शोणितम् ।
दन्ताग्रात्कुञ्जरो वाऽपि शृङ्गाग्राद्वृषभस्तथा ॥
पादपाद्राष्ट्रविभ्रंशः कुञ्जराद्राजविभ्रमः ।
गोब्राह्मणविनाशः स्याद्वृषभस्येति निर्दिशेत् ॥
छत्रं नरपतेर्यस्य निपतेत्पृथिवीतले ।
स सराष्ट्रो नरपतिः क्षिप्रमेव विनश्यति ॥
देवागारेषु वा यत्र राज्ञो वा यत्र वेश्मनि ।
विकृतं यदि दृश्येत नागावासेषु वा पुनः ॥
तस्य देशस्य पीडा स्याद्राज्ञो जनपदस्य वा ।
अनावृष्टिभयं घोरं दुर्भिक्षमिति निर्दिशेत् ॥
बाहुभङ्गे तु देवानां गृहस्थानां भयं भवेत् ।
भग्ने प्रहरणे विद्यात् सेनापतिविनाशनम् ॥
आगन्तुका च प्रतिमा स्थानं यत्र न विन्दति ।
अभ्यन्तरेण षण्मासाद्राजा त्यजति तत्पुरम् ॥
प्रदीर्यते मही यत्र विनदत्यपि पात्यते ।
म्रियते तत्र राजा च तच्च राष्ट्रं विनश्यति ॥
पणीपदान् वा सर्पान् वा डुण्डुभानथ दीप्यकान् ।
मण्डूको ग्रसते यत्र तत्र राजा विनश्यति ॥
अभिन्नं वाऽप्यपक्वं वा यत्रान्नमुपचीयते ।
जीर्यन्ते वा म्रियन्ते वा तदन्नं नोपभुज्यते ॥
उदपाने च यत्राऽऽपो विवर्धन्ते युधिष्ठिर ।
स्थावरेषु प्रवर्तन्ते निर्गच्छेच्च पुनस्ततः ॥
अपादं वा त्रिपादं वा द्विशीर्षं वा चतुर्भुजम् ।
स्त्रियो यत्र प्रसूयन्ते ब्रूयात्तत्र पराभवम् ॥
हस्तिनी महिषी गौर्वा खरोष्ट्रमथ सूकरम् ।
ईदृशानि प्रजायन्ते विद्यात्तत्र पराभवम् ॥
अजैडकाः स्त्रियो गावोऽवयश्चान्येऽपि योनयः ।
विकृतानि प्रजायन्ते तत्र तत्र पराभवः ॥
नदी यत्र प्रतिस्रोतमावहेत् कलुषोदकम् ।
दिशश्च न प्रकाशन्ते तत् पराभवलक्षणम् ॥

नारदः—

एतानि तु निमित्तानि यानि चान्यानि भारत ।
केशवादेव जायन्ते भौमानि च खगानि च ॥

चन्द्रादित्यौ ग्रहाश्चैव नक्षत्राणि च भारत ।
वायुरग्निस्तथैवाऽऽपः पृथिवी च जनार्दनात् ॥
यस्य देशस्य हानिं वा वृद्धिं वा कर्तुमिच्छति ।
तस्मिन् देशे निमित्तानि तानि तानि करोत्ययम् ॥

चेदिराजविनाशसूचकानि निमित्तानि

योऽसौ चेदिपतेस्तात विनाशः समुपस्थितः ।
निवेदयति गोविन्दः स्वैरुपायैर्न संशयः ॥
इयं प्रचलिता भूमिरशिवं वान्ति मारुताः ।
राहुश्चाप्यपतत् सोममपर्वणि विशां पते ॥
सनिर्घाताः पतन्त्युल्कास्तमः संजायते भृशम् ।
चेदिराजविनाशाय हरिरेष विजृम्भते ॥

वैशंपायनः–

एवमुक्त्वा तु भगवान्नारदो विरराम ह ।
ताभ्यां पुरुषसिंहाभ्यां तस्मिन्युद्ध उपस्थिते ।
ददृशुर्भूमिपालास्ते घोरानौत्पातिकान् बहून् ॥
तत्र तैर्दृश्यमानानां दिक्षु सर्वासु भारत ।
अश्रूयन्त तदा राजञ्शिवानामशिवा गिरः ॥
ररास च मही कृत्स्ना सवृक्षपुरपर्वता ।
अपर्वणि च मध्याह्ने सूर्यं स्वर्भानुरग्रसत् ॥
ध्वजाग्रे चेदिराजस्य सर्वरत्नपरिष्कृते ।
अपतत् खाच्च्युतो गृध्रस्तीक्ष्णतुण्डः परंतप ॥
आरण्यैः सह संहृष्टा ग्राम्याश्च मृगपक्षिणः ।
चुकुशुर्भैरवं तत्र तस्मिन् युद्ध उपस्थिते ॥
एवमादीनि घोराणि भौमानि च खगानि च ।
औत्पातिकान्यदृश्यन्त संक्रुद्धे शार्ङ्गधन्वि( ? न्व )नि ॥

कौरवपराभवस्य पाण्डवविजयस्य च सूचकानि निमित्तानि

संजय उवाच–

[1]केशवस्य तु तद्वाक्यं कर्णः श्रुत्वा हितं शुभम् ।
अब्रवीदभिसंपूज्य कृष्णं मधुनिषूदनम् ।
जानन् मां किं महाबाहो संमोहयितुमिच्छसि ॥

शुभं राज्यादिलाभम् आहितः प्रवेशितः । प्रलोभित इत्यर्थः । नीटी.

[1]योऽयं पृथिव्याः कात्स्न्येन विनाशः समुपस्थितः ।
निमित्तं तत्र शकुनिरहं दुःशासनस्तथा ।
दुर्योधनश्च नृपतिर्धृतराष्ट्रसुतोऽभवत् ॥
असंशयमिदं कृष्ण महद् युद्धमुपस्थितम् ।
पाण्डवानां कुरूणां च घोरं रुधिरकर्दमम् ॥
राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।
रणे शस्त्राग्निना दग्धाः प्राप्स्यन्ति यमसादनम् ॥
स्वप्ना हि बहवो घोरा दृश्यन्ते मधुसूदन ।
निमित्तानि च घोराणि तथोत्पाताः सुदारुणाः ॥
पराजयं धार्तराष्ट्रे विजयं च युधिष्ठिरे ।
[2]शंसन्त इव वार्ष्णेय विविधा लोमहर्षणाः ॥
[3]दिवश्चोल्काः पतन्त्येताः सनिर्घाताः सकम्पनाः ॥
[4]निष्टनन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः ।
पानीयं यवसं चापि नाभिनन्दन्ति माधव ॥
प्रादुर्भूतेषु चैतेषु भयमाहुरुपस्थितम् ।
निमित्तेषु महाबाहो दारुणं प्राणिनाशनम् ॥
अल्पे भुक्ते पुरीषं च प्रभूतमिह दृश्यते ।
वाजिनां वारणानां च मनुष्याणां च केशव ॥
धार्तराष्ट्रस्य सैन्येषु सर्वेषु मधुसूदन ।
पराभवस्य तल्लिङ्गमिति प्राहुर्मनीषिणः ॥
प्रहृष्टं वाहनं कृष्ण पाण्डवानां प्रचक्षते ।
प्रदक्षिणा मृगाश्चैव तत्तेषां जयलक्षणम् ॥
अपसव्या मृगाः सर्वे धार्तराष्ट्रस्य केशव ।
वाचश्चाप्यशरीरिण्यस्तत्पराभवलक्षणम् ॥

---

( १ ) भा. ५।१४१।१ ; भामु. ५।१४३।१–२ हितं ( ऽऽहितः ) मधुनिषूदनम् ( तं मधुसूदनम् ).

( १ ) भा. ५।१४१।२–५ ; भामु. ५।१४३।२–६.
( २ ) भा. ५।१४१।६ ; भामु. ५।१४३।७ लोम ( रोम ).
( ३ ) भा. ५।१४१।१० ; भामु. ५।१४३।११.
( ४ ) भा. ५।१४१।११–१६ ; भामु. ५।१४३।१२–१७.

[1]मयूराः पुष्पशकुना हंसाः सारसचातकाः ।
जीवंजीवकसंघाश्चाप्यनुगच्छन्ति पाण्डवान् ॥

पुष्पशकुनाः हंसादय एव । पाठान्तरे पुष्पशकुनाः कुक्कुटाः । जीवंजीवकाः पक्षिविशेषाः ये जीवजीवेत्येवं शब्दं कुर्वन्ति, तेषां संघाः चकोरादयः (?) । नीटी.

[2]गृध्राः काका बडाः श्येना यातुधानाः शलावृकाः ।
मक्षिकाणां च संघाता अनुगच्छन्ति कौरवान् ॥

पाठान्तरे बलाः काकाः । नीटी.

[3]धार्तराष्ट्रस्य सैन्येषु भेरीणां नास्ति निस्वनः ।
अनाहताः पाण्डवानां नदन्ति पटहाः किल ॥
उदपानाश्च नर्दन्ति यथा गोवृषभास्तथा ।
धार्तराष्ट्रस्य सैन्येषु तत्पराभवलक्षणम् ॥

उदपानाः कूपादयो जलाशयाः । नीटी.

[4]मांसशोणितवर्षं च वृष्टं देवेन माधव ।
यथा गन्धर्वनगरं भानुमन्तमुपस्थितम् ।
सप्राकारं सपरिखं सवप्रं चारुतोरणम् ॥

गन्धर्वनगरं सप्राकारम् । नीटी.

[5]कृष्णश्च परिघस्तत्र भानुमावृत्य तिष्ठति ।
उदयास्तमये संध्ये वेदयानो महद्भयम् ।
*एका सृग् वाशते घोरं तत्पराभवलक्षणम् ॥

परिघः परिवेषः । तत्र आकाशे गन्धर्वनगरोपर्येव । शिवा क्रोष्ट्री वाशते शब्दं करोति । नीटी.

[1]एकपक्षाक्षिचरणाः पक्षिणो मधुसूदन ।
उत्सृजन्ति महद्घोरं तत् पराभवलक्षणम् ॥

एकपक्षाक्षिचरणाः पक्षिणो महाराष्ट्रभाषायां 'पाकोळी' इति प्रसिद्धाः । घोरं बीभत्सं मलमूत्रादिकमित्यर्थः । नीटी.

[2]कृष्णग्रीवाश्च शकुना लम्बमाना भयानकाः ।
संध्यामभिमुखा यान्ति तत् पराभवलक्षणम् ॥
[3]ब्राह्मणान् प्रथमं द्वेष्टि गुरूंश्च मधुसूदन ।
भृत्यान् भक्तिमतश्चापि तत् पराभवलक्षणम् ॥
पूर्वा दिग् लोहिताकारा शस्त्रवर्णा च दक्षिणा ।
आमपात्रप्रतीकाशा पश्चिमा मधुसूदन ॥
[4]उत्तरा शङ्खवर्णाभा दिशां वर्णा उदाहृताः ॥
[5]प्रदीप्ताश्च दिशः सर्वा धार्तराष्ट्रस्य माधव ।
महद्भयं वेदयन्ति तस्मिन्नुत्पातलक्षणे ॥
[6]सहस्रपादं प्रासादं स्वप्नान्ते स्म युधिष्ठिरः ।
अधिरोहन् मया दृष्टः सह भ्रातृभिरच्युत ॥

सहस्रपादं सहस्रस्तम्भम् । नीटी.

[7]श्वेतोष्णीषाश्च दृश्यन्ते सर्वे ते शुक्लवाससः ।
आसनानि च शुभ्राणि सर्वेषामुपलक्षये ॥

---

* 'एका एकाकिनी सृग् सृगाली' इति केचित् । 'एका काऽपि स्त्री असृग् वमन्ती शब्दं करोतीत्यर्थः' इति सर्वज्ञनारायणः ।

(१) भा. ५।१४१।१७ ; भामु. ५।१४३।१८ पुष्प (पुण्य) हंसाः (हंस).

(२) भा. ५।१४१।१८ ; भामु. ५।१४३।१९ काका वडाः (कङ्का वकाः) शला (तथा) गच्छन्ति (धावन्ति).

(३) भा. ५।१४१।१९–२० ; भामु. ५।१४३।२० –२१.

(४) भा. ५।१४१।२१ ; भामु. ५।१४३।२२–२३ मन्त (मत्स).

(५) भा. ५।१४१।२२ ; भामु. ५।१४३।२३–२४ स्तमये (स्तमने) यानो (यन्ति) एका सृग् (शिवा च).

(१) भामु. ५।१४३।२५.

(२) भा. ५।१४१।२३ ; भामु. ५।१४३।२६ लम्बमाना (रक्तपादा).

(३) भा. ५।१४१।२४–२५ ; भामु. ५।१४३।२७ –२८.

(४) भामु. ५।१४३।२८.

(५) भा. ५।१४१।२६ ; भामु. ५।१४३।२९ लक्षणे (दर्शने).

(६) भा. ५।१४१।२७ ; भामु. ५।१४३।३०.

(७) भा. ५।१४१।२८ ; भामु. ५।१४३।३१ ते (वै).

*[1]तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला ।
आन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन ॥

तव पृथिवीति संबन्धः । त्वच्छरीरमित्यर्थः । परिक्षिप्ता परिवेष्टिता । नीटी.

[2]अस्थिसंचयमारूढश्चामितौजा युधिष्ठिरः ।
सुवर्णपात्र्यां संहृष्टो भुक्तवान् घृतपायसम् ॥
युधिष्ठिरो मया दृष्टो ग्रसमानो वसुंधराम् ।
त्वया दत्तामिमां व्यक्तं भोक्ष्यते स वसुंधराम् ॥

वसुंधरां ग्रसमानः मृद्भक्षणं कुर्वन् । नीटी.

[3]उच्चं पर्वतमारूढो भीमकर्मा वृकोदरः ।
गदापाणिर्नरव्याघ्रो वीक्षन्निव महीमिमाम् ॥

[4]क्षपयिष्यति नः सर्वान् स सुव्यक्तं महारणे ।
विदितं मे हृषीकेश यतो धर्मस्ततो जयः ॥
पाण्डुरं गजमारूढो गाण्डीवी स धनंजयः ।
त्वया सार्धं हृषीकेश श्रिया परमया ज्वलन् ॥

[5]यूयं सर्वान् वधिष्यध्वं तत्र मे नास्ति संशयः ।
पार्थिवान् समरे कृष्ण दुर्योधनपुरोगमान् ॥

* ' तव चापि ' इत्यस्य पूर्वश्लोकेऽन्वयः । सर्वेषां तव चापि आसनानि शुभ्राणि उपलक्षये इति वाक्ययोजना । सर्वेषामिति सर्वपाण्डवानाम् । सामर्थ्याच्च श्वेतोष्णीषत्व-–शुक्लवासस्त्वविशेषणे अपि कृष्णे योज्ये । नीलकण्ठ व्याख्यानं तु न समीचीनम् ।

(१) भा. ५।१४१।२९ ; भामु. ५।१४३।३२ आन्त्रेण ( अन्त्रेण ).

(२) भा. ५।१४१।३०–३१ ; भामु. ५।१४३।३३–३४.

(३) भा. ५।१४१।३२ ; भामु. ५।१४३।३५ वीक्ष (ग्रस).

(४) भा. ५।१४१।३३–३४ ; भामु. ५।१४३।३६–३७.

(५) भा. ५।१४१।३५ ; भामु. ५।१४३।३८ सर्वान् ( सर्वे ).

[1]नकुलः सहदेवश्च सात्यकिश्च महारथः ।
शुद्धकेयूरकण्ठत्राः शुक्लमाल्याम्बरावृताः ॥

शुक्लानि मौक्तिकमयत्वात्, केयूराणि बाहुभूषणानि कण्ठत्राणि कण्ठपूरकाख्यानि शिरोदेशमारभ्य अंसपर्यन्तं लम्बमानानि कण्ठाभरणानि येषां ते शुक्लकेयूरकण्ठत्राः । नीटी.

[2]अधिरूढा नरव्याघ्रा नरवाहनमुत्तमम् ।
त्रय एते महामात्राः पाण्डुरच्छत्रवाससः ॥

[3]श्वेतोष्णीषाश्च दृश्यन्ते त्रय एव जनार्दन ।
धार्तराष्ट्रस्य सैन्येषु तान् विजानीहि केशव ॥

[4]अश्वत्थामा कृपश्चैव कृपवर्मा च सात्वतः ।
रक्तोष्णीषाश्च दृश्यन्ते सर्वे माधव पार्थिवाः ॥

[5]उष्ट्रयुक्तं समारूढौ भीष्मद्रोणौ जनार्दन ।
मया सार्धं महाबाहो धार्तराष्ट्रेण चाभिभो ॥

[6]अगस्त्यशास्तां च दिशं प्रयाताः स्म जनार्दन ।
अचिरेणैव कालेन प्राप्स्यामो यमसादनम् ॥
अहं चान्ये च राजानो यच्च तत्क्षत्रमण्डलम् ।
गाण्डीवाग्निं प्रवेक्ष्याम इति मे नास्ति संशयः ॥

(१) भा. ५।१४१।३६ ; भामु. ५।१४३।३९ शुद्ध ( शुक्ल ).

(२) भा. ५।१४१।३७ ; भामु. ५।१४३।४० महामात्राः ( मया दृष्टाः ).

(३) भा. ५।१४१।३८ ; भामु. ५।१४३।४१ एव ( एते ).

(४) भा. ५।१४१।३९ ; भामु. ५।१४३।४२.

(५) भा. ५।१४१।४० ; भामु. ५।१४३।४३ युक्तं समा ( प्रयुक्तमा ) जनार्दन ( महारथौ ) चाभिभो ( वा विभो ).

(६) भा. ५।१४१।४१–४२ ; भामु. ५।१४३।४४–४५.

वैशंपायन उवाच–

[1]एवमुक्त्वा स भगवान् कुरूणां प्रपितामहः।
पुनरेव महाबाहुं धृतराष्ट्रमुवाच ह ॥

[2]इह युद्धे महाराज भविष्यति महान् क्षयः।
यथेमानि निमित्तानि भयायाद्योपलक्षये ॥

[3]श्येना गृध्राश्च काकाश्च कङ्काश्च सहिता बलैः।
संपतन्ति वनान्तेषु समवायांश्च कुर्वते ॥

नगाग्रेषु वृक्षाग्रेषु संपतन्ति एकीभूय पतन्ति। समवायान् संघान्। नीटी.

[4]अत्युग्रं च प्रपश्यन्ति युद्धमानन्दिनो द्विजाः।
क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनाम् ॥

अभ्यग्रं समीपम्। क्रव्यादाः मांसभक्षकाः सृगालकाकादयः। नीटी.

[5]खटाखटेति वाशन्तो भैरवं भयवेदिनः।
कह्वाः प्रयान्ति मध्येन दक्षिणामभितो दिशम् ॥

वाशन्तः शब्दं कुर्वन्तः। नीटी.

[6]उभे पूर्वापरे संध्ये नित्यं पश्यामि भारत।
उदयास्तमने सूर्यं कबन्धैः परिवारितम् ॥

[7]श्वेतलोहितपर्यन्ताः कृष्णग्रीवाः सविद्युतः।
त्रिवर्णाः परिघाः संधौ भानुमावारयन्त्युत ॥

परिघाः परिवेषाः कृष्णग्रीवाः श्वेतलोहितपर्यन्ताश्च मध्ये कृष्णास्ततो बहिः श्वेतास्ततो बहिर्लोहिता इति त्रिवर्णाः संधौ संध्यायाम् अवारयन् अवेष्टयन्। नीटी.

[1]ज्वलितार्केन्दुनक्षत्रं निर्विशेषदिनक्षपम्।
अहोरात्रं मया दृष्टं तत्क्षयाय भविष्यति ॥

निर्विशेषदिनक्षयमहोरात्रं निश्चयेन विगतः शेषो यस्य तस्य दिनस्य तिथेः क्षयो यस्मिन् सूर्योदयद्वयास्पर्शिनी क्षयतिथिर्यस्मिन् अहोरात्रे तन्मया दृष्टम्। तदेव विशिनष्टि– ज्वलितेति। अर्केन्द्वोर्नक्षत्रम् अमावास्यायामुभाभ्यामाक्रान्तं नक्षत्रम्, तदेव ज्वलितं पापग्रहाक्रान्तं यस्मिन्। दर्शे क्षयतिथिः तन्नक्षत्रे च पापग्रह इत्ययं महान् दुर्योग इत्यर्थः। नीटी.

[2]अलक्ष्यः प्रभया हीनः पौर्णमासीं च कार्तिकीम्।
चन्द्रोऽभूदग्निवर्णश्च समवर्णे नभस्तले ॥

पद्मवर्णे रक्तपद्मवर्णे। 'लोहिनी द्यौर्भवति यथा मञ्जिष्ठा' इति श्रुतेर्दिवो रक्तत्वमशुभसूचकम्। नीटी.

[3]स्वप्स्यन्ति निहता वीरा भूमिमावृत्य पार्थिवाः।
राजानो राजपुत्राश्च शूराः परिघबाहवः ॥
अन्तरिक्षे वराहस्य वृषदंशस्य चोभयोः।
प्रणादं युध्यतो रात्रौ रौद्रं नित्यं प्रलक्षये ॥

वराहः गृहकोलः। वृषदंशः मार्जारः। तयोर्भूचरयोरप्यन्तरिक्षे उत्प्लुत्य युध्यतोः प्रणादम्। नीटी.

[4]देवताप्रतिमाश्चापि कम्पन्ति च हसन्ति च।
वमन्ति रुधिरं चाऽऽस्यैः स्विद्यन्ति प्रपतन्ति च ॥

---

(१) भा. ६।२।१५; भामु. ६।२।१५ बाहुं (बाहो).

(२) भा. ६।२।१६; भामु. ६।२।१६ यथेमानि (तथेह च) भयायाद्यो (भयदान्यु).

(३) भा. ६।२।१७; भामु. ६।२।१७ बलैः (बकैः) वनान्तेषु (नगाग्रेषु).

(४) भा. ६।२।१८; भामु. ६।२।१८ अत्यु (अभ्य).

(५) भा. ६।२।१९; भामु. ६।२।१९ खटाखटेति (निर्दयं चाभि) भैरवं (भैरवा) कह्वाः (कङ्काः).

(६) भा. ६।२।२०; भामु. ६।२।२०.

(७) भा. ६।२।२१; भामु. ६।२।२१ मावारयन्त्युत (मन्तमवारयन्).

(१) भा. ६।२।२२; भामु. ६।२।२२ क्षपम् (क्षयम्) तत्क्षयाय (तद्भयाय).

(२) भा. ६।२।२३; भामु. ६।२।२३ समवर्णे (पद्मवर्णे).

(३) भा. ६।२।२४–२५; भामु. ६।२।२४–२५.

(४) भा. ६।२।२६; भामु. ६।२।२६ श्चापि (श्चैव).

[1]अनाहता दुन्दुभयः प्रणदन्ति विशां पते ।
अयुक्ताश्च प्रवर्तन्ते क्षत्रियाणां महारथाः ॥

अयुक्ताः अश्वैरयोजिता अपि प्रवर्तन्ते चलन्ति । महान्तो रथाः महारथाः । नीटी.

कोकिलाः शतपत्राश्च चाषा भाषाः शुकास्तथा ।
सारसाश्च मयूराश्च वाचो मुञ्चन्ति दारुणाः ॥

[2]गृहीतशस्त्राभरणा वर्मिणो वाजिपृष्ठगाः ।
अरुणोदयेषु दृश्यन्ते शतशः शलभव्रजाः ॥

गृहीतशस्त्राः आत्तलोहाः, लोहतुण्डा इति यावत् । 'शस्त्रमायुधलोहयोः' इत्यमरः । वर्मिणः भृङ्गरिटिसंज्ञाः कृष्णशलभविशेषाः । 'चर्मी फलकपाणौ स्याद्भूर्जे भृङ्गरिटावपि' इति मेदिनी । ते वाजिपृष्ठगाः अश्वांस्तुदन्तो दृश्यन्ते इत्यर्थः । नीटी.

[3]उभे संध्ये प्रकाशेते दिशां दाहसमन्विते ।
आसीद्रुधिरवर्षं च अस्थिवर्षं च भारत ॥

[4]या चैषा विश्रुता राजंस्त्रैलोक्ये साधुसंमता ।
अरुन्धती तयाऽप्येष वसिष्ठः पृष्ठतः कृतः ॥
रोहिणीं पीडयन्नेष स्थितो राजञ्शनैश्चरः ।
व्यावृत्तं लक्ष्म सोमस्य भविष्यति महद्भयम् ॥

व्यावृत्तं नष्टम् । लक्ष्महीनश्चन्द्रो दृश्यते इत्यर्थः । नीटी.

[5]अनभ्रे च महाघोरं स्तनितं श्रूयतेऽनिशम् ।
वाहनानां च रुदतां प्रपतन्त्यश्रुबिन्दवः ॥

स्तनितः स्वनः गर्जितरूपः शब्दः । नीटी.

व्यास उवाच–

[1]खरा गोषु प्रजायन्ते रमन्ते मातृभिः सुताः ।
अनार्तवं पुष्पफलं दर्शयन्ति वने द्रुमाः ॥

खराः प्रजायन्ते मिथुनीभवन्ति उत्पद्यन्ते इति वा । नीटी.

[2]गर्भिण्यो राजपुत्र्यश्च जनयन्ति विभीषणान् ।
क्रव्यादान् पक्षिणश्चैव गोमायूनपरान् मृगान् ॥

क्रव्यादाः सारमेयादयः । नीटी.

[3]त्रिविषाणाश्चतुर्नेत्राः पञ्चपादा द्विमेहनाः ।
द्विशीर्षाश्च द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः ॥
जायन्ते विवृतास्याश्च व्याहरन्तोऽशिवा गिरः ।
त्रिपदाः शिखिनस्तार्क्ष्याश्चतुर्दंष्ट्रा विषाणिनः ॥

विषाणिनः शृङ्गवन्तस्तार्क्ष्या एव । नीटी.

[4]तथैवान्याश्च दृश्यन्ते स्त्रियश्च ब्रह्मवादिनाम् ।
वैनतेयान् मयूरांश्च जनयन्त्यः पुरे तव ॥

[5]गोवत्सं वडवा सूते श्वा सृगालं महीपते ।
क्रकराञ्शारिकाश्चैव शुकांश्चाशुभवादिनः ॥

वडवा अश्वा । श्वा शुनी । करभः मृगविशेषः । 'करभः कलभो वाऽष्टापदे प्रोक्तो मृगान्तरे' इति विश्वः । नीटी.

---

(१) भा. ६।२।२७–२८ ; भामु. ६।२।२७–२८.

(२) भा. ६।२।२९ ; भामु. ६।२।२९ शस्त्राभरणा वर्मिणो ( शस्त्राः क्रोशन्ति चर्मिणो ) दयेषु ( दये प्र ).

(३) भा. ६।२।३० ; भामु. ६।२।३० शेते दिशां ( शन्ते दिशो ) उत्तरार्धे ( पर्जन्यः पांसुवर्षी च मांसवर्षी च भारत ॥ ).

(४) भा. ६।२।३१–३२ ; भामु. ६।२।३१–३२.

(५) भा. ६।२।३३ ; भामु. ६।२।३३ घोरं ( घोरः ) नितं ( नितः ) ऽनिशम् ( स्वनः ) प्रप ( निप ).

(१) भा. ६।३।१ ; भामु. ६।३।१ वने ( वन ).

(२) भा. ६।३।२ ; भामु. ६।३।२ राजपुत्र्यश्च ( ऽजातपुत्राश्च ) उत्तरार्धे ( क्रव्यादाः पक्षिणश्चापि सहाघ्नन्ति परस्परम् ॥ ).

(३) भा. ६।३।३–४ ; भामु. ६।३।३–४.

(४) भा. ६।३।५ ; भामु. ६।३।५ स्त्रियश्च ( स्त्रियो वै ) यन्त्यः ( यन्ति ).

(५) भा. ६।३।६ ; भामु. ६।३।६ उत्तरार्धे ( कुक्कुरान् करभाश्चैव शुकाश्चाशुभवादिनः ॥ ).

[1]स्त्रियः काश्चित् प्रजायन्ते चतस्रः पञ्च कन्यकाः ।
ता जातमात्रा नृत्यन्ति गायन्ति च हसन्ति च ॥

प्रजायन्ते जनयन्ति । नीटी.

[2]पृथग्जनस्य कुडकाः स्तनपाः स्तेनवेश्मनि ।
नृत्यन्ति परिगायन्ति वेदयन्तो महद्भयम् ॥

पृथग्जनस्य नीचजनस्य संबन्धिनः क्षुद्रकाः न्यङ्गाः चण्डालादिषु जाताः काणकुब्जादय इत्यर्थः । 'क्षुद्रा व्यङ्गा नटी' इत्यादि मेदिनी । नीटी.

[3]प्रतिमाश्चाऽऽलिखन्त्यन्ये सशस्त्राः काल-चोदिताः ।
अन्योन्यमभिधावन्ति शिशवो दण्डपाणयः ।
उपरुन्धन्ति कृत्वा च नगराणि युयुत्सवः ॥

नगराणि कृत्रिमाणि शिशव एव अवमृद्नन्ति । नीटी.

[4]पद्मोत्पलानि वृक्षेषु जायन्ते कुमुदानि च ।
विष्वग्वाताश्च वान्त्युग्रा रजो न व्युपशाम्यति ॥

पद्मानि महान्ति, उत्पलानि क्षुद्राणीति भेदः । कुमुदानि चन्द्रोदयविकासीनि तान्येव । नीटी.

[5]अभीक्ष्णं कम्पते भूमिरर्कं राहुस्तथाऽग्रसत् ।
श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति ॥

वर्तते वर्तयति दीप्यत इत्यर्थः । नित्यं दावदाहो भवतीति यावत् । 'कल्पते' इति पाठेऽपि स एवार्थः । कार्तिक्याः परं हि संग्रामारम्भः, तत्र तुलास्थमर्के राहुरुपैति । तदैव श्वेतो ग्रहः केतुः चित्रामतिक्रामति स्वात्यादौ वर्तते । नित्यं समसप्तकस्थौ राहुकेतू इदानी-मेकराशिगतौ महानिष्टसूचकाविति भावः । नीटी.

[1]अभावं हि विशेषेण कुरूणां प्रतिपश्यति ।
धूमकेतुर्महाघोरः पुष्यमाक्रम्य तिष्ठति ॥

धूमकेतुः उपग्रहविशेषः । स पुष्यं क्षत्रियनक्षत्रम् आक्रम्य तिष्ठति । तथा वक्ष्यमाणरीत्या ज्येष्ठास्थेनापि केतुना पुष्यो विद्धः । तथा च स्वनक्षत्रे क्रूराक्रान्ते क्रूर-विद्धे च सति अवश्यं क्षत्रियाणां नाशो भवतीत्यर्थः । यथोक्तम्— 'कृत्तिकायां तथा पुष्ये रेवत्यां च पुनर्वसौ । वेधे सति क्रमाद्वेधो वर्णेषु ब्राह्मणादिषु ॥' इति नरपति-विजये । नीटी.

[2]सेनयोरशिवं घोरं करिष्यति महाग्रहः ।
मघास्वङ्गारको वक्रः श्रवणे च बृहस्पतिः ॥

[3]भाग्यं नक्षत्रमाक्रम्य सूर्यपुत्रेण पीडयते ।
शुक्रः प्रोष्ठपदे पूर्वे समारुह्य विशां पते ।
उत्तरे तु परिक्रम्य सहितः प्रत्युदीक्षते ॥

भगं नक्षत्रं पूर्वाफल्गुनी, श्रुतिमते तु उत्तराफल्गुनी । पूर्वे प्रोष्ठपदे पूर्वाभाद्रपदानक्षत्रं समारुह्य, *परिक्रम्य परिघाख्य उपग्रहः, तेन सहितः उत्तरे उत्तराभाद्रपदा-नक्षत्रम् उदीक्षते आक्रान्तुमिच्छति । नीटी.

---

(१) भा. ६।३।७ ; भामु. ६।३।७ ता जातमात्रा (जातमात्राश्च).

(२) भा. ६।३।८ ; भामु. ६।३।८ पूर्वार्धे (पृथ-ग्जनस्य सर्वस्य क्षुद्रकाः प्रहसन्ति च ।).

(३) भा. ६।३।९ ; भामु. ६।३।९–१० न्त्यन्ये (न्त्येताः) पञ्चमचरणे (अन्योन्यमभिमृद्नन्ति).

(४) भा. ६।३।१० ; भामु. ६।३।१०–११ न व्युप (नाप्युप).

(५) भा. ६।३।११ ; भामु. ६।३।११–१२ कम्प (र्कं) स्तथाऽग्रसत् (रुपैति च).

* अयमभिप्रायो नीलकण्ठस्यात्रोन्नीयते – "परिक्रम्ये-त्यकारान्तं नाम परिघाख्यं कंचिदुपग्रहमभिधत्ते । परिक्रम्येण सहितः परिक्रम्यसहित इति सामासिकं पदम् । परिक्रम्य इत्यत्र 'कृत्यल्युटो बहुलम्' इति बाहुलकात् 'पोरदुप-धात्' इति कर्तरि यत्" इति । तथा च ल्यबन्तत्वाभि-प्रायेण 'परिक्रम्य' इति निर्विसर्गस्य मुद्रणं टीकायां प्रामादिकमिति भाति ।

(१) भा. ६।३।१२ ; भामु. ६।३।१२–१३ प्रति (तत्र) पुष्यमा (पुष्यं चा).

(२) भा. ६।३।१३ ; भामु. ६।३।१३–१४.

(३) भा. ६।३।१४ ; भामु. ६।३।१४–१५ भाग्यं (भगं) विशां पते (विरोचते) प्रत्यु (समु).

[1]**श्यामो ग्रहः प्रज्वलितः सधूमः सहपावकः ।**
**ऐन्द्रं तेजस्वि नक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति ॥**

श्वेतः द्वितीय उपग्रहः केतुसंज्ञः । ऐन्द्रं ज्येष्ठानक्षत्रमिति योज्यम् । नीटी.

[2]**ध्रुवः प्रज्वलितो घोरमपसव्यं प्रवर्तते ।**
**रोहिणीं पीडयत्येवमुभौ च शशिभास्करौ ।**
**चित्रास्वात्यन्तरे चैव धिष्ठितः परुषो ग्रहः ॥**

परुषग्रहः राहुः एकनक्षत्रस्थौ शशिभास्करौ पीडयति, अपसव्यं प्रवर्तते सर्वदा वक्री सन्, सर्वतोभद्रचक्रे वेधेन स्वातीस्थः सन् रोहिणीनक्षत्रं च पीडयतीत्यर्थः । नीटी.

[3]**वक्रानुवक्रं कृत्वा च श्रवणे पावकप्रभः ।**
**ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः ॥**

तत्रैव सर्वतोभद्रचक्रे मघास्थः लोहिताङ्गः अङ्गारकः वक्रानुवक्रं कृत्वा पुनःपुनर्वक्रीभूय ब्रह्मणा बृहस्पतिना आक्रान्तं राशिं नक्षत्रं श्रवणं समावृत्य सम्यक् पूर्णदृष्ट्या विद्ध्वा तिष्ठति । नीटी.

[4]**सर्वसस्यप्रतिच्छन्ना पृथिवी फलमालिनी ।**
**पञ्चशीर्षा यवाश्चैव शतशीर्षाश्च शालयः ॥**

परिच्छन्ना आच्छादिता । पञ्च शीर्षाणि शिम्बीसदृशानि येषां ते पञ्चशीर्षाः । नीटी.

[5]**प्रधानाः सर्वलोकस्य यास्वायत्तमिदं जगत् ।**
**ता गावः प्रस्नुता वत्सैः शोणितं प्रक्षरन्त्युत ॥**

(१) भा. ६।३।१५ ; भामु. ६।३।१६ श्यामो (श्वेतो) सह (इव).

(२) भा. ६।३।१६ द्वितीयार्धं नास्ति ; भामु. ६।३।१७ ध्रुवः (ध्रुवं) धिष्ठितः परुषो (विष्ठितः परुष).

(३) भा. ६।३।१७ ; भामु. ६।३।१८ श्रवणे (श्रवणं).

(४) भा. ६।३।१८ ; भामु. ६।३।१९ प्रति (परि) फल (सस्य) श्चैव (श्चापि).

(५) भा. ६।३।१९ ; भामु. ६।३।२०.

[1]**निश्चेरुरपिधानेभ्यः खड्गाः प्रज्वलिता भृशम् ।**
**व्यक्तं पश्यन्ति शस्त्राणि संग्रामं समुपस्थितम् ॥**

[2]**अग्निवर्णा यथा भासः शस्त्राणामुदकस्य च ।**
**कवचानां ध्वजानां च भविष्यति महान् क्षयः ॥**

[3]**पृथिवी शोणितावर्ता ध्वजोडुपसमाकुला ।**
**कुरूणां वैशसे राजन् पाण्डवैः सह भारत ॥**

शोणितमयाः आवर्ताः यस्याम्, रक्तप्रवाहवतीत्यर्थः । अत एव ध्वजा एव उडुपानि क्षुद्रनावः, तैः समाकुला । वैशसे विरोधे । नीटी.

[4]**दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजाः ।**
**अत्याहितं दर्शयन्तो वेदयन्ति महद्भयम् ॥**

[5]**एकपक्षाक्षिचरणः शकुनिः खचरो निशि ।**
**रौद्रं वदति संरब्धः शोणितं छर्दयन्मुहुः ॥**

छर्दयन् श्रोतॄणां क्लेशकरत्वेन रक्तवमनं कारयन्निव । नीटी.

[6]**ग्रहौ ताम्रारुणशिखौ प्रज्वलन्ताविव स्थितौ ।**
**सप्तर्षीणामुदाराणां समवच्छाद्य वै प्रभाम् ॥**

शस्त्राणि प्रभया ज्वलन्तीव । नीटी.

[7]**संवत्सरस्थायिनौ च ग्रहौ प्रज्वलिताबुभौ ।**
**विशाखयोः समीपस्थौ बृहस्पतिशनैश्चरौ ॥**

(१) भा. ६।३।२० ; भामु. ६।३।२१ रपिधानेभ्यः (र्चिषश्चापात्) प्रज्व (श्च ज्व).

(२) भा. ६।३।२१ ; भामु. ६।३।२२ महान् (महा).

(३) भामु. ६।३।२३.

(४) भा. ६।३।२२ ; भामु. ६।३।२४.

(५) भा. ६।३।२३ ; भामु. ६।३।२५ यन्मुहुः (यन्निव).

(६) भा. ६।३।२४ ; भामु. ६।३।२६ (शस्त्राणि चैव राजेन्द्र प्रज्वलन्तीव संप्रति । सप्तर्षीणामुदाराणां समवच्छाद्यते प्रभा ॥ ).

(७) भा. ६।३।२५ ; भामु. ६।३।२७ खयोः (खायाः).

पूर्वं श्रवणस्थो बृहस्पतिः, भगनक्षत्रस्थः सूर्यपुत्र इत्युक्तम्। तावुभौ विशाखासमीपे तिर्यग्वेधेन शतपदे चक्रे विशाखानक्षत्रं विध्यत इत्यर्थः। तथाहि— तस्मिश्चक्रे 'खु—खे—खो' इति श्रवणान्त्यपादत्रयं व्युत्क्रमेण विशाखाद्यपादत्रयेण 'ति—तु—ते' इत्यनेन विध्यते तृतीयेन चतुर्थः द्वितीयेन तृतीयः प्रथमेन द्वितीय इति। तथा उत्तराफल्गुन्या अन्त्यपादत्रयेण 'टो—पा—पी' इत्यनेन क्रमेण 'ति—तु—ते' इति विशाखाद्यपादत्रयं तत्रैव चक्रे विध्यते इति तच्चक्रविदां प्रत्यक्षम्।

नीटी.

**[1]चन्द्रादित्यावुभौ ग्रस्तावेकाह्ना हि त्रयोदशीम्।**
**अपर्वणि ग्रहं यातौ प्रजासंक्षयमिच्छतः॥**

अपर्वणि— पर्व दर्शाख्यं पञ्चदशेऽह्नि भवति एकतिथिक्षये चतुर्दशे वाऽह्नि भवति। तिथिद्वयक्षयस्तु लोकेऽत्यन्तमप्रसिद्ध इत्यपर्वणीत्युक्तम्। ग्रहं यातौ राहुणा ग्रहणं प्राप्तौ। एतदेव प्रजासंक्षयहेतुत्वेन शास्त्रे दृष्टमित्याह— प्रजेति।

नीटी.

**[2]कृत्तिकासु ग्रहस्तीव्रो नक्षत्रे प्रथमे ज्वलन्।**
**वपूंष्यपहरन् भासा धूमकेतुरिव स्थितः॥**

चित्रास्वात्यन्तरस्थः परुषो ग्रहो रोहिणीं पीडयतीत्युक्तम्। तत्र चित्रांशे स्थित्वा रोहिणीमष्टादशत्वेन सामुदायिकनक्षत्रं पीडयति, स्वात्यंशे स्थित्वा कृत्तिकां षोडशकत्वेन सांघातिकनक्षत्रं पीडयति, सर्वतोभद्रचक्रे तथा दर्शनात्। तदेतदाह— कृत्तिकामित्यर्धेन। तीक्ष्णैः क्रूरैः कर्मभिरुपलक्षितो राहुरित्यर्थः। धूमकेतुमुत्पातविशेषमनुलक्ष्यावस्थिताः।

नीटी.

**[1]विषमं जनयन्त्येत आक्रन्दजननं महत्।**
**त्रिषु पूर्वेषु सर्वेषु नक्षत्रेषु विशां पते।**
**बुधः संपततेऽभीक्ष्णं जनयन्सुमहद्भयम्॥**

एते वायवः। विषमं वैरम्। युद्धमिति यावत्। त्रिष्विति। त्रिष्वपि छत्रेषु नरपतिविजयप्रोक्तेषु। यथा अश्विन्यादिभिर्नवभिर्नक्षत्रैरौदीच्यस्याश्वपतेश्छत्रे चामरं कलशो वीणा छत्रं दण्डः पतद्ग्रह आसनं शीलकं रज्जुरित्यवयवाः कल्प्यन्ते। एवं मघादिनवकेन प्राच्यस्य गजपतेः। तथा मूलादिनवकेन दक्षिणस्य नरपतेः। एवंविधेषु त्रिष्वपि छत्रेषु तत्रापि सर्वेषु नक्षत्रेषु नास्ति क्षत्रमेभिरिति योगेन क्षत्रविरोधिषु नक्षत्रेषु नक्षत्राणि च तानि नक्षत्राणि भानि तेषु क्रूराक्रान्तत्वादिना क्षत्रियाभावकरेषु नक्षत्रेषु गृध्रः पापग्रहः शीर्षे कलशस्थानं संपतते। तेन च्छत्रत्रयस्य तदन्तर्गतानामन्येषां च माण्डलिकानां राज्ञां नाशः सूच्यते। तत्रैवं सति मघासु कुजोऽस्ति तथा यदा भगनक्षत्रं पूर्वाफल्गुनी तदा तत्रत्यः शनैश्चरोऽवश्यं युद्धादिना गजपतेर्महद्भयं करिष्यति। यथोक्तं तत्रैव— 'कलशस्थे भवेद्युद्धं रणे रोगे महद्भयम्। घातपातादिकं सर्वं जायते नात्र संशयः॥' इति। कलशस्थे, शनैश्चरे इति शेषः। तथा विशाखाज्येष्ठे अप्यत्रैव छत्रे क्रूरविद्धे क्रूराक्रान्ते वर्तेते इत्यवश्यं गजपतेश्छत्रभङ्गः। एवं प्रथमच्छत्रेऽपि कृत्तिकारोहिण्योः पुष्यस्य च पीडाऽस्ति। यथाऽन्तिमच्छत्रे श्रवणप्रोष्ठपदयोर्बृहस्पतिशुक्रौ वर्तेते इति तथाऽपि तावनिष्टफलावेव। एवं पूर्वस्य निरन्वयो नाशः, इतरयोश्छत्रयो राजनाशेऽपि तत्पुत्राणां छत्रप्राप्तिरस्तीति विशेषः। तथा च मध्यमच्छत्रे मघासु भौमः स्वात्यां सूर्यचन्द्रराहवः पूर्वस्यामुत्तरस्यां वा फल्गुन्यां शनैश्चरः विशाखायां वेधेन बृहस्पतिश्चास्ति। तेषां फलं तत्रैवोक्तम्— 'क्रूरग्रहचतुष्कं च बुधचन्द्रेण संयुतम्। पूर्वच्छत्रविनाशाय कथितं पूर्वसूरिभिः॥' इति। तत्र सिन्धु-

---

(१) भामु. ६।३।२८.

(२) भा. ६।३।२६; भामु. ६।३।३० (कृत्तिकां पीडयंस्तीक्ष्णैर्नक्षत्रं पृथिवीपते। अभीक्ष्णवाता वायन्ते धूमकेतुमवस्थिताः॥).

(१) भा. ६।३।२७ प्रथमार्धं नास्ति; भामु. ६।३।३१ पूर्वेषु सर्वेषु (सर्वेषु नक्षत्र) उत्तरार्धे (गृध्रः संपतते शीर्षं जनयन् भयमुत्तमम्॥).

सागरसंगमाद्गोदावरीसागरसंगमपर्यन्तमेका रेखा, तद्दक्षिणे नरपतिः। तत एव कर्णप्रावरणपर्यन्तं द्वितीया, तदुत्तरे गजपतिः। तयो रेखयोर्मध्येऽश्वपतिः। हस्तिनापुरं तु ईशानदेशस्थत्वाद्गङ्गाद्वारात् पूर्वभागेऽस्तीति गजपतिच्छत्रान्तर्गतमेव। हरिद्वारं तु देहलीदीपन्यायेनाश्वपतिगजपत्योरन्तर्गतमिति तेन हस्तिनापुरस्थानां प्राच्यत्वादत्यन्तं क्षयस्तथैव पाञ्चालादीनामपीति। एतच्च नरपतिविजयदर्शिनां स्पष्टम्। ईशानदेशाः कूर्मचक्रे प्रोक्ताः– 'रेवती अश्विनी याम्ये पादे ईशानगोचरे। गङ्गाद्वारं कुरुक्षेत्रं श्रीकण्ठं हस्तिनापुरम्। अश्ववक्त्रैकपादाश्च कर्णप्रावरणास्तथा। विनश्यन्ति च ते सर्वे देशास्त्वीशानगोचरे॥' इति दिक्। नीटी.

**[1]चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम्।**
**इमां तु नाभिजानामि अमावास्यां त्रयोदशीम्॥**

चन्द्रादित्यावुभौ ग्रस्तावित्येतेन श्लोकेनोक्तमर्थं विशदयति द्वाभ्याम्– चतुर्दशीमिति। त्रयोदशीं त्रयोदशानामह्नां पूरणीममावास्यां भूतपूर्वां नाभिजाने न जानामि। अतिभूयसा कालेनायं दुर्योग आगत इति भावः। नीटी.

**[2]चन्द्रसूर्यावुभौ ग्रस्तावेकमासे त्रयोदशीम्।**
**अपर्वणि ग्रहावेतौ प्रजाः संक्षपयिष्यतः॥**

एकमासीम् एकस्मिन्नेव मासे भवाम्। पूर्वं त्रयोदश्यां रात्रौ पक्षसमाप्त्या सूर्यग्रहणमेवोक्तम्। इदानीं तु एकस्मिन्मासे चन्द्रः पूर्णमास्यां राहुणा ग्रहेण ग्रस्तः सूर्योऽमावास्यायाम्। यदा सूर्यो ग्रस्तस्तदा चन्द्रोऽपि ग्रस्त एव, दर्शे तयोः संहतत्वात्। अपर्वणीति। लोकाप्रसिद्धपर्वणीति पूर्ववत् ज्ञेयम्। नीटी.

**[1]रजोवृता दिशः सर्वाः पांसुवर्षैः समन्ततः।**
**उत्पातमेघा रौद्राश्च रात्रौ वर्षन्ति शोणितम्॥**

अशोभिताः अमङ्गलाः। नीटी.

**[2]मांसवर्षं पुनस्तीव्रमासीत् कृष्णचतुर्दशीम्।**
**अर्धरात्रे महाघोरमतृप्यंस्तत्र राक्षसाः॥**

**[3]प्रतिस्रोतोऽवहन् नद्यः सरितः शोणितोदकाः।**
**फेनायमानाः कूपाश्च नर्दन्ति वृषभा इव।**
**पतन्त्युल्काः सनिर्घाताः शुष्काशनिविमिश्रिताः॥**

प्रतिस्रोतसो महानद्यः विपरीतप्रवाहाः। विभक्तिलोप आर्षः। 'विशेषणं विशेष्येण बहुलम्' (पा. २।१।५७) इति समासो वा, क्रियाविशेषणं वा। कूपाः जलाशयाः। कूर्दन्ति क्रीडन्ति। वातैः क्षुभ्यन्ते इत्यर्थः। नीटी.

**[4]अद्य चैव निशां व्युष्टामुदये भानुराहतः।**
**ज्वलन्तीभिर्महोल्काभिश्चतुर्भिः सर्वतोदिशम्॥**

अनयम् अनीतिफलम्। महोल्काभिः दीपाभावात् शणकाष्ठज्वालया रात्रौ विनिःसृत्य गृहाद्बहिर्निर्गत्य। नीटी.

**[5]आदित्यमुपतिष्ठद्भिस्तत्र चोक्तं महर्षिभिः।**
**भूमिपालसहस्राणां भूमिः पास्यति शोणितम्॥**

---

(१) भा. ६।३।२८ ; भामु. ६।३।३२ जानामि (जानेऽहम्).

(२) भा. ६।३।२९ ; भामु. ६।३।३२–३३ मासे (मासीं) ग्रहावेतौ (ग्रहेणैतौ).

(१) भा. ६।३।३० ; भामु. ६।३।२९ रजोवृता (अशोभिता).

(२) भा. ६।३।३१ ; भामु. ६।३।३३ उत्तरार्धे (शोणितैर्वक्त्रसंपूर्णा अतृप्तास्तत्र राक्षसाः॥).

(३) भा. ६।३।३२ ; भामु. ६।३।३४–३५ ऽवहन् (महा) नर्दन्ति (कूर्दन्ति) षष्ठचरणे (शक्राशनिसमप्रभाः).

(४) भा. ६।३।३३ ; भामु. ६।३।३५–३६ (अद्य चैव निशां व्युष्टामनयं समवाप्स्यथ। विनिःसृत्य महोल्काभिस्तिमिरं सर्वतोदिशम्॥).

(५) भा. ६।३।३४ ; भामु. ६।३।३६–३७ आदित्य (अन्योन्य).

[1]कैलासमन्दराभ्यां तु तथा हिमवतो गिरेः ।
सहस्रशो महाशब्दं शिखराणि पतन्ति च ॥

महाशब्दः, क्रियते इति शेषः । नीटी.

[2]महाभूता भूमिकम्पे चतुरः सागरान् पृथक् ।
वेलामुद्वर्तयन्ति स्म क्षोभयन्तः पुनः पुनः ॥

महाभूताः वृद्धीभूताः । अभूततद्भावे महच्छब्दाद्भवतौ परे डाच् । मर्यादामुल्लङ्घितवन्त इवेत्यर्थः । नीटी.

[3]वृक्षानुन्मथ्य वान्त्युग्रा वाताः शर्करकर्षिणः ।
आभग्नाः सुमहावातैरशनीभिः समाहताः ।
पतन्ति चैत्यवृक्षाश्च ग्रामेषु नगरेषु च ॥

अशनीभिः । 'अशनिर्द्वयोः' इति कोशात् स्त्रीत्वम् । नीटी.

[4]पीतलोहितनीलश्च ज्वलत्यग्निर्हुतो द्विजैः ।
वामार्चिः शावगन्धी च धूमप्रायः खरस्वनः ।
स्पर्शा गन्धा रसाश्चैव विपरीता महीपते ॥

[5]धूमायन्ते ध्वजा राज्ञां कम्पमाना मुहुर्मुहुः ।
मुञ्चन्त्यङ्गारवर्षाणि मेर्योऽथ पटहास्तथा ॥

[1]प्रासादशिखराग्रेषु पुरद्वारेषु चैव हि ।
गृध्राः परिपतन्त्युग्रा वामं मण्डलमाश्रिताः ॥

शिखराणां द्रुमाग्राणाम् । 'शिखरोऽस्त्री द्रुमाग्रे च' इति मेदिनी । नीटी.

[2]पक्वापक्वेति सुभृशं वावाश्यन्ते वयांसि च ।
निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षिताम् ॥

पक्वापक्वेति विनाशाभिमुखानां परस्परं युद्धमिति । 'पक्वं परिणतेऽपि स्याद्विनाशाभिमुखे त्रिषु' इति मेदिनी । पक्वापक्वेति पक्षिरुतानुकरणम् । वावाश्यन्ते अतिशयेन शब्दं कुर्वन्ति । नीटी.

[3]ध्यायन्तः प्रकिरन्तश्च वालान् वेपथुसंयुताः ।
रुदन्ति दीनास्तुरगा मातङ्गाश्च सहस्रशः ॥

प्रकिरन्तः, शकृन्मूत्रमिति शेषः । व्यालाः दुष्टहस्तिनः । सलिलाश्रयाः अत्यन्तं प्रस्वेदयुक्ताः । नीटी.

[4]एतच्छ्रुत्वा भवानत्र प्राप्तकालं व्यवस्यताम् ।
यथा लोकः समुच्छेदं नायं गच्छेत भारत ॥

विजयसूचकानि व्यासोक्तानि लिङ्गानि

धृतराष्ट्र उवाच—

[5]यानि लिङ्गानि सङ्ग्रामे भवन्ति विजयिष्यताम् ।
तानि सर्वाणि भगवञ् श्रोतुमिच्छामि तत्त्वतः ॥

---

(१) भा. ६।३।३५ ; भामु. ६।३।३७–३८ तो गिरेः ( ता विभो ) शब्दं ( शब्दः ).

(२) भा. ६।३।३६ ; भामु. ६।३।३८ चतुरः सागरान् ( चत्वारः सागराः ) यन्ति स्म ( यन्तीव ) पुनः पुनः ( वसुंधराम् ).

(३) भा. ६।३।३७ द्वितीयार्धं नास्ति; भामु. ६।३।३९–४० पञ्चमचरणे ( वृक्षाः पतन्ति चैत्याश्च ).

(४) भा. ६।३।३८ ; भामु. ६।३।४०–४१ पीत ( नील ) नीलश्च ज्वल ( पीतश्च भव ) द्वितीयार्धे ( वामार्चिर्दुष्टगन्धश्च मुञ्चन् वै दारुणं स्वनम् । ).

(५) भा. ६।३।३९ ; भामु. ६।३।४२ प्रथमचरणे ( धूमं ध्वजाः प्रमुञ्चन्ति ) वर्षाणि मेर्योऽथ ( वर्षं च मेर्यश्च ).

(१) भा. ६।३।४० ; भामु. ६।३।४३ ( शिखराणां समृद्धानामुपरिष्टात्समन्ततः । वायसाश्च रुवन्त्युग्रं वामं मण्डलमाश्रिताः ॥ ).

(२) भा. ६।३।४१ ; भामु. ६।३।४४.

(३) भा. ६।३।४२ ; भामु. ६।३।४५ वालान् ( व्याला ) उत्तरार्धे ( दीनास्तुरङ्गमाः सर्वे वारणाः सलिलाश्रयाः ॥ ).

(४) भा. ६।३।४३ ; भामु. ६।३।४६.

(५) भा. ६।४।१५–१७ ; भामु. ६।३।६४–६६.

व्यास उवाच–

प्रसन्नभाः पावक ऊर्ध्वरश्मिः
प्रदक्षिणावर्तशिखो विधूमः ।
पुण्या गन्धाश्चाऽऽहुतीनां प्रवान्ति
जयस्यैतद्भाविनो रूपमाहुः ॥

रूपं गमकं चिह्नम् । नीटी.

गम्भीरघोषाश्च महास्वनाश्च
शङ्खा मृदङ्गाश्च नदन्ति यत्र ।
विशुद्धरश्मिस्तपनः शशी च
जयस्यैतद्भाविनो रूपमाहुः ॥

[1]इष्टा वाचः पृष्ठतो वायसानां
संप्रस्थितानां च गमिष्यतां च ।
ये पृष्ठतस्ते त्वरयन्ति राजन्
ये त्वग्रतस्ते प्रतिषेधयन्ति ॥

ये पृष्ठतो भाषमाणा वायसास्तेः गन्तारं त्वरयन्ति । सिद्धिसूचका इत्यर्थः । ये पुरतो भाषमाणास्ते गमनं निषेधन्तीत्यर्थः । नीटी.

[2]कल्याणवाचः शकुना राजहंसाः
शुकाः क्रौञ्चाः शतपत्राश्च यत्र ।
प्रदक्षिणाश्चैव भवन्ति संख्ये
ध्रुवं जयं तत्र वदन्ति विप्राः ॥

[3]अलंकारैः कवचैः केतुभिश्च
मुखप्रसादैर्हेमवर्णैश्च नृणाम् ।
भ्राजिष्मती दुष्प्रतिप्रेक्षणीया
येषां चमूस्ते विजयन्ति शत्रून् ॥

[1]हृष्टा वाचस्तथा सत्त्वं योधानां यत्र भारत ।
न म्लायन्ते स्रजश्चैव ते तरन्ति रणे रिपून् ॥
[2]इष्टो वातः प्रविष्टस्य दक्षिणा प्रविविक्षतः ।
पश्चात् संसाधयत्यर्थं पुरस्तात् प्रतिषेधते ॥

प्रविष्टस्य, परसैन्यमिति शेषः । इष्टाः ‘ मारितो मारितः ’ इति । दक्षिणाः दाक्ष्ययुक्ताः ‘ हतोऽसि ’ इत्याद्याः । पश्चादर्थे पाश्चात्यं प्रयोजनं जयाख्यं संधारयन्ति निश्चिन्वन्ति । याश्चाग्रे प्रतिषेधिकाः ‘ मा युद्धयस्व, मरिष्यसि ’ इत्येवंजातीयकास्ता अपि मरणस्यैव सूचिकाः । ताश्च दुर्योधनं प्रत्येव प्रवर्तन्ते इति भावः । नीटी.

[3]शब्दरूपरसस्पर्शगन्धाश्चाऽऽविष्कृताः शुभाः ।
सदा योधाश्च हृष्टाश्च येषां तेषां ध्रुवं जयः ॥
[4]अन्वेव वायवो वान्ति तथाऽभ्राणि वयांसि च ।
अनुप्लवन्ते मेघाश्च तथैवेन्द्रधनूंषि च ॥

अनुगाः अनुकूलाः । नीटी.

[5]एतानि जयमानानां लक्षणानि विशां पते ।
भवन्ति विपरीतानि मुमूर्षूणां जनाधिप ॥
[6]अल्पायां वा महत्यां वा सेनायामिति
निश्चितम् ।
हर्षो योधगणस्यैकं जयलक्षणमुच्यते ॥

---

(१) भा. ६।४।१८ ; भामु. ६।३।६७ पृष्ठतो ( प्रसृता ) त्वग्र ( चाग्र ).

(२) भा. ६।४।१९ ; भामु. ६।३।६८ जयं ( जयः ).

(३) भा. ६।४।२० ; भामु. ६।३।६९ द्वितीयचरणे ( सुखप्रणादैर्हेषितैर्वा हयानाम् ) प्रेक्ष ( वीक्ष ).

(१) भा. ६।४।२१ भामु. ६।३।७० यन्ते ( यन्ति ) रणे रिपून् ( रणोदधिम् ).

(२) भा. ६।४।२२ ; भामु. ६।३।७१ ( इष्टा वाचः प्रविष्टस्य दक्षिणाः प्रविविक्षतः । पश्चात् संधारयन्त्यर्थमग्रे च प्रतिषेधिकाः ॥ ).

(३) भा. ६।४।२३ ; भामु. ६।३।७२ ऽऽविष्कृताः ( विकृताः ) उत्तरार्धे ( सदा हर्षश्च योधानां जयतामिह लक्षणम् ॥ ).

(४) भा. ६।४।२४ ; भामु. ६।३।७३ अन्वेव ( अनुगा ) प्लवन्ते ( प्लवन्ति ).

(५) भा. ६।४।२५ ; भामु. ६।३।७४.

(६) भा. ६।४।२६ ; भामु. ६।३।७५ निश्चितम् ( निश्चयः ) स्यैकं ( स्यैको ).

भीष्मोक्तानि सेनाविजयलक्षणानि

**युधिष्ठिर उवाच–**

[1]जैत्र्या वा कानि रूपाणि भवन्ति पुरुषर्षभ ।
पृतनायाः प्रशस्तानि तानीहेच्छामि वेदितुम् ॥

**भीष्म उवाच–**

[2]जैत्र्या वा यानि रूपाणि भवन्ति पुरुषर्षभ ।
पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्वशः ॥

[3]दैवं पूर्वं विकुरुते मानुषे कालचोदिते ।
तद्विद्वांसोऽनुपश्यन्ति ज्ञानदीर्घेण चक्षुषा ॥

दैवज्ञसंपत्तिः पुरोहितसंपत्तिश्च जयलक्षणमित्याह द्वाभ्याम्– दैवे इति । नीटी.

[4]प्रायश्चित्तविधिं चात्र जपहोमांश्च तद्विदः ।
मङ्गलानि च कुर्वन्तः शमयन्त्यहितान्यपि ॥

[5]उदीर्णमनसो योधा वाहनानि च भारत ।
यस्यां भवन्ति सेनायां ध्रुवं तस्यां जयं वदेत् ॥

[6]अन्वेनां वायवो वान्ति तथैवेन्द्रधनूंषि च ।
अनुप्लवन्ते मेघाश्च तथाऽऽदित्यस्य रश्मयः ॥

अनुयान्तीति संबन्धः । नीटी.

[1]गोमायवश्चानुलोमा वडा गृध्राश्च सर्वशः ।
आचरेयुर्यदा सेनां तदा सिद्धिरनुत्तमा ॥

[2]प्रसन्नभाः पावक ऊर्ध्वरश्मिः
प्रदक्षिणावर्तशिखो विधूमः ।
पुण्या गन्धाश्चाऽऽहुतीनां प्रवान्ति
जयस्यैतद् भाविनो रूपमाहुः ॥

[3]गम्भीरशब्दाश्च महास्वनाश्च
शङ्खाश्च भेर्यश्च नदन्ति यत्र ।
युयुत्सवश्चाप्रतीपा भवन्ति
जयस्यैतद् भाविनो रूपमाहुः ॥

अप्रतीपाः अनुकूलाः । नीटी.

इष्टा मृगाः पृष्ठतो वामतश्च
संप्रस्थितानां च गमिष्यतां च ।
जिघांसतां दक्षिणाः सिद्धिमाहु-
र्ये त्वग्रतस्ते प्रतिषेधयन्ति ॥

[4]मङ्गल्यशब्दाः शकुना वदन्ति
हंसाः क्रौञ्चाः शतपत्राश्च चाषाः ।
हृष्टा योधाः सत्त्ववन्तो भवन्ति
जयस्यैतद् भाविनो रूपमाहुः ॥

[5]शस्त्रैः पत्रैः कवचैः केतुभिश्च
सुभानुभिर्मुखवर्णैश्च यूनाम् ।
भ्राजिष्मती दुष्प्रतिप्रेक्षणीया
येषां चमूस्तेऽभिभवन्ति शत्रून् ॥

---

(१) भा. १२।१०३।१ ; भामु. १२।१०२।१ जैत्र्या वा ( जयिन्याः ) पुरुष ( भरत ) तानीहे ( तानि चे ).

(२) भा. १२।१०३।२ ; भामु. १२।१०२।२ जैत्र्या वा ( जयिन्या ) पुरुष ( भरत ).

(३) भा. १२।१०३।३ ; भामु. १२।१०२।३ दैवं ( दैवे ) विकुरुते ( प्रकुपिते ) दीर्घेण ( दिव्येन ).

(४) भा. १२।१०३।४ ; भामु. १२।१०२।४ कुर्वन्तः ( कुर्वन्ति ) तान्यपि ( तानि च ).

(५) भा. १२।१०३।५ ; भामु. १२।१०२।५ जयं वदेत् ( परो जयः ).

(६) भा. १२।१०३।६ ; भामु. १२।१०२।६ अन्वेनां ( अन्वेतान् ) वान्ति ( यान्ति) प्लवन्ते (प्लवन्तो ).

(१) भा. १२।१०३।७ ; भामु. १२।१०२।७ लोमा वडा ( कूला बल ) आचरे ( अर्हये ).

(२) भा. १२।१०३।८ ; भामु. १२।१०२।८ क ऊर्ध्व ( कश्चोर्ध्व ) प्रवान्ति ( भवन्ति ).

(३) भा. १२।१०३।९–१० ; भामु. १२।१०२।९–१०.

(४) भा. १२।१०३।११ ; भामु. १२।१०२।११ मङ्गल्यशब्दाः ( माङ्गल्यशब्दान् ).

(५) भा. १२।१०३।१२ ; भामु. १२।१०२।१२ पत्रैः ( यन्त्रैः ) प्रेक्ष ( वीक्ष ).

[1]शुश्रूषवश्चानभिमानिनश्च
परस्परं सौहृदमास्थिताश्च ।
येषां योधाः शौचमनुष्ठिताश्च
जयस्यैतद् भाविनो रूपमाहुः ॥

[2]शब्दाः स्पर्शास्तथा गन्धा विचरन्ति मनः-
प्रियाः ।
धैर्यं चाऽऽविशते योधान् विजयस्य मुखं
तु तत् ॥

[3]इष्टो वामः प्रविष्टस्य दक्षिणः प्रविविक्षतः ।
पश्चात् संसाधयत्यर्थं पुरस्तात् प्रतिषेधति ॥

इष्टः, काक इति शेषः । नीटी.

## वाल्मीकिरामायणम्

त्रिजटया दृष्टो रामविजयरावणपराभवयोः
सूचकः स्वप्नः

[4]सीतां ताभिरनार्याभिर्दृष्ट्वा संतर्जितां तदा ।
राक्षसी त्रिजटा वृद्धा शयाना वाक्यमब्रवीत् ॥

[5]आत्मानं खादतानार्या न सीतां भक्षयिष्यथ ।
जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥

[6]स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
राक्षसानामभावाय भर्तुरस्या भवाय च ॥

(१) भा. १२।१०३।१३ ; भामु. १२।१०२।१३.

(२) भा. १२।१०३।१४ ; भामु. १२।१०२।१४ तु ( च ).

(३) भा. १२।१०३।१५ ; भामु. १२।१०२।१५ प्रतिषे ( च निषे ).

(४) वारा. ५।२१।४ संतर्जितां ( निर्भर्त्सितां ) ; वाराकु. ५।२७।४.

(५) वारा. ५।२१।५ भक्ष ( खाद ) ; वाराकु. ५।२७।५.

(६) वारा. ५।२१।६ रोम ( लोम ) ; वाराकु. ५।२७।६.



[1]एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्छिताः ।
सर्वा एवाब्रुवन् भीतास्त्रिजटां तामिदं वचः ।
कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि॥

[2]तासां श्रुत्वा तु वचनं राक्षसीनां मुखा-
च्च्युतम् ।
उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम् ॥

[3]सपर्वतवनां कृत्स्नां ग्रसमानो महीमिमाम् ।
स्वप्ने रामो मया दृष्टो रुधिरं पीतवान् बहु ॥

[4]गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ।
युक्तां हंससहस्रेण स्वयमास्थाय राघवः ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहाऽऽगतः ॥

[5]स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता।
सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थिता ।
रामेण संगता सीता भास्करेण प्रभा यथा ॥

(१) वारा. ५।२१।७–८ द्वितीयचरणे ( राक्षस्योऽपास्य मैथिलीम् ) तृतीयार्धे ( अशेषं श्रोतुमिच्छामस्तव दुःस्वप्नदर्शनम् । कीदृशं तु त्वया दृष्टं श्रोतुं कौतूहलं हि नः ॥ ) ; वाराकु. ५।२७।७.

(२) वारा. ५।२१।९ ( तासामेतद् वचः श्रुत्वा त्रिजटा वृद्धराक्षसी । वक्तुं कृताञ्जलिपुटा तं स्वप्नमुपचक्रमे ॥ ) ; वाराकु. ५।२७।८.

(३) वारा. ५।२१।१० ; राक. ११६–११७ सपर्वत ( समग्रभ ) मही ( पुरी ) ; राप्र. ३३३ राकवत्.

(४) वारा. ५।२१।११ हंस ( नाग ) तृतीयार्धं नास्ति ; वाराकु. ५।२७।९ ; राक. ११७ स्वय ( सुख ) शेषं वारावत् ; राप्र. ३३३ राकवत्.

(५) वारा. ५।२१।१२ चतुर्थचरणे ( आरुह्य श्वेतपर्वतम् ) प्रभा यथा (यथा प्रभा) ; वाराकु. ५।२७।१० ; राक. ११७ प्रथमार्धे ( स्वप्ने चाद्य मया दृष्टः शुक्लाम्बरवरावृतः । ) स्थिता ( स्थितः ) तृतीयार्धं नास्ति; राप्र. ३३३–३३४ राकवत्.

[1]राघवश्च मया दृष्टश्चतुर्दन्तं महागजम् ।
आरूढः शैलसंकाशं चचार सहलक्ष्मणः ॥
[2]ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा ।
शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ ॥
[3]ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः ।
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ॥
[4]भर्तुरङ्कात् समुत्पत्य ततः कमललोचना ।
चन्द्रसूर्यौ मया दृष्टा पाणिना परिमार्जती ॥
[5]ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः ।
सीतया च विशालाक्ष्या लङ्काया उपरि स्थितः ॥
[6]पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहाऽऽगतः ॥

अष्टयुजा अष्टवृषभयुक्तेन । राप्र. ३३४

[7]ततोऽन्यत्र मया दृष्टो रामः सत्यपराक्रमः ॥

(१) वारा. ५।२१।१४ दन्तं (दन्ते) गजम् (गजे) काशं चचार (काशे विचरन्) लक्ष्मणः (भार्यया); वाराकु. ५।२७।११ ; राक. ११७ चचार (विचरन्); राप्र. ३३४ राकवत्.

(२) वारा. ५।२१।१५ ; वाराकु. ५।२७।१२ ; राक. ११७ ; राप्र. ३३४.

(३) वारा. ५।२१।१६ स्याग्रे ह्या (स्याग्रादा) श्रिता (प्लुता); वाराकु. ५।२७।१३ ; राक. ११७ स्याग्रे ह्या (स्याग्रादा); राप्र. ३३४ राकवत्.

(४) वारा. ५।२१।१७ ; वाराकु. ५।२७।१४ ; राक. ११७ ; राप्र. ३३४.

(५) वारा. ५।२१।१८ स्थितः स (स्थितोऽसौ) लङ्काया उपरि (लङ्कां पर्यभितः); वाराकु. ५।२७।१५ ; राक. ११७ लङ्काया उपरि (लङ्कां पर्यभितं); राप्र. ३३४ लङ्काया उपरि (लङ्कां पर्यभितः).

(६) वारा. ५।२१।१९ युजा (युजः) सद्दा (समा); वाराकु. ५।२७।१६ ; राक. ११७ म्बरधरो (म्बरो रामो); राप्र. ३३४ राकवत्.

(७) वाराकु. ५।२७।१६.

[1]इहोपयातः काकुत्स्थः सीतया सह भार्यया ।
लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान् ॥
[2]आरुह्य पुष्पकं दिव्यं विमानं सूर्यसंनिभम् ।
उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः ॥
एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः ।
लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥
साण्डं त्रिभुवनं सर्वं सर्वतः सचराचरम् ।
सर्वं ग्रस्तं मया दृष्टं रामेणाक्लिष्टकर्मणा ॥
क्षीरोदधिजले मध्ये श्वेतः शैलः समुच्छ्रितः ।
तस्य मूर्ध्नि ततः श्वेतश्चतुर्दन्तो महागजः ।
तस्य पृष्ठे स्थितः श्रीमान् रामो राजीव-
लोचनः ॥
ततः सीता समुत्पत्य भर्तुरङ्काश्रिता तदा ।
बाहुभ्यां संपरिष्वज्य संपूर्णं चन्द्रमण्डलम् ॥
ततोऽन्यत्र मया दृष्टो रामो राजीवलोचनः ।
आसीनः प्राङ्मुखः श्रीमानासने परमाद्भुते ॥
अभिषिक्तस्तु काकुत्स्थः सर्वदेवैर्नमस्कृतः ।
सब्रह्मर्षिगणैः सर्वैः सर्वतीर्थजलेन च ॥
शुक्लमाल्याम्बरधरा शुक्लमाल्यानुलेपना ।
साधु सा तत्र सुश्रोणी रराज जनकात्मजा ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
ब्रह्माणमग्रतः कृत्वा रामं तत्र ववन्दिरे ॥
पुनरेव मया दृष्टो रामो रमयतां वरः ।
विष्णुरेव स्वयं भूत्वा तस्मिन्नास्ते वरासने ॥
परं ब्रह्म परं तत्त्वं परं ज्ञानं परं तपः ।
परं बीजं परं क्षेत्रं परं कारणकारणम् ॥
शङ्खचक्रगदः श्रीमान् पुण्डरीकायतेक्षणः ।
श्रीवत्सवक्षा नित्यश्रीरजेयः शाश्वतो ध्रुवः ॥
एवंभूतो महातेजा रामः कमललोचनः ।
सर्वलोकेश्वरः श्रीमान् ससर्ज रघुनन्दनः ॥

(१) वारा. ५।२१।११ चतुर्थचरणे (विमाने पुष्पके स्थितः); वाराकु. ५।२७।१७–१८.

(२) वाराकु. ५।२७।१८–३१.

ततोऽमरेन्द्राः पितरो मुनीन्द्रा
गन्धर्वविद्याधरपन्नगेन्द्राः ।
कृताभिषेकं परिवार्य रामं
प्रतुष्टुवुः प्राञ्जलयः प्रहृष्टाः ॥

ततस्तु सर्वाप्सरसः प्रहृष्टा
नृत्यन्ति गायन्ति समेत्य तत्र ।
वाद्यं प्रकुर्वन्ति समेत्य शङ्खा
वंशाश्च वीणा मुरजाश्च भेर्यः ॥

न हि रामो महातेजाः शक्यो जेतुं सुरासुरैः ।
राक्षसैर्वाऽपि चान्यैर्वा स्वर्गः पापजनैरिव ॥

[1]रावणश्च मया दृष्टः क्षितौ तैलसमुक्षितः ।
रक्तवासाः पिबन् मत्तः करवीरकृतस्रजः ॥

[2]विमानात् पुष्पकादद्य रावणः पतितो भुवि ।
कृष्यमाणः स्त्रिया दृष्टो मुण्डः कृष्णाम्बरः पुनः ॥

[3]रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
पिबंस्तैलं हसन्नृत्यन् भ्रान्तचित्ताकुलेन्द्रियः ।
गर्दभेन ययौ शीघ्रं दक्षिणां दिशमास्थितः ॥

[4]पुनरेव मया दृष्टो रावणो राक्षसेश्वरः ।
पतितोऽवाक्शिरा भूमौ गर्दभाद्भयमोहितः ॥
सहसोत्थाय संभ्रान्तो भयार्तो मदविह्वलः ।
उन्मत्त इव दिग्वासा दुर्वाक्यं प्रलपन् बहु ॥

(१) वाराकु. ५।२७।३४ ; राक. ११७.

(२) वारा. ५।२१।२० भुवि (मया) कृष्णाम्बरः पुनः (पीताम्बरो हि सः) ; वाराकु. ५।२७।३५ ; राक. ११७ भुवि (मया) कृष्य (कृश्य) कृष्णाम्बरः पुनः (पीताम्बरो हसन्) ; राप्र. ३३५–३३६ भुवि (मया) कृष्णाम्बरः पुनः (पीताम्बरो हसन्).

(३) वाराकु. ५।२७।३६ ; राक. ११८ प्रथमार्धमात्रम् ; राप्र. ३३६ राकवत्.

(४) वाराकु. ५।२७।३७–३८.

[1]दुर्गन्धं दुःसहं घोरं तिमिरं नरकोपमम् ।
मलपङ्कं प्रविश्याऽऽशु मग्नस्तत्र स रावणः ।
प्रस्थितो दक्षिणामाशां प्रविष्टः कर्दमह्रदम् ॥

[2]कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ।
काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति ॥

[3]एवं तत्र मया दृष्टः कुम्भकर्णो निशाचरः ।
रावणस्य सुताः सर्वे दृष्टास्तैलसमुक्षिताः ॥

[4]वराहेण दशग्रीवः शिंशुमारेण चेन्द्रजित् ।
उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम् ॥

[5]एकस्तत्र मया दृष्टः श्वेतच्छत्रो विभीषणः ।
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ।
शङ्खदुन्दुभिनिर्घोषैर्नृत्तगीतैरलंकृतः ॥

[6]आरुह्य शैलसंकाशं मेघस्तनितनिःस्वनम् ।
चतुर्दन्तं गजं दिव्यमास्ते तत्र विभीषणः ।
चतुर्भिः सचिवैः सार्धं वैहायसमुपस्थितः ॥

[7]समाजश्च मया दृष्टो गीतवादित्रनिःस्वनः ।
पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम् ॥

(१) वाराकु. ५।२७।३९ ; राक. ११८ तृतीयार्धे (स गत्वा दक्षिणामाशां प्रविष्टो गोमयं ह्रदम् ॥) तृतीयार्धमात्रम् ; राप्र. ३३६ राकवत्, 'गोमयह्रदम्' इति विशेषः.

(२) वाराकु. ५।२७।४० ; राक. ११८ कर्दमलिप्ताङ्गी (करालवदना) ; राप्र. ३३६ राकवत्.

(३) वाराकु. ५।२७।४१.

(४) वारा. ५।२१।२० कुम्भकर्णश्च (च मया दृष्टः) उत्त. ; वाराकु. ५।२७।४२ ; राक. ११८ चेन्द्रजित् (चासकृत्) कुम्भकर्णश्च (च मया दृष्टः) ; राप्र. ३३६ शिंशु (शिशु) शेषं राकवत्. (५) वाराकु. ५।२७।४३.

(६) वारा. ५।२१।२५ (श्वेतं पर्वतमारूढस्त्वेक एव विभीषणः । चतुर्भिः सचिवैः सार्धं राक्षसैरनिलादिभिः ॥) एतावदेव ; वाराकु. ५।२७।४४.

(७) वारा. ५।२१।२१ ; निःस्वनः (नृत्यवान्) पिब (विभ्र) ल्यानां (ल्यानि) ; वाराकु. ५।२७।४५ ; राक. ११८ वारावत् ; राप्र. ३३६ निःस्वनः (नृत्तवान्) शेषं वारावत्.

[1]लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा ।
सागरे पतिता दृष्टा भग्नगोपुरतोरणा ॥
[2]लङ्का दृष्टा मया स्वप्ने रावणेनाभिरक्षिता ।
दग्धा रामस्य दूतेन वानरेण तरस्विना ॥
[3]पीत्वा तैलं प्रनृत्ताश्च प्रहसन्त्यो महास्वनाः ।
लङ्कायां भस्मरूक्षायां प्रविष्टा राक्षसस्त्रियः ॥
[4]कुम्भकर्णादयश्चेमे सर्वे राक्षसपुंगवाः ।
रक्तं निवसनं गृह्य प्रविष्टा गोमयह्रदे ॥
[5]अपगच्छत नश्यध्वं सीतामाप स राघवः ।
घातयेत् परमामर्षी सर्वैः सार्धं हि राक्षसैः ।
रावणं राघवो घोरे भार्याहर्तारमाहवे ॥

(१) वारा. ५।२१।२२ पूर्वार्धे (लङ्का चेयं पुरी कृत्स्ना गजवाजिरथाकुला ।) भग्न (मग्न); वाराकु. ५।२७।४६; राक. ११८ पूर्वार्धे (लङ्का चेयं पुरी दृष्टा गजवाजिसमाकुला ।) दृष्टा (कृत्स्ना) गोपुर (प्राकार); राप्र. ३३६ द्वितीयचरणे (गजवाजिरथाकुला) शेषं राकवत्.

(२) वाराकु. ५।२७।४७.

(३) वारा. ५।२१।२३ त्ताश्च (त्त्यः) उत्तरार्धे (लङ्कायां भस्मरूपायां सर्वा राक्षसयोषितः ॥); वाराकु. ५।२७।४८; राक. ११८ प्रनृत्ताश्च प्रहसन्त्यो (प्रनृत्यन्ति प्रहसन्ति) चतुर्थचरणे (सर्वा राक्षसयोषितः); राप्र. ३३६ (पीत्वा तैलं प्रनृत्यन्ति प्रसहन्ति महास्वराः । लङ्कायां भस्मरूक्षायां सर्वराक्षसयोषितः ॥).

(४) वारा. ५।२१।२४ उत्तरार्धे (पीतैश्च वसनैर्दृष्टाः क्रीडन्तो गोमये ह्रदे ॥); वाराकु. ५।२७।४९; राक. ११८ उत्तरार्धे (पीतैर्निवसनैर्दृष्टाः क्रीडन्तो गोमयह्रदे ॥); राप्र. ३३६ उत्तरार्धे (पीतैर्निवसनैर्दृष्टाः क्रीडन्तो गोमयह्रदे ॥).

(५) वारा. ५।२१।२६ (अपसर्पत पश्यध्वं श्रुत्वा खलु स राघवः । घातयेत् परमामर्षी सर्वानागम्य राक्षसान् ॥) तृतीयार्धं नास्ति; वाराकु. ५।२७।५०.

[1]प्रियां बहुतमां भार्यां वनवासमनुव्रताम् ।
भर्त्सितां तर्जितां वाऽपि नानुमंस्यति राघवः ॥
[2]तदलं क्रूरवाक्यैर्वः सान्त्वमेवाभिधीयताम् ।
अभियाचाम वैदेहीमेतद्धि मम रोचते ॥
[3]यस्यामेवंविधः स्वप्नो दुःखितायां प्रदृश्यते ।
सा दुःखैर्विविधैर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम् ॥
[4]भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया ।
राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ॥
[5]प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ।
अलमेषा परित्रातुं राक्षसीर्महतो भयात् ॥
[6]अपि चास्या विशालाक्ष्या न किंचिदुपलक्षये ।
विरूपमपि चाङ्गेषु सुसूक्ष्ममपि लक्षणम् ॥
[7]छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम् ।
अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् ॥

(१) वारा. ५।२१।२७ समनु (सेऽप्यनु) तर्जि (त्रासि) चतुर्थचरणे (राघवो नानुमंस्यते); वाराकु. ५।२७।५१.

(२) वारा. ५।२१।२८ याचाम (याचत); वाराकु. ५।२७।५२.

(३) वारा. ५।२१।२९ (यस्या ह्येवंविधः स्वप्नो दुःखितायाः प्रदृश्यते । सा दुःखैर्बहुधा मुक्ता श्रियं प्राप्नोत्यनुत्तमाम् ॥); वाराकु. ५।२७।५३.

(४) वारा. ५।२१।३० मपि (मभि); वाराकु. ५।२७।५४.

(५) वारा. ५।२१।३१ मेषा (मेका); वाराकु. ५।२७।५५ राक्षसीर्म (राक्षस्यो म).

(६) वारा. ५।२१।३२ मपि (मथ) सुसूक्ष्म (यत् सूक्ष्म); वाराकु. ५।२७।५६.

(७) वारा. ५।२१।३३ (छाया वैगुण्यमायाति यतो दुःखमुपस्थितम् । अदुःखार्हामिमां देवीं न क्लेशयितुमर्हथ ॥); वाराकु. ५।२७।५७.

[1]अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थिताम् ।
राक्षसेन्द्रविनाशं च विजयं राघवस्य च ॥
[2]निमित्तभूतमेतत्तु श्रोतुमस्या महत्प्रियम् ।
दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवाऽऽयतम् ॥
[3]ईषच्च हृषितो वाऽस्या दक्षिणाया ह्यदक्षिणः ।
अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते ॥
[4]करेणुहस्तप्रतिमः सव्यश्चोरुरनुत्तमः ।
वेपमानः सूचयति राघवं पुरतः स्थितम् ॥
[5]पक्षी च शाखानिलयः प्रहृष्टः
पुनः पुनश्चोत्तमसान्त्ववादी ।
सुस्वागतां वाचमुदीरयानः
पुनः पुनश्चोदयतीव हृष्टः ॥

रामविजयसूचकानि धन्यानि निमित्तानि

[6]निमित्तानि च धन्यानि यानि प्रादुर्भवन्ति मे ।
निहत्य रावणं सीतामाहरिष्ये न संशयः ॥
[7]उपरिष्टाद्धि नयनं स्पन्दमानमिवानघ ।
विजयं समनुप्राप्तं शंसतीव मनो मम ॥

(१) वारा. ५।२१।३४ ; वाराकु. ५।२७।५८.

(२) वारा. ५।२१।३५ तृतीयचरणे ( स्फुरत् पश्यामि नयनं ) ; वाराकु. ५।२७।५९.

(३) वारा. ५।२१।३६ वाऽस्या दक्षिणाया ह्य (ह्यस्या दक्षिणोऽतिप्र ) देव (दथ ) कम्प (वेप) ; वाराकु. ५।२७। ६०.

(४) वारा. ५।२१।३७ रुरनुत्तमः (रुः सवेपथुः ) उत्तरार्धे ( देव्याः सूचयतीवास्या राघवं स्थितमग्रतः ॥ ) ; वाराकु. ५।२७।६१.

(५) वारा. ५।२१।३८ उत्तरार्धे ( सुखागतां वाचमुदीरयन् वै प्रत्यागमं देशयतीव काकः ॥ ) ; वाराकु. ५।२७।६२.

(६) वारा. ५।७१।४ ; वाराकु. ६।४।७ मे (च) चतुर्थचरणे ( मानयिष्यामि जानकीम् ).

(७) वारा. ५।७१।५ वाराकु. ६।४।८ द्वितीयचरणे ( स्फुरमाणमिदं मम ) नो मम ( नोरथम् ).

[1]महान्तीह निमित्तानि दिवि भूमौ च राघव ।
शुभानि तव दृश्यन्ते प्रसन्नान्यर्थसिद्धये ॥
[2]अनुवाति शिवो वायुः सेनाया विजयावहः ।
पूर्णवल्गुस्वरा हीमे प्रवदन्ति मृगद्विजाः ॥
[3]प्रसन्नाश्च दिशः सर्वाः प्रसन्नश्च दिवाकरः ।
उशनाश्च प्रसन्नार्चिर्विमलो भार्गवः स्थितः ॥
[4]तेजसा च प्रदीप्यन्ते प्रविशुद्धा महर्षयः ।
अर्चिष्मन्तश्च संयान्ति ध्रुवं सर्वे प्रदक्षिणम् ॥
[5]त्रिशङ्कुर्विमलो भाति राजर्षिः सपुरोहितः ।
पितामहः पुरोऽस्माकं भवाय तव धिष्ठितः ॥
[6]विमले ते विरोचेते विशाखे निरुपद्रवे ।
नक्षत्रवरमस्माकमिक्ष्वाकूणां महारथ ॥
[7]नैर्ऋत्यां निर्ऋतानां च नक्षत्रमपरज्यते ।
मूलं मूलवता स्पृष्टं दीप्यते धूमकेतुना ॥

(१) वारा. ५।७१।४२ ; वाराकु. ६।४।४६ दृश्यन्ते प्रसन्नान्य ( पश्यामि सर्वाण्येवा ).

(२) वारा. ५।७१।४३ ; वाराकु. ६।४।४७ पूर्वार्धे ( अनुवाति शुभो वायुः सेनां मृदुहितः सुखः । ) हीमे श्चेमे.

(३) वारा. ५।७१।४४ ; वाराकु. ६।४।४८ प्रसन्न ( विमल ) र्चिर्विमलो ( र्चिरनु त्वां ) स्थितः ( गतः ).

(४) वारा. ५।७१।४५ ; वाराकु. ५।४।४९ पूर्वार्धे ( ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः । ) न्तश्च संयान्ति ( न्तः प्रकाशन्ते ).

(५) वारा. ५।७१।४६ ; वाराकु. ६।४।५० उत्तरार्धे ( पितामहवरोऽस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ).

(६) वारा. ५।७१।४७ ; वाराकु. ६।४।५१ ते विरोचेते ( च प्रकाशेते ) रथ ( त्मनाम् ).

(७) वारा. ५।७१।४८ ; वाराकु. ६।४।५२ ( नैर्ऋतं नैर्ऋतानां च नक्षत्रमभिपीड्यते । मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ॥ ).

[1]सर्वथैषां विनाशोऽयं राक्षसानामुपस्थितः।
कालः कालपरीतानां नक्षत्रे ग्रहपीडिते॥

[2]प्रसन्नाः सुरसाश्चाऽऽपो वनानि फलवन्ति च।
प्रवात्यभ्यधिको गन्धैर्वर्तन्ते पुष्पिता द्रुमाः॥

## मत्स्यपुराणम्

मत्स्योक्तानि शुभानि अशुभानि च निमित्तानि

मनुरुवाच–

[3]ब्रूहि मे त्वं निमित्तानि अशुभानि शुभानि च।
सर्वधर्मभृतां श्रेष्ठ त्वं हि सर्वविदुच्यसे॥

*मत्स्य उवाच–

[4]अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं भवेत्।
अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च॥

मनुरुवाच–

[5]अङ्गानां स्पन्दनं चैव शुभाशुभविचेष्टितम्।
तन्मे विस्तरतो ब्रूहि येन स्यां तद्विदो भुवि॥

मत्स्य उवाच–

पृथ्वीलाभो भवेन्मूर्ध्नि ललाटे रविनन्दन।
स्थानं विवृद्धिमायाति भ्रूनसोः प्रियसंगमः॥

भृत्यलब्धिश्चाक्षिदेशे दृगुपान्ते धनागमः।
उत्कण्ठोपगमो मध्ये दृष्टं राजन् विचक्षणैः॥

दृग्बन्धने संगरे च जयं शीघ्रमवाप्नुयात्।
योषिद्भोगोऽपाङ्गदेशे श्रवणान्ते प्रियश्रुतिः॥

नासिकायां प्रीतिसौख्यं प्रजातिरधरोष्ठजे।
कण्ठे तु भोगलाभः स्याद् भोगवृद्धिरथांसयोः॥

सुहृत्स्नेहश्च बाहुभ्यां हस्ते चैव धनागमः।
पृष्ठे पराजयः सद्यो जयो वक्षःस्थले भवेत्॥

कुक्षिभ्यां प्रीतिरुद्दिष्टा स्त्रियाः प्रजननं स्तने।
स्थानभ्रंशो नाभिदेशे अन्त्रे चैव धनागमः॥

जानुसंधौ परैः संधिर्बलवद्भिर्भवेन्नृप।
देशैकदेशनाशोऽथ जङ्घाभ्यां रविनन्दन॥

उत्तमं स्थानमाप्नोति पद्भ्यां प्रस्फुरणान्नृप।
सलाभं चाध्वगमनं भवेत् पादतले नृप॥

[1]लाञ्छनं पिटकं चैव ज्ञेयं स्फुरणवत्तथा।
विपर्ययेण विहितः सर्वः स्त्रीणां फलागमः॥

[2]अप्रशस्ते तदा वामे त्वप्रशस्तं विशेषतः।
दक्षिणेऽपि प्रशस्तेऽङ्गे प्रशस्तं स्याद्विशेषतः॥

[3]अतोऽन्यथा सिद्धिप्रजल्पनाच्च
फलस्य शस्तस्य च निन्दितस्य।
अनिष्टचिह्नोपगमे द्विजानां
कार्यं सुवर्णेन तु तर्पणं स्यात्॥

---

* अग्निपुराणे व्यवहितपूर्वं 'पुष्कर उवाच' इति वक्तृनिर्देशः।

(१) वारा. ५।७१।४९ ; वाराकु. ६।४।५३ (सर्वं चैतद् विनाशाय राक्षसानामुपस्थितम्। काले कालगृहीतानां नक्षत्रं ग्रहपीडितम्॥).

(२) वारा. ५।७१।५० ; वाराकु. ६।४।५४ उत्तरार्धे (प्रवान्त्यभ्यधिकं गन्धान् यथर्तुकुसुमा द्रुमाः॥).

(३) मत्स्य. २४१।१.

(४) मत्स्य. २४१।२ ; अग्नि. २२८।७–८ अप्रशस्तं (न शस्तं तु) ; राक. ११६ भवेत् (शुभम्) ; राप्र. ३४७–३४८ (=) राकवत्.

(५) मत्स्य. २४१।३–११.

(१) मत्स्य. २४१।१२ ; अग्नि. २२८।८ ज्ञेयं स्फुरणवत् (विज्ञेयं स्फुरणं) उत्तरार्धे (विपर्ययेणाभिहितं सव्ये स्त्रीणां शुभं भवेत्॥) ; राक. ११६ उत्तरार्धे (विपर्ययेण विहितं सर्वस्त्रीणां विपर्ययम्॥) ; राप्र. ३४८ (=) उत्तरार्धे (विपर्ययेण विहितं सर्वं स्त्रीणां विपर्ययम्॥).

(२) मत्स्य. २४१।१३ ; राक. ११६ उत्त. ; राप्र. ३४८ (=) उत्त.

(३) मत्स्य. २४१।१४ ; राक. ११६ अतो (अथो) सिद्धिप्र (सिद्धिर) च निन्दि (विनिन्दि) अनिष्ट (अरिष्ट) तु तर्प (च तर्प) ; राप्र. ३४८ (=) सिद्धिप्र (सिद्धिर) अनिष्ट (अरिष्ट) तु तर्प (च तर्प).

स्वप्नदृष्टानि शुभाशुभानि लक्षणानि, दुःस्वप्ननाशककर्माणि

मनुरुवाच–

[1]स्वप्नाख्यानं कथं देव गमने प्रत्युपस्थिते ।
दृश्यन्ते विविधाकाराः कथं तेषां फलं भवेत् ॥

मत्स्य उवाच–

[2]इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने ।
नाभिं विनाऽन्यगात्रेषु तृणवृक्षसमुद्भवः ॥

[3]चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥

[4]उच्चात् प्रपतनं चैव दोलारोहणमेव च ।
अर्जनं पङ्कलोहानां हयानामपि मारणम् ॥

[5]रक्तपुष्पद्रुमाणां च मण्डलस्य तथैव च ।
वराहर्क्षखरोष्ट्राणां तथा चाऽऽरोहणक्रिया ॥

---

(१) मत्स्य. २४२।१.

(२) मत्स्य. २४२।२ ; अग्नि. २२९।१ मत्स (पुष्कर) पूर्वार्धे (स्वप्नं शुभाशुभं वक्ष्ये दुःस्वप्नहरणं तथा । ) न्यगात्रेषु ( न्यत्र गात्रे ) ; राक. ११८–११९ ; राप्र. ३३६ इत आरभ्य पञ्चदश श्लोकाः 'मत्स्यपुराण-विष्णुधर्मोत्तरयोः' इत्युपक्रम्य समुद्धृताः .

(३) मत्स्य. २४२।३ ; अग्नि. २२९।२ ; राक. ११९ ; राप्र. ३३६.

(४) मत्स्य. २४२।४ ; अग्नि. २२९।३–४ पूर्वार्धे (उच्चात्प्रपतनं चैव विवाहो गीतमेव च । तन्त्रीवाद्यविनोदश्च दोलारोहणमेव च ॥ ) पङ्क (पद्म ) हयानामपि ( सर्पाणा-मथ ) ; राक. ११९ उच्चात् ( उच्चैः ) उत्तरार्धे (अञ्जनं पङ्कलोहानां तपतामपि धारणम् ॥ ) ; राप्र. ३३६ उत्तरार्धे ( अञ्जनं पद्मलोहानां तपतामपि धारणम् ॥ ).

(५) मत्स्य. २४२।५ ; अग्नि. २२९।४–५ मण्ड ( चण्डा ) हर्क्ष ( ह्रश्व ) ; राक. ११९ मण्ड ( चण्डा ) ; राप्र. ३३६–३३७ राकवत् .

[1]भक्षणं पक्षिमत्स्यानां तैलस्य कृसरस्य च ।
नर्तनं हसनं चैव विवाहो गीतमेव च ॥
तन्त्रीवाद्यविहीनानां वाद्यानामभिवादनम् ।
[2]स्रोतोवगाहगमनं स्नानं गोमयवारिणा ॥

[3]पङ्कोदकेन च तथा महीतोयेन चाप्यथ ।
मातुः प्रवेशो जठरे चितारोहणमेव च ॥

[4]शक्रध्वजाभिपतनं पतनं शशिसूर्ययोः ।
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥

[5]देवद्विजातिभूपालगुरूणां क्रोध एव च ।
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ॥

[6]हानिश्चैव स्वगात्राणां विरेकवमनक्रिया ।
दक्षिणाशाभिगमनं व्याधिनाऽभिभवस्तथा ॥

[7]फलापहानिश्च तथा पुष्पहानिस्तथैव च ।
गृहाणां चैव पातश्च गृहसंमार्जनं तथा ॥

---

(१) मत्स्य. २४२।६ ; अग्नि. २२९।५, ८ मत्स्या ( मांसा ) ; राक. ११९ पक्षिमत्स्या ( पक्वमांसा ) ; राप्र. ३३७ राकवत् .

(२) मत्स्य. २४२।७ ; अग्नि. २२९।८–९ मभि ( मपि ) वगाह ( वहाधो ) ; राक. ११९ मभि ( मपि ) गाह ( गाधो ) ; राप्र. ३३७ नामभि ( नां चापि ).

(३) मत्स्य. २४२।८ ; अग्नि. २२९।९, ६ मही ( मशी ) चाप्य ( वाऽप्य ) ; राक. ११९ ; राप्र. ३३७ चाप्य ( वाऽप्य ).

(४) मत्स्य. २४२।९ ; अग्नि. २२९।६–७ ; राक. ११९ ध्वजाभि ( ध्वजानां ) ; राप्र. ३३७.

(५) मत्स्य. २४२।१० ; अग्नि. २२९।७,१० पाल ( पानां ) क्रोध ( कोप ) ; राक. ११९ ; राप्र. ३३७.

(६) मत्स्य. २४२।११ ; अग्नि. २२९।१०–११ विरेक ( विरेको ) भिगम ( प्रगम ) ; राक. ११९ ; राप्र. ३३७.

(७) मत्स्य. २४२।१२ ; अग्नि. २२९।११–१२ पूर्वार्धे ( फलानामुपहानिश्च धातूनां भेदनं तथा । ) पातश्च ( पतनं ) ; राक. ११९–१२० ( फलापहारहानिश्च

¹क्रीडा पिशाचक्रव्यादवानरर्क्षनरैरपि।
परादभिभवश्चैव तस्माच्च व्यसनोद्भवः॥

²काषायवस्त्रधारित्वं तद्वत्स्त्रीक्रीडनं तथा।
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम्॥

तद्वत्स्त्रीक्रीडनं काषायवस्त्रयुक्तस्त्रिया सह क्रीडनम्। § राक. १२०

³एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत्।
एषां संकथनं धन्यं भूयः प्रस्वापनं तथा॥

एषां दुःस्वप्नानाम्। राप्र. ३३९

कल्कस्नानं तिलैर्होमो ब्राह्मणानां च पूजनम्।
स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम्॥

⁴नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम्।
स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः॥

¹षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके।
चतुर्थे मासमात्रेण पश्यतो नात्र संशयः॥
अरुणोदयवेलायां दशाहेन फलं भवेत्।
एकस्यां यदि वा रात्रौ शुभं वा यदि वा-
ऽशुभम्॥

²पश्चाद्दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत्।
तस्माच्छोभनके स्वप्ने पश्चात् स्वप्नो न
शस्यते॥

³शैलप्रासादनागाश्ववृषभारोहणं हितम्।
द्रुमाणां श्वेतपुष्पाणां गमने च तथा द्विज॥
⁴द्रुमतृणोद्भवो नाभौ तथैव बहुबाहुता।
तथैव बहुशीर्षत्वं पलितोद्भव एव च॥
⁵सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता।
चन्द्रार्कताराग्रहणं परिमार्जनमेव च॥
⁶शक्रध्वजालिङ्गनं च तदुच्छ्रायक्रिया तथा।
भूम्यम्बुधीनां ग्रसनं शत्रूणां च वधक्रिया॥

---

$ राप्र. राकवत्।

गृहाणां चैव पातनम्। गृहसंमार्जनं चैव धनहानिं विनिर्दिशेत्॥); राप्र. ३३७ प्रथमचरणे (फलापहारश्च तथा) शेषं राकवत्.

(१) मत्स्य. २४२।१३; अग्नि. २२९।१२–१३ नरर्क्ष (नरान्त्य); राक. १२० क्रीडा (पीडा) नरर्क्ष (नरान्त्य); राप्र. ३३७ राकवत्.

(२) मत्स्य. २४२।१४; अग्नि. २२९।१३–१४ तद्वत्स्त्री (तद्वस्त्रैः) गाहौ (गाही); राक. १२०; राप्र. ३३७.

(३) मत्स्य. २४२।१५–१६; अग्नि. २२९।१४–१६ (इत्यधन्यानि स्वप्नानि तेषामकथनं शुभम्॥ भूयश्च स्वपनं तद्वत् कार्यं स्नानं द्विजार्चनम्। तिलैर्होमो हरिब्रह्मशिवार्कगणपूजनम्॥ तथा स्तुतिप्रपठनं पुंसूक्तादिजपस्तथा।); राक. १२० नि चान्यानि दुःस्वप्नानि (न्यधन्यानि स्वप्नानि तु) एषां सं (एषाम) भूयः प्रस्वापनं (भूयश्च स्वपनं); राप्र. ३३७, ३३८–३३९ राकवत्.

(४) मत्स्य. २४२।१७; अग्नि. २२९।१६ उत्त.; राक. १२० नागेन्द्र (गजेन्द्र); राप्र. ३३९.

(१) मत्स्य. २४२।१८–१९; अग्नि. २२९।१७–१८ स्तृतीयके (स्त्रियामिकाः) द्वितीयतृतीयार्धयोः (चतुर्थे त्वर्धमासेन दशाहादरुणोदये।) यदि वा (अथ चेद्); राक. १२० तृतीयार्धं नास्ति; राप्र. ३३९ राकवत्.

(२) मत्स्य. २४२।२०; अग्नि. २२९।१८–१९ शोभनके (तु शोभने) स्वप्नो (स्वापो); राक. १२०–१२१ स्वप्नो (स्वप्नं); राप्र. ३३९ राकवत्.

(३) मत्स्य. २४२।२१; अग्नि. २२९।१९–२० गमने (गगने); राक. १२१ नागाश्व (नागाश्व) गमने (गमनं); राप्र. ३३४ गमने (गमनं).

(४) मत्स्य. २४२।२२ पलितो (फलितो); अग्नि. २२९।२०–२१ तथैव (तथा च); राक. १२१ नाभौ (वाहौ) तथैव (तथा च); राप्र. ३३४ द्रुमतृणो (तृणद्रुमो) तथैव (तथा च).

(५) मत्स्य. २४२।२३; अग्नि. २२९।२१–२२; राक. १२१ ग्रहणं (ग्रसनं); राप्र. ३३४ राकवत्.

(६) मत्स्य. २४२।२४; अग्नि. २२९।२२–२३ तदु (ध्वजो) उत्तरार्धे (भूम्यम्बुधाराग्रहणं शत्रूणां चैव

[1]जयो विवादे द्यूते च सङ्ग्रामे च तथा द्विज।
भक्षणं चाऽऽर्द्रमांसानां मत्स्यानां पायसस्य च॥
[2]दर्शनं रुधिरस्यापि स्नानं वा रुधिरेण च।
सुरारुधिरमद्यानां पानं क्षीरस्य चाथ वा॥
[3]अन्त्रैर्वा वेष्टनं भूमौ निर्मलं गगनं तथा।
मुखेन दोहनं शस्तं महिषीणां तथा गवाम्॥
[4]सिंहीनां हस्तिनीनां च वडवानां तथैव च।
प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः॥
[5]अम्भसा त्वभिषेकस्तु गवां शृङ्गस्रुतेन वा॥
चन्द्राद् भ्रष्टेन वा राजन् ज्ञेयो राज्यप्रदो हि सः॥

चन्द्रात् भ्रष्टेन अम्भसा अभिषेकः। राप्र. ३३५

विक्रिया॥); राक. १२१ धीनां प्र (धराग्र); राप्र. ३३४ धीनां प्र (ध्योराप्र).

(१) मत्स्य. २४२।२५; अग्नि. २२९।२३–२४ चतुर्थचरणे (पायसस्य च भक्षणम्); राक. १२१ द्यूते च (द्यूतेषु); राप्र. ३३४ द्यूते च सङ्ग्रामे (द्यूतेषु संगमे) चाऽऽर्द्र (चाऽऽम).

(२) मत्स्य. २४२।२६; अग्नि. २२९।२४–२५ चाथ वा (वाऽप्यथ); राक. १२१ वा रुधिरेण च (च रुधिरेण ह) चाथ वा (चाप्यथ); राप्र. ३३५ राकवत्.

(३) मत्स्य. २४२।२७; अग्नि. २२९।२५–२६ अन्त्रैर्वा वे (अन्त्रैर्विचे); राक. १२१ र्वा (र्वि) मुखेन (सुखेन) तथा गवाम् (गवां तथा); राप्र. ३३५ र्वा वे (र्विचे) शेषं राकवत्.

(४) मत्स्य. २४२।२८; अग्नि. २२९।२६–२७ शुभः (द्विज); राक. १२१; राप्र. ३३५.

(५) मत्स्य. २४२।२९; अग्नि. २२९।२७–२८ त्वभि (चाभि) स्रुतेन वा (च्युतेन च) राजन् ज्ञेयो राज्यप्रदो हि सः (राम ज्ञेयं राज्यप्रदं हि तत्); राक. १२१ षेकस्तु (षेकश्च) शृङ्गस्रुतेन वा (शृङ्गाश्रितेन च) वा राजन् (वै राजन्); राप्र. ३३५ पूर्वार्धं राकवत्.

[1]राज्याभिषेकश्च तथा छेदनं शिरसस्तथा।
मरणं वह्निदाहश्च वह्निदाहो गृहादिषु॥
[2]लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्याभिवादनम्।
तथोदकानां तरणं तथा विषमलङ्घनम्॥
[3]हस्तिनीवडवानां च गवां च प्रसवो गृहे।
आरोहणमथाश्वानां रोदनं च तथा शुभम्॥
[4]वरस्त्रीणां तथा लाभस्तथाऽऽलिङ्गनमेव च।
निगडैर्बन्धनं धन्यं तथा विष्ठानुलेपनम्॥
[5]जीवतां भूमिपालानां सुहृदामपि दर्शनम्।
दर्शनं देवतानां च विमलानां तथाऽम्भसाम्॥
[6]शुभान्यथैतानि नरस्तु दृष्ट्वा
प्राप्नोत्ययत्नाद् ध्रुवमर्थलाभम्।
स्वप्नानि वै धर्मभृतां वरिष्ठ
व्याधेर्विमोक्षं च तथाऽऽतुरोऽपि॥

(१) मत्स्य. २४२।३०; अग्नि. २२९।२८–२९ सस्तथा (सोऽप्यथ) दाहश्च (लाभश्च); राक. १२१–१२२; राप्र. ३३५ छेदनं शिरसस् (शिरसश्छेदनं) गृहादिषु (गृहस्य च).

(२) मत्स्य. २४२।३१; अग्नि. २२९।२९ राज्य (राज) पूर्वार्धानन्तरम् + (यस्तु पश्यति स्वप्नान्ते राजानं कुञ्जरं हयम्। हिरण्यं वृषभं गां च कुटुम्बस्तस्य वर्धते॥) उत्तरार्धं नास्ति; राक. १२२ द्याभि (द्यादि) तथा विषम (विषयस्य च); राप्र. ३३५ द्याभि (द्यादि) तथा विषम (विषमस्य च).

(३) मत्स्य. २४२।३२; अग्नि. २२९।३१ उत्तरार्धे (वृषेभगृहशैलाग्रवृक्षारोहणरोदनम्॥) उत्त.; राक. १२२ णमथा (णं तथा); राप्र. ३३५ राकवत्.

(४) मत्स्य. २४२।३३; अग्नि. २२९।३१ उत्तरार्धे (घृतविष्ठानुलेपो वा अगम्यागमनं तथा॥) उत्त.; राक. १२२ स्तथा (स्तदा); राप्र. ३३५.

(५) मत्स्य. २४२।३४; राक. १२२ जीवतां (जीवानां) तानां च (तार्चानां); राप्र. ३३५ तानां च (तार्चानां).

(६) मत्स्य. २४२।३५; राक. १२२ ध्रुव (स्रुव) वै धर्मभृ (धर्मज्ञ भृ); राप्र. ३३५ राकवत्.

मनुरुवाच–
[1]गमनं प्रति राज्ञां तु संमुखादर्शने च किम् ।
प्रशस्तांश्चैव संभाष्य सर्वानितांश्च कीर्तय ॥
मत्स्य उवाच–
औषधानि त्वयुक्तानि धान्यं कृष्णं च यद्भवेत् ।
कार्पासश्च तृणं राजन् शुष्कं गोमयमेव च ॥
इन्धनं च तथाऽङ्गारं गुडं तैलं तथाऽशुभम् ।
अभ्यक्तं मलिनं मुण्डं तथा नग्नं च मानवम् ॥
मुक्तकेशं रुजार्तं च काषायाम्बरधारिणम् ।
उन्मत्तकं तथा सत्त्वं दीनं चाथ नपुंसकम् ॥
अयः पङ्कस्तथा चर्म केशबन्धनमेव च ।
तथैवोद्धृतसाराणि पिण्याकादीनि यानि च ॥
चण्डालश्वपचाश्चैव राजबन्धनपालकाः ।
वधकाः पापकर्माणो गर्भिणी स्त्री तथैव च ॥
तुषभस्मकपालास्थि भिन्नभाण्डानि यानि च ।
रिक्तानि चैव भाण्डानि मृतं शार्ङ्गिकमेव च ॥
एवमादीनि चान्यानि अशस्तान्यभिदर्शने ।
अशस्तो वाद्यशब्दश्च भिन्नभैरवजर्जरः ॥
[2]पुरतः शब्द एहीति शस्यते न तु पृष्ठतः ।
गच्छेति पश्चाद्धर्मज्ञ पुरस्तात्तु विगर्हितः ॥
[3]क यासि तिष्ठ मा गच्छ किं ते तत्र गतस्य तु ।
अन्ये शब्दाश्च येऽनिष्टास्ते विपत्तिकरा अपि ॥
[4]ध्वजादिषु तथा स्थानं क्रव्यादानां विगर्हितम् ।
स्खलनं वाहनानां च वस्त्रसङ्गस्तथैव च ॥

(१) मत्स्य. २४३।१–८.

(२) मत्स्य. २४३।९ ; विध. २।१६३।१२ गच्छेति (गच्छेत्तु) गर्हितः (गर्हितैः) ; राप्र. ३४७ प्रथमचरणे (एहीति पुरतः शब्दः) पश्चाद्धर्मज्ञ (शब्दः पश्चात्तु) तु वि (दपि) विष्णुधर्मोत्तरे, एवमग्रेऽपि सर्वत्र.

(३) मत्स्य. २४३।१० ; विध. २।१६३।१३ ते तत्र गतस्य तु (तत्र गमनस्य च) ऽनिष्टा (दुष्टा) ; राप्र. ३४७ तु (च) ऽनिष्टा (दुष्टा).

(४) मत्स्य. २४३।११ ; विध. २।१६३।१४ स्थानं (स्नानं) ; राप्र. ३४७ दानां (दीनां).

[1]निर्गतस्य तु द्वारादौ शिरसश्चाभिघातिता ।
छत्रध्वजानां वस्त्राणां पतनं च तथाऽशुभम् ॥
[2]दृष्टे निमित्ते प्रथमममङ्गल्यविनाशनम् ।
केशवं पूजयेद्विद्वान् स्तवेन मधुसूदनम् ॥
[3]द्वितीये तु ततो दृष्टे प्रतीपे प्रविशेद्गृहम् ।
अथेष्टानि प्रवक्ष्यामि मङ्गल्यानि तथाऽनघ ॥
[4]श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भास्तथैव च ।
जलजाः पक्षिणश्चैव मांसमत्स्याश्च पार्थिव ॥
सस्यम् अकृष्णं धान्यम्, कृष्णधान्यस्य अपशकुनेषु अग्रे पठितत्वात् । राप्र. ३४५
[5]गावस्तुरंगमा नागा बद्ध एकः पशुस्त्वजः ।
त्रिदशाः सुहृदो विप्रा ज्वलितश्च हुताशनः ॥
[6]गणिका च महाभाग दूर्वा चाऽऽर्द्रं च गोमयम् ।
रुक्मं रूप्यं तथा ताम्रं सर्वरत्नानि चाप्यथ ॥

(१) मत्स्य. २४३।१२ ; विध. २।१६३।१५ पूर्वार्धे (विनिर्गतश्च द्वाराद्यैः शिरसश्चाभिघातनम् ।) जानां च (जादिव) ; राप्र. ३४७ पूर्वार्धे (विनिर्गतस्य द्वाराद्यैः शिरसश्चाभिघातनम् ।) जानां व (जादिव).

(२) मत्स्य. २४३।१३ ; विध. २।१६३।१६ दृष्टे निमित्ते (दृष्ट्वा निमित्तं) मङ्गल्य (मङ्गल्यं) स्तवेन (तथैव) ; राप्र. ३४७ पूर्वार्धे (दृष्ट्वा निमित्तं प्रथमं मङ्गल्यं विघ्ननाशनम् ।) स्तवेन (तथैव).

(३) मत्स्य. २४३।१४ ; विध. २।१६३।१७ ; राप्र. ३४७ पू.: ३४५ मङ्गल्यानि तथा (मङ्गलानि तवा) उत्त.

(४) मत्स्य. २४३।१५ ; विध. २।१६३।१८ कुम्भास् (कुम्भं) उत्तरार्धे (जलजानि च मत्स्यानि मांसं मत्स्याश्च भार्गव ॥) ; राप्र. ३४५ उत्तरार्धे (जलजानि च शस्यानि मांसं मत्स्याश्च भार्गव ॥).

(५) मत्स्य. २४३।१६ ; विध. २।१६३।१९ स्त्वजः (स्ततः) ; राप्र. ३४५.

(६) मत्स्य. २४३।१७ ; विध. २।१६३।२० पूर्वार्धे (गणिकाश्च महाभागाः पूर्वाचार्यादिगोमयम् ।) रूप्यं (रौप्यं) ; राप्र. ३४५ रूप्यं (रौप्यं).

¹औषधानि च धर्मज्ञ यवाः सिद्धार्थकास्तथा।
नृवाह्यमानं यानं च भद्रपीठं तथैव च ॥
औषधानि असंयोजितानि ।- राप्र. ३४५
²खड्गं छत्रं पताका च मृदश्चाऽऽयुधमेव च।
राजलिङ्गानि सर्वाणि शवं रुदितवर्जितम् ॥
³घृतं दधि पयश्चैव फलानि विविधानि च।
स्वस्तिकं वर्धमानं च नन्द्यावर्तं सकौस्तुभम् ॥
⁴वादित्राणां सुखः शब्दो गम्भीरः सुमनोहरः।
गान्धारषड्जऋषभा ये च शस्तास्तथा स्वराः ॥
⁵वायुः सशर्करो रूक्षः सर्वत्र समुपस्थितः।
प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्विज ॥
⁶अनुकूलो मृदुः स्निग्धः सुखस्पर्शः सुखावहः।
रूक्षा रूक्षस्वरा भद्राः क्रव्यादाः परिगच्छताम् ॥

(१) मत्स्य. २४३।१८ ; विध. २।१६३।२१ पूर्वार्धे ( औषधानि च सर्वज्ञ वचासिद्धार्थके तथा। ) नृवाह्य ( नृवर्धे ) ; राप्र. ३४५ पूर्वार्धं विधवत्.

(२) मत्स्य. २४३।१९ ; विध. २।१६३।२२ पताका ( पताकां ) मृदश्चाऽऽ ( मृदमा ) ; राप्र. ३४५ विधवत्.

(३) मत्स्य. २४३।२० ; विध. २।१६३।२३ अत ऊर्ध्वम् ( नद्यश्च चित्रविन्यस्ता मङ्गल्यान्यपराणि च। अक्षताश्च तथा मुख्यास्तथा दर्पणमेव च ॥ अञ्जनं रोचनं चैव भृङ्गारो माक्षिकं तथा। शङ्ख इक्षुस्तथा भक्ष्या वाचश्चैव तथा शुभाः ॥ ) इति श्लोकद्वयमधिकम् ; राप्र. ३४५–३४६ विधवत्, शृङ्गारो ( भृङ्गारो ) इति विशेषः .

(४) मत्स्य. २४३।२१ ; विध. २।१६३।२६ रः सु ( रश्च ) ये च ( याने ) ; राप्र. ३४६ विधवत् .

(५) मत्स्य. २४३।२२; विध. २।१६३।२७ द्वितीयचरणे ( स च दिग्भ्यः समर्थितः ) ; राप्र. ३४७ त्र समुपस्थितः ( दिग्भ्यः समुत्थितः ).

(६) मत्स्य. २४३।२३ ; विध. २।१६३।२८ दुःस्नि ( दुस्नि ) उत्तरार्धे ( रूक्षा रूक्षस्वराः खड्गाः क्रव्यादाश्च विगर्हिताः ॥ ) ; राप्र. ३४६ पू. : ३४७ उत्तरार्धे ( रूक्षा रूक्षस्वराः खड्गाः क्रव्यादाश्च विगर्हिताः ) उत्त.

* वायुरिति शेषः। अनुकूलः पृष्ठलग्नः। राप्र. ३४६

¹मेघाः शस्ता घनाः स्निग्धा गजबृंहितनिःस्वनाः।
अनुलोमास्तडिच्छस्ताः शक्रचापं तथैव च ॥
बृंहितं शब्दः। राप्र. ३४६
²अप्रशस्ते तथा ज्ञेये परिवेषप्रवर्षणे।
अनुलोमा ग्रहाः शस्ता वाक्पतिस्तु विशेषतः ॥
³आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनम्।
शस्तान्येतानि धर्मज्ञ यच्च स्यान्मनसः प्रियम् ॥
⁴मनसस्तुष्टिरेवात्र परमं जयलक्षणम्।
एकतः सर्वलिङ्गानि मनसस्तुष्टिरेकतः ॥
⁵यानोत्सुकत्वं मनसः प्रहर्षः
शुभस्य लाभो विजयप्रवादः।
मङ्गल्यलब्धिः श्रवणं च राजन्
ज्ञेयानि नित्यं विजयावहानि ॥

* पूर्वार्धशेषोऽयम्।

(१) मत्स्य. २४३।२४ ; विध. २।१६३।२९ निःस्वनाः ( संनिभाः ) मास्तडिच्छस्ताः ( मा तडिच्छस्ता ) ; राप्र. ३४६ विधवत् .

(२) मत्स्य. २४३।२५ ; विध. २।१६३।३० ग्रहाः ( ग्रहः ) वाक्पति ( दिक्पति ) ; राप्र. ३४७ पू. : ३४६ वाक्पति ( दिक्पति ).

(३) मत्स्य. २४३।२६ ; विध. २।१६३।३१ ; राप्र. ३४६.

(४) मत्स्य. २४३।२७ ; विध. २।१६३।३२ चतुर्थचरणे ( मनस्तुष्टिरथैकतः ) ; राप्र. ३४६.

(५) मत्स्य. २४३।२८ ; विध. २।१६३।३३ द्वितीयचरणे ( सुस्वप्नलाभो मनसः प्रसादः ) मङ्गल्यलब्धिः ( माङ्गल्यलब्धि ) राजन् ( राम ) ; राप्र. ३४६ शुभस्य ( सुस्वप्न ) राजन् ( राम ).

## विष्णुधर्मोत्तरपुराणम्

यात्राकाले शुभाशुभानि शकुनादीनि निमित्तानि

*[1]औषधानि च युक्तानि धान्यं कृष्णमशोभनम्।
कार्पासतृणकाष्ठं च गोमयं चेतराणि च ॥

युक्तानि संयोजितानि । गोमयं शुष्कगोमयम्, आर्द्रगोमयस्य शकुनेषु पाठात् । राप्र. ३४६

अङ्गारं गुडमज्जास्तु मुण्डाभ्यक्तं च नग्नकम्।
अयः पङ्कं चर्म केशा उन्मत्तं च नपुंसकम् ॥

अङ्गारं सधूमम् । राप्र. ३४६

चण्डालश्वपचाद्याश्च नरा बन्धनपालकाः ।
गर्भिणी स्त्री च वधकपिण्याकादीनि वै मृतम् ॥

मृतं सरुदितम्, अरुदितमृतस्य शकुनेषु पाठात् । राप्र. ३४७

तुषभस्मकपालास्थिभिन्नभाण्डानि यानि च ।
अहृद्यो वधशब्दश्च भिन्नभैरवगर्जितः ॥

पुष्कर उवाच–

[2]तिष्ठतो गमने प्रश्ने पुरुषस्य शुभाशुभम् ।
निवेदयन्ति शकुना देशस्य नगरस्य च ॥

[3]पथि पान्थो नृपः सैन्ये मरीचोद्दिश्य देवताम्।
सार्थे प्रधानः साम्ये च ज्ञातिविद्यावयोधिकः ॥

[4]सर्वपापफलो दीप्तः शान्तः शुभफलो मतः ।
षट्प्रकारा विनिर्दिष्टाः शकुनानां च दीप्तयः ॥

[5]वेलादिग्देशकरणरुतजातिविभेदतः ।
पूर्वा पूर्वा च विज्ञेया सा तेषां बलवत्तरा ॥

[1]दिवाचरो रात्रिचरस्तथा रात्रौ दिवाचरः।
क्रूरस्य वेलादीप्तस्य खलर्क्षनिग्रहादिषु ॥

[2]धूमिता सा तु विज्ञेया यां गमिष्यति भास्करः।
यस्यां स्थितः सा ज्वलिता मुक्ता चाङ्गारिणी मता ॥

[3]एतास्तिस्रः स्मृता दीप्ताः पञ्च शान्तास्तथा पराः।
दीप्तायां दिशि दिग्दीप्तः शकुनः परिकीर्तितः ॥

[4]ग्रामे वन्यो वने ग्राम्यस्तथा निन्दितपादपे।
देशे चैवाशुभे ज्ञेयो देशदीप्तो द्विजोत्तम ॥

[5]क्रियादीप्तो विनिर्दिष्टः स्वजात्यनुचितक्रियः ।
रुतदीप्तश्च कथितो भिन्नभैरवनिःस्वनः ॥

[6]जातिदीप्तस्तथा ज्ञेयः केवलं मांसभोजनः ।
दीप्तशान्तो विनिर्दिष्टः सर्वैर्भेदैः प्रकीर्तितः ॥

[7]मिश्रैर्मिश्रो विनिर्दिष्टस्ततो वाच्यं बलात् फलम् ।
गोश्वोष्ट्रगर्दभश्वानः शारिकागृहगोधिके ।
चटका भासकूर्माद्याः कथिता ग्रामवासिनः ॥

* एते श्लोकाः विष्णुधर्मोत्तरपुराणे नोपलभ्यन्ते ।

(१) राप्र. ३४६–३४७.

(२) विध. २।१६४।१ ; अग्नि. २३१।१.

(३) विध. २।१६४।२.

(४) विध. २।१६४।३ दीप्तयः (दीप्तता) ; अग्नि. २३१।२–३ पूर्वार्धे (सर्वः पापफलो दीप्तो निर्दिष्टो दैवचिन्तकैः । शान्तः शुभफलश्चैव दैवज्ञैः समुदाहृतः ॥ ).

(५) विध. २।१६४।४ पूर्वार्धे (वेला दिग्देशकरणं स तु जातिविभेदकः । ) ; अग्नि. २३१।३–४.

(१) विध. २।१६४।५ ; अग्नि. २३१।४–५ उत्तरार्धे (क्रूरेषु दीप्ता विज्ञेया ऋक्षलग्नग्रहादिषु ॥ ).

(२) विध. २।१६४।६ ; अग्नि. २३१।५–६.

(३) विध. २।१६४।७ ; अग्नि. २३१।६–७ दीप्तः शकुनः परिकीर्तितः (दीप्तं शकुनं परिकीर्तितम्.

(४) विध. २।१६४।८ ; अग्नि. २३१।७–८ पूर्वार्धे (ग्रामेऽरण्या वने ग्राम्यास्तथा निन्दितपादपः । ) .

(५) विध. २।१६४।९ रुत (ततो) ; अग्नि. २३१।८–९.

(६) विध. २।१६४।१० जाति (प्रति) ; अग्नि. २३१।९–१० दीप्तशान्तो (दीप्ताच्छान्तो) प्रकीर्तितः (प्रयत्नतः).

(७) विध. २।१६४।११ चटका भासकूर्माद्याः (नटिकेषांसचर्माद्ये) ; अग्नि. २३१।१०–११ ततो (तस्य) बलात् (फला) शारिकागृ (सारिका गृ) धिके (धिका) .

[1]अजाविशुकनागेन्द्रखरा महिषवायसौ ।
ग्राम्यारण्या विनिर्दिष्टाः सर्वेऽन्ये वनगोचराः ॥

[2]मार्जारकुक्कुटौ ग्राम्यस्तथाऽन्यो वनगोचरे ।
सर्वेऽप्येवेति विज्ञेया नित्यं रूपविभेदतः ॥

[3]श्रीकण्ठशिखिचक्राह्वा ये च हारीतवायसाः ।
कुलालकुक्कुटश्येनफाण्टवं जलवानराः ॥

[4]शशाघ्नचटकश्यामाश्चाषभासकपिञ्जलाः ।
तित्तिरिः शतपत्रश्च कपोताश्च तथा त्रयः ॥

[5]खञ्जरीटकदात्यूहशुकाण्डीवहतिक्तकाः ।
भारद्वाजश्च सारङ्ग इति ज्ञेया दिवाचराः ॥

[6]वल्गुल्युलूकः शशका शरभोत्क्रोशपिच्छलौ ।
माषिका पिङ्गली काकः कथिता रात्रिचारिणः ॥

[7]हंसाजमृगमार्जारनकुलर्क्षभुजंगमाः ।
वृकश्च सिंहव्याघ्रोष्ट्रश्वसूकरतुरंगमाः ॥

(१) विध. २।१६४।१२ शुक (शुक्र); अग्नि. २३१।१२ न्द्रखरा (न्द्राः कोलो).

(२) विध. २।१६४।१३ ; अग्नि. २३१।१३ (मार्जारकुक्कुटौ ग्राम्यौ तौ चैव वनगोचरौ । तयोर्भवति विज्ञानं नित्यं वै रूपभेदतः ॥ ).

(३) विध. २।१६४।१४ ; अग्नि. २३१।१४ (गोकर्णशिखिचक्राह्वखरहारीतवायसाः । कुलाहकुक्कुभश्येन-फेरुखञ्जनवानराः ॥ ).

(४) विध. २।१६४।१५ ; अग्नि. २३१।१५ शश (शत) श्यामाश्चाषभास (श्यामचासश्येन) कपोता (कपोत).

(५) विध. २।१६४।१६ ; अग्नि. २३१।१६ द्वितीय-चरणे (शुकराजीवकुक्कुटाः).

(६) विध. २।१६४।१७ ; अग्नि. २३१।१७ (वागुर्युलूकशरभक्रौञ्चाः शशककच्छपाः । लोमासिकाः पिङ्गलिकाः कथिता रात्रिगोचराः ॥ ).

(७) विध. २।१६४।१८ ; अग्नि. २३१।१८ हंसाज (हंसाश्च) उत्तरार्धे (वृकारिसिंहव्याघ्रोष्ट्रग्रामशूकरमानुषाः ॥).

[1]श्वावित् पृथुतगोमायुघृतकोकिलसारसाः ।
तुरंगमो द्वीपिनराश्चोरा उभयचारिणः ॥

[2]रणप्रस्थानयोः सर्वे पुरस्तात् सङ्गचारिणः ।
जयावहा विनिर्दिष्टाः पश्चान्निधनकारिणः ॥

[3]गृहे गम्यो यदा चायं व्याहरेत् पुरतः स्थितः ।
नृपावमानं वदति वामः कलहभोजने ॥

[4]याने तद्दर्शनं धन्यं सपतङ्गस्य चाप्यथ ।
चौरैर्दोषमथाऽऽख्याति मयूरो भिन्ननिःस्वनः ॥

[5]वामः कपिञ्जलः श्रेष्ठस्तथा दक्षिणसंस्थितः ।
पृष्ठतो निन्दितफलस्तित्तिरिस्तत्र शस्यते ॥

[6]एणा वराहाः पृषतो वामा भूत्वा तु दक्षिणाः ।
भवन्त्यर्थकरा नित्यं विपरीता विगर्हिताः ॥

[7]वृकाश्च जम्बुकव्याघ्रसिंहमार्जारगर्दभाः ।
वाञ्छितार्थकरा ज्ञेया दक्षिणाद्वामभागगाः ॥

(१) विध. २।१६४।१९ ; अग्नि. २३१।१९ पृथुत (वृषभ) घृत (वृक) उत्तरार्धे (तुरंगकौ पीननरा गोधा ह्युभयचारिणः ॥ ).

(२) विध. २।१६४।२० न्निधन (द्विजय); अग्नि. २३१।२० रण (बल) सङ्ग (संघ).

(३) विध. २।१६४।२१ ; अग्नि. २३१।२१ पूर्वार्धे (गृहाद् गम्य यदा चासो[?षो] व्याहरन् पुरतः स्थितः ।).

(४) विध. २।१६४।२२ ; अग्नि. २३१।२२ धन्यं सपतङ्गस्य चा (शस्तं सन्यमङ्गस्य वा) दोष (मोघ) एतच्छ्लोकानन्तरम् + (प्रयातस्याग्रतो राम मृगः प्राणहरो भवेत् । ऋक्षाखुजम्बुकव्याघ्रसिंहमार्जारगर्दभाः ॥ प्रतिलोमा-स्तथा राम खरश्च विकृतस्वनः ।).

(५) विध. २।१६४।२३ वामः कपिञ्जलः (वमते कपिलः); अग्नि. २३१।२४–२५ स्तत्र (स्तु न).

(६) विध. २।१६४।२४ ; अग्नि. २३१।२५–२६ पृषतो (पृषता).

(७) विध. २।१६४।२५ ; अग्नि. २३१।२६–२७ वृकाश्च ज (वृषाश्वज) व्याघ्र (व्याघ्राः) भागगाः (तो गताः).

[1]शिवा श्यामा रला च्छुच्छुः पिङ्गला गृहगोधिका।
सूकरी परपुष्टा च पुंनामानश्च वामतः॥
[2]श्रीसंज्ञा चाषभषककपिश्रीकर्णछिक्कराः।
कपिश्रीकर्णपिप्पीका रुरुश्येनाश्च दक्षिणाः॥
[3]जाहकाहिशशक्रोडगोधानां कीर्तनं शुभम्।
ततः संदर्शनं नेष्टं प्रतीपं वानरर्क्षयोः॥
[4]फलकृत्पूर्वशकुनः प्रस्थितस्य च योऽन्वहम्।
भवेत्तस्य फलं वाऽन्यत्तदेव दिवसं बुधैः॥
[5]मत्ता भिक्षार्थिनो बाला विरक्काभास्तथैव च।
सीमान्तनद्यन्तरिता विज्ञेया निष्फला द्विज॥
[6]एकद्वित्रिचतुर्भिस्तु शिवा धन्या ततो भवेत्।
पञ्चभिश्च तथा षड्भिरधन्याः परिकीर्तिताः॥
[7]सप्तभिश्च तथा धन्या निष्फला परतो भवेत्।
नृणां रोमाञ्चजननी वाहनानां भयप्रदा॥
[8]ज्वालानना सूर्यमुखी विज्ञेया भयवर्धिनी।
प्रथमं शार्ङ्गके दृष्टे शुभे देशे शुभं वदेत्॥

[1]संवत्सरं मनुष्यस्य ह्यशुभे चाशुभं तथा।
यथाविधि नरः पश्यञ्छकुनं प्रथमेऽहनि॥
[2]आत्मनश्च तथा तेन ज्ञातव्यं वत्सरं फलम्।
शार्ङ्गकं च नरो दृष्ट्वा भुजंगमशिरोगतः॥
[3]अवश्यं तदवाप्नोति यत्किंचिन्मनसेच्छति।
विशन्ति येन मार्गेण वायसा बहवः पुरम्॥
[4]तेन मार्गेण वै तस्य पुरस्य ग्रहणं भवेत्।
सेनायां यदि वा सार्थे निविष्टो वायसो भवेत्॥
[5]वासो भयाय रात्रस्थो भयं वदति दुस्तरम्।
छायाङ्गवाहनोपानच्छत्रवस्त्रादिकुण्ठनैः॥
[6]मृत्युस्तत्पूजने पूजा तद्विष्ठाकरणे शुभम्।
प्रोषितागमकृत्काकः कुर्वन् द्वारि गतागतम्॥
[7]रक्तं दग्धं गृहे द्रव्यं विक्षिपन् वह्निवेदकः।
न्यसेद्रजं पुरस्ताच्चेन्निवेदयति बन्धनम्॥

---

(१) विध. २।१६४।२६; अग्नि. २३१।२७–२८ पूर्वार्धे (शिवाः श्यामाननाश्छुच्छूः पिङ्गला गृहगोधिका।).

(२) विध. २।१६४।२७; अग्नि. २३१।२८–२९ पूर्वार्धे (स्त्रीसंज्ञा भासकारूषकपिश्रीकर्णच्छित्वराः।).

(३) विध. २।१६४।२८; अग्नि. २३१।२९–३० जाहका (जातिका).

(४) विध. २।१६४।२९; अग्नि. २३१।३०–३१ फलकृत् पूर्व (कार्यकृद् बली) च (हि) वाऽन्यत् (वाच्यं).

(५) विध. २।१६४।३०; अग्नि. २३१।३१–३२ भिक्षा (भक्ष्या) विरक्ताभा (वैरसक्ता) सीमान्तनद्य (सीमान्नमभ्य).

(६) विध. २।१६४।३१; अग्नि. २३१।३२–३३ ततो (स्तैः) रधन्याः (रधन्या) र्तिताः (र्तिता).

(७) विध. २।१६४।३२; अग्नि. २३१।३३–३४.

(८) विध. २।१६४।३३; अग्नि. २३१।३४–३५ शार्ङ्गके (सारङ्गे).

(१) विध. २।१६४।३४; अग्नि. २३१।३५–३६ ह्यशुभे चाशुभं (अशुभे च शुभं) उत्तरार्धे (तथाविधं नरः पश्येत् सारङ्गं प्रथमेऽहनि॥).

(२) विध. २।१६४।३५; अग्नि. २३१।३६ तथा तेन (तथात्वेन) पू.

(३) विध. २।१६४।३६ पुरम् (परम्); अग्नि. २३२।१ उत्त.

(४) विध. २।१६४।३७; अग्नि. २३२।१–२ वै तस्य (रुद्धस्य) सो भवेत् (सो रुदन्).

(५) विध. २।१६४।३८; अग्नि. २३२।२–३ प्रथमचरणे (वामो भयातुरस्त्रस्तो) कुण्ठनैः (कुट्टने).

(६) विध. २।१६४।३९; अग्नि. २३२।३–४ तद्विष्ठा (तदिष्ट).

(७) विध. २।१६४।४०; अग्नि. २३२।४–५ विक्षिपन् वह्नि (क्षिपन् वह्निनि) द्रजं पुरस्ताच्चेन्नि (द्रक्तं पुरस्ताच्च नि).

[1]पीतद्रव्यं तथा रुक्मं रूप्यं श्वेतं तु भार्गव ।
यच्चैवोपनयेद्द्रव्यं तस्य लब्धिं विनिर्दिशेत् ॥

[2]द्रव्यं वाऽपनयेद्यत्तु तस्य हानिं द्विजोत्तम ।
पुरतो धनलब्धिः स्याद्राम मांसस्य भक्षणे ॥

[3]श्रीलब्धिः स्यान्मृगक्षेपे राज्यं रत्नार्पणे महत् ।
यातुः काकोऽनुकूलस्थः क्षेप्यः कर्णसमो भवेत् ॥

[4]नन्वर्थसाधको ज्ञेयः प्रतिकूलो भयावहः ॥

[5]समुखोऽभ्येति विततो यात्राघातकरो भवेत् ।
वामः काकः स्मृतो धन्यो दक्षिणस्तु विनाशकृत् ॥

[6]वामोऽनुलोमगः प्रेष्ठो मध्यमो दक्षिणः स्मृतः ।
प्रतिलोमकृतिर्वामो गमनप्रतिषेधकृत् ॥

[7]निवेदयति यात्रार्थमभिप्रेतं गृहे रतः ।
एकाक्षिचरणस्त्वर्कं वक्ष्यमाणो भयावहः ॥

(१) विध. २।१६४।४१ यच्चैवोपनयेद् (यश्चैवोपलभेद्) ; अग्नि. २३२।५-६ पूर्वार्धे (पीतं द्रव्यं तथा रुक्मरूप्यमेव तु भार्गव ।).

(२) विध. २।१६४।४२ वाऽप (चोप) पुरतो (परतो) ; अग्नि. २३२।६-७ द्विजोत्तम (विनिर्दिशेत्) चतुर्थचरणे (दाममांसस्य च्छर्दने).

(३) विध. २।१६४।४३ ; अग्नि. २३२।७-८ मृग (मृदः) लस्थः क्षेप्यः कर्णसमो (लस्तु क्षेमः कर्मक्षमो).

(४) विध. २।१६४।४४ ; अग्नि. २३२।८ नन्वर्थ (न त्वर्थ).

(५) विध. २।१६४।४५ ; अग्नि. २३२।९ समुखो (संमुखे) विततो (विरुवन्) णस्तु वि (णोऽर्थवि).

(६) विध. २।१६४।४६ ; अग्नि. २३२।१० प्रेष्ठो (श्रेष्ठो) कृति (गति).

(७) विध. २।१६४।४७ ; अग्नि. २३२।११ रतः (गतः) वक्ष्य (वीक्ष).

[1]कोटरे वासमानस्तु महानर्थकरो भवेत् ।
न शुभः सूकरे काकः पङ्कान्तः स तु दृश्यते ॥

[2]अमेध्यपूर्णवदनः काकः सर्वार्थसाधकः ।
ज्ञेयाः पतत्रिणोऽन्येऽमी काकवद् भृगुनन्दन ॥

[3]स्कन्दादौ राम सव्यस्थाः श्वानो रिपुविनाशकाः ।
इन्द्रस्थाने नरेन्द्रस्य पुरेशस्य तु गोपुरे ॥

[4]अन्तर्गृहे गृहेशस्य मरणाय भवेद् भृशम् ।
यस्य व्रजति वामाङ्गं तस्य स्याद्दीर्घसिद्धये ॥

[5]भयाय दक्षिणं चाङ्गं तथा भुजमदक्षिणम् ।
यात्राघातकरो यस्तु हर्षे प्रतिमुखागतः ॥

[6]मार्गावरोधको मार्गे चौरस्तुदति भार्गव ।
अलातास्थिमुखः पापो रज्जुमीरमुखस्तथा ॥

[7]सोपानत्कमुखो धन्यो मांसपूर्णमुखोऽपि च ।
अमङ्गल्यमथ द्रव्यं देशं चैवाशुभं तथा ॥

(१) विध. २।१६४।४८ ; अग्नि. २३२।१२ स्तु (श्च) सूकरे (तूषरे) पङ्कान्तः (पङ्काङ्कः) दृश्यते (शस्यते).

(२) विध. २।१६४।४९ ; अग्नि. २३२।१३ न्येऽमी (न्येऽपि).

(३) विध. २।१६४।५० ; अग्नि. २३२।१४ पूर्वार्धे (स्कन्धावारापसव्यस्थाः श्वानो विप्रविनाशकाः ।).

(४) विध. २।१६४।५१ ; अग्नि. २३२।१५ भृशम् (भषन्) व्रजति (जिघ्रति) स्याद्दीर्घ (स्यादर्थ).

(५) विध. २।१६४।५२ ; अग्नि. २३२।१६ यस्तु हर्षे (यातुर्भवेत्).

(६) विध. २।१६४।५३ ; अग्नि. २३२।१७ चौरस्तुदति (चौरान् वदति) अलाता (अलाभोऽ) मीर (चीर).

(७) विध. २।१६४।५४ ; अग्नि. २३२।१८ मथ द्रव्यं देशं (मुखद्रव्यं केशं).

[1]अवमूल्याग्रतो याति यातस्य न भयं भवेत् ।
तथाऽवमूल्यां व्रजति शुभं देशं तथा क्रमम् ॥
[2]मङ्गल्यं च तथा द्रव्यं तस्य स्यादर्थसिद्धये ।
एवं च राम विज्ञेयास्तथा वै जम्बुकादयः ॥
[3]भयाय स्वामिनो ज्ञेया अनिमित्तभयं गवाम् ।
निशि चौरभयाय स्याद्विकृतं मृत्यवे तथा ॥
[4]शिवाय स्वामिनो रात्रौ बलीवर्दो नदन् भवेत् ।
उत्सृष्टवृषभो राज्ञो विजयं संप्रयच्छति ॥
[5]अभक्ष्यं भक्षयन्त्यश्च गावो न्यासस्तथाऽम्बकान् ।
त्यक्तस्नेहाश्च वत्सेषु गवां क्षयकरो मतः ॥
[6]भूमिं पादैर्विनिर्हत्य दीना भूता विकारणात् ।
अन्योन्यलग्नपुच्छाश्च गावो भयकरा मताः ॥
[7]आर्द्राङ्गा हृष्टरोमाश्च प्रविशन्त्यस्तथा गृहम् ।
शृङ्गलग्नमृदो वाऽपि विज्ञेयाः स्वामिवृद्धये ॥
[8]महिष्यादिषु चाप्येतत् सर्वं वाच्यं विजानता ।
नेत्रनासापुटप्रोथस्कन्धस्यासनमूर्धसु ॥

(१) विध. २।१६४।५५ ; अग्नि. २३२।१९ मूल्या (मूल्या) यातस्य न (यस्य तस्य) तथाऽवमूल्यां (यस्यावमूल्य) क्रमम् (द्रुमम्).

(२) विध. २।१६४।५६ ; अग्नि. २३२।२० एवं च (श्वच्च).

(३) विध. २।१६४।५७ ; अग्नि. २३२।२१ ज्ञेया अ (ज्ञेयम) भयं (रुतं).

(४) विध. २।१६४।५८ ; अग्नि. २३२।२२.

(५) विध. २।१६४।५९ ; अग्नि. २३२।२३ (अभक्ष्यं भक्षयन्त्यश्च गावो दत्तास्तथा स्वकाः । त्यक्तस्नेहाः स्ववत्सेषु गर्भक्षयकरा मताः ॥ ).

(६) विध. २।१६४।६० ; अग्नि. २३२।२४ पूर्वार्धं ( भूमिं पादैर्विनिघ्नन्त्यो दीना भीता भयावहाः । ) पू.

(७) विध. २।१६४।६१ ; अग्नि. २३२।२४ पूर्वार्धे (आर्द्राङ्ग्यो हृष्टरोमाश्च शृङ्गलग्नमृदः शुभाः ॥) पू.

(८) विध. २।१६४।६२ ; अग्नि. २३२।२५ पू.

[1]हयानां ज्वलनं शस्तमतोऽन्यत्र प्रशस्यते ।
सर्वाङ्गज्वलनं नेष्टं तथा धूमसमुद्भवः ॥
[2]विस्फुलिङ्गोद्भवश्चैव शकृत्यां स्वशनं तथा ।
आरोहणं तथाऽन्येन सपर्याणस्य वाजिनः ॥
[3]जलोपवेशनं नेष्टं भूमौ च परिवर्तनम् ।
विपत्कल्पतरङ्गस्य स्वतो वाऽप्यनिमित्ततः ॥
[4]यवसोदकयोर्द्वेषस्त्वकस्माच्चैव शस्यते ।
क्रीतः काकैः कपोतैर्वा शारिकाभिस्तुरंगमः ॥
[5]आत्मनः स्वामिनो वाऽपि तदा मरणवेदकः ।
दुःखार्तध्यानशीलश्च साश्रुनेत्रो भयावहः ॥
[6]जिह्वया लेढि चरणमसावपि भयंकरः ।
निर्निमित्तं पतति वा तदा स्यान्नृषु वृद्धये ॥
[7]वामपादेन च तथा विलिखंश्च वसुंधराम् ।
स्वेनैव वामपार्श्वेन दिवा वा न शुभप्रदः ॥
[8]प्रवेपमाना ह्रेषन्ते रोदन्ते च मुहुर्मुहुः ।
शकृन्मूत्रे विमुञ्चन्तो वेदयन्ति महद्भयम् ॥
[9]उत्तिष्ठन्तो निषीदन्तः संध्यायां दीनमानसाः ।
त्रस्ताः सास्राश्च दीनाश्च ह्रेषमाणा भयावहाः ॥

(१) विध. २।१६४।६३.

(२) विध. २।१६४।६४ ; अग्नि. २३२।२५ उत्त.

(३) विध. २।१६४।६५ ; अग्नि. २३२।२६ त्कल्पत (त्करं तु) स्वतो (सुप्तं).

(४) विध. २।१६४।६६ ; अग्नि. २३२।२७-२८ सोद (मोद) चैव (च न) पूर्वार्धानन्तरम् + ( वदनाद्रुधिरोत्पत्तिर्वेपनं न च शस्यते । ) उत्तरार्धं ( क्रीडन्बकैः कपोतैश्च सारिकाभिर्मृतिं वदेत् ॥ ).

(५) विध. २।१६४।६७ ; अग्नि. २३२।२८ ( साश्रुनेत्रो जिह्वया च पादलेही विनष्टये । ) एतावदेव.

(६) विध. २।१६४।६८.

(७) विध. २।१६४।६९ ; अग्नि. २३२।२९ स्वेनैव (स्वपेद्वा).

(८) विध. २।१६४।७० ; अग्नि. २३२।३० उत्तरार्धे ( भयाय स्यात् सकृन्मूत्री तथा निद्राविलाननः ॥).

(९) विध. २।१६४।७१-७३.

ह्रेषतस्तु यदा ज्वाला ज्योत्स्ना वा मुखतो भवेत् ।
तदा विजयमाख्याति स्वामिनो ध्रुवमेव हि ॥
दक्षिणेन पदा भूमिं विकिरञ्जयवर्धनः ।
रात्रौ दक्षिणपार्श्वेन प्रस्वपंश्च नरोत्तम ॥
[1]आरोहणं नवे दद्यात् प्रतीपं वा गृहं व्रजेत् ।
यात्रा विघातमाचष्टे वामं पादं तथा स्पृशन् ॥
[2]अनुलोमं यदा याति पुरस्तात् प्रतिह्रेषिते ।
दक्षिणं वा तथा पार्श्वं मुखेनोपरि मार्जति ॥
[3]प्रेरितस्त्वनुकूलेन पवनेन रणे हयः ।
ह्रेषमाणः परान् याति तदा स्याद् विजयावहः ॥
[4]ग्रामे व्रजति नागश्चेन्मैथुनं देशहा भवेत् ।
प्रसूता नागवनिता मत्ता चान्ताय भूपतेः ॥
[5]दन्तभङ्गे शुभे देशे द्रुमे वा भयवर्धनः ।
क्रूरेषु वेलालग्नेषु तथा राम विशेषतः ॥
गण्डूषधारणं कृत्वा वक्त्रभागे तु दक्षिणे ।
हस्तं गृहीत्वा हस्तेन नागस्यान्यस्य वा पुनः ॥
उच्चैर्वा करमुन्नम्य विषाणे वाऽथ दक्षिणे ।
गम्भीरं श्रोत्रमधुरं राज्ञस्तद्विजयावहम् ॥
[6]अतोऽन्यथा विपर्यस्तं त्वशुभं परिकीर्तितम् ।
आरोहणं न चेद्दद्यात्प्रतीतं वा गृहं व्रजेत् ॥
[7]मदं वा वारणो जह्याद्यात्राघातकरो भवेत् ।
ग्राहगृहीतो द्विरदः सग्राहः सलिलाशयात् ॥

( १ ) विध. २।१६४।७४ ; अग्नि. २३२।३०–३१ नवे (न चेद्) वामं पादं (वामपार्श्वं).

( २ ) विध. २।१६४।७५.

( ३ ) विध. २।१६४।७६ ; अग्नि. २३२।३१ उत्तरार्धे (ह्रेषमाणः शत्रुयोधं पादस्पर्शी जयावहः ॥).

( ४ ) विध. २।१६४।७७ ; अग्नि. २३२।३२.

( ५ ) विध. २।१६४।७८–८०.

( ६ ) विध. २।१६४।८१ ; अग्नि. २३२।३३. उत्त.

( ७ ) विध. २।१६४।८२ ; अग्नि. २३२।३३ घात्रा (व्राज) पू.



[1]उत्तरन् विजयाय स्यात् सग्राहो भयवर्धनः ।
शस्त्राङ्कुशपताकानां भूमौ निपतनं गजात् ॥
लोष्टकाष्ठकरीषाणां क्षेपणे चापि यद्भवेत् ।
अनुयात्रं जयायैतत् प्रतियात्रं न शस्यते ॥
वार्यमाणो यदा नागः शत्रुणाऽभिमुखो व्रजेत् ।
तरन् प्रसुप्ततारं च यदा तेजः प्रशङ्कितः ॥
इष्टांस्तु यस्तु भक्ष्यांश्च तथा स्पृशति हस्तिनीम् ।
राम बृंहितघण्टानां प्रतिशब्देन कुप्यते ॥
कक्षायां बद्ध्यमानायां यदा वोच्चैर्नदत्यपि ।
यात्रानुगश्च भवति प्रहृष्टश्चैव वारणः ॥
[2]वामं दक्षिणपादेन पादमाक्रमते तथा ।
दक्षिणं च तथा दन्ते परिमार्ष्टि करेण चेत् ॥
[3]वेष्टयत्यथ वा कर्णौ तथा स्तब्धौ करोति च ।
जयाय राज्ञो भवति जनयन्नपि शीकरम् ॥
वामं तु वेष्टयेद्दन्तं पादं वामेन दक्षिणम् ।
पादमाक्रममाणश्च प्रस्खलन्निपतन्नपि ॥
अग्रहस्तं नोद्धरति यदा च वसुधातलात् ।
सासुश्च कवलद्वेषी दीनो भयविवर्धनः ॥
निःश्वासं परमं कुर्वञ्छान्तं विकृतमेव च ।
भयावहो विनिर्दिष्टः प्रतिलोमगतिस्तथा ॥
क्षीरपादपगुल्मानां निहन्ता विजयावहः ।
तथा विकसिताक्षश्च राम लब्धपदोऽपि च ॥
[4]वृषोऽश्वः कुञ्जरो वाऽपि रिपुसैन्यं यदा व्रजेत् ।
पराजयस्ततो ज्ञेयं लक्षणं भृगुनन्दन ॥

( १ ) विध. २।१६४।८३–८७.

( २ ) विध. २।१६४।८८ ; अग्नि. २३२।३४ तथा (शुभः) दन्ते (दन्तं) चेत् (च).

( ३ ) विध. २।१६४।८९–९३.

( ४ ) विध. २।१६४।९४ ; अग्नि. २३२।३५ पूर्वार्धे (वृषोऽश्वः कुञ्जरो वाऽपि रिपुसैन्यगतोऽशुभः ।) पू.

[1]खण्डमेघाभिवृष्ट्या च सेनानाशमवाप्नुयात् ।
प्रतिकूलग्रहर्क्षा च तथा संमुखमासता ॥
[2]यात्राकाले रणे वाऽपि च्छत्रादिपतनाद्भयम् ।
विज्ञेयं भूमिपालस्य योराणां दीनता तथा ॥
[3]नराश्वनागा हृष्टाश्च विधूमोऽग्निस्तथा ज्वलन् ।
अनुलोमा ग्रहाश्चैव विज्ञेयं जयलक्षणम् ॥
[4]आयुधानां प्रज्वलनं कोशादपि विनिर्गमः ।
सङ्ग्रामकाले विज्ञेयं विजयस्य तु लक्षणम् ॥
[5]काकैर्योधाभिभवनं क्रव्यादैर्मण्डलक्रिया ।
सैन्योपर्युपसैन्येन विज्ञेयं भयलक्षणम् ॥
[6]कण्डूतिर्दक्षिणे हस्ते छाया च शुभलक्षणा ।
शोभा मनुजशार्दूल तत्कालं विजयावहा ॥
सेनाङ्गसंस्थो भयकृद्द्विजेन्द्र
क्रव्याङ्कवेद्वाऽप्यथ मक्षिका च ।
शुभावहाः स्युः शतपत्रचाष-
मयूरहंसाश्च सजीवजीवाः ॥

प्रश्नदेशकालानुसारेण प्रष्टुः शुभाशुभविवेकः

पुष्कर उवाच—
[7]प्रष्टुर्देशे शुभे वेद्यं शुभं भवति भार्गव ।
अशुभे वाऽशुभं राम तन्मे निगदतः शृणु ॥
श्मशानसूनाभवनबन्धनागारवेश्मसु ।
रथ्याकर्दमदुर्गेषु शून्येषु भवनेषु च ॥
कण्टकिद्रुमयुक्तेषु शीर्णप्राकारवेश्मसु ।
वल्मीकमूषिकासर्पसकीटेष्वशुभं वदेत् ॥
मांसस्पृष्टोपलिप्तेषु सुपुष्पेषु विशेषतः ।
प्रशस्तद्रुमयुक्तेषु विद्याद्विजयलक्षणम् ॥
सशाद्वलेषु तीरेषु सरितां सरसामपि ।
भवनेषु विचित्रेषु शुभं वाच्यं विजानता ॥
अभ्यक्तं शोच्यमानं च मुक्तकेशं तथैव च ।
भूमिष्ठमुपसर्पन्ति तेषां विद्यादशोभनम् ॥
हृष्टशुक्लाम्बरोपेताः सुमनस्कास्तथैव च ।
दैवज्ञमुपसर्पन्ति तेषां विद्याच्छुभं द्विजाः ॥
बहवो दण्डहस्ताश्च काषायवसनास्तथा ।
अभ्यक्तमुण्डपतितास्तथा क्लीबाश्च योषितः ॥
शृङ्खलारज्जुहस्ताश्च संक्लिन्नफलपाणयः ।
पृच्छन्तस्ते तु विज्ञेया नृष्वशेषभयावहाः ॥
शुक्लाम्बराः सपुष्पाश्च तथैव फलपाणयः ।
रत्नहस्ताः शुभा ज्ञेयास्तथा मङ्गलवादिनः ॥
वेलाः सर्वाः प्रपश्येत पूर्वाह्णे परिपृच्छतः ।
संध्ययोरपराह्णे च निशायां च विगर्हिताः ॥
शान्तां दिशमथाऽऽस्थाय पृच्छतः सिद्धि-
मादिशेत् ।
उदीचीं प्रागुदीचीं च पूर्वां चैव विशेषतः ॥
अङ्गुष्ठनखपादोरुगुल्फमुष्कमुरस्तनाः ।
गण्डशृङ्गाक्षिकौ कर्णौ दन्तोष्ठभुजमस्तकम् ॥
गुरुलुर्गुरुवस्तिश्च वक्षः कक्षोरुसंधयः ।
पुंनामान्येवमादीनि स्पृशतः पृच्छतः शुभम् ॥
कर्णपालिर्भ्रुवौ नासाजिह्वाग्रीवाकृकाटिकाः ।
नाभिश्रोणी स्फिचे जङ्घे पिण्डिका-
ऽङ्गुलयोऽपि च ॥
पाणिपादाश्रया रेखा वलयः सर्वसंधिषु ।
पार्ष्णिरित्येवमादीनि स्त्रीनामान्यभिनिर्दिशेत् ॥
शिरो ललाटं चिबुकं मुखं पृष्ठोदरं त्रिकम् ।
जठरं बस्तिशीर्षं च मेहनं जानुनी तथा ॥

(१) विध. २।१६४।९५ ; अग्नि. २३२।३५–३६ मेघाभि ( मेघाति ) र्क्षा च ( र्क्षात्तु ) मासता ( मारुतात् ).

(२) विध. २।१६४।९६ ; अग्नि. २३२।३६ नाद्भ ( नं भ ) पू.

(३) विध. २।१६४।९७ ; अग्नि. २३२।३७ ( हृष्टा नराश्वानुलोमा ग्रहा वै जयलक्षणम् ॥ ) एतावदेव.

(४) विध. २।१६४।९८.

(५) विध. २।१६४।९९ ; अग्नि. २३२।३७ द्वितीयचरणे ( क्रव्याद्भिर्मण्डलक्षयः ) उत्तरार्धे ( प्राची पश्चिमकैशानी सौम्या प्रेष्ठा शुभा च दिक् ॥ ).

(६) विध. २।१६४।१००–१०१.

(७) विध. २।१६५।१–२९.

कर्णपीठेऽक्षिकूटे च पार्श्वे च हृदयं तथा ।
नपुंसकानि जानीयुरङ्गविद्याविशारदाः ॥

पुंनामानं दृढं स्निग्धमविभग्नमपीडितम् ।
समं समाहितं चाङ्गं वीरुजं च यदा स्पृशेत् ॥

यमर्थमभिपृच्छेत तस्य सिद्धिं विनिर्दिशेत् ।
शत्रुणाऽप्युदये प्रष्टुस्तल्लग्नस्य तथोदये ॥

शत्रुराश्युदये प्रष्टुस्तेषां वाऽप्यधिपोदये ।
पराजयं तु वक्तव्यं स्वलग्नस्याष्टमोदये ॥

स्वराशेश्च महाभाग तथा विद्यादशोभनम् ।
स्वलग्नस्योदये राम शत्रुराश्युदये तथा ॥

लग्नाद्वा राशितो वाऽपि त्रिषष्ठदशमोदये ।
एकादशोदये वाऽपि तेषां वाऽप्यधिपोदये ॥

प्रष्टुः सर्वार्थसंपत्तिर्विज्ञेया भृगुनन्दन ।
लग्ने वा तच्चतुर्थे वा सप्तमे दशमेऽपि वा ॥

पञ्चमे नवमे वाऽपि शस्ताः सौम्यग्रहाः स्मृताः ।
त्रिषड्दशसमं स्थाने पापाश्चैकादशे शुभाः ॥

सर्वार्थसाधका ज्ञेयाः प्रष्टुर्भृगुकुलोद्वह ।
सौम्या बलाधिका ज्ञेयाः पापा हीनबलास्तथा ॥

बलवच्च तथा लग्नं प्रश्नकाले शुभप्रदम् ।
एवं तु प्रश्नकालेन शुभं विज्ञाय भूपतिः ॥

यात्रा राम शुभा ज्ञेया नान्यथा तु कदाचन ।
जातकं चाथ विज्ञाय दशाकाले सुशोभने ।
अष्टवर्गबले शुद्धे यात्राकालः प्रशस्यते ॥

परस्य दैवे त्वशुभे द्विजेन्द्र
यात्रा च देया स्वशुभाय नित्यम् ।
ग्रहादिपाकेषु शुभेषु चैव
दत्ता भवेत् कार्यकरी यथावत् ॥

## अग्निपुराणम्

अमङ्गलानि मङ्गलानि च निमित्तानि, अमङ्गलनाशने हरिपूजनस्तवने, मनस्तुष्टिः मङ्गलोत्तमा

पुष्कर उवाच–

[1]सितवस्त्रं प्रसन्नाम्भः फली वृक्षो नभोऽमलम् ।
*औषधानि च युक्तानि धान्यं कृष्णमशोभनम् ॥
[2]कार्पासं तृणशुष्कं च गोमयं वै धनानि च ।
अङ्गारं गृहसर्जौ च मुण्डाभ्यक्तं च नग्नकम् ॥
[3]अयः पङ्कं चर्मकेशावुन्मत्तं च नपुंसकम् ।
चण्डालश्वपचाद्याश्च नरा बन्धनपालकाः ॥
[4]गर्भिणी स्त्री च विधवाः पिण्याकादीनि वै मृतम् ।
तुषभस्मकपालास्थिभिन्नभाण्डमशस्तकम् ॥
[5]अशस्तो वाद्यशब्दश्च भिन्नभैरवझर्झरः ।
एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः ॥
[6]गच्छेति पश्चाच्छब्दोऽग्र्यः पुरस्तात्तु विगर्हितः ।
क्व यासि तिष्ठ मा गच्छ किं ते तत्र गतस्य च ॥

अनिष्टशब्दा मृत्यर्थं क्रव्यादश्च ध्वजादिगः ।
स्खलनं वाहनानां च शस्त्रभङ्गस्तथैव च ॥

---

* अत्र समानाकारविष्णुधर्मोत्तरीयवचनानां राप्र-व्याख्यानमनुसंधेयम् ।

(१) अग्नि. २३०।१ ; राप्र. ३४६ उत्त. विष्णुधर्मोत्तरे इति निर्देशः , एवमग्रेऽपि.

(२) अग्नि. २३०।२ ; राप्र. ३४६ सं तृणशुष्कं ( सतृणकाष्ठं ) वै धनानि ( चेतराणि ) गृहसर्जौ च ( गुड-मज्जारस्तु ).

(३) अग्नि. २३०।३ ; राप्र. ३४७ केशावु (केशा उ).

(४) अग्नि. २३०।४ ; राप्र. ३४७ विधवाः पि ( वधकपि ) भाण्डमशस्तकम् ( भाण्डानि यानि च ).

(५) अग्नि. २३०।५ ; राप्र. ३४७ ( अहृद्यो वध-शब्दश्च भिन्नभैरवगर्जितः । ) पू.

(६) अग्नि. २३०।६–१३.

**शिरोघातश्च हाराद्यैश्छत्रवासादिपातनम् ।**
**हरिमभ्यर्च्य संस्तुत्य स्यादमङ्गल्यनाशनम् ॥**
**द्वितीयं तु ततो दृष्ट्वा विरुद्धं प्रविशेद् गृहम् ।**
**श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भो महोत्तमः ॥**
**मांसं मत्स्या दूरशब्दा वृद्ध एकः पशुस्त्वजः ।**
**गावस्तुरंगमा नागा देवाश्च ज्वलितोऽनलः ॥**
**दूर्वाऽऽर्द्रगोमयं वेश्या स्वर्णं रूप्यं च रत्नकम् ।**
**वचासिद्धार्थकौषध्यो मुद्ग आयुधखड्गकम् ॥**
**छत्रं पीठं राजलिङ्गं शवं रुदितवर्जितम् ।**
**फलं घृतं दधि पयो अक्षतादर्शमाक्षिकम् ॥**
**शङ्ख इक्षुः शुभं वाक्यं भक्तवादित्रगीतकम् ।**
**गम्भीरमेघस्तनितं तडित्तुष्टिश्च मानसी ।**
**एकतः सर्वलिङ्गानि मनसस्तुष्टिरेकतः ॥**

## कामन्दकीयनीतिसारः

जयपराजययोः शुभाशुभनिमित्तानि

**[1]आक्रान्त इव केनापि रोगानीकैरभिद्रुतः ।**
**अकस्माद्भवदुद्वेगो रजोनीहारसंवृतः ॥**

(१) एवं निवेशितस्य स्कन्धावारस्य जयपराजययोः शुभाशुभनिमित्तं जानीयादिति निमित्तज्ञानमुच्यतेऽष्टादशभिः श्लोकैः । तत्राशुभमधिकृत्याऽऽह– आक्रान्त इत्यादि । केनापि भूतविशेषेणावष्टब्ध इव रोगानीकैरभिद्रुतः । अकस्मात् विना प्रियाप्रियवाग्योगादिना भवदुद्वेगः । जम.

(२) स्कन्धावारस्य दुर्निमित्तमभिधातुमाह– आक्रान्त इति । केनापि अदृश्यमानेन आक्रान्त इव अवष्टब्ध इव स्कन्धावार इति यदा विभाव्यते तदा दुर्निमित्तम् । तथा रोगानीकैरनुद्रुतः रोगानीकैः व्याधिसैन्यज्वरादिभिः अनुद्रुतः कृतोपद्रवः, तथा अकस्माद्भवदुद्वेगः अकस्मात् कारणं विनैव भवदुद्वेगः जायमानचित्तक्षोभः, तथा राजनीहारसंवृतः राजभिः कैश्चित् भूपतिभिः नीहारेण धूमिकया च संवृतः पिहितः स्कन्धावारश्चेत् तदाऽपि दुर्निमित्तम् । 'अकस्माद्भवदुद्वेगः' इत्यत्र 'अकस्मादुद्भवद्द्वेषः' इति मुद्रितपुस्तकपाठः । उनिसा.

**[2]विधूम्रैः परुषैर्वातैरकस्माच्च पतद्ध्वजः ।**
**परस्परभवद्द्रोहो नतथातूर्यनिस्वनः ॥**

(१) विधूम्रैः धूमिकादिभिः खरैश्च वातैः, संवृत इत्येव । अकस्मात् विना वातेन पतद्ध्वजः । परस्परभवद्द्रोहः अवस्कन्दादिभिः । नतथातूर्यनिस्वनः यथा प्राक् । जम.

(२) यदा स्कन्धावारः परुषैः प्रचण्डैः वातैः मरुद्भिः विधूतः कम्पितः, अकस्मात् कारणं विना पतद्रजाः पतन्ति रजांसि यस्मिन् स तथा, परस्परभवद्द्रोहः स्ववर्गे एव परस्परभवद्धिंसः, नतथातूर्यनिस्वनः विस्वरतूर्यध्वनिः, तदा दुर्निमित्तं ज्ञेयम् । 'विधूतपरुषैर्वातैः' इत्यत्र 'विधूतः परुषैर्वातैः' इत्ययं पाठः समीचीनः । उनिसा.

**उत्प्रेक्षितभयत्रासो निर्घातोल्कादिदूषितः ।**
**उद्गमत्प्रज्वलच्छस्त्रो विदक्षिणशिवारुतः ॥**

(१) भयं मरणहेतुकम् । त्रासः शङ्कामात्रम् । निर्घातोल्कादिदूषणं विजिगीषुदेशे तस्य निपातनात् । उद्गमत् स्वकोशान्निष्क्रामत् प्रज्वलत् शस्त्रं यत्र । विदक्षिणशिवारुतः– विदक्षिणः प्रतिकूलः । जम.

(२) यदा स्कन्धावार उत्प्रेक्षितभयत्रासः उत्प्रेक्षितः संभावितः भयं त्रासश्च यस्मिन् सः, तथा निर्घातोल्काभिदूषितः निर्घातेन अकस्मादुत्पन्नमहानादेन उल्काभिः गगनात् पतद्रेखाकारतेजःपुञ्जैः अभिदूषितः आभिमुख्येन दूषितः, उद्धूमः उद्गतो धूमो यस्मात् सः, प्रज्वलच्छस्त्रः प्रज्वलन्ति शस्त्राणि यत्र सः, विदक्षिणशिवारुतः विदक्षिणं प्रतिकूलं शिवारुतं यस्य स तथाभूतः, तदा दुर्निमित्तम् । उनिसा.

---

(१) कानी. १७।२३ ; उनिसा. रभि (रनु) रजो (राज).

(२) कानी. १७।२४ ; उनिसा. धूम्रैः (धूतः) द्ध्वजः (द्रजाः).

(२) कानी. १७।२५ ; उनिसा. ल्कादि (ल्काभि) द्गमत्प्र (उमद्धूः प्र).

[1]**मण्डलैः काकगृध्राणामाकीर्णो रूक्षवाशिभिः ।**
**मुहुरत्युग्रतादीप्तः संसिक्तो रक्तवृष्टिभिः ॥**

(१) अत्युग्रतादीप्तः अतिरूक्षत्वात् राक्षसीनिवास इव । रक्तवृष्टिभिः औत्पातिकीभिः । जम.

(२) यदा स्कन्धावारः काकगृध्राणां मण्डलैः काकानां वायसानां गृध्राणां शकुनिविशेषाणां मण्डलैः समूहैः आकीर्णः व्याप्तः । मण्डलैः किंभूतैः ? रूक्षवाशिभिः कर्कशं शब्दायमानैः । मुहुः सर्वदा अत्युग्रतादीप्तः अत्युग्रतया अतिभयानकतया दीप्तः प्रकाशितः, स्वपक्षस्येति शेषः, संसिक्तो रक्तवृष्टिभिः, आकाशात् पतिताभिरिति शेषः, तथा च आकाशात् पतिताभिः रक्तवृष्टिभिः संसिक्तः उक्षितः, तदा दुर्निमित्तम् । उनिसा.

**परीतराजनक्षत्रः क्रूरैरौत्पातिकैर्ग्रहैः ।**
**सूर्यदृष्टकबन्धादिरकस्मान्मूढवाहनः ॥**

(१) क्रूरैर्ग्रहैः राहुभौमशनैश्चरैः । औत्पातिकैः केतुकम्पादिभिः । सूर्यमण्डले दृष्टं कबन्धादि यस्मिन् स्कन्धावारे । तस्मात्तु नान्यत्र दृश्यते । मूढः विमनस्कः । जम.

(२) क्रूरैः अशुभसूचकैः औत्पातिकैः उत्पातजनकैः ग्रहैः राहुकेत्वादिभिः परीतराजनक्षत्रः परीतम् आक्रान्तं राजनक्षत्रं स्कन्धावाराधिपतिजन्मनक्षत्रं यस्य सः । सूर्यदृष्टकबन्धादिः सूर्ये सूर्यमण्डले दृष्टानि अवलोकितानि कबन्धादीनि अपमूर्धकलेवराणि यत्र सः । अकस्मान्मूढवाहनः अकस्मात् कारणं विना मूढं मोहयुक्तं वाहनं यत्र । एवंभूतः स्कन्धावारः यदा तदा दुर्निमित्तम् । उनिसा.

[2]**अकस्मान्मत्तमातङ्गः संशुष्यद्दानशीकरः ।**
**इत्यादिविकृतोपेतः स्कन्धावारो न शस्यते ॥**

(१) दानं मदः । विकृतम् अशुभम् । जम.

(२) अकस्मात् मत्तमातङ्गप्रशुष्यद्दानशीकरः मत्तमातङ्गानां मत्तगजानां प्रशुष्यन्तः शोषं प्राप्नुवन्तः दानशीकराः मदजलकणाः यत्र सः । इत्यादिविकृतोपेतः इत्यादिदुर्निमित्तयुक्तः स्कन्धावारः न शस्यते न प्रशंसनीयः । उनिसा.

[1]**प्रहृष्टनरनारीकः प्रशस्तस्वनदुन्दुभिः ।**
**गम्भीरहेषितहयः पूरितद्विपबृंहितः ॥**

(१) शुभमधिकृत्याऽऽह– प्रहृष्टेत्यादिना । प्रशस्तस्वनः गम्भीरस्वनः । बृंहितं गर्जितम् । जम.

(२) इदानीं शुभनिमित्तोदयात् शुभं स्कन्धावारं शुभं युद्धाय कालं च दर्शयन्नाह– प्रहृष्टेति । प्रहृष्टनरनारीकः प्रहृष्टाः प्रफुल्लचित्ताः नरा नार्यश्च यत्र स तथाभूतः, प्रशस्तस्वनदुन्दुभिः प्रशस्तस्वनाः श्रवणमधुरध्वनयः दुन्दुभयः भेर्यः यत्र स तथाभूतः, गम्भीरहेषितहयः गम्भीरहेषिताः गम्भीरं शब्दायमानाः हयाः अश्वाः यत्र स तथाभूतः, शस्तबृंहितकुञ्जरः शस्तबृंहिताः श्रुतिसुखकरध्वनयः कुञ्जराः गजाः यत्र स तथाभूतः स्कन्धावारः प्रशस्यते इति परेणान्वयः । 'पूजितोद्बृंहितद्विपः' इति पाठे तु उक्त एवार्थः । 'शस्त्रबृंहितकुञ्जरः' इति मुद्रितपुस्तकपाठस्तु न समीचीनः । उनिसा.

[2]**पुण्याहब्रह्मघोषाढ्यो नृत्तगीतसमाकुलः ।**
**निरीतिको महोत्साह आकाङ्क्षितजनोदयः ॥**

(१) पुण्याहब्रह्मघोषाढ्य इति प्रशस्तदिने वेदध्वनिमुखरः । यदि वा पुण्याहघोषैर्ब्रह्मघोषैश्च सर्वदा कलितः । निरीतिकः निरुपद्रवः । जम.

(२) पुण्याहब्रह्मघोषाढ्यः पुण्याहे पुण्यतिथौ यः ब्रह्मघोषः वेदध्वनिः तेन आढ्यः युक्तः, नृत्यगीतसमस्वनः नृत्यगीतानां समाः तुल्याः स्वनाः ध्वनयः यत्र

---

(१) कानी. १७।२६–२७.

(२) कानी. १७।२८ ; उनिसा. मातङ्गः सं (मातङ्गप्र).

(१) कानी. १७।२९ ; उनिसा. पूरितद्विपबृंहितः (शस्तबृंहितकुञ्जरः).

(२) कानी. १७।३० ; उनिसा. नृत्त (नृत्य) समाकुलः (समस्वनः) निरी (निर्भी) जनो (जयो).

स तथाभूतः, निर्भीतिकः नास्ति भीतिः भयं स्कन्धावारस्थजनानां यत्र स तथाभूतः, महोत्साहः महान् अतिशयः उत्साहः कर्तव्यार्थेषु स्थेयान् प्रयत्नः स्कन्धावारस्थितजनानां यत्र स तथाभूतः, आकाङ्क्षितजयोदयः आकाङ्क्षितः स्कन्धावारस्थजनैरभिलषितः जयोदयः विजयप्राप्तिः यत्र एवंभूतः स्कन्धावारः प्रशस्यते इति परेणान्वयः। एवमुत्तरत्र योज्यम्। उनिसा.

**[1]विरजस्कोऽभिवृष्टश्च प्रादक्षिण्यस्थितग्रहः।**
**दिव्यान्तरिक्षैरुत्पातैः पार्थिवैश्च विवर्जितः॥**

(१) अभिवृष्टः जलधरसिक्तः। प्रादक्षिण्यस्थितग्रहः पुरः शुक्राद्यभावात्। उत्पातैरिति। उत्पातास्त्रिविधाः दिव्यान्तरिक्षभौमाः, तैरप्रशस्तैर्विवर्जितः। जम.

(२) अभिवृष्टः अनुकूलवृष्टियुक्तः। अत एव नीरजस्कः धूलिरहितः। प्रादक्षिण्यस्थितग्रहः प्रादक्षिण्येन अनुकूलतया स्थिताः स्कन्धावाराधिपतेर्ग्रहा यत्र स तथाभूतः। दिव्यान्तरीक्षैरुत्पातैः पार्थिवैश्चाप्यदूषितः दिव्यैः अतिवृष्ट्यादिभिः आन्तरीक्षैः उल्कादिभिः पार्थिवैः तस्करादिभिः अदूषितः अनाक्रान्तः। उनिसा.

**[2]प्रशस्तकूजद्विहगः प्रदक्षिणशिवारुतः।**
**नीचैःप्रवृत्तानुलोममारुतः स्तुतमङ्गलः॥**

(१) विहगाः काकादयः। अनुलोमो मारुतः पृष्ठतोवाही। स्तुतमङ्गलः स्थानस्थानेषु बन्दिभिः। जम.

(२) नीचैः प्रवृत्तानुलोममारुतस्तुतमङ्गलः नीचैः मान्द्येन प्रवृत्तः अनुलोमः अनुकूलः यः मारुतः वायुः तेन स्तुतं सूचितं मङ्गलं सिद्धिः यत्र स तथाभूतः। उनिसा.

**[1]हृष्टपुष्टजनः साधुः सुगन्धिज्वलितानलः।**
**अमन्दमत्तमातङ्ग आसाराभ्युदयान्वितः॥**

(१) साधुः परस्परद्रोहाभावात्। सुगन्धिः निर्गन्धेन्धनदाहेऽपि, ज्वलितोऽनलो यत्र। आसारः मित्रबलम्। जम.

(२) हृष्टपुष्टबलः हृष्टानि प्रफुल्लचित्तानि पुष्टानि सबलानि बलानि सैन्यानि यस्य स तथाभूतः। साधुः लोभादिदोषरहितः। सुगन्धिज्वलितानलः सुगन्धिः धूमादिभिः सुरभिगन्धयुक्तः ज्वलितः प्रदीप्तः, निर्धूम इति यावत्, अनलः वह्निः यत्र स तथाभूतः। अमद्यमाद्यन्मातङ्गः अमद्येन मदकारणाभावेनापि माद्यन्तः मत्ततां प्राप्नुवन्तः मातङ्गाः गजाः यत्र स तथा। आसाराभ्युदयान्वितः आसारः शुभवृष्टिः, तेन सूचितः अभ्युदयः समुन्नतिः युद्धे जयलाभ इति यावत्, तेन अन्वितः युक्तः। अथवा, आसारः सुहृद्बलम्, तस्य यः अभ्युदयः प्राशस्त्यम्, तेन अन्वितः। उनिसा.

**[2]इत्यादिलक्षणोपेतः स्कन्धावारः प्रशस्यते।**
**शस्ते तस्मिन् द्विषो भङ्गोऽशस्ते ज्ञेयो विपर्ययः॥**

(१) शस्ते तस्मिन् स्कन्धावारे। अशस्ते विपर्ययः द्विषो जयः। जम.

(२) इत्यादिलक्षणोपेतः पूर्वोक्तलक्षणयुक्तः स्कन्धावारः प्रशस्यते विजयाय भवतीत्यर्थः। तस्मिन् स्कन्धावारे शस्ते पूर्वोक्तशुभलक्षणान्विते सति द्विषः यातव्यस्य भङ्गः पराजयः, तस्मिन् अशस्ते अशुभलक्षणान्विते सति विपर्ययः यातव्यस्य जयः विजिगीषोश्च पराजयः ज्ञेयः बोध्यः। उनिसा.

(३) शकुनाद्युपेते जयः, अशकुनाद्युपेते भङ्ग इत्यर्थः। नीम. ६०

---

(१) कानी. १७।३१; उनिसा. विरज (नीरज) रिक्षै (रीक्षै) श्च विवर्जितः (श्चाप्यदूषितः); नीम. ६० श्च विवर्जितः (श्चाप्यदूषितः) उत्त.

(२) कानी. १७।३२; उनिसा. तः स्तु (तस्तु) उत्त.; नीम. ६० उत्तरार्धे (नीचैः प्रवृत्तपवनो मङ्गालीस्ततमङ्गलः॥) उत्त.

(१) कानी. १७।३३; उनिसा. जनः (बलः) अमन्दमत्त (अमद्यमाद्यन्); नीम. ६० तानलः (ताननः) पू.

(२) कानी. १७।३४; नीम. ६० ऽशस्ते ज्ञेयो (ज्ञेयोऽन्यस्मिन्).

[1]सिद्धयसिद्धी निमित्तानि यतः शंसन्ति कर्मणाम्।
विद्यादात्महिताकाङ्क्षी तस्मादेतानि तत्त्वतः॥

(१) शंसन्ति कथयन्ति। तस्मादेतानि शुभाशुभानि। जम.

(२) निमित्तान्येव शुभाशुभसूचकलक्षणान्येव शुभाशुभफलोदयं जयपराजयरूपफलप्राप्तिं शंसन्ति सूचयन्ति। तस्मात् पूर्वोक्तकारणात् शास्त्रज्ञः नीतिशास्त्रतत्त्ववित् राजा विजिगीषुः समुपलक्षयेत् कार्यसिद्धिं स्थिरीकुर्यात्। उनिसा.

[2]प्रशस्तेन निमित्तेन विशुद्धेनान्तरात्मना।
व्यक्तमारभ्यमाणं हि सिद्धिं याति समीहितम्।

(१) विशुद्धेनान्तरात्मना जयाभिकाङ्क्षिणा। समीहितं विग्रहादिकम्। जम.

(२) प्रशस्तेन शुभसूचकेन निमित्तेन पूर्वोक्तलक्षणेन, विशुद्धेन मोहादिदोषरहितेन अन्तरात्मना अन्तःकरणेन च व्यक्तं सम्यक् आरभ्यमाणं क्रियमाणं समीहितं चेष्टितं सिद्धिं विजयलक्षणं फलं याति प्राप्नोति। उनिसा.

[3]सहायसंपत् प्रज्ञानं सत्त्वं दैवानुकूलता।
उद्योगोऽध्यवसायश्च यस्यैते तस्य सिद्धयः॥

(१) सिद्धिनिमित्तान्तराण्याह– सहायसंपदित्यादि। प्रज्ञानं प्रज्ञा अष्टाङ्गा। दैवानुकूलता प्रागुक्ता। उद्योगः उत्साहः। अध्यवसायः व्याख्यातः (कानी. १६।३४)। जम.

(२) सहायसंपत् यैः सहायैः कार्यसिद्धिर्भवति तेषां संपत् उत्कर्षः। विज्ञानं तस्मिन् काले विशिष्टज्ञानम्। सत्त्वं बलम्। दैवानुकूलता दैवस्य भाग्यस्य अनुकूलता सहकारिता। उद्योगः मनसि उत्साहः। व्यवसायः निश्चयः। यस्य विजिगीषोः एते सहायसंपदादयः, सन्तीति शेषः, तस्य विजिगीषोः सिद्धयः युद्धे जयलाभादयः, भवन्तीति शेषः। उनिसा.

(१) कानी. १७।३५; उनिसा. (निमित्तान्येव शंसन्ति शुभाशुभफलोदयम्। तस्मादेतानि शास्त्रज्ञो राजा समुपलक्षयेत्॥).

(२) कानी. १७।३६.

(३) कानी. १७।३७; उनिसा. प्रज्ञा (विज्ञा) ऽध्यव (व्यव).

## योगयात्रा

गुणान्वितस्य राज्ञ एव यात्रायां शुभनिमित्तानि शुभफलदानि, न दोषान्वितस्य

[1]रक्तासिताद्या हि यथाऽम्बरस्य
वर्णाः सितस्यैव भवन्ति सम्यक्।
विलग्नतिथ्यादिगुणास्तथैव
विशुद्धदोषस्य भवन्ति यातुः॥

[2]गुणैः समस्तैरपि संप्रयुक्ता
कन्येव यात्रा विगुणाय दत्ता।
करोत्यकीर्तिं सुखवित्तहानिं
पात्रान्तरज्ञानजडस्य दातुः॥

तत्र पात्रे दातव्यम्, अपात्रे दातुः अनिष्टमुक्तं मिहिरेण– गुणैरिति। नीम. ३७

[3]गुणान्वितस्यैव गुणान् करोति
यात्रा शुभर्क्षग्रहलग्नयोगात्।
व्यर्था सदोषस्य गुणान्विताऽपि
वीणेव शब्दाश्रयवर्जितस्य॥

यात्रा विशुद्धाऽपि समं प्रवृत्ता
पात्रानुरूपाणि फलानि धत्ते।
जगत्युदीर्णाऽपि तु कौशिकस्य
भा भानवी नैव तमः प्रमार्ष्टि॥

(१) योया. २।१.

(२) योया. २।१४; नीम. ३७ यात्रा (पित्रा) पात्रान्तरज्ञानजडस्य (शास्त्रेतरज्ञानजडाय).

(३) योया. २।१५–१६.

शुभाशुभानि शकुनादीनि निमित्तानि

[1]अभिहितगुणसंयुतेन राज्ञा
कथितगुणात्ययसंस्थितोऽभियोज्यः ।
उपहतमुपलभ्य वा स्वदेशं
बलमथवा निरुपद्रुतोऽभियुञ्ज्यात् ॥

प्रचुरमशकयूकं मक्षिकादंशपूर्णं
प्रबलजलदवृष्ट्या पांशुपाताहतं वा ।
पिशितरुधिरधान्यप्राणिवृष्ट्याहतं वा
करितुरगमनुष्या यत्र वा ध्यान-
दीनाः ॥

[2]शब्दायन्ते मुहुरपि शिवा गर्दभध्वान-
तुल्या-
स्त्यक्तस्नेहाः परिजनसुहृ-
द्वाहनोपस्करेषु ।
कष्टं को नः शरणमिति वा वादिनो यस्य
सैन्ये
विद्विष्टा वा प्रवरपुरुषाः सोऽभि-
योज्यो नृपेण ॥

[3]निद्रालस्यावनतवदनाः केचन स्वप्नशीला
भ्रष्टाचारा मलिनपुरुषच्छायया
क्रान्तदेहाः ।
दीर्घश्वासाः सजलनयनाः शोकलोभाभि-
भूताः
सैन्ये यस्य द्विजगुरुसुहृद्द्वेषिणश्चैव
योधाः ॥

अकारणप्रोद्गतरोमकूपा
जये निराशाः प्रकृतेरपेताः ।
अमङ्गलाचेष्टितजातहासाः
सैन्ये नरा यस्य स चाभियोज्यः ॥

[1]कपोतकोलूकमधूनि यस्य
समाश्रयन्ते ध्वजचामराणि ।
छत्रायुधादीनि च सोऽभियोज्यो
यस्याथवाऽनाहततूर्यशब्दाः ॥

[2]प्रतीपगत्वं सरितामिषोश्च
शोषोऽथवाऽशोष्यजलाशयानाम् ।
अवारिदेशे सलिलप्रवृत्ति-
रव्वैकृतं चाप्सु तरेच्छिला वा ॥

[3]भङ्गपातवलनान्यनिमित्तं
रोदनानि च सुरप्रतिमानाम् ।
अग्निरूपमनलेन वा विना
निश्चलानि च यदा प्रचलन्ति ॥

[4]प्रसूतिवैकृत्यमकालपुष्पा-
ण्यरण्यसत्त्वस्य पुरप्रवेशः ।
प्रदोषकाले कृकवाकुशब्दा
हिमागमे चान्यभृतः प्रलापाः ॥

अन्यभृत् कोकिलः । नीम. ५७

[5]दीर्घं दीनं संहताः सारमेयाः
क्रोशन्त्युच्चैर्नित्यमेवानृतौ च ।
हन्युर्योषा योषितो निर्घृणाश्च
श्वेतः काको नक्तमिन्द्रायुधं वा ॥

अनृतौ शरत्कालात् अन्यत्र । अनृतौ इति इन्द्रायुधे अपि अन्वेति । नीम. ५७

[6]तिला वितैला यदि वाऽर्धतैलाः
सस्यस्य वृद्धिर्यदि वाऽतिरिक्ता ।
अन्नस्य वैरस्यमसृक् तरूणां
शुष्कप्रोहो विरुजां प्रणाशः ॥

---

(१) योया. ३।१–२.

(२) योया. ३।३ ; नीम. ५६ तुल्यास्त्य (तुल्यं त्य) प्रवर ( प्रचुर ).

(३) योया. ३।४–५.

(१) योया. ३।६ ; नीम. ५६ कपो (कापो) शब्दाः ( शब्दः ).

(२) योया. ३।७ रव्वै ( रवै ) ; नीम. ५७.

(३) योया. ३।८ ; नीम. ५७ वलना ( चलना ).

(४) योया. ३।९ ; नीम. ५७ प्रलापाः ( प्रलापः ).

(५) योया. ३।१० ; नीम. ५७ वा ( च ).

(६) योया. ३।११–१३.

विहाय सर्पाखुबिडालमत्स्यान्
स्वजातिमांसान्युपभुञ्जते वा ।
व्रजन्ति वा मैथुनमन्यजात्यां
दीप्ताश्च नित्यं विहगा मृगाश्च ॥

भङ्गः पातस्तोरणेन्द्रध्वजानां
शीतोष्णानां व्यत्ययो भूविदारः ।
निम्नोच्चानां तुङ्गता निम्नता वा
छाया चार्कस्याऽऽभिमुख्येन याता ॥

[1]अहातिरिक्तः पवनोऽतिचण्डो
गन्धर्वसंज्ञस्य भवेत् पुरस्य ।
व्यक्तिर्भवेच्चाहनि तारकाणां
नक्तं च तारागणसंप्रणाशः ॥

[2]प्रासादवेश्मवसुधाशरगुल्मनिम्ने-
ष्वावासका बलिभुजामनपत्यता
वा ।
एकाण्डजत्वमथवा भुवि मण्डलानि
कुर्वन्ति चक्रकमिवोपरि वा
भ्रमन्तः ॥

उल्काऽभिघातेन तमोऽतिदीप्त्या
वक्रातिवक्रेण सुतो धरित्र्याः ।
केतुर्गतिस्पर्शनधूपनेन-
चारेण पीडां कुरुतेऽर्कपुत्रः ॥

त्रिभिस्त्रिभिर्भैरथ कृत्तिकाद्यै-
र्निष्पीडितैर्भूपतयोऽभियोज्याः ।
पाञ्चालनाथो मगधाधिपश्च
कलिङ्गराडुज्जयिनीपतिश्च ॥

आनर्तराट् सैन्धवहारहूनौ
मद्रेश्वरोऽन्यश्च कुरङ्गनाथः ।
एते हि कूर्माङ्गसमाश्रितानां
विशेषपीडामुपयान्ति भूपाः ॥

(१) योया. ३।१४ ; नीम. ५७ संप्रणाशः ॥ + (एवं निमित्तानि यदा भवन्ति तदाऽभियोज्याः क्षितिपेन देशाः ॥). (२) योया. ३।१५–२०.

अङ्गेषु सूर्यो यवनेषु चन्द्रो
भौमो ह्यवन्त्यां मगधेषु सौम्यः ।
सिन्धौ गुरुर्भोजकटेऽथ शुक्रः
सौरिः सुराष्ट्रे विषये बभूव ॥

म्लेच्छेषु केतुश्च तमः कलिङ्गे
जाता यतोऽतः परिपीडितास्ते ।
स्वजन्मदेशान् परिपीडयन्ति
ततोऽभियोज्याः क्षितिपेन देशाः ॥

[1]संपूज्यन्ते भैरवोच्चानुनादै
रक्तैर्मांसैस्तालजङ्घादयो वा ।
दृश्यन्ते वा यातुधानाः प्रभूता
भ्रष्टश्रीकः सोऽपि देशोऽभि-
योज्यः ॥

देशभ्रंशो यैर्निमित्तैः प्रदिष्ट-
स्तास्ता वार्ता वक्ति लोको
विशङ्कः ।
त्यक्त्वा देशं यान्ति यं भिक्षुका वा
गम्यो देशः सोऽप्यसाधुप्रवृत्तः ॥

[2]छाया शुभाशुभफलानि निवेदयन्ती
लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः ।
तेजोगुणान् बहिरपि प्रविकाशयन्ती
दीपप्रभा स्फटिकरत्नघटस्थितेव ॥

स्निग्धद्विजत्वङ्नखरोमकेशा
छाया सुगन्धा च महीसमुत्था ।
तुष्ट्यर्थलाभाभ्युदयान् करोति
धर्मस्य चाहन्यहनि प्रवृद्धिम् ॥

स्निग्धा सिता च हरिता नयनाभिरामा
सौभाग्यमार्दवसुखाभ्युदयान्
करोति ।
सर्वार्थसिद्धिजननी जननीव चाऽऽप्या
छाया फलं तनुभृतां शुभमादधाति ॥

(१) योया. ३।२१–२२.
(२) योया. ५।३६–४०.

चण्डा धूष्या पद्महेमाग्निवर्णा
युक्ता तेजोविक्रमैः सप्रतापैः ।
आग्नेयीति प्राणिनां स्याज्जयाय
क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते ॥

मलिनपरुषकृष्णा पापगन्धानिलोत्था
जनयति वधबन्धव्याध्यनर्थार्थ-
नाशान् ।
स्फटिकसदृशरूपा भाग्ययुक्ताऽत्युदारा
निधिरिव गगनोत्था श्रेयसां स्वच्छ-
वर्णा ॥

[1]वेदी शुभा शुद्धविधानदृष्टा
दिक्स्थानमानाभ्यधिका न हीना
भ्रष्टप्रमाणा प्रकरोति भङ्गं
दिग्वक्रसंस्था न च सिद्धिदा स्यात् ॥

प्राग्भागहीना नगरस्य नेष्टा
पुरोधसां दक्षिणभागवक्रा ।
नरेन्द्रजायाऽशुभदा परस्या-
मुदग्बलेशस्य नृपस्य मध्ये ॥

सत्त्वैरलीढं न पिपीलमक्षिका-
मलाविलं वा विजयप्रदं हविः ।
द्रव्याण्यनूनानि पटुः पुरोहितो
जुहोति सम्यग्विजयाय भूभृताम् ॥

गन्धमाल्यचरुकुम्भभाजन-
स्रुक्कुशव्यजनसर्पिषां यदा ।
भङ्गविस्मृतिनिपातहीनता
पार्थिवस्य न भवेत्तदा शुभम् ॥

शान्तायां दिशि यदि शङ्खतूर्यशब्दाः
सप्तीनां रुतगजबृंहितानि वा स्युः ।
पुंसां वा प्रमुदितचेष्टितप्रलापाः
श्रूयन्ते यदि च जयोऽस्ति होम-
काले ॥

अप्रतिरथः समस्तो
यात्रालिङ्गस्तथाऽभयश्च गणः ।
स्वस्त्ययनशर्मवर्मा-
पराजितायुष्यसंज्ञाश्च ॥

इन्द्रश्चन्द्रेति गणो
यं ते चन्द्रश्च भूतभूतेति ।
सूक्तमहाव्याहृतयो
मन्त्राशीर्वैष्णवा मन्त्राः ॥

प्राजापत्याश्चोक्ता
होमे निर्गच्छतोऽनुगमने च ।
अग्निपुरोहितसंस्था-
न्यतो निमित्तानि वक्ष्यामि ॥

कृतेऽपि यत्नेऽतिकृशः कृशानु-
र्यातव्यकाष्ठाविमुखो नतार्चिः ।
वामीकृतावर्तशिखोऽतिधूमो
विच्छिन्नसाकम्पविलीनमूर्तिः ॥

सिमिसिमायति यस्य हविर्हुतं
सुरधनुःसदृशः कपिशोऽथवा ।
रुधिरपीतकबभ्रुहरिच्छविः
परुषमूर्तिरनिष्टकरोऽनलः ॥

श्वखरकरभवानरानुरूपो
निगडविभीषणशस्त्ररूपभृद्वा ।
शवरुधिरवसास्थिमज्जगन्धो
हुतभुगनिष्टफलः स्फुलिङ्गकृच्च ॥

चर्मविपाटनतुल्यनिनादो
जर्जरमन्दविरूक्षरवो वा ।
आकुलयंश्च पुरोहितसभ्यान्
धूमचयैरशिवाय हुताशः ॥

स्वाहावसानसमये स्वयमुज्ज्वलार्चिः
स्निग्धः प्रदक्षिणशिखो हुतभु-
ग्नृपस्य ।
गङ्गादिवाकरसुताजलचारुहारां
धात्रीं समुद्ररसनां वशगां करोति ॥

---

(१) योया. ८।१-१९.

हारकुन्दकुसुमेन्दुसंनिभः
संहतोऽङ्गसुखदो महोदयः ।
अङ्कुशातपनिवारणाकृति-
र्हूयतेऽल्पतपसां न हव्यभुक् ॥
चामीकराशोककुरण्टकाब्ज-
वैडूर्यनीलोत्पलसंनिभेऽग्नौ ।
न ध्वान्तमन्तर्भवनेऽवकाशं
करोति रत्नांशुहृतं नृपस्य ॥
येषां रथौघार्णवमेघदन्तिनां
समस्वनोऽग्निर्यदि वाऽपि दुन्दुभेः ।
तेषां मदान्धेभघटावघट्टिता
भवन्ति याने तिमिराविला दिशः ॥
ध्वजकुम्भहयेभभूभृता-
मनुरूपे वशमेति भूभृताम् ।
उदयास्तधराधराधरा
हिमवद्विन्ध्यपयोधरा धरा ॥
द्विरदमदमहीसरोजलाजै-
र्घृतमधुनोश्च हुताशने सगन्धे ।
प्रणतनृपशिरोमणिप्रभाभि-
र्भवति पुरश्छुरितेव भूर्नृपस्य ॥
अग्न्याश्रितं यत् फलमुक्तमस्मिन्
नृजातकर्मादिषु पौष्टिकेषु ।
यज्ञेषु सर्वेषु च वह्निकार्ये-
ष्वेवं वदेद् यस्य यथानुरूपम् ॥
[1]अन्तःपुराद्वा स्वनिवेशनाद्वा
सिंहासनादग्निपरिग्रहाद्वा ।
कुर्यान्नरेन्द्रः प्रथमं प्रयाणं
विप्रैः शताग्न्यैः कृतमङ्गलाशीः ॥
[2]द्विजो विष्णुक्रमाद् भूपं मन्त्रेणानेन यापयेत् ।
इदं विष्णुर्विचक्रम इत्येवं पादमुद्वहेत् ॥

(१) योया. १३।१ ; नीम. ५८ ग्रहाद्वा (स्तराद्वा) शाग्न्यैः (ताग्रैः).

(२) योया. १३।२ ; नीम. ५८ याप (दाप) चतुर्थचरणे (इति पादं समुद्धरेत्).

[1]अमुकस्य वधायेति दक्षिणं क्षितिपो न्यसेत् ।
मङ्गलानि ततः पश्यन् स्पृशन् शृण्वन् नृपो व्रजेत् ॥
[2]वेदाङ्गवेदध्वनिशङ्खभेरी-
मृदङ्गपुण्याहपुराणशब्दाः ।
धर्मार्थशास्त्राणि च भारतं च
रामायणं मङ्गलकीर्तनानि ॥
[3]वाचः शुभाः सारसचाषबर्हिणः
कादम्बहंसाश्च सजीवजीविकाः ।
काकाश्च पङ्क्तावराहपृष्ठगाः
श्रीवृक्षबालव्यजनानि चन्दनम् ॥

अथ दर्शनशकुनं वराहमिहिरः– वाच इति । शुभाः वाचः ब्राह्मणानाम् इति पूर्वेणान्वयः । नीम. ५८

[4]गौर्वत्सलाऽजो रुचकः प्रियङ्गु-
र्लाजा नृयुक्तश्च रथः पताका ।
सर्वौषधिस्वस्तिकपूर्णपात्रा-
ण्यश्वोऽथ दूर्वार्द्रकगोमयं च ॥
सरांस्यशोष्याणि सरित्समुद्रा
रुद्रेन्द्रलोकेशमहीन्द्रनागाः ।
दिशो ग्रहर्क्षाणि शिवः सुपर्णः
स्कन्दो विशाखमरुतश्च साध्याः ॥
भूर्द्वादशार्का वसवोऽश्विनौ च
स्वाहा शची मातृगणो भवानी ।
पत्न्यो जनन्यश्च सुरासुराणां
साध्या गणाश्चाप्सरसः सविद्याः ॥
यज्ञाः सुसिद्धा मुनयः सजायाः
पर्जन्यकल्पद्रुममारुताश्च ।
प्रजापतिः सर्वगतश्च विष्णुः
शिवाय ते भूप भवन्तु याने ॥

(१) योया. १३।३ ; नीम. ५८.

(२) योया. १३।४.

(३) योया. १३।५ ; नीम. ५८ जीविकाः (जीवकाः) काकाश्च (काकश्च) पृष्ठगाः (पृष्ठगः).

(४) योया. १३।६–१०.

सिद्धार्थकादर्शप्रयोजनानि
बद्धैकपश्वामिषपूर्णकुम्भः ।
उष्णीषभृङ्गारनृवर्धमान-
पुंयानवीणातपवारणानि ॥

[1]दधिमधुघृतरोचना कुमारी
ध्वजकनकाम्बुजभद्रपीठशङ्खाः ।
सितवृषकुसुमाम्बराणि मीना
द्विजगणिकाध्वजनाश्च चारुवेषाः ॥

[2]ज्वलितशिखिफलाक्षतेक्षुभक्षा
द्विरदमृदङ्कुशचामरायुधानि ।
मरकतकुरुविन्दपद्मरागाः
स्फटिकमणिप्रमुखाश्च रत्नभेदाः ॥

[3]स्वयमथ रचितान्ययत्नतो वा
यदि कथितानि भवन्ति मङ्गलानि ।
स जयति सकलां ततो धरित्रीं
ग्रहणदगालभनं श्रुतैरुपास्य ॥

इदं मङ्गलं ग्राह्यं द्रष्टव्यं स्प्रष्टव्यं श्रोतव्यं चेत्यर्थः ।
नीम. ५९

[4]कर्पासौषधकृष्णधान्यलवणक्लीबास्थितैलं वसा
पङ्कागारगुडाहिचर्मशकृतः केशा-
यतं व्याधिताः ।
वातोन्मत्तजडेन्धनतृणतुषक्षुत्क्षामतक्रारयो
मुण्डाभ्यक्तविमुक्तकेशपतिताः
काषायिनश्चाशुभाः ॥

अनिष्टफलान्युक्तानि तेनैव– कार्पासेत्यादिना । यान-दिने क्षौराभ्यङ्गवर्जनं तु ज्योतिःशास्त्रे ज्ञेयम् । एवं मङ्गलामङ्गलभिन्नदर्शने नानिष्टं नापीष्टलाभ इति ज्ञेयम् ।
नीम. ५९

[1]पटुपटहमृदङ्गशङ्खभेरी-
पणवरवं सपताकतोरणाग्रम् ।
प्रचुरकुसुमतोयशातरेणुं
सुरभिसुवेषजनं व्रजेच्च मार्गम् ॥

[2]छुच्छुन्दरी शूकरिका शिवा च
श्यामारला पिङ्गलिकाऽन्यपुष्टा ।
वामाः प्रशस्ता गृहगोधिका च
पुसंज्ञका ये च पतत्रिणः स्युः ॥

देशविशेषे विशेषमाह– छुच्छुन्दरीत्यादिना ।
नीम. ५९

[3]श्येनो रुरुः पूर्णकुटः कपिश्च
श्रीकर्णछिक्कारकपिप्पिकाजाः ।
स्त्रीसंज्ञिता ये च शिखिद्विपौ च
याने हिता दक्षिणभागसंस्थाः ॥

[4]आस्फोडिताक्ष्वेडितशङ्खतूर्य-
पुण्याहवेदध्वनिगीतशब्दाः ।
वामाः प्रयाणे शुभदा नराणा-
माक्रन्दितं दक्षिणतः परेषाम् ॥

आस्फोटितं मल्लयुद्धम् । आक्ष्वेडितं मुखशब्दः ।
नीम. ५९

---

(१) योया. १३।११ ; नीम. ५९ शङ्खाः ( सिंहाः ) मीना ( मीन ) काध्व ( काप्त ).

(२) योया. १३।१२ ; नीम. ५९ भक्षा ( भक्ष्य ).

(३) योया. १३।१३ ; नीम. ५९ लभनं श्रुतै-रुपास्य ( लभनश्रुतैरुपास्याम् ).

(४) योया. १३।१४ ; नीम. ५९ कर्पा ( कार्पा ) क्लीबा ( क्षीवा ) वसा पङ्कागार ( वशापङ्काङ्गार ) वातो ( वान्तो ) न्धनतृण ( न्धनास्तृण ).

(१) योया. १३।१५.

(२) योया. १४।१ पुष्टा ( पुष्टाः ) वामाः ( वामा ) ज्ञका ( ज्ञिका ) ; नीम. ५९ स्युः ( च ).

(३) योया. १४।२ रुरुः पूर्ण ( गुरुः कर्ण ) पिप्पिका ( पिपिका ) संज्ञिता ( संज्ञिका ) द्विपौ ( द्वयौ ) ; नीम. ५९.

(४) योया. १४।३ ; नीम. ५९ स्फोडि ( स्फोटि ).

[1]भारद्वाज्यजबर्हिचाषनकुलाः संकीर्तना-
द्दर्शनात्
क्रोशन्तश्च शुभप्रदा न सरटो
दृष्टः शिवाय क्वचित् ।
गोधाशूकरजाहकाहिशशकाः
पापा रुतालोकने
धन्यं कीर्तनमृक्षवानरफलं तद्वा-
ऽत्ययाच्छोभनम् ॥

[2]नकुलस्य मृगस्य पक्षिणां
वामाद् दक्षिणभागसेवनम् ।
शुभदं श्वशृगालयोरिदं
व्यत्यासेन फलं प्रशस्यते ॥

[3]चाषो नकुलश्च वामगौ
दिवसार्धात् परतः शुभप्रदौ ।
मृगवच्च वनाखुकुक्कुराः
शतपत्रोऽस्तमये च दक्षिणे ॥

[4]नष्टावलोकनसमागमयुद्धकर्म-
वेश्मप्रवेशमनुजेश्वरदर्शनेषु ।
यानप्रतीपविधिना शुभदा भवन्ति
केचिज्जगुर्गगनवन्नृपदर्शनेषु ॥

[5]निरुपहतमनोज्ञवृक्षसंस्थाः
शुचिरुचिरावनिसस्य संस्थिताश्च ।
शुभतिथिदिवसर्क्षलग्नकाले-
ष्वशुभफलोऽपि शुभप्रदः प्रदिष्टः ॥

(१) योया. १४।४ द्वाज्यज ( द्वाजज ) कीर्तनाद्द ( कीर्तनाद ) ; नीम. ५९ तद्वाऽत्यया ( तद्व्यत्यया ).

(२) योया. १४।५ नीम. ५९ सेव ( सेच ) व्यत्यासेन फलं ( व्यत्ययेन फलदं ).

(३) योया. १४।६ ; नीम. ५९ वामगौ (वामभागौ) वनाखु ( वनेषु ) दक्षिणे ( दक्षिणः ).

(४) योया. १४।७.

(५) योया. १४।८ निरुप ( निरुपम ) ; नीम. ५९.

क्वचिदपवादमाह– निरुपहतेति । नीम. ५९

[1]प्रभग्नशुष्कद्रुमकण्टकेषु
श्मशानभस्मास्थितुषाकुलेषु ।
प्राकारशून्यालयदुर्दशेषु
सौम्योऽपि पापः शकुनः प्रकल्प्यः ॥

[2]अङ्गारिणी दिग् रविणा प्रमुक्ता
यस्यां रविस्तिष्ठति सा प्रदीप्ता ।
प्रधूमिता यास्यति यां दिनेशः
शेषाश्च शान्ताः शुभदाश्च ताः स्युः ॥
जातं मुक्तासाम्यतादीपिताया-
मेष्यं ज्ञेयं धूमितायामतिष्ठन् ।
शान्तास्वेवं दिक्षु तत्पञ्चमासु
प्रत्यासन्नं शेषयोः शान्तिदीप्तम् ॥
पिशिताशुचिभोजनः प्रदीप्त-
स्तृणफलभुक् च निसर्गतः प्रशान्तः ।
उभयकथितस्तथाऽन्नभोजी
दिक्स्थानोदयकालतश्च चिन्त्यः ॥

[3]द्वन्द्वार्तरोगार्दितमत्तभीत-
वैरार्तयुद्धामिषकाङ्क्षिणश्च ।
सीमान्तनद्यन्तरिताश्च सर्वे
न चिन्तनीयाः सदसत्फलेषु ॥

इति प्राणिशकुनः । नीम. ५९

[4]रिक्तोऽनुकूलः कलशो जलार्थ-
मभ्युद्यतः सिद्धिकरः प्रयाणे ।
विद्यार्थिनां चौर्यसमुद्यतानां
वणिक्क्रियाभ्युद्यमिनामतीव ॥

अथ अप्राणिन आह– रिक्त इत्यादिना ।
नीम. ५९

(१) योया. १४।९ कल्प्यः ( कल्पः ) ; नीम. ५९.

(२) योया. १४।१०–१२.

(३) योया. १४।१३ द्वन्द्वार्त ( द्वन्द्वान्त ) ; नीम. ५९ मत्तभीत ( भीतमत्त ).

(४) योया. १४।१४ ; नीम. ५९ मुद्य ( मुदित ).

[1]श्यामा श्येनशशघ्नवञ्जुलशिखिश्रीवर्णचक्राह्वया-
श्चाषाण्डीरकखञ्जरीटकशुक-
ध्वाङ्क्षाः कपोतास्त्रयः।
भारद्वाजकुरालकुर्कुटखरा हारीतगृध्रौ
कपिः
*केटाकुक्कुरपूर्णकूटचटका-
श्चोक्ता दिवासंचराः ॥

लोमाशिकापिङ्गलछिप्पिकाख्यौ
वल्गुल्युलूकौ शशकश्च रात्रौ।
सर्वे स्वकालोत्क्रमचारिणः स्यु-
र्देशस्य नाशाय नृपान्तदा वा ॥

हयवरभुजगोष्ट्रद्वीपिसिंहर्क्षगोधाः
खरनकुलकुरङ्गाश्वाजगोव्याघ्रहंसाः।
पृषतमृगशृगालश्वाविधाख्यान्यपुष्टा-
द्युनिशमपि बिडालः सारसः
शूकरश्च ॥

द्युनिशोभयचारिणः स्वकाले
पुरवनमिश्रकराः स्वभूमिसंस्थाः।
सफलविफला विपर्ययस्था
गमनेप्सोः पुरवार्थिवाः (?)
शुभास्ते ॥

[2]यानं धुरेण पतितं महती च कन्या
गर्भेण चातिमहता पुरतः स्थिता
स्त्री।
आगच्छ तिष्ठ विश गच्छसि वा किमर्थं
शब्दाः स्थिराश्च गमनं प्रतिषेध-
यन्ति ॥

* 'केटा' इत्यत्र 'फेण्टः' इति बृहत्संहिता(८८।१)-पाठः। पक्षिविशेषस्तदर्थ इति भाषाटीकायाम्।

(१) योया. १४।१५–१८.

(२) योया. १४।१९ ; नीम. ६० पतितं महती (रहितं बृहती) शब्दाः स्थिराश्च (शब्दः स्थिरश्च).

[1]गान्धारषड्जमृषभः खलु मध्यगश्च
यानेश्वराः शुभकरा न तु
येऽवशेषाः।
ग्रामौ शुभावपि हि मध्यमषड्जसंज्ञौ
गान्धारगीतमपि भद्रमुशन्ति
देवाः ॥

[2]सर्वत्र पापं क्षुतमुद्दिशन्ति
गोस्तु क्षुतं मृत्युकरं यियासोः।
मार्जाररावः स्खलनं तु यातु-
र्वस्त्रस्य सङ्गश्च न शोभनाय ॥

क्षुतमाह– सर्वत्रेति। नीम. ६०

[3]जालकरश्वकरौ न शुभौ प्रा-
ग्घातकशत्रुकरौ यमदिक्स्थौ।
पण्डकमद्यकरावपि पश्चा-
दासनसीरखलैः सह चोदक् ॥

[4]द्रव्याणि शुक्लानि तुरंगमश्च
पूर्वेण याम्येन शवं च मांसम्।
पश्चात् कुमारी दधि चातिशस्तं
सौम्येन गोब्राह्मणसाधवश्च ॥

[5]यः पूर्णरूढः स करायिकाख्यो
वामः प्रशस्तः स च पूर्वदेशे।
काकः शुभो दक्षिणतश्च तेषां
मध्येषु देशेषु विपर्ययेण ॥

* पूर्वदेशे दक्षिणः काकः शुभः, अन्यस्मिन् वाम इत्यर्थः। नीम. ६०

* व्याख्यानात् मयूखे श्लोकस्य पूर्वार्धं प्रभ्रष्टमिति प्रतीयते।

(१) योया. १४।२०.

(२) योया. १४।२१ ; नीम. ६० तु (च) सङ्ग (भङ्ग).

(३) योया. १४।२२.

(४) योया. १४।२३ शवं च मांसम् (समं समासम्) सौम्येन (भौम्येन) ; नीम. ६०.

(५) योया. १४।२४ ; नीम. ६० मध्येषु (अन्येषु) उक्त.

'नरतुरगगजातपत्रकुम्भ-
ध्वजशयनासनपुष्पचामराणि ।
व्रजति यदि पुरोऽवमूत्र्य यातुः
क्षपयति शत्रुबलं ततो नरेन्द्रः ॥

पूर्णाननो यस्य करोति चापं
प्रदक्षिणं स्वस्तिकमेव तेन ।
लाभो महान् तस्य पराभवाय
काकेन भङ्गो विजयो जयोऽस्य ॥

कार्ये तु मूलशकुनेऽन्तरजातदं हि
विद्यात् फलं नियतमेव गमे
विचिन्त्यः ।
प्रारम्भयानसमयेषु तथा प्रवेशे
ग्राह्यं क्षुतं न शुभदं क्वचिद-
प्युशन्ति ॥

'क्रोशादूर्ध्वं शकुनविरुतं निष्फलं प्राहुरेके
तत्रानिष्टे प्रथमशकुने मानयेत्
पञ्च षट् च ।
प्राणायामान्नृपतिरशुभे षोडशैव द्वितीये
प्रत्यागच्छेत् स्वभवनमतो यद्य-
निष्टस्तृतीयः ॥

प्रयाणे प्रथमं यत्र अशकुनं जातं तत्रैव स्थित्वा एकादशायामानतिवाहयेत् । पुनः प्रस्थाने यदि अशकुनं ततः षोडश । ततोऽप्यशकुने गृहे आगमनम् । एवं शकुनानि ग्रहबलादीनि वीक्ष्य राजा स्वयं यायात् । स्वस्य ग्रहाद्यानुकूल्याभावे तद्वन्तं यशस्विनम् अमात्यं जयार्थं प्रेषयेत् । यथोक्तम्– ' शत्रोर्वधाय सचिवं शुभदैवयुक्तमाज्ञापयेन्नृपतिरात्मनि दैवहीने ॥ ' ( योया. १।२० ) इति । नीम. ६०

( १ ) योया. १४।२५–२७.

( २ ) योया. १४।२८ ; नीम. ६० प्राणा ( विज्ञो ) श्रोडशैव ( षोडशे वा ) मतो ( मिति ).

## मानसोल्लासः

सोमेश्वरराजप्रोक्तं शकुनशास्त्रम्– तत्र अमङ्गलशकुनानि

'पुष्पवत्यां महादेव्यामकाले वृष्टिदर्शने ।
संजाते गोत्रकलहे वृषदंशमृगे तथा ॥
आशौचे गृहदाहे च भूकम्पे चण्डमारुते ।
दिग्दाहे भूमिनिर्घोषे न गन्तव्यं जिगीषुणा ॥
क्षुते स्वयं वाऽपि परैर्लग्ने क्वापि च वारिते ।
दृष्टे ज्वालां विना धूमे तुषकाष्ठस्य दर्शने ॥
मषीभस्मनि तैले च परिशुष्के च गोमये ।
शशे दिगम्बरे सर्पे न गन्तव्यं सुखार्थिना ॥
खरोष्ट्रमहिषारूढाः संन्यासिश्रावकान्त्यजाः ।
कर्णनासादिभिर्हीना विकेशाः कृष्णवाससः ॥
मुक्तकेशातिकृष्णाङ्गा तैलाभ्यक्ता रजस्वला ।
गर्भिणी विधवोन्मत्तक्लीबान्धबधिरा नराः ॥
एतेषां दर्शने जाते न गन्तव्यं कदाचन ।
आत्मनो दौर्मनस्ये च न यात्रा सिद्धिदा भवेत् ॥

मङ्गलशकुनानि

पूर्णकुम्भे तथाऽऽदर्शे दध्नि मद्ये तथाऽऽमिषे ।
मीने शङ्खे ध्वजे छत्रे चामरे वारयोषिति ॥
चाषे मृगभरद्वाजे फलपुष्पाक्षतेष्वपि ।
वृषभे समदे नागे सिते वाहे द्विजोत्तमे ॥
सुवर्णे दिव्यरत्ने च वीणायां पटहे तथा ।
बद्धे चैव पशौ दृष्टे यात्रा भवति सिद्धिदा ॥
नृपो विप्रः सुहृद्वेश्या कुमारी पाण्डुराम्बरा ।
वृषाश्व कुञ्जरारूढा नरा नार्यः शुभावहाः ॥
गच्छेति पृष्ठतो वाक्यमेहीति पुरतः शुभम् ।
आशिषः सर्वतः शस्ता मनसस्तुष्टिरुर्जिता ॥
छिन्धि भिन्धि जहीत्यादि वाचो निन्द्या
अपि स्फुटम्
उद्यतानां रिपोर्घाते पापद्धौ शोभनाः सदा ॥

( १ ) मासो. २।८११–९२७.

श्वशकुनानि

श्वा यात्रासमये गच्छेद्वामं दक्षिणतो यदि ।
स्पृशेद्वा श्रवणं वामं यात्रासिद्धिर्भवेत्तदा ॥
प्रवेशे दक्षिणं गच्छेज्जृम्भते वा रतोद्यतः ।
करोति नितरां सौख्यं विपरीता तु कुक्कुरी ॥
क्रोशद्वयं यदा गच्छेत्सह पान्थेन मण्डलः ।
वामगो मूत्रयेद्वाऽपि तदाऽसौ शुभसूचकः ॥
गजस्थानं हयस्थानं शाद्वलं शयनस्थलम् ।
उलूखलध्वजच्छत्रचामरं सफलद्रुमम् ॥
इष्टिकानिचयं कुम्भं पर्याणं मृत्तिकाचयम् ।
पुष्पवत् फलवत् स्थानं श्वा गच्छञ्छुभदो भवेत् ॥
कृतमूत्रो यदा गच्छेत्पुरस्तात्सरमासुतः ।
तदाऽभिलषितं कार्यं यातुः सिध्यति निश्चितम् ॥
वामगो मूत्रयेदार्द्रे गोमये कुक्कुरो यदि ।
मृष्टं भोजनमुद्दिष्टं शुष्के निःस्नेहभोजनम् ॥
अमेध्यमोदनं मांसं नूतनं वस्तु किंचन ।
मुखे निक्षिप्य गच्छन् श्वा यातुर्लाभं विनिर्दिशेत् ॥
आर्द्रमस्थि तथा वस्त्रं पादत्राणं मुखे दधत् ।
उपस्थितः प्रमुञ्चेच्चेत् सारमेयः सुखप्रदः ॥

शिवा–पल्ली–काकशकुनानि

शान्तदीप्तप्रभेदेन ज्ञातव्याः ककुभः क्रमात् ।
शुभाशुभफलज्ञानविचाराय मनीषिभिः ॥
सूर्ये ज्वाला ततो धूमः पश्चादङ्गारसंभवः ।
ततश्च पश्चिमे भागे भस्मस्थानं प्रकीर्तितम् ॥
भस्माङ्गारशिखाधूमं दीप्तमित्यभिधीयते ।
शेषाः शान्ता दिशः प्रोक्ताश्चतस्रः पूर्वसूरिभिः ॥
निष्फलं भस्मनः स्थानमङ्गारस्त्रासमावहेत् ।
ज्वाले मृत्युर्भवेद्धूमस्थाने दुःखं विनिश्चितम् ॥
याममात्रं वसेद्भानुर्दिग्विदिक्षु प्रदक्षिणम् ।
चत्वारो दिवसे यामा यामवत्यां तथैव च ॥
माहेन्द्यां प्रथमे यामे सूर्यो ज्वालाकुलो भवेत् ।
द्वितीये वह्निदिग्भागे तृतीये पितृदैवते ॥
चतुर्थे नैर्ऋते स्थाने रात्रौ तिष्ठति भानुमान् ।
तृतीये धनदस्थाने प्रत्यूषे दिशि शूलिनः ॥
शिवा रटन्ति दीप्तेषु फलमीरितमावहेत् ।
शिवा शान्ते ज्वलन्तीषु शुभं शंसति निश्चितम् ॥
लाभं च विजयं सौख्यं मित्राणां च समागमम् ।
रटन्ती शान्तदिग्भागे क्रमात् फलमिदं वदेत् ॥
अनेनैव प्रकारेण पल्लीशकुनमादिशेत् ।
दीप्तस्थाने रटन् काकः शोभनं फलमादिशेत् ॥
दीप्ते दीप्तमुखः काकः कुर्वाणः परुषं स्वरम् ।
कार्यसिद्धिं प्रदर्श्यार्थ विनाशं कुरुते ध्रुवम् ॥
दीप्ताभिमुखमारब्धः पुनः शान्तेऽभिवासते ।
कार्यं संशयितं कृत्वा पुनस्तत्सिद्धिमादिशेत् ॥
दीप्ते शान्तमुखः काकः कुर्वाणो मधुरं स्वरम् ।
ईप्सितार्थं रिपोर्नाशं लाभं स्त्रीरत्नजं दिशेत् ॥
अन्तरिक्षेऽथ वृक्षे वा कुर्वाणो मधुरं स्वरम् ।
मूर्धस्थाने शुभं वक्ति सर्वदा बलिभोजनः ॥

पोतकीशकुनम्

पोतकीस्थानमालोक्य तोरणानि प्रकल्पयेत् ।
तोरणात् तोरणं कार्यं चत्वारिंशत्क्रमान्तरम् ॥
पक्षद्वयस्थितौ वृक्षावष्टधन्वन्तरान्तरौ ।
शिलाशकलयुग्मं वा कल्पितं तोरणं विदुः ॥
गृहे पिष्टमयं कृत्वा पोतकीमिथुनं सुधीः ।
पूजयेत् पुष्पधूपाद्यैः कुमारीमपि भोजयेत् ॥
तोरणस्थानमागम्य पोतक्यावधिवासयेत् ।
प्रयतः सन् गृहं गत्वा स्वप्यात् पाण्डविके स्मरन् ॥
सूर्योदये समुत्थाय सहायैः सहितो व्रजेत् ।
नियतस्तोरणाभ्यासं शकुनालोकतत्परः ॥
प्रशान्तदिङ्मुखो भूत्वा पोतकीं नामभिः स्तुवन् ।
पाण्डुपुत्रस्य मध्यस्य दश नामानि कीर्तयेत् ॥

पाण्डवी पोतकी दुर्गा श्यामोमा चटकाभिधा ।
वाराही शकुनी कृष्णा श्वेतपक्षेति नामभिः ॥
एतैरावाह्य विकिरेदक्षतान् कुसुमैः समम् ।
ध्यायेच्च फाल्गुनं वीरं सर्वयोधधुरंधरम् ॥
किरीटी विजयः कृष्णो बीभत्सुः फाल्गुनोऽर्जुनः ।
सव्यसाची च पार्थश्च श्वेताश्वोऽथ धनंजयः ॥

'ॐ शिवे ज्वालामुखि बलिं गृहाण स्वाहा । ॐ शिवे शिवदूति भगवति चण्डे इदमर्घ्यं मया लीलया समर्पितं गृहाण गृहाण । आगच्छ वायुवेगेन शुभं कुरु कुरु स्वाहा '। अनेन मन्त्रेण त्रिपथे चतुष्पथे वा शिवायै बलिमर्घ्यं दद्यात् । तोरणेषु नामान्येतानि कीर्तयेत् ॥

सिद्धिदा जायते देवी पाण्डुपुत्रोपकारिणी ।
निःशब्दा हीनशब्दा वा गच्छतो यदि दक्षिणम् ।
व्रजेत्कृष्णा तदा शस्ता शकुनज्ञस्य तोरणे ॥
तोरणान्तनिवृत्तस्य पोतकी वामगा शुभा ।
अग्रे दक्षिणतः कृष्णा वामतः पुरुषः पुरः ॥
एका ताराऽभयं विद्याद्द्वितीया कामदा भवेत् ।
तृतीया राज्यलाभाय व्रजन्ती दक्षिणां दिशम् ॥
प्रथमं वामगा भूत्वा दक्षिणं यदि गच्छति ।
विनाश्य कुरुते कार्यं पश्चात् कृष्णा न संशयः ॥
विपरीतक्रमे शेषा विपरीतफलप्रदा ।
न या नयक्रमायान्ती मिश्रकार्याणि शंसति ॥
शुभं वाऽप्यशुभं प्रान्ते तदेव फलदायकम् ।
पोतकीशकुनज्ञानं कीर्तितं सोमभूभुजा ॥

पिङ्गलाशकुनम्

फलपुष्पपलाशाढ्यं क्षीरिणं वा महीरुहम् ।
पवित्रस्थानसंयुक्तं पिङ्गलायुगलान्वितम् ॥
अर्चयेदधिवासार्थं सायंकाले समाहितः ।
स्नात्वा शुक्लाम्बरो भूत्वा सहायसहितो बुधः ॥
नवेन गोमयेनोर्वीं लिप्त्वा गोचर्मनिर्मिताम् ।
अष्टपत्रं लिखेत्पद्मं पिष्टेनाऽऽर्द्रेण कोविदः ॥
कृत्वा पिष्टमयं तत्र पिङ्गलायुगलं शुभम् ।
चण्डीं च स्थापयेत्तत्र क्लिष्टां( ? क्लृप्तां) पिष्टेन सायुधाम् ॥
लोकपालाष्टकं तत्र ध्यायेत्पद्मदलाष्टके ।
ब्रह्माणं कमलस्योर्ध्वमच्युतं च तलस्थितम् ॥
तत्तन्नामाक्षरैर्मन्त्रैः प्रणवाद्यैर्नमोऽन्तगैः ।
पूजयेत्फलपुष्पाद्यैर्धूपनैवेद्यदीपकैः ॥

'(ॐ) वृक्षस्थानाय नमः' इत्यासनमन्त्रः ।

'ॐ ह्रीं श्रीं चामुण्डे हुं नमोऽस्मिन् वृक्षे अवतर स्वाहा' ॥

ध्यायन्ननेन मन्त्रेण चण्डीं वृक्षेऽवतारयेत् ।
पिङ्गलायुगलस्यापि मन्त्रोऽयं कथ्यतेऽधुना ॥

'ॐ पिङ्गले मेखले रेवति रात्रिचारिणि ब्रह्मपुत्रि सत्यमेतद्ब्रूहि मे स्वाहा' इत्यावाहनमन्त्रः । 'ॐ श्रीं ह्रीं हूं चलि वौषट्' इति मूलमन्त्रः । 'ॐ सिद्धचामुण्डे कृष्णपिङ्गले स्वाहा । ॐ नमो भगवति कालरात्रि मन्त्रमूर्ति महेश्वरि चामुण्डे प्रजापालनि योगेश्वरि आगच्छ आगच्छ एह्येहि तिष्ठ तिष्ठ ॐ ह्रीं चिलि चिलि शब्दाय स्वाहा' इत्यधिवासनमन्त्रः ॥

पूजां जपं च होमं च मूलमन्त्रेण कल्पयेत् ।
अष्टोत्तरशतं जप्त्वा दशांशं होममाचरेत् ॥
अश्वत्थोदुम्बराम्राणां दूर्वाब्रह्ममहीरुहः ।
समिधो मधुसर्पिर्भ्यां जुहुयाच्चण्डिकां स्मरन् ॥
प्रेतासनगतां शुष्कां भस्मलिप्तां कपालिनीम् ।
घूकध्वजां शूलहस्तां रक्तपां मुण्डमालिनीम् ॥
वसासृग्रचितां कृष्णां गजसिंहाजिनाम्बराम् ।
अक्षवृक्षस्थितां भीमां स्मरेच्चण्डीं कृतार्चनः ॥
अर्चयित्वा ततो वृक्षं वेष्टयेत्सिततन्तुभिः ।
अर्पयेद्गुरवे सर्वं होमार्चनजपादिकम् ॥

देव्यै कार्यं निवेद्याथ गृहं गच्छेन्निशामुखे ।
गृहे च भोजयेत्कन्याः स्वयं भुञ्जीत बन्धुभिः ॥
प्रत्यूषेऽथ समुत्थाय कृतदेवार्चनादिकः ।
गत्वाऽधिवासितं स्थानं जानुभ्यां धरणीगतः ॥
बद्धाञ्जलिपुटो भूत्वा मन्त्रग्राममुदीरयेत् ।
कथयेदुच्चया वाचा कार्यं शपथपूर्वकम् ॥
तथ्यं कथय देवि त्वं ब्रह्मपुत्रि शुभाशुभम् ।
इत्युक्त्वा पृष्ठतः कृत्वा प्रदीप्तां ककुभं बुधः ॥
शृणुयाद्विरुतं तस्यास्तथा वीक्षेत चेष्टितम् ।
एकाग्रमानसो भूत्वा शकुनालोकनोद्यतः ॥
पार्थिवो वाडिवस्त्वाप्यः कैलकस्तैजसः पुनः ।
कुरङ्गुली समीरोत्थो वीशः किंशुरिवाम्बरः ॥
एते पञ्च स्वराः ख्याताः पिङ्गलाख्यस्य पक्षिणः ।
तेषां मात्राप्रभेदोऽयं वक्ष्यते स्वरभेदतः ॥
एकमात्रश्चिलित्युक्तस्तद्द्वयेन द्विमात्रिकः ।
त्रितयेन त्रिमात्रः स्याच्चतुर्मात्रश्चतुष्ककः ॥
पञ्चभिः पञ्चमात्रस्तु बोद्धव्योऽसौ मनीषिभिः ।
स्वरूपं तस्य वक्ष्यामि स्वराणामनुकारतः ॥

चिल् एकमात्रः, चिलि द्विमात्रः, चिलिलि त्रिमात्रः, चिलिचिलि चतुर्मात्रः, चिलिचिलिलि पञ्चमात्रः पार्थिवः । किच्, किचि, किचिचि, किचिकिचि, किचिकिचिचि आप्यः । कुग्(? क्), कुकु, कुकुकु, कुकुकुकु, कुकुकुकुकु तैजसः । चीच्, चीचु, चीचुचु, चीचुचीचु, चीचुचीचुचु वायुः (? वायव्यः) । सृक्, चिच, कुसुरु, कीःकीसरु, चुरुचुरुचुरु आकाशः ॥

पार्थिवादिक्रमेणोक्ताः पञ्च मात्राः पृथग्विधाः ।
तेषां त्रिरुक्तो यः कश्चित् स लघुः स्वर इष्यते ॥
षोढोदितो गुरुः प्रोक्तो नवधोक्तः प्लुतो भवेत् ।
लघौ स्वल्पं गुरौ मध्यं प्लुते पुष्टं फलं भवेत् ॥
पार्थिवं कुरुते हृष्टः संलापी जलजं स्वरम् ।
तैजसं मदनाक्रान्त इति शान्तास्त्रयः स्वराः ॥
वायव्यं कुरुते क्रुद्धः शोकार्तो नाभसं स्वरम् ।
स्वराविमौ प्रदीप्ताख्यौ विबुधैः परिकीर्तितौ ॥

पूर्वदक्षिणदिग्भागे पार्थिवः प्रबलः स्वरः ।
पश्चिमायां च कौबेर्यां बलवान् जलजः स्वरः ॥
वायव्ये तैजसे कोणे बलिष्ठस्तैजसः स्वरः ।
ऐशाने नैर्ऋते कोणे बलीयान् नाभसः स्वरः ॥
आप्यपार्थिवयोर्मैत्री तयोराप्यो बलाधिकः ।
आप्यतैजसयोर्वैरं तयोराप्यो महाबलः ॥
आप्यमारुतयोर्वैरं बलवान् मारुतस्तयोः ।
मध्यस्थावाम्बराग्नेयौ नाभसस्तु तयोर्बली ॥
नैव शत्रू न मित्रे च नाभसाप्यौ परस्परम् ।
तथापि नाभसो नादः प्रबलः परिकीर्तितः ॥
पार्थिवाग्नेययोर्मैत्री तत्र भौमो बली स्वरः ।
अनलानिलयोर्मैत्री बलवाननिलस्तयोः ॥
जलमारुतजौ शब्दौ प्रागुक्तौ भौमवैरिणौ ।
तावेव पश्चादुद्भूतौ मित्रे भौमस्य कीर्तितौ ॥
चतुर्णामपि शब्दानां नाभसः शत्रुरिष्यते ।
एवं स्वराणामुद्दिष्टं मित्रामित्रबलाबलम् ॥
स्वस्यां दिशि फलं पूर्णं तदर्धं मित्रसद्मनि ।
शत्रुक्षेत्रे फलाभावो विपरीतमथापि वा ॥
भौमादनन्तरश्चाऽऽप्यः सर्वसिद्धिप्रदो भवेत् ।
विपरीतक्रमेणैव फलनाशकरौ स्वरौ ॥
प्रथमं पार्थिवो नादस्तैजसस्तदनन्तरम् ।
वाञ्छितार्थप्रदौ स्यातां विपरीतौ ततोऽन्यथा ॥
आदौ चेत् पार्थिवो नादः पश्चान्मारुतजो यदि ।
लाभपूर्वा तदा हानिर्हानिर्लाभो विपर्ययात् ॥
प्रथमो भूमिजो नादो द्वितीयो नाभसो यदि ।
सुखपूर्वं भवेद्दुःखं दुःखात् सौख्यं विपर्ययात् ॥
आप्यस्य पश्चादाग्नेयः फलं कृत्वा विनाशयेत् ।
व्यत्यासेन समुद्भूतौ व्यत्यस्तफलकारिणौ ॥
प्रथमो जलजः शब्दस्ततश्चेद्वायुसंभवः ।
भयं वित्तविनाशाय वैपरीत्येऽपि तादृशौ ॥
जलजाद्व्योमजः पश्चान्मित्रयुद्धाद्भवेन्मृतिः ।
विपरीतक्रमोद्भूतौ शत्रुतो मृतिसूचकौ ॥
आग्नेयमारुतौ शब्दौ क्रमाज्जातौ धनापहौ ।
मृतिसंसूचकौ ज्ञेयौ विपरितक्रमोदितौ ॥

क्रमेण व्युत्क्रमेणापि नादौ तैजसनाभसौ ।
कुरुतः कलहं चोग्रं भयं च सुमहत्तरम् ॥
व्यत्यासात्क्रमशो वाऽपि शब्दौ वायव्यनाभसौ ।
वित्तनाशं रणे मृत्युं नरस्य कुरुते ध्रुवम् ॥

अन्यैरभिहितो भौमः कार्यसिद्धिविघातकृत् ।
अधिकः पार्थिवो नादः सर्वकामफलप्रदः ॥

त्रयाणां वा चतुर्णां वा पञ्चानां श्रवणे सति ।
पश्चाच्छ्रुतोऽधिको वाऽपि पार्थिवो ध्वनिरुत्तमः ॥

पार्थिवं सलिलं नादं स्वस्थानादूर्ध्वगस्तरोः ।
कुर्वन् लाभं सुखं कीर्तिं जयं शंसति पिङ्गलः ॥
अवतीर्य निजस्थानात् कुर्वन्नादौ शुभावहौ ।
कनिष्ठं फलमाचष्टे क्लेशाल्लाभं विहंगमः ॥
वृक्षस्याग्रे रवं कुर्वन्पार्थिवं वारिजं खगः ।
पुष्कलं फलमाख्याति मध्ये मध्यमधो लघु ॥
विन्यस्य वदने भक्ष्यं भुक्त्वा वा तद्विहंगमः ।
रम्यस्थानस्थितः कुर्वञ्शुभौ नादौ शुभं दिशेत् ॥
भक्ष्यमुत्सृज्य वक्त्रस्थं यदा वक्ति शुभौ ध्वनी ।
तदा शंसति संपत्तेर्हानिं पिङ्गविहंगमः ॥
अर्चितं पादपं त्यक्त्वा पादपान्तरमाश्रितः ।
रचयञ् शोभनं शब्दं दिशेद्देशान्तरे सुखम् ॥
अम्बरे शुष्कवृक्षे वा भग्नशाखे च कोटरे ।
कुर्वन्नादं शुभं पिङ्गो भयमुग्रं प्रशंसति ॥
शुभस्थानस्थितो वाऽपि गत्वा वाऽथ प्रदक्षिणम् ।

कुर्वञ्शान्ते शुभादन्यनादं शंसत्यशोभनम् ॥
वामतः शान्तदिग्वर्ती कुर्वाणः शोभनं ध्वनिम् ।
शोभनं फलमाचष्टे चिरकालेन पिङ्गलः ॥
भौमाप्यतैजसैर्नादैर्जल्पन्ती शुभदेशगा ।
पिङ्गला प्रीतिमाचष्टे सुखं लाभं जयं यशः ॥

उपश्रुतिशकुनम्

अर्चयित्वा गणाधीशं सर्वविघ्नविनाशनम् ।
कुमार्या सहिता नार्यस्तिस्रः सुप्ते जनेऽखिले ॥
अक्षतैः पूरयेयुस्ता यत्किंचित् कुडवादिकम् ।
चण्डिकायै नमः कृत्वा सप्तकृत्वोऽभिमन्त्रितम् ॥

संमार्जनीकृतावेष्टे स्थापयेयुर्गणाधिपम् ।
व्रजेयुस्तं समादाय रजकस्य निकेतनम् ॥
तद्गेहस्य पुरोभागे निक्षिपेयुः सिताक्षतान् ।
मनोगतं समुद्दिश्य शृणुयुः सुसमाहिताः ॥
श्रूयते वचनं किंचिद्रजकालयमध्यगम् ।
नार्या नरेण बालेन प्रोक्तमन्येन केनचित् ॥
स्वैरसंलापनोद्भूतं शुभं वा यदि वाऽशुभम् ।
शृण्वन्तीभिः फलं ज्ञेयं तद्वाक्यार्थविचारतः ॥
चण्डालनिलयेऽप्येवं श्रवणे बोधने क्रमः ।
यद्ब्रूयुर्वचनं तत्र तत्तथा न तदन्यथा ॥
शाकुनं शास्त्रमालोक्य भाविकार्यविबोधकम् ।
शकुनं वर्णितं सम्यक्सोमेश्वरमहीभुजा ॥

## अनिर्दिष्टकर्तृकवचनानि

शुभाशुभानि नेत्रस्फुरणानि निमित्तानि

[1]नेत्रस्याधः स्फुरणमसकृत् संगरे भङ्गहेतुर्नेत्रोपान्ते हरति च धनं नासिकान्ते च मृत्युः ।
नेत्रस्योर्ध्वं हरति सकलं मानसं दुःखजालं
वामे चैतत्फलमविकलं दक्षिणे वैपरीत्यम् ॥

दुःस्वप्ननाशनोपायः

[2]अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम् ।
हंसं नारायणं चैव एतन्नामाष्टकं शुभम् ॥
त्रिसंध्यं यः पठेन्नित्यं दारिद्र्यं तस्य नश्यति ।
शत्रुसैन्यं क्षयं याति दुःस्वप्नं च विनश्यति ॥
गङ्गायां मरणं चैव दृढभक्तिश्च केशवे ।
ब्रह्मविद्यावबोधश्च तस्मान्नित्यं पठेन्नरः ॥

(१) राप्र. ३४८. (२) राप्र. ३३९.

# *दैवतकर्माणि

## आश्वलायनगृह्यसूत्रम्

पुरोहितकृतं राज्ञः संनहनं समन्त्रकम्

**[1]सङ्ग्रामे समुपोळ्हे राजानं संनाहयेत् ॥**

सङ्ग्रामे समुपोळ्हे समुपस्थिते राजानं संनाहयेत् पुरोहितः वक्ष्यमाणविधिना । नावृ.

**'आ त्वाऽहार्षमन्तरेधि' इति पश्चाद्रथस्यावस्थाय ॥**

जपेदिति शेषः । अत्र 'ऋषभं मा समानानाम्' इत्यत्र च पादग्रहणे सूक्तग्रहणं भवतीति ज्ञापितं च प्राक् । नावृ.

**'जीमूतस्येव भवति प्रतीकम्' इति कवचं प्रयच्छेत् ॥**

अस्य सूक्तस्याऽऽद्यया कवचं प्रयच्छेद्राज्ञे । नावृ.

**उत्तरया धनुः ॥**

प्रयच्छेदिति शेषः । नावृ.

**उत्तरां वाचयेत् ॥**

राजानं वाचयेत् । नावृ.

**स्वयं चतुर्थीं जपेत् ॥**

स्पष्टम् । नावृ.

**पञ्चम्येषुधिं प्रयच्छेत् ॥**

इषवः यत्र धीयन्ते स इषुधिः । नावृ.

**अभिप्रवर्तमाने षष्ठीम् ॥**

यथेष्टां दिशमभिप्रवर्तमाने रथे षष्ठीं जपेत् । एवंविधो मन्त्रो मन्त्रसंज्ञः ( ? ) । नावृ.

**सप्तम्याऽश्वान् ॥**

अनुमन्त्रयेतेति शेषः । नावृ.

**अष्टमीमिषूनवेक्षमाणं वाचयति ॥**

इषूनवेक्षमाणं राजानम् अष्टमीं वाचयेत् । नावृ.

**'अहिरिव भोगैः पर्येति बाहुम्' इति तलं नह्यमानम् ॥**

ज्याघातपरित्राणं तलमुच्यते । तलं नह्यमानं राजानमेतां वाचयेत् । नावृ.

**अथैनं सारयमाणमुपारुह्याभीवर्तं वाचयति 'प्र यो वां मित्रावरुणा' इति च द्वे ॥**

सारथिना सारयमाणं राजानं रथे उपारुह्य 'अभीवर्तेन' इति सूक्तं वाचयेत्, 'प्र यो वाम्' इत्यृचौ च । नावृ.

**अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः ॥**

एनं राजानमन्वीक्षेत एतैः सूक्तैः । 'आशुः शिशानः' इति सूक्तमप्रतिरथम् । 'शास इत्था' इति सूक्तं शासः । नावृ.

**'प्र धारयन्तु मधुनो घृतस्य' इत्येतत्सौपर्णम् ॥**

सौपर्णसूक्तानां बहुत्वाद्विशेषमाह— प्र धारयन्त्विति । एतत्सूक्तं सौपर्णं भवति, नान्यत् । नावृ.

**सर्वा दिशोऽनुपरियायात् ॥**

अथ राजा सर्वा दिशो रथेनानुक्रमेण गच्छेत् । नावृ.

**आदित्यमौशनसं वाऽवस्थाय प्रयोधयेत् ॥**

यस्यां दिश्यादित्यस्तां दिशमास्थायाहनि चेत्, रात्रौ चेद्यस्यां दिशि शुक्रस्तां दिशं परिगृह्य योधयेद्राजा । न प्रत्यादित्यं युध्येत नापि प्रतिशुक्रमित्यर्थः । नावृ.

**'उप श्वासय पृथिवीमुत द्याम्' इति तृचेन दुन्दुभिमभिमृशेत् ॥**

राजा । नावृ.

**'अवसृष्टा परा पत' इतीषून् विसर्जयेत् ॥**

राजा । नावृ.

**'यत्र बाणाः संपतन्ति' इति युध्यमानेषु जपेत् ॥**

पुरोहितः । नावृ.

---

* वैदिकवचनानि राजनीतिकाण्डस्य प्रथमभागे ८२–३५६ पृष्ठेषु द्रष्टव्यानि ।

(१) आगृ. ३।१२।१-२० ; राप्र. ३११.

**संशिष्याद्वा संशिष्याद्वा ॥**

अथवा राज्ञे पुरोधा आचक्षीत ' एक( ? त )स्मिन् काले इयमृक् तव ' इति । यथा " आ त्वाऽहार्षम् ' इति सूक्तं पश्चाद्रथस्यावस्थाय ब्रूहि " " जीमूतस्य ' इति कवचं गृहाण " इत्येवमादि । अध्यायान्तलक्षणं द्विर्वचनम् । नाव्.

## कौशिकगृह्यसूत्रम्

### हस्तित्रसनकर्माणि

**[1]पूर्वस्य हस्तित्रसनानि ॥**

अथ राजकर्माण्युच्यन्ते । साङ्ग्रामिकाणां कर्मणां तन्त्रं वक्ष्यामः । अश्वत्थस्य वधकस्य वा अरण्योरग्निं मन्थति । ' इन्द्रो मन्थतु ' इत्यृचा मथ्यमानमनुमन्त्रयते । ' पूतिरज्जुः ' इत्यर्धर्चेनाग्निपतनस्थाने रज्जुं निदधाति । ' धूमं परादृश्य ' इत्यर्धर्चेन धूममनुमन्त्रयते । ' अग्निं परादृश्य ' इत्यर्धर्चेन जातमग्निमनुमन्त्रयते । एष सेनाग्निः । अव्यचसश्च । बर्हिर्लवनादि समानम् । सेनाग्निप्रणयनं ग्रहणं पञ्चगृहीतमाज्यमभ्यातानान्तं कृत्वा लोहिताश्वत्थस्य शाखां रोपयति उत्तरतः । ततः प्रधानकर्म कुर्यात् । तत उत्तरतन्त्रे विशेषः– संततिहोमान्तं कृत्वा ' इमे जयन्तु स्वाहैभ्यः ' इत्येतेन मन्त्रेणाऽऽज्यं जुहोति । ततो वधककाष्ठप्रज्वालितेऽऽग्नौ वामेन हस्तेन इङ्गिडं जुहोति– ' परामी जयन्तां दुराहामीभ्यः , ओ३म् स्वाहा ' इति । ततः शाखायां दक्षिणतः प्रक्षिपति– ' नीललोहितेनामून् ' इति मन्त्रेण । स्विष्टकृदाद्युत्तरतन्त्रम् । एतत्साङ्ग्रामिकं तन्त्रम् । साङ्ग्रामिकेषु सर्वत्र उच्चैर्मन्त्राणां प्रयोगः । तन्त्रमध्ये ये प्रधानमन्त्रास्ते उच्चैर्भवन्ति ।

शत्रोर्हस्तित्रासनानां कर्मणां विधिं वक्ष्यामः ।
दाकेटी.

**रथचक्रेण संपातवता प्रतिप्रवर्तयति ॥**

तं हस्तिनं संप्रति मुखं ( ? प्रति संमुखं ) रथमावर्तयति । दाकेटी.

**यानेनाभियाति ॥**

**वादित्रैः ॥**

**दृतिवस्त्योरोप्य शर्कराः ॥**

**तोत्रेण नग्नप्रच्छन्नः ॥**

' ये त्रिषप्ताः ' इति सूक्तेन वेलुकामभिमन्त्र्य यत्र हस्तिनस्तत्राभिमुखो याति । समाप्तानि हस्तित्रासनानि ।
दाकेटी.

### विजयकर्माणि

**' विद्मा शरस्य, मा नो विदन्, अदारसृत्, स्वस्तिदाः, अवमन्युः, निर्हस्तः, परि वर्त्मानि, अभिभूः, इन्द्रो जयाति, अभि त्वेन्द्र ' इति साङ्ग्रामिकाणि ॥**

जयकर्माण्यनुवर्तन्ते आ राष्ट्रप्रवेशकर्मभ्यो यावत् ।
दाकेटी.

**आज्यसक्तूञ्जुहोति ॥**

**धनुरिध्मे धनुःसमिधमादधाति ॥**

इध्मसमाधानस्थाने धनुरिध्मे ( आदधाति । ? ) धनुःसमिध आदधाति । दाकेटी.

**एवमिष्विध्मे ॥**

शरेध्मोपसमाधाने शरसमिधः प्रादेशमात्रीरादधाति ।
दाकेटी.

**धनुः संपातवद् विमृज्य प्रयच्छति ॥**

विजयकर्माणि साङ्ग्रामिकाणि समाप्तानि । सङ्ग्रामे अयुध्यमाने जयो भवति । एभिः कर्मभिः दृष्टमात्रतः शत्रवः पलायन्ते । दाकेटी.

### इषुनिवारणकर्माणि

**प्रथमस्येषुपर्ययणानि ॥**

इषुनिवारणानि कर्माण्युच्यन्ते– प्रथमस्येति । अनेन कर्मणा पुरुषशरीरे इषवो न पतन्ति, पार्श्वतो गच्छन्ति ।
दाकेटी.

**दुघ्न्यात्मौंज्यापाशतृणमूलानि बध्नाति ॥**

**' आरेऽसौ ' इत्यपनोदनानि ॥**

सर्वशस्त्रनिवारणानां कर्मणां विधिं वक्ष्यामः ।
दाकेटी.

---

( १ ) कौसू. १४।१–३१.

**फलीकरणतुषबुसावतक्षणान्यावपति ॥**

जुहोति सेनाग्नौ । दाकेटी.

**अन्वाह ॥**

'आरेऽसौ' इति सूक्तेन ( ? सूक्तं ) शत्रुं दृष्ट्वा जपति । दाकेटी.

मोहनकर्माणि

**'अग्निर्नः शत्रून्, अग्निर्नो दूतः' इति मोहनानि ॥**

अथ मोहनकर्मणां विधिं वक्ष्यामः । परसेनामोहनानि । दाकेटी.

**ओदनेनोपयम्य फलीकरणानुलूखलेन जुहोति ॥**

ओदनेन फलीकरणं पिण्डीकृत्य । दाकेटी.

**एवमणून् ॥**

ओदनेन सह कण्डिकां पिण्डीकृत्य । दाकेटी.

**एकविंशत्या शर्कराभिः प्रतिनिष्पुनाति ॥**

शर्कराः शूर्पे कृत्वा निष्पुनाति । दाकेटी.

**अप्वां यजते ॥**

अप्वा देवता । चरुतन्त्रम् आज्यभागान्तं कृत्वा 'अग्निर्नः शत्रून्, अग्निर्नो दूतः' इति सूक्ताभ्यां चरुं जुहुयात् । निर्वापे प्रोक्षणे बर्हिर्होमे विशेषः– 'अप्वायै त्वा जुष्टं निर्वपामि, अप्वायै त्वा जुष्टं प्रोक्षामि, अप्वां गच्छतु हविः' । दाकेटी.

उद्वेगकर्म

**'संशितम्' इति शितिपदीं संपातवतीमवसृजति ॥**

**उद्वृधत्सु योजयेत् ॥**

उद्वेगकरकर्मोच्यते– संशितमिति । अजां सितपदां शत्रुसेनां प्रति विसर्जयति । श्वेतेन पादेन अजा वा अविर्वा एणी वा । इत्युद्वेगकरं समाप्तम् । समाप्तानि परस्परोद्वेगकरणानि, मोहनस्तम्भनमित्यर्थः । दाकेटी.

जयकर्म

**'इममिन्द्र' इति युक्तयोः प्रदानान्तानि ॥**

पुनर्जयकर्मोच्यते– इममिति । दाकेटी.

स्वसेनारक्षणकरं कर्म

**दिग्युक्ताभ्याम् 'नमो देववधेभ्यः' इत्युपतिष्ठते ॥**

स्वसेनारक्षार्थं कर्मोच्यते । स्वसेनां प्रति दिशमुपतिष्ठते । दाकेटी.

**'त्वया मन्यो, यस्ते मन्यो' इति संरम्भणानि ॥**

अथ स्वसेनाया उत्साहकरणं वक्ष्यामः । दाकेटी.

**सेने समीक्षमाणो जपति ॥**

सेनयोर्मध्ये स्थितो जपति निरीक्षमाणः । दाकेटी.

**भाङ्गमौञ्जान् पाशानिङ्गिडालंकृतान् संपातवतोऽनूक्तान्सेनाक्रमेषु वपति ॥**

परसेनायां प्रक्षिपति उच्छ्वसकः क्रुद्धः । दाकेटी.

**एवमामपात्राणि ॥**

जयपराजयसूचकम्

**इङ्गिडेन संप्रोक्ष्य तृणान्याङ्गिरसेनाग्निना दीपयति ॥**

अथ जयपराजयविज्ञानमुच्यते– इङ्गिडेनेति । शरतृणानि आङ्गिरसेनाऽऽदीपयति । आङ्गिरसोऽग्निः चाण्डालाग्निः सूतिकाग्निः । दाकेटी.

**यां धूमोऽवतनोति तां जयन्ति ॥**

सेनयोर्मध्ये कृत्वा यान् धूमोऽवतनोति ते जयन्ति । यत्र धूमो गच्छति तत्र न जयः । दाकेटी.

जयकर्माणि

**'[1]ऋधङ्मन्त्रः, तदिदास' इत्याश्वत्थ्यां पात्र्यां त्रिवृतिगोमयपरिचये हस्तिपृष्ठे पुरुषशिरसि वाऽमित्राञ्जुह्वदभिप्रक्रम्य निवपति ॥**

अथ साङ्ग्रामिकं विधिं वक्ष्यामः । जयकर्माण्युच्यन्ते । सूक्ताभ्यामाश्वत्थ्यां पात्र्यां त्रिवृत्तिगोमये परिचयेऽग्निं प्रज्वाल्य हस्तिपृष्ठे शत्रुमभिमुखो गच्छन्नाज्यं जुहोति पुरुषशिरसि ( वा ) । तत्पात्रं प्रक्षिपति भूम्याम् । दाकेटी.

---

( १ ) कौसू. १५।१–१८.

**वराहविहिताद्राजानो वेदिं कुर्वन्ति ॥**

**तस्यां प्रदानान्तानि ॥**

**एकेष्वाहतस्याऽऽदहन उपसमाधाय दीर्घदण्डेन स्रुवेण रथचक्रस्य खेन समया जुहोति ॥**

युद्धे मृतस्य पुरुषस्येध्ममुपसमाधाय उपरि चक्रं धारयित्वा दीर्घदण्डेन स्रुवेण । दाकेटी.

**योजनीयां श्रुत्वा योजयेत् ॥**

युद्धं योजयेत् । दाकेटी.

**'यदि चिन्नु त्वा, नमो देववधेभ्यः' इत्यन्वाह ॥**

**वैश्याय प्रदानान्तानि ॥**

वैश्याय सङ्ग्रामविधिं वक्ष्यामः । दाकेटी.

**'त्वया वयम्' इत्यायुधि ग्रामण्ये ॥**

सेनापतिजयकर्म' ' 'दण्डनायकजयकर्म । स्वसेनाजयपराजयपुरुषवधशङ्कायां विज्ञानमुच्यते । दाकेटी.

**'नि तद्दधिषे' इति राज्ञोदपात्रं द्वौ द्वाववेक्षयेत् ॥**

उदपात्रमभिमन्त्रयते । ततो द्वौ द्वौ योद्धारौ अवेक्षयेद्राजा । दाकेटी.

**यं न पश्येन्न युध्येत ॥**

यं न पश्येत् तं न युध्येत योधयेत् । दाकेटी.

**'नि तद्दधिषे, वनस्पते, अया विष्ठा, अग्न इन्द्रः, दिशश्चतस्रः' इति नवं रथं राजानं ससारथिमास्थापयति ॥**

अथ नवरथे घटिते संस्कार उच्यते । दाकेटी.

**'ब्रह्म जज्ञानम्' इति जीवितविज्ञानम् ॥**

अथाऽऽरोग्यविधानमुच्यते । दाकेटी.

**तिस्रः स्नावरज्जूरङ्गारेष्ववधाय ॥**

**उत्कुचतीषु कल्याणम् ॥**

**साङ्ग्रामिकमेता व्यादिशति मध्ये मृत्युरितरे सेने ॥**

**पराजेष्यमाणान्( ? माणां ) मृत्युरतिवर्तते, जेष्यन्तो( ? न्ती ) मृत्युम् ॥**

अथ साङ्ग्रामिकविधानमुच्यते । एका आत्मसेना रज्जुः, द्वितीया मध्ये मृत्युः, तृतीया रज्जुः परसेना, एवं संकल्पः । तत अङ्गारेषु निधाय इष्यते यस्य ( ? यस्या ) उपरि मृत्युर्गच्छति तस्य ( ? तस्याः ) सेनायाः ( परा )जयो भवति । दाकेटी.

**अग्रेषूत्कुचत्सु मुख्या हन्यन्ते, मध्येषु मध्याः, अन्तेष्ववरे ॥**

**एवमिषीकाः ॥**

आरोग्यविज्ञानकर्म, जयविजयपराजयविज्ञानकर्म, एकरज्जुमुख्यमध्यमाधरविज्ञानकर्म, एतानि त्रीणि कर्माणि भवन्ति । इषीका शरमया वीरिणमया वा कर्तव्या । दाकेटी.

**''उच्चैर्घोषः, उपश्वासय' इति सर्ववादित्राणि प्रक्षाल्य तगरोशीरेण संधाव्य संपातवन्ति त्रिराहत्य प्रयच्छति ॥**

अथ त्रासनं परसेनाविद्वेषणमुच्यते । दाकेटी.

**'विहृदयम्' इत्युच्चैस्तरां हुत्वा स्रुवमुद्वर्तयन् ॥**

**सोमांशुं हरिणचर्मण्युत्सीव्य क्षत्रियाय बध्नाति ॥**

सोमाङ्कुरमणिं बध्नाति । दाकेटी.

**'परिवर्त्मानि, इन्द्रो जयाति' इति राजा त्रिः सेनां परियाति ॥**

राजा त्रिः कण्टकं भ्रामयति ( ? ) । दाकेटी.

**उक्तः पूर्वस्य सोमांशुः ॥**

**'संदानं वः, आदानेन' इति पाशैरादानसंदानानि ॥**

जयकाम इदं कर्म कुर्यात् । जयकर्माणि अनुवर्तन्ते 'अस्मिन्वस्विति राष्ट्रावगमनम्' ( कौसू. १६।२७ ) यावत् । दाकेटी.

**'मर्माणि ते' इति क्षत्रियं संनाहयति ॥**

**अभयानामप्ययः ॥**

---

( १ ) कौसू. १६।१–३३.

अभयकर्मोच्यते— अभयानामिति । 'अभयं द्यावापृथिवी' इति सूक्तेन ससऋषीन् यजते प्रतिदिशं सेनायाः । प्रतिदिशं सेनाया उपतिष्ठते वा । 'श्येनोऽसि गायत्र' इति सूक्तेन ससऋषीन् यजते उपतिष्ठते वा सेनायाः प्रतिदिशम् । दाकेटी.

**'इन्द्रो मन्थतु' इति ॥**

**'पूतिरज्जुः' इति पूतिरज्जुमवधाय ॥**

**अश्वत्थवधकयोरग्निं मन्थति ॥**

उक्तमग्निमन्थनमादौ 'इन्द्रो मन्थतु' इत्यादि । अग्निं मन्थति । दाकेटी.

**'धूमम्' इति धूममनुमन्त्रयते ॥**

**'अग्निम्' इत्यग्निम् ॥**

**तस्मिन्नरण्ये सपत्नक्षयणीरादधात्यश्वत्थवधकताजद्भङ्गाह्वखदिरशराणाम् ॥**

अथ सपत्नक्षयणीकर्मोच्यते— तस्मिन्निति । अरण्ये, न ग्राममध्ये कुर्यात् । ( वधकः ) कृमिमालकः । दाकेटी.

**उक्ताः पाशाः ॥**

**आश्वत्थानि कूटानि भाङ्गानि जालानि ॥**

भाङ्गानि ज्वालानि । सेनाक्रमेषु वपति । दाकेटी.

**बाधकदण्डानि ॥**

सेनाक्रमेषु वपति । दाकेटी.

**'स्वाहैभ्यः' इति मित्रेभ्यो जुहोति ॥**

'स्वाहैभ्यः' इति (अ?)मित्रेभ्यः । दाकेटी.

**'दुराहामीभ्यः' इति सव्येनेङ्गिडममित्रेभ्यो बाधके ॥**

**उत्तरतोऽग्नेर्लोहिताश्वत्थस्य शाखां निहत्य नीललोहिताभ्यां सूत्राभ्यां परितत्य 'नीललोहितेनामून्' इति दक्षिणा प्रहापयति ॥**

**'ये बाहवः, उत्तिष्ठत' इति यथालिङ्गं संप्रेष्यति ॥**

आवासानि जयकर्माण्युच्यन्ते— य इति । 'ये बाहवः' इत्यनुवाकं युद्धकाले जपति कर्ता । दाकेटी.

**होमार्थे पृषदाज्यम् ॥**

**प्रदानान्तानि वाप्यानि ॥**

सर्वत्र पाशेषु अश्वत्थेषु कूटेषु भाङ्गेषु जालेषु बाधकदण्डेषु वज्ररूपेषु पात्रेषु चेङ्गिडालङ्करणे क्रुद्धानुमन्त्रणं कुर्यात् । दाकेटी.

**वाप्यैस्त्रिषंधीनि वज्ररूपाण्यर्बुदरूपाणि ॥**

त्रिषंधीनि लोहमयानि ··· वज्ररूपाणि लोहमयानि अर्बुदरूपाणि पृषदाज्येन संपात्याभिमन्त्र्य निवपति । दाकेटी.

**शितिपदीं संपातवतीं दर्भरज्ज्वा क्षत्रियायोपासङ्गदण्डे बध्नाति ॥**

'ये बाहवः' इत्यनुवाकेन शितिपदीं ( आज्यं ? ) पृषदाज्येन संपात्याभिमन्त्र्य राज्ञो दण्डे बध्नाति । दाकेटी.

**द्वितीयामस्यति ॥**

द्वितीयां शितिपदीं ··· शत्रुसेनां प्रतिक्षिपति । शितिपद्योर्द्वयोररण्ये कर्म । दाकेटी.

**'अस्मिन् वसु' इति राष्ट्रावगमनम् ॥**

अथाऽऽवश्यकं राष्ट्रप्रवेशककर्मविधिं वक्ष्यामः । स्वराष्ट्रे यो निष्क्रान्तः शत्रुणा पुनः प्रवेशमिच्छति तस्येदं कर्म । दाकेटी.

**आनुशूकानां व्रीहीणामावस्कजैः काम्पीलैः शृतं सारूपवत्समाशयति ॥**

आनुशुष्काः लूना व्रीहयः पुनरुत्थिताः । छिन्नानि कामानि( ? काम्पीलानि ) पुनरुत्थितानि । सर्वस्यामर्दितायां भूमौ पदा निष्क्रान्तो राजा तदा इदं करोति । दाकेटी.

**'अभीवर्तेन' इति रथनेमिमणिमयःसीसलोहरजतताम्रवेष्टितं हेमनाभिं वासितं बद्ध्वा सूत्रोतं बर्हिषि कृत्वा संपातवन्तं प्रत्यृचं भ्रष्टीरभीवर्तोत्तमाभ्यामाचृतति ॥**

'अचिक्रदत्, आ त्वा गन्' इति यस्माद्राष्ट्रादवरुद्धस्तस्याऽऽशायां *शयनविधं पुरोडाशं दर्भेषूदके निनयति ॥

सेनाकारं पुरोडाशम् । दाकेटी.

ततो लोष्टेन ज्योतिरायतनं संस्तीर्य क्षीरौदनमश्नाति ॥

ततो लोष्टेन पूरयेत् । क्षीरौदनं स्थालीपाकं राजानमाशयति । दाकेटी.

यतो लोष्टस्ततः संभाराः ॥

तिसृणां प्रातरशिते पुरोडाशे ह्वयन्ते ॥

## व्यासः

यात्रायां देवत्रयध्यानम्

[1]यात्रायां वामनं देवं नारसिंहं तथा युधि ।
भये ध्यायेद्वासुदेवं त्रयं स्वस्त्ययनं स्मृतम् ॥

## विष्णुधर्मोत्तरपुराणम्

युद्धसंभाराभिमन्त्रणम्

राम उवाच–

[2]छत्राश्वकेतुकरिणां पताकाखड्गचर्मणाम् ।
तथा दुन्दुभिचापानां ब्रूहि मन्त्रान् ममानघ ॥

पुष्कर उवाच–

[3]शृणु मन्त्रान् महाभाग भगवान् यत् पराशरः ।
गालवाय पुरोवाच सर्वधर्मभृतां वरः ॥

पराशर उवाच–

यथाऽम्बुदश्छादयति शिवायेमां वसुंधराम् ।
तथाऽऽच्छादय राजानं विजयारोग्यवृद्धये ॥

इति छत्रमन्त्रः ॥

* 'शयनविधम्' इत्यत्र 'सेनाविधम्' इति सायणभाष्ये (असा. ३।३।१) पाठो विद्यते । टीकाकर्तुरपि स एवाभिमत इति प्रतिभाति ।

(१) मभा. ११।१९.

(२) विध. २।१६०।१ ; राप्र. ३४० मन्त्रान् (मन्त्रं).

(३) विध. २।१६०।२–३ ; राप्र. ३४१.



पराशर उवाच–

[1]गन्धर्वकुलराजस्त्वं मा भूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥

[2]प्रभावश्च हुताशस्य भवस्य त्वं तुरंगम ।
तेजसा चैव सूर्यस्य मुनीनां तपसां तथा ॥

[3]रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ।
स्मर त्वं राजपुत्रोऽसि कौस्तुभं च मणिं स्मर ॥

यां गतिं ब्रह्महा गच्छेत् पितृहा मातृहा तथा ।
भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥

[4]सूर्याचन्द्रमसौ वायुर्यावत् पश्यन्ति दुष्कृतम् ।
व्रजेस्त्वं तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥

[5]विकृतिं यदि गच्छेर्नो युद्धेऽध्वनि तुरंगम ।
रिपून् विजित्य समरे सह भर्त्रा सुखी भव ॥

इत्यश्वमन्त्रः ॥

पराशर उवाच–

[6]शक्रकेतो महावीर सुपर्णस्त्वच्युताश्रितः ।
पतत्रिराड्वैनतेयस्तथा नारायणध्वजः ॥

[7]काश्यपेयोऽमृताहर्ता नागारिर्विष्णुवाहनः ।
अप्रमेयो दुराधर्षो रणे चैवारिसूदनः ॥

(१) विध. २।१६०।४ ; राप्र. ३४१ (पराशर उवाच०) एवमग्रेऽपि प्रतिमन्त्रारम्भे.

(२) विध. २।१६०।५ ; राप्र. ३४१ वश्च (वस्त्वं) भवस्य त्वं (भगवंस्त्वं) तपसां (तपसा).

(३) विध. २।१६०।६–७ ; राप्र. ३४१.

(४) विध. २।१६०।८ व्रजेस्त्वं तां (व्रजेस्त्वेतां) ; राप्र. ३४१.

(५) विध. २।१६०।९ गच्छेर्नो (गच्छेन्नो) ; राप्र. ३४१.

(६) विध. २।१६०।१० स्त्वच्युता (स्तत्सुता).

(७) विध. २।१६०।११ ; राप्र. ३४१.

[1]गरुत्मान् मारुतगतिस्त्वयि संनिहितः स्थितः ।
साश्ववर्मायुधान् योधान् रक्षास्माकं महीमसून् ॥
इति ध्वजमन्त्रः ॥

पराशर उवाच–

[2]कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥
[3]तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः ।
भद्रो मन्दो मृगश्चैव गजः संकीर्ण एव च ॥
[4]वने वने प्रसूतास्ते स्मर योनिं महागज ।
पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ।
भर्तारं रक्ष नागेन्द्र समयः प्रतिपाल्यताम् ।
अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज ॥
श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्याज्जवोऽनिलात् ।
स्थैर्यं मेरोर्जयं रुद्राद्यशो देवात् पुरंदरात् ॥
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ।
अश्विभ्यां सह गन्धर्वाः पान्तु त्वां सर्वतः सदा ॥
इति हस्तिमन्त्रः ॥

पराशर उवाच–

हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः ।
नागकिन्नरगन्धर्वयक्षभूतगणग्रहाः ॥
प्रमथास्तु सहाऽऽदित्यैर्भूतेशो मातृभिः सह ।
शक्रसेनापतिः स्कन्दो वरुणश्चाऽऽश्रितस्त्वयि ॥
प्रदहन्तु रिपून् सर्वान् राजा विजयमृच्छतु ।
यानि प्रयुक्तान्यरिभिर्दूषणानि समन्ततः ॥
[5]पतन्तूपरिशत्रूणां हतानि तव तेजसा ।
कालनेमिवधे यद्वद्यच्च त्रिपुरपातने ॥

[1]हिरण्यकशिपोर्यद्वद्वधे सर्वासुरेषु च ।
शोभिताऽसि तथैवाद्य शोभस्व समयं स्मर ॥
नीलाश्वेतानिमान् दृष्ट्वा नश्यन्त्वाशु नृपारयः ।
व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ॥
पूतना रेवती नाम्ना कालरात्रीति पठ्यते ।
दहत्वाशु रिपून् सर्वान् पताके त्वामुपाश्रिता ॥
इति पताकामन्त्रः ॥

पराशर उवाच–

असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्माचारस्तथैव च ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥
रोहिण्याश्च शरीरं ते दैवतं तु जनार्दनः ।
पिता पितामहो देवः स त्वं पालय सर्वदा ॥
इति खड्गमन्त्रः ॥

पराशर उवाच–

[2]वर्मप्रदस्त्वं समरे धर्मसैन्याय मानद ।
रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते ॥
इति वर्ममन्त्रः ॥

पराशर उवाच–

[3]दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः ।
तव भूमिपसैन्यानां तथा विजयवर्धनः ॥
[4]यथा जीमूतघोषेण हृष्यन्ति शरवारणाः ।
तथा च तव शब्देन त्रस्यन्त्वसद्द्विषो रणे ॥
इति दुन्दुभिमन्त्रः ॥

---

(१) विध. २।१६०।१२ महीमसून् ( महद्रिपून् ); राप्र. ३४२. (२) विध. २।१६०।१३ ; राप्र. ३४२.
(३) विध. २।१६०।१४ वना ( धना ); राप्र. ३४२. (४) विध. २।१६०।१५–२१ ; राप्र. ३४२.
(५) विध. २।१६०।२२ ; राप्र. ३४२ यच्च ( यद्वत् ) पात ( घात ).

(१) विध. २।१६०।२३–२८ ; राप्र. ३४२–३४३.
(२) विध. २।१६०।२९ ; राप्र. ३४३ वर्म ( शर्म ) धर्म ( चर्मन् ) मानद ( मे ह्यसि ) वर्ममन्त्रः ( चर्ममन्त्रः ).
(३) विध. २।१६०।३० ; राप्र. ३४३ तव ( नव ).
(४) विध. २।१६०।३१ ; राप्र. ३४३ शरवा ( शिखिवा ).

पराशर उवाच–

[1]सर्वायुधमहामात्र सर्वदेवारिसूदन ।
चापस्त्वं सर्वदा रक्ष साकं शरवरैः सदा ॥

इति चापमन्त्रः ॥

पुष्कर उवाच–

[2]मन्त्रास्तवैतेऽभिहिता नृवीर
संमन्त्रणे वैजयिका यथावत् ।
एतैस्तु मन्त्रैरभिमन्त्रितानां
चलत्यमोघं बलमप्रमृष्यम् ॥

यात्रोद्यतस्य राज्ञः यात्रादिनाव्यहितपूर्वसप्ताहे
प्रतिदिनं कर्तव्यानि कर्माणि

राम उवाच–

[3]यात्राविधानमाचक्ष्व सर्वधर्मभृतांवर ।
जिगीषूणां नरेन्द्राणां सिद्धिकारणमुत्तमम् ॥

पुष्कर उवाच–

[4]सप्ताहेन यदा यात्रा भविष्यति महीपतेः ।
तदा दिने तु प्रथमे पूजनीयो विनायकः ॥
[5]मोदकैरक्षतैर्दध्ना कुसुमैश्च तथा फलैः ।
गन्धवस्त्रैरलंकारैर्धूपैर्दीपैर्मनोहरैः ॥

यात्रातः पूर्वं सप्तदिनपर्यन्तं देवपूजोक्ता– सप्ताहेनेत्यादिना । अग्निपुराणे तु हरिशंभ्वोरपि पूजोक्ता– 'पूजनीयो हरिः शंभुर्मोदकाद्यैर्विनायकः ।' (अग्नि. २३६। २) इति । राप्र. ३३१

[6]द्वितीयेऽह्नि ततः कार्यं सर्वदिक्पालपूजनम् ।
दिक्पालपूजनं कृत्वा तेषां च पुरतः स्थितः ॥

(१) विध. २।१६०।३२ ; राप्र. ३४३ सर्वदा (सर्वतो).

(२) विध. २।१६०।३३. (३) विध. २।१७६।१.

(४) विध. २।१७६।२ ; राप्र. ३३१.

(५) विध. २।१७६।३ वस्त्रै (र्वास्त्रै) ; राप्र. ३३१.

(६) विध. २।१७६।४ ; राप्र. ३३१ ऽह्नि ततः कार्यं (ऽहनि कर्तव्यं).

[1]शय्यां कुशाद्यैः कुर्वीत सितवस्त्रोत्तरच्छदाम् ।
विकिरेन्नागपुष्पैस्तां तथा सिद्धार्थकैः शुभैः ॥
[2]तच्छीर्षके तु पूज्या श्रीर्भद्रकाली च पादयोः ।
हरं दक्षिणपार्श्वे तु वामे ब्रह्माणमेव च ॥
[3]पूजितं कलशं हृद्यं कुर्यादुष्णीषके दृढम् ।
नीलपल्लवसंछन्नं चारुपुष्पोज्ज्वलं शुभम् ॥
[4]एककालं हविष्यान्नं लघु भुक्त्वा महीपतिः ।
स्वयं दक्षिणपार्श्वे च मन्त्रमेतदुदीरयेत् ॥
[5]नमः शंभो त्रिनेत्राय रुद्राय वरदाय च ।
वामनाय विरूपाय स्वप्नाधिपतये नमः ॥
भगवन् देवदेवेश शूलभृद्वृषवाहन ।
इष्टानिष्टं समाचक्ष्व स्वप्ने सुप्तस्य शाश्वतम् ॥
यज्जाग्रतो दूरमिति मन्त्रमावर्तयेत्ततः ।
हृदि न्यस्य कुशान् राज्ञः प्रयतस्तु पुरोहितः ॥
[6]ततः स्वप्ने शुभे दृष्टे यात्रा देया तु नान्यथा ।
तृतीयेऽहनि संप्राप्ते देवं दिङ्नाथमर्चयेत् ॥
[7]एकमेव महाभाग दिननाथं तथा ग्रहम् ।
यां दिशं नृपतिर्गच्छेन्नाथं तस्यास्तथैव ताम् ॥
[8]चतुर्थेऽहनि संप्राप्ते ग्रहयागो विधीयते ।
पञ्चमेऽहनि संप्राप्ते सर्वयागस्तथैव च ।
देवतानां स्वनगरे कृता यासां तथालयाः ॥

(१) विध. २।१७६।५ कुशाद्यैः (कुशाभिः) ; राप्र. ३३१.

(२) विध. २।१७६।६ ; राप्र. ३३१ हरं (हरिं).

(३) विध. २।१७६।७ ; राप्र. ३३१.

(४) विध. २।१७६।८ ; राप्र. ३३१ पार्श्वे च (पार्श्वेन) दुदी (मुदी).

(५) विध. २।१७६।९–११ ; राप्र. ३३१–३३२.

(६) विध. २।१७६।१२ ; राप्र. ३३२ स्वप्ने शु (स्वपेच्छु).

(७) विध. २।१७६।१३ ; राप्र. ३३२ दिननाथं (दिङ्नाथं च) न्नाथं (न्नाथः) ताम् (तम्).

(८) विध. २।१७६।१४ ; राप्र. ३३२.

[1]तासां संपूजनं कार्यं स्वपुरे ये तथा स्थिताः ।
तत्रैव रात्रौ भूतानां कर्तव्यं च तथाऽर्चनम् ॥

[2]एकवृक्षेषु चैत्येषु चत्वराट्टालकेषु च ।
चतुष्पथेषु रथ्यासु पर्वतानां गुहासु च ॥

[3]नदीतीरेषु शैलेषु देवतायतनेषु च ।
तेषां संपूजनं कृत्वा स्वगृहे तान् समर्चयेत् ॥

[4]तत्र कृत्वा तथैवार्च्याः प्रमथा भूभुजा स्वयम् ।
वासुदेवस्य देवस्य तथा संकर्षणस्य च ॥

[5]प्रद्युम्नस्यानिरुद्धस्य ब्रह्मणः शंकरस्य च ।
कीनाशशक्रवरुणधनेशानां तु ये गणाः ॥

[6]वायोश्च निर्ऋतेर्वह्नेस्तथा चन्द्रार्कयोश्च ये ।
ग्रहाणामथ ऋक्षाणां स्कन्दस्य च महाबलाः ॥

[7]विनायकस्य देवस्य देवतानां गणाश्च ये ।
दैत्यानां राक्षसानां च सर्वेषामनुगाश्च ये ॥

[8]महाबला महाकाया महासत्त्वा महाव्रताः ।
*अणिमा महिमा प्राप्तिः प्राकाम्येन च संयुताः ॥

[1]ईशित्वेन वशित्वेन प्राप्तिनाम्ना तथोदये ।
यत्र कामावसायित्वात्तथा येषां च विद्यते ॥

[2]एवमष्टगुणैश्वर्यसंयुता भीमविक्रमाः ।
नानासत्त्वशिरोग्रीवा नानाप्रहरणायुधाः ॥
नानाविरागवसना नानासत्त्ववपुर्धराः ।
तथा नानाविधाहारा महाचेष्टा महाबलाः ॥

[3]भक्तानुकम्पिनो वीरा वरदाः कामरूपिणः ।
प्रमथाः परिगृह्णन्तु उपहारं नमोऽस्तु वः ।
सपुत्रामात्यभृत्योऽहं सदारः शरणं गतः ॥

[4]रक्षन्तु मां महाभागा गृहे युद्धे तथाऽध्वनि ।
चमूनां पृष्ठतो गत्वा नाशयध्वं तथा रिपून् ॥

[5]स्वप्ने शुभाशुभं वाऽपि कथयध्वं समाहिताः ।
विनिवृत्तश्च दास्यामि दत्तादभ्यधिकं बलिम् ॥

[6]विनिवृत्तेन दातव्यः स च यत्नेन भूभुजा ।
पूर्ववच्च तथा रात्रौ स्वप्नप्रार्थनमिष्यते ॥

[7]षष्ठेऽहनि जयस्नानं कर्तव्यं च तथा भवेत् ।
विधिरस्याभिषेकार्थः सर्व एव विधीयते ॥

तदेवं पञ्चमेऽहनि सुस्वप्नदर्शने षष्ठेऽहनि यात्रायां निश्चितायां कृत्यान्तरमुक्तम्– षष्ठेऽहनीत्यादिना । अस्य जयाभिषेकस्य प्रयोगो वक्ष्यते । अत्रैव वक्ष्यमाणा घृत-

---

* अणिमा महिमा प्राप्तिरिति शब्दा लक्षणया तद्वत्पराः ।

(१) विध. २।१७६।१५ ; राप्र. ३३२ ये तथा (या व्यव).

(२) विध. २।१७६।१६ ; राप्र. ३३२ एक (देव) चत्व (गोपु).

(३) विध. २।१७६।१७ ; राप्र. ३३२ शैले (रम्ये).

(४) विध. २।१७६।१८ तथैवार्च्याः (ततो वाच्याः) ; राप्र. ३३२.

(५) विध. २।१७६।१९ ; राप्र. ३३२.

(६) विध. २।१७६।२० ; राप्र. ३३२ च महाबलाः (धनदस्य च).

(७) विध. २।१७६।२१.

(८) विध. २।१७६।२२ ; राप्र. ३३२ उत्तरार्धे (अणिमा महिमा चैव गरिमा लघिमा तथा ॥)

---

(१) विध. २।१७६।२३ ; राप्र. ३३२–३३३ तथोदये (तथा च ये) सायित्वात् (सायित्वं).

(२) विध. २।१७६।२४–२५ ; राप्र. ३३३.

(३) विध. २।१७६।२६ हारं (कारं) ; राप्र. ३३३ परि (प्रति) पुत्रामात्य (पुत्रमातृ).

(४) विध. २।१७६।२७ ; राप्र. ३३३ रक्षन्तु (रक्षध्वं).

(५) विध. २।१७६।२८ ; राप्र. ३३३ स्वप्ने (स्वप्नं).

(६) विध. २।१७६।२९ ; राप्र. ३३३ पूर्वार्धे (अनिवृत्तेन दातव्याः सयत्नेन च भूभुजा ।).

(७) विध. २।१७६।३० ; राप्र. ३३९, ३५१ रस्या (स्तस्या).

कम्बलशान्तिर्नीराजनशान्तिश्च यथासंभवं कर्तव्या ।

३३९–३४०

अथ राज्ञो युद्धार्थं प्रस्थितस्य षड्दिनपर्यन्तं प्रस्थानमभिहितम्, सप्तमे दिने यात्रा । तत्र विष्णुधर्मोत्तरे षष्ठे दिने जयस्नानमभिहितम्– षष्ठेऽहनीत्यादिना । तद्विधिश्च लिङ्गपुराणे ( उ. अ. २७ ) अभिहितः ।

राप्र. ३५०–३५१

यात्रादिनकर्माणि

[1]ततो यात्रादिने प्राप्ते क्षौरकर्म विवर्जयेत् ।
मुद्रणं भेदनं चैव तथा च नखकृन्तनम् ॥

[2]अभ्यङ्गं गृहकार्यं च क्रोधशोकौ च कङ्कतम् ।
यातव्यं येन तेनाथ तदुक्तं स्नानमाचरेत् ॥

काङ्कतं केशप्रसाधनम् । राप्र. ३४०

[3]स्नातः शुक्लाम्बरः स्रग्वी तथा श्वेतानुलेपनः ।
चित्राभरणवान् राजा दूर्वापल्लवलाञ्छनः ॥

[4]पूजयित्वा महाभागं देवदेवं त्रिविक्रमम् ।
जुहुयाच्च तथा वह्नौ सुसमिद्धे पुरोहितः ॥

[5]आयुष्यमभयं चैव तथा स्वस्त्ययनं गणम् ।
शर्मवर्मगणं चैव तथा प्रतिरथं शुभम् ॥

[6]शकुनं च तथा सूक्तं सूक्तं वैष्णवमेव च ।
तथाऽग्निलक्षणोत्पत्तौ शुभे यायान्महीपतिः ॥

( १ ) विध. २।१७६।३१ ; राप्र. ३४० पूर्वार्धे ( यात्रादिने तु संप्राप्ते क्षुरकर्म विवर्जयेत् । ) पू.

( २ ) विध. २।१७६।३२ ; राप्र. ३४० कङ्क ( काङ्क ) तेनाथ ( तेनाध ).

( ३ ) विध. २।१७६।३३ ; राप्र. ३४०.

( ४ ) विध. २।१७६।३४ ; राप्र. ३४० तथा ( ततो ).

( ५ ) विध. २।१७६।३५ ; राप्र. ३४० गणं चैव ( गणं चैवं ).

( ६ ) विध. २।१७६।३६ ; राप्र. ३४० शकुनं ( शाकुनं ).

[1]नक्षत्रस्य दिशश्चैव नैवेद्यं यत्प्रकीर्तितम् ।
तदेव नृपतिः प्राश्य यात्रां विद्याद्यथाविधि ॥

[2]अहृद्यं मक्षिकाकेशकीटयुक्तं विवर्जयेत् ।
दग्धे च वर्जयेद्यात्रां देया भवति चान्यथा ॥

अन्यथा केशकीटादिपाते । राप्र. ३४०

[3]ततस्तु राजलिङ्गानां चाऽऽयुधानां तथैव च ।
नीराजनोक्तमन्त्रैस्तु सर्वांस्तानभिमन्त्रयेत् ॥

[4]दैववित् प्रयतो भूत्वा राजा वाऽथ पुरोहितः ।
तेषां संपूजनं कृत्वा दैवज्ञं सपुरोहितम् ॥

[5]धनेन पूजयेद्राजा दक्षिणाभिर्द्विजोत्तमान् ।
ततः पुण्याहघोषेण द्विजानां हृतकल्मषः ॥

मङ्गलालम्भनं कृत्वा मन्त्रमेतं निशामयन् ।
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥

[6]लोकपालाः सगन्धर्वा नद्यः शैला मही द्विजाः ।
अग्निः स्वाहा स्वधा होमः स्कन्दो ब्रह्मा प्रजापतिः ॥

[7]मुहूर्तास्तिथयो भानि वेदाः सायनवत्सराः ।
गावः सरस्वती देवी दीर्घमायुर्दिशन्तु ते ॥

( १ ) विध. २।१७६।३७ ; राप्र. ३४० विद्या ( कुर्या ).

( २ ) विध. २।१७६।३८ ; राप्र. ३४० दग्धे ( दग्धं ) यात्रां ( यात्रा ) चान्य ( नान्य ).

( ३ ) विध. २।१७६।३९ ; राप्र. ३४० नां चा ( नामा ).

( ४ ) विध. २।१७६।४० ; राप्र. ३४४ पुरोहि ( मुपस्थि ).

( ५ ) विध. २।१७६।४१–४२ ; राप्र. ३४४.

( ६ ) विध. २।१७६।४३ ; राप्र. ३४४ होमः स्कन्दो ( स्कन्दो होमो ).

( ७ ) विध. २।१७६।४४ ; राप्र. ३४४ सायन ( अयन ).

[1]जगत्सृजोऽथ या सिद्धिर्बभूव ब्रह्मणः पुरा ।
जगज्जिष्णोश्च या विष्णोः सिद्धिर्याऽऽसीत् त्रिविक्रमे ॥

[2]असुरैश्वर्यनाशे च बभूव त्र्यम्बकस्य या ।
सिद्धिस्त्रिदशवृद्ध्यर्थं त्रिपुरान्तकृतः पुरा ॥

[3]शक्रे वृत्रवधे यावत् स्कन्दे देवारिसंक्षये ।
तां प्राप्नुहि सदा सिद्धिं सा च यात्राऽस्तु ते सदा ॥

[4]रक्षन्तु सर्वतः सर्वे देवाः शक्रपुरोगमाः ।
इति चोक्त्वा शुभां वाचं गृहीत्वा सशरं धनुः ॥

[5]धन्वनागेति मन्त्रेण दैवज्ञस्य करात् स्वयम् ।
तद्विष्णोः परमित्येव शृण्वन् मन्त्रमनुत्तमम् ॥

[6]पैष्टे रिपुमुखे दद्यात् प्रथमं दक्षिणं पदम् ।
पदद्वात्रिंशकं गत्वा विष्णुप्राच्यादिषु त्वथ ॥

[7]नागं रथं हयं चैव युञ्जाने चाऽऽरुहेत् क्रमात् ।
आरुह्य सुमना गच्छेद्वाद्यघोषेण भूरिणा ॥

युवानं युवनरवाह्यं यानम् । राप्र. ३४४

[8]स निष्क्रम्य महानीशो न पृष्ठमवलोकयेत् ।
मङ्गलानि ततः पश्यन् स्पृशञ्छृण्वञ्शनैर्व्रजेत् ॥

मङ्गलानि मङ्गलसूचकानि शकुनानि । निमित्तं शरीरस्फुरणादि । राप्र. ३४५.

[1]क्रोशमात्रं ततो गच्छेन्नाधिकं तु कदाचन ।
गत्वा देशे शुभे तिष्ठेत् पूजयित्वा सुरद्विजान् ॥

एवं षष्ठे दिने जयाभिषेकं संपाद्य मङ्गल्यसुस्वप्नदर्शने समीचीने च निमित्ते सति व्रजेदित्युक्तम् । तत्र प्रस्थानतः सप्तमे दिने कियद्दूरे गत्वाऽवस्थेयमित्यपेक्षायामाह– क्रोशमात्रमिति । राप्र. ३९६

ततः क्रमेण गच्छेच्च परदेशं महीपतिः ।
आत्मसैन्यानुरूपेण कृतरक्षः पथा द्विज ॥

कृतरक्षः सन् आत्मसैन्यस्यानुरूपेण यवसेन्धनधान्यादिमत्तया योग्येन पथा मार्गेण गच्छेत् । राप्र. ३९६

[2]त्रिरात्रमुषितो गच्छेद्भूयो नक्षत्रसंपदा ।
यवसैन्धवतोयानां रक्षको विषदूषणात् ॥

नक्षत्रसंपदेति चन्द्रशुद्धिनिषिद्धयोगकरणादिराहित्योपलक्षणम् । राप्र. ३९६

[3]परानभिमुखो गच्छेत् प्रभूतयवसैन्धवः ।
स्वैरचङ्क्रमणं शय्यां भाण्डप्रक्षेपणं तथा ॥
[4]भोजनं तं सुखं कुर्यात् प्रतिलोमं न चाऽऽचरेत् ॥

सङ्ग्रामदिनाव्यवहितपूर्वस्मिन् दिने कर्तव्यानि कर्माणि

राम उवाच–

[5]साङ्ग्रामिकमहं त्वत्तः श्रोतुमिच्छामि भूभुजः ।
सर्वं वेत्सि महाभाग त्वं देव परमेष्ठिवत् ॥

---

(१) विध. २।१७६।४५ ; राप्र. ३४४ त्सृजोऽथ (त्सिसृक्षोः) सिद्धिर्या (सिद्धिरा).

(२) विध. २।१७६।४६ ; राप्र. ३४४.

(३) विध. २।१७६।४७ ; राप्र. ३४४ यावत् (या च).

(४) विध. २।१७६।४८ ; राप्र. ३४४ चोक्त्वा (श्रुत्वा).

(५) विध. २।१७६।४९ ; राप्र. ३४४.

(६) विध. २।१७६।५० ; राप्र. ३४४ विष्णुप्रा (दिक्षु प्रा).

(७) विध. २।१७६।५१ ; राप्र. ३४४ युञ्जाने (युवानं).

(८) विध. २।१७६।५२ ; राप्र. ३४५ स्पृशञ्छृण्वञ् (निमित्तं च).

(१) विध. २।१७६।५३–५४ ; राप्र. ३९६.

(२) विध. २।१७६।५५ ; राप्र. ३९६ सैन्धव (सेन्धन).

(३) विध. २।१७६।५६ ; राप्र. ३९६ सैन्धवः (सेन्धनः) पू.

(४) विध. २।१७६।५७.

(५) विध. २।१७७।१ ; राप्र. ३९७ भुजः (भुजाम्).

पुष्कर उवाच–

[1]द्वितीयेऽहनि सङ्ग्रामो भविष्यति यदा तदा ।
गजाश्वान् स्नापयेद्राजा सर्वौषधिजलैः शुभैः ॥
गन्धमाल्यैरलंकुर्यात् पूजयेच्च यथाविधि ।
नृसिंहं पूजयेद्विष्णुं राजलिङ्गान्यशेषतः ॥
[2]छत्रं ध्वजं पताकाश्च धर्मांश्चैव महाभुज ।
आयुधानि च सर्वाणि तथा पूज्यानि भूभुजा ॥
[3]तेषां संपूजनं कृत्वा रात्रौ प्रमथपूजनम् ।
कृत्वा तु प्रार्थयेद्राजा विजयायेतरो यथा ॥
[4]प्रमथांश्च सहायार्थे धरणीं च महाभुज ।
भिषक्पुरोहितामात्यमन्त्रिमध्ये तथा स्वपेत् ॥
[5]संयतो ब्रह्मचारी च नृसिंहं संस्मरन् हरिम् ।
रात्रौ दृष्टे शुभे स्वप्ने समरारम्भमाचरेत् ॥
[6]रात्रिशेषे समुत्थाय स्नातः सर्वौषधीजलैः ।
पूजयित्वा नृसिंहं तु वाहनाद्यमशेषतः ॥
[7]पुरोधसा हुतं पश्येज्ज्वलितं जातवेदसम् ।
पुरोधाः पूर्ववत्तत्र मन्त्रांस्तु जुहुयात्ततः ॥
[8]दक्षिणाभिः शुचिर्विप्रान् पूजयेत् पृथिवीपतिः ।
ततोऽनुलिम्पेद्गात्राणि गन्धद्वारेति पार्थिवः ॥
[9]चन्दनागुरुकर्पूरकान्ताकालीयकैः शुभैः ।
मूर्तिं कण्ठे समालभ्य रोचनां च तथा शुभाम् ॥

(१) विध. २।१७७।२–३ ; राप्र. ३९८.

(२) विध. २।१७७।४ ; राप्र. ३९८ पताकाश्च धर्मांश्चैव ( पताकां च वर्म चैव ).

(३) विध. २।१७७।५ ; राप्र. ३९८ तरो यथा ( तराय वा ).

(४) विध. २।१७७।६ ; राप्र. ३९८ महाभुज ( महीभुजम् ).

(५) विध. २।१७७।७ ; राप्र. ३९८.

(६) विध. २।१७७।८ ; राप्र. ३९८ नाद्य ( नाघ ).

(७) विध. २।१७७।९ ; राप्र. ३९८ ततः ( स्पुनः ). (८) विध. २।१७७।१० ; राप्र. ३९८.

(९) विध. २।१७७।११ ; राप्र. ३९८ कान्ता ( कान्त ) मूर्तिं ( मूर्ध्नि ).

[1]आयुष्यं वर्चसं चैव मन्त्रेणानेन मन्त्रितम् ।
अलंकरणमाबध्याच्छ्रियं धातुरिति स्रजम् ॥
या ओषधय इत्येवं धारयेदोषधीः शुभाः ।
नवो नवेति वस्त्रं च कार्पासं बिभृयाच्छुभम् ॥
[2]ऐन्द्राग्नेति ततो वर्म धन्वनागेति वै धनुः ।
ततो राज्ञः समादद्यात् सशरं त्वभिमन्त्रितम् ॥
[3]कुञ्जरं वा रथं चाश्वमारुहेदभिमन्त्रितम् ।
आरुह्य शिबिराद्राजा निष्क्रम्य समये शुभे ॥
[4]देशे त्वदृश्यः शत्रूणां कुर्यात् प्रकृतिकल्पनाम् ॥

## अग्निपुराणम्

यात्रोद्यतस्य राज्ञः यात्रादिनाव्यहितपूर्वसप्ताहे प्रतिदिनं कर्तव्यानि कर्माणि

पुष्कर उवाच–

[5]यात्राविधानपूर्वं तु वक्ष्ये साङ्ग्रामिकं विधिम् ।
सप्ताहेन यदा यात्रा भविष्यति महीपतेः ॥
[6]पूजनीयो हरिः शंभुर्मोदकाद्यैर्विनायकः ।
द्वितीयेऽहनि दिक्पालान् संपूज्य शयनं चरेत् ॥
[7]शय्यायां वा तदग्रेऽथ देवान् प्रार्च्य मनुं स्मरेत् ।
नमः शंभो त्रिनेत्राय रुद्राय वरदाय च ॥
वामनाय विरूपाय स्वप्नाधिपतये नमः ।
भगवन् देवदेवेश शूलभृद् वृषवाहन ॥
इष्टानिष्टे ममाऽऽचक्ष्व स्वप्ने सुप्तस्य शाश्वत ।
यज्जाग्रतो दूरमिति पुरोधा मन्त्रमुच्चरेत् ॥
तृतीयेऽहनि दिक्पालान् रुद्रांस्तान् दिक्पतीन् यजेत् ।
ग्रहान् यजेच्चतुर्थेऽह्नि पञ्चमे चाश्विनौ यजेत् ॥

(१) विध. २।१७७।१२–१३ ; राप्र. ३९८.

(२) विध. २।१७७।१४ ; राप्र. ३९९ राज्ञः ( राजा ).

(३) विध. २।१७७।१५ ; राप्र. ३९९ चाश्व ( वाऽश्व ) निष्क्रम्य समये ( विनिष्क्रम्य समे ).

(४) विध. २।१७७।१६ ; राप्र. ३९९.

(५) अग्नि. २३६।१.

(६) अग्नि. २३६।२ ; राप्र. ३३१ पू.

(७) अग्नि. २३६।३–२१, २४–२६.

मार्गे या देवतास्तासां नद्यादीनां च पूजनम् ।
दिव्यान्तरीक्षभौमस्थदेवानां च तथा बलिः ॥
रात्रौ भूतगणानां च वासुदेवादिपूजनम् ।
भद्रकाल्याः श्रियः कुर्यात् प्रार्थयेत् सर्वदेवताः ॥
वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः ।
नारायणोऽब्जजो विष्णुर्नारसिंहो वराहकः ॥
शिव ईशस्तत्पुरुषो ह्यघोरो राम सत्यजः ।
सूर्यः सोमः कुजश्चान्द्रिर्जीवः शुक्रः शनैश्चरः ॥
राहुः केतुर्गणपतिः सेनानी चण्डिका ह्युमा ।
लक्ष्मीः सरस्वती दुर्गा ब्रह्माणीप्रमुखा गणाः ॥
रुद्रा इन्द्रादयो वह्निर्नागास्तार्क्ष्योऽपरे सुराः ।
दिव्यान्तरीक्षभूमिष्ठा विजयाय भवन्तु मे ॥
मर्दयन्तु रणे शत्रून् संप्रगृह्योपहारकम् ।
सपुत्रमातृभृत्योऽहं देवा वः शरणं गतः ॥
चमूनां पृष्ठतो गत्वा रिपुनाशा नमोऽस्तु वः ।
विनिवृत्तः प्रदास्यामि दत्तादप्यधिकं बलिम् ॥
षष्ठेऽह्नि विजयस्नानं कर्तव्यं चाभिषेकवत् ।
यात्रादिने सप्तमे च पूजयेच्च त्रिविक्रमम् ॥
नीराजनोक्तमन्त्रैश्च ह्यायुधं वाहनं यजेत् ।
पुण्याहजयशब्देन मन्त्रमेतन्निशामयेत् ॥
दिव्यान्तरीक्षभूमिष्ठाः सन्त्वायुर्दाः सुराश्च ते ।
देवसिद्धिं प्राप्नुहि त्वं देवयात्राऽस्तु सा तव ॥
रक्षन्तु देवताः सर्वा इति श्रुत्वा नृपो व्रजेत् ।
गृहीत्वा सशरं चापं धनुर्नागेति मन्त्रतः ॥
तद्विष्णोरिति जप्त्वाऽथ दद्याद्रिपुमुखे पदम् ।
दक्षिणं पदं द्वात्रिंशद्दिक्षु प्राच्यादिषु क्रमात् ॥
नागं रथं हयं चैव धुर्यांश्चैवाऽऽरुहेत् क्रमात् ।
आरुह्य वाद्यैर्गच्छेत पृष्ठतो नावलोकयेत् ॥
क्रोशमात्रं गतस्तिष्ठेत् पूजयेद्देवता द्विजान् ।
परदेशं व्रजेत् पश्चादात्मसैन्यं हि पालयन् ॥

सङ्ग्रामदिनाव्यह्नितपूर्वस्मिन् दिने कर्तव्यानि कर्माणि

द्वितीयेऽहनि सङ्ग्रामो भविष्यति यदा तदा ।
स्नापयेद् गजमश्वादि यजेद्देवं नृसिंहकम् ॥
छत्रादिराजलिङ्गानि शस्त्राणि निशि वै गणान् ।
प्रातर्नृसिंहकं पूज्य वाहनाद्यमशेषतः ॥
पुरोधसा हुतं पश्येद् वह्निं हुत्वा द्विजान् यजेत् ।
गृहीत्वा सशरं चापं गजाद्यारुह्य वै व्रजेत् ॥

पुष्कर उवाच—

[1]राज्यलक्ष्मीस्थिरत्वाय यथेन्द्रेण पुरा श्रियः ।
स्तुतिः कृता तथा राजा जयार्थं स्तुतिमाचरेत् ॥

इन्द्र उवाच—

नमस्ये सर्वलोकानां जननीमब्धिसंभवाम् ।
श्रियमुन्निद्रपद्माक्षीं विष्णुवक्षःस्थलस्थिताम् ॥
त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनि ।
संध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वती ॥
यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च ।
सौम्या सौम्यं जगद्रूपं त्वयैतद्देवि पूरितम् ॥
का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः ।
अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः ॥
त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ।
विनष्टप्रायमभवत्त्वयेदानीं समेधितम् ॥
दाराः पुत्रास्तथाऽगारं सुहृद्धान्यधनादिकम् ।
भवत्येतन्महाभागे नित्यं त्वद्वीक्षणान्नृणाम् ॥
शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम् ।
देवि त्वद्दृष्टिदृष्टानां पुरुषाणां न दुर्लभम् ॥
त्वमम्बा सर्वभूतानां देवदेवो हरिः पिता ।
त्वयैतद्विष्णुना चाम्ब जगद् व्याप्तं चराचरम् ॥
मानं कोषं तथा कोष्ठं मा गृहं मा परिच्छदम् ।
मा शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥
मा पुत्रान् मा सुहृद्वर्गान् मा पशून् मा विभूषणम् ।
त्यजेथा मम देवस्य विष्णोर्वक्षःस्थलालये ॥

(१) अग्नि० २३७।१–१९.

सत्येन समशौचाभ्यां तथा शीलादिभिर्गुणैः ।
त्यज( ? ज्य )न्ते ते नराः सद्यः संत्यक्ता ये त्वयाऽमले ॥

त्वयाऽवलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः ।
कुलैश्वर्यैश्च युज्यन्ते पुरुषा निर्गुणा अपि ॥
स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ।
स शूरः स च विक्रान्तो यस्त्वया देवि वीक्षितः ॥

सद्यो वैगुण्यमायान्ति शीलाद्याः सकला गुणाः ।
पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥
न ते वर्णयितुं शक्ता गुणान् जिह्वाऽपि वेधसः ।
प्रसीद देवि पद्माक्षि नास्मांस्त्याक्षीः कदाचन ॥

पुष्कर उवाच–

एवं स्तुता ददौ श्रीश्च वरमिन्द्राय चेप्सितम् ।
सुस्थिरत्वं च राज्यस्य सङ्ग्रामविजयादिकम् ॥
स्वस्तोत्रपाठश्रवणकर्तृणां भुक्तिमुक्तिदम् ।
श्रीस्तोत्रं सततं तस्मात् पठेच्च शृणुयान्नरः ॥

युद्धसंभाराभिमन्त्रणम्

पुष्कर उवाच–

[१]छत्रादिमन्त्रान् वक्ष्यामि यैस्तत् पूज्य जयादिकम् ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥
सूर्यस्य च प्रभावेण वर्धस्व त्वं महामते ।
पाण्डराभप्रतीकाश हिमकुन्देन्दुसुप्रभ ॥
यथाऽम्बुदश्छादयते शिवायैनां वसुंधराम् ।
तथाऽऽच्छादय राजानं विजयारोग्यवृद्धये ॥
गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥
प्रभावाच्च हुताशस्य वर्धस्व त्वं तुरंगम ।
तेजसा चैव सूर्यस्य मुनीनां तपसा तथा ॥
रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ।
स्मर त्वं राजपुत्रोऽसि कौस्तुभं तु मणिं स्मर ॥
यां गतिं ब्रह्महा गच्छेत् पितृहा मातृहा तथा ।
भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥
व्रजेस्त्वं तां गतिं क्षिप्रं मा तत्पापं भवेत्तव ।
विकृतिं माऽपगच्छेस्त्वं युद्धेऽध्वनि तुरंगम ॥
रिपून् विनिघ्नन् समरे सह भर्त्रा सुखी भव ।
शक्रकेतो महावीर्य सुपर्णस्त्वामुपाश्रितः ॥
पतत्रिराड् वैनतेयस्तथा नारायणध्वजः ।
काश्यपेयोऽमृताहर्ता नागारिर्विष्णुवाहनः ॥
अप्रमेयो दुराधर्षो रणे देवारिसूदनः ।
महाबलो महावेगो महाकायोऽमृताशनः ॥
गरुत्मान् मारुतगतिस्त्वयि संनिहितः स्थितः ।
विष्णुना देवदेवेन शक्रार्थं स्थापितो ह्यसि ॥
जयाय भव मे नित्यं वृद्धयेऽथ बलस्य च ।
साश्ववर्मायुधान् योधान् रक्षास्माकं रिपून् दह ॥
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥
तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः ।
भद्रो मन्दो मृगश्चैव गजः संकीर्ण एव च ॥
वने वने प्रसूतास्ते स्मर योनिं महागजाः ।
पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ॥
भर्तारं रक्ष नागेन्द्र समयः परिपाल्यताम् ।
ऐरावताधिरूढस्तु वज्रहस्तः शतक्रतुः ॥
पृष्ठतोऽनुगतस्त्वेष रक्षतु त्वां स देवराट् ।
अवाप्नुहि जयं युद्धे सुस्थश्चैव सदा व्रज ॥
अवाप्नुहि बलं चैव ऐरावतसमं युधि ।
श्रीस्ते सोमाद् बलं विष्णोस्तेजः सूर्याज्जवोऽनिलात् ॥
स्थैर्यं गिरेर्जयं रुद्राद्यशो देवात् पुरंदरात् ।
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ॥
अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतो दिशः ।
मनवो वसवो रुद्रा वायुः सोमो महर्षयः ॥

(१) अग्नि. २६९।१–२९.

नागकिन्नरगन्धर्वयक्षभूतगणा ग्रहाः ।
प्रमथास्तु सहाऽऽदित्यैर्भूतेशो मातृभिः सह ॥
शक्रः सेनापतिः स्कन्दो वरुणश्चाऽऽश्रितस्त्वयि ।
प्रदहन्तु रिपून् सर्वान् राजा विजयमृच्छतु ॥
यानि प्रयुक्तान्यरिभिर्दूषणानि समन्ततः ।
पतन्तु तव शत्रूणां हतानि तव तेजसा ॥
कालनेमिवधे यद्वद्युद्धे त्रिपुरघातने ।
हिरण्यकशिपोर्युद्धे वधे सर्वासुरेषु च ॥
शोभिताऽसि तथैवाद्य शोभस्व समयं स्मर ।
नीलश्वेतामिमां दृष्ट्वा नश्यन्त्वाशु नृपारयः ॥
व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ।
पूतना रेवती लेखा कालरात्रीति पठ्यते ॥
दहन्त्वाशु रिपून् सर्वान् पताके त्वामुपाश्रिताः ।
सर्वमेधे महायज्ञे देवदेवेन शूलिना ॥
शर्वेण जगतश्चैव सारेण त्वं विनिर्मितः ।
नन्दकस्यापरां मूर्तिं स्मर शत्रुनिबर्हण ॥
नीलोत्पलदलश्याम कृष्ण दुःस्वप्ननाशन ।
असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ॥
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च ।
इत्यष्टौ तव नामानि पुरोक्तानि स्वयंभुवा ॥
नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ।
हिरण्यं च शरीरं ते दैवतं ते जनार्दनः ॥
राजानं रक्ष निस्त्रिंश सबलं सपुरं तथा ।
पिता पितामहो देवः स त्वं पालय सर्वदा ॥
शर्मप्रदस्त्वं समरे वर्म सैन्ये यशोऽद्य मे ।
रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते ॥
दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः ।
भव भूमिपसैन्यानां यथा विजयवर्धनः ॥
यथा जीमूतघोषेण हृष्यन्ति वरवारणाः ।
तथाऽस्तु तव शब्देन हर्षोऽस्माकं मुदावह ॥
यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते ।
तथा तु तव शब्देन त्रस्यन्त्वस्मद्द्विषो रणे ॥
मन्त्रैः सदाऽर्चनीयास्ते योजनीया जयादिषु ।
कृतरक्षश्च विष्ण्वादेस्त्वभिषेकश्च वत्सरे ॥
राज्ञोऽभिषेकः कर्तव्यो दैवज्ञेन पुरोधसा ॥

## योगयात्रा

### दिक्पतिभ्यः बल्युपहारः

[1]पुरुहूतहुताशयमा निर्ऋति-
वरुणानिलयक्षशिवाश्च दिशाम् ।
पुनरर्कसितारतमोरविजाः
शशिसौम्यबृहस्पतयः पतयः ॥

शच्या सहैरावणगः सवज्रो
हैमोऽथवा दारुमयो महेन्द्रः ।
विचित्रमाल्यध्वजरक्तचन्दनैः
सौम्योपहारेण स पूजनीयः ॥

अथ मन्त्रमभीषुणः सखीना-
मिति जप्त्वा पुरतः पुरंदरस्य ।
पुरुहूतदिशं नृपोऽभियुञ्ज्यात्
पुरुहूतं हृदये निवेश्य सम्यक् ॥

ताम्रजा प्रतिकृतिः सहस्रगो
रक्तचन्दनकृतानुलेपना ।
रक्तवस्त्रकुसुमध्वजार्चिता
सूर्यकान्तमणिभिर्विभूषिता ॥

आकृष्णपूर्वं यदि वाऽप्युदुत्यं
मन्त्रं समावर्त्य रवेः पुरस्तात् ।
क्षीरौदनेन प्रतिपूज्य यायात्
प्राचीं पुरस्कृत्य दिनेशशक्रौ ॥

अग्नेस्तनुः कनकेनैव कार्या
रक्तो ध्वजः कुसुमं चन्दनं च ।
आज्यं बलिं हुतभुग्दिग्जिगीषो-
र्मन्त्रं घृतं घृतयोनेः पठेच्च ॥

कार्यश्चित्रो दितिसुतगुरुर्वा यमो(?)
वाऽर्धकायो
नानारूपाः कुसुमवलयस्तत्र चित्रो
ध्वजश्च ।

---

(१) योया. ६।१–२१.

शुक्रज्योतिः प्रभृति च जपेन्मन्त्रमस्या-
ग्रतस्तौ
कृत्वा यायाद् भृगुजदहनौ जेतु-
मिच्छुस्तदाशाम् ॥

अयोमयं प्रोद्यतदण्डहस्तं
यमं सकृष्णध्वजपुष्पगन्धैः ।
तिलोदनैरर्च्य समांसमद्यै-
र्यमेन दत्तं च जपोऽस्य कार्यः ॥

मूर्तिः स्याद्रुधिराक्षसंज्ञमणिना भौमस्य
रक्ता स्रजो
रक्तानि ध्वजचन्दनानि कुसुमैः
पक्वान्नमांसैर्बलिः ।
अग्निर्मूर्धपदैः स्तुतिः क्षितिसुतस्यैवं
यमाङ्गारकौ
दिङ्नाथौ गमनेऽग्रतो नरपतिः
कृत्वा व्रजेद् दक्षिणाम् ॥

भैरवा प्रतिकृतिः पटे कृता
सर्वगन्धफलपुष्पपूजिता ।
एष ते निर्ऋतिमन्त्रचोदना
कृष्णरक्तकुसुमध्वजाम्बरा ॥

सुरदारुमयः शशाङ्कशत्रुः
कुसुमाद्यैरसितैः कृतोपहारः ।
निर्ऋतिसहितः स्वदिक्प्रयाणे
स्तुतिमन्त्रोऽस्य च कीर्तितः कया नः ॥

पश्चाद् व्रजेद् रजतमयं जलेश्वरं
पाशान्वितं सह गदया च पूजि-
तम् ।
कृत्वौदनैर्बलिमपि पावकान्वितं
ये ते शतं वरुण इति स्तुयाद्
द्विजः ॥

शौरेरर्चा नीलकाचा कृशाङ्गी
पूज्या कृष्णैर्वस्त्रमाल्योपहारैः ।
शं नो देवीत्येष मन्त्रोऽपराशां
जेतुं यायात् तौ पुरस्कृत्य देवौ ॥

वायोर्मूर्तिः श्वेतमृद्भिर्विधेया
पूज्या श्वेतैः पुष्पवस्त्रध्वजाद्यैः ।
मन्त्रो वातो वा मनो वेति जप्यो
वायव्याशां प्रस्थितस्येश्वरस्य ॥

मन्त्रः सोमस्याऽऽप्यायस्वे-
त्यन्यच्छ्वेतं स्रग्वस्त्राद्यम् ।
वायुं सोमं चाग्रेकृत्वा
यायाद्राजा वायोः काष्ठाम् ॥

हाटकमूर्तिं कुर्याद्धनदस्य
विभूषितां रत्नैः ।
सर्वैः सगदां च पूजितां
स्रग्वस्त्राद्यैश्च विचित्रैः ॥

रक्षसां भागोऽसीत्येष मन्त्रः ॥

सौवर्णे रजतासने नृमिथुनं चन्द्रात्म-
जस्येष्यते
हारिद्रौदनमिष्टगन्धकुसुमैर्वस्त्रैश्च
संपूजितम् ।
उद्बुध्यस्व जपश्च तस्य कथितः स्याद्
ब्रह्मयज्ञादिना
गच्छेदुत्तरतो धनेश्वरबुधौ ध्यायन्
पुरस्कृत्य च ॥

गोत्वग्जा प्रतिभैरवा प्रतिकृतिर्भस्मोत्कटा
शूलिनो
दध्ना चौदनसंयुतेन बलिभिर्मन्त्रो
नमः शंभवे ।
मूर्तिः स्यान्मणितो गुरोर्विमलकात् पीतं
तु वस्त्रादिकं
मन्त्रश्चास्य बृहस्पतेरिति तयोर्याया-
द्दिशं पूज्य तौ ॥

दिङ्नाथं कुलदेवतां स्वनगरे येषां
कृताश्चाऽऽलया-
स्तान् संपूज्य यथानुरूपबलिभि-
र्दद्याद् बलिं भौतिकीम् ।

कृत्वा पायसमद्यमांसपललैर्भक्ष्यैश्च नाना-
विधै-
र्बालक्रीडनकैः सुगन्धकुसुमैर्मूलैः
फलैः स्वादुभिः ॥
नमोऽस्तु वः शक्रहुताशदण्डभृ-
त्क्षपाचराम्भःपतिमातरिश्वनाम् ।
कुबेररुद्राहिसुपर्णशक्तिभृ-
त्पिशाचदैत्यानुचराश्च ये गणाः ॥
रथ्यापुरद्वारनदीतटेषु
चतुष्पथाट्टालकनिष्कुटेषु ।
गुहैकवृक्षाद्रिषु ये वसन्ति
ते पूजनीयाः प्रमथा यथावत् ॥
कुसुमशरशरीरस्पर्धिनः कामरूपा
विविधसुरभिवस्त्राः स्रग्विणो-
ऽसह्यवीर्याः ।
पवनसदृशवेगा मानिनोऽत्यन्तहृष्टा-
स्तरुणदिनकरत्विट्स्पर्धि तेजो
दधानाः ॥
लम्बक्रोडा ह्रस्वा दीर्घाः
खञ्जैकाक्षाः शुष्काः स्थूलाः ।
नानापक्षिव्यालोष्ट्रास्या
वक्त्रैर्हीनाः क्रोडास्याश्च ॥
बहुवक्त्रशिरोभुजपाददृशः
कृकलासभुजंगकृताभरणाः ।
विकटा मुकुटोत्कटरत्नभृत-
स्तरुणार्कतडिद्धुतभुक्कपिलाः ॥
भ्रमरतमालद्विपगवलाभाः
क्षितिधरमेघप्रतिमशरीराः ।
अशनिनिपातस्वनसमनादा
द्रुतगमने च श्वसनमनोगाः ॥
असिमुसलगदाश्मशक्तिशूल-
द्रुमशरासनबाणचक्रहस्ताः ।
कणपपरिघकुन्तमुष्टिमाया
लगुडकुठारशतघ्निधारिणश्च ॥

गृह्णन्तु प्रमथगणा बलिं सभूता
भूभर्त्रा विजिगीषुणा निवेदितं वः ।
जित्वाऽरीन् द्विगुणमतो बलिं विचित्रं
दास्यामः स्वविषयमेत्य वः
प्रसादात् ॥
राजा वः शरणमुपागतः सभृत्यो
सामात्यः ससुतकलत्रमित्रबन्धुः ।
रक्षार्थं मनुजपतेः सहायकृत्यं
कुर्वीध्वं रिपुबलसंक्षयाय चास्य ॥
स्वप्ने निमित्तमथवा मनुजेश्वरस्य
यच्छध्वमेकतममस्य जयाजयाय ।
एवं भवत्युपकृतं सुमहद् भवद्भिः
कार्यं करिष्यति यथा भवतां
प्रसादात् ॥

नक्षत्रेषु विजयस्नानप्राशनानि

[1]मदयन्तिकाऽश्वगन्धा
मदनफलवचामधूनि शस्यन्ते ।
प्रथमर्क्षे भरणीषु च
सिद्धार्थकभद्रदारुवचाः ॥
न्यग्रोधशिरीषाश्वत्थ-
पत्रगन्धाश्च कृत्तिकास्नाने ।
बहुबीजशस्ततोयै-
र्जयार्थिनो रोहिणीस्नानम् ॥
मुक्ताकाञ्चनमणिसं-
युक्तेनाम्भसा मृगाङ्कर्क्षे ।
रौद्रे वचाश्वगन्धा-
प्रियङ्गुमिश्रैर्जलैः कथितम् ॥
आदित्ये गोमयगोष्ठ-
मृद्भिरथ गौरशालिभिः पुष्ये ।
सिद्धार्थद्विसहस्रैः
प्रियङ्गुमदयन्तिकाभिश्च ॥

(१) योया. ७।१–२२.

वल्मीकशतान्मृद्भि-
र्नागैः पित्र्ये तु देवनिर्माल्यैः ।
पूर्वासु च फाल्गुनीषु
च सलवणघृतशाद्वलैः प्रोक्तम् ॥

शतपुष्पया प्रियङ्ग्वा
मुस्ताभिश्चोत्तरासु कुर्वीत ।
हस्ते सरोगिरिमृदा
चित्रायां देवनिर्माल्यैः ॥

स्वातौ जलरुहकुसुमै-
रैन्द्राग्नेर्मुस्तपद्मकक्षौद्रैः ।
मैत्रे सरिदुभयमृदा
हरितालमृदा च माहेन्द्रे ॥

भद्रासने शमीमय-
पत्रसहस्रद्वयाम्बुभिर्मूले ।
समधूकपद्ममत्स्यैः
स्नानमषाढासु पूर्वासु ॥

कुर्यादुशीरचन्दन-
पद्मकमिश्रेण वारिणा वैश्वे ।
नद्युभयकूलसंगम-
मृत्कनकैः कीर्त्यते श्रवणे ॥

घृतभद्रदारुमधुभि-
श्च वासवे वारुणे घृतक्षौद्रैः ।
समदनफलसहदेवा-
म्बुशूकमदयन्तिकामिश्रैः ॥

श्रीवासकः प्रियङ्गु-
श्चाऽऽजे स्यादुत्तरास्वगुरुगन्धाः ।
शस्ताः सपद्मकोशी-
रचन्दना मानवेन्द्राणाम् ॥

रेवत्यां वृषभद्विप-
विषाणकोशैश्च सर्पिमधुपूर्णैः ।
गोरोचनाञ्जनयुतैः
सलिलैश्च यियासतः पुंसः ॥

गिरिवल्मीकनदीमुख-
कूलद्वयशक्रपादमृद्भिरतः ।
द्विपवृषविषाणपार्थिव-
गणिकाद्वाराहृताभिश्च ॥

गिरिशिखरान्मूर्धानं
वल्मीकमृदा च शोधयेत् कर्णौ ।
नद्युभयकूलसंगम-
मृद्भिः प्रक्षालयेत् पार्श्वे ॥
इन्द्रस्थानाद् ग्रीवां
बाहू करिवृषभयोर्विषाणाग्रात् ।
हृदयं नृपद्वारात्
कटिमपि वेश्यागृहद्वारात् ॥

अक्षतमाषाः स्विन्ना-
स्तिलसहितास्तण्डुला दधि च
गव्यम् ।
वृषभपिशितं मृगस्य च
पञ्चानामश्विनादीनाम् ॥
रुधिरविलापनपायस-
विहंगमांसानि शांकरादीनाम् ।
पित्र्ये तिलौदनं षा-
ष्टिकान्नमृक्षद्वये परतः ॥

प्राश्याः प्रियङ्गुचित्रा-
ण्डजाः पलं यावकं कुलत्थाश्च ।
मधुसर्पिषी हस्ता-
न्मूलाम्भः सक्तवोऽपि मूलात् ॥
श्रवणादीनां मध्या-
च्छाकं शालिर्बिडालमांसं वा ।
आजं यथेष्टमांसं
सुसक्तवो माषसंपृक्ताः ॥
प्राचीं गजेन यायाद्
रथेन याम्यां हयेन वारुण्याम् ।
नरयानेनोदीचीं
सर्वे दत्त्वा दिगीशायाः ॥

प्राच्यादि घृतं तिलौदनं
मत्स्यान् क्षीरमिति प्रदक्षिणम् ।
अद्यान्नृपतिर्यथादिशं
नक्षत्राभिहितं च सिद्धये ॥

अस्वादु च्युतकचमक्षिकानुविद्धं
दुर्गन्धि क्षयकृदभूरि यच्च दग्धम् ।
सुस्विन्नं शुचिरुचिरं मनोनुकूलं
स्वाद्वन्नं बहुविजयाय यानकाले ॥

[1]अन्तःपुराद्वा स्वनिवेशनाद्वा
सिंहासनादग्निपरिग्रहाद्वा ।
कुर्यान्नरेन्द्रः प्रथमं प्रयाणं
विप्रैः शताग्र्यैः कृतमङ्गलाशीः ॥

द्विजो विष्णुक्रमाद् भूपं मन्त्रेणानेन यापयेत् ।
इदं विष्णुर्विचक्रम इत्येवं पादमुद्वहेत् ॥
अमुकस्य वधायेति दक्षिणं क्षितिपो न्यसेत् ।
मङ्गलानि ततः पश्यन् स्पृशञ् शृण्वन् नृपो व्रजेत् ॥

## युक्तिकल्पतरुः

### यात्राविधिः

[2]राज्ञां यात्राविधिं वक्ष्ये जिगीषूणां परावनीम् ।
नीराजनाविधिं कृत्वा सैनिकांश्चाऽऽनयेत्ततः ।
गजानन्यान् मृगानन्यानिति यात्राक्रमो मतः ॥

(१) योया. १३।१–३.
(२) युक. १७८।८८.

## मानसोल्लासः

### नक्षत्रदोहदम्

[1]बहुलासु दधि प्राश्यं ब्राह्म्यां च घृतपायसम् ।
ऐन्दवे माषवटिका रौद्रे च मधुरं दधि ॥

पुनर्वसौ पटोलानि पुष्ये सर्पिश्च पायसम् ।
सर्पधिष्ण्ये तिला भक्ष्या मघासु कृशरोदनम् ॥

पायसं पूर्वफाल्गुन्यामर्यम्णे शाकभोजनम् ।
यावकं पाणिनक्षत्रे चित्रायां चित्रभोजनम् ॥

स्वात्यां धात्रीफलं खाद्यं द्विदैवे गुडभक्तकम् ।
कुलत्थान् मित्रनक्षत्रे यावकं शक्रदैवते ॥

मूले मूलकमास्वाद्यं पूर्वाषाढे घनं दधि ।
उत्तरायां जलं शीतं श्रवणे श्लक्ष्णसक्तवः ॥

शालिभक्तं धनिष्ठायां वारुणर्क्षे च शष्कुलीः ।
पूर्वाभाद्रपदे क्षौद्रं बीजपूरं तथोत्तरे ॥

रेवत्यां सिद्धमुद्गाः स्युरश्विन्यां स्वादु भोजनम् ।
भरण्यां सतिलं तोयं प्राश्य याता सुखी भवेत् ॥ *

* यात्रादौ कर्तव्यानि नीराजनशान्ति–घृतकम्बलशान्ति–जयाभिषेकस्नानादिकर्माणि 'राज्ञो धार्मिककृत्यानि' इत्यस्मिन् प्रकरणे संगृहीतानि ।

(१) मासो. २।८०४–८१०.

# यात्रा- अभियास्यतो राज्ञः कर्तव्यानि

## शङ्खलिखितौ

सातत्येन विविधसाधनसंपन्नस्य साधनगुणदोषज्ञस्य राज्ञः सार्वभौमस्यैव अभियास्यतः अश्वमेधसंकल्पपूर्वकं परराष्ट्रे अभियानं युद्धं च कर्तव्यम्

[1]राजक्रतुरेवाश्वमेधः । तं नासार्वभौमः प्रतिपादयितुमर्हति । 'अश्वमेधेन यक्ष्ये' इति परविषयमभियायाद् देशकालशक्तिसंपन्नः प्रभूतयवसेन्धनोदकाविच्छिन्नसांपरायिकः पथि संविहितसर्वोपकरणो दुर्गासारामात्यदेशदण्डाक्रन्दाद्यगुणविधिज्ञः पर्षदं प्रति नयवान् । विदितमध्वानं हितमनुक्रामेत् । यथा भूमिभागस्तथा विनियोगः श्रेयान् । पानभोजनोपनिवेशास्थानशङ्काप्रतिविधानकुशलो भूपतिरवहितः शत्रुणा सह युध्येत् ॥

## महाभारतम्

बहुगुणबलसंपन्नो राजा अल्पगुणबलवति अभियानार्हः

[2]अक्षौहिण्यो हि मे राजन् दशैका च समाहृताः ।
न्यूनाः परेषां सप्तैव कस्मान्मे स्यात् पराजयः॥
बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः ।
परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी ॥

त्रिगुणतः त्र्यंशेन हीनम् । त्रिगुणा त्र्यंशेनाधिका ।

नीटी.

गुणहीनं परेषां च बहु पश्यामि भारत ।
गुणोदयं बहुगुणमात्मनश्च विशां पते ॥
एतत्सर्वं समाज्ञाय बलाग्र्यं मम भारत ।
न्यूनतां पाण्डवानां च न मोहं कर्तुमर्हसि ॥

---

(१) राक. १२५ वेशस्था (वेशः स्था) ; राप्र. ४०२.

(२) भा. ५।५४।६२–६५ ; भामु. ५।५५।६५–६८.

सेनाया उत्साहः जयलक्षणम्, हर्षरहिता महती अपि सेना पराजयाय, युद्धविजयः जघन्यः

[1]अल्पायां वा महत्यां वा सेनायामिति निश्चितम् ।
हर्षो योधगणस्यैकं जयलक्षणमुच्यते ॥

[2]एको दीर्णो दारयति सेनां सुमहतीमपि ।
तं दीर्णमनुदीर्यन्ते योधाः शूरतमा अपि ॥

[3]दुर्निवारतमा चैव प्रभग्ना महती चमूः ।
अपामिव महावेगस्त्रस्ता मृगगणा इव ॥

[4]नैव शक्या समाधातुं संनिपाते महाचमूः ।
दीर्णा इत्येव दीर्यन्ते योधाः शूरतमा अपि ।
भीतान् भग्नांश्च संप्रेक्ष्य भयं भूयो विवर्धते ॥

[5]प्रभग्ना सहसा राजन् दिशो विभ्रामिता परैः ।
नैव स्थापयितुं शक्या शूरैरपि महाचमूः ॥

[6]संभृत्य महतीं सेनां चतुरङ्गां महीपतिः ।
उपायपूर्वं मेधावी यतेत सततोत्थितः ॥

---

(१) भा. ६।४।२६ ; भामु. ६।३।७५ निश्चितम् (निश्चयः) स्यैकं (स्यैको).

(२) भा. ६।४।२७ ; भामु. ६।३।७६ तं दीर्ण (तां दीर्णा) तमा (तरा).

(३) भा. ६।४।२८ ; भामु. ६।३।७७ वारतमा (वर्त्या तदा) वेग (वेगा).

(४) भा. ६।४।२९ ; भामु. ६।३।७८–७९ द्वितीयार्धे (दीर्णामित्येव दीर्यन्ते सुविद्वांसोऽपि भारत ।) यो वि (योऽभि).

(५) भा. ६।४।३० ; भामु. ६।३।७९–८० विभ्रामिता परैः (विद्रवते चमूः).

(६) भा. ६।४।३१ ; भामु. ६।३।८० संभृत्य (सत्कृत्य).

[1]उपायविजयं श्रेष्ठमाहुर्भेदेन मध्यमम् ।
जघन्य एष विजयो यो युद्धेन विशां पते ।
महादोषः संनिपातस्ततो व्यङ्गः स उच्यते ॥

उपायविजयं लाभपूर्वकं जयम् । साम्ना प्रार्थनया, दानेन वा शत्रुणा वाचा प्रार्थितस्य धनेन वा संतर्पितस्य मुख्यो जयः, शत्रुं भेदयतः मध्यमः, निघ्नतः अधम इत्यर्थः । संनिपातः योधानां संघर्षः । नीटी.

[2]परस्परज्ञाः संहृष्टा व्यवधूताः सुनिश्चिताः ।
पञ्चाशदपि ये शूरा मथ्नन्ति महतीं चमूम् ।
अथ वा पञ्च षट् सप्त विजयन्त्यनिवर्तिनः ॥

व्यवधूताः दारादिष्वनासक्ताः । नीटी.

[3]न वैनतेयो गरुडः प्रशंसति महाजनम् ।
दृष्ट्वा सुपर्णोऽपचितिं महतीमपि भारत ॥

शूराणां सहायसंपत्तिर्नापेक्षितेत्यत्र दृष्टान्तमाह– न वैनतेय इति । महत्या अपि सेनाया अपचितिं प्रतिकारं नाशं वा एकेनैवाऽऽत्मना कर्तुं शक्यं दृष्ट्वा आलोच्य सुपर्णः शोभनपतत्रः गरुडः नामतः, वैनतेयः विनतायाः पुत्रः महाजनं बहुजनसमूहं न प्रशंसति न कामयते इत्यर्थः । 'भवेदपचितिः पूजाव्ययनिष्कृतिहानिषु' इति मेदिनी । शूराणां न सहायापेक्षाऽस्तीति अक्षौहिणीबाहुल्यान्मत्पुत्राणां जयोऽवश्यंभावीति त्वया न मन्तव्यमिति भावः । नीटी.

[4]न बाहुल्येन सेनाया जयो भवति भारत ।
अध्रुवो हि जयो नाम दैवं चात्र परायणम् ।
जयन्तो ह्यपि सङ्ग्रामे क्षयवन्तो भवन्त्युत ॥

(१) भा. ६।४।३२ ; भामु. ६।३।८१–८२ तृतीयार्धे (महान् दोषः संनिपातस्तस्याऽऽद्यः क्षय उच्यते ॥).
(२) भा. ६।४।३३ ; भामु. ६।३।८२–८३ द्वितीयार्धे (अपि पञ्चाशतं शूरा मृद्नन्ति महतीं चमूम् ।) अथ (अपि).
(३) भा. ६।४।३४ ; भामु. ६।३।८४ र्णोप (र्णोऽप) तीमपि (त्या अपि).
(४) भा. ६।४।३५ ; भामु. ६।३।८५ भारत (नित्यशः) तृतीयार्धे (जयवन्तो हि सङ्ग्रामे कृतकृत्या भवन्ति हि ॥).

*[1]यात्रां यायादविज्ञातमनाक्रन्दमनन्तरम् ।
व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः ॥
[2]यात्रामाज्ञापयेद् वीरः कल्यपुष्टबलः सुखी ।
पूर्वं कृत्वा विधानं च यात्रायां नगरे तथा ॥

अभियाने स्वपरशक्तिचिन्तनं श्रेयस्करम्

धृतराष्ट्र उवाच–
$[3]संधिविग्रहमप्यत्र पश्येथा राजसत्तम ।
द्वियोनिं त्रिविधोपायं बहुकल्पं युधिष्ठिर ॥
राजेन्द्र पर्युपासीथाश्छित्त्वा द्वैविध्यमात्मनः ।
तुष्टपुष्टबलः शत्रुरात्मवानिति च स्मरेत् ॥
पर्युपासनकाले तु विपरीतं विधीयते ।
आमर्दकाले राजेन्द्र व्यपसर्पस्ततो वरः ॥
व्यसनं भेदनं चैव शत्रूणां कारयेत्ततः ।
कर्शनं भीषणं चैव युद्धे चापि बहुक्षयम् ॥
प्रयास्यमानो नृपतिस्त्रिविधं परिचिन्तयेत् ।
आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ॥
उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत ।
उपपन्नो नरो यायाद् विपरीतमतोऽन्यथा ॥

षण्णां मौलमित्राटवीभृतश्रेणीचारबलानां विवेकः, आपद्विचारः कालविचारश्च

[4]आददीत बलं राजा मौलं मित्रबलं तथा ।
अटवीबलं भृतं चैव तथा श्रेणीबलं च यत् ॥

* श्लोकद्वयस्य व्याख्यानम् 'षाड्गुण्यम्– सामान्यविचारः' इत्यस्मिन् प्रकरणे (पृ. २००५) द्रष्टव्यम् ।
$ एतदादिश्लोकषट्कस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'षाड्गुण्यम्– सामान्यविचारः' इत्यस्मिन् प्रकरणे (पृ. २०५४) संगृहीतः ।

(१) भा. १२।६९।१९ ; भामु. १२।६९।१९ यात्रां यायादवि (यात्रायां यदि वि).
(२) भा. १२।६९।२० ; भामु. १२।६९।२० कल्य (कल्यः).
(३) भा. १५।१२।१–६.
(४) भा. १५।१२।७ ; भामु. १५।७।७ च यत् (प्रभो).

मौलं धनबलम् । नीटी.

[1]तत्र मित्रबलं राजन् मौलेन न विशिष्यते ।
श्रेणीबलं भृतं चैव तुल्य एवेति मे मतिः ॥

[2]तथा चारबलं चैव परस्परसमं नृप ।
विज्ञेयं बलकालेषु राज्ञा काल उपस्थिते ॥

[3]आपदश्चापि बोद्धव्या बहुरूपा नराधिप ।
भवन्ति राज्ञां कौरव्य यास्ताः पृथगतः शृणु ॥

[4]विकल्पा बहवो राजन्नापदां पाण्डुनन्दन ।
सामादिभिरुपन्यस्य शमयेत्तान्नृपः सदा ॥

विकल्पाः ईतिप्रभृतयः । तान् उपन्यस्य गणयेत्, न तु गोपयित्वा अवहेलयेत् । नीटी.

[5]यात्रां यायाद्बलैर्युक्तो राजा षड्भिः परंतप ।
संयुक्तो देशकालाभ्यां बलैरात्मगुणैस्तथा ॥

[6]तुष्टपुष्टबलो यायाद्राजा वृद्ध्युदये रतः ।
आहूतश्चाप्यथो यायादनृतावपि पार्थिवः ॥

अनृतौ अकालेऽपि शिशिरादौ । नीटी.

नदीतरणयुक्तिः, त्रिविधा व्यूहाः

[1]स्थूणाश्मानं वाजिरथप्रधानां
ध्वजद्रुमैः संवृतकूलरोधसम् ।
पदातिनागैर्बहुकर्दमां नदीं
सपत्ननाशे नृपतिः प्रयायात् ॥

[2]अथोपपत्त्या शकटं पद्मं वज्रं च भारत ।
उशना वेद यच्छास्त्रं तत्रैतद्विहितं विभो ॥

शकटादयो व्यूहविशेषाः । नीटी.

युद्धकर्तव्यता स्वभूमौ परभूमौ वा

[3]सादयित्वा परबलं कृत्वा च बलहर्षणम् ।
स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च ॥

[4]लब्धं प्रशमयेद्राजा निक्षिपेद्धनिनो नरान् ।
ज्ञात्वा स्वविषयं तं च सामादिभिरुपक्रमेत् ॥

[5]सर्वथैव महाराज शरीरं धारयेदिह ॥

## वाल्मीकिरामायणम्

बलविचारः

[6]अवश्यं बलसंख्यानं कर्तव्यं युद्धलिप्सुना ॥

---

(१) भा. १५।१२।८ ; भामु. १५।७।८ मौलेन न (मौलं चैव) तुल्य (तुल्ये).

(२) भा. १५।१२।९ ; भामु. १५।७।९ चार (ऽऽचार) बल (बहु).

(३) भा. १५।१२।१० ; भामु. १५।७।१० राज्ञां (राज्ञा).

(४) भा. १५।१२।११ ; भामु. १५।७।११ बहवो (बहुधा) शम (गण).

(५) भा. १५।१२।१२ ; भामु. १५।७।१२ याया (गच्छे) षड्भिः (सद्भिः) संयुक्तो (युक्तश्च).

(६) भा. १५।१२।१३ ; भामु. १५।७।१३ तुष्ट (हृष्ट) याया (गच्छे) आहूत (अकृश) पार्थिवः (पाण्डव).

(१) भा. १५।१२।१४ ; भामु. १५।७।१४ स्थूणा (तूणा) प्रधानां (प्रवाहां) यायात् (योजयेत्).

(२) भा. १५।१२।१५ ; भामु. १५।७।१५ पद्मं (पद्म) ; रार. ३६ पूर्वार्धे (अथोपयायाच्छकटं वज्रं पद्मं च पार्थिवः ।) हितं (दितं).

(३) भा. १५।१२।१६ ; भामु. १५।७।१६ साद (चार) च बलहर्षणम् (स्वबलदर्शनम्) ; रार. ३७ साद (वार) च बलहर्षणम् (स्वबलदर्शनम्).

(४) भा. १५।१२।१७ ; भामु. १५।७।१७ लब्धं प्रशम (बलं प्रसाद) द्धनि (द्बलि) तं च (तत्रं) ; रार. ३७ पूर्वार्धे (बलं प्रसादयेद्राजा निक्षिपेद्बलिनो बलान् ।) ज्ञात्वा (कृत्वा) तं च (तत्र).

(५) भा. १५।१२।१८ ; भामु. १५।७।१८ ; रार. ३७.

(६) वारा. ६।६।१७ ; वाराकु. ६।३०।१९ लिप्सुना (मिच्छताम्).

## कौटिलीयमर्थशास्त्रम्

अभियानं अवेक्षितायव्ययेन कर्तव्यम्

***[1]यात्रामभ्युत्थितो वा सेनामुद्योजयेत् । ततो वैदेहकव्यञ्जनाः सर्वपण्यान्यायुधीयेभ्यो यात्राकाले द्विगुणप्रत्यादेयानि दद्युः । एवं राजपण्यविक्रयो वेतनप्रत्यादानं च भवति ॥**

**एवमवेक्षितायव्ययः कोशदण्डव्यसनं नावाप्नोति ॥**

अभियानं विशिष्टबलस्यैव राज्ञः कर्तव्यम्

**[2]विजिगीषुरात्मनः परस्य च बलाबलं शक्तिदेशकालयात्राकालबलसमुत्थानकालपश्चात्कोपक्षयव्ययलाभापदां ज्ञात्वा विशिष्टबलो यायात् । अन्यथाऽऽसीत ॥**

अभियास्यतः पूर्वाधिकरणनिरूपितप्रकृतिव्यसनगुरुलघुभावज्ञानवत् शक्त्यादीनां बलाबलस्य ज्ञानमप्यपेक्षितमिति तन्निरूपणायेदमधिकरणमारभ्यतेऽभियास्यत्कर्माख्यम् । तत्रेदं प्रथमम् 'शक्तिदेशकालबलाबलज्ञानम्' इति सूत्रम् । शक्तेः उत्साहप्रभावमन्त्रलक्षणायाः देशस्य समविषमाद्यात्मकस्य कालस्य शीतोष्णादिरूपस्य च यत् बलं स्वसैन्यस्य युद्धयोग्यत्वम्, यच्च अबलं परसैन्यस्य युद्धायोग्यत्वम्, तयोर्ज्ञानं विचारः क्रियते इति सूत्रार्थः ।

शक्त्यादिज्ञानस्य यानं प्रति प्रयोजकतामन्वयव्यतिरेकाभ्यामाह— विजिगीषुरिति । स आत्मनः परस्य च विषये बलाबलं शक्त्यादीनां शक्तिदेशकालयात्राकालबलसमुत्थानकालानां बलं यानानुकूलत्वं तदनुष्ठाननिमित्तभूतम्, अबलं तद्विपरीतम्, पश्चात्कोपक्षयव्ययलाभापदां बलं यानाननुकूलत्वं यानपरिहारनिमित्तभूतम्, अबलं तद्विपरीतं च ज्ञात्वा परस्परतोऽन्यतश्च संप्रधार्य विशिष्टबलो यायात् परापेक्षयाऽऽत्मनो यानानुकूलशक्त्यादिविशेषयोगे सति यानमनुतिष्ठेत् । तत्र शक्त्यादिषु कालः कार्यानुरूपबलोपादानकालः, पश्चात्कोपः विजिगीषौ याते पश्चात् तस्य स्थानीयादौ पार्ष्णिग्राहादिभिर्दाहविलोपाद्यारम्भः, क्षयः युग्यपुरुषापचयः, व्ययः हिरण्याद्यपचयः, लाभः फलसिद्धिः, आपदः 'बाह्याभ्यन्तराश्चाऽऽपदः' इति सूत्रे व्याख्यास्यमानाः इति बोद्धव्यम् । अन्यथाऽऽसीतेति । विशिष्टबलत्वाभावे न यायादित्यर्थः । श्रीमूला.

उत्साहप्रभावयोः कस्य बलवत्तरत्वमिति चिन्ता

**उत्साहप्रभावयोरुत्साहः श्रेयान् । स्वयं हि राजा शूरो बलवानरोगः कृतास्त्रो दण्डद्वितीयोऽपि शक्तः प्रभाववन्तं राजानं जेतुम्, अल्पोऽपि चास्य दण्डस्तेजसा कृत्यकरो भवति । निरुत्साहस्तु प्रभाववान् राजा विक्रमाभिपन्नो नश्यतीत्याचार्याः ॥**

शक्तिषु श्रेयस्त्वं चिन्तयन्नाचार्यमतमाह— उत्साहप्रभावयोरिति । उत्साहः शौर्यबलारोग्यादियोगः, प्रभावः कोशदण्डयोगः, तयोर्मध्ये उत्साहः श्रेयान् प्रशस्ततरः । तत्र हेतुमाह— स्वयं हि राजेत्यादि । राजा हि स्वयं शौर्यवान् कायशक्तियुक्तः आरोग्यसंपन्नः शिक्षितास्त्रविद्यः मित्रबलासहकृतस्वीयदण्डमात्रसहायोऽपि सन् प्रभाविनं राजानं जेतुं शक्तो भवति । अस्यैव तेजोमहिम्ना दण्डः स्वल्पोऽपि कार्यक्षमो भवतीत्येतस्मात्कारणादित्यर्थः । प्रभाववतोऽप्युत्साहव्यतिरेके जयव्यतिरेकमाह— निरुत्साहस्त्वित्यादि । श्रीमूला.

**नेति कौटल्यः । प्रभाववानुत्साहवन्तं राजानं प्रभावेनातिसंधत्ते तद्विशिष्टमन्यं राजानमावाह्य हृत्वा क्रीत्वा प्रवीरपुरुषान् । प्रभूतप्रभावहयहस्तिरथोपकरणसंपन्नश्चास्य दण्डः सर्वत्राप्रतिहतश्चरति । उत्साहवतश्च प्रभाववन्तो जित्वा क्रीत्वा च स्त्रियो बालाः पङ्गवोऽन्धाश्च पृथिवीं जिग्युरिति ॥**

आचार्यमतं खण्डयति— नेति कौटल्य इति । युक्तिमाह— प्रभाववानिति । सः उत्साहवन्तं राजानं प्रभावेन

* 'यात्रामभ्युत्थितः' इत्यारभ्य 'नावाप्नोति' इत्यन्तस्य ग्रन्थस्य व्याख्यानं 'स्वाम्यनुजीविवृत्तम्' इत्यस्मिन् प्रकरणे (पृ. १७०३) द्रष्टव्यम् ।

(१) कौ. ५।३ (२) कौ. ९।१.

अतिसंधत्ते अतिशेते । कथं कृत्वा ? तद्विशिष्टं तस्मात् यातव्यात् विशिष्टम् उत्कृष्टबलम् अन्यं राजानम् आवाह्य स्वसाह्यार्थं वरयित्वा प्रवीरपुरुषान् हृत्वा भक्तवेतनदानेन स्वीकृत्य क्रीत्वा प्रभूतधनदानेन स्वायत्तीकृत्य वा । प्रभूतप्रभावादिसंपन्नश्च, भूत्वेति शेषः, अस्य दण्डः सर्वत्र अप्रतिहतः चरति प्रसरति । किंच, स्त्रीबालपङ्ग्वन्धा अपि कोशसंपन्महिम्ना उत्साहवतः प्रवीरान् स्वायत्तीकृत्य भूमिं जितवन्त इत्यैतिह्यमप्यस्तीत्याह– उत्साहवतश्चेत्यादि । इतिशब्दानन्तरम् ऐतिह्यमिति शेषः । श्रीमूला.

प्रभावमन्त्रयोः कस्य बलवत्तरत्वमिति चिन्ता

**प्रभावमन्त्रयोः प्रभावः श्रेयान् । मन्त्रशक्तिसंपन्नो हि वन्ध्यबुद्धिरप्रभावो भवति, मन्त्रकर्म चास्य निश्चितमप्रभावो गर्भधान्यमवृष्टिरिवोपहन्तीत्याचार्याः ॥**

प्रभावमन्त्रशक्त्योर्मध्ये प्रभावशक्तिः श्रेयसी । कस्मात् ? मन्त्रशक्तियुक्तः प्रभावशक्तिरहितश्चेत् निष्फलमन्त्रो भवति । प्रभावाभावो हि तस्य विचार्यनिर्णीतं मन्त्रार्थानुष्ठानप्रकारं कोशदण्डैकसाध्यमुपहन्ति, यथा गर्भस्थं धान्यं वृष्ट्यपेक्षोद्गमनं वृष्ट्यभावः उपहन्ति तद्वदित्याचार्या मन्यन्त इत्याह– प्रभावमन्त्रयोरित्यादि ।

श्रीमूला.

**नेति कौटल्यः । मन्त्रशक्तिः श्रेयसी । प्रज्ञाशास्त्रचक्षुर्हि राजाऽल्पेनापि प्रयत्नेन मन्त्रमाधातुं शक्तः, परानुत्साहप्रभाववतश्च सामादिभिर्योगोपनिषद्भ्यां चातिसंधातुम् । एवमुत्साहप्रभावमन्त्रशक्तीनामुत्तरोत्तराधिकोऽतिसंधत्ते ॥**

आचार्यमतं निषेधन् स्वमतमाह– नेति कौटिल्य इत्यादि । मन्त्रशक्तिरिति । सा श्रेयसीत्यत्र युक्तिमाह– प्रज्ञाशास्त्रचक्षुर्हीति । प्रज्ञा शेमुषी, शास्त्रं श्रुतम्, ते चक्षुषी यस्य सः । तथाभूतो हि राजा अल्पेनापि प्रयत्नेन मन्त्रम् आधातुम् अनुष्ठातुम् शक्तः । परान् उत्साहप्रभाववतश्च सामादिभिः उपायैः योगोपनिषद्भ्यां योगेन तीक्ष्णादिगूढपुरुषप्रयोगेण उपनिषदा औपनिषदिकोक्तविषाग्न्यादिना च अतिसन्धातुं शक्तः । आत्मनः उत्साहप्रभावाल्पत्वेऽपीत्यार्थम् । एवमिति । अनेन प्रकारेण उत्साहाद्युत्तरोत्तरगौरवसिद्धयेत्यर्थः, उत्साहप्रभावमन्त्रशक्तीनाम् उत्तरोत्तराधिकः उत्तरोत्तरयाऽधिको राजा अतिसंधत्ते पूर्वपूर्वशक्तियोगिनमतिशेते । इति शक्तिर्निरूपिता । श्रीमूला.

देशनिरूपणम्

**देशः पृथिवी । तस्यां हिमवत्समुद्रान्तरमुदीचीनं योजनसहस्रपरिमाणं तिर्यक् चक्रवर्तिक्षेत्रम् । तत्राऽऽरण्यो ग्राम्यः पार्वत औदको भौमः समो विषम इति विशेषाः । तेषु यथास्वबलवृद्धिकरं कर्म प्रयुञ्जीत । यत्राऽऽत्मनः सैन्यव्यायामानां भूमिरभूमिः परस्य स उत्तमो देशः । विपरीतोऽधमः । साधारणो मध्यमः ॥**

देशं निरूपयति– देशः पृथिवीति । तस्यामिति । पृथिव्यां हिमवत्समुद्रान्तरम् उदीचीनं हिमालयदक्षिणसमुद्रयोरन्तरालम् उदग्भवम्, तिर्यक् योजनसहस्रपरिमाणं पूर्वापरसमुद्रावधिकं योजनसहस्रमितम्, चक्रवर्तिक्षेत्रं चक्रवर्तिनां क्षेत्रं यस्याखण्डस्य शासनेन राजा चक्रवर्तीति व्यपदिश्यते तदित्यर्थः । विशेषानाह– तत्रेति । चक्रवर्तिक्षेत्रे आरण्यः कृष्यनर्हदेशप्रायः, ग्राम्यः कृष्यर्हदेशप्रायः, पार्वतः उन्नतदृषत्प्रायः, औदकः आस्रावयुक्तः, भौमः स्थलप्रायः, समः अनुन्नतानतः, विषमः उन्नतानतः, इति विशेषाः । तेष्विति । उक्तेषु विशेषेषु यथास्वबलवृद्धिकरं स्वसैन्यजयावहं यथा भवेत् अर्थात् परसैन्यपराजयावहं च, तथाभूतं कर्म युद्धं प्रयुञ्जीत । यत्रेति । यस्मिन् देशे आत्मनः सैन्यव्यायामानां भूमिः योग्यः प्रदेशः, लभ्यते इति शेषः, परस्य शत्रोः सैन्यव्यायामानाम् अभूमिः योग्यप्रदेशाभावः, स उत्तमो देशः । विपरीतः परस्य सैन्यव्यायामानां भूमिः आत्मनश्चाभूमिर्यः स देश इत्यर्थः, अधमः । साधारणः आत्मपरयोर्विशेषरहितो देशः मध्यमः । श्रीमूला.

कालनिरूपणम्

**कालः शीतोष्णवर्षात्मा। तस्य रात्रिरहः पक्षो मास ऋतुरयनं संवत्सरो युगमिति विशेषाः। तेषु यथास्वबलवृद्धिकरं कर्म प्रयुञ्जीत। यत्राऽऽत्मनः सैन्यव्यायामानामृतुरनृतुः परस्य स उत्तमः कालः। विपरीतोऽधमः। साधारणो मध्यमः॥**

कालं निरूपयति— काल इति। सः शीतोष्णवर्षात्मा शीतस्वभावः हेमन्तादिरूपः उष्णस्वभावः ग्रीष्मादिरूपः वर्षस्वभावः प्रावृड्रूपश्च भवति। तस्य विशेषानाह— तस्य रात्रिरित्यादि। उक्तेषु कालस्य विशेषेषु कर्मप्रयोगप्रकारं कालस्योत्तमादित्वं चाऽऽह— तेषु यथास्वबलवृद्धिकरमित्यादि। श्रीमूला.

शक्तिदेशकालानां बलतारतम्यचिन्ता

**शक्तिदेशकालानां तु शक्तिः श्रेयसीत्याचार्याः। शक्तिमान् हि निम्नस्थलवतो देशस्य शीतोष्णवर्षवतश्च कालस्य शक्तः प्रतीकारे भवति॥**

इत्थं शक्त्याद्यवान्तरभेदानां बलाबलं विचारितम्। इदानीं शक्त्यादीनां त्रयाणां मिथो बलाबलं विचारयन्नाचार्यमतमाह— शक्तिदेशकालानां त्वित्यादि। तत्र युक्तिमाह— शक्तिमान् हीत्यादि। प्रतीकारे प्रतिक्रियायाम्। तत्र देशस्य प्रतिक्रिया निम्नादेर्मृदापूरणादिः, कालस्य प्रतिक्रिया कञ्चुकादिना शीतादिवारणम्। श्रीमूला.

**देशः श्रेयानित्येके। स्थलगतो हि श्वा नक्रं विकर्षति, निम्नगतो नक्रः श्वानमिति॥**

तत्रैकीयमतमाह— देश इत्यादि। स्थले शुनो नक्रविकर्षणयोग्यतायाः अस्थले तदभावस्य च, जले नक्रस्य श्वविकर्षणयोग्यतायाः अजले तदभावस्य चोपलब्ध्या बलाबलस्य देशतद्भावतदभावानुविधायित्वात् देश एव श्रेयानित्यर्थः। श्रीमूला.

**कालः श्रेयानित्येके। दिवा काकः कौशिकं हन्ति, रात्रौ कौशिकः काकमिति॥**

काकदिवापराक्रमित्व–घूकरात्रिपराक्रमित्वदृष्टान्तेन बलाबलस्य कालान्वयव्यतिरेकानुविधानं वर्णयन्तः कालस्य श्रेयस्त्वमेके मन्यन्त इत्याह— कालः श्रेयानित्यादि। श्रीमूला.

**नेति कौटल्यः। परस्परसाधका हि शक्तिदेशकालाः॥**

उक्तं मतत्रयमपि प्रतिषेधति— नेति कौटल्य इति। तत्र हेतुमाह— परस्परसाधका हि शक्तिदेशकाला इति। सत्यामपि शक्तौ देशकालाभावे कार्यासिद्ध्या सतोरपि देशकालयोः शक्त्यभावे कार्यासिद्ध्या च तेषां त्रयाणामन्योन्यसापेक्षतयैव कार्यसाधकत्वदर्शनात् समं प्राधान्यमित्यभिप्रायः। इत्थं शक्तिदेशकालबलाबलं चिन्तितम्। श्रीमूला.

यात्राकालाः

**तैरभ्युच्चितस्तृतीयं चतुर्थं वा दण्डस्यांशं मूले पार्ष्ण्यां प्रत्यन्ताटवीषु च रक्षां विधाय कार्यसाधनसहं कोशदण्डं चाऽऽदाय क्षीणपुराणभक्तमगृहीतनवभक्तमसंस्कृतदुर्गममित्रं वार्षिकं चास्य सस्यं हैमनं च मुष्टिमुपहन्तुं मार्गशीर्षीं यात्रां यायात्। हैमनं चास्य सस्यं वासन्तिकं च मुष्टिमुपहन्तुं चैत्रीं यात्रां यायात्। क्षीणतृणकाष्ठोदकमसंस्कृतदुर्गममित्रं वासन्तिकं चास्य सस्यं वार्षिकीं वा मुष्टिमुपहन्तुं ज्येष्ठामूलीयां यात्रां यायात्॥**

अथ यात्राकालनिरूपणार्थं सूत्रम्— 'यात्राकालाः' इति। शत्रुमुद्दिश्य विजिगीषोर्यानं यात्रा, तस्याः समुचिताः काला अभिधीयन्ते इति सूत्रार्थः।

तैरभ्युचित इति। शक्तिदेशकालैः परापेक्षयाऽतिशयं प्राप्तः विजिगीषुः तृतीयं चतुर्थं वा यथोचितं दण्डस्य त्रेधा चतुर्धा वा विभक्तस्य बलस्य अंशं मूले स्थानीये पार्ष्ण्यां पृष्ठे प्रत्यन्ताटवीषु च विषयान्तेऽरण्येषु च रक्षां विधाय रक्षार्थं स्थापयित्वा कार्यसाधनसहं कोशदण्डं च कोशं दण्डं च आदाय अमित्रमुपहन्तुं मार्गशीर्षीं यात्रां यायात् मार्गशीर्षे मासि शत्रुं प्रति अभियायात्। शत्रोः सुखोपहन्तव्यतार्थं त्रीणि विशेषणान्याह— क्षीणपुराणभक्तमित्यादि। यदा पुराणं पूर्वभोगसंचितं भक्तं क्षीणम्,

नवसंग्राह्यं चागृहीतम्, दुर्गं चाकृतसमुचितरक्षाविधानं पश्यति, तथाविधे काले समुत्पन्नसस्यग्रहणप्रतिबन्धलक्षणेन नवबीजवापप्रतिबन्धलक्षणेन चोपघातेन एनं योजयितुं यायादित्यर्थः। इह हि वर्षोप्तबीजनिष्पन्नसस्यग्रहणपूर्वको हेमन्ते बीजवाप इत्येको भोगः, हेमन्तोप्तबीजनिष्पन्नसस्यग्रहणपूर्वो वसन्ते बीजवाप इत्यपरो भोगः, वसन्तोप्तबीजनिष्पन्नसस्यग्रहणपूर्वो वर्षासु बीजवाप इत्यन्य इत्येवं त्रयः प्रत्यब्दं भोगा भवन्ति। तेषु कतमं भोगमुपहन्तुं कतमस्मिन् मासि यात्रां यायादित्याकाङ्क्षायामाह– वार्षिकं चास्य सस्यमित्यादि। अयमर्थः– प्रथमं भोगमुपहन्तुं मार्गशीर्षे मासि यायात्, द्वितीयं चैत्रे, तृतीयं ज्येष्ठामूलीयापराख्ये ज्यैष्ठ इति। तत्रासंस्कृतदुर्गस्यामित्रस्य सद्योदुर्गसंस्कारमिच्छतोऽपि ज्येष्ठामूलीये तदपेक्षिततृणकाष्ठोदकादिक्षयात् सुतरामुपघातो भवतीति द्योतयितुं क्षीणतृणकाष्ठोदकमसंस्कृतदुर्गममित्रमित्यमित्रस्य विशेषणान्तरयोगेन पुनरुपादानमिति ज्ञेयम्। त एते परोपघातानुकूला यात्राकालाः। श्रीमूला.

**अत्युष्णमल्पयवसेन्धनोदकं वा देशं हेमन्ते यायात्॥**

यातव्यदेशानुकूलान् यात्राकालानाह– अत्युष्णमित्यादि। यो देशः अतिमात्रोष्णस्वभावः तृणकाष्ठजलानि वा यत्राल्पानि तं देशं हेमन्ते यायात्। तदा हि शीतवशादुष्णः किंचित् सह्यो भवति, तृणकाष्ठजलानां च नोत्सादो भवतीत्यभिप्रायः। श्रीमूला.

**तुषारदुर्दिनमगाधनिम्नप्रायं गहनतृणवृक्षं वा देशं ग्रीष्मे यायात्॥**

अनवरतहिमवर्षं गभीरतटाकबहुलं निबिडतृणवृक्षं वा देशं ग्रीष्मे यायात्। तदा हि शैत्यं सह्यं भवतीत्यभिप्रायः। श्रीमूला.

**स्वसैन्यव्यायामयोग्यं परस्यायोग्यं वर्षति यायात्॥**

सामान्यतो वर्षाकाले यानं प्रतिषिद्धम्। तस्य प्रतिप्रसवमाह– स्वसैन्येत्यादि। यस्मिन् देशे स्वसैन्यस्य व्यायामयोग्यभूमिलाभः परसैन्यस्य च तदभावः तथाविधं देशं वर्षाकालेऽपि यायादित्यर्थः। श्रीमूला.

**मार्गशीर्षं तैषं चान्तरेण दीर्घकालां यात्रां यायात्। चैत्रं वैशाखं चान्तरेण मध्यमकालाम्, ज्येष्ठामूलीयमाषाढं चान्तरेण ह्रस्वकालामुपोषिष्यन्। व्यसने चतुर्थीम्। व्यसनाभियानं विगृह्ययाने व्याख्यातम्॥**

उक्तानां मार्गशीर्ष्यादीनां तिसृणां यात्राणां दीर्घकालत्वादौ नियममाह– मार्गशीर्षं तैषं चान्तरेणेति। मार्गशीर्षतैषमासयोर्मध्ये यात्राम् अर्थान्मार्गशीर्षीं दीर्घकालां यायात्। वर्षाकालस्य दूरविप्रकृष्टतया कृष्यङ्गकर्मणां विलम्बसहत्वेनोपरोधाभावादिति भावः। चैत्रं वैशाखं चान्तरेणेति। अनयोर्मध्ये मध्यमकालां यायात्। अर्थाच्चैत्रीं यात्राम्, न तु मार्गशीर्षीमिव दीर्घकालामित्यर्थः। ज्येष्ठामूलीयमाषाढं चान्तरेणेति। तयोर्मध्ये ह्रस्वकालां यायात्। अर्थाज्ज्येष्ठामूलीयाम्, न तु दीर्घकालां मध्यमकालां वा, वर्षाकालस्य प्रत्यासन्नत्वेन तत्कर्मोपरोधप्रसङ्गादिति भावः। कालह्रस्वत्वपरिच्छेदगमकं यातुर्विशेषणमाह– उपोषिष्यन्निति। उप समीपे शत्रुविषयं गत्वा तद्दाहमात्रं क्षिप्रसुकरं करिष्यन्, न तु ततोऽधिकं युद्धादिकर्म अधिककालसापेक्षं करिष्यन्नित्यर्थः। इह मार्गशीर्षं तैषमित्यादयो मासार्थाः शब्दा मार्गशीर्षीं तैषीमित्यादिरीत्या स्त्रीप्रत्ययान्ता (केषुचित्) मूलकोशेषु पठ्यन्ते। तदा मार्गशीर्ष्यादिशब्दा मृगशीर्षयुक्तपौर्णमासीविशेषाभिधायिनस्तद्युक्तमासविशेषोपलक्षका द्रष्टव्याः। इत्थं मार्गशीर्ष्यादिकास्त्रिविधा यात्रा अभिधाय परव्यसनकालां नाम चतुर्थीमपि यात्रामाह– व्यसने चतुर्थीमिति। परव्यसनदर्शने चतुर्थीं मार्गशीर्ष्यादिविलक्षणप्रकारां मार्गशीर्षादिकालनियमरहितां यात्रां यायादित्यर्थः। इदं च व्यसनाभियानं षाड्गुण्याधिकरणगते विगृह्ययानप्रकरणे (कौ. ७।४) वितत्याभिहितमित्याह– व्यसनाभियानमित्यादि। श्रीमूला.

**प्रायशश्चाऽऽचार्याः परव्यसने यातव्यमित्युपदिशन्ति॥**

व्यसनाभियानपक्षश्चायमाचार्याणामेवेत्याह—प्रायशश्चाऽऽचार्या इत्यादि । श्रीमूला.

**शक्त्युदये यातव्यमनैकान्तिकत्वाद्व्यसनानामिति कौटल्यः ॥**

स्वपक्षमाह— शक्त्युदय इति । परापेक्षया विजिगीषोः शक्त्यभ्युच्चये सति यातव्यम् । शक्त्युदयस्यैकान्तफलसाधकत्वादित्यभिप्रायः । परव्यसनानि तु अप्रयोजकानि, अनेवंभूतत्वादित्याह— अनैकान्तिकत्वात् व्यसनानामिति । परस्य व्यसनसत्त्वेऽप्यात्मनः शक्त्युदयाभावे फलासिद्ध्या परस्य व्यसनाभावेऽप्यात्मनः शक्त्युदयसत्त्वे फलसिद्ध्या च परव्यसनानां फलाननुविहितत्वान्वयाव्यतिरेकत्वादित्यर्थः । इति कौटल्यः मन्यते । श्रीमूला.

**यदा वा प्रयातः कर्शयितुमुच्छेत्तुं वा शक्नुयादमित्रम्, तदा यायात् ॥**

शक्त्यभ्युच्चयाभावेऽपि शत्रुकर्शनोच्छेदनान्यतरानुष्ठानमात्रपर्याप्तशक्तियोगमात्मनो यदा पश्यति तदा यायादिति पक्षान्तरमाह— यदा वा प्रयात इत्यादि । श्रीमूला.

**अत्युष्णोपक्षीणे कालेऽहस्तिबलप्रायो यायात्। हस्तिनो ह्यन्तःस्वेदाः कुष्ठिनो भवन्ति, अनवगाहमानास्तोयमपिबन्तश्चान्तरवक्षाराश्चान्धीभवन्ति । तस्मात् प्रभूतोदके देशे वर्षति च हस्तिबलप्रायो यायात्। विपर्यये खरोष्ट्राश्वबलप्रायः। देशमल्पवर्षपङ्कं वर्षति मरुप्रायं चतुरङ्गबलो यायात् ॥**

अथ बलानुरोधेन कालनियममाह— अत्युष्णोपक्षीण इति । अत्युष्णपर्यवसिते काले ग्रीष्मादौ अहस्तिबलप्रायो यायात् हस्त्यतिरिक्तखरोष्ट्रादिबलबहुलो यायात् । हस्तिबलबहुलस्तु न यायादित्यर्थः । हस्तिबलबहुलस्यायाने कारणमाह— हस्तिनो हीत्यादि । गजा हि बहिरनिर्गच्छद्भिरन्तःस्थितैः स्वेदैर्दूषितत्वचः कुष्ठरोगिणो भवन्ति, जले च स्नानाकरणात् तत्पानाकरणाच्चोपजातान्तर्दाहा अन्धतां प्राप्नुवन्तीत्यर्थः । तस्मादिति । उष्णकालयानस्य हस्त्यनर्थावहत्वात् प्रभूतोदके प्रचुरजले देशे वर्षति च अर्थात् काले हस्तिबलप्रायो यायात् । विपर्यय इति । अप्रभूतोदके देशे अवर्षाकाले च खरोष्ट्राश्वबलप्रायो यायात् । यस्मिन् वृष्टिनिमित्तः पङ्कोऽल्पो भवति तं तथाविधं मरुप्रायं देशं वर्षाकालेऽपि हस्त्यश्वरथपादातरूपचतुर्विधसैन्ययुक्तो गच्छन्न दुष्यतीत्याह— देशमल्पवर्षपङ्कमित्यादि । श्रीमूला.

**समविषमनिम्नस्थलह्रस्वदीर्घवशेन वाऽध्वनो यात्रां विभजेत् ॥**

अध्वनः समत्वविषमत्वादिभिरपि यात्राया ह्रस्वकालत्वादिविभागो भवतीत्याह— समेत्यादि । इह समादिशब्दा भावप्रधानाः । समत्वम् अदन्तुरत्वम्, विषमत्वं दन्तुरत्वम्, निम्नत्वं जलरूपत्वम्, स्थलत्वम् अजलरूपत्वम्, ह्रस्वत्वं ह्रस्वकालत्वम्, दीर्घत्वं दीर्घकालत्वम् । तद्वशेन वा तदनुरोधेन वा अध्वनो यात्रां विभजेत् । तत्र स्थलत्वान्ताः अध्वधर्माः, अन्यौ यात्राधर्मौ ।
श्रीमूला.

**सर्वा वा ह्रस्वकालाः स्युर्यातव्याः कार्यलाघवात् ।
दीर्घाः कार्यगुरुत्वाद्वा वर्षावासः परत्र च ॥**

कार्यवशात् सर्वासामपि यात्राणां ह्रस्वकालत्वदीर्घकालत्वे भवत इत्याह— सर्वा वेत्यादि । या एता अध्वसमत्वविषमत्वादिवशोपजातह्रस्वभावदीर्घभावा उक्ताः ताः सर्वा अपि यातव्याः यात्राः कार्यलाघवात् कार्यस्य क्षिप्रनिर्वर्तनात् ह्रस्वकालाः स्युः । कार्यगुरुत्वाद्वा कार्यस्य चिरनिर्वर्तनाच्च दीर्घाः दीर्घकालाः स्युः । वर्षावासः परत्र चेति । किंच, वर्षासु वासः स्वदेशकार्यैः परविषय एव कार्यवशात् कर्तव्यः स्यादित्यर्थः । श्रीमूला.

षण्णां मौलादीनां बलानां गुणविगुणालोचनेन यथाकार्यं विनियोगस्य कालाः

**[1]मौलभृतकश्रेणीमित्रामित्राटवीबलानां समुद्दानकालाः ॥**

---

(१) कौ. ९।२.

'बलोपादानकालाः' इति सूत्रम्। बलानां मौलभृतादीनाम् उपादानस्य यथाकार्यं विनियोगस्य कालाः उच्यन्ते इति सूत्रार्थः। अभियास्यता यात्राकालवत् बलोपादानकाला अपि ज्ञातव्या इति तत्कथनम्।

के ते काला इत्याह – मौलेत्यादि। मौलबलं स्थानीयभवं बलम्, भृतकबलं भृतिस्वीकृतं बलम्, श्रेणीबलं जानपदायुधीयगणरूपं बलम्, मित्रबलम्, अमित्रबलम्, अटवीबलम् आटविकबलम्, इत्येतेषां षड्विधानां समुद्दानकालाः कार्यविनियोगकालाः। श्रीमूला.

**मूलरक्षणादतिरिक्तं मौलबलम्, अत्यावापयुक्ता वा मौला मूले विकुर्वीरन्निति, बहुलानुरक्तमौलबलः सारबलो वा प्रतियोद्धा व्यायामेन योद्धव्यमिति, प्रकृष्टेऽध्वनि काले वा क्षयव्ययसहत्वान्मौलानामिति, बहुलानुरक्तसंपाते च यातव्यस्योपजापभयादन्यसैन्यानां भृतादीनामविश्वासे, बलक्षये वा सर्वसैन्यानामिति मौलबलकालः॥**

तेषु मौलबलसमुद्दानकालस्य निमित्तान्याह– मूलरक्षणादतिरिक्तमित्यादि। अयमर्थः– स्थानीयरक्षार्थं यावदपेक्षितं ततोऽधिकं मौलबलं विद्यत इत्यस्मिन्निमित्ते, अथवा अत्यावापयुक्ता अतिमात्रद्रोहचिन्तायुक्ता मौलपुरुषाः मूले विकारं कुर्युरत इमे आत्मना सहैव नेया इत्यस्मिन्निमित्ते, प्रभूतमनुरागि च मौलबलमुपादायाऽऽगतः प्रत्यर्थी शूरसैन्ययुक्तो वा सः, अतः प्रयत्नेन युद्धं कर्तव्यम्, तत्र मौलबलमेव समर्थं भवतीत्येतस्मिन् निमित्ते, बहुयोजनविप्रकृष्टे देशे दीर्घे वा काले शत्रुणा सह युद्धं भवेत्, तत्रावश्यंभाविनौ क्षयव्ययौ मौलबलान्येव सोढुं शक्नुयुरित्यस्मिन् निमित्ते, बहुलाः स्वाम्यनुरागिणः शत्रुदूताः संपतिता अवश्यमुपजापं कुर्युः, भृतादीनि मौलव्यतिरिक्तान्यविश्वास्यानि, अतो मौलबलमेवानुपजाप्यत्वादुपादेयमित्येतस्मिन् निमित्ते, अथवा सर्वाणि भृतादिसैन्यानि प्राप्तयुग्यपुरुषापचयलक्षणशक्तिक्षयत्वात् पलायिष्यन्त इत्येतस्मिन्निमित्ते च मौलबलस्य विनियोगकालः प्राप्तो मन्तव्य इति। श्रीमूला.

**प्रभूतं मे भृतबलमल्पं च मौलबलमिति, परस्याल्पं विरक्तं वा मौलबलम्, फल्गुप्रायमसारं वा भृतसैन्यमिति, मन्त्रेण योद्धव्यमल्पव्यायामेन इति, ह्रस्वो देशः कालो वा तनुक्षयव्यय इति, अल्पसंपातं शान्तोपजापं विश्वस्तं वा मे सैन्यमिति, परस्याल्पः प्रसारो हन्तव्य इति भृतबलकालः॥**

भृतबलकालस्य निमित्तान्याह– प्रभूतं मे भृतबलमित्यादि। अयमर्थः– मम भृतसैन्यं प्रचुरम्, मौलसैन्यमल्पमित्येतस्मिन्निमित्ते, अथवा शत्रोर्मौलसैन्यमल्पं विरक्तं वा वर्तते, अतो भृतबलमेवालं कार्यसाधनायेत्यस्मिन् निमित्ते, अथवा अल्पं दुर्बलं च परस्य भृतसैन्यमित्यस्मिन् निमित्ते, मन्त्रेण तूष्णींयुद्धात्मनाऽल्पश्रमेण योद्धव्यमित्यस्मिन्निमित्ते, अदूरो गन्तव्यदेशः कालश्च कार्यसिद्धयेऽपेक्षितोऽल्पत्वादल्पक्षयव्यय इत्यस्मिन् निमित्ते, अल्पपरदूतागमनं शमितोपजापम् उत्पन्नानुपजाप्यत्वविश्वासं वा मे सैन्यमित्यस्मिन् निमित्ते, परस्य तृणकाष्ठादिप्रवेशनमल्पमेव विहन्तव्यम्, तच्च भृतबलेनैव विघातयितुं शक्यमित्येतस्मिन्निमित्ते च भृतबलस्य विनियोगकालो बोद्धव्यः। श्रीमूला.

**प्रभूतं मे श्रेणीबलं शक्यं मूले यात्रायां चाऽऽधातुमिति, ह्रस्वप्रवासः, श्रेणीबलप्रायः प्रतियोद्धा, मन्त्रव्यायामाभ्यां प्रतियोद्धुकामः, दण्डबलव्यवहार इति श्रेणीबलकालः॥**

श्रेणीबलकालमाह– प्रभूतं मे श्रेणीबलमित्यादि। अयमर्थः– श्रेणीबलं मे प्रचुरतया स्थानीयरक्षायां शत्रुं प्रत्यभियाने चोभयत्र विनियोक्तुं शक्यमित्येतस्मिन् निमित्ते, अदूरदेशं प्रयाणमदीर्घकालमित्यस्मिन्निमित्ते वा, प्रत्यर्थी श्रेणीबलबहुलः श्रेणीबलेनैव प्रतियोद्धव्य इत्यस्मिन्निमित्ते वा, प्रत्यर्थी मन्त्रेण तूष्णींयुद्धलक्षणेन व्यायामेन प्रकाशयुद्धलक्षणेन च प्रतियोद्धुकाम इत्यस्मि-

न्निमित्ते वा, प्रत्यर्थी दण्डभीतनृपान्तरार्पितेन बलेन निर्वाह्ययुद्धव्यवहारः इत्यस्मिन्निमित्ते वा श्रेणीबलस्य विनियोगकाल इति । श्रीमूला.

**प्रभूतं मे मित्रबलं शक्यं मूले यात्रायां चाऽऽधातुम्, अल्पः प्रवासो मन्त्रयुद्धाच्च भूयो व्यायामयुद्धमिति, मित्रबलेन वा पूर्वमटवीं नगरीस्थानमासारं वा योधयित्वा पश्चात् स्वबलेन योधयिष्यामि, मित्रसाधारणं वा मे कार्यम्, मित्रायत्ता वा मे कार्यसिद्धिः, आसन्नमनुग्राह्यं वा मे मित्रम्, अत्यावापं वाऽस्य साधयिष्यामीति मित्रबलकालः ॥**

मित्रबलकालमाह– प्रभूतं मे मित्रबलमित्यादि । अयमर्थः– मम मित्रबलं प्रभूतत्वात् स्थानीये रक्षार्थं यात्रायां पराभियोगार्थं च निवेशयितुं शक्यमित्यस्मिन् निमित्ते, अविप्रकृष्टदेशकालत्वादल्पं प्रयाणम्, तूष्णींयुद्धाच्च बहुतरं प्रकाशयुद्धम्, अतो नातिक्षयव्ययसंभावनेत्यस्मिन्निमित्ते, परस्याऽऽटविकं बलं वा परस्य मित्रबलं वा तन्नगरावस्थितं स्वमित्रबलेन पूर्वं योधयित्वा पश्चात् स्वबलेन योधयिष्यामीत्यस्मिन् निमित्ते, मम यत्कार्यं तत् मित्रस्यापि साधारणमित्यस्मिन् वा निमित्ते, मम कार्यसिद्धिर्मित्रे आयत्तेत्यस्मिन् वा निमित्ते, मम मित्रमन्तरङ्गं मयोपकर्तव्यमित्यस्मिन् वा निमित्ते, मित्रस्य अत्यावापं अर्थात् दूष्यबलं शत्रुबलेन व्यापादयिष्यामीत्यस्मिन् वा निमित्ते मित्रबलस्य विनियोगकाल इति । श्रीमूला.

**प्रभूतं मे शत्रुबलं शत्रुबलेन योधयिष्यामि नगरस्थानम्, अटवीं वा । तत्र मे श्ववराहयोः कलहे चण्डालस्येवान्यतरसिद्धिर्भविष्यति, आसाराणामटवीनां वा कण्टकमर्दनमेतत् करिष्यामि, अत्युपचितं वा कोपभयान्नित्यमासन्नमरिबलं वासयेदन्यत्राभ्यन्तरकोपशङ्कायाः, शत्रुयुद्धावरयुद्धकालश्चेत्यमित्रबलकालः ॥**

अमित्रबलकालमाह – प्रभूतं मे शत्रुबलमित्यादि । अयमर्थः– मम शत्रुबलं दण्डोपनतं प्रभूतं नगरावस्थितं शत्रुबलेन योधयिष्यामि, आटविकं वा शत्रुबलेन योधयिष्यामि, तथा उभयोः शत्रुबलयोरायोधनघटनेऽन्यतरवधलक्षणं ममेष्टं सिध्यति, यथा श्ववराहाशिनश्चण्डालस्य श्ववराहयोर्युध्यमानयोरन्यतरवध ईप्सितः सिध्यति तद्वदित्यस्मिन् वा निमित्ते, मित्रबलानामाटविकानां च स्वकीयानां ये कण्टका अमित्रबलगतास्तेषां मर्दनसाधनमेतत् अमित्रबलोपादानं करिष्यामीत्यस्मिन् वा निमित्ते, अत्यन्तोपचययुक्तं शत्रुबलमात्मना नित्यमनधिष्ठितं विकुर्वीतेति शङ्कायां मन्त्रिपुरोहितसेनापतियुवराजादिविकारलक्षणाभ्यन्तरकोपविरहे च सति तत्सर्वदा स्वान्तिक एव वासयितुमर्हमित्यस्मिन् वा निमित्ते अमित्रबलस्य विनियोगकाल इति । अन्यमप्यमित्रबलकालमाह – शत्रुयुद्धावरयुद्धकालश्चेति । शत्रोः स्वशत्रुणा सह यदि प्रवृत्तं युद्धं तर्हि तस्मात् समासात् परो यो युद्धोचितः कालः सोऽपि अमित्रबलकाल इत्यर्थः । श्रीमूला.

**तेनाटवीबलकालो व्याख्यातः ॥**

यान्यमित्रबलकालस्य निमित्तान्युक्तानि तान्येवाटवीबलकालस्यापीत्यतिदेशभङ्ग्योपदिशति– तेनेत्यादि ।

श्रीमूला.

**मार्गदेशिकं परभूमियोग्यमरियुद्धप्रतिलोममटवीबलप्रायः शत्रुर्वा बिल्वं बिल्वेन हन्यतामल्पः प्रसारो हन्तव्य इत्यटवीबलकालः ॥**

तत्र विशेषमाह– मार्गदेशिकमित्यादि । अयमर्थः– परभूमियानमार्गप्रदर्शनमिति वा, परभूमियुद्धानुरूपायुधशिक्षोपेतमिति वा, अरेर्युद्धे विषये विजिगीषुनियोगात् प्रागेव सिद्धप्रातिपक्ष्यमिति वा, आटविकबलबहुलः शत्रुः अतः स तुल्यजातीयेनाऽऽटविकबलेनैव बिल्वफलमिव बिल्वफलेन हन्यतामिति वा, शत्रोस्तृणकाष्ठादिप्रवेशनं स्वल्पमेव विहन्तव्यम्, तच्चाऽऽटविकबलेनैव विघातयितुं शक्यमिति वैतेषु निमित्तेषु आटविकबलस्य विनियोगकालः । इत्थं मौलादीनां षण्णां बलानामुपादानकालो दर्शितः । श्रीमूला.

**सैन्यमनेकमनेकजातीयस्थमुक्तमनुक्तं वा विलोपार्थं यदुत्तिष्ठति तदौत्साहिकम् । भक्तवेतन-**

**विलोपविष्टिप्रतापकरं भेद्यं परेषाम्, अभेद्यं तुल्यदेशजातिशिल्पप्रायं संहतं महत् । इति बलोपादानकालाः ॥**

संप्रत्यौत्साहिकं नाम सप्तममपि बलमुपादेयमस्तीत्याह– सैन्यमनेकमित्यादि । अयमर्थः– सैन्यम् अनेकम्– एकः मुख्योऽधिष्ठाता, तद्रहितम्, अनेकजातीयस्थं नानाप्रकारदेशावस्थायि, उक्तमनुक्तं वा राज्ञाऽनुज्ञातमननुज्ञातं वा, यत् विलोपार्थमुत्तिष्ठति परविषयलुण्टनार्थं स्वयमेव समुदितं भवति, तत् औत्साहिकं स्वोत्साहमात्रप्रवृत्तत्वादौत्साहिकसंज्ञम् । तच्च भेद्यमभेद्यमिति द्विप्रकारमित्याह– भक्तवेतनेत्यादि । भक्तेन प्रत्यहदेयतण्डुलादिना वेतनेन प्रतिमासदेयहिरण्यादिना च विलोपं शत्रुजनपदलुण्टनं विष्टिं दुर्गादिकर्म प्रतापं राजाज्ञानुष्ठानं च करोतीति तथाभूतम् परेषां भेद्यं शक्यभेदनम् । अभेद्यं पराशक्यभेदनं तु तुल्यदेशजातिशिल्पप्रायं देशजातिशिल्पैर्ये तुल्यास्तद्बाहुल्ययुक्तम्, अत एव संहतं नित्योपगतसंघातावस्थम्, अत एव महत् शक्तितः प्रशस्तम् । तस्मादिदमपि यथाकालमुपादेयमित्यर्थात् सिद्धम् । इति बलोपादानकाला इति । व्याख्याता इति शेषः । श्रीमूला.

**तेषां कुप्यभृतममित्राटवीबलं विलोपभृतं वा कुर्यात् ॥**

मौलादीनां सप्तानां मध्ये द्वयोर्भृतौ विशेषमाह– तेषामिति । मौलादीनां मध्ये अमित्राटवीबलम् अमित्रबलम् आटविकबलं च कुप्यभृतम्– कुप्यं वस्त्रास्तरणादि, तद्रूपभृतियुक्तं विलोपभृतं वा शत्रुविषयपरिलुण्टनलब्धद्रव्यात्मकभृतियुक्तं वा कुर्यात् । श्रीमूला.

**अमित्रस्य वा बलकाले प्रत्युत्पन्ने शत्रुमवगृह्णीयात् । अन्यत्र वा प्रेषयेत् । अफलं वा कुर्यात् । विक्षिप्तं वा वासयेत् । काले वाऽतिक्रान्ते विसृजेत् । परस्य चैतद्बलसमुद्दानं विघातयेत् । आत्मनः संपादयेत् ॥**

अमित्रबलविषयमेव विशेषान्तरमाह– अमित्रस्य वेति । शत्रोः बलकाले प्रत्युत्पन्ने स्वशत्रुयुद्धप्राप्त्या स्वबलोपादानावसरे प्राप्ते शत्रुं स्वसाह्याय पूर्वमागतं शत्रुसैन्यम् अवगृह्णीयात् स्वकार्यस्य सावशेषत्वं वदन् स्ववश एव स्थापयेत्, न तु तस्मिन्नवसरे विसृजेदित्यर्थः । अन्यत्र वा प्रेषयेत् । स्वस्यैव कार्यान्तरमपदिश्येति शेषः । अफलं वा कुर्यात् पणितसाहाय्यदानप्रतिफलहीनं वा कुर्यात् । शत्रुबलं सद्यो विसृजन्निति शेषः । विक्षिप्तं वा बहुत्र विप्रकीर्णं वा वासयेत् । सद्यःसमुत्थापनसौकर्यभङ्गार्थमिति शेषः । काले वा अतिक्रान्ते साहाय्यसापेक्षे कालेऽतीते विसृजेत् । एवं निरूपितं बलोपादानं परकीयमुपघातेन योजयेत्, आत्मीयं च परारब्धविघातप्रतिविधानेन संपन्नं कुर्यात् विजिगीषुरित्याह– परस्य चैतदित्यादि । श्रीमूला.

षण्णां बलानामुद्योगस्य तारतम्येन श्रेयस्त्वविवेकः

**पूर्वं पूर्वं चैषां श्रेयः संनाहयितुम् ॥**

अथ 'संनाहगुणाः' इति सूत्रम् । संनाहस्य बलानामुद्योगस्य गुणाः श्रेयस्त्वभेदाः कथ्यन्ते इति सूत्रार्थः । उपात्तानां बलानां संनाहे शेषतया प्राप्ते तत्तारतम्यस्य निरूपणं प्राप्तावसरमिति प्रकरणसंगतिः ।

पूर्वं पूर्वं चैषामिति । मौलभृतादीनामौत्साहिकान्तानां सप्तानां बलानां मध्ये पूर्वं पूर्वं बलं संनाहयितुं श्रेयः उत्तरमुत्तरमपेक्ष्य प्रशस्ततरं संनाहे कार्यसाधकतरम् । श्रीमूला.

**तद्भावभावित्वान्नित्यसत्कारानुगमाच्च मौलबलं भृतबलाच्छ्रेयः ॥**

तदेव श्रेयस्त्वं मौलादीनां सहेतुकं क्रमेण निरूपयिष्यन् प्रथमं मौलबलस्य निरूपयति– तद्भावेत्यादि । तद्भावभावित्वात् तस्य स्वामिनः सत्त्वे सत्त्वात्, अर्थात् तदसत्त्वे चासत्त्वात्, नित्यसत्कारानुगमाच्च– स्वामिनो मौलेषु विषये सत्कारः आदरः, मौलानां स्वामिनि सत्कारः अनुरागः, तस्य नित्यस्य आगमापायरहितस्य अनुगमात् अविच्छिन्नानुवर्तनाच्च । 'नित्यसत्कारानुरागाच्च' इति पाठे अनुरागस्य स्वशब्दत एवोपादानं बोद्धव्यम् । मौलबलं भृतबलात् श्रेयः । श्रीमूला.

**नित्यानन्तरं क्षिप्रोत्थायि वश्यं च भृतबलं श्रेणीबलाच्छ्रेयः ॥**

नित्यानन्तरमिति । सर्वदैव व्यवधानरहितं पार्श्वस्थमित्यर्थः । अत एव क्षिप्रोत्थायि अविलम्बसज्जीभावि वश्यं च स्वायत्तं च भृतबलं श्रेणीबलात् अर्थादतथाविधस्वभावात् श्रेयः । श्रीमूला.

**जानपदमेकार्थोपगतं तुल्यसंघर्षामर्षसिद्धिलाभं च श्रेणीबलं मित्रबलाच्छ्रेयः । अपरिमितदेशकालमेकार्थोपगमाच्च । मित्रबलममित्रबलाच्छ्रेयः ॥**

जानपदमिति स्वामिजनपदस्थायि, न तु मित्रबलमिवातथाभूतम्, एकार्थोपगतं सहभोग्यैकफलोद्देशोपयातम्, तुल्यसंघर्षामर्षसिद्धिलाभं यद्विषयस्पर्धाक्रोधवान् स्वामी तद्विषयस्पर्धाक्रोधयुक्तं स्वामितुल्यसिद्धिलाभं च श्रेणीबलं मित्रबलात् अनेवंभूतस्वभावात् श्रेयः । नन्वेकार्थोपगतं नाम मित्रबलमस्ति, तच्चैवंभूतमेवेति कथं तदपेक्षया श्रेणीबलस्य श्रेयस्त्वमिति चेत् तत्राऽऽह— अपरिमितदेशकालमित्यादि । श्रेणीबलम् एकार्थोपगमात् मित्रबलाच्च श्रेयः एकार्थोपगतान्मित्रबलादपि प्रशस्ततरम्। कस्मात् ? यस्मात् तत् अपरिमितदेशकालं साहाय्यदाने देशकालप्रतिनियमनिरपेक्षम् , न तु मित्रबलमिव तत्सापेक्षमित्यर्थः । मित्रबलमित्यादि । स्पष्टार्थम् ।

श्रीमूला.

**आर्याधिष्ठितममित्रबलमटवीबलाच्छ्रेयः। तदुभयं विलोपार्थम् । अविलोपे व्यसने च ताभ्यामहिभयं स्यात् ॥**

आर्येण सद्गुणयोगविश्वसनीयेन नायकेन अधिष्ठितम् अमित्रबलम् अटवीबलात् श्रेयः । विनियोगे विशेषमाह— तदुभयमिति । अमित्रबलम् अटवीबलमिति द्वयं विलोपार्थं विलोपमात्रप्रयोजनकं परविषयपरिलुण्टनमात्रे विनियोक्तव्यमित्यर्थः । अविलोपे विलोपातिरिक्ते युद्धादौ व्यसने च स्वविपत्समये च, विनियुज्यमानाभ्यामिति शेषः , ताभ्यां निमित्तभूताभ्याम् अहिभयं स्वपक्षकलहः स्यात् । श्रीमूला.

**ब्राह्मणक्षत्रियवैश्यशूद्रसैन्यानां तेजःप्राधान्यात् पूर्वं पूर्वं श्रेयः संनाहयितुमित्याचार्याः ॥**

अथ बलस्य जातिप्रयुक्तं श्रेयस्त्वमाह— ब्राह्मणक्षत्रियवैश्यशूद्रसैन्यानामिति । तेषां मध्ये तेजःप्राधान्यात् । तेज इह न शौर्यम् , ब्राह्मणे तदभावात् , किंतु धार्मिकत्वकृतज्ञत्वादिगुणसंपत् । तस्य प्राधान्यात् मुख्यतया गणनीयत्वात् पूर्वं पूर्वं संनाहयितुं श्रेयः । इत्याचार्याः , मन्यन्ते इति शेषः । श्रीमूला.

**नेति कौटल्यः । प्रणिपातेन ब्राह्मणबलं परोऽभिहारयेत् । प्रहरणविद्याविनीतं तु क्षत्रियबलं श्रेयः, बहुलसारं वा वैश्यशूद्रबलमिति ॥**

तन्मतं निराचष्टे— नेति कौटल्य इति । तत्र हेतुमाह — प्रणिपातेन ब्राह्मणबलं परः शत्रुः अभिहारयेत् स्वायत्तीकुर्यात् । किं तर्हि श्रेय इत्याह— प्रहरणविद्याविनीतं त्विति । शस्त्रविद्याशिक्षितं क्षत्रियबलं श्रेयः , बहुलसारं वा प्रवीरप्रचुरं वा वैश्यशूद्रबलं श्रेयः । इतिशब्दः श्रेयस्त्वनिरूपणसमाप्तौ । श्रीमूला.

**तस्मात् 'एवंबलः परः, तस्यैतत् प्रतिबलम्' इति बलसमुद्दानं कुर्यात् ॥**

'प्रतिबलकर्म' इति सूत्रम् । सामर्थ्यादिना परबलस्यानुरूपं बलं प्रतिबलम् , तस्य कर्म करणप्रकारः अभिधीयते इति सूत्रार्थः । संनाहगुणवत् प्रतिबलकर्मणोऽपि बलशेषत्वादिह निरूपणसंगतिः ।

तस्मादिति । यथोक्तसंनाहगुणावगमानन्तरमित्यर्थः । एवंबलः परः एवंप्रकारबलयुक्तः शत्रुः, तस्यैतत् प्रतिबलं तथाविधस्य शत्रोरिदमनुरूपं प्रतियोधनक्षमं बलम् इति, ज्ञात्वेति शेषः , बलसमुद्दानं बलस्योपादानं कुर्यात् ।

श्रीमूला.

हस्तिबलादीनां प्रतिबलविवेकः

**हस्तियन्त्रशकटगर्भकुन्तप्रासहाटकवेणुशल्यवद्धस्तिबलस्य प्रतिबलम् ॥**

तत्र हस्तिबलस्य प्रतिबलमाह— हस्तियन्त्रशकटगर्भेत्यादि । हस्तीत्यादिपदे प्रशंसायां मतुप् । प्रशस्तहस्त्यादियुक्तमित्यर्थः । तत्र यन्त्रं जामदग्न्यादि । शकटगर्भः

शकटरूपो मध्यः, शकटस्येव गर्भो यस्येति वा। कुन्तः 'हस्ताः सप्तोत्तमः कुन्तः' इत्यायुधागाराध्यक्षे व्याख्यात-लक्षणः। प्रासः चतुर्विंशत्यङ्गुलः सर्वलोहमयः। हाटकं त्रिकण्टकं कुन्ततुल्यप्रमाणम्। वेणुः दीर्घप्रतोदः। शल्यः सर्वतोऽयःशङ्कुमान् लोहदण्डः। एवंभूतं बलं हस्तिबलस्य प्रतिबलम्। श्रीमूला.

**तदेव पाषाणलगुडावरणाङ्कुशकचग्रहणीप्रायं रथबलस्य प्रतिबलम्॥**

रथबलस्य प्रतिबलमाह– तदेवेति। हस्तिबलप्रतिबलमेव पाषाणादिप्रायम्– पाषाणः महाशिला, लगुडः ह्रस्वगदा, आवरणं प्रसिद्धम्, अङ्कुशः दीर्घलोहमयः सृणिः, कचग्रहणी दीर्घफलः साङ्कुशो वेणुः, एवंप्रायं रथबलस्य प्रतिबलम्। श्रीमूला.

**तदेवाश्वानां प्रतिबलम्॥**

अश्वानामाह– तदेवेति। तदेव हस्तिप्रतिबलमेव अश्वानां प्रतिबलम्। श्रीमूला.

**वर्मिणो वा हस्तिनोऽश्वा वा वर्मिणः कवचिनो रथा आवरणिनः पत्तयश्चतुरङ्गबलस्य प्रतिबलम्॥**

वर्मवन्तो गजास्तथाभूता अश्वाः कवचयुक्ता रथाः आवरणवन्तः पदातयश्च हस्त्यश्वरथपदात्यात्मकस्य चतुरङ्गसैन्यस्य यथाक्रमं सामान्यतः प्रतिबलं भवतीत्याह– वर्मिणो वा हस्तिन इत्यादि। श्रीमूला.

**एवं बलसमुद्दानं परसैन्यनिवारणम्।**
**विभवेन स्वसैन्यानां कुर्यादङ्गविकल्पशः॥**

यथोक्तसंनाहगुणप्रतिबलकर्मप्रकारज्ञानपूर्वं बलानामुपादानं परसैन्यनिवारणं शत्रुसैन्यप्रतियोधनशक्तं विभवेन स्वसैन्यानां मौलभृतादिस्वकीयसैन्यसंपदानुरूप्येण अङ्गविकल्पशः हस्त्यश्वादिरूपसेनाङ्गबाहुल्याल्पत्वविभागानुरोधेन कुर्यात्। श्रीमूला.

पश्चात्कोपबाह्याभ्यन्तरकोपानां लक्षणानि लघुगुरुभावविवेकः तत्प्रतीकारोपायाश्च, स्वपरात्मरक्षा, नित्यमात्मरक्षणं श्रेष्ठम्

**[1]अल्पः पश्चात्कोपो महान् पुरस्ताल्लाभ इति। अल्पः पश्चात्कोपो गरीयान्। अल्पं पश्चात्कोपं प्रयातस्य दूष्यामित्राटविका हि सर्वतः समेधयन्ति, प्रकृतिकोपो वा। लब्धमपि च महान्तं पुरस्ताल्लाभमेवंभूते भृत्यमित्रक्षयव्यया ग्रसन्ते। तस्मात् सहस्रैकीयः पुरस्ताल्लाभस्याऽऽयोगः, शतैकीयो वा पश्चात्कोप इति न यायात्। सूचीमुखा ह्यनर्था इति लोकप्रवादः॥**

'पश्चात्कोपचिन्ता' इति सूत्रम्। पुरस्ताल्लाभमुद्दिश्य प्रस्थिते विजिगीषौ पश्चात् पार्ष्णिग्राहाटविकदूष्यादिभिरुत्पाद्यमानो दाहविलोपादिरनर्थः पश्चात्कोपः। तस्य चिन्ता पुरस्ताल्लाभापेक्षया गुरुलघुभावविचारः क्रियते इति सूत्रार्थः। समुदात्तबलेनापि यानं पश्चात्कोपानर्थस्याभावनिश्चये सत्येव कर्तव्यमिति तच्चिन्ताऽत्राऽऽरभ्यते।

अल्प इत्यादि। गरीयानित्युत्तरवाक्यगतं सामर्थ्यादिहापकृष्य संबध्यते। इतिशब्दानन्तरं च विचार्यते इति शेषः। किं याने सति जायमानः स्वल्पः पश्चात्कोपो गुरुतरत्वेन गणनीयः (पुरस्ताल्लाभमप्युपेक्ष्य अवर्जनीयत्वेनापेक्षणीयः), उताहो प्रभूतः पुरस्ताल्लाभो गुरुतरत्वेन गणनीयः (पश्चात्कोपमप्युपेक्ष्य उपादेयत्वेनापेक्षणीयः) इति विचार्यत इत्यर्थः। तत्र अल्पः पश्चात्कोप एव महतः पुरस्ताल्लाभात् गुरुतर इति निश्चयमाह– अल्पः पश्चात्कोप इत्यादि। तत्र हेतुमाह– अल्पं पश्चात्कोपमित्यादि। स्वल्पमपि हि पश्चात् पार्ष्णिग्राहमात्रेणोत्पादितं कोपं प्रयातस्य विजिगीषोर्दूष्या अमित्रा आटविकाश्च पुरः पार्श्वतश्च वर्धयन्ति, मन्त्रिपुरोहिताद्याभ्यन्तरप्रकृतिकोपो वा तं वर्धयतीत्यर्थः। लब्धमपि चेति। अगणितपश्चात्कोपेन विजिगीषुणा यानं कृत्वाऽर्जितमपि महान्तं प्रभूतं पुरस्ताल्लाभम् एवंभूते पश्चात्कोपे वृद्धिप्राप्ते

---

(१) कौ. ९।३.

सति भृत्यमित्रक्षयव्ययाः भृत्येषु मित्रेषु च विषये क्षयव्ययाः कोपप्रशमनार्थाः ग्रसन्ते कवलयन्ति। न शेषयन्तीत्यर्थः। एवं च सिद्धं प्रभूतस्यापि पुरस्ताल्लाभस्य पश्चात्कोपापेक्षं फल्गुत्वमवच्छिन्दन् यानं प्रतिषेधति— तस्मादिति। यानलब्धप्रभूतसर्वलाभग्रसनात् पुरस्ताल्लाभस्य आयोगः सिद्धिः सहस्रैकीयः सहस्रे एकांशमात्रः, पर्यवस्यतीति शेषः। कदाऽसौ सहस्रैकीयत्वकल्पनेत्याह— शतैकीयो वा पश्चात्कोप इति। पश्चात्कोपजन्योऽनर्थः शते एकांशमात्रो यदि गण्यते तदेत्यर्थः। तथाच पश्चात्कोपात् दशगुणं पुरस्ताल्लाभस्य फल्गुत्वमित्याशयः। इति न यायादिति। उक्ताद्धेतोः पश्चात्कोपशङ्कायां यानं न कुर्यादित्यर्थः। अपरो व्याख्याप्रकारः— एवं च सिद्धं पश्चात्कोपस्य गरीयस्त्वं पुरस्ताल्लाभफल्गुत्वावच्छेदपूर्वमवच्छिनत्ति— तस्मादिति। यानलब्धसर्वलाभग्रसनात् पुरस्ताल्लाभस्य आयोगः सिद्धिः सहस्रैकीयः, गण्यते चेदिति शेषः। पश्चात्कोपः शतैकीयः, गणनीय इति शेषः। शेषं समानम्। अल्पोऽपि पश्चात्कोपः प्रवृद्धो भवतीत्युपदेशं द्रढयितुं लोकप्रवादं दर्शयति— सूचीमुखा हीत्यादि। सूचीमुखाः अत्यल्पारम्भाः अर्थादुत्तरकालबहुलाः। श्रीमूला.

**पश्चात्कोपे सामदानभेददण्डान् प्रयुञ्जीत। पुरस्ताल्लाभे सेनापतिं कुमारं वा दण्डचारिणं कुर्वीत॥**

पश्चात्कोपसंभावनायामपि यथा यानमनुष्ठीयेत तथाऽऽह— पश्चात्कोप इति। तस्मिन् सति सामदानभेददण्डान् प्रयुञ्जीत प्रयुज्य पश्चात्कोपं शमयेत् स्वयमप्रयात एव सन्नित्यर्थः। कस्तर्हि पुरस्ताल्लाभं प्रति यायादित्यपेक्षायामाह— पुरस्ताल्लाभ इति। पुरस्ताल्लाभसाधनार्थे सेनापतिं कुमारं वा दण्डचारिणं कुर्यात् सैन्यप्रणेतारं कृत्वा यानं कारयेदित्यर्थः। श्रीमूला.

**बलवान् वा राजा पश्चात्कोपावग्रहसमर्थः पुरस्ताल्लाभमादातुं यायात्। अभ्यन्तरकोपशङ्कायां शङ्कितानादाय यायात्॥**

यदि बहुलबलयोगी राजा तर्हि पश्चात्कोपप्रतिविधानार्थं बलैकदेशं समर्थं नियुज्य पुरस्ताल्लाभग्रहणाय स्वयमेव वा यायादित्याह— बलवान् वेत्यादि। एष पश्चात्कोपे विधिः। अभ्यन्तरकोपे त्वाह— अभ्यन्तरकोपशङ्कायामिति। मन्त्रिपुरोहितसेनापतियुवराजानामन्यतमकोपः अभ्यन्तरकोपः, तस्य शङ्कायां शङ्कितान् येषां कोपः संभावितस्तानमात्यादीन् आदाय यायात् आत्मना सहैव गृहीत्वा यायात्। स्वसांनिध्यैकावग्राह्यत्वात् तत्कोपस्येत्यभिप्रायः। श्रीमूला.

**बाह्यकोपशङ्कायां वा पुत्रदारमेषामभ्यन्तरावग्रहं कृत्वा शून्यपालमनेकबलवर्गमनेकमुख्यं च स्थापयित्वा यायात्। न वा यायात्। 'अभ्यन्तरकोपो बाह्यकोपात् पापीयान्' इत्युक्तं पुरस्तात्॥**

राष्ट्रमुख्यान्तपालाटविकदण्डोपनतानामन्यतमकोपः बाह्यकोपः वक्ष्यमाणः, तच्छङ्कायां पुत्रदारम् एषां राष्ट्रमुख्यादीनां पुत्रान् दारांश्च अभ्यन्तरावग्रहम् अमात्यादिप्रतिबद्धं कृत्वा यायादिति वक्ष्यमाणेन संबन्धः। बाह्याभ्यन्तरोभयशङ्कासाधारणमाह— शून्यपालमिति। शून्यपालम्— शून्यं शत्र्वभियोगप्रयातस्वामिकं स्थानीयम्, तत्पालकम् अनेकबलवर्गं परस्परासंहत्यर्थं मौलभृतादिनानाजातीयसैन्यवर्गयुक्तम्, अनेकमुख्यं अनेके मुख्याः सैन्याध्यक्षाः यस्य तं तथाभूतं स्थापयित्वा यायात्। एवं करणेऽप्याभ्यन्तरकोपसाधनमनैकान्तिकमित्यभिप्रायेणाऽऽह — न वा यायादिति। अभ्यन्तरकोपस्याशक्यप्रतिविधानतामयाने हेतुं द्योतयितुं बाह्यकोपात् पापीयस्त्वं पूर्वोक्तं स्मारयति— अभ्यन्तरकोप इत्यादि। 'न वा यायात्' इत्येतदनन्तरम् 'अहिभयात्' इत्यधिकपाठो नयचन्द्रिकाया अभिमत इव प्रतीयते। श्रीमूला.

**मन्त्रिपुरोहितसेनापतियुवराजानामन्यतमकोपोऽभ्यन्तरकोपः। तमात्मदोषत्यागेन परशक्त्यपराधवशेन वा साधयेत्॥**

कोऽसावभ्यन्तरकोप इत्याह— मन्त्रिपुरोहितेत्यादि। तमिति। अभ्यन्तरकोपम् आत्मदोषत्यागेन स्वदोष

आभ्यन्तरकोपस्य कारणं चेत् तत्यागेन साधयेत् प्रतिविदध्यात् । परशक्त्यपराधवशेन वा मन्त्रिपुरोहितादिदोष आभ्यन्तरकोपस्य कारणं चेत् मन्त्रिपुरोहितादीनां शक्त्यपराधानुरोधेन वा साधयेत् वधबन्धार्थदण्डैर्दण्डयेत् ।
श्रीमूला.

**महापराधेऽपि पुरोहिते संरोधनमवस्रावणं वा सिद्धिः, युवराजे संरोधनं निग्रहो वा गुणवत्यन्यस्मिन् सति पुत्रे ॥**

पुरोहितादिषु दण्डदानप्रकारमाह– महापराधेऽपीति । तथाभूतेऽपि पुरोहिते संरोधनं बन्धनम् अवस्रावणं वा देशान्निर्वासनं वा सिद्धिः दण्डः । न तु वधो ब्राह्मणत्वादित्यभिप्रायः । युवराजे विषये संरोधनं निग्रहो वा वधो वा सिद्धिः । कदाऽयं वधपक्षस्तत्राऽऽह– गुणवत्यन्यस्मिन् सति पुत्र इति । गुणवत्पुत्रान्तरसद्भावे । श्रीमूला.

**ताभ्यां मन्त्रिसेनापती व्याख्यातौ ॥**

उक्तदण्डाभ्यां पुरोहितयुवराजाभ्याम् , यद्वा उक्ताभ्यां संरोधननिग्रहाभ्यां मन्त्रिसेनापती व्याख्यातौ उक्तदण्डौ वेदितव्यौ । तयोरपि संरोधनम् अब्राह्मणत्वे निग्रहश्च यथापराधं भवत इत्यभिप्रायः । श्रीमूला.

**पुत्रं भ्रातरमन्यं वा कुल्यं राज्यग्राहिणमुत्साहेन साधयेत् । उत्साहाभावे गृहीतानुवर्तनसंधिकर्मभ्यामरिसंधानभयात् । अन्येभ्यस्तद्विधेभ्यो वा भूमिदानैर्विश्वासयेदेनम् । तद्विशिष्टं स्वयंग्राहं दण्डं वा प्रेषयेत्, सामन्ताटविकान् वा । तैर्विगृहीतमतिसंदध्यात् । अवरुद्धादानं पारग्रामिकं वा योगमातिष्ठेत् ॥**

आभ्यन्तरकोपस्य प्रकारान्तराण्याह– पुत्रमित्यादि । तं भ्रातरम् अन्यं वा कुल्यं स्वकुलीनं राज्यग्राहिणं राज्यजिघृक्षुम् उत्साहेन साधयेत् सैनापत्याद्यधिकारनियोजनेन प्रोत्साह्य शमयेत् । उत्साहाभावे उत्साहाशक्तौ गृहीतानुवर्तनसंधिकर्मभ्यां तत्परिगृहीतभूम्यादिभोगानुवृत्त्यनुमत्या संधिकर्मणा च साधयेत् । कुतः ? अरिसंधानभयात् 'असाधने स शत्रुणा सह संदध्यात्' इति भयात् । अन्येभ्यस्तद्विधेभ्यो वेति । कुल्यान्तरेभ्यः भूमिदानैः एनं विश्वासयेत् । तद्विशिष्टं तेन कुल्येन युक्तं स्वयंग्राहं दण्डं वा– 'येन यल्लभ्यते तत् तस्य स्वम्' इति परिभाष्य युध्यमानं बलं स्वयंग्राहदण्डः, तं वा प्रेषयेत् क्वचिदभियोगार्थम् । सामन्ताटविकान् वा तद्विशिष्टान् प्रेषयेत् । तैः तथा प्रेषितैः स्वयंग्राहदण्डसामन्ताटविकैः विगृहीतं विरोधितम् । कृत्वेति शेषः । अतिसंदध्यात् बन्धयेदित्यर्थः । अतिसंधानप्रकारमाह– अवरुद्धादानमिति । अवरुद्धस्य स्वयंग्राहदण्डादिभिर्बद्धस्य ग्रहणं पारग्रामिकं तदाख्यं योगं वा दुर्गलम्भोपायोक्तम् आतिष्ठेत् अनुतिष्ठेत् । श्रीमूला.

**एतेन मन्त्रिसेनापती व्याख्यातौ ॥**

उक्तं कुल्यस्य साधनोपायं मन्त्रिसेनापत्योरतिदिशति– एतेनेत्यादि । इत्थं मन्त्र्यादिचतुष्टयान्यतमकोपलक्षण आभ्यन्तरकोपस्तत्परिहारश्चोक्तः । श्रीमूला.

**मन्त्र्यादिवर्जानामन्तरमात्यानामन्यतमकोपोऽन्तरमात्यकोपः । तत्रापि यथार्हमुपायान् प्रयुञ्जीत ॥**

अन्तरमात्यकोपलक्षणमाभ्यन्तरकोपस्य प्रकारान्तरं परिभाषते– मन्त्र्यादिवर्जानामित्यादि । मन्त्रिपुरोहितसेनापतियुवराजव्यतिरिक्ताः ये अन्तरमात्याः दौवारिकान्तर्वंशिकादयः तेषामन्यतमस्य कोपः अन्तरमात्यकोपः इति व्यपदिश्यते । तत्प्रशमनेऽपि पूर्वोक्तानुपायान् यथायोगं प्रयुञ्जीतेत्यर्थः । श्रीमूला.

**राष्ट्रमुख्यान्तपालाटविकदण्डोपनतानामन्यतमकोपो बाह्यकोपः । तमन्योन्येनावग्राहयेत् । अतिदुर्गप्रतिस्तब्धं वा सामन्ताटविकतत्कुलीनावरुद्धानामन्यतमेनावग्राहयेत् । मित्रेणोपग्राहयेद्वा, यथा नामित्रं गच्छेत् ॥**

अथ बाह्यकोपं तत्परिहारं च निरूपयति– राष्ट्रमुख्यान्तपालाटविकदण्डोपनतानामिति । एषां मध्ये अन्यतमकोपः बाह्यकोपः तदाख्यः । तम् अन्योन्येन अवग्राहयेत् राष्ट्रमुख्यस्य कोपमन्तपालादिभिः अन्तपालादीनां कोपं राष्ट्रमुख्येनेत्येवं परस्परेण शमयेत् । तस्यावग्रहीतुमशक्यतायामाह– अतिदुर्गप्रतिस्तब्धं वेति । प्रबलदुर्गावष्टम्भं

राष्ट्रमुख्यादि सामन्ताटविकतत्कुलीनावरुद्धानामन्यतमेन सामन्तेन आटविकेन तत्कुलीनो यस्तदवरुद्धस्तेन वा अवग्राहयेत् बन्धयेत्। अथवा मित्रेण स्वीयेन उपग्राहयेत् संगमयेत् प्राप्तसख्यं कारयेत्। किमर्थम्? यथा नामित्रं गच्छेत् यथा स शत्रुणा संगतो न स्यादित्येतदर्थमित्यर्थः। श्रीमूला.

**अमित्राद्वा सत्री भेदयेदेनम्– 'अयं त्वा योगपुरुषं मन्यमानो भर्तर्येव विक्रमयिष्यति, अवाप्तार्थो दण्डचारिणममित्राटविकेषु कृच्छ्रे वा प्रवासे योक्ष्यति, विपुत्रदारमन्ते वा वासयिष्यति, प्रतिहतविक्रमं त्वां भर्तरि पण्यं करिष्यति, त्वया वा संधिं कृत्वा भर्तारमेव प्रसादयिष्यति, मित्रमुपकृष्टं वाऽस्य गच्छेत्' इति ॥**

अमित्रसंगमनवारणस्यान्यमुपायमाह– अमित्राद्वेति। सत्री गूढपुरुषः एनं बाह्यं राष्ट्रमुख्याद्यन्यतमम् अमित्रात् भेदयेत्। किमुक्त्वा भेदयेदित्याह– अयं त्वेत्यादि। अयमर्थः– यं त्वं गन्तुमिच्छसि सोऽयं त्वां परस्य गूढपुरुषं मन्यमानो 'भर्तर्येव विक्रमस्व' इति चोदयिष्यति, भर्तृविक्रमणदृष्टप्रयोजनः दुष्करे दूरदेशप्रवासकरणीये अमित्राटविकसाधनार्थेऽभियोगे वा त्वां स्वसेनाप्रणेतारं कृत्वा नियोजयिष्यति, तव पुत्रान् दारांश्च स्ववशे स्थापयित्वा तद्विरहितमेव त्वां विषयान्ते वा वासयिष्यति, दृष्टभर्तृविक्रमप्रतिघातं त्वां स्वामिने विक्रेष्यते, त्वामेव वा पणस्थानीयं स्वामिनेऽर्पयित्वा संधिकरणेन स्वामिनं प्रसादयिष्यति, स्वामिन एव वा केनचिन्मित्रेण सह त्वां पणीकृत्य संधिं कारयिष्यति इत्युक्त्वेति। श्रीमूला.

**प्रतिपन्नमिष्टाभिप्रायैः पूजयेत् ॥**

अङ्गीकृतभेदोपदेशम् इष्टाभिप्रायैः तदीप्सितार्थलाभैः पूजयेत्। श्रीमूला.

**अप्रतिपन्नस्य संश्रयं भेदयेत्– 'असौ ते योगपुरुषः प्रणिहितः' इति ॥**

अप्रतिपन्नस्य शत्रुसंगमविघटनोपायमाह– अप्रतिपन्नस्येति। अनङ्गीकृतभेदोपदेशस्य संश्रयं भेदयेत्। संश्रयभेदनेन तत्संगमं विघटयेदित्यर्थः। किमित्युक्त्वेत्याह– असौ ते योगपुरुषः प्रणिहित इतीति। यस्त्वां संश्रयितुमुपस्थितः स परप्रेषितो गूढपुरुष इत्युक्त्वा। श्रीमूला.

**सत्री चैनमभिव्यक्तशासनैर्घातयेत्, गूढपुरुषैर्वा। सहप्रस्थायिनो वाऽस्य प्रवीरपुरुषान् यथाभिप्रायकरणेनाऽऽवाहयेत्। तेन प्रणिहितान् सत्री ब्रूयात्। इति सिद्धिः। परस्य चैनान् कोपानुत्थापयेत्। आत्मनश्च शमयेत् ॥**

सत्री चेति। स च एनम् अप्रतिपन्नं बाह्यं परसंश्रयिणम् अभिव्यक्तशासनैः– वध्यतया निश्चिताः पुरुषा अभिव्यक्ताः, तद्धस्तप्रेषितैर्गूढलेखैः 'अमित्रो गूढं त्वया हन्यताम्' इत्येतादृशार्थप्रतिपादकैः घातयेत् अर्थादमित्रेणैव विदिततल्लेखार्थेन। गूढपुरुषैर्वा घातयेत् अर्थात् विजिगीषुप्रयुक्तैः। सहप्रस्थायिनो वाऽस्येति। ये शत्रुं संश्रयितुं बाह्येन सह प्रस्थिताः तान् प्रवीरपुरुषान् यथाभिप्रायकरणेन तदिष्टार्थप्रदानेन आवाहयेत् स्वपक्षमानयेत्। 'वाहयेत्' इति पाठेऽप्ययमेवार्थः। सहप्रस्थायिनश्चेदावाहयितुमशक्यास्तदा किं कर्तव्यमित्याह– तेन प्रणिहितान् सत्री ब्रूयादिति। 'ते प्रवीरपुरुषा विजिगीषुणा त्वां हन्तुं प्रणिहिता गूढपुरुषाः' इति सत्री अमित्रं बोधयेदित्यर्थः। इति सिद्धिरिति। अनेन प्रकारेण कोपप्रतीकार इत्यर्थः। तानिमान् आभ्यन्तरबाह्यकोपान् शत्रुपक्षे जनयेत्, स्वपक्षे च शत्रुजनितान् प्रतिकुर्यादित्याह– परस्य चैनानित्यादि। श्रीमूला.

**यः कोपं कर्तुं शमयितुं वा शक्तस्तत्रोपजापः कार्यः। यः सत्यसंधः शक्तः कर्मणि फलावाप्तौ चानुग्रहीतुं विनिपाते च त्रातुम्, तत्र प्रतिजापः कार्यः। तर्कयितव्यश्च– 'कल्याणबुद्धिरुताहो शठः' इति ॥**

य एष उपजापः कोपोत्पादार्थो भेदः स कुत्र प्रयोक्तव्य इत्याकाङ्क्षायामाह– यः कोपमित्यादि। कोपोत्पादनप्रशमनयोरुभयोरपि यः शक्तः तस्मिन्नेवोपजापः कर्तव्यः। उपजापाभ्युपगमलक्षणः प्रतिजापः कुत्र कर्तव्य इत्याह– य इत्यादि। यः सत्यसंधः विश्वसनीयः कर्मणि

क्रियानुष्ठाने फलावाप्तौ अनुग्रहीतुं च प्रतिजापयितुरुपकर्तुं च विनीपाते त्रातुं च विपत्तौ रक्षितुं च शक्तः तत्र प्रतिजापः कार्यः । उपजपितुर्वञ्चकत्वसंभवात् स प्रतिजपित्रा 'वञ्चको न वा' इति परिक्षणीय इत्याह– तर्कयितव्यश्चेत्यादि । श्रीमूला.

**शठो हि बाह्योऽभ्यन्तरमेवमुपजपति– भर्तारं चेद्धत्वा मां प्रतिपादयिष्यति शत्रुवधो भूमिलाभश्च मे द्विविधो लाभो भविष्यति, अथवा शत्रुरेनमाहनिष्यति हतबन्धुपक्षस्तुल्यदोषदण्डेन वोद्विग्नश्च मे भूयान् कृत्यपक्षो भविष्यति, तद्विधे वाऽन्यस्मिन्नपि शङ्कितो भविष्यति, अन्यमन्यं चास्य मुख्यमभित्यक्तशासनेन घातयिष्यामीति ॥**

उपजपिता नाम बाह्यो वाऽभ्यन्तरमुपजपति अभ्यन्तरो वा बाह्यम् । तत्र बाह्यस्योपजपितुः शठस्याभिसन्धीनाह – शठो हि बाह्य इत्यादि । स हि अभ्यन्तरं वक्ष्यमाणैरभिसंधिप्रकारैरुपजपति । तानाह– भर्तारमित्यादि । अन्तिम इतिशब्दस्त्रिषु संबध्यते । तेनायमर्थः– मयोपजपितोऽभ्यन्तरो मन्त्री स्वामिनं हत्वा तत्स्थाने मां निवेशयिष्यति चेत् शत्रुवधो भूमिलाभश्चेति द्विप्रकारो लाभो मे भविष्यतीति, अथवा शत्रुश्चेत् मन्त्रिणं हनिष्यति तर्हि हतस्य मन्त्रिणो बन्धुवर्गः मन्त्रिवधेनोद्विग्नो मन्त्रितुल्यदोषः क्रुद्धलुब्धादिवर्गश्चेत्येवं कृत्यपक्षो मे बहुतरः सिध्येदिति, विजिगीषुस्तज्जातीयेऽन्यस्मिन्नपि अविश्वस्तो भविष्यति, तेनान्यमन्यं च विजिगीषोर्मुख्यं अभित्यक्तहस्तद्वारप्रेषितेन कूटलेखेन विजिगीषुवधबन्धादिकर्तव्यतोपदेशकेन घातयिष्यामीति । श्रीमूला.

**अभ्यन्तरो वा शठो बाह्यमेवमुपजपति– कोशमस्य हरिष्यामि, दण्डं वाऽस्य हनिष्यामि, दुष्टं वा भर्तारमनेन घातयिष्यामि, प्रतिपन्नं बाह्यममित्राटविकेषु विक्रमयिष्यामि 'चक्रमस्य सज्यताम्, वैरमस्य प्रसज्यताम्', ततः स्वाधीनो मे भविष्यति, ततो भर्तारमेव प्रसादयिष्यामि, स्वयं वा राज्यं ग्रहीष्यामि, बद्ध्वा वा बाह्यभूमिं भर्तृभूमिं चोभयमवाप्स्यामि, विरुद्धं वाऽऽवाहयित्वा बाह्यं विश्वस्तं घातयिष्यामि, शून्यं वाऽस्य मूलं हरिष्यामीति ॥**

अभ्यन्तरस्योपजपितुः शठस्याभिसंधीनाह– अभ्यन्तरो वा शठ इत्यादि । अयमर्थः– कोशमस्य बाह्यस्य हरिष्यामि, अथवा बलमस्य हनिष्यामि, अथवा दुष्टं मे भर्तारमनेन घातयिष्यामि, अथवा प्रतिपन्नमद्भर्तृघाताभ्युपगमं बाह्यं प्रथमममित्रेष्वाटविकेषु च विक्रान्तं कारयित्वा तैः सहास्य सैन्ये सक्ते प्रकर्षेण रूढे चास्य वैरे ममायं विधेयो भविष्यति, तेन मयि भर्तृप्रसादो भविष्यति, अथवा स्वयं बाह्यस्य विधेयीभूतस्य राज्यं ग्रहीष्यामि, बद्ध्वा वा बाह्यं तस्य भूमिं भर्तुर्भूमिं चेत्युभयं शासनीयमवाप्स्यामि, अथवाऽस्य विरोधिनं यं कमप्यानीय तेन बाह्यं विश्वस्तं घातयिष्यामि, अथवा बाह्यस्य स्थानीयमन्याभियोगव्यासङ्गासंनिहितस्वामिकं हरिष्यामि इत्येतैरभिसंधिप्रकारैः शठोऽभ्यन्तरो बाह्यमुपजपेदिति । श्रीमूला.

**कल्याणबुद्धिस्तु सहजीव्यर्थमुपजपति । कल्याणबुद्धिना संदधीत । शठम् 'तथा' इति प्रतिगृह्यातिसंदध्यात् । इति ॥**

कल्याणबुद्धिस्त्विति । अशठस्तु सहजीवी संश्लिष्यैव जीवितुं शीलवान्, न तु विरुध्य, अत एव अर्थे हितम् उपजपति, नानर्थम् । ततश्च कल्याणबुद्धिना सह संदधीत संधिं कुर्यात् । शठं तथेति प्रतिगृह्य 'यथा त्वयोच्यते तथा करोमि' इति तद्वचनमङ्गीकृत्य अतिसंदध्यात् वञ्चयेत् । इतिशब्द उपायोपदेशसमाप्तौ । श्रीमूला.

**एवमुपलभ्य–**

**परे परेभ्यः स्वे स्वेभ्यः स्वे परेभ्यः स्वतः परे ।**
**रक्ष्याः स्वेभ्यः परेभ्यश्च नित्यमात्मा विपश्चिता ॥**

एवमुपलभ्येति वक्ष्यमाणश्लोकान्वयि । पर इति । विपश्चिता कार्यतत्त्वविदुषा विजिगीषुणा एवम् उपलभ्य शठत्वकल्याणबुद्धित्वे निश्चित्य परे परेभ्यो रक्ष्याः

शठत्वादिनाऽऽत्मविदिताः परे परेभ्यो न प्रकाश्याः। स्वे स्वीयास्तथाऽऽत्मविदिताः स्वेभ्यो रक्ष्याः न प्रकाश्याः। स्वे तथाऽऽत्मविदिताः परेभ्यो रक्ष्याः न प्रकाश्याः। परे तथा विदिताः स्वतः स्वेभ्यः रक्ष्याः न प्रकाश्याः। आत्मा स्वेभ्यः परेभ्यश्च नित्यं रक्ष्यः आत्मनः परान् स्वांश्च प्रति योऽभिप्रायोऽनुकूलः प्रतिकूलो वा स स्वेभ्यः परेभ्यश्च कदाऽपि न प्रकाश्य इत्यर्थः।

श्रीमूला.

तारतम्येन क्षयव्ययलाभप्रकारपरामर्शः

**[1]युग्यपुरुषापचयः क्षयः। हिरण्यधान्यापचयो व्ययः॥**

'क्षयव्ययलाभविपरिमर्शः' इति सूत्रम्। युग्यपुरुषापचयः क्षयः, धान्यहिरण्यापचयः व्ययः, लाभः यानफलं भूम्यादिप्राप्तिः, तेषां विपरिमर्शः गौरवलाघवविचारः क्रियत इति सूत्रार्थः। यानहेतुकयोर्बाह्याभ्यन्तरकोपयोर्निरूपणानन्तरं क्षयव्ययावपि तत्त्वाविशेषान्निरूपणीयतया प्राप्ताविति संगतिः।

प्रथमं क्षयव्यययोः स्वरूपमाह— युग्यपुरुषापचय इति। युग्यानि वाहनानि, पुरुषाः कर्मकरादयः, तेषामपचयः क्षयः। हिरण्यधान्यापचयः— हिरण्यं धनादि, धान्यं व्रीह्यादि, तयोरपचयः व्ययः। श्रीमूला.

**ताभ्यां बहुगुणविशिष्टे लाभे यायात्॥**

क्षयव्ययापेक्षया बहुगुणविशिष्टे आदेयत्वप्रत्यादेयत्वादिभिर्द्वादशभिर्गुणैर्युक्ते लाभे सति यायात्।

श्रीमूला.

**आदेयः प्रत्यादेयः प्रसादकः प्रकोपको ह्रस्वकालस्तनुक्षयोऽल्पव्ययो महान् वृद्ध्युदयः कल्यो धर्म्यः पुरोगश्चेति लाभसंपत्॥**

तान् गुणानुद्दिशति— आदेय इत्यादि। इति लाभसंपत् उक्तद्वादशप्रकारो लाभस्य गुण इत्यर्थः।

श्रीमूला.

**सुप्राप्यानुपाल्यः परेषामप्रत्यादेय इत्यादेयः॥**

आदेयादिषु लक्षणीयेषु प्रथममादेयं लक्षयति— सुप्राप्यानुपाल्य इत्यादि। यः सुखेन प्राप्तुं शक्यः, प्राप्तश्च सुखेनानुपालयितुं शक्यः, कालान्तरे परैः प्रत्यादातुमशक्यश्च स आदेयशब्दित इत्यर्थः।

श्रीमूला.

**विपर्यये प्रत्यादेयः। तमाददानस्तत्रस्थो वा विनाशं प्राप्नोति॥**

प्रत्यादेयं लक्षयति— विपर्यय इत्यादि। सुप्राप्यानुपाल्य एव परैः प्रत्यादातुं शक्यः प्रत्यादेय इत्यर्थः। तमिति। प्रत्यादेयं भूम्यादिलाभम् आददानः तत्रस्थो वा तत्रैव स्थित्वोपजीवन् वा विनाशं प्राप्नोति। श्रीमूला.

**यदि वा पश्येत्—'प्रत्यादेयमादाय कोशदण्डनिचयरक्षाविधानान्यवस्रावयिष्यामि, खनिद्रव्यहस्तिवनसेतुबन्धवणिक्पथानुद्धृतसारान् करिष्यामि, प्रकृतीरस्य कर्शयिष्याम्यावाहयिष्याम्यायोगेनाऽऽराधयिष्यामि वा, ताः परः प्रतियोगेन कोपयिष्यति, प्रतिपक्षे वाऽस्य पण्यमेनं करिष्यामि, मित्रमवरुद्धं वाऽस्य प्रतिपादयिष्यामि, मित्रस्य स्वस्य वा देशस्य पीडामत्रस्थस्तस्करेभ्यः परेभ्यश्च प्रतिकरिष्यामि, मित्रमाश्रयं वाऽस्य वैगुण्यं ग्राहयिष्यामि, तदमित्रविरक्तं तत्कुलीनं प्रतिपत्स्यते, सत्कृत्य वाऽस्मै भूमिं दास्यामीति संहितसमुत्थितं मित्रं मे चिराय भविष्यति' इति प्रत्यादेयमपि लाभमाददीत। इत्यादेयप्रत्यादेयौ व्याख्यातौ॥**

विषयविशेषे तमप्याददीतेत्याह— यदि वा पश्येदित्यादि। अयमर्थः— प्रत्यादेये गृहीते तेन तल्लाभनाशात् परस्य कोशं दण्डं व्रीह्यादिसंचयं दुर्गप्राकारादिरक्षाविधानं च हीनमापादयिष्यामि, तेन परस्य खनिं द्रव्यवनं हस्तिवनं सेतुबन्धं वणिक्पथं चोद्धृतसारं कृत्वा क्षयप्राप्तं करिष्यामि, तेन परस्य प्रकृतीस्तदुपजीविनीरुपजीव्यहान्या कर्शयिष्यामि, लब्धभूमावेव वा तत्फलभोगार्थं परस्य प्रकृतीरानीय वासयिष्यामि, आयोगेन च तदीय-

(१) कौ. ९।४.

सर्वोपचयभोगाभ्यनुज्ञानलक्षणेन ताः प्रीणयिष्यामि, परो मद्गृहीतभूमिप्रत्यादानानन्तरं मद्विहितानुग्रहविपरीताचरणलक्षणेन प्रतियोगेन प्रकृतिकोपमात्मानर्थावहं जनयिष्यति, परस्य प्रतिपक्षाय वा परं लाभापहारक्षीणं द्रव्यग्रहणेनार्पयिष्यामि, अस्य लाभापहारक्षीणस्य परस्य स्थाने स्वमित्रम् अवरुद्धं पुत्रादिं वा निवेशयिष्यामि, स्वमित्रस्य स्वस्य वा देशस्य चोरेभ्यः शत्रुभ्यश्च जातां पीडां लब्धभूमिस्थितो भूत्वा प्रतिकर्तुं शक्ष्यामि, अथवा परस्य मित्रमाश्रयभूतं मध्यमं वा लब्धभूमिस्थितो भूत्वा परस्य युक्तकरग्राहित्वादिगुणहीनतां प्रजापीडकत्वं च बोधयिष्यामि, तथा बोधितं च तत् परस्य मित्रं परस्मिन् विरक्तं भूत्वा परस्य कुलीनं पुत्रादिमवरुद्धं तद्राज्यग्राहित्वेन प्रतिपत्स्यते, गृहीतामेव वा परस्य भूमिं परस्य कन्यादानादिसत्कारपूर्वं दास्यामि, इत्यनेन प्रकारेण सत्कृत्य भूमिप्रत्यर्पणलक्षणेन कृतसंधिकं मया सह संभूय व्यापृतं मम चिरस्थायि मित्रं भविष्यति, इत्येवंरूपान् हेतून् यदि पश्येत् तर्हि प्रत्यादेयमपि लाभं गृह्णीयादिति । इत्यादेयप्रत्यादेयावित्यादि । अनेन प्रकारेण आदेयानादेयौ लाभौ भावाभावरूपतया सह निरूपिताविल्यर्थः ।

श्रीमूला.

**अधार्मिकाद्धार्मिकस्य लाभो लभ्यमानः स्वेषां परेषां च प्रसादको भवति । विपरीतः प्रकोपक इति । मन्त्रिणामुपदेशाल्लाभोऽलभ्यमानः कोपको भवति ‘अयमस्माभिः क्षयव्ययौ ग्राहितः’ इति । दूष्यमन्त्रिणामनादराल्लाभो लभ्यमानः कोपको भवति ‘सिद्धार्थोऽयमस्मान् विनाशयिष्यति’ इति । विपरीतः प्रसादकः । इति प्रसादककोपकौ व्याख्यातौ ॥**

प्रसादकप्रकोपकौ निरूपयति– अधार्मिकादित्यादि । अधार्मिकसकाशात् धार्मिकेण लभ्यमानो लाभः धार्मिकपक्ष्याणामधार्मिकपक्ष्याणां चोभयेषां प्रीतिं जनयतीति स प्रसादक उच्यते । उक्तवैपरीत्येन धार्मिकसकाशादधार्मिकेण लभ्यमानो लाभ उभयेषामपि द्वेषं जनयतीति स प्रकोपक इत्युच्यत इत्यर्थः । कोपकस्यान्यौ प्रकारावाह– मन्त्रिणामित्यादि । मन्त्र्युपदेशानुसारेण कस्यचिल्लाभस्यार्थे समुद्यमे कृतेऽप्यलब्धः स लाभः स्वामिनः प्रद्वेषकरो भवति ‘ अयमस्माभिर्वृथा क्षयव्ययौ ग्राहितः ’ इति मन्त्रिणां शङ्काजनकश्च भवतीत्यर्थः । दूष्यमन्त्रिणामिति । दूष्या ये मन्त्रिणस्तेषाम् अनादरात् अवज्ञानात् लाभः लभ्यमानः कोपकः शङ्काकरः भवति । शङ्कायाः स्वरूपमाह– सिद्धार्थोऽयमित्यादि । विपरीतः प्रसादक इति । मन्त्र्युपदेशाल्लभ्यमानो लाभः दूष्यमन्त्रिणामनादरादलभ्यमानो लाभश्च प्रसादजनको भवति । इति प्रसादकेत्यादि । व्याख्यातौ पूर्ववत् सह निरूपितौ ।

श्रीमूला.

**गमनमात्रसाध्यत्वाद्ध्रस्वकालः ॥**

अथ लाभस्याभिसंधियोग्यत्वप्रयोजकान् ह्रस्वकालत्वादिगुणानाह– गमनमात्रसाध्यत्वादित्यादि । अचिरव्यापारनिष्पाद्यो लाभो ह्रस्वकाल इत्यर्थः । श्रीमूला.

**मन्त्रसाध्यत्वात् तनुक्षयः ॥**

मन्त्रेण उपजापादिना प्रधानभूतेनाल्पयुद्धवत्तयाल्पयुग्यपुरुषापचयवता साध्यत्वात् तनुक्षयो नाम लाभः ।

श्रीमूला.

**भक्तमात्रव्ययत्वादल्पव्ययः ॥**

धनग्रहणानपेक्षभक्तदानमात्रवृतसैन्यसाध्योऽल्पव्ययो नाम । श्रीमूला.

**तदात्ववैपुल्यान्महान् ॥**

तत्काल एव प्रचुरतया लभ्यमानो लाभो महान् नाम । श्रीमूला.

**अर्थानुबन्धकत्वाद्वृद्ध्युदयः ॥**

तत्काललभ्यार्थानुबन्ध्युत्तरकाललभ्यार्थको वृद्ध्युदयो नाम । श्रीमूला.

**निराबाधकत्वात् कल्यः ॥**

उत्तरकालनिरुपद्रवः कल्यः । श्रीमूला.

**प्रशस्तोपादानाद्धर्म्यः ॥**

प्रशस्तं यदुपादानं प्रकाशयुद्धेनार्जनं तेन विषयीकृतो लाभो धर्मानपेतत्वात् धर्म्यः । श्रीमूला.

**सामवायिकानामनिर्बन्धगामित्वात् पुरोग इति ॥**

संभूययायिनां परस्परभागप्रकर्षानियमोपस्थितः प्रकृष्टो लाभः पुरोग इत्युच्यते । श्रीमूला.

**तुल्ये लाभे देशकालौ शक्त्युपायौ प्रियाप्रियौ जवाजवौ सामीप्यविप्रकर्षौ तदात्वानुबन्धौ सारत्वसातत्ये बाहुल्यबाहुगुण्ये च विमृश्य बहुगुणयुक्तं लाभमाददीत ॥**

अथ लाभसाम्ये तद्विशेषोपादानस्य निमित्तान्याह– तुल्ये इत्यादि । देशकालादिनिमित्तपर्यालोचनया यस्मिन् लाभे बहुगुणयोगं पश्यति तमुपाददीतेत्यर्थः । तत्र देशस्य कालस्य चैकस्मिन्नेव द्रव्ये गुणविशेषाधानहेतुत्वं प्रसिद्धम् । शक्तिषु मन्त्रप्रभावोत्साहलक्षणासु पूर्वपूर्वसाध्यो लाभः उत्तरोत्तरसाध्यात् प्रशस्तः । तथा सामादिषु । हिरण्यलाभः सर्वप्रियत्वात् बहुगुणः, न तथाऽन्यलाभः । जवाजवौ सिद्धिशैघ्र्यविलम्बौ । शीघ्रसिद्धिको हि विलम्बसिद्धिकात् प्रशस्तः । स्वभूमिप्रत्यासन्ना भूमिर्विप्रकृष्टभूम्यपेक्षया श्रेयसीति सामीप्यविप्रकर्षौ गुणप्रयोजकौ । तत्कालमात्रपर्यवसायिनो लाभादुत्तरकालानुबन्धयुक्तः प्रशस्त इति तदात्वानुबन्धौ गुणहेतू । सारत्वसातत्ये श्रेयस्त्वप्रयोजके, यथा रत्नादेः सारत्वम्, लवणादेः सातत्यम् । बाहुल्यं संख्यातः परिमाणतश्च बहुत्वम् । बाहुगुण्यं संख्याद्यबाहुल्येऽपि बहुगुणयोगः । ते अपि विमर्शनीये, श्रेयस्त्वहेतुत्वात् । श्रीमूला.

**लाभविघ्नाः– कामः कोपः साध्वसं कारुण्यं ह्रीरनार्यभावो मानः सानुक्रोशता परलोकापेक्षा दाम्भिकत्वमत्याशित्वं दैन्यमसूया हस्तगतावमानो दौरात्मिकमविश्वासो भयमनिकारः शीतोष्णवर्षाणामाक्षम्यं मङ्गलतिथिनक्षत्रेष्टित्वमिति ॥**

लाभविघ्नानाह– लाभेत्यादि । कामः स्त्रीप्रसङ्गः, स खलूत्साहपरिपन्थित्वाल्लाभं विहन्ति । कोपः, रभसप्रवृत्तिहेतुत्वात् । साध्वसम् अप्रगल्भत्वम्, शत्रुमित्रादिषु यथार्हव्यवहारविरोधित्वात् । कारुण्यम्, बहुप्राणिवधशङ्कया युद्धप्रवृत्तिप्रबन्धकत्वात् । ह्रीः लज्जा, सापराधेऽपि सान्त्ववादिन्यभियोगप्रतिबन्धात् । अनार्यभावः नृशंसत्वम्, विश्वासघातादिप्रवर्तकत्वात् । मानः 'अहं महान्' इत्यहंकारः, सहायविघटकत्वात् । सानुक्रोशता– अनुक्रोशः उपहाराद्यर्पणनिमित्ता दया, तैक्ष्ण्यविषये मृदुवृत्तिप्रयोजकत्वात् । परलोकापेक्षा, परलोकविघातकपापयोगशङ्कया दाहविलोपादिवैमुख्यापादकत्वात् । दाम्भिकत्वं विश्वस्तवञ्चकत्वम् । अत्याशित्वं न्यायप्राप्ताभ्यधिकलाभभक्षकत्वम् । दैन्यम् अधमेषु साह्ययाच्ञा । असूया दृष्टगुणेषु मन्त्र्यमात्यप्रभृतिषु दोषारोपः । हस्तगतावमानः हस्तप्राप्तस्यार्थस्यावज्ञानम् । दौरात्मिकं पीड्यापीड्यसाधारणपीडोत्पादकत्वम् । अविश्वासः विश्वसनीयेऽपि विश्वासाकरणम् । भयम् अभियोगे पराजयशङ्का । परस्य तिरस्क्रिया निकारः, तदकरणमनिकारः । 'अप्रतिकारः' इति पाठे सिद्धिप्राक्कालपरापतितविनिपातप्रतिक्रियाननुष्ठानम् । शीतोष्णवर्षाणाम् आक्षम्यं शीतोष्णवर्षासहिष्णुत्वम् । मङ्गलतिथिनक्षत्रेष्टित्वं कार्यारम्भानुकूलशोभनतिथिनक्षत्रापेक्षकत्वम् । दाम्भिकत्वादीनां लाभविघातकत्वं सहायविघटकत्वप्रवृत्तिप्रतिबन्धकत्वादिना यथायथं बोद्धव्यम् । श्रीमूला.

अर्थकार्यकारणभावविचारो मुख्यः, न ज्यौतिषविचारः

**नक्षत्रमतिपृच्छन्तं बालमर्थोऽतिवर्तते ।**
**अर्थो ह्यर्थस्य नक्षत्रं किं करिष्यन्ति तारकाः ॥**

विघ्नेषु विंशतावुक्तेषु अन्तिमस्यातिपातिककार्यविषयतां वक्तुमाह– नक्षत्रमिति । नक्षत्रम् अतिपृच्छन्तम् अतिमात्रं पृच्छन्तं गृहपटलप्रज्वलितवह्निप्रशमनजातीये सद्यःकरणीयेऽपि कार्ये 'नक्षत्रं कार्यारम्भानुकूलं न वा' इत्यनुयुञ्जानं बालम् अप्राज्ञम् अर्थः प्रवृत्तिफलम् अतिवर्तते अतिक्रम्य गच्छति । कुतः ? हि यतः अर्थस्य साध्यस्य फलस्य अर्थः धनादि नक्षत्रम् । इह नक्षत्रशब्देन सिद्ध्युपकरणं लक्ष्यते । साधनं भवतीत्यर्थः । तारकाः किं करिष्यन्ति ? तत्रासाधिका इत्यर्थः ।

**नाधनाः प्राप्नुवन्त्यर्थान् नरा यत्नशतैरपि।**
**अर्थैरर्थाः प्रबध्यन्ते गजाः प्रतिगजैरिव ॥**

लाभसाधनेषु धनस्य मुख्यत्वमाविष्कर्तुमाह– नाधना इति । अधनाः धनरूपसाधनरहिताः नराः यत्नशतैरपि कृतैः अर्थान् शत्रुजयादिरूपान् न प्राप्नुवन्ति । अर्थाभावेऽर्थासिद्धिलक्षणं व्यतिरेकमुक्त्वा तत्सत्त्वे तत्सिद्धिलक्षणमन्वयमाह– अर्थैरिति। तैः अर्थाः प्रबध्यन्ते प्रकर्षेण साध्यतया संबद्धा वर्तन्ते । तत्रोपमामाह– गजाः प्रतिगजैरिवेति । यथा गजाः प्रतिगजैः साधनभूतैः साध्यतया संबद्धास्तद्वत् । 'नाधनाः' इत्यस्य स्थाने 'साधनाः' इति पाठे तु मत्वर्थलक्षणया धनादिसाधनवन्त इत्यर्थं कल्पयित्वा ते एव यत्नशतैरपि कृतैरर्थान् प्राप्नुवन्ति, न तु धनादिसाधनरहिताः इति कथंचित् व्याख्येयम् । श्रीमूला.

## मनुः

यात्रारम्भे मार्गत्रयबलषट्कशोधनम्

[1]**यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः ।**
**तदाऽनेन विधानेन यायादरिपुरं शनैः ॥**

(१) इदानीमभियास्यतः कर्माऽऽह– यदेति । यदा अपचिकीर्षति अरिराष्ट्रं प्रति अभिमुखेन तदा अनेन विधानेन गच्छेत्, अत्वरमाणः । वक्ष्यमाणोपन्यासः सुखावबोधनार्थः । मेधा.

(२) यदा तु अरिराष्ट्रं प्रति यात्रामारभेत शक्तः सन् तदा अनेन वक्ष्यमाणेन प्रकारेण शत्रुदेशे अत्वरमाणः गच्छेत् । * गोरा.

(३) यानमातिष्ठेत् विग्रहार्थं यात्रामात्रार्थं वा । मवि.

(४) कदा रिपुपुरं गन्तव्यम्, कथं वा योद्धव्यम्, कुत्र वा किं कर्तव्यमित्यपेक्षायां तत्राऽऽदौ यानमनुवदन्नुचितकालमाह– यदा त्विति त्रिभिः । मात्सर्यक्रोधाज्ञानैर्न गन्तव्यमित्याह– प्रभुः सकलशक्तिसंपन्नः । 'यानं यायात्' इत्यत्र प्रकृतिः प्रत्ययोच्चारणार्था । तेन यात्रां कुर्यादित्यर्थः । केन ? अनेन वक्ष्यमाणेन । शनैर्यायात्, न तु हठात् । मच.

[2]**कृत्वा विधानं मूले तु यात्रिकं च यथाविधि।**
**उपगृह्याऽऽस्पदं चैव चारान् सम्यग्विधाय च ॥**

[2]**संशोध्य त्रिविधं मार्गं षड्विधं च बलं स्वकम्।**
**सांपरायिककल्पेन यायादरिपुरं शनैः ॥**

(१) मूले स्वदुर्गराष्ट्रे कुर्यादथ पार्ष्णिग्राहश्च । तत्र विधानं प्रतिविधानं कृत्वा । दुर्गे तावत्प्रभूतधान्यादिकं सुसज्जयन्त्रप्राकारपरिखादि कार्यम् । राष्ट्रस्यापि स्वबलं श्रेणीबलेभ्यो रक्षां विधाय कुर्यात् । दानमानेभ्य उपसंयम्य प्रत्यन्तेषु प्रक्षेप्तव्यं पार्ष्णिग्राहं प्रति प्राह– तत्समर्थश्च बलैकदेशः स्वराष्ट्रे स्थापयितव्यः । यात्राप्रयोजनं यात्रिकं हस्त्यश्वादिबलयोग्यं च प्रहरणधारणादि सज्जम् । यथाविधि परोपदेशं कृत्वा । आस्पदं प्रतिष्ठानम् । किं तर्ह्यतोऽपरकीयाः क्रुद्धादयो द्रष्टव्यास्तानुपगृह्य स्वीकृत्य, आकारस्य परविषये निवृत्तेस्तज्ज्ञानाय सम्यक् यथावत् विधाय प्रयुज्य । किमयं दृष्टोपसंग्रहं कर्तुमारब्धमुत शत्रुपरिमण्डलं कोपयितुमथ मध्यममुदासीनं वा संश्रयितुम्, तथा मूलयात्रां वा हर्तुकामो विधिवच्छेदं वा कर्तुकाम इत्यादि यथा चैतदेवं तथा ।

त्रिविधः पन्थाः– जाङ्गलः आतपः आटविक इति । केचिदाटविकस्थाने वनप्रक्षेपात् त्रिविध इति । अपरे– उन्नतो निम्नः सम इति । एवं त्रिविधं संशोध्य मार्ग-

---

* ममु. गोरावत् । नन्द., भाच. गोरागतम् ।

(१) मस्मृ. ७।१८१ ; राक. ११५ ; पमा. ४०० ; राप्र. ३३०.

(१) मस्मृ. ७।१८४ ; राक. १२२ ; रार. ३४ मूले तु ( मूले च ) : ४५ उत्त. ; पमा. ४०१ ; राप्र. ३१६.

(२) मस्मृ. ७।१८५ ; मेधा. शनैः ( प्रति ) ; राक. १२२ अरिपुरं शनैः ( रिपुपुरं प्रति ) ; रार. ३४ ; पमा. ४०१ बलं स्वकम् ( स्वकं बलम् ) ; राप्र. ३१६ राकवत् .

रोधिवृक्षगुल्मलताविच्छेदेन स्थलनिम्नयोः समीकरणम्, नदीगर्तयोस्तीर्थकरणम्, पथिरोधकव्यालसमुच्छेदः, प्रवर्तकानामात्मीकरणम्, यवसेन्धनादिमत्ता चेति । षड्विधं बलमिति । केचित् हस्त्यश्वरथपदातिसेनाकोशकर्मकरात्मकं षड्विधं बलमिति । अन्ये कोशस्थाने प्रक्षेपणमिति । अपरे मौलभृत्यश्रेणिमित्रामित्राटविकबलभेदात् । सांपरायिकविधानेन । सांपरायिकं युद्धे कृच्छ्रम्, तत्प्रयोजनं यस्य तत् सांपरायिकम् । दुर्गकल्पेन वा रिपुं प्रतियायात् । स च सैन्यनिवेशस्तेषु तेषु च स्थानेषु स्थावरजङ्गमदण्डो बहुमुखपरिघफलकशाखाभिः प्राकार इत्यादिस्ताहशस्थापितः । विशेषतस्तु यात्रागतः । * मेधा.

(२) सांपरायिककल्पेन युद्धकल्पेन ।

राक. १२३

(३) मूले स्थिरशिबिरे । यात्रिकं यात्रायोग्यं संनाहादि विधाय । आस्पदं शिबिरस्थानं गम्यदेशे परिगृह्य ।

त्रिविधं मार्गं जाङ्गलानूपाटविकमिति कश्चित् । ग्रामारण्यपर्वतरूपमिति तु युक्तम् । षड्विधं बलम् । हस्त्यश्वरथपदातयश्चत्वारः हस्त्याद्यारोहकाः शस्त्रोपनायकाश्चेति द्वौ इति षड्विधम् । केचित्तु हस्त्यारोहकादय एकविधावश्याः परेति(?) षड्विधतामाहुः । सांपरायिककल्पेन सङ्ग्रामयोग्येन विधानेन । शनैः यदि मध्ये परः संदध्यादित्याशया । † मवि.

(४) मूले स्वीयदुर्गराष्ट्ररूपे पार्ष्णिग्राहसंविधानं प्रधानपुरुषाधिष्ठितं रक्षार्थं सैन्यैकदेशस्थानरूपं प्रतिविधानं कृत्वा, यात्रोपयोगि च वाहनायुधवर्मयात्राविधानं यथाशास्त्रं कृत्वा, परमण्डलगतस्य च येनास्यावस्थानं भवति तदुपगृह्य तदीयान्भृत्यपक्षानात्मसात्कृत्वा, चारांश्च कापटिकादीन् शत्रुदेशवार्ताज्ञापनार्थं प्रस्थाप्य, सम्यक्तया जाङ्गलानूपाटविकविषयभेदेन त्रिविधं पन्थानं मार्गं शोधिततरुगुल्मादिच्छेदनिम्नोन्नतादिसमीकरणादिना संशोध्य, तथा हस्त्यश्वरथपदातिसेनाकर्मकरात्मकं षड्विधं बलं यथानयोगमाहारौषधसत्कारादिना संशोध्य, सांपरायिकम्— संपरायः सङ्ग्रामः, तदुपचितविधिना शत्रुदेशमत्वरया गच्छेत् । * ममु.

(५) मूले दुर्गराष्ट्ररूपे । विधानं पार्ष्णिग्राहसंविधानम् । यात्रिकं यात्रोपयुक्तं वाहनादि । आस्पदं शत्रुदेशावस्थानाय अन्नादि । चारान् शत्रुदेशमार्गमन्त्रविदस्तत्पक्षकापटिकादीन् । रार. ३४

(६) कथं प्रवेष्टव्यमित्यस्योत्तरमाह— कृत्वेति चतुर्भिः । पूर्वापरानुसंधानं विना न गन्तव्यमित्याह— शनैरिति । † मच.

(७) यात्रायोग्यं यात्रिकं तण्डुलमुद्गादिकम् । आस्पदं निर्मितगृहादिकम् । यायादित्येव । बलस्य षड्विधत्वं कामन्दकेनोक्तम्— 'मौलं भृतं श्रेणिसुहृद्द्विषदाटविकं बलम् । षड्विधं तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेत् ॥' (कानी. १९।३, २)। सांपरायिककल्पेन युद्धार्हसंनाहेन । आयुधौषधादिसंपादनेनेति यावत् । † नन्द.

कष्टतरशत्रुलक्षणम्, कष्टतरशत्रौ सावधानो भवेत्

**'शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत् ।**
**गतप्रत्यागते चैव स हि कष्टतरो रिपुः ॥**

(१) शत्रुसेविनि गूढे प्रच्छन्ने मित्रे गतप्रत्यागते च युक्ततरः स्यात् अभियुक्ततरः आदततरः भवेत्, न विश्वसेदित्यर्थः । यस्मात् स कष्टतरो रिपुः अन्येभ्यः क्रुद्धादिभ्यः । एवं च युक्ततरवचनात् कष्टतरवचनाच्च गतप्रत्यागतम् अग्राह्यमन्यस्य इति गम्यते । स चतुर्विधः । ¶ कारणाद्गतस्ततो विपरीतकारणादागतो यथा दोषेण गतः

* पमा. मेधागतम् ।

† भाच. मविगतम् ।

* गोरा., राप्र. ममुगतम् ।

† शेषं ममुगतम् ।

¶ ग्रन्थोऽयमशुद्धः, तच्छोधनार्थम् 'षाड्गुण्यम्— संधिः' इति प्रकरणे (पृ. २०८७) कौटिलीयमर्थशास्त्रं द्रष्टव्यम् ।

(१) मस्मृ. ७।१८६ ; गोरा. स (तौ) तरो (तरौ) रिपुः (रिपू) ; राक. १२३ ; ममु. गोरावत् ; रार. ३५ ; मच. रिपुः (रिपोः) ; राप्र. ३९७.

पुनरागतो गुणमुभयोः परित्यज्य । कारणेनाऽऽगत इति यः स त्याज्यो लघुबुद्धित्वाद्यत्किंचित्कारीति । पुनरस्य प्रत्ययस्तु न कार्यः । कारणाद्गतः कारणागतो यथा स्वामिदोषेण गतः परस्मात्स्वदोषेणाऽऽगत इति सत्कर्तव्यो यदि सङ्गित्वादागतस्ततो ग्राह्यः । अथ परप्रयुक्तस्तेन वा दोषेणापकर्तुकाम इति ततो नेति । मेधा.

(२) शत्रुसेविनीति । गतप्रत्यागते चैव तौ हि कष्टतरौ रिपू । यत् मित्रं गूढं कृत्वा शत्रुं सेवेत, यश्च भृत्यादिः पूर्वं विरागाद्गतः पश्चादागतस्तयोः सावधानो भवेत् । यस्मात् तौ रिपू कष्टतरौ अतिशयेन दुर्निग्रहौ । * गोरा.

(३) गतप्रत्यागते एकदा तिरस्कारादिना बहिःकृते पुनरागते । कष्टतर इति । तेन कृतं वैरनिर्यातनं अप्रतीकार्यमेवेति भावः । रार. ३५

(४) शत्रुसेविनि शत्रोरेवानुकूले । युक्ततरः अतिशयप्रयत्नवान् । तत्र हेतुः– गते गमनोन्मुखे मित्रवदाचरति प्रकटितद्वारादिनाऽनुकूलः, प्रत्यागते प्रत्यागमनोद्यते तद्द्वारावरोधेन प्रतिकूल एव पुनरागमस्य तेनैवासंभवात् । गूढे शत्रुसेविनि मित्रे मित्रवदाचरत्यपि शत्रुपक्षपातिनि । अतः स हि रिपोरपि कष्टतरः । मच.

(५) शत्रुसेविनीति । द्वयं मित्रविशेषणम् । गतप्रत्यागते आत्मसकाशात् शत्रुं गत्वा तत्सकाशात् प्रत्यागते सतीति द्वयोः प्रत्येकं परामर्शः । नन्द.

## आश्वलायनः

आचार्यादीन् पूज्यान् संपूज्य युद्धसंभारैः
सह सैन्यं पुरस्कृत्य अभियानम्

[1]आचार्यानृत्विजो वैद्यान् याचकान्नटनर्तकान् ॥
सूतमागधसूदांश्च संपूज्याऽऽत्मनि वासयेत् ।
पक्षिणो विविधाकाराः पुण्याः पश्व( ? शू )रगाः शुभाः ॥
गोगजाश्वाजमहिषरासभोष्ट्राविकादयः ।
श्वमार्जारकपिप्राज्ञचिकित्सककुलालकाः ॥
कर्मारः स्वर्णकारश्च चर्मकारकृषीवलाः ।
सूचीकाराश्च रजकाः सर्ववर्णाश्च शिल्पिनः ॥
वैतालिका बन्दिनश्च रसा धान्या विषाशुनाः(?)।
तिलतैलतुषाङ्गारयन्त्रादर्शायुधानि च ॥
औषधानि च सर्वाणि काष्ठापाता रथादयः ।
यौधाः कुब्जा वामनाश्च स्त्रियश्चाप्सरसोपमाः ॥
यावद्युद्धाय नृपतिर्गन्तुकामो यथाविधि ।
एतान् सर्वान् पुरोधाय स्वयं पश्चाद्व्रजेद्बुधः ॥

## स्कन्दपुराणम्

संनद्धसैन्यस्य क्षत्रियस्य प्रथमं शत्रुभूमौ
अभियानं कर्तव्यम्

[1]संनह्य प्रथमं याति यः सैन्यं शत्रुभूमिषु ।
स क्षत्रियो विजयते तस्य राज्यं च वर्धते ॥

## कामन्दकीयनीतिसारः

पश्चात्प्रकोपबाह्याभ्यन्तरप्रकोपपरामर्शः
तत्प्रतिकारचिन्ता च

[2]अभ्युन्नतानामणुरप्युदारं
पश्चात्प्रकोपं जनयेदरीणाम् ।
तं चाप्रमत्तः प्रसमीक्ष्य याया-
न्न नाशयेद् दृष्टमदृष्टहेतोः ॥

(१) विशुद्धपृष्ठ इत्यस्य प्रदर्शनार्थमाह– अभ्युन्नतानामित्यादि । अभ्युच्छ्रितानां विजिगीषूणां पश्चात्कोपं जनयेत् । अणुरपि अरीणां मध्ये स्वल्पोऽपि शत्रुः । उदारं महान्तम् । तं चेति प्रकोपम् । अदृष्टहेतोः यानसाध्यस्यार्थस्य कृते । जम.

(२) अणुरपि स्वयं हीनशक्तिरपि अभ्युन्नतानां शक्तित्रयसंपन्नानामपि अरीणां शत्रूणां पश्चात्प्रकोपम् उदारम् उत्कृष्टं जनयेत् । अप्रमत्तः प्रमादरहितः सन् तं च पश्चात्प्रकोपं प्रसमीक्ष्य प्रतिविधाय यायात् युद्धयात्रां

* मवि., भाच. गोरागतम् । ममु. गोरावत् ।

(१) आश्वस्मृ. ८।१०९–११४, ११७.

(१) स्कन्द. ७।२।१७।८१.

(२) कानी. १६।१४–१६.

कुर्यात् । कस्मादित्याह— अदृष्टस्य अप्राप्तस्य अनिश्चितस्येत्यर्थः, यानफलस्य हेतोः दृष्टं पूर्वोपार्जितं हस्तगतमित्यर्थः, राज्यं न नाशयेत् । पश्चात्प्रकोपः सर्वनाशं करोतीति भावः । उनिसा.

**पश्चात्प्रकोपः पुरतः फलं च**
**पश्चात्प्रकोपस्तु तयोर्गरीयान् ।**
**रन्ध्रं हि तद् विप्रकृता महत्त्वं**
**नयन्ति तस्मात् प्रविधाय यायात् ॥**

( १ ) पश्चात्प्रकोपः अल्पः, पुरतः फलं च महत् । रन्ध्रं हि तदिति । यस्मात् कोपमल्पमपि विप्रकृताः शत्रवो महत्त्वं नयन्ति तस्मात् । प्रविधाय प्रतिकृत्य । जम.

( २ ) पश्चात् स्थानीयादौ प्रकोपः बाह्यैराभ्यन्तरैर्वा अर्थक्षोभादिकः, पुरतः प्रयाणसिद्धौ फलं राज्यधनादिलाभश्च, तयोर्मध्ये किं गरीय इति परामर्शे पश्चात्प्रकोपस्तु गरीयान् गुरुतरः । हि यतः विप्रकृताः विरोधिताः विपक्षभूपालाः तत् पश्चात्प्रकोपलक्षणं रन्ध्रं छिद्रं महत्त्वं नयन्ति प्रवर्धयन्तीत्यर्थः । तस्मात् प्रविधाय प्रतिविधानं कृत्वा यायात्, नान्यथेत्यर्थः । उनिसा.

**पुरश्च पश्चाच्च यदा समर्थ-**
**स्तदाऽभियायान्महते फलाय ।**
**पुरः प्रसर्पन्नविशुद्धपृष्ठः**
**प्राप्नोति तीव्रं खलु पार्ष्णिभेदम् ॥**

( १ ) यदा समर्थः पुरस्तादनल्पं फलं साधयितुं पश्चाच्च कोपम् । पार्ष्णिभेदं पृष्ठविनाशम् । जम.

( २ ) अविशुद्धपृष्ठः अप्रतिविहितपार्ष्णिग्राहादिः प्रसर्पन् युद्धयात्रां कुर्वन् तीव्रं पार्ष्णिभेदं पार्ष्णिग्राहजनितमहाभयं प्राप्नोति । शेषं स्पष्टम् । उनिसा.

**[1]यास्यन् पुरो रक्ष्यमनेकवर्ग-**
**मनेकमुख्यं च बलं विदध्यात् ।**
**अनेकमुख्यस्य हि नैकमत्य-**
**मनेकमुख्यं द्विषतामभेद्यम् ॥**

( १ ) कानी. १६।१७ ; उनिसा. विद ( निद ) नैक ( चैक ) मुख्यं द्वि ( मत्यं द्वि ).

( १ ) यस्मान्मा भूत् पार्ष्णिभेद इति तस्मात् पृष्ठारक्षं बलं निदध्यादित्याह— यास्यन्नित्यादि । पुरो रक्ष्यं स्थानीयारक्षम् । शतको द्विशतको वा वर्गः, सोऽनेको यस्य । अनेकमुख्यं अनेकवर्गस्वामि । जम.

( २ ) यास्यन् युद्धयात्रां करिष्यन् विजिगीषुः पुरः अग्रे रक्ष्यं स्थानीयरक्षकम् अनेकवर्गम् अनेके वर्गाः अष्टवर्गिकैकादशवर्गिकादयो हस्त्यश्वरथप्रभृतयो वर्गाः यस्मिन् तत् अनेकमुख्यम् अनेकप्रधानं बलं विदध्यात् स्थापयेत् । कस्मादित्याह— अनेकमत्यम् अनेकमतविशिष्टम् अनेकमुख्यस्य बहुप्रधानाधिष्ठितस्य बलस्य ऐकमत्यं द्विषतां शत्रूणाम् अभेद्यम् । उनिसा.

**[1]अवश्ययातव्यतयोद्यतः सन्**
**पश्चात्प्रकोपाहितयानशङ्कः ।**
**सेनापतिं वाऽप्यथवा कुमारं**
**बलैकदेशेन पुरो निदध्यात् ॥**

( १ ) यदा तु स्वयं जातशङ्कः तदा द्वौ प्रेषयेदित्याह— पश्चात्प्रकोपाहितयानशङ्कः 'किं यायाम्, अथ न' इति । कुमारं युवराजम् । बलैकदेशेन तृतीयेन चतुर्थेन वांऽशेन पुरो निदध्यात् पुरस्तात् यातुं नियोजयेत् । स्वयं तु पश्चात् तिष्ठेदित्यर्थोक्तम् । जम.

( २ ) अवश्ययातव्यत्वे पश्चात्प्रकोपशङ्कायां किं प्रतिविधेयमित्याह— अवश्ययातव्यतयेति । अवश्ययातव्यतया यानस्य अवश्यकरणीयतया उद्यतः उद्युक्तः सन् पश्चात्प्रकोपाहितयानशङ्कश्चेत् पश्चात्प्रकोपेण आहिता उपस्थिता यानशङ्का यस्य तादृशश्चेत् तदा सेनापतिं *सेनानीम् अथवा कुमारं बलैकदेशेन बलस्यैकांशेन सह पुरः शङ्कास्थानस्याग्रे निदध्यात् रक्षार्थं स्थापयेत् । उनिसा.

* 'सेनानीम्' इत्यपाणिनीयम् । 'सेनान्यम्' इति यणा भाव्यम् ।

( १ ) कानी. १६।१८.

¹आभ्यन्तराद्बाह्यकृताच्च कोपा-
दाभ्यन्तरस्त्वेव तयोर्गरीयान् ।
आदाय गच्छेदबहिःप्रचारान्
बाह्यांश्च कृत्वा विहितार्थकल्यान् ॥

(१) कोपश्च बाह्याभ्यन्तरभेदेन द्विविध इत्याह– आभ्यन्तरादित्यादि । आभ्यन्तरः गरीयान् बहिर्भवात् । आदाय सामादिभिः प्रसाध्य । अबहिःप्रचारान् आभ्यन्तरान् कुपितान् । विहितार्थकल्यान् कृतप्रतिविधानत्वात् निर्दोषान् । जम.

(२) बाह्याभ्यन्तरकोपयोर्गुरुलाघवमभिधातुमाह– आभ्यन्तरादिति । आभ्यन्तरात् अभ्यन्तरसमुत्पन्नात् पुरोहितामात्यादिकृतात् बाह्यकृतात् बाह्यैरन्तःपालाटविकादिभिः कृतात् च दोषात् कोपात् कारणात् तयोः दोषयोः मध्ये आभ्यन्तर एव गरीयान् बलवत्तरः । आभ्यन्तरकोपात् भयं भवतीति भावः । अवश्ययातव्यत्वे एतद्दोषविनिवारणाय किं कर्तव्यमित्याह– अबहिःप्रचारान् अन्तर्गतान् दोषहेतून् प्रकुपितानित्यर्थः, आदाय पुरस्कृत्य अर्थदानादिना संगृह्य इत्यर्थः, सार्थे गृहीत्वा वा गच्छेत् । बाह्यान् वक्ष्यमाणप्रकारान् राष्ट्रान्तपालादीन् दोषहेतून् विहितानुकल्पान् विहितः कृतः अनुकल्पः सामादिना प्रतिविधानं येषां तादृशान् कृत्वा गच्छेत् इति संबन्धः । उनिसा.

²पुरोहितामात्यकुमारकुल्याः
सेनाभिगोप्तार इमे प्रधानाः ।
एषां हि सन्तोऽन्यतमप्रकोप-
मन्तःप्रकोपं समुपादिशन्ति ॥

(१) अमात्यः मन्त्री । कुल्यः विजिगीषुः राज्यार्हः । सेनाभिगोप्ता सेनापतिः । एषां स्कन्धावारान्तर्वर्तित्वात् तत्प्रकोपम् अन्तःप्रकोपम् । जम.

(२) बाह्याभ्यन्तरयोः पश्चात्प्रकोपयोराभ्यन्तरं प्रकोपमाह– पुरोहितेति । पुरोहिताः अमात्याः कुमाराः राजपुत्राः कुल्याः विजिगीषुकुलभवाश्च एते प्रधानाः सेनाभिगोप्तारः सेनाध्यक्षाः । सन्तः साधवः तेषां पुरोहितादीनाम् अन्योन्यतमप्रकोपं परस्परविद्वेषम् अन्तःप्रकोपं समुपादिशन्ति निर्दिशन्ति निरूपयन्तीत्यर्थः । 'तेषां हि सन्तोऽन्यतम०' इत्यत्र 'एषां हि मन्त्रोद्यतम०' इति मुद्रितपाठः । उनिसा.

¹राष्ट्रान्तपालाटविकानतानां
बाह्यप्रकोपोऽन्यतमप्रकोपः ।
उत्पाद्यमानं निपुणं प्रचारै-
स्तं सत्रिभिः सम्यगुपाददीत ॥

(१) राष्ट्रपालः राष्ट्रमुख्यः । अन्तपालः विषयान्तरक्षाधिकृतः । आटविकाः वनेचराः राजसधर्माणः । आनताः दण्डोपनताः । एषां बहिर्वर्तित्वात् तत्प्रकोपः बाह्यप्रकोपः । तमिति बाह्यमाभ्यन्तरं वा सत्रिभिः संचारविशेषैः सम्यगुपाददीत प्रसाधयेत् । जम.

(२) बाह्यं प्रकोपमाह– राष्ट्रेति । राष्ट्रपालाः दण्डनायकाः । अन्तपालाः संधिरक्षणनियुक्ताः । आटविकाः अटवीभोक्तारः अन्त्यजाः म्लेच्छमुख्यादयः । अभिसीमानः सीमासमीपस्थाः । बहुवचनबलेन समाहर्तृप्रजामुख्यादयः । एतेषाम् अन्यतमप्रकोपः बाह्यप्रकोपः, कथित इति शेषः । उत्पद्यमानं तम् उभयविधं पश्चात्प्रकोपं निपुणप्रचारैः कार्यकुशलैः मन्त्रिभिः सचिवैः सम्यक् उपाददीत संलक्षयेत् । प्रतीकारार्थमिति भावः । 'उत्पद्यमानम्' इत्यत्र 'उत्पद्यमानः' इति पाठान्तरम् । उनिसा.

²सामादिभिः संशमयेत् प्रकोपं
परस्परावग्रहभेदनैश्च ।
तथा च धीरः शमयेद्विकारं
यथा भजेरन्न परान् प्रतप्ताः ॥

---

(१) कानी. १६।१९ ; उनिसा. कोपा (दोषा) र्थकल्यान् (नुकल्पान्).

(२) कानी. १६।२० ; उनिसा. एषां (तेषां).

(१) कानी. १६।२१ ; उनिसा. नतानां (भिसीम्नां) उत्पा (उत्प) णं प्र (णप्र) सत्रि (मन्त्रि).

(२) कानी. १६।२२.

(१) कथमित्याह— सामादिभिरित्यादि । बाह्य-माभ्यन्तरं च कोपं सामादिभिः प्रशमयेत् । परस्परावग्रह-भेदनैश्च । बाह्येनैव बाह्यान् आभ्यन्तरेण चाऽऽभ्यन्तरान् अन्योन्येनावग्राहयेत् अन्योन्यस्माच्च भेदयेदित्यर्थः । प्रतप्ता इति । नात्यर्थमुपताप्य कोपं शमयेत् । अन्यथा प्रतप्ताः परान् गच्छेयुः । जम.

(२) सामादिभिः उपायैः परस्परम् अवग्रहैः संरोधैः भेदनैः विश्लेषणैश्च प्रकोपं संशमयेत् शान्तिं नयेत् । विजिगीषुरिति शेषः । प्रतप्ताः संतप्तहृदयाः यथा परान् शत्रून् न भजेरन् न आश्रयेयुः, सचिवादय इति शेषः, धीरः नीतिशास्त्रज्ञः राजा तथा विकारं शमयेत् च । 'तथा च धीरः शमयेद्विकारम्' इत्यत्र 'तथाऽपि धीरः शमयेत्प्रकोपम्' इति मुद्रितपाठः । उनिसा.

विचार्याणि क्षयव्ययलाभलक्षणानि

[१]मनुष्ययुग्यापचयः क्षयो हि
हिरण्यधान्यापचयो व्ययस्तु ।
तस्मादिमां नैव विदग्धबुद्धिः
क्षयव्ययायासकरीमुपेयात् ॥

(१) क्षयव्ययापेक्षया यात्रां दर्शयितुमाह— मनुष्येत्यादि । मनुष्यः क्षुद्रो मुख्यश्च । युग्यं वाहनम् । हिरण्यं सुवर्णादि । तस्मादिमां यात्रामित्यर्थात्, क्षयव्ययायासकरीं नोपेयात् । जम.

(२) कीदृशी यात्रा न कर्तव्येत्याह— मनुष्येति । मनुष्याणां पुरुषगुणोपेतानां युग्यानां वाहनानाम् अपचयः ह्रासः क्षयः ध्वंसश्च । हिरण्यानां सुवर्णानां धान्यानाम् अपचयः क्षतिः व्ययश्च नाशश्च । हिरण्यपदेन धनस्य धान्यपदेन खाद्यद्रव्यमात्रस्योपलक्षणम् । तस्मात् विदग्धबुद्धिः राजा क्षयव्ययायासकरीं क्षयस्य अपचयस्य व्ययस्य वितरणादिकस्य आयासस्य परिश्रममात्रस्य च हेतुम् इमां फलहीनयात्रां नैव उपेयात् स्वीकुर्यात् ।

उनिसा.

(१) कानी. १६।२३ ; उनिसा. यो हि (यश्च) यस्तु (यश्च).

[२]अवश्यनिष्पत्तिमहाफलाढ्या-
मदीर्घसूत्रां परिणामकल्याम् ।
कामं व्ययायासकरीमुपेया-
न्न त्वेव जातु क्षयदोषयुक्ताम् ॥

(१) तत्र क्षयव्ययाभ्यां बहुगुणविशिष्टो लाभः स्वल्पश्चाऽऽयासः तामुपेयादेव, यदाह— अवश्येत्यादि । अवश्यंभाविभिर्महद्भिश्च फलैः स्फीतां क्षयव्ययकरीमपि । अदीर्घसूत्रां यानमात्रसाध्यफलाम् । तत्र हि स्वल्प आयासः । परिणामे कल्यां निराबाधाम् उपेयात् । कामं व्ययायासकरीमिति । एका क्षयकरी यात्रा, द्वितीया व्ययकरी, तृतीया चोभयकरी । तत्रोभयकरीं यथोक्तामुपेयादेव । शेषयोर्महाफलतादियोगेऽपि व्ययकरीमुपेयात्, नेतराम्, व्ययात् क्षयस्य गरीयस्त्वात् । जम.

(२) कीदृशी यात्रा विधेयेत्याह— अवश्येति । अवश्यभाविनी निष्पत्तिः कार्यसिद्धिरेव महाफलम्, तेन आढ्या संपन्ना ताम्, अदीर्घं न दीर्घकालव्यापि सूत्रं यस्याः ताम्, परिणामकल्यां परिणतफलोन्मुखीम्, कामं वरं व्ययायासकरीम् उपेयात् । यात्रामिति शेषः । तु किंतु, जातु कदाचित् नैव क्षयदोषयुक्तां मनुष्ययुग्यादिविनाशरूपदोषदूषिताम् उपेयात् । उनिसा.

लाभविघ्नाः कार्यव्यसनानि

[३]वस्तुष्वशक्येषु समुद्यमश्च
शक्येषु चाकालसमुद्यमश्च ।
शक्येषु मोहादसमुद्यमश्च
त्रिधैव कार्यव्यसनं वदन्ति ॥

(१) पुरस्ताच्च लाभेप्सुना कार्यव्यसनादयो लाभविघ्नाः परिहर्तव्या इति तद्दर्शनार्थमाह— वस्तुष्वित्यादि । जम.

(१) कानी. १६।२४ ; उनिसा. कल्याम् (कल्पाम्).

(२) कानी. १६।२५ ; उनिसा. आद्यचरणान्ते—मश्च (मश्चेत्) शक्येषु चाकाल (शक्येष्वकालेषु), द्वितीयतृतीयचरणयोर्व्यत्यासः.

( २ ) कार्यव्यसनमभिधातुमाह– वस्तुष्विति । अशक्येषु असाध्येषु वस्तुषु कार्येषु त्रिवर्गफलकव्यापारेष्वित्यर्थः , चेत् यदि समुद्यमः समुद्योगः । शक्येषु साध्येषु वस्तुषु च मोहात् अज्ञानात् असमुद्यमः उद्योगाभावः । शक्येषु विषयेषु अकालेषु असमये अनुपयोगिसमये निजस्य व्यसनान्तःप्रकोपादिसमये इति भावः , समुद्यमश्च । अकालेषु इत्यत्र बहुवचनात् अदेशेषु समुद्यम इत्यपि आक्षिप्तम् । एवं त्रिधैव त्रिविधमेव कार्यव्यसनं वदन्ति कथयन्ति । नीतिशास्त्रविशारदा इति शेषः । श्रेयसो व्यसति निराकरोति यत् तत् व्यसनम् । श्रेयस्तु कार्यस्य फलम् । ' शक्येष्वकालेषु समुद्यमश्च ' इत्यत्र ' शक्येषु कालेन समुद्यमश्च ' इति मुद्रितपाठः । ' शक्येषु लोकेन समुद्यमश्च ' इति पाठस्तु न समीचीनः । उनिसा.

**[1]कामोऽक्षमा दक्षिणताऽनुकम्पा**
**ह्रीः साध्वसं क्रौर्यमनार्यता च ।**
**दम्भोऽभिमानोऽथ च धार्मिकत्वं**
**दैन्यं स्वयूथस्य विमाननं च ॥**

( १ ) कामः मृगयादिष्वासक्तिः । अक्षमा परगुणेषु । दक्षिणता सानुक्रोशता । अनुकम्पा दीनोऽयमिति । साध्वसम् अतर्कितात् भयम् । क्रौर्यं दौरात्म्यम् । अनार्यता साधुत्वानपेक्षणम् । दम्भः विसंवादकत्वम् । अभिमानः अभ्युन्नतमनस्कता । धार्मिकत्वं परलोकापेक्षणम् । दैन्यम् अल्पसंतुष्टता । स्वयूथस्य स्वपक्षस्य । जम.

( २ ) अन्यान्यपि कार्यव्यसनान्याह–काम इति । कामः इन्द्रियग्राह्येषु रूपरसगन्धस्पर्शशब्देषु तदनुषङ्गात् मद्यद्यूतमृगयादिषु च आसक्तिः । अक्षमा क्रोधः । वाक्पारुष्यं दण्डपारुष्यमर्थदूषणमिति व्यसनत्रयं तज्जनितमेव । अदक्षिणता अदाक्षिण्यम् । दाक्षिण्याभावे अनुजीविनां भक्तिह्रासेन कार्यविध्वंसः । अनुकम्पा विजितेष्वपि विद्रोहिषु दया । एतेन च यथोचिताकरणात् लाभविध्वंसः । ह्रीः लज्जा । ह्रिया च यथोचिताकरणात् लाभहानिः । साध्वसम् अप्रतिपत्तिः । अप्रतिपत्तिर्हि कार्यं नाशयति । क्रौर्यं क्रूरता । क्रूरो हि अनाश्रयणीयो भवति । अनार्यता अशिष्टता । अशिष्टानां सत्कार्यकरणादपि लाभहानिर्भवति । दम्भः परवञ्चकता । वञ्चकस्याविश्वसनीयतया लाभविध्वंसः । अभिमानः अहंकारः । अहंकारस्य न केवलं कार्यविध्वंसिता, क्षयहेतुताऽपि । अतिधार्मिकत्वं धर्मान्धत्वम् । अतिधार्मिको हि करतलस्थमपि राज्यं रक्षितुं न शक्नोति । दैन्यं क्लैब्यं कार्यकाले कातरता । कातर्येण च कार्यहानिर्भवति । स्वयूथस्य विमाननं च आत्मपक्षस्य अवमाननं च । संमानिता अनुजीविनः प्राणव्ययेनापि कार्यं साधयन्ति, अवमानितास्तु कार्यहानिमेव कुर्वन्ति । उनिसा.

**[1]द्रोहो भयं शश्वदुपेक्षणं च**
**शीतोष्णवर्षास्वसहिष्णुता च ।**
**एतानि काले समुपाहितानि**
**कुर्वन्त्यवश्यं खलु सिद्धिविघ्नम् ॥**

( १ ) द्रोहः प्रतिकूलाचरणम् । भयं स्वतो भीरुता । उपेक्षणं हस्तगतावधीरणम् । एतानि काल इति लाभकाले विहितानि । जम.

( २ ) द्रोहः मित्रद्रोहादिकम् । भयं भीरुता । शश्वत् निरन्तरम् उपेक्षणम् आपदामापतन्तीनामुपेक्षा । शीतोष्णवर्षाणाम् अप्रसहिष्णुता असहनशीलता । ऋतुप्रवाहासहिष्णुः कथं सर्वस्मिन् देशे सर्वस्मिन् काले च स्वकार्यं साधयितुं समर्थो भवति ? काले कार्यसाधनसमये समुपाहितानि समुपार्जितानि स्वीकृतानीत्यर्थः, एतानि उल्लिखितकार्यव्यसनानि खलु निश्चये अवश्यम् अव्यभिचरितं सिद्धिविघ्नं कार्यसिद्धिव्याघातं कुर्वन्ति । उनिसा.

सद्वृत्तः अनुरक्तः सप्तविधः पक्षः स्वसहायः

**[2]निजोऽथ मैत्रश्च समाश्रितश्च**
**संबन्धजः कार्यसमुद्भवश्च ।**
**भृत्यो गृहीतो विविधोपचारैः**
**पक्षं बुधाः सप्तविधं वदन्ति ॥**

---

( १ ) कानी. १६।२६ ; उनिसा. दक्षिणता ( ऽदक्षिणता ) ऽथ च ( ऽप्यति ).

( १ ) कानी. १६।२७ ; उनिसा. वर्षास्व ( वर्षाप्र ).

( २ ) कानी. १६।२८ ; उनिसा. भृत्यो ( भूतो ).

(१) यियासुश्च विजिगीषुः पक्षवान् गुणवानुत्पन्नपौरुषोऽनुकूलदैवश्च यायादिति दर्शयितुमाह— निज इत्यादि। निजः मौलः। मैत्रः मित्रसंबन्धी। समाश्रितः आत्मरक्षाद्यर्थम्। संबन्धजः कन्यादानादिना कृतः। कार्यसमुद्भवः सामवायिकः। भृत्यः भृतिप्रतिबद्धः। गृहीतः विविधैरुपचारैर्भृतः। जम.

(२) सहायतार्थे सप्तविधं पक्षमभिधातुमाह— निज इति। निजः अनुरक्तः स्वाभाविकबन्धुवर्गः। मैत्रः मित्रमित्ररूपः। समाश्रितः प्रतिपक्षभयात् शरणमापन्नः। संबन्धजः कन्यादानादिना वैवाहिकसंबन्धेन मिलितः। कार्यसमुद्भवः व्यवहारादिना समुत्पन्नः। भूतः स्वेच्छया देशहितैषितया वा पक्षमाश्रितः। 'भृतः' इति पाठे वेतनदानादिना प्रतिपालितः। विविधोपचारैः भोजनाच्छादनादिभिः गृहीतः आत्मसात् कृतः। बुधाः पण्डिताः एवं सप्तविधं पक्षं वदन्ति कीर्तयन्ति। उनिसा.

[1]सदाऽनुसृत्या गुणकीर्तनेन
निन्दासहत्वेन च रन्ध्रगुप्त्या।
तदर्थशौचोद्यमसंकथाभिः
पक्षोऽनुरागीति स वेदितव्यः॥

(१) एषु सप्तसु योऽनुरागी सद्वृत्तश्च ताभ्यां सह यायादित्यनयोः स्वरूपमाह— सदेत्यादि। अनुसृत्या अनुगमनेन। विजिगीषुकृता स्वनिन्दा, तस्याः सहिष्णुत्वेन। रन्ध्रगुप्त्या विजिगीषुदोषप्रच्छादनेन। तदर्थशौचोद्यमसंकथाभिरिति विजिगीष्वर्थेषु शौचमुद्यमः संकथा च। जम.

(२) सप्तविधपक्षस्यानुरागलिङ्गान्याह— सदाऽनुवृत्त्या इति। सदा सर्वदैव अनुवृत्त्या अनुवर्तनेन। 'अनुसृ(? सृ)त्या' इति पाठे स एवार्थः। गुणकीर्तनेन गुणप्रख्यापणेन, निन्दासहत्वेन परकृतनिन्दासहिष्णुतया, रन्ध्रगुप्त्या छिद्रसंगोपनेन, तदर्थशौर्योद्यमसंकथाभिः— तस्य अर्थः प्रयोजनम्, शौर्यं शूरता, उद्यमः उद्योगः, तेषां संकथाभिः समालोचनैः अनुरागी अनुरागवान् पक्षो वेदितव्यः ज्ञेयः। एतैश्चिह्नैः स्वपक्षस्यानुरागो निर्णेय इति भावः। उनिसा.

[2]कुलीनमार्यं श्रुतवद्विनीत-
मलोलुपं सत्यमहार्यमन्यैः।
कृतज्ञतोर्जामतिसत्त्वयुक्तं
सद्वृत्तपक्षं खलु तं च विद्यात्॥

(१) अलोलुपम् अलुब्धम्। अहार्यम् अप्रतार्यम्। ऊर्जा बलम्। मतिः प्रतिभा। सद्वृत्तपक्षमिति। सद्वृत्तं पक्षं विद्यादिति संबन्धः। जम.

(२) कुलीनम् उभयकुलविशुद्धम्। आर्यं महावंशसंभूतम्। श्रुतवद्विनीतम्— श्रुतं शास्त्रश्रवणं विद्यते अस्य असौ श्रुतवान्, श्रुतवांश्चासौ विनीतश्चेति स तम्। मानोन्नतं मानेन संमानेन उन्नतं महान्तम्। 'अलोलुपम्' इति पाठे परस्त्रीधनादिषु लोभशून्यम्। सभ्यं साधारणधृतिनीतिज्ञम्। 'सत्यम्' इति पाठे अमृषावादिनम्। अहार्यबुद्धिं प्रतिपक्षादिभिः अहार्या अनभिभवनीया बुद्धिर्यस्य तम्। कृत्यज्ञतोर्जामतिसत्त्वयुक्तम्— कृतज्ञता प्रत्युपकारप्रवणता, ऊर्जा बलम्, मतिः प्रज्ञा, सत्त्वं व्यसने अभ्युदये च अविकारिता, तैर्युक्तं समेतम्। तादृशं नरं सद्वृत्तपक्षं सदाचारपक्षं स्वगणमध्ये सुचरितमिति भावः, विद्यात् जानीयात्। उनिसा.

आत्मगुणाः शक्तित्रयं द्विविधा धीश्च अभियास्यतः संपदः

[3]उद्योगमेधाधृतिसत्त्वसत्य-
त्यागानुरागस्थितिगौरवाणि।
जितेन्द्रियत्वं प्रसहिष्णुता ह्रीः
प्रागल्भ्यमित्यात्मगुणप्रवेकः॥

(१) उद्योगः उद्यमः। मेधा बुद्ध्युपलक्षणार्था। धृतिः अनुद्विग्नता। अनुरागः विजिगीषोः प्रकृतीनां च।

---

(१) कानी. १६।२९; उनिसा. सृत्या (वृत्या) शौचो (शौर्यो).

(२) कानी. १६।३०; उनिसा. मलोलुपं सत्य (म्मानोन्नतं सभ्य) मन्यैः (बुद्धिम्).

(३) कानी. १६।३१; उनिसा. गुणप्रवेकः (गुणान् वदन्ति).

स्थितिः व्यवस्था । गौरवं विद्यावृद्धेषु । प्रसहिष्णुता च शीतादीनाम् । आत्मगुणप्रवेक इति । आत्मगुणानामयं प्रधानो गुणः । तेन अन्यगुणाभावेऽप्यभियास्यता तत्राऽऽदरः कार्यः । जम.

( २ ) उक्ताऽपि विजिगीषोरात्मसंपत् यानप्रसङ्गात् पुनरुच्यते– उद्योगेति । उद्योगः उत्साहः , मेधा स्मृतिः , धृतिः धैर्यम् , सत्त्वं बलम् , सत्यम् अवितथव्यवहारः , त्यागः पात्रेषु धनादिप्रतिपादनम् , अनुरागः गुणपक्षपातिता, स्थितिः अविचलितभावः , गौरवं महिमा, तानि । जितेन्द्रियत्वं जितानि वशीकृतानि इन्द्रियाणि येन तस्य भावः । प्रसहिष्णुता क्लेशायासादिसहनसामर्थ्यम् । ह्रीः लज्जा । प्रागल्भ्यं धृष्टता जितसभत्वमित्यर्थः । एतानि आत्मगुणान् आत्मनः विजिगीषोः गुणान् वदन्ति । नीतिज्ञा इति शेषः । उनिसा.

[1]मन्त्रस्य शक्तिं सुनयप्रचारं
स्वकोशदण्डौ प्रभुशक्तिमाहुः ।
उत्साहशक्तिं बलवद्विचेष्टां
त्रिशक्तियुक्तो भवतीह जेता ॥

( १ ) सुनयप्रचारः संध्यादीनां सामादीनां च यथावदवस्थापनम् । तच्च ज्ञानबलात् भवतीति कार्यद्वारेण मन्त्रशक्तिरत्रोक्ता । कौटिलीये तु स्फुटमेवोक्तम्– ' ज्ञानबलं मन्त्रशक्तिः ' ( कौ. ६।२ ) इति । स्वकोशदण्डाविति । स्वसंपदुपेतौ कोशदण्डौ प्रभुशक्तिः , तयोरेव प्रभुशक्तिनिष्पादने सामर्थ्यात् । तथा चाऽऽह – ' कोशदण्डबलं प्रभुशक्तिः ' ( कौ. ६।२ ) इति । बलवद्विचेष्टां बलवतीं विक्रमचेष्टाम् । तथा चाऽऽह– ' विक्रमबलमुत्साहशक्तिः ' ( कौ. ६।२ ) इति । त्रिशक्तियुक्तो जेता । अन्यथा ज्ञानविकलोऽप्रभावो निरुत्साहः कथं शत्रुं जयेत ? जम.

( २ ) अवसरप्राप्तं शक्तित्रयमाह– मन्त्रस्येति । षाड्गुण्यस्य यथोद्देशावस्थानं नयः । सुनयस्य उपचारं प्रयोगं मन्त्रस्य शक्तिम् आहुः । ' सुनयोपचारम् ' इत्यत्र ' सनयप्रचारम् ' इति पाठान्तरम् । सुकोषदण्डौ सुशोभनौ कोषदण्डौ प्रभुशक्तिमाहुः । ' कोषदण्डबलं हि प्रभुशक्तिः ' इति कौटिल्यः । बलवद्विचेष्टां बलवतो विजिगीषोर्विचेष्टाम् उत्साहशक्तिमाहुः । आर्या इति शेषः । इत्थं त्रिशक्तियुक्तः तिसृभिः शक्तिभिर्युक्तः इह मनुष्यलोके जेता जयी भवति । उनिसा.

[1]शैघ्र्यं सुदाक्ष्यं व्यसनेष्वदैन्य-
मुत्साहसंपत्स्वतिधीरता च ।
औत्पादिकी शास्त्रसमुद्भवा च
सांसर्गिकी धीः परिणामिनी च ॥

( १ ) उत्साहज्ञानयोर्भेदानाह– शैघ्र्यमित्यादि । व्यसनेष्वदैन्यं परकृतेष्वभियोगादिषु व्यसनेषु सामर्थता । अतिधीरता अतिशौर्यम् । पुनरुत्साहगुणाख्यानम् अभियाने उत्साहः प्रधानमिति दर्शनार्थम् । औत्पादिकी उत्पत्तिप्रतिबद्धा । सा चाष्टाङ्गा तत्त्वतो भवति । शास्त्रसमुद्भवा सम्यग्विज्ञातशास्त्रतत्त्वस्य तदनुस्यूता । सांसर्गिकी आहार्यबुद्धिः ज्ञानवृद्धसंसर्गादागता । परिणामिनी या तदात्वे नोत्पद्यते, किंतु पश्चात् बुद्धेः( ? द्धिः ) स्वयं विमृशतो भवति । एताश्चतस्रो बुद्धयः सदा मन्त्रशक्तौ व्याप्रियन्ते । जम.

( २ ) उत्साहगुणानाह– शैघ्र्यमिति । शैघ्र्यम् आशुकार्यनिष्पादकत्वम् , सुदाक्ष्यं सुकौशलम् , व्यसनेषु आपत्सु अदैन्यम् अक्लैब्यम् , उत्साहसंपत् उद्योगशीलत्वम् , युधि सङ्ग्रामे धीरता धैर्यम् । 'युधि धीरता च' इत्यत्र ' स्वतिधीरता च ' इति मुद्रितः पाठः । आत्यन्तिकी बहुला, शास्त्रसमुद्भवा नीतिशास्त्रालोचनजनिता, सांसर्गिकी विचक्षणसंसर्गसमुत्पन्ना , परिणामिनी परिणतिशीला धीः बुद्धिः । एवं चतुर्विधा बुद्धिरित्यर्थः । उनिसा.

( १ ) कानी. १६।३२ ; उनिसा. नयप्र ( नयोप ) स्वकोश ( सुकोष ).

( १ ) कानी. १६।३३ ; उनिसा. स्वति ( युधि ) औत्पादिकी ( आत्यन्तिकी ).

[1]उत्साहसत्त्वाध्यवसायचेष्टा
दार्ढ्यं च कर्मस्विह पौरुषं च ।
अरोगता कर्मफलोपपत्ति-
र्दैवानुकूल्यं च निराधिता च ॥

( १ ) उत्साहः शौर्यादिगुणयुक्तः । सत्त्वं व्यसनेऽभ्युदये च यदविकारकम् । अध्यवसायः इदं साधयामीति महार्थेषु चेतोवृत्तिः । स च सत्त्वपरिणामः, सत्त्वहीनस्य च तथाविधार्थसाधनाध्यवसायाभावात् । चेष्टा कायिको व्यापारः । दार्ढ्यं स्थैर्यम् । एतत् पञ्चविधं चित्तकायपरिस्पन्दरूपं पौरुषं पुरुषकर्म । अरोगता निर्व्याधिकता । कर्मफलोपपत्तिः यद्यत् कर्माऽऽरभते तस्य तस्याप्रतिहता फलनिष्पत्तिः । आधिः प्रियवियोगादिजं दुःखम् । एतत्त्रितयात्मकं दैवानुकूल्यमिति । जम.

( २ ) भूयोऽपि यानगुणानुष्ठाने विजिगीषोः सामग्रीमभिधातुमाह– उत्साहेति । उत्साहः उद्योगः । सत्त्वं बलम् । अध्यवसायः स्थिरता । चेष्टा अनालस्यम् । दार्ढ्यं कर्मसु दृढता । कर्मसु कार्येषु अतिपौरुषं अतिशौर्यम् । अरोगता पीडाराहित्यम् । कर्मफलोपपत्तिः कर्मफलस्य आक्रमणादिजनितफलस्य उपपत्तिः उपपादनम् । दैवानुकूल्यं दैवस्य अदृष्टस्य अनुकूलता । निराधिता– आधिः मानसी व्यथा, तच्छून्यत्वम् । उनिसा.

[2]पक्षादिनाऽनेन गृहीतकोशः
पक्षादिहीनं रिपुमभ्युपेयात् ।
इति प्रसर्पन् नियतं समुद्र-
प्रक्षालितां तां लभते धरित्रीम् ॥

( १ ) पक्षादिनेति अनुरागी सद्वृत्तश्च पक्षः, गुणप्रवेकः, शक्तित्रयम्, पौरुषम्, दैवानुलोम्यं च । एतैर्युक्तो यायात् । गृहीतकोश इति । वक्ष्यमाणदानकल्पनार्थं कोशग्रहणम् । जम.

( २ ) अनेन पूर्वोक्तप्रकारेण पक्षादिना विशिष्ट इत्यर्थः । उक्तं च– ' निजोऽथ मैत्रश्च समाश्रितश्च संबन्धजः कार्यसमुद्भवश्च । भूतो गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति ॥ ' इति । आदिपदात् उत्साहशक्त्यादिसमन्वित इत्यर्थः । गृहीतकोषः गृहीतः समभिव्याहारे नीतः कोषो येन, ' कोषाधीनो राजा ' इति वचनात् । विजिगीषू राजेति शेषः । पक्षादिहीनं पक्षादिभिः पक्षमन्त्रशक्तिकोषप्रभृतिभिः हीनं न्यूनं रिपुं यातव्यं शत्रुम् अभ्युपेयात् आक्रामेत् । जयस्य निःसंदिग्धत्वादिति भावः । इति एवमुक्तप्रकारेण प्रसर्पन् विपक्षाक्रमणार्थे निर्गच्छन् विजिगीषुः समुद्रप्रक्षालितां सागरमेखलामित्यर्थः, ताम् अखण्डां धरित्रीं लभते । ' पक्षादिनाऽनेन ' इत्यत्र ' पक्षादिदानेन ' इति पाठो नास्मभ्यं रोचते । उनिसा.

अभियानानुकूलदेशकालविवेकः

[1]कालो गजानां सजलाभ्रजालो
यातुं तदन्यश्च तुरंगमाणाम् ।
नात्यर्थवर्षोष्णतुषारयुक्तः
संपन्नसस्यस्त्विति कालसंपत् ॥

( १ ) कालदेशाद्यपेक्षया यात्रां दर्शयितुमाह– काल इत्यादि । तदन्यः वर्षाकालादन्यः हेमन्तः ग्रीष्मश्च । यदा तु शीतोष्णवर्षाणां साम्यं तदा कालसंपदित्याह– नात्यर्थेत्यादि । जम.

( २ ) सजलाभ्रजालः सजलजलदपटलयुक्तः कालः गजानाम्, तदन्यः वर्षातिरिक्तः कालः तुरंगमाणाम् अश्वानां यातुं प्रयातुम्, प्रशस्तः इति शेषः । अत एव नात्युष्णवर्षोऽपि समधिकवर्षासमधिकग्रीष्मपरिरहितोऽपि तुषारयुक्तः शीतसमन्वितः, संपन्नशस्यः संपन्नानि समुद्भूतानि शस्यानि यत्र तादृशः कालः, प्रशस्यतर इति शेषः । इति कालसंपत् निर्दिष्टा इत्यर्थः । ' सजलाभ्रजालः ' इत्यत्र 'सजलोऽम्बुदोऽसौ' इति, 'नात्युष्णवर्षोऽपि तुषारयुक्तः ' इत्यत्र 'नात्युष्णवर्षोष्णतुषारयुक्तः' इति पाठान्तरम् । ' नात्युष्णवर्षातितुषारयुक्तः ' इत्येवं पाठः संगच्छते । उनिसा.

---

( १ ) कानी. १६।३४ ; उनिसा. स्विह ( स्वति ).
( २ ) कानी. १६।३५.

( १ ) कानी. १६।३६ ; उनिसा. नात्यर्थवर्षोष्ण ( नात्युष्णवर्षोऽपि ) सस्य ( शस्य ).

[1]रात्रावुलूको विनिहन्ति काकान्
काकोऽप्युलूकान् रजनीव्यपाये ।
इति स्म कालं समुदीक्ष्य यायात्
काले फलन्तीह समीहितानि ॥

(१) कालदेशवशात् बलाबलं दृश्यत एवेत्याह– रात्रावित्यादि । जम.

(२) अनुकूलप्रतिकूलयोः कालयोर्गुणदोषानाह– रात्राविति । उलूकः पेचकः रात्रौ काकं वायसं विनिहन्ति विनाशयति । रजनीव्यपाये दिवसे काकोऽपि उलूकं विनिहन्ति । इति हेतोः कालम् आत्मबलानुकूलसमयं प्रसमीक्ष्य पर्यालोच्य यायात् युद्धयात्रां कुर्यात् । यतः इह जगति काले उपयोगिसमये समीहितानि अभिलषितानि पृथिवीलाभपालनादीनि फलन्ति सफलानि भवन्ति । 'काले फलन्तीह' इत्यत्र 'काले भवन्तीह' इति पाठान्तरम् । उनिसा.

[2]श्वा नक्रमाकर्षति कूलसंस्थं
श्वानं च नक्रः सलिलाभ्युपेतम् ।
व्यायच्छमानो ध्रुवमभ्युपैति
देशस्थितः कर्मफलोपभोगम् ॥

(१) व्यायच्छमानः चेष्टमानः । देशस्थितः स्वसैन्यव्यायामयोग्यदेशस्थितः । जम.

(२) कालबलाबलमभिधाय देशबलाबलमाह– श्वा नक्रमिति । श्वा कुक्कुरः कूलसंस्थं तीरस्थितं नक्रं कुम्भीरम् आकर्षति आक्रामति । नक्रश्च सलिलाभ्युपेतं जलेऽवतीर्णं श्वानम् आकर्षति । एवं देशस्थितः अनुकूलस्थानस्थः व्यायच्छमानः उद्योगं कुर्वन्, विजिगीषुरिति शेषः, ध्रुवं निश्चयं कर्मफलोपभोगं कर्मणः प्रयाणादिकस्य यत् फलं पृथ्वीलाभादिकं तस्य उपभोगम् उपैति प्राप्नोति । 'कर्मफलोपभोगम्' इत्यत्र 'कर्मबलोपभोगम्' इति मुद्रितपाठः । उनिसा.

[1]समं तुरंगैर्विषमं च नागै-
स्तथा जलाढ्यं समहीधरं च ।
नावा वृतं पत्तिबलानुयातै-
र्यथाबलं च प्रसमीक्ष्य मिश्रम् ॥

(१) तदेव दर्शयन्नाह– सममित्यादि । देशं गच्छेदिति वक्ष्यमाणेन संबन्धः । विषमं निम्नोन्नतम् । नावा वृतमिति । अद्भिर्वृतं नौकटकेनैव यायात् । पत्तिबलानुयातैः तुरंगनागनौकटकैः । यथाबलं च प्रसमीक्ष्येति । समविषममिश्रं देशं तुरंगैर्नागैश्च गच्छेत्, जलावृतं नागैर्नौकटकेन वा । जम.

(२) समविषममिश्रदेशेषु यानक्रममाह– सममिति । समं समतलदेशं मथुरासदृशं तुरगैः अश्वप्रधानबलैः गच्छेत् । तथा विषमं निम्नोन्नतं तरङ्गितमित्यर्थः, देशं नागैः गजप्रधानबलैः । तथा जलाढ्यं जलप्रधानं देशम् उपद्वीपप्रायद्वीपादिकं नावा वृतैः जलयानपूर्णबलैः, तथा समहीधरं पर्वतप्रधानदेशं नागवृतैः द्विरदपूर्णबलैः गच्छेत् । अथवा समहीधरं जलाढ्यं देशं नावा वृतैः नागवृतैश्च बलैः गच्छेत् इत्यन्वयः । मिश्रं देशं च यथाबलं बलानुसारेण प्रसमीक्ष्य पर्यालोच्य गच्छेत् । 'नावा वृतैर्नागवृतैश्च गच्छेत्' इत्यत्र 'नागावृतं पक्षबलानुपेतैः' इति मुद्रितपाठः । उनिसा.

[2]मरुप्रगाढं पततीह तोये
ग्रीष्मे त्वनूपोदककक्षदुर्गम् ।
मिश्रं च संवीक्ष्य यथासुखं च
गच्छेन्नरेन्द्रो विजयाय देशम् ॥

(१) पतति तोये वर्षासु गच्छेदित्यर्थः । अनूपोदककक्षदुर्गमिति । अनूपदेशम् उदकयुक्तं ग्रीष्मे गच्छेत् । मिश्रं च संवीक्ष्य यथासुखमिति । साधारणदेशं साधारणे काले गच्छेत् । जम.

---

(१) कानी. १६।३७ ; उनिसा. काकान् (काकं) प्युलूकान् (प्युलूकं) समुदी (प्रसमी).

(२) कानी. १६।३८.

(१) कानी. १६।३९ ; उनिसा. तुरं (तुर) तृतीयचरणे (नावा वृतैर्नागवृतैश्च गच्छेत्).

(२) कानी. १६।४०.

(२) मरुप्रगाढम् अतिनिर्जलं देशं तोये पतति पर्जन्ये वर्षति सति। जलसौकर्यार्थमित्यर्थः। ग्रीष्मे ग्रीष्मसमये अनूपोदककक्षदुर्गम् अनुगता आपो यत्र स्थाने तस्य उदकैः सलिलैः कक्षैः तृणगुल्माभिः दुर्गं दुःखेन गमनीयं देशम्, तथा मिश्रम् अनूपत्वमरुत्वादियुक्तं देशं संवीक्ष्य विचार्य यथासुखं सुखानतिक्रमेण नरेन्द्रः विजयाय गच्छेत्। उनिसा.

**[1]न चातितोयं न च तोयहीनं**
**युक्तं च सम्यग्यवसेन्धनेन।**
**उपेत्य मार्गं बहुतज्ज्ञयुक्तं**
**सुखं प्रयाणै रिपुमभ्युपेयात्॥**

(१) न चातितोयं न च तोयहीनमिति। कालसामान्येन सर्वसैन्यस्यायं मार्गोपदेशः। प्राक् तु ग्रीष्मापेक्षाकारिणामेव मार्ग उक्तः— 'ग्रीष्मे प्रभूताम्बुवनेन यायात्' (कानी. १६।७) इति। बहुतज्ज्ञयुक्तं बहुभिर्मार्गज्ञैराक्रान्तम्। प्रायेण सुखहेतुत्वात् सुखम् स्थाणुकण्टकश्वभ्राद्यभावात्। जम.

(२) एतदेव द्रढयति— न चातितोयमिति। न च अतितोयं बहुजलम्, गमनविघ्नहेतुत्वात्, न च तोयहीनम्, पिपासाबाधभयात्, यवसैः तृणादिभिः अश्वगवादिभक्षणोपयोगिभिः इन्धनेन काष्ठेन पाकोपयोगिना युक्तं मार्गं पन्थानम् उपेत्य अवलम्ब्य बहुभिः बहुसंख्यकैः तक्षैः कारुकरैः शिल्पजीविभिरित्यर्थः, युक्तः समेतः सन् सुखप्रयाणैः सुखं क्लेशहीनं प्रयाणं येषां ते तैः सैन्यैरित्यर्थः, रिपुं यातव्यशत्रुम् उपेयात् यायात्। 'बहुतक्षयुक्तः' इत्यत्र 'बहुतज्ज्ञयुक्तः' इति पाठे तं मार्गं जानन्ति ये ते तज्ज्ञा इत्यर्थः। 'सुखप्रयाणैः' इत्यत्र 'सुखप्रयोगैः' इति पाठान्तरम्। उनिसा.

**[2]स्ववीवधासारमुपेततोयं**
**विश्वासिताक्रान्तजनं विशुद्धम्।**
**तन्मात्रमेव द्विषतामुपेयाद्**
**यस्माच्च कुर्यादपयानमार्तः॥**

(१) कानी. १६।४१ ; उनिसा. तज्ज्ञयुक्तं सुखं प्र (तक्षयुक्तः सुखप्र).

(२) कानी. १६।४२ ; उनिसा. स्ववी (सुवी) सिता (सिभिः) जनं (जलं).

(१) शत्रुदेशं च गच्छन् कियद्दूरं यायादित्याह— स्ववीवधासारमिति। यस्मिन् मार्गे स्वकीयौ वीवधासारौ प्रवर्तेते। पर्याप्तजलम्, विश्वासिताः आक्रान्ताश्च जना यस्मिन्, तन्मात्रमेव शत्रुदेशं विशुद्धत्वात् यायात्। अन्यथा विच्छिन्नवीवधासारत्वात् तोयवैकल्यादविश्वासितैरनाक्रान्तैश्च जनैः समन्ततो व्याकुलीक्रियमाणत्वादार्तः प्रतिनिवर्तेत पराभिघातश्च स्यात्। जम.

(२) सु शोभनौ वीवधासारौ यत्र तम्। वीवधः तृणधान्यादेः प्राप्तिः, आसारः सुहृद्बलम्। उपेततोयम् उपेतं युक्तं तोयं यत्र। स्नानपानाद्युपयोगिजलसमन्वितमित्यर्थः। विश्वासिभिः विश्वस्तैः अनुजीविभिरित्यर्थः, क्रान्तजलं क्रान्तम् आयत्तीकृतं जलं यत्र तम्। अन्यथा कूपादौ विपक्षकृतविषप्रयोगेण प्रत्यावर्तनकाले तज्जलपायिसैन्यविनाशसंभवः। विशुद्धं चरादिभिः कृतशोधनम्, तन्मात्रमेव तावत्परिमाणमेव द्विषतां शत्रूणां मार्गं पन्थानम् उपेयात् गच्छेत्। यस्मात् पथः आर्तः शत्रुकृतोपद्रवेण विपन्नः सन् न अपयानं पलायनं कुर्यात्। 'विश्वासिताक्रान्तजलम्' इति पाठे स एवार्थः। उनिसा.

**[1]ये दूरयात्रां सहसा विशन्ति**
**मूढा रिपूणामविचार्य भूमिम्।**
**ते यान्ति तेषामचिरेण खड्ग-**
**धारापरिष्वङ्गमयत्नसाध्यम्॥**

(१) यदाह— ये दूरयात्रामिति। विशुद्धात् देशादभ्यधिकां भूमिम्। अविचार्य वीवधासारादिकम्। अयत्नसाध्यम्, अभूमिष्ठत्वात्। जम.

(२) एतदतिक्रमे दोषमाह— ये दूरमार्गमिति। ये मूढाः विपक्षभूपालाधिकृतदेशमार्गानभिज्ञाः परामर्शरहिता वा रिपूणां शत्रूणां भूमिम् अधिकृतदेशम् अविचार्य अपशाय सहसा हठात् दूरयात्रां दूरतरप्रदेशे यात्रां विशन्ति आश्रयन्ति। 'दूरमार्गम्' इति पाठे तु ये अभियोक्तारः दूरमार्गम् अभिहितप्रमाणाधिकभूमिमित्यर्थः। अयत्न-

(१) कानी. १६।४३ ; उनिसा. साध्यम् (साध्याः).

साध्याः सुखसाध्याः ते अचिरेण शीघ्रमेव तेषां शत्रूणां खड्गधारापरिष्वङ्गं खड्गधाराया आलिङ्गनात् मृत्युं यान्ति प्राप्नुवन्तीत्यर्थः । उनिसा.

[1]मार्गे च दुर्गोपनिविष्टसैन्यो
विधाय रक्षां विधिवद्विधिज्ञः ।
संनद्धपार्श्वस्थितवीरयोधः
सेवेत साध्वीं निशि योगनिद्राम् ॥

(१) इदानीं स्वव्यापारेणाभियोक्ता प्रदर्श्यते षोडशभिः श्लोकैः । तत्र रात्रिगतं व्यापारमाह– मार्ग इत्यादि । दुर्गोपनिविष्टसैन्यः दुर्गमाश्रित्य समावासितस्कन्धावारः । विधाय रक्षां बहिरन्तश्च । स्कन्धावारस्य विधिज्ञः । संनद्धाः पार्श्वस्थिताः वीराः योधाः यस्य । एवं च कृतरक्षस्य निद्रा साध्वी भवति । योगनिद्रां सेवेत मायानिद्रया सुप्यात्, यथा तुरङ्गहेषादिस्वनमपि श्रुत्वा प्रतिबुध्येत । जम.

(२) यथास्थानसंस्थापितबलस्य तु मार्गोऽपि शयनकल्प इत्याह– मार्गे इति । मार्गे प्रयाणस्य पथि दुर्गे जलपर्वतवनादिभिर्यो दुर्गप्रवेशः तत्र विनिविष्टं संनिविष्टं सैन्यं यस्य सः, विधिवत् यथाविधानं विधिम् आत्मरक्षायाः परावस्कन्दस्य च विधिं विधानं जानाति यः सः, संनद्धपार्श्वस्थितवीरयोधः संनद्धाः सर्वदा बद्धपरिकराः कृतसङ्ग्रामसज्जा इत्यर्थः, पार्श्वस्थिताः आत्मनः नगरस्य च संनिहितप्रदेशावस्थायिनः वीराः सङ्ग्रामकौशलाभिज्ञाः सङ्ग्रामे अपराङ्मुखाश्च योधाः युद्धविद्याविशारदाः यस्य सः, तादृशो विजिगीषुः रक्षां सर्वत आत्मरक्षोपायं विधाय सुसंपाद्य साध्वीम् उत्तमां सुखयोगनिद्रां सुखयोगेन सुखसङ्गेन निद्राम् अत्याहितशङ्कापरिशून्यतया उद्वेगराहित्यं सेवेत । अथवा, साध्वीं निर्दिष्टरात्रियाममात्रान्यूनानधिकां सुखयोगनिद्रां सुखयोगेन निद्रां सेवेत स्वीकुर्यात् । अथवा, सुखेन योगनिद्रां योगीव निद्रावसरे सचेतन इत्यर्थः । 'सुखयोगनिद्राम्' इत्यत्र 'निशि योगनिद्राम्' इति पाठे स एवार्थः । उनिसा.

[1]भ्रमत्तुरंगद्विरदेन्द्रहेषा-
घण्टास्वनापूरितकर्णरन्ध्रः ।
तदन्तरा तु प्रतिबोधवर्ती
के जाग्रतीत्याहित आद्रियेत ॥

(१) यदाह– भ्रमदित्यादि । जागरूकाधिष्ठितानां स्कन्धावारात् बहिर्भ्रमतां तुरंगमाणां यो हेषास्वनः द्विरदेन्द्राणां च घण्टास्वनः ताभ्यां व्याप्तं कर्णरन्ध्रं यस्य । तदन्तरा निद्राच्छेदे । 'के जाग्रति अस्मिन् प्रहरे' इत्याद्येतन्निरूपयेत् । आहितः सावधानः । जम.

(२) निशि राजावासपार्श्वतो भ्रमन्तः परिवर्तमानाः ये तुरंगाः अश्वाः, द्विरदेन्द्राः मातंगश्रेष्ठाः, तेषां यथाक्रमं हेषाणां हेषितानां घण्टानां गजकण्ठलम्बितबृहद्घण्टानां च स्वनेन रवेण आस्वादितं स्पृष्टं कर्णरन्ध्रं श्रवणविवरं यस्य विजिगीषोः सः, तथा तदन्तराले तस्य हेषादिरवस्य अन्तराले मध्ये प्रतिबोधवर्ती प्रतिबोधे जागरणे वर्तते योऽसौ निद्राच्छेदवर्तीत्यर्थः, के जाग्रति के यामिकपुरुषाः जाग्रति प्रतिबोधवर्तित्वे वर्तन्ते ? एवंविधप्रश्नपूर्वकम् आदरं समादरपूर्वकम् आद्रियेत भूयो भूयः पृच्छेदित्यर्थः । 'हेषा' इत्यत्र 'हेषाम्' इति, 'तदन्तरालप्रतिबोधवर्ती' इत्यत्र 'तदन्तरा च प्रतियोधवृत्ताम्' इति च पाठान्तरम् । उनिसा.

[2]ततः प्रबुद्धः शुचिरिष्टदेवः
श्रीमद्विभूषोज्ज्वलितः प्रहृष्टः ।
सेव्येत मन्त्रिप्रवरैर्यथावत्
पुरोहितामात्यसुहृद्गणैश्च ॥

(१) तत इत्यादि दिवागतं व्यापारं दर्शयति । शुचिः स्नानादिना । इष्टदेवः पूजितदेवः । प्रहृष्टः सैन्योत्साहनार्थम् । सेव्येत आस्थानोपगतः । मन्त्रिप्रवरैः उत्तममन्त्रिभिः । जम.

(१) कानी. १६।४४ ; उनिसा. दुर्गोप (दुर्गे वि) निशि यो (सुखयो).

(१) कानी. १६।४५ ; उनिसा. हेषा (हेषा) पूरित (स्वादित) रा तु (राल) हित आ (दरमा).

(२) कानी. १६।४६.

(२) ततः निशापगमे प्रबुद्धः जागरितः, शुचिः कृतशौचक्रियः, इष्टदेवः पूजितेष्टदेवतः श्रीमद्विभूषोज्ज्वलितः श्रीमतीभिः शोभासंपादिकाभिः विभूषाभिः परिच्छदालंकारैः उज्ज्वलितः दीप्यमानः प्रहृष्टः सर्वदा सहर्षमनाः विजिगीषुरित्यर्थः, मन्त्रिप्रवरैः सचिवप्रधानैः पुरोहितामात्यसुहृद्गणैश्च यथावत् यथाविधि सेव्येत। एतैः सह विजिगीषुर्यथाकर्तव्यं निरूपयेदिति तात्पर्यम्। उनिसा.

[1]कर्तव्यतां तैः सह संप्रधार्य
यानं समारुह्य विचित्रयानः।
कुलोद्गतैः शस्त्रिभिरात्मकल्पै-
र्बहिर्निरीयात् परिवारितः सन्॥

(१) कर्तव्यतां तदात्वे आयत्यां च। यानं हस्तिनम्, तस्य विचित्रगमनात्। बहिर्निरीयात् स्वसादावासान्निर्गच्छेत्। जम.

(२) तैः पुरोहितामात्यादिभिः सह कर्तव्यतां करणीयं यत् तत् संप्रधार्य निर्णीय विचित्रयानं विचित्राणि यानानि युग्यवाहनानि यस्मिन् तादृशं यानं रथादिकं समास्थाय आरुह्य कुलोद्गतैः कुलक्रमादागतैः आत्मतुल्यैः आत्मसदृशैः विश्वस्तैरित्यर्थः, शस्त्रिभिः शस्त्रधारिपुरुषैः परिवारितः परिवेष्टितः सन् बहिः निरीयात् निर्गच्छेत्। 'संप्रधार्य' इत्यत्र 'संविचार्य' इति, 'विचित्रयानम्' इत्यत्र 'विचित्रयानः' इति, 'शस्त्रिभिः' इत्यत्र 'पत्तिभिः' इति, 'आत्मतुल्यैः' इत्यत्र 'इष्टतुल्यैः' इति पाठान्तरम्। उनिसा.

अभियाने नृपचर्या

[2]पश्येन्नृपो हस्तिरथाश्वचर्यां
सामूहिकं योधगणं पृथक् च।
विवक्षितांश्च द्विरदान् द्विरह्न-
स्तुरंगमांश्चापि विधानयुक्तान्॥

(१) कानी. १६।४७ ; उनिसा. रुह्य (स्थाय) यानः (यानम्) कल्पै (तुल्यै).

(२) कानी. १६।४८ ; उनिसा. दान् द्विरह्न (देन्द्रमुख्यां).

(१) पश्येत् निर्गतः। हस्तिरथाश्वचर्यामिति हस्तिरथाश्वयानमार्गम्। सामूहिकं पृथक् चेति। समुदितं प्रत्येकं च योधगणं पश्येत्। विवक्षितान् शौर्यादिगुणयुक्तान्। द्विरह्न इति। पूर्वाह्णे अपराह्णे च पश्येत्। विधानयुक्तान् सांनाह्यान्। जम.

(२) विजिगीषोरवश्यकर्तव्यं कर्माऽऽह– पश्येन्नृप इति। नृपः विजिगीषुः हस्तिरथाश्वचर्यां हस्तिनां रथानाम् अश्वानां च चर्यां गतिं तथा सामूहिकं व्यूहरचनाधिष्ठितं योधगणं योद्धृपुरुषसमूहं पृथक् प्रत्येकं योधवृन्दं च तथा विवक्षितान् परीक्षार्थम् इष्टान् विधानयुक्तान् सङ्ग्रामसज्जादिसमेतान् सङ्ग्रामनैपुण्यप्रदर्शिनश्च द्विरदेन्द्रमुख्यान् प्रधानमातंगान् तुरंगमान् अश्वांश्च पश्येत् निरीक्षेत। 'हस्तिरथाश्वचर्याम्' इत्यत्र 'हस्तिरथांश्च वर्यान्' इति पाठान्तरम्। उनिसा.

[1]सुखोपगम्यः स्मितपूर्वभाषी
प्रियं वदेद्वृत्त्यधिकं च दद्यात्।
प्रियेण दानेन च संगृहीता-
स्त्यजन्ति भर्तर्यपि जीवितानि॥

(१) प्रियेण वचनेन। भर्तरि भर्तृनिमित्तम्। जम.

(२) सुखोपगम्यः सुखेन उपगम्यते सेवार्थमित्यर्थः। स्मितपूर्वभाषी स्मितपूर्वम् ईषद्धास्यपूर्वकं भाषते योऽसौ। मधुरभाषीत्यर्थः। एवंविधो विजिगीषुः प्रियं वदेत् सर्वदा प्रियवादी भवेदित्यर्थः। वृत्त्यधिकं च नियमितवृत्त्यतिरिक्तं च दद्यात्। एतेन कार्यकाले किं भवतीत्याह– प्रियेण प्रियवचनादिना दानेन च वृत्त्यधिकप्रदानेन च संगृहीताः आत्मसात्कृताः, भृत्या इति शेषः, भर्तरि स्वामिनि प्रभुकार्यसाधनार्थमित्यर्थः, जीवितानि अपि प्राणानपि त्यजन्ति। शरीरव्ययेनापि प्रभुकार्यं साधयन्तीति भावः। उनिसा.

(१) कानी. १६।४९–५०.

**रथाश्वनौकुञ्जरयानयोग्यो**
**नित्यक्रियः स्याद्धनुषि प्रगल्भः ।**
**सुमेधसां कर्मणि दुष्करेऽपि**
**नित्यक्रिया कौशलमादधाति ॥**

(१) नित्यक्रिय इति । रथादियानयोग्योऽपि धनुषि कुशलोऽपि पुनस्तत्र नित्यव्यापारः स्यात् । किमर्थमित्याह — सुमेधसामिति । जम.

(२) सर्वत्र अभ्यासेनैव पाटवं भवतीत्याह— रथाश्वेति । रथाश्च अश्वाश्च नावश्च कुञ्जराश्च यानानि च तानि रथाश्वनौकुञ्जरयानानि, तेषु योग्यः निपुणः दक्ष इत्यर्थः । स्यन्दनारोहणे तुरगारोहणे नौकारोहणे गजारोहणे मनुष्यवाह्ययानाद्यारोहणे च कुशल इति भावः । धनुषि चापे धनुर्वेदे इत्यर्थः, प्रगल्भः प्रौढः । नित्यक्रियः नित्या नियता क्रिया कार्यानुष्ठानं व्यवसाय इति यावत् (यस्य सः)। एवंविधश्च स्यात् भवेत् । तथाहि— नित्यक्रिया कार्येषु नियतव्यापारः सुमेधसां सुबुद्धिजनानां संबन्धे दुष्करेऽपि दुःसाध्येऽपि कर्मणि कौशलं नैपुण्यम् आदधाति संपादयति। तथा चोक्तम्— 'अभ्यासः कर्मणां सत्यमुत्पादयति कौशलम्' इति । 'रथाश्वनौकुञ्जरयानयोग्यः' इत्यत्र 'रथाश्वनौकुञ्जरहानयोग्यः' इति मुद्रितपाठे रथादीनां हाने परित्यागे योग्यः समर्थः । रथादिकमनपेक्ष्य गन्तुं समर्थ इत्यर्थः । 'रथाश्वनौकुञ्जरयानयोग्या नित्यक्रिया' इति पाठे तदुभयपदयोर्विशेष्यविशेषणभावः । उनिसा.

अभियाने दूतप्रचारः

**'संनद्धमुच्चैर्द्विपमास्थितः सन्**
**संनद्धसैन्यानुगतः प्रकुर्वन् ।**
**सामन्तदूतेन हि साधुमन्त्रं**
**प्रवीरयोधान्तरितेन यायात् ॥**

(१) कानी. १६।५१ ; उनिसा. प्रकु (विकु) मन्त्रं (मन्त्रः).

(१) उच्चैर्द्विपं विवक्षितम् । साधुमन्त्रं परातिसंधानगर्भमालापं प्रकुर्वन् । प्रवीरयोधान्तरितेन दुष्टव्यापारनिषेधार्थम् । जम.

(२) संनद्धं सुसज्जितम् उच्चैः महान्तं द्विपं मातङ्गम् आस्थितः आरूढः, तथा संनद्धसैन्यानुगतः संनद्धैः कृतसंनाहैः सैन्यैः सेनाभिः अनुगतः अनुयातः, अविकुर्वन् विकारपरिवर्जितः, प्रवीरयोधान्तरितेन प्रवीराः सङ्ग्रामकुशलाः योधाः योद्धृपुरुषाः तैः अन्तरितेन व्यवहितेन सामन्तदूतेन, परदूतेन सह गुप्तभाषणस्यानौचित्यात्, साधुमन्त्रः साधुः सम्यक् मन्त्रः कर्तव्यावधारणार्थकथोपकथनं यस्य तादृशश्च सन् यायात् सङ्ग्रामे यात्रां कुर्यात् । 'द्विपम्' इत्यत्र 'द्विषम्' इति, 'विकुर्वन्' इत्यत्र 'प्रकुर्वन्' इति, 'साधुमन्त्रः' इत्यत्र 'साधुमन्त्रम्' इति पाठे मन्त्रं प्रकुर्वन् इत्यन्वयः । उनिसा.

**'आलोकयेद्बुद्धिगुणोपपन्नै-**
**श्चरैश्च दूतैश्च परप्रचारम् ।**
**एतैर्वियुक्तो भवति क्षितीन्द्रो**
**जनैरनेत्रैश्च समानधर्मा ॥**

(१) परप्रचारं यातव्यचेष्टितम् । एतैरिति चैरैर्दूतैश्च नेत्रस्थानीयैः। अनेत्रैः अन्धैः । जम.

(२) बुद्धिगुणोपपन्नैः बुद्धेर्गुणाः *शुश्रूषाप्रवणताग्रहणविज्ञानानुपहतत्वाभिनिवेशादयः तैः उपपन्नैः दान्तैः सुविनीतैः चरैः दूतैः परप्रचारं परस्य प्रतिद्वन्द्विभूपालस्य प्रचारं प्रयोगादिकम् आलोकयेत् निरूपयेत् । यतः एतैः एवंविधबुद्धिगुणोपपन्नैश्चरैरित्यर्थः, विमुक्तः विरहितः क्षितीन्द्रः राजा अनेत्रैः नयनविरहितैः जनैः समानधर्मा समानगुणः भवति । अन्धवत् भवतीत्यर्थः । 'दान्तैः' इत्यत्र 'सर्वैः' इति, 'परप्रचारम्' इत्यत्र 'परापचारम्' इति पाठान्तरम् । उनिसा.

* 'शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणाः' (कौ. ६।१) इतिकौटिलीयवचनमूलकत्वे अशुद्धमिदम् ।

(१) कानी. १६।५२ ; उनिसा. दूतै (दान्तै) युक्तो (मुक्तो).

[1]विलोभयन् किंचिदपि प्रयच्छन्
कुर्वीत मित्रं द्विषतोऽन्तपालम् ।
राष्ट्रादभीक्ष्णं द्विषतः प्रपण्यं
पण्यैर्हितं नाडिकयाऽऽददीत ॥

(१) विलोभयन् 'इदं ते करिष्यामि' इति किंचिदेव प्रयच्छन्, तदात्वे, कुर्वीत मित्रं स्वीयवीवधासारप्रवर्तनार्थम् । प्रपण्यं हितं येनार्थी । नाडिकया संचारपरंपरया । आभिमुख्येनाप्यादीयमानं परो निरुन्ध्यात् । जम.

(२) यथा पद्मनालेन कश्चित् सलिलमादत्ते तथा प्रलोभनादिद्वारा परिगृहीतदण्डनायकेन शत्रोरन्तःसारमाददीतेत्याह— विलोभयन्निति । विलोभयन् 'भवन्तं राष्ट्रस्वामिनं करिष्यामि' इति आशाजनकवचनेन प्रलोभयन् किंचिदपि अल्पमात्रं प्रयच्छन् ददत् । बहुदानेन विपक्षपुष्टिसंभावना मा भूदिति तात्पर्यम् । द्विषतः विपक्षस्य अन्तपालं राज्यप्रान्तरक्षणे नियुक्तं दण्डनायकं मित्रं स्वायत्तं कुर्वीत विदध्यात् । हि यतः पण्यैः किंचिद्दानपूर्वकाशाप्रदानरूपमूल्यैः तन्नालिकया अन्तपालरूपनालेन द्विषतः शत्रोः राष्ट्रात् राज्यात् अभीक्ष्णं बहुपरिमाणं प्रपण्यं बहुमूल्यं वस्तु आददीत गृह्णीयात् । आकर्षेदित्यर्थः । 'द्विषतोऽन्तपालम्' इत्यत्र क्वचित्पुस्तके 'द्विषतां नृपालम्', क्वचित्पुस्तके 'द्विषतोऽन्नपालम्', मुद्रितपुस्तके 'द्विषतो न पानम्' इत्येवं पाठो दृश्यते । 'कुर्वीत' इत्यत्र, 'रुन्धीत' इति, 'तन्नालिकया' इत्यत्र 'तन्नाहिकया' इति पाठान्तरम् । उनिसा.

[2]उपक्रमं वाञ्छितमाशु कुर्याद्
दूतोपयानात् क्रियमाणसंधिः ।
स चेद्विसंधिः स तु तत्र चैकः
कृतो भवत्यात्मसमुच्छ्रयश्च ॥

(१) कानी. १६।५३; उनिसा. र्हितं नाडि (र्हिं तन्नालि).

(२) कानी. १६।५४; उनिसा. तत्र चैकः (तस्य भेदः).

(१) क्रियमाणसंधिरिति । दूतसंप्रेषणेन विजिगीषुणा संधेयस्य यातव्यस्य तस्योरसि हस्तमार्द्रं दत्त्वा वाञ्छितमुपक्रमं प्रकृतिभेदादिकं कुर्यात् । तत्र यथाभिमते संधौ शोभनमेव । असिद्धे किं फलमित्याह— स चेदिति । यदि शत्रुरकृतसंधिः स तु तत्रैकः कृतो भवति स एव शत्रुः प्रकृतिभ्यः पृथक्कृतो भवति । आत्मसमुच्छ्रयश्च विजिगीषोरात्मनस्तत्प्रकृतिभिरैक्यं भवति । जम.

(२) दूतोपयानात् दूतस्य चारस्य उपयानात् उपस्थितेः क्रियमाणसंधिः अनुष्ठीयमानः संधिर्येन तादृशः सन् संध्यनुष्ठानं कुर्वन्नित्यर्थः, आशु अविलम्बितमेव वाञ्छितम् अभिप्रेतम् उपक्रमं चेष्टितं कुर्यात् विदध्यात् । स चेत् प्रतिपक्षश्चेत् विसंधिः संधिविघटको भवतीत्यर्थः, स तु तस्य यातव्यस्य भेदः कृतो भवति । तेन आत्मसमुच्छ्रयश्च आत्मनः समुन्नतिश्च भवति । 'स चेद्विसंधिः स तु तस्य भेदः' इत्यत्र 'स चेद्विसंधिर्न हि तत्र भेदः' इति मुद्रितपुस्तकपाठः । उनिसा.

[1]दौर्गान् पथिष्वाटविकान्तपालान्
संश्लेषयेद्दानवताऽपि साम्ना ।
विरुद्धदेशेषु हि संनिरोधे
ते ह्यस्य मार्गोपदिशो भवन्ति ॥

(१) दौर्गान् दुर्गपालान् । विरुद्धदेशेषु हि संनिरोधे विरुद्धकृते उपरोधे । 'मार्गोपदिशः' इति क्विप्प्रत्ययान्तः । जम.

(२) पथिषु प्रयाणमार्गेषु दौर्गान् दुर्गपालान् आटविकान् अटवीपालान् अन्तपालान् राज्यप्रान्तरक्षकभूमिपान् दानवता साम्ना वक्ष्यमाणलक्षणेन दानेन साम्ना च संश्लेषयेत् आत्मनि विश्लेषयेत् । विजिगीषुरिति शेषः । विरुद्धदेशेषु एकायनमार्गादिषु तन्निरोधे यातव्यकृतनिरोधे सति ते च स्वायत्तीकृतदुर्गपालादयश्च अस्य विजिगीषोः मार्गोपदिशः मार्गं पन्थानं उपदिशन्ति दर्शयन्ति ये ते तादृशाः मार्गोपदेशदातारः भवन्ति । उनिसा.

(१) कानी. १६।५५; उनिसा. संनि (तन्नि) ह्यस्य (चास्य).

'अकारणादेव हि कारणाद्वा
य एति कश्चित् पुरुषोऽरिसेवी ।
निजश्च विश्लिष्ट उपेत्य शत्रु-
मायाति यस्तस्य गतिं प्रपश्येत् ॥

( १ ) अकारणात्कारणाद्वेति स्वदोषेण स्वामिदोषेण वा शत्रुसेवको विजिगीषुमेति, निजश्च विजिगीषुसेवकोऽकारणात् कारणाद्वा विश्लिष्टः शत्रुं यात्वा पुनरापतति, तयोरुभयोः प्रचारं पश्येत् किं कल्याणबुद्धिरन्यथाबुद्धिर्वेति । जम.

( २ ) अकारणात् परित्यागकारणं विनैव कारणात् क्रोधादिहेतोः वा यः कश्चित् अरिसेवी शत्रुसेवकः पुरुषः एति आयाति शत्रुपक्षं परित्यज्य सेवार्थमुपगच्छति तस्य, तथा कश्चित् निजः आत्मीयः, भृत्य इति शेषः, विश्लिष्टः परित्यक्ताश्रयः सन् शत्रुं प्रतिपक्षभूपम् उपेत्य आयाति पुनराश्रयार्थमागच्छति तस्य गतिं चेष्टितं प्रपश्येत् निरीक्षेत । 'य एति कश्चित् पुरुषोऽरिसेवी । निजश्च विश्लिष्ट उपेत्य शत्रुम्' इत्ययं हस्तलिखितपुस्तकपाठः समीचीनः । 'य एव कश्चित् पुरुषोऽरिसेवी । निजश्च विश्लिष्ट उपेतशत्रुः' इत्ययं मुद्रितपुस्तकपाठो न समीचीनत्वेन प्रतिभाति । उनिसा.

'आरिप्सुना मन्त्रबलान्वितेन
प्रागेव कार्यो निपुणं विचारः ।
दोष्णां बलान्मन्त्रबलं गरीयः
शक्रोऽसुरान् मन्त्रबलाद्विजिग्ये ॥

( १ ) अभियोगश्च मन्त्रपूर्वकः फलवानिति श्लोकत्रयेण दर्शयति– आरिप्सुनेत्यादि । अरिमभियोक्तुमिच्छता । निपुणं सम्यक् । दोष्णां बलात् बाहुबलात् । अरिमभियुञ्जानेन मन्त्रेण योद्धव्यमित्यभिप्रायः । शक्रः असुरान् बलजम्भवृत्रप्रभृतीन् बाहुशालिनः । जम.

( २ ) बाहुबलात् मन्त्रबलं गरीय इत्याह– आरिप्सुनेति । आरिप्सुना सङ्ग्रामादिप्रयोगोपक्रमवता मन्त्रबलान्वितेन मन्त्रबलयुक्तेन, विजिगीषुणा इति शेषः, प्रागेव प्रयोगात् प्रथममेव निपुणं यथा तथा विचारः मन्त्रणापूर्वकेतिकर्तव्यतानिरूपणं कार्यः विधेयः । यतः दोष्णां दोर्दण्डानां बलात् मन्त्रबलं गरीयः श्रेष्ठतरम् । तथा च कौटिल्यः– 'एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । प्राज्ञेन तु मतिः क्षिप्ता हन्याद्गर्भगतानपि ॥' (कौ. १०।६) इति । तथा च शुक्रः दैत्यगुरुः मन्त्रबलात् मृतसंजीवन्या विद्यया सुरान् देवान् विजिग्ये जितवान् । 'शक्रोऽसुरान् मन्त्रबलाद्विजिग्ये' इति पाठे शक्रः देवराजः बृहस्पतिना मन्त्रयित्वा तद्विद्यामुपलभ्य असुरान् जिगायेति पौराणिकी वार्ताऽत्रानुसंधेया । उनिसा.

'मनीषया निर्मलया विलोकितं
फलाय कर्मोद्यममास्थितः परम् ।
अकालहीनं नयवित् समाचरेत्
फलं ह्यकाले नियतं व्युदस्यति ॥

( १ ) मनीषया बुद्ध्या निरूपितं कर्म पराभियोगं फलाय समाचरेदिति संबन्धः । अकालहीनं परस्य छिद्रकालमासाद्येत्यर्थः । अकाले नियतं नियोक्तुः फलं शत्रुसिद्धमन्ते व्युदस्यति । जम.

( २ ) सम्यगनुष्ठितमपि कार्यं कालातिक्रमे न सिध्यतीति दर्शयन्नाह– मनीषयेति । फलाय प्रयोगफलसिद्धये नयवित् नीतिशास्त्रज्ञः परम् उत्कृष्टम् उद्यमम् उद्योगम् आस्थितः आश्रितः सन् निर्मलया मनीषया बुद्ध्या विलोकितं पर्यालोचितम् अकालहीनम् अकालेन अयथासमयेन हीनं परिहीयमाणं कर्म संधिविग्रहादिरूपं कार्यं समाचरेत् । हि यतः अकालः अनवसरः नियतं निश्चयेन फलं प्रयोगफलं व्युदस्यति निराकरोति । 'अकाले' इति मुद्रितपुस्तकपाठे फलम् इति कर्तृपदम् । व्युदस्यति विक्षिप्तं भवतीत्यर्थः । उनिसा.

'प्रभावितानां श्रुतशौर्यशालिनां
यथावदालोचितमार्गचारिणाम् ।
चिराय दैवी द्युतिरुन्नतात्मनां
भुजङ्गदीर्घेषु भुजेषु लम्बते ॥

( १ ) कानी. १६।५६.

( २ ) कानी. १६।५७ ; उनिसा. शक्रोऽसु ( शुक्रो सु ).

( १ ) कानी. १६।५८ ; उनिसा. काले ( कालो ).

( २ ) कानी. १६।५९ ; उनिसा. चित ( कित ).

उपसंहरन्नाह– प्रभावितानामिति । प्रभावितानां प्रभावयुक्तानाम्, श्रुतशौर्यशालिनाम्– श्रुतं साङ्गोपाङ्ग-वेदाध्ययनम्, शौर्यं शूरत्वम्, ताभ्याम् शालन्ते ये ते तेषाम्, यथावत् यथाविधि आलोकिते शास्त्रेण प्रदर्शिते मार्गे पथि चरन्ति तिष्ठन्ति ये ते तेषाम्, उन्नतात्मनाम् उन्नतः उच्छ्रितः आत्मा येषां ते तेषां भुजंगदीर्घेषु भुजंगमवत् आयतेषु भुजेषु बाहुषु दैवी देवतासंबन्धिनी द्युतिः प्रभा चिराय निरन्तरं लम्बते संबध्यते । एवंभूता विजिगीषवो देवसमाना अप्रतिहतवीर्या भवन्तीत्यर्थः ।

उनिसा.

**[1]समुदितनरसंपद्भूरिसंपन्नसस्ये**
**विगतसलिलपङ्के काल**
**उद्भूतवृत्तिः ।**
**कुसुमितसहकारश्रीज्वलत्कानने वा**
**नरपतिररिभूमिं साधु**
**गच्छेज्जयाय ॥**

(१) समुदिता नरसंपत् यस्य नरपतेरिति संबन्धः । तिस्रो यात्राः दीर्घकाला ह्रस्वकाला मध्यकाला च । ताश्च यथाक्रममाह– भूरिसंपन्नसस्ये काले मार्गशीर्षे, विगत-सलिलपङ्के ज्येष्ठामूलीये, कुसुमितानां सहकाराणां श्रिया ज्वलत् काननं यस्मिन् चैत्रमासे । उद्भूतवृत्तिः त्रिष्वपि कालेष्वभिव्यक्तशक्तिः । जम.

(२) यात्राकालमाह– समुदितेति । समुदिता सम्य-ग्गुप्ता अथवा समुद्भूता नराणां योधपुरुषाणां संपत् संपत्तिः यस्य विजिगीषोः सः । तथा उद्युक्तवृत्तिः उद्योगशीलः । 'उद्भूतवृत्तिः' इति पाठे उद्भूता उत्पन्ना वृत्तिः सैन्यानां वर्तनोपायः यस्य सः । 'उद्भूतशक्तिः' इति पाठे शक्तिसंपन्न इत्यर्थः । नरपतिः विजिगीषुः भूरिसंपन्नशस्ये परिपक्वबहुशस्यसमये, शरत्काले इत्यर्थः, विगतसलिलपङ्के जलकर्दमरहितसमये वा, हेमन्तादा-वित्यर्थः, कुसुमितसहकारश्रीज्वलत्कानने वा कुसुमितानां मञ्जरितानां सहकाराणां चूततरूणां श्रिया लक्ष्म्या ज्वलन्ति भास्वराणि भवन्ति काननानि उद्यानानि यस्मिन्, वसन्ते इत्यर्थः, काले जयाय विपक्षविजयार्थं साधु यथा तथा अरिभूमिं विपक्षाधिकारं गच्छेत् यायात् ।

उनिसा.

**[1]इति नरपतिराहितादरः**
**परमभियोक्तुमनाः समुत्पतेत् ।**
**इति विधिविषयोपसेवना-**
**न्नियतमरातिरुपैति गोचरम् ॥**

(१) अभियोक्तारमधिकृत्याऽऽह– इतीति । समुत्पतेत् उत्तिष्ठेत् । विधिविषयोपसेवनादिति । यात्रायाः अभि-योक्तुश्च यो विधिरुक्तः स एव विधिविषयो विजिगीषुणा सेव्य इति कृत्वा । गोचरम्, सिद्धेरिति शेषः ।

जम.

(२) इत्येवं यानं सिध्यतीत्युपसंहरन्नाह– इतीति । नरपतिः विजिगीषुः इति अनेन प्रकारेण आहितादरः सन् कृतप्रयत्नः सन् परं शत्रुम् अभियोक्तुमनाः अभि-योक्तुम् अभिभवितुं मनो यस्य तादृशः सन् समुत्पतेत् यातव्यं यायात् । इतिविधिविषयोपसेवनेन इति एवंविधा-नां विधीनां नीतिशास्त्रनिर्दिष्टविधानानां विषयाणां योधपुरुषदूतहस्त्यश्वरथादीनाम् उपसेवनेन पालनेन अरातिः शत्रुः नियतं निश्चयमेव गोचरम् अधीनताम् उपैति । 'इतिविधिविषयोपसेवनेन नियतमरातिरुपैति गोचरं च' इत्यत्र 'इतिहृतविषयोपसेवमानो नियतमराति-रुपैति गोचरं स्वम्' इति मुद्रितपुस्तकपाठे तु इति अनया पूर्वोक्तराजनीत्या हृतः गृहीतः विषयः अधिकारः यस्य सः, अत एव उपसेवमानः भृत्यवत् प्रणामादिना सेवां कुर्वन् अरातिः शत्रुः नियतं निश्चयं स्वं गोचरं निजाधीनताम् उपैति गच्छति । 'इतिविधिविषयोपसेव-नेन' इत्यत्र 'इतिविधिविषयोपसेचनेन' इति, 'इति

(१) कानी. १६।६० ; उनिसा. सस्ये (शस्ये) उद्भूत (उद्युक्त).

(१) कानी. १६।६१ ; उनिसा. इति वि (इतिवि) वनान्नि (वनेन नि) चरम् (चरं च).

विधिविषयोपसेवनात्' इति च पाठः पुस्तकद्वये दृश्यते। उनिसा.

सामाद्युपायत्रये विफले दण्डप्रयोगः

**'सामादीनामुपायानां त्रयाणां विफले नये।
विनयेन्नयसंपन्नो दण्डं दण्ड्येषु दण्डवित्॥**

(१) चतुरङ्गबलं मुक्त्वा मन्त्रेण कोशेन च जयेदरीन्। तदसिद्धौ च दण्डं निक्षिपेदित्याह– सामादीनामित्यादि। विफले नये। प्रयोगः नयः। दण्डं दण्ड्येष्विति। तथाहि सामाद्यसाध्यत्वात् दण्डार्हास्त इति। जम.

(२) चतुर्थोपायकालमभिधातुमाह– सामेति। सामादीनाम् उक्तलक्षणानां त्रयाणामुपायानां नये प्रयोगे विफले निष्फले सति नयसंपन्नः नीतिमान् दण्डवित् दण्डविधानज्ञः, विजिगीषुरिति शेषः, दण्ड्येषु कृतापराधेषु नयं नीतिशास्त्रोक्तं दण्डं विनयेत् प्रयुञ्जीत। उनिसा.

षण्णां मौलादीनां बलानां गुणतारतम्यविवेकः

**'देवानभ्यर्च्य विप्रांश्च प्रशस्तग्रहतारकाः।
षड्विधं तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेत्॥**

(१) अत्र च चत्वारि प्रकरणानि– सैन्यबलाबलम्, सेनापतिप्रचारः, प्रयाणे व्यसनरक्षणम्, कूटयुद्धविकल्पाश्चेति। तत्र सैन्याधीनत्वाच्छत्रुबलवधस्य सैन्यबलाबलमुच्यते। बलाबलं चोपादानात् कालतश्च*। तत्र संनाहतो नवभिः श्लोकैराह– देवानित्यादि। इष्टान् साङ्ग्रामिकांश्च देवानभ्यर्च्य विप्रांश्च दत्ताशिषो जयार्थम्। ग्रहाः आदित्यादयः। तारकाः नक्षत्राणि। बलं व्यूह्य पूर्वे पूर्वे संनाह्य, तथाविधस्य बलीयस्त्वात्। जम.

(२) दण्ड्योऽत्र यातव्यलक्षणोऽरिः। तं प्रति दण्डप्रणयनं सङ्ग्रामाख्यमभिधातुं पूर्वविधेयं तावदाह– देवेति। यातव्यलक्षणोपेते दण्ड्ये शत्रौ सङ्ग्रामकर्तुकामो विजिगीषुः देवान् इष्टान् विप्रांश्च ब्राह्मणांश्च अभ्यर्च्य संपूज्य प्रशस्तग्रहतारकं प्रशस्ताः अनुकूलाः ग्रहाः तारकाश्च नक्षत्राणि च यस्मिन् कर्मणि तत् यथा स्यात्तथा षड्विधं वक्ष्यमाणलक्षणं षट्प्रकारं बलं सैन्यं व्यूह्य रचनाविशेषेण रचयित्वा द्विषतः यातव्यस्य अभिमुखं संमुखं व्रजेत् गच्छेत्। उनिसा.

**'मौलं भृतं श्रेणिसुहृद्द्विषदाटविकं बलम्।
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनं तथा॥**

(१) व्यसनं तथेति। मौला(दी)नां गरीयस्त्वात् तद्व्यसनमप्यमानितविमानितादि गरीयः। जम.

(२) बलस्वरूपं गुरुलाघवं चाभिधातुमाह– मौलमिति। मूले भवं मूलभूतपुरुषसंबन्धादागतं वा मौलम्। भरणेनोपगृहीतं भृतम्। श्रेणि संघधर्मेण व्यवस्थितं कुविन्दपट्टिकाकारसमूहः। सुहृद्बलं साहाय्यागतं मित्रबलम्। द्विषद्बलं दण्डोपादानं शत्रुबलम्। आटविकबलं स्वमण्डलाटवीभोक्तृबलम्। बलानाम् उद्दिष्टानां षड्विधसैन्यानां मध्ये पूर्वं पूर्वं प्रथमं प्रथमं गरीयः गुणैरधिकम्। बलानां मध्ये भृतात् मौलम्, श्रेणिबलात् भृतं गरीय इति सर्वत्र योज्यम्। व्यसनं तथा पूर्वस्मिन् जायमानं व्यसनं गुणप्रातिलोम्यादिकं व्यसनं च गरीयः। एतच्छ्लोकावधि सर्वत्र भृतपाठस्थाने मुद्रितपुस्तके भूतेति पाठो न सम्यक्। अयमेव श्लोकः तृतीयः, हस्तलिखितपुस्तके तथैव दृश्यते। मुद्रितपुस्तके यदस्य चतुर्थत्वं तन्न समीचीनम्। उनिसा.

**'सत्कारादनुरागाच्च सहसंकथनासनात्।
नित्यं तद्भावभावित्वान्मौलं भृतबलाद्गुरु॥**

---

* अत्र 'बलाबलं च संनाहतः उपादानकालतश्च' इति शुद्धिरग्रिमग्रन्थानुसारेण कल्प्या।

(१) कानी. १९।११; उनिसा. दण्डं (नयं).

(२) कानी. १९।१२; उनिसा. रकाः (रकं); नीम. ५३ उत्त.; नन्द. ७।१८५ उत्त.

(१) कानी. १९।१३; नीम. ५३ भृतं (भूतं) तथा (स्मृतम्); नन्द. ७।१८५ पू.

(२) कानी. १९।१४.

(१) सत्कारात् संमानात् । अनुरागात् विजिगीषौ । विविक्ते विजिगीषुणा सह कार्यसंकथनात् । सहासनाच्च सगन्धानाम् । नित्यग्रहणं प्रतिपदं योज्यम् । तद्भावभावित्वाच्च विजिगीषुणा सह एकार्थानर्थसंबन्धात् । एते धर्माः भृतबले न सन्ति । जम.

(२) एतदेव समर्थयन्नाह– सत्कारेति । सत्कारात् पितृपैतामहसंबन्धेन सत्कारार्हत्वात्, अनुरागात् परिचयात् अनुरक्तत्वात्, सहसंकथनासनात् सहालापसमीपोपवेशनात्, नित्यं तद्भावभावित्वात् सहवृद्धिक्षयत्वात् मौलं भृतबलात् गुरु गुणाधिकमित्यर्थः । 'सहसंकथनासनात्' इत्यत्र 'सह संकटनाशनात्' इति मुद्रितपुस्तकपाठो न संगतः । उनिसा.

**[१]संनिकृष्टतया नित्यं क्षिप्रोत्थानतयाऽपि च ।**
**वृत्तेश्च स्वाम्यधीनत्वाद् भृतं श्रेणिबलाद्गुरु ॥**

(१) संनिकृष्टतया विजिगीषोरासन्नचारितया भृतबलम् । श्रेणिबलं तु व्यवहितचारि । क्षिप्रोत्थानं स्वाम्यादेशमात्रापेक्षित्वात्, नेतरत्, परस्परापेक्षित्वात् । वृत्तिः स्वाम्यधीना, विजिगीषुणा तस्य भ्रियमाणत्वात् । नेतरस्य, आत्मधारित्वात् । जम.

(२) नित्यं संनिकृष्टतया नियतं समीपावस्थिततया क्षिप्तोत्थानतया पतितोत्थापकतया वृत्तेश्च जीविकायाश्च स्वाम्यधीनत्वात् स्वाम्यायत्तत्वात् भृतम् उक्तलक्षणं भृतबलं श्रेणिबलात् गुरु गुणाधिकम् । उनिसा.

**[२]तुल्यसंघर्षणामर्षात् सुखलाभात्तथैव च ।**
**बलाज्जानपदत्वाच्च मैत्राच्छ्रेणिबलं गुरु ॥**

(१) तुल्यसंघर्षणामर्षादिति । स्वामिनाऽस्य शत्रुषु तुल्यौ स्पर्धामर्षौ, तुल्यः सुखलाभः । बलात् मैत्रादिति संबन्धः । जानपदत्वात् विजिगीषुदेशे जातत्वात् । विपरीतं मित्रबलम् । जम.

(२) तुल्यसंहर्षणामर्षात् समसुखदुःखत्वात् सिद्धिलाभात् सिद्धौ विजये सत्यां लाभात् तुल्यलाभात् जानपदत्वाच्च एकजनपदवासित्वाच्च मैत्रात् बलात् श्रेणिबलं गुरु । 'सिद्धिलाभात्' इत्यत्र 'सिद्ध्यलाभात्' इत्ययं मुद्रितपुस्तकपाठो न समीचीनः । उनिसा.

**[१]असंख्यदेशकालत्वादेकार्थोपगमात्तथा ।**
**बलान्मेदनयोगाच्च शत्रोर्मित्रबलं गुरु ॥**

(१) असंख्यदेशकालत्वादिति । एतावन्तं देशं यातव्यम् एतावन्तं च कालं स्थातव्यमिति परिमितदेशकालं शत्रुबलम् । नैवं मित्रबलम्, प्रबन्धसत्त्वात् । एकार्थोपगमात् विजिगीषुणा सहैककार्यप्रवर्तनात् । विपरीतमन्यत् । बलाच्छत्रोरिति संबन्धः । 'बलान्मेदन' इति वा पाठः । मेदनं स्नेहः । जम.

(२) संख्यातदेशकालत्वात् निर्णीतदेशकालत्वात् तथा एकार्थोपगमात् एकार्थलाभप्रयत्नात् स्नेहनयोगाच्च अनुरागसंपर्काच्च शत्रोर्बलात् मित्रबलं गुरु । 'बलात् स्नेहनयोगाच्च' इत्यत्र 'बलादमत्तयोगाच्च' इत्ययं मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**[२]प्रकृत्याऽधार्मिका लुब्धा अनार्याः सत्यमेदिनः ।**
**तस्मादारण्यकतया तेभ्यः शत्रुबलं गुरु ॥**

(१) लुब्धाः आटविकाः । अनार्याः स्वयमार्याः न भवन्ति, आर्याधिष्ठिता अपि न भवन्ति । आरण्यकतयेति । यस्मादाटविकानामेते दोषास्तस्मात् तेभ्यः शत्रुबलं गुरु, तद्विपरीतत्वात् । जम.

(२) यतः आरण्यकतया अरण्यवासितया आटविकाः प्रकृत्या स्वभावेन अधार्मिकाः पापमतयः, लुब्धाः अर्थलोलुपाः, अनार्याः असदाचाराः, सत्यभेदिनः असत्यप्रतिज्ञाः, तस्मात् कारणात् तेभ्यः आटविकेभ्यः शत्रुबलं गुरु । उनिसा.

---

(१) कानी. १९१५ ; उनिसा. क्षिप्रो (क्षिप्तो) ऽपि च (तथा).

(२) कानी. १९१६ ; उनिसा. घर्ष (हर्ष) सुख (सिद्धि).

(१) कानी. १९१७ ; जम. 'बलान्मेदन' इत्यत्र किंचित्पाठान्तरमस्ति, तन्न निर्णीयते ; उनिसा. असंख्य (संख्यात) मेदन (स्नेहन).

(२) कानी. १९१८.

[1]उभयं तद्विलोपार्थं कालापेक्षं व्यवस्थितम् ।
विलोपेऽव्यसने चैव तत्रास्य विजयो ध्रुवः ॥

(१) उभयमिति अमित्रबलमाटविकबलं च 'तद्-परराष्ट्रं विलोपयिष्यामि' इति कालापेक्षया विलोपार्थं स्थितम् । तत्र विलोपे अव्यसने वा अस्य विजिगीषोः शत्रोर्जयो ध्रुवः । अन्यथा ह्यविलोपे व्यसने च ताभ्या-मरिभयं स्यात् परोपजापभयं च । जम.

(२) शत्रुबलमाटविकबलं च यातव्यविषयविलोपार्थं भवतीत्याह– उभयमिति । कालापेक्षाव्यवस्थितं कालस्य समयविशेषस्य अपेक्षया अनुरोधेन व्यवस्थितं कृतावस्थानम् उभयं शत्रुबलमाटविकबलं च तद्विलोपार्थम् तस्य यातव्यस्य विलोपार्थं प्रभुशक्तिक्षयार्थम्, भवतीति शेषः । विलोपे प्रभुशक्तिक्षये व्यसने च विपदि च, यातव्यस्येति शेषः, अस्य विजिगीषोः अरिजयः ध्रुवः निश्चितः । 'विलोपे व्यसने चैव' इत्यत्र 'विलोपव्यसने चैव' इति मुद्रितपुस्तकपाठः । उनिसा.

[2]उपजापकृतात्तु स्याद् भयमस्माद् विशेषतः ।
परस्य चाप्युपजपेदुपजापाद् ध्रुवो जयः ॥

(१) तदाह– उपजापकृतादिति । परस्य चाप्युप-जपेदिति तदुभयमपि । जम.

(२) सावधानो विजिगीषुरुपजापं विघटयेदित्याह– उपजापेति । आभ्यां द्विषदाटविकबलाभ्याम् उपजापकृतात् भेदकृतात् भयात् विशेषतः विशेषेण त्रस्येत् त्रासं प्राप्नुयात् । विजिगीषुरिति शेषः । विजिगीषुः स्वपक्षीयाभ्यां द्विषदाटविकबलाभ्यां कृतमुपजापं विघटयेदिति भावः । परस्य वा यातव्यस्यैव उपजपेत् द्विषद्बलम् आटविकबलं च भेदं प्रापयेत् । उपजापात् यातव्यपक्षीयद्विषदाटविक-बलभेदात् जयः ध्रुवः निश्चितः । 'भयादाभ्याम्' इत्यत्र 'भयादन्याम्' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

[1]स्फीतसारानुरक्तेन मौलेनोपचितः परः ।
तत्तुल्येनैव यातव्यः क्षयव्ययसहिष्णुना ॥

(१) उपादानकालतो बलाबलं त्रयोदशभिः श्लोकै-राह– स्फीतेत्यादि । यदा प्रभूतसारानुरक्तमौलबलः प्रति-योद्धा तदा तत्तुल्येनैव मौलबलेन यातव्यः । क्षयव्यय-सहिष्णुनेति । यदा व्यायामेन योद्धव्यम्, न मन्त्रेण, तदा क्षयसहिष्णुत्वात् मौलमेव कर्मण्यम् । जम.

(२) यद्बलं यस्मिन् समय उपादेयं तद्बलोपादानमभि-धातुमाह– स्फीतेति । स्फीतसारानुरक्तेन स्फीतसारेण अधि-कबलेन अनुरक्तेन अनुरागान्वितेन प्रागुक्तलक्षणेन बलेन उपचितः वृद्धिं गतः परः यातव्यः क्षयव्ययसहिष्णुना– क्षयः मुग्ध(? युग्य)पुरुषक्षयः, व्ययः हिरण्यधान्यापचयः, तान् सहते यः तादृशेन तत्तुल्येनैव परतुल्येनैव, विजिगी-षुणेति शेषः, यातव्यः सङ्ग्रामार्थं गन्तव्यः । यदा यातव्यो यादृशबलेनोपचितः तदा विजिगीषुणाऽपि तादृशबलेनो-पचितेन भवितव्यमिति भावः । * उनिसा.

[2]प्रकृष्टेऽध्वनि काले वा गच्छेन्मौलैः सुमानितैः ।
मौलास्तु दीर्घकालत्वात् क्षयव्ययसहिष्णवः ॥

(१) प्रकृष्टेऽध्वनि दूरे यातव्ये । काले दीर्घे प्रेषयि-तव्ये । गच्छेन्मौलैः, क्षयव्ययसहत्वात् तेषाम् । तत्सहत्वे कारणमाह– दीर्घकालत्वादिति । चिरंतनत्वात् ।

जम.

(२) अध्वनि यातव्यदेशगमनमार्गे प्रकृष्टे पर्वता-द्यनावृते सति, काले वा युद्धयात्रासमये च प्रकृष्टे युद्धो-पयोगिनि शरदभिन्ने इति यावत्, सति सुसमावृतैः यथा-योग्यसंमानेन स्वायत्तीकृतैः मौलैः प्रागुक्तलक्षणैर्बलैः सह गच्छेत् यातव्यदेशं यायात् । विजिगीषुरिति शेषः । यतः मौलाः दीर्घकालत्वात् दिग्विजयव्यापारस्य दीर्घकाल-

---

(१) कानी. १९।९ ; जम. 'चैव तत्रास्य विजयः' इत्यत्र 'वाऽस्य तत्र शत्रोर्जयः' इति पाठः स्यात् ; उनिसा. पेक्षं व्य (पेक्षाव्य) ऽव्य (व्य) स्य वि (स्यारि).

(२) कानी. १९।१० ; उनिसा. तु स्याद्भयमस्माद् (त्रस्येद्भयादाभ्यां) चाप्यु (वाऽप्यु).

* नीम. उनिसागतम् ।

(१) कानी. १९।११ ; उनिसा. मौले (बले); नीम. ५३ उनिसावत्.

(२) कानी. १९।१२; उनिसा. सुमानितैः (सुसमा-वृतैः [?]) ; नीम. ५३ सुमानितैः (समावृतः) काल-त्वात् (कालेऽपि).

साध्यत्वात् क्षयव्ययसहिष्णवः क्षयव्ययसहनशीलाः, भवन्तीति शेषः। * उनिसा.

**[1]एषु वस्तुषु मेधावी भृतादीनि विवर्जयेत्।**
**दीर्घाध्वकालखिन्नेषु तेषु भेदभयं भवेत्॥**

(१) भृतादीनि विवर्जयेत्, कस्मादित्याह– दीर्घाध्वकालखिन्नेष्विति। भेदभयं भवेत् परस्मात्। जम.

(२) एषु वस्तुषु कार्यादिषु मेधावी प्राज्ञः भृतादीनि भृतश्रेणिसुहृद्‌द्विषदाटविकानि पञ्च बलानि विवर्जयेत् समं न नयेत्। यतः तेषु भृतादिषु दीर्घकालाध्वखिन्नेषु दीर्घेण विग्रहकालेन अध्वना च श्रान्तेषु सत्सु भेदभयम् उपजापभीतिः भवेत् संभवेत्। उनिसा.

**[2]बहुत्वादेव सैन्यानां दीर्घकालाच्च खेदतः।**
**नित्यप्रवासयानाभ्यां भेदोऽवश्यं हि जायते॥**

(१) तदेव स्फुटयन्नाह– बहुत्वादित्यादि। अन्यसैन्यकालिकोपादानात् तेषां भृतादीनां बहुत्वात् भेदोऽवश्यंभावी। नित्यप्रवासः यातव्यं प्रति भूयो भूयो गमनम्। यानं शत्रुसंबन्धि। जम.

(२) एतदेव समर्थयन्नाह– बहुत्वादिति। परसैन्यानां यातव्यसैन्यानां बहुत्वात् प्राचुर्यात्, दीर्घकालाध्वखेदतः दीर्घेण विग्रहकालेन अध्वना च श्रमात्, नित्यप्रवासयानाभ्याम्– नित्यं प्रतिदिनं प्रवासः प्रातिकूल्येन वासः, यानं गमनम्, ताभ्यां भेदः चित्तविश्लेषः अवश्यं जायते। स्वबलानामिति शेषः। 'नित्यप्रवासायासाभ्याम्' इति मुद्रितपुस्तकपाठे आयासः अतिप्रयत्नः। अन्यत् समानम्। 'दीर्घकालाध्वखेदतः' इत्यत्र 'दीर्घकालाच्च खेदतः' इति मुद्रितपुस्तकपाठो न सम्यक्। उनिसा.

(३) भेदः स्वामिपरित्यागः। एवमन्येषामपि बलानां गुणदोषा ऊहनीयाः। नीम.

**[1]प्रभूतं मे भृतबलं मौलमल्पमसारवत्।**
**अरेरल्पं विरक्तं वा मौलं प्रायोऽल्पसारवत्॥**

(१) मौलमल्पं तच्च मूलरक्षणेऽपर्याप्तम्, असारवत् फल्गुप्रायम्, इति भृतबलमादध्यात्। अरेरल्पं विरक्तं वा। प्रभूतमपि प्रायोऽल्पसारवत् असारबहुलम्। तत्र किं मौलेन ?। जम.

(२) मौलबलोपादानकालमभिधातुमाह– प्रभूतमिति। मे मम भृतबलं वेतनोपगृहीतं बलं प्रभूतं बहुतरम्, विद्यते इति शेषः। मौलं पितृपितामहसखित्वेनाऽऽगतं बलम् अल्पं न्यूनम्, तदपि असारवत् साररहितम्। अरेः यातव्यस्य, मौलम् अल्पं विरक्तम् अननुरक्तं च, प्रायोऽल्पसारवत् प्रायः बाहुल्येन अल्पसारवत् स्तोकसारयुक्तम्। एवंमते काले विजिगीषुः मौलबलैः सह यातव्यसमीपं यायादिति वाक्यशेषः। उनिसा.

(३) क्वचिद्भृतमपि ग्राह्यमित्याह स एव– प्रभूतमिति। भृतबलेन मौलं जयेदिति विपरीतम्। नीम. ५३

**[2]प्रायो मन्त्रेण योद्धव्यमल्पायासेन चैव हि।**
**अल्पो देशस्तु कालो वाऽप्रभूतौ च क्षयव्ययौ॥**

(१) मन्त्रेण योगगूढोपजापादिना। अल्पायासेन व्यायामेन। अल्पः देशः यातव्यः कालो वाऽल्पः प्रोष्य वसितव्यः। अप्रभूतौ स्वल्पौ। पूर्वस्मिन् पादेऽकारः प्रश्लिष्टो द्रष्टव्यः। जम.

(२) कूटयुद्धस्य अल्पायाससाध्यत्वमाह– प्राय इति। प्रायः बाहुल्येन मन्त्रेण कूटयुद्धेन योद्धव्यम्। यतः अल्पायासेन अल्पपरिश्रमेण जयः भवतीति शेषः। अल्पः देशः बलाधिकरणस्थानम् अल्पः कालः युद्धोपयोगिसमयः अक्षयोदये बलाविनाशपूर्वकविजयलाभे प्रबभूव

---

* नीम. उनिसागतम्।

(१) कानी. १९।१३; उनिसा. दीर्घाध्वकाल (दीर्घकालाध्व); नीम. ५३ भृता (भूता).

(२) कानी. १९।१४; उनिसा. देव सै (त्परसै) च्च खे (ध्वखे); नीम. ५३ बहुत्वादेव (बहुत्वाद्भूत) देव सै (द्भूतसै) च्च खे (ध्वखे) तृतीयचरणे (नित्यं प्रवासायासाभ्यां) हि (प्र).

(१) कानी. १९।१५; नीम. ५३ मे भृत (स्वं भूत) उत्तरार्धे (अरेर्वीक्ष्याऽऽत्मनस्तद्धि विपरीतं जयेदरीन्॥).

(२) कानी. १९।१६; उनिसा. चतुर्थचरणे (प्रबभूवाक्षयोदये).

समर्थो बभूव । कूटयुद्धे तु अधिकसैन्यस्य अधिककालस्य वा नापेक्षणीयत्वमिति भावः । 'अल्पो देशस्तु कालो वा प्रबभूवाक्षयोदये ' इत्यत्र 'अन्यो देशस्तु कालो वा प्रभूतौ चाक्षयव्ययौ ' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**[1]शान्तोपजापविश्वस्तमस्तसैन्यं परस्य वा ।**
**अल्पः प्रसारो हन्तव्य इत्युपेयाद्भृतैर्बलैः ॥**

(१) शान्तोपजापविश्वस्तमिति शान्तोपजापं विश्वस्तं वाऽस्तसैन्यम् । तत्र किं मौलेन ? परस्य वाऽल्प इति संबन्धः । प्रसारः चेष्टा । जम.

(२) भृतबलोपादानकालमभिधातुमाह– श्रान्तेति । (यस्मात्कारणात्) श्रान्तोपजापविश्वस्तम्– श्रान्तं युद्धक्लेशादिभिरुपक्लिष्टम्, उपजापविश्वस्तम् उपजापेन विजिगीषुकृतभेदेन विश्वस्तम् आत्मसात्कृतत्वात् विश्वासयोग्यं परस्य सैन्यं यातव्यस्य बलम्, (तस्मात्) भृतैर्बलैः वेतनोपगृहीतैर्बलैः, सह यायादिति शेषः । अल्पप्रसारः अल्पः स्तोकः प्रसारः सर्वतः सैन्याभिव्याप्तिः यस्य स तथाभूतः यातव्यः हन्तव्यः अनायासेन विनाशयितव्यः इत्युपेक्ष्य इत्युपेक्षां कृत्वा भृतैर्बलैर्यायादिति संबन्धः । यत्र यातव्यसैन्यं श्रान्तोपजापविश्वस्तं तत्र, यत्र च यातव्यः अल्पप्रसारः तत्रापि भृतैर्बलैर्यायादिति भावः । 'श्रान्तोपजापविश्वस्तम्' इत्यत्र 'श्रान्तोपजापाद्विश्वस्तम्' इति, 'इत्युपेक्ष्य' इत्यत्र 'इत्युपेक्षा' च मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**[2]स्फीतं श्रेणिबलं शक्यमाधातुं यानवस्तुनोः ।**
**ह्रस्वौ प्रवासव्यायामाविति श्रेण्या समुत्पतेत् ॥**

(१) स्फीतं प्रभूतं श्रेणिबलं यानवस्तुनोः यात्रायां च स्थानीये च बहुत्वाच्छक्यमाधातुम् । प्रवासः ह्रस्वः कार्यलाघवादासन्नदेशत्वाद्वा । व्यायामोऽपि योद्धुमल्पः, प्रायो मन्त्रेण योद्धव्यमिति । जम.

(२) श्रेणिबलोपादानकालमभिधातुमाह– स्फीतमिति । ह्रस्वप्रवासव्यायामात् ह्रस्वात् अल्पात् प्रवासात् यातव्यदेशवासात् व्यायामात् युद्धक्लेशात् स्फीतं समृद्धं श्रेणिबलं संघधर्मेण व्यवस्थितं सैन्यं यानवर्त्मनि प्रयाणपथि आधातुं संस्थापयितुं शक्यं योग्यम् इति इति विविच्य सैन्यं श्रेणिबलं समुत्पतेत् समुपादाय गच्छेदित्यर्थः । 'श्रेणि' इत्यत्र 'त्रीणि' इति, 'यानवर्त्मनि' इत्यत्र 'पानवर्त्मनि' इति च मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**[1]प्रभूतं हि सुहृत्सैन्यं शक्यमाधातुमात्मनि ।**
**अल्पप्रवासो मन्त्राच्च भूयो व्यायामयोधनम् ॥**

(१) शक्यमाधातुमात्मनि यानवस्तुनीत्येव । अल्पः प्रवासः पूर्ववत् । मन्त्राच्च भूयो व्यायामयोधनं मन्त्रयुद्धात् भूयो व्यायामयुद्धम् । जम.

(२) सुहृद्बलोपादानकालमभिधातुमाह– सुप्रभूतमिति । सुप्रभूतं सुसमृद्धं सुहृत्सैन्यं मित्रबलम् आत्मनि आत्मकार्यसंपादने आधातुं स्थापयितुं निर्वैरं कर्तुमिति यावत्, शक्यम् । मन्त्रेण कूटयुद्धेन अल्पयुद्धम् अल्पप्रयाससाध्यं युद्धं चेत् तदा अल्पमेव स्तोकमेव सुहृत्सैन्यम् आत्मनि आधातुं शक्यम् । इति एवंभूते काले सुहृद्बलैः मित्रबलैः सह, यायादिति वाक्यशेषः । यत्र युद्धस्य बहुप्रयाससाध्यत्वेऽपि सुहृत्सैन्यस्य सुसमृद्धत्वं तत्र, यत्र सुहृत्सैन्यस्य अल्पत्वेऽपि मन्त्रेण युद्धस्याल्पत्वं तत्र च सुहृद्बलोपादानं कर्तव्यमिति भावः । उनिसा.

**[2]मित्रसाधारणे कार्ये मित्रायत्ते फलोदये ।**
**अनुग्राह्ये च पीड्ये च मित्रेणैव सह व्रजेत् ॥**

---

(१) कानी. १९।१७ ; उनिसा. शान्तो (श्रान्तो) 'स्तमस्त' इत्यत्र 'स्तं यस्य' इति पाठः स्यात्, अल्पः (अल्प) पेयाद् (पेक्ष्य).

(२) कानी. १९।१८ ; उनिसा. वस्तुनोः (वर्त्मनि) उत्तरार्धे (ह्रस्वप्रयासव्यायामादिति सैन्यं समुत्पतेत् ॥) ; नीम. ५३ वस्तुनोः (वर्त्मनि) ह्रस्वौ (नित्यं) माविति (ममिति).

(१) कानी. १९।१९ ; उनिसा. प्रभूतं हि (सुप्रभूतं) उत्तरार्धे (अल्पमेवाल्पयुद्धं च मन्त्रेणेति सुहृद्बलैः ॥).

(२) कानी. १९।२० ; नीम. ५३.

(१) मित्रसाधारण इति । यथा शत्रोरुच्छेदनं कर्शनं वा विजिगीषोः कार्यं तथा मित्रस्यापि । मित्रायत्ते मित्रसाध्ये कर्शनादौ । अनुग्राह्ये यातव्यसिद्धौ तदर्धांशदानेन । पीड्ये समुपचितत्वात् । तेन सह व्रजेत् । जम.

(२) मित्रसाधारणे मित्रस्य आत्मनश्च समानफलोदये कार्ये कर्तव्ये, तथा मित्रायत्ते मित्राधीने फलोदये फलप्राप्तौ, तथा अनुग्राह्ये च अनुग्रहयोग्ये मित्रान्तरे च पीड्ये यातव्ये मित्रेणैव सह व्रजेत् गच्छेत् । विजिगीषुरितिः शेषः । 'पीड्ये च' इत्यत्र 'पाण्डित्ये' इति मुद्रितपुस्तकपाठो न साधुः । उनिसा.

(३) मित्रबलस्योपयोगमाह– मित्रेत्यादि । नीम. ५३

**[1]प्रभूतेनारिसैन्येन योधयेन्महतो रिपून् ।**
**श्वसूकरवधापेक्षी नयं चण्डालवन्नयेत् ॥**

(१) असुहृत्सैन्येन प्रभूतेनेति । यदि प्रभूतं शत्रुबलं तदाऽनेन योधयेत् । श्वसूकरवधापेक्षीति । श्वसूकरयोरिव अरिबलयोः कलहे चण्डालस्येव मे योधकस्यान्यतरविपत्तौ सिद्धिरिति नयम् अन्योन्ययोधनाख्यं प्रयुञ्जीत । जम.

(२) द्विषद्बलोपादानकालमभिधातुमाह–प्रभूतेनेति । श्वशूकरवधापेक्षी श्वभिः कुक्कुरैः शूकरवधमपेक्षते यः स इव विजिगीषुः प्रभूतेन समृद्धेन अरिसैन्येन द्विषद्बलेन सह महतः बलवतः रिपून् शत्रून् प्रेषयेत् युद्धे नियोजयेत् । वा अथवा नयं वचनं नीतियुक्तं वाक्यं महतो रिपून् नयेत् प्रापयेत् । यथा चाण्डालाः श्वभिः शूकरान् विनाशयन्ति तथा महान्तो रिपवः अरिसैन्येनैव जेतव्या इति भावः । उनिसा.

(३) अरिसैन्यस्योपयोगमाह– प्रभूतेनेति । नीम. ५३

**[2]अत्यूर्जितं कोपभयादभ्याशे तु रिपोर्बलम् ।**
**वासयेत् कर्शयेच्चैव दुर्गकण्टकमर्दनैः ॥**

(१) कोपभयादिति । अभ्युच्छ्रितं हि शत्रुबलं बाह्यं कोपं जनयति । तस्मात् तद्भयात् नित्यमासन्नं वासयेत् । तत्राऽऽभ्यन्तरकोपशङ्का यदि स्यात्– दुर्गकण्टकमर्दनैरिति । तत्र पथि दुर्गाणि यात्रोपघातकांश्च कण्टकान् मृद्नन् क्षीयते । जम.

(२) कोपभयात् अपराधेन प्रभोः क्रोधभयात् अभ्यासे निकटे अभ्युत्थितम् उपस्थितं रिपोः यातव्यस्य बलं सैन्यं वासयेत् स्वराज्ये निवासयेत् । दुर्गकण्टकशोधनैः यातव्यदुर्गकण्टकमर्दनैः एनं रिपुं कर्षयेच्च आकर्षयेच्च । 'अभ्युत्थितम्' इत्यत्र 'अविचित्तम्' इति मुद्रितपुस्तकपाठः । तादृशपाठे तु उपस्थितक्रियाव्याहारेण अविचित्तम् अविरुद्धचित्तं सत् उपस्थितमित्यर्थः । 'अभ्यासे तु' इत्यत्र 'अभ्यासेन' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**[1]नित्यमाटविकं सैन्यं दुर्गकण्टकशोधने ।**
**परदेशप्रवेशे च पुरस्कुर्वीत पण्डितः ॥**

(१) दुर्गे मर्दनीये । परदेशप्रवेशे चेति । यदि मार्गदेशिकं परभूमियोग्यं च स्यात् । जम.

(२) आटविकबलोपादानकालमभिधातुमाह– नित्यमिति । पण्डितः नीतिज्ञः दुर्गकण्टकशोधने यातव्यदुर्गकण्टकमर्दने परदेशप्रवेशे च यातव्यजनदेशप्रवेशे च नित्यं सदा आटविकं सैन्यं प्रागुक्तलक्षणं बलं पुरः अग्रतः कुर्वीत । मुद्रितपुस्तके 'दुर्गकण्टकशोधने' इत्यत्र 'दुर्गकण्टकशोधनैः' इति पाठः, 'पुरः' इत्यत्र 'पुरा' इति पाठश्च न समीचीनः । उनिसा.

**[2]एतन्मौलादिषड्भेदं चतुरङ्गं बलं विदुः ।**
**षडङ्गं मन्त्रकोशाभ्यां पदात्यश्वरथद्विपैः ॥**

---

(१) कानी. १९।२१ ; उनिसा. योध (प्रेष) सूक (शूक) चण्डालवन्न (वा वचनं न) ; नीम. ५३ पू.

(२) कानी. १९।२२ ; उनिसा. त्यूर्जि (भ्युत्थि) कर्श (कर्ष) च्चैव (च्चैनं) मर्द (शोध) ; नीम. ५३ पूर्वार्धे (अत्युच्छ्रितं कोपनयादभ्यासेन रिपोर्बलम् ।) उत्तरार्धम् उनिसावत् .

(१) कानी. १९।२३ ; नीम. ५३.

(२) कानी. १९।२४ ; उनिसा. भेदं (वर्गं) रङ्गं व (रङ्गव).

(१) प्रतिबलतो बलाबलमभिधित्सुराह– एतदित्यादि। चतुरङ्गबलं विदुः पदात्यश्वरथद्विपैः। षडङ्गं केचिन्मन्त्रकोशाभ्याम्, तयोरपि प्रथमं युध्यमानत्वात्। जम.

(२) उपसंहरन्नाह– एतन्मौलादीति। एतत् प्रागुक्तं मौलादिषड्वर्गं मौलभृतश्रेणिसुहृद्द्विषदाटविकरूपं षड्विधं बलं पदात्यश्वरथद्विपैः चतुरङ्गबलं मन्त्रकोशाभ्यां षडङ्गं च विदुः। उनिसा.

**[१]इति षड्विधमेतद्धि यथायोगं बलं बली।**
**सुनिश्छिद्रं प्रतिव्यूह्य यायात् परबलं प्रति॥**

(१) यथायोगमिति। 'एवंबलः परः, तस्यैतत् प्रतिबलम्' इति यथायोगं प्रतिव्यूह्य। सुनिश्छिद्रं बलं व्यसनाभावात्। जम.

(२) बली महाबलसंपन्नो विजिगीषुः इति एतत् षड्विधं बलं यथायोगं यस्य बलस्य येन बलेन सह योगः युज्यते तेन बलेन सह तद्बलं संयोज्येत्यर्थः, सुनिश्छिद्रं रन्ध्ररहितं निर्दोषमिति यावत्, यथा स्यात् तथा प्रतिव्यूह्य पररचितव्यूहस्य प्रत्यनीकभूतव्यूहं विरचय्य प्रतिबलं परबलं प्रति यायात् गच्छेत्। 'प्रतिबलम्' इत्यत्र 'ज्यायोबलम्' इति मुद्रितपुस्तकपाठः। 'यथायोगं बलम्' इत्यत्र 'यथायागबलम्' इति मुद्रितपुस्तकपाठो न सम्यक्। उनिसा.

**[२]योगमस्य विजानीयात् सर्वं यन्त्रादिना नृपः।**
**कृताकृतं प्रचारं च साधु सेनापतेस्तथा॥**

(१) बलस्य प्रतिव्यूहनयोगः सर्वो यन्त्रादिना ज्ञेय इत्याह–योगमस्येति। तथा चोक्तम्– 'हस्तियन्त्रशकटगर्भकुन्तप्रासहाटकवेणुशल्यवत् हस्तिबलस्य प्रतिबलम्। तदेव पाषाणलगुडावरणशल्याङ्कुशकचग्रहणीप्रायं रथबलस्य। तदेवाश्वानां प्रतिबलम्। वर्मिणो हस्तिनोऽश्वा वा वर्मिणः कवचिनो रथा आवरणिनः पत्तयश्चतुरङ्गस्य प्रतिबलम्॥' (कौ. ९।२) इति। कृताकृतं किमस्मिन् साङ्ग्रामिकमुपकरणं संपन्नं न वेति सम्यग् विजानीयात्। प्रचारं च सेनापतेः येन विज्ञातेन सैनापत्ये नियोजयेत्। जम.

(२) नृपः विजिगीषुः अस्य प्रागुक्तस्य षड्विधस्य योगं स्वकीयैः परकीयैर्वा सह संबन्धं सर्वम् अशेषम् मन्त्रादिना गूढपुरुषप्रणिधानादिना विजानीयात्। तथा कृताकृतप्रचारं सेनाभिः कृतमकृतं वा प्रचारं कः कुत्र प्रचरतीति गत्यागत्यादिकं विजानीयात्। तथा सेनापतेरपि– सेना सकलबलसमुदायः, तस्याः पतिः, तस्य कृताकृतप्रचारादिकं विजानीयादिति सर्वत्र संबन्धः। उनिसा.

## *शुक्रनीतिः

युद्धार्हो राजा

**[१]यो वै सुपुष्टसंभारस्तथा षड्गुणमन्त्रवित्।**
**बह्वस्त्रसंयुतो राजा योद्धुमिच्छेत् स एव हि।**
**अन्यथा दुःखमाप्नोति स्वराज्याद्भ्रश्यतेऽपि च॥**

यः राजा सुपुष्टसंभारः परिपुष्टसामग्रीकः। षड्गुणमन्त्रवित्। षट् गुणाः संध्यादयः। 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः' इत्यमरः। मन्त्राश्च, तान् वेत्तीति तथोक्तः। तथा बहुभिः अस्त्रैः संयुतः। स एव योद्धुमिच्छेत्। अन्यथा युद्धकरणे दुःखमाप्नोति स्वराज्यात् भ्रश्यते च विच्युतः भवति च। शुनीटी.

अभियाने देशकालादिविवेकः

**[२]कालं देशं शत्रुबलं दृष्ट्वा स्वीयबलं ततः।**
**उपायान् षड्गुणं मन्त्रं भवेच्च युद्धकामुकः॥**

कालं समयम्, देशं स्थानम्, शत्रुबलम्, स्वीयबलम्, उपायान् सामादीन्। 'सामदानभेददण्डमित्यु-

---

(१) कानी. १९।२५ ; उनिसा. पर (प्रति).

(२) कानी. १९।२६ ; उनिसा. यन्त्रा (मन्त्रा) कृतं प्र (कृतप्र).

* एतत्प्रकरणविषयार्थम् 'प्रकृतयः– बलम्' इतिप्रकरणगता शुक्रनीतिरनुसंधेया।

(१) शुनी. ४।७।२१९.

(२) शुनी. ४।७।२२३, २२९–२३३.

पायचतुष्टयम्' इत्यमरः। षड्गुणं संध्यादिकम्, मन्त्रं च दृष्ट्वा समीक्ष्य युद्धकामुकः सङ्ग्रामार्थी भवेत्। शुनीटी.

**यस्मिन् देशे यथाकालं सैन्यव्यायामभूमयः।**
**परस्य विपरीताश्च स्मृतो देशः स उत्तमः॥**

यस्मिन् देशे यथाकालं समये समये इत्यर्थः, सैन्यानां व्यायामभूमयः रणव्यापारशिक्षाभ्यासस्थानानि, सन्तीति शेषः, तथा परस्य शत्रोः विपरीताः, न सन्तीति भावः, स देशः उत्तमः स्मृतः। शुनीटी.

**आत्मनश्च परेषां च तुल्यव्यायामभूमयः।**
**यत्र मध्यम उद्दिष्टो देशः शास्त्रविचिन्तकैः॥**

यत्र यस्मिन् देशे आत्मनः परेषां शत्रूणां च तुल्याः समानाः व्यायामभूमयः, सन्तीति शेषः, स देशः शास्त्रविचिन्तकैः मध्यमः उद्दिष्टः कथितः। शुनीटी.

**अरातिसैन्यव्यायामसुपर्याप्तमहीतलः।**
**आत्मनो विपरीतश्च स वै देशोऽधमः स्मृतः॥**

यः देशः अरातिसैन्यानां शत्रुबलानां व्यायामेषु सुपर्याप्तं महीतलं यस्मिन् तथाभूतः, आत्मनः विपरीतश्च, न तथेत्यर्थः, सः अधमः स्मृतः। शुनीटी.

विजयप्रदं स्वसैन्यस्वरूपम्

**स्वसैन्यात्तु तृतीयांशहीनं शत्रुबलं यदि।**
**अशिक्षितमसारं वा साद्यस्कं स्वजयाय वै॥**

यदि शत्रुबलं स्वसैन्यात् तृतीयांशहीनम् अशिक्षितम् असारं वा, साद्यस्कम् आधुनिकम्, तदा वै निश्चितं स्वस्य जयाय। भवतीति शेषः। शुनीटी.

**पुत्रवत् पालितं यत्तु दानमानविवर्धितम्।**
**युद्धसंभारसंपन्नं स्वसैन्यं विजयप्रदम्॥**

यत्तु स्वसैन्यं पुत्रवत् पालितम्, दानेन मानेन च विवर्धितं विशेषतः वृद्धिं प्रापितम्, तथा युद्धसंभारैः युद्धसामग्रीभिः संपन्नं युक्तम्, तत् विजयप्रदं जयावहम्। शुनीटी.

## योगयात्रा

यानात्पूर्वं दुर्गरक्षणादीनि कर्तव्यानि

[1]रिपोः कृत्वाऽवज्ञां जितमिति विदित्वा मदबला-
न यत्नो हातव्यः शिखिविषसमोऽल्पोऽपि हि रिपुः।
प्रमत्तोऽद्रेः कुञ्जादयुतबलभागैरपि नरै-
र्हतो बद्धः स्तम्भे कषति मदलेखां द्विपपतिः॥

वप्रप्राकारयन्त्रप्रहरणपरिखातोयधान्येन्धनाढ्यं
दुर्गं कृत्वा प्रगुप्तं द्विपतुरगभिषक्शिल्पिविप्राभ्युपेतम्।
लुब्धत्रस्ताभिमानिप्रकुपितकुभृताज्ञातशीलैर्विहीनं
कृत्वा शूराप्तसंस्थं परविषयमियाच्छुद्धपार्ष्णिर्नरेन्द्रः॥

[2]शत्रोर्वधाय सचिवं शुभदैवयुक्त-
माज्ञापयेन्नृपतिरात्मनि दैवहीने।
जह्यान्न चार्थमपि दैवपरोऽपि भूत्वा
दृष्टे द्विपे द्विपपदानुसृतिः किमर्थम्॥

## युक्तिकल्पतरुः

युद्धसंभारवहनोपयुक्तानि वाहनानि

[3]चतुष्पदं च द्विपदं विपदं बहुपादकम्।
चतुर्विधमिहोद्दिष्टं यानं भूमिभुजो मतम्॥
गजाश्वादि चतुष्पादं दोलादि द्विपदं भवेत्।
नौकाद्यं विपदं ज्ञेयं रथाद्यं बहुपादकम्॥
व्योमयानं विमानं वा पूर्वमासीन्महीभुजाम्।
यथानुगुणसंपन्नानेतानाहुः सुखप्रदान्॥

(१) योया. ११।१०–११.
(२) योया. ११।२० ; नीम. ६० पू.
(३) युक. ७।४८–५०.

# यात्रा- युद्धसामान्यविचारः

## महाभारतम्

राज्ञः धृतिर्दाक्ष्यं देशकालौ पराक्रमः इति पञ्चविधो विधिः

**वैश्रवण उवाच–**

[1]युधिष्ठिर धृतिर्दाक्ष्यं देशकालौ पराक्रमः ।
लोकतन्त्रविधानानामेष पञ्चविधो विधिः ॥

धृतिः संकटेष्वविक्लवता, दाक्ष्यं यत्नशीलता, पराक्रमः शत्रूणामभिभवनहेतुः क्रिया, देशकालयोरानुकूल्यं चेति विधानानां कार्याणां विधिः अभ्युदयहेतुः। अदेशे अकाले च कृतं धृत्यादिकमभिभवहेतुरित्यर्थः। नीटी.

[2]धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्मणि भारत ।
पराक्रमविधानज्ञा नराः कृतयुगेऽभवन् ॥

कृतयुगे हि ज्ञानप्राधान्यात् ज्ञानस्य च सर्वस्मिन् देशे काले चाभ्युदयहेतुत्वात् न तत्र देशकालप्रतीक्षाऽऽसीदित्यर्थः। नीटी.

[3]धृतिमान्देशकालज्ञः सर्वधर्मविधानवित् ।
क्षत्रियः क्षत्रियश्रेष्ठ पृथिवीमनुशास्ति वै ॥

क्षत्रियाणां तु सर्वदैवैतत् पञ्चकमावश्यकमित्याह– धृतिमानिति। नीटी.

[4]य एवं वर्तते पार्थ पुरुषः सर्वकर्मसु ।
स लोके लभते वीर यशः प्रेत्य च सद्गतिम् ॥
देशकालान्तरप्रेप्सुः कृत्वा शक्रः पराक्रमम् ।
संप्राप्तस्त्रिदिवे राज्यं वृत्रहा वसुभिः सह ॥

वृत्रहेति पराक्रमं निर्दिशति। नीटी.

[1]यस्तु केवलसंरम्भात् प्रपातं न निरीक्षते ।
पापात्मा पापबुद्धिर्यः पापमेवानुवर्तते ।
कर्मणामविभागज्ञः प्रेत्य चेह च नश्यति ॥

संरम्भात् कोपात्। नीटी.

[2]अकालज्ञः सुदुर्मेधाः कार्याणामविशेषवित् ।
वृथाचारसमारम्भः प्रेत्य चेह च नश्यति ॥

[3]साहसे वर्तमानानां निकृतीनां दुरात्मनाम् ।
सर्वसामर्थ्यलिप्सूनां पापो भवति निश्चयः ॥

निकृतीनां वञ्चनापराणाम्। नीटी.

बलीयसा राज्ञा पीडितस्य राज्ञः दुर्गप्रवेशादीनि कृत्यानि

[4]यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा ।
तदाऽभिसंश्रयेद्दुर्गं बुद्धिमान् पृथिवीपतिः ।
त्रिधा त्वाक्रन्द्य मित्राणि विधानमुपकल्पयेत् ॥

[5]सामभेदान् विरोधार्थं विधानमुपकल्पयेत् ॥

[6]घोषान् न्यसेत मार्गेषु ग्रामानुत्थापयेदपि ।
प्रवेशयेच्च तान्सर्वाञ्शाखानगरकेष्वपि ॥

घोषान् वनस्थान् मार्गेषु राजपथेषु न्यसेत्। शाखानगराणि महानगरस्योपनगराणि। नीटी.

---

(१) भा. ३।१५९।१ ; भामु. ३।१६२।१ वैश्रवण ( धनद ) कालौ पराक्रमः ( कालपराक्रमाः ).

(२) भा. ३।१५९।२ ; भामु. ३।१६२।२.

(३) भा. ३।१५९।३ ; भामु. ३।१६२।३ चतुर्थचरणे ( प्रशास्ति पृथिवीं चिरम् ).

(४) भा. ३।१५९।४–५ ; भामु. ३।१६२।४–५.

(१) भा. ३।१५९।६ प्रथमार्धं नास्ति ; भामु. ३।१६२।६–७ च नश्यति ( विनश्यति ).

(२) भा. ३।१५९।७ ; भामु. ३।१६२।७–८ च नश्यति ( विनश्यति ).

(३) भा. ३।१५९।८ ; भामु. ३।१६२।८–९.

(४) भा. १२।६९।३२ द्वितीयार्धं नास्ति ; भामु. १२।६९।३३–३४ त्रिधा त्वाक्रन्द्य ( विधानाक्रम्य ) ; राप्र. १९९ तृतीयार्धं नास्ति ; राकौ. ११४ राप्रवत्.

(५) भामु. १२।६९।३४.

(६) भा. १२।६९।३३–३४ ; भामु. १२।६९।३५–३६.

**ये गुप्ताश्चैव दुर्गाश्च देशास्तेषु प्रवेशयेत् ।**
**धनिनो बलमुख्यांश्च सान्त्वयित्वा पुनः पुनः ॥**

धनिकादीन् दुर्गेषु प्रवेशयेदित्यर्थः । नीटी.

[1]**सस्याभिहारं कुर्याच्च स्वयमेव नराधिपः ।**
**असंभवे प्रवेशस्य दाहयेदग्निना भृशम् ॥**

अभिहारं समीपमानयनम् । दहेत् परेषां तन्मा भूदिति । नीटी.

[2]**क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान् ।**
**विनाशयेद्वा सर्वस्वं बलेनाथ स्वकेन वै ॥**

उपजपेत् भेदयित्वा तद्द्वारा दाहयेत् । नीटी.

[3]**नदीषु मार्गेषु सदा संक्रमानवसादयेत् ।**
**जलं निस्रावयेत्सर्वमनिस्राव्यं च दूषयेत् ॥**

संक्रमान् अवतरणार्थान्सेतून् । जलं तटाकादिस्थं विस्रावयेत्, तदयोग्यं वापीकूपादिस्थं दूषयेत् विषादिना नाशयेत् । नीटी.

[4]**तदात्वेनाऽऽयतीभिश्च विवदन्भूम्यनन्तरम् ।**
**प्रतीघातः परस्याऽऽजौ मित्रकालेऽप्युपस्थिते ॥**

तदात्वेन वर्तमानकाले आयतीभिः उत्तरकालेषु च । अपवर्गे तृतीया । सर्वदा मित्रकार्ये उपस्थितेऽपि तद्विहाये-त्यर्थात् । आजौ परस्य शत्रोः प्रतीघातं हन्तारं भूम्यनन्तरं

(१) भा. १२।६९।३५ ; भामु. १२।६९।३७ सस्या ( तस्या ) दाहयेद ( दहेद्वावा ) ; राप्र. १९९–२०० प्रवेश ( ऽभिहार ) ; राकौ. ११४.

(२) भा. १२।६९।३६ ; भामु. १२।६९।३८ सर्वस्वं ( तत्सर्वं ) वै ( वा ) ; राप्र. २०० जपेन्नरान् ( चयो भवेत् ) द्वा सर्वस्वं ( द्वि तत्सर्वं ) ; राकौ. ११४ जपेन्नरान् ( चयो भवेत् ) सर्वस्वं ( तत्सर्वं ).

(३) भा. १२।६९।३७ ; भामु. १२।६९।३९ प्रथमचरणे ( नदीमार्गेषु च तथा ) निस्रा ( विस्रा ) ; राप्र. २०० मार्गेषु ( दुर्गेषु ) निस्राव ( विस्राव ) ; राकौ. ११४ मार्गेषु ( दुर्गेषु ).

(४) भा. १२।६९।३८ ; भामु. १२।६९।४० विवदन्भू ( निवसेद्भू ) घातः ( घातं ) काले ( कार्ये ).

निकटदेशवासिनं तच्छत्रुम् आश्रित्य निवसेत् । अयमर्थः— स्वराष्ट्रे यन्मुख्यं स्थानं तदाक्रम्य वसन् शत्रोः शत्रुभिः सर्वदा स्नेहं कृत्वा तद्बलेन शत्रून् स्वराष्ट्रात् दूरीकुर्या-दिति । नीटी.

[1]**दुर्गाणां चाभितो राजा मूलच्छेदं प्रकारयेत् ।**
**सर्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षान्विवर्जयेत् ॥**

(१) चैत्यवृक्षं देवतायतनवृक्षं चितासंबन्धिवृक्षमिति वा । राप्र. २००

(२) दुर्गाणां क्षुद्रदुर्गाणां परेषामाश्रयो मा भूदिति मूलच्छेदं कुर्यात् । नीटी.

[2]**प्रवृद्धानां च वृक्षाणां शाखाः प्रच्छेदयेत्तथा ।**
**चैत्यानां सर्वथा वर्ज्यमपि पत्रस्य पातनम् ॥**

[3]**प्रकण्ठीः कारयेत्सम्यगाकाशजननीस्तथा ।**
**आपूरयेच्च परिखाः स्थाणुनक्रझषाकुलाः ॥**

'प्रगण्डीः कारयेत्सम्यक् षाड्गुण्यं सत्रिवर्गकम् । यो वेत्ति पुरुषव्याघ्र स भुङ्क्ते पृथिवीमिमाम् ॥' इति प्राचां पाठः । तद्व्याख्यानं च तदीयमेव— 'संचारो यत्र लोकानां दूरादेवावबुध्यते । प्रगण्डी सा च विज्ञेया बहिः प्राकारसंज्ञिता । प्रणिधिस्तत्र यत्नेन कर्तव्यो भूति-मिच्छता । स एवाऽऽकाशरक्षीति ह्युच्यते शास्त्र-कोविदैः ॥' इति । तांश्चतुर्दिक्षु कारयेदित्यर्थः । षाड्गुण्यं सन्धिविग्रहादि । त्रिवर्गः स्थानवृद्धिक्षयरूपो वा अरि-मित्रोदासीनरूपो वा मन्त्रोत्साहप्रभुशक्तिरूपो वा भूमि-

(१) भा. १२।६९।३९ ; भामु. १२।६९।४१ ; राप्र. २०० प्रका ( तु का ) क्षान्वि ( क्षं वि ) ; राकौ. ११५ क्षान्वि ( क्षं वि ).

(२) भा. १२।६९।४० ; भामु. १२।६९।४२ शाखाः ( शाखां ) वर्ज्य ( त्याज्य ) ; राप्र. २०० पू. ; राकौ. ११५ त्तथा ( दिति ).

(३) भा. १२।६९।४१ ; भामु. १२।६९।४३ कण्ठीः ( गण्डीः ) स्तथा ( स्तदा ) रिखाः ( रिखां ) कुलाः ( कुलाम् ).

मित्रहिरण्यादिरूपो वा धर्मार्थकामरूपो वा । उत्तरार्धार्थः स्पष्टः । प्रगण्डीः दुर्गप्राकारभित्तौ शूराणामुपवेशनस्थानानि । आकाशजननीः तत्रैव एकपक्षायां भित्तौ तत्रत्यानां रक्षणभूतायां बाह्यार्थदर्शनार्थानि क्षुद्रच्छिद्राणि, यद्द्वारा आग्नेयास्त्रगुलिकाः प्रक्षिप्यन्ते । स्थाणवः सशूलाः, येषु पतन्विदीर्यते नक्रैर्वा भक्ष्यते । नीटी.

[1]कङ्कद्वारकाणि स्युरुच्छ्वासार्थे पुरस्य ह ।
तेषां च द्वारवद्गुप्तिः कार्या सर्वात्मना भवेत् ॥

संकटद्वारकाणि सूक्ष्मद्वाराणि । तेषां च द्वारवत् गुप्तिः कार्या । 'तेषां चाऽऽचारवद्गुप्तिः' इति पाठे आचारवद्भिः शिष्टैः गुप्तिः कार्या । नीटी.

[2]द्वारेषु च गुरूण्येव यन्त्राणि स्थापयेत्सदा ।
आरोपयेच्छतघ्नीश्च स्वाधीनानि च कारयेत् ॥

[3]काष्ठानि चाभिहार्याणि तथा कूपांश्च खानयेत् ।
संशोधयेत्तथा कूपान्कृतान्पूर्वं पयोर्थिभिः ॥

[4]तृणच्छन्नानि वेश्मानि पङ्केनापि प्रलेपयेत् ।
निर्हरेच्च तृणं मासे चैत्रे वह्निभयात्पुरः ॥

[5]नक्तमेव च भक्तानि पाचयेत नराधिपः ।
न दिवाऽग्निर्ज्वलेद्गेहे वर्जयित्वाऽग्निहोत्रिकम् ॥

[6]कर्मारारिष्टशालासु ज्वलेदग्निः समाहितः ।
गृहाणि च प्रविश्याथ विधेयः स्याद्धुताशनः ॥

कर्मारः लोहकारादिः, तच्छाला । अरिष्टं सूतिकागृहम्, तद्रूपासु शालासु । अन्तर्विधेयः आच्छादितः कर्तव्यः । नीटी.

[1]महादण्डश्च तस्य स्याद्यस्याग्निर्वै दिवा भवेत् ।
प्रघोषयेदथैवं च रक्षणार्थं पुरस्य वै ॥

महादण्डः वधः । नीटी.

[2]भिक्षुकांश्चाक्रिकांश्चैव क्षीबोन्मत्तान्कुशीलवान् ।
बाह्यान्कुर्यान्नरश्रेष्ठ दोषाय स्युर्हि तेऽन्यथा ॥

चाक्रिकान् शाकटिकान् । कुशीलवान् फाललेखान् । कीनाशानिति यावत् । नीटी.

[3]चत्वरेषु च तीर्थेषु सभास्वावसथेषु च ।
यथार्हवर्णं प्रणिधिं कुर्यात्सर्वत्र पार्थिवः ॥

तीर्थेषु मन्त्र्यादिषु अष्टादशसु प्राग्व्याख्यातेषु । नीटी.

[4]विशालान्राजमार्गांश्च कारयेत नराधिपः ।
प्रपाश्च विपणीश्चैव यथोद्देशं समादिशेत् ॥

[5]भाण्डागारायुधागारान्धान्यागारांश्च सर्वशः ।
अश्वागारान्गजागारान्बलाधिकरणानि च ॥

[6]परिखाश्चैव कौरव्य प्रतोलीः संकटानि च ।
न जातु कश्चित्पश्येत्तु गुह्यमेतद्युधिष्ठिर ॥

प्रतोली रथ्या, निष्कुटानि गृहारामाः । नीटी.

---

(१) भा. १२।६९।४२ ; भामु. १२।६९।४४ कङ्क (संकट) सार्थे (सार्थं) ह (च).

(२) भा. १२।६९।४३ ; भामु. १२।६९।४५.

(३) भा. १२।६९।४४ ; भामु. १२।६९।४६ कृतान्पूर्वं (कृतपूर्वान्).

(४) भा. १२।६९।४५ ; भामु. १२।६९।४७ नापि (नाथ) मासे (मासि) त्पुरः (त्तथा).

(५) भा. १२।६९।४६ ; भामु. १२।६९।४८ ऽग्निर्ज्वलेद्गेहे (ज्वालयेदग्निं).

(६) भा. १२।६९।४७ ; भामु. १२।६९।४९ समाहि (सुरक्षि) विश्याथ (वेश्यान्तर्).

(१) भा. १२।६९।४८ ; भामु. १२।६९।५० वै (च).

(२) भा. १२।६९।४९ ; भामु. १२।६९।५१ क्षीबो (क्लीबो).

(३) भा. १२।६९।५० ; भामु. १२।६९।५२ रेषु च (रेष्वथ) थार्हं (थार्थं) र्वत्र (र्वस्य).

(४) भा. १२।६९।५१ ; भामु. १२।६९।५३ येत (यीत) णीश्चैव (णां चैव) दिशेत् (विशेत्).

(५) भा. १२।६९।५२ ; भामु. १२।६९।५४ न्धान्या (न्योधा).

(६) भा. १२।६९।५३ ; भामु. १२।६९।५५ संक (निष्कु) जातु कश्चित्पश्येत्तु (जात्वन्यः प्रपश्येत).

[1]अथ संनिचयं कुर्याद्राजा परबलार्दितः ।
तैलं मधु घृतं सस्यमौषधानि च सर्वशः ॥

[2]अङ्गारकुशमुञ्जानां पलाशशरपर्णिनाम् ।
यवसेन्धनदिग्धानां कारयेत च संचयान् ॥

वर्णिनां लेखकानाम् । 'वर्णी स्याल्लेखके चित्रकारेऽपि ब्रह्मचारिणि' इति मेदिनी । यवसं घासः । दिग्धानां विषाक्तबाणानाम् । 'दिग्धो विषाक्तबाणे स्यात्' इति मेदिनी । नीटी.

[3]आयुधानां च सर्वेषां शक्त्यृष्टिप्रासवर्मणाम् ।
संचयानेवमादीनां कारयेत नराधिपः ॥

[4]औषधानि च सर्वाणि मूलानि च फलानि च ।
चतुर्विधांश्च वैद्यान्वै संगृह्णीयाद्विशेषतः ॥

चतुर्विधान् विषशल्यरोगकृत्याहरान् । नीटी.

[5]नटाश्च नर्तकाश्चैव मल्ला मायाविनस्तथा ।
शोभयेयुः पुरवरं मोदयेयुश्च सर्वशः ॥

[6]यतः शङ्का भवेच्चापि भृत्यतो वाऽपि मन्त्रितः ।
पौरेभ्यो नृपतेर्वाऽपि स्वाधीनान्कारयेत तान् ॥

[7]कृते कर्मणि राजेन्द्र पूजयेद्धनसंचयैः ।
मानेन च यथार्हेण सान्त्वेन विविधेन च ॥

(१) भा. १२।६९।५४ ; भामु. १२।६९।५६ अथ सं ( अर्धसं ) मधु घृतं सस्य ( वसा मधु घृत ).

(२) भा. १२।६९।५५ ; भामु. १२।६९।५७ पर्णि ( वर्णि ) येत ( यीत ).

(३) भा. १२।६९।५६ ; भामु. १२।६९।५८ येत ( यीत ).

(४) भा. १२।६९।५७ ; भामु. १२।६९।५९.

(५) भा. १२।६९।५८ ; भामु. १२।६९।६० पूर्वार्धे ( नटांश्च नर्तकांश्चैव मल्लान्मायाविनस्तथा । ).

(६) भा. १२।६९।५९ ; भामु. १२।६९।६१ वाऽपि ( ऽथापि ) येत ( यीत ).

(७) भा. १२।६९।६० ; भामु. १२।६९।६२ माने ( दाने ).

[1]निर्वेदयित्वा तु परं हत्वा वा कुरुनन्दन ।
गतानृण्यो भवेद्राजा यथा शास्त्रेषु दर्शितम् ॥

अस्थाने कोपेन परस्य निर्वेदः ताडनं वा कृतं चेत् तं दानमानादिना पुनस्तत्समीकर्तव्यमित्याह— निर्वेदयित्वेति । नीटी.

सेनानयननिवेशपद्धतिः, देशकालविवेकः, चतुरंगसेनायाः अङ्गविशेषदेशविवेकः, पलायनदोषाः, चारप्रचारः

युधिष्ठिर उवाच—

[2]यथा जयार्थिनः सेनां नयन्ति भरतर्षभ ।
ईषद्धर्मं प्रपीड्यापि तन्मे ब्रूहि पितामह ॥

नयन्ति भीतानपि राजभयप्रदर्शनेन पुरस्कुर्वन्ति । नीटी.

भीष्म उवाच—

[3]सत्येन हि स्थिता धर्मा उपपत्त्या तथाऽपरे ।
साध्वाचारतया केचित्तथैवौपयिका अपि ।
उपायधर्मान् वक्ष्यामि सिद्धार्थानर्थधर्मयोः ॥

[4]निर्मर्यादा दस्यवस्तु भवन्ति परिपन्थिनः ।
तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम् ।
कार्याणां संप्रसिद्ध्यर्थं तानुपायान्निबोध मे ॥

सत्यं क्षत्रधर्मः । उपपत्तिः मरणनिश्चयः । साध्वाचारः शिष्टाचारः । औपयिकः उक्तभयप्रदर्शनजा प्रवृत्तिः । एतैः चतुर्भिः हेतुभिः धर्मः स्थितः स्थिरः भवति । सिद्धार्थान् सद्यःफलान् । तेषां च ये अर्थधर्मयोर्निर्मर्यादास्ते परिपन्थिनः नाशकाः भवन्ति । तेषां दस्यूनाम् । नैगमम् वेदोक्तमुपायम् । नीटी.

(१) भा. १२।६९।६१ ; भामु. १२।६९।६३ गतानृण्यो ( ततोऽनृणो ) स्त्रेषु द ( स्त्रे निद ).

(२) भा. १२।१०१।१ ; भामु. १२।१००।१.

(३) भा. १२।१०१।२ ; भामु. १२।१००।२–३ स्थिता धर्मा ( स्थितो धर्म ) का अपि ( कादपि ).

(४) भा. १२।१०१।३ ; भामु. १२।१००।३–४ संप्र ( सर्व ).

[1]उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत ।
जानन् वक्रां न सेवेत प्रतिबाधेत चाऽऽगताम् ॥

वक्रां वक्रयैव नाशयेत् । नीटी.

अमित्रा एव राजानं भेदेनोपचरन्त्युत ।
तां राजा निकृतिं जानन् यथाऽमित्रान् प्रबाधते ॥

अमित्रानिव तां निकृतिं प्रबाधते बाधेत । नीटी.

[2]गजानां पार्श्वचर्माणि गोवृषाजगराणि च ।
शल्यकङ्कटलोहानि तनुत्राणि मतानि च ॥

गजानां वर्माणि बाणघातत्राणानि । गवादीनां शल्यादीनि । नीटी.

[3]शितपीतानि शस्त्राणि संनाहाः पीतलोहिताः ।
नानारञ्जनरक्ताः स्युः पताकाः केतवश्च ते ॥

[4]ऋष्टयस्तोमराः खड्गा निशिताश्च परश्वधाः ।
फलकान्यथ चर्माणि प्रतिकल्प्यान्यनेकशः ।
अभिनीतानि शस्त्राणि योधाश्च कृतनिश्रमाः ॥

[5]चैत्र्यां वा मार्गशीर्ष्यां वा सेनायोगः प्रशस्यते ।
पक्वसस्या हि पृथिवी भवत्यम्बुमती तथा ॥

( १ ) भा. १२।१०१।४–५ ; भामु. १२।१००। ५–६.

( २ ) भा. १२।१०१।६ ; भामु. १२।१००।७ पार्श्वच ( पार्थ व ) कङ्कट ( कण्टक ) त्राणि मतानि ( त्रचमराणि ).

( ३ ) भा. १२।१०१।७ ; भामु. १२।१००।८ शित ( सित ) ते ( ह ).

( ४ ) भा. १२।१०१।८ भामु. १२।१००।९–१० निश्रमाः ( निश्चयाः ) ; पमा. ३९८ ऋष्ट ( यष्ट ) चर्मा ( वर्मा ) तृतीयार्धं नास्ति.

( ५ ) भा. १२।१०१।९ ; भामु. १२।१००।१०–११ तथा ( तदा ) ; पमा. ३९९ चैत्र्यां ( चैत्रे ) शीर्ष्यां ( शीर्षे ).



[1]नैवातिशीतो नात्युष्णः कालो भवति भारत ।
तस्मात्तदा योजयेत परेषां व्यसनेषु वा ।
एतेषु योगाः सेनायाः प्रशस्ताः परबाधने ॥

[2]जलवांस्तृणवान् मार्गः समो गम्यः प्रशस्यते ।
चारैर्हि विहिताभ्यासः कुशलैर्वनगोचरैः ॥

[3]नव्यारण्यैर्न शक्येत गन्तुं मृगगणैरिव ।
तस्मात् सर्वासु सेनासु योजयन्ति जयार्थिनः ॥

[4]अग्रतः पुरुषानीकं शक्तं चापि कुलोद्भवम् ॥

[5]आवासस्तोयवान् दुर्गः पर्याकाशः प्रशस्यते ।
परेषामुपसर्पाणां प्रतिषेधस्तथा भवेत् ॥

[6]आकाशं तु वनाभ्याशे मन्यन्ते गुणवत्तरम् ।
बहुभिर्गुणजातैस्तु ये युद्धकुशला जनाः ॥

[7]उपन्यासो भवेत्तत्र बलानां नातिदूरतः ॥

[8]उपन्यासोऽपसर्पाणां पदातीनां च गूहनम् ।
अथ शत्रुप्रतीघातमापदर्थं परायणम् ॥

उपन्यासं न्यासस्य धननिक्षेपस्य समीपे अवतरणं पदातीनां गूहनं च न्यासस्यैव कार्यम् । 'उपास्याः सवितरणम्' इति पाठे सदानं यथा स्यात्तथा जना उपास्याः

( १ ) भा. १२।१०१।१० ; भामु. १२।१००।११–१२ एतेषु ( एते हि ) ; पमा. ३९९–४०० येत ( यीत ) एतेषु ( एते हि ).

( २ ) भा. १२।१०१।११ ; भामु. १२।१००।१३ रैर्हि विहि ( रैः सुविदि ) ; पमा. ४०० भामुवत्.

( ३ ) भा. १२।१०१।१२ ; भामु. १२।१००।१४ नव्यारण्यैर्न ( न ह्यरण्येन ) सर्वासु सेनासु ( सेनासु तानेव ).

( ४ ) भामु. १२।१००।१५.

( ५ ) भा. १२।१०१।१३ ; भामु. १२।१००। १५–१६.

( ६ ) भा. १२।१०१।१४ ; भामु. १२।१००।१६–१७ शं तु ( शास्तु ) भ्याशे ( भ्यासं ) तैस्तु ( तैश्च ).

( ७ ) भामु. १२।१००।१७.

( ८ ) भा. १२।१०१।१५ ; भामु. १२।१००।१८ सोऽपसर्पाणां ( सावतरणं ).

इति पूर्वान्वयि। पदातीनां गूहनं परवञ्चनार्थम्। अथ निलीय आगतशत्रुप्रतिघातं कुर्यात्। नीटी.

[1]सप्तर्षीन् पृष्ठतः कृत्वा युध्येरन्नचला इव।
अनेन विधिना राजन् जिगीषेतापि दुर्जयान्॥

[2]यतो वायुर्यतः सूर्यो यतः शुक्रस्ततो जयः।
पूर्वं पूर्वं ज्याय एषां संनिपाते युधिष्ठिर॥

[3]अकर्दमामनुदकाममर्यादामलोष्टकाम्।
अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः॥

अमर्यादां सेतुप्राकारादिहीनाम्। नीटी.

[4]समा निरुदकाकाशा रथभूमिः प्रशस्यते।
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम्॥

[5]बहुदुर्गा महावृक्षा वेत्रवेणुभिरास्तृता।
पदातीनां क्षमा भूमिः पर्वतोपवनानि च॥

[6]पदातिबहुला सेना दृढा भवति भारत।
रथाश्वबहुला सेना सुदिनेषु प्रशस्यते॥

सुदिनेषु वृष्टिवर्जितदिनेषु। नीटी.

[7]पदातिनागबहुला प्रावृट्काले प्रशस्यते।
गुणानेतान् प्रसंख्याय देशकालौ प्रयोजयेत्॥

(१) भा. १२।१०१।१६; भामु. १२।१००।१९ रन्न (युर) राजन् (शत्रून्); पमा. ४०० रन्न (युर) पू.

(२) भा. १२।१०१।१७; भामु. १२।१००।२०; पमा. ४०० पू.

(३) भा. १२।१०१।१८; भामु. १२।१००।२१; पमा. ४००.

(४) भा. १२।१०१।१९; भामु. १२।१००।२२ प्रथमचरणे (अपङ्का गर्तरहिता); पमा. ४०० काशा (चैव).

(५) भा. १२।१०१।२०; भामु. १२।१००।२३ पूर्वार्धे (बहुदुर्गा महाकक्षा वेणुवेत्रसमाकुला।); पमा. ४०० द्वितीयचरणे (वेणुवेत्रतिरस्कृता) पर्वतोप (सर्वतो न).

(६) भा. १२।१०१।२१; भामु. १२।१००।२४; पमा. ४०० रथा (तथा).

(७) भा. १२।१०१।२२; भामु. १२।१००।२५; पमा. ४०० देशकालौ प्र (युद्धं शत्रुषु).

प्रसंख्याय सम्यग्विचार्य। नीटी.

[1]एवं संचिन्त्य यो याति तिथिनक्षत्रपूजितः।
विजयं लभते नित्यं सेनां सम्यक् प्रयोजयन्॥

तिथौ नक्षत्रे च पूजितः आशीर्भिर्योजितः। नीटी.

प्रसुप्तांस्तृषितान् श्रान्तान् प्रकीर्णान्नाभिघातयेत्।
मोक्षे प्रयाणे चलने पानभोजनकालयोः॥

[2]अतिक्षिप्तान् व्यतिक्षिप्तान् विहतान् प्रतनूकृतान्।
सुविस्रम्भान् कृतारम्भानुपन्यासप्रतापितान्।
बहिश्चरानुपन्यासान् कृत्वा वेश्मानुसारिणः॥

उपन्यासात् सुरुङ्गादिगुप्तोपायात्। बहिस्तृणाद्यर्थं चरतः बहिश्चरान् अल्पान् उपन्यासान् तृणाद्याहर्तॄन्। नीटी.

[3]पारंपर्यागते द्वारे ये केचिदनुवर्तिनः।
परिचर्यावरोद्धारो ये च केचन वल्गिनः॥

राजद्वारेऽमात्यद्वारे वा ये वर्गिणः समुदायाधिपतयः तान्नाभिघातयेदिति प्रपूर्वेण संबन्धः। नीटी.

[4]अनीकं ये प्रभिन्दन्ति भिन्नं ये स्थगयन्ति च।
समानाशनपानास्ते कार्या द्विगुणवेतनाः॥

अनीकं परकीयम्। भिन्नं स्वीयम्। नीटी.

[5]दशाधिपतयः कार्याः शताधिपतयस्तथा।
तेषां सहस्राधिपतिं कुर्याच्छूरमतन्द्रितम्॥

(१) भा. १२।१०१।२३–२४; भामु. १२।१००।२६–२७.

(२) भा. १२।१०१।२५; भामु. १२।१००।२७–२८ विहृ (निह) सुविस्र (अविश्र) न्यास (न्यासात्) कृत्वा (कृत).

(३) भा. १२।१०१।२६; भामु. १२।१००।२९ रोद्धारो (तो द्वारे) वल्गिनः (वर्गिणः).

(४) भा. १२।१०१।२७; भामु. १२।१००।३० प्रभि (विभि) ये स्थग (संस्थाप).

(५) भा. १२।१०१।२८; भामु. १२।१००।३१ तेषां (ततः).

[1]यथामुख्यं संनिपात्य वक्तव्याः स्म शपामहे।
यथा जयार्थं सङ्ग्रामे न जह्याम परस्परम्॥

संनिपात्य एकीकृत्य। नीटी.

[2]इहैव ते निवर्तन्तां ये नः केचन भीरवः।
न घातयेयुः प्रदरं कुर्वाणास्तुमुले सति॥

[3]न संनिपाते प्रदरं वधं वा कुर्युरीदृशाः॥

प्रदरं भङ्गम्। 'प्रदरः शरभङ्गयोः' इति विश्वः। प्रदरं पलायनमित्येके। वधं वा स्वीयानाम्। नीटी.

[4]आत्मानं च स्वपक्षं च पलायन् हन्ति संयुगे।
द्रव्यनाशो वधोऽकीर्तिरयशश्च पलायने॥

[5]अमनोज्ञासुखा वाचः पुरुषस्य पलायतः।
प्रतिस्पन्दौष्ठदन्तस्य न्यस्तसर्वायुधस्य च॥

[6]हित्वा पलायमानस्य सहायान् प्राणसंशये।
अमित्रैरनुबद्धस्य द्विषतामस्तु नस्तथा॥

नः अस्मत्संबन्धिनां द्विषतां पुरुषस्य द्रव्यनाशादिकमस्त्विति पूर्वेण सह द्वयोः संबन्धः। नीटी.

[7]मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः।
राशिवर्धनमात्रास्ते नैव ते प्रेत्य नो इह॥

राशिः योधसंख्या शरीरं वा, तस्य वर्धनाः। वृथाजन्मान इत्यर्थः। नीटी.

[1]अमित्रा हृष्टमनसः प्रत्युद्यान्ति पलायिनम्।
जयिनं सुहृदस्तात वन्दनैर्मङ्गलेन च॥

पलायिनं जयिनः प्रत्युद्यान्ति यत् तदसह्यतरमिति अपकृष्यते। नीटी.

[2]यस्य स्म व्यसने राजन्ननुमोदन्ति शात्रवः।
तदसह्यतरं दुःखमहं मन्ये वधादपि॥

[3]श्रियं जानीत धर्मस्य मूलं सर्वसुखस्य च।
सा भीरूणां परान् याति शूरस्तामधिगच्छति॥

परा ग्लानिः मृत्युः प्रहारो वा। नीटी.

[4]ते वयं स्वर्गमिच्छन्तः सङ्ग्रामे त्यक्तजीविताः।
जयन्तो वध्यमाना वा प्राप्तुमर्हाम सद्गतिम्॥

[5]एवं संशप्तशपथाः समभित्यक्तजीविताः।
अमित्रवाहिनीं वीराः संप्रगाहन्त्यभीरवः॥

[6]अग्रतः पुरुषानीकमसिचर्मवतां भवेत्।
पृष्ठतः शकटानीकं कलत्रं मध्यतस्तथा॥

चर्मवतां पुरुषाणामनीकम्। विभक्तिलोप आर्षः। नीटी.

[7]परेषां प्रतिघातार्थं पदातीनां च गूहनम्।
अपि ह्यस्मिन् परे गृद्धा भवेयुर्ये पुरोगमाः॥

ये पुरोगमा भवेयुस्ते पदातीनां बृंहणं कुर्युः। नीटी.

---

(१) भा. १२।१०१।२९ ; भामु. १२।१००।३२ मुख्यं (मुख्यान्) स्म शपा (संशया) यथा जयार्थं (विजयार्थं हि) जह्याम (तक्षामः).

(२) भा. १२।१०१।३० ; भामु. १२।१००।३३ नः (च) न (ये) प्रद (प्रव) ले सति (लं प्रति).

(३) भामु. १२।१००।३४.

(४) भा. १२।१०१।३१ ; भामु. १२।१००।३४–३५ पला (पाल) द्रव्य (अर्थ).

(५) भा. १२।१०१।३२ ; भामु. १२।१००।३५–३६ यतः (यने) स्पन्दौ (ध्वस्तो).

(६) भा. १२।१०१।३३ ; भामु. १२।१००।३६ रनुब (रवरु) नस्तथा (नः सदा) उत्त.

(७) भा. १२।१०१।३४ ; भामु. १२।१००।३७.

(१) भा. १२।१०१।३५ ; भामु. १२।१००।३८ नं सुहृद (नस्तु नरा) वन्द (चन्द) ङ्गले (ण्डने).

(२) भा. १२।१०१।३६ ; भामु. १२।१००।३९ पूर्वार्धे (यस्य स्म सङ्ग्रामगता यशो वै घ्नन्ति शात्रवः।).

(३) भा. १२।१०१।३७ ; भामु. १२।१००।४० श्रियं (जयं) सा (या) परान् याति (परा ग्लानिः).

(४) भा. १२।१०१।३८ ; भामु. १२।१००।४१ प्राप्तुमर्हाम (प्राप्नुयाम च).

(५) भा. १२।१०१।३९ ; भामु. १२।१००।४२ संप्र (प्रति).

(६) भा. १२।१०१।४० ; भामु. १२।१००।४३.

(७) भा. १२।१०१।४१ ; भामु. १२।१००।४४ गूहनम् (बृंहणम्) ह्यस्मिन् परे गृद्धा (तस्मिन् पुरे वृद्धा).

[1]ये पुरस्तादभिमताः सत्त्ववन्तो मनस्विनः ।
ते पूर्वमभिवर्तेरंस्तानन्वगितरे जनाः ॥
[2]अपि चोद्धर्षणं कार्यं भीरूणामपि यत्नतः ।
स्कन्धदर्शनमात्रं तु तिष्ठेयुर्वा समीपतः ॥

'स्कन्धः स्यान्नृपतावंसे संपरायसमूहयोः' इति मेदिनी । समूहमात्रार्थं वा तिष्ठेयुः । नीटी.

[3]संहतान् योधयेदल्पान् कामं विस्तारयेद् बहून् ।
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ॥

संहतान् अन्योन्यं श्लिष्टान् स्वान् परैः सह योधयेत् सेनापतिः । तदेवाऽऽह– सूचीति । नीटी.

[4]संप्रयुद्धे प्रहृष्टे वा सत्यं वा यदि वाऽनृतम् ।
प्रगृह्य बाहून् क्रोशेत भग्ना भग्नाः परा इति ॥
[5]आगतं नो मित्रबलं प्रहरध्वमभीतवत् ।
शब्दवन्तोऽनुधावेयुः कुर्वन्तो भैरवं रवम् ॥
[6]क्ष्वेडाः किलकिलाः शङ्खाः क्रकचा गोविषाणिकान् ।
भेरीमृदङ्गपणवान्नादयेयुश्च कुञ्जरान् ॥
[7]संभृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर ।
साम्नैवाऽऽवर्तने पूर्वं प्रयतेथास्ततो युधि ॥

(१) भा. १२।१०१।४२ ; भामु. १२।१००।४५ स्तानन्वि (श्वेतानेवे).

(२) भा. १२।१०१।४३ ; भामु. १२।१००।४६ मात्रं तु (मात्रात्तु).

(३) भा. १२।१०१।४४ ; भामु. १२।१००।४७.

(४) भा. १२।१०१।४५ ; भामु. १२।१००।४८ युद्धे प्रहृ (युक्ते निकृ) परा (परे).

(५) भा. १२।१०१।४६ ; भामु. १२।१००।४९ नो (मे) उत्तरार्धे (सत्त्ववन्तोऽभिधावेयुः कुर्वन्तो भैरवान् रवान् ॥).

(६) भा. १२।१०१।४७ ; भामु. १२।१००।५० किलाः शङ्खाः (किलाशब्दाः) णिकान् (णिकाः) युश्च कुञ्ज (युः पुरश्च).

(७) भा. १२।१०३।१६ ; भामु. १२।१०२।१६ वाऽऽवर्तने (व वर्तयेः).

[1]जघन्य एष विजयो यद्युद्धं नाम भारत ।
यादृच्छिको युधि जयो दैवो वेति विचारणम् ॥
[2]अपामिव महावेगस्त्रस्ता मृगगणा इव ।
दुर्निवार्यतमा चैव प्रभग्ना महती चमूः ॥
[3]भग्ना इत्येव भज्यन्ते विद्वांसोऽपि नकारणम् ।
उदारसारा महती रुरुसंघोपमा चमूः ॥
[4]परस्परज्ञाः संहृष्टास्त्यक्तप्राणाः सुनिश्चिताः ।
अपि पञ्चाशतिः शूरा मृद्नन्ति परवाहिनीम् ॥

पञ्चाशतं पञ्चाशत् । नीटी.

[5]अथ वा पञ्च षट् सप्त सहिताः कृतनिश्चयाः ।
कुलीनाः पूजिताः सम्यग्विजयन्तीह शात्रवान् ॥
[6]संनिपातो न गन्तव्यः शक्ये सति कथंचन ।
सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ॥

संनिपातः युद्धम् । नीटी.

[7]संसर्पणाद्धि सेनाया भयं भीरून् प्रबाधते ।
वज्रादिव प्रज्वलितादियं क्व नु पतिष्यति ॥
[8]अभिप्रयातां समितिं ज्ञात्वा ये प्रतियान्त्यथ ।
तेषां स्पन्दन्ति गात्राणि योधानां विषयस्य च ॥

(१) भा. १२।१०३।१७ ; भामु. १२।१०२।१७.

(२) भा. १२।१०३।१८ ; भामु. १२।१०२।१८ मृगगणा इव (इव महामृगाः).

(३) भा. १२।१०३।१९ ; भामु. १२।१०२।१९.

(४) भा. १२।१०३।२० ; भामु. १२।१०२।२० शतिः (शतं) मृद्न (निघ्न).

(५) भा. १२।१०३।२१ ; भामु. १२।१०२।२१ अथ (अपि) सहि (संह).

(६) भा. १२।१०३।२२ ; भामु. १२।१०२।२२ गन्त (मन्त).

(७) भा. १२।१०३।२३ ; भामु. १२।१०२।२३ संसर्पणाद्धि (संदर्शनैव).

(८) भा. १२।१०३।२४ ; भामु. १२।१०२।२४ स्पन्द (स्वन्द) विष (विज).

समितिं सङ्ग्रामम्। स्यन्दन्ति स्विद्यन्ति। विजयस्य विजिगीषमाणस्य च गात्राणि स्विद्यन्ति। नीटी.

[1]**विषयो व्यथते राजन् सर्वः सस्थाणुजङ्गमः।**
**शस्त्रप्रतापतप्तानां मज्जा सीदति देहिनाम्॥**

विषयः देशः। नीटी.

[2]**तेषां सान्त्वं क्रूरमिश्रं प्रणेतव्यं पुनः पुनः।**
**संपीड्यमाना हि परे योगमायान्ति सर्वशः॥**

योगं संधिम्। नीटी.

[3]**अन्तराणां च भेदार्थं चारानभ्यवचारयेत्।**
**यश्च तस्मात् परो राजा तेन संधिः प्रशस्यते॥**

आन्तराणां शत्रोः सखीनाम्। तस्मात् शत्रोः परः श्रेष्ठः। तेन संधिं च कुर्यात्। भयेन संधिना शत्रुतेजनेन च युगपत्प्रयुक्तेन त्रयेण परं जयेदिति समुदायार्थः। नीटी.

[4]**न हि तस्यान्यथा पीडा शक्या कर्तुं तथाविधा।**
**यथा सार्धममित्रेण सर्वतः प्रतिबाधनम्॥**

[5]**क्षमा वै साधुमाया हि न हि साध्वक्षमा सदा।**
**क्षमायाश्चाक्षमायाश्च विद्धि पार्थ प्रयोजनम्॥**

नन्वेवं परं क्षमापयेदेव, किं कपटेनेत्याशङ्क्याऽऽह– क्षमेति। नीटी.

[6]**विजित्य क्षममाणस्य यशो राज्ञोऽभिवर्धते।**
**महापराधा ह्यप्यस्मिन् विश्वसन्ति हि शत्रवः॥**

अस्मिन् क्षमावति। नीटी.

[1]**मन्यते कर्शयित्वा तु क्षमा साध्विति शम्बरः।**
**असंतप्तं तु यद्दारु प्रत्येति प्रकृतिं पुनः॥**

असंताप्य ऋजूकृतं वंशादि पुनर्वक्रीभवति, अतः शत्रुं संताप्य क्षमां कुर्यादिति शम्बरस्य दैत्यस्य मतम्। नीटी.

[2]**नैतत् प्रशंसन्त्याचार्या न च साधु निदर्शनम्।**
**अक्लेशेनाविनाशेन नियन्तव्याः स्वपुत्रवत्॥**

स्वमतमाह– नैतदिति। नीटी.

[3]**द्वेष्यो भवति भूतानामुग्रो राजा युधिष्ठिर।**
**मृदुमप्यवमन्यन्ते तस्मादुभयभाग् भवेत्॥**

[4]**प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत।**
**प्रहृत्य च कृपायेत शोचन्निव रुदन्निव॥**

[5]**न मे प्रियं यत् स हतः संप्राहैवं पुरो वचः।**
**न चकर्थ च मे वाक्यमुच्यमानः पुनः पुनः॥**

[6]**अहो जीवितमाकाङ्क्षे नेदृशो वधमर्हति।**
**सुदुर्लभाः सुपुरुषाः सङ्ग्रामेष्वपलायिनः॥**

[7]**कृतं ममाप्रियं तेन येनायं निहतो मृधे।**
**इति वाचा वदन् हन्तॄन् पूजयेत रहोगतः॥**

---

(१) भा. १२।१०३।२५; भासु. १२।१०२।२५ शस्त्र (अस्त्र).

(२) भा. १२।१०३।२६; भासु. १२।१०२।२६ परे (परैः) सर्वशः (सर्वतः).

(३) भा. १२।१०३।२७; भासु. १२।१०२।२७ अन्त (आन्त) चारा (चरा).

(४) भा. १२।१०३।२८; भासु. १२।१०२।२८.

(५) भा. १२।१०३।२९; भासु. १२।१०२।२९ माया हि (मायाति) हि साध्व (ह्यसाधून्) विद्धि पार्थ (पार्थ विद्धि).

(६) भा. १२।१०३।३०; भासु. १२।१०२।३० ऽभि (वि) राधा (राधे) सन्ति हि (सन्त्यपि).

(१) भा. १२।१०३।३१; भासु. १२।१०२।३१ कर्श (कर्ष) ध्विति (ध्वीति).

(२) भा. १२।१०३।३२; भासु. १२।१०२।३२ धु नि (धुनि) क्लेशे (क्रोधे).

(३) भा. १२।१०३।३३; भासु. १२।१०२।३३ भाग्भवेत् (माचरेत्).

(४) भा. १२।१०३।३४; भासु. १२।१०२।३४ येत (यीत).

(५) भा. १२।१०३।३५; भासु. १२।१०२।३५ पूर्वार्धे (न मे प्रियं यन्निहताः सङ्ग्रामे मामकैर्नरैः।) चकर्थ च (च कुर्वन्ति) मानः (मानाः).

(६) भा. १२।१०३।३६; भासु. १२।१०२।३६ काङ्क्षे ने (काङ्क्षेन्ने).

(७) भा. १२।१०३।३७; भासु. १२।१०२।३७.

[1]हन्तॄणां चाहतानां च यत् कुर्युरपराधिनः ।
क्रोशेद् बाहुं प्रगृह्यापि चिकीर्षन् जनसंग्रहम् ॥

स्वीयान् बन्धून् हतानिव लोकप्रीत्यर्थं शोचेदित्याह— हन्तॄणामिति । नीटी.

[2]एवं सर्वास्ववस्थासु सान्त्वपूर्वं समाचरन् ।
प्रियो भवति भूतानां धर्मज्ञो वीतभीर्नृपः ॥

[3]विश्वासं चात्र गच्छन्ति सर्वभूतानि भारत ।
विश्वस्तः शक्यते भोक्तुं यथाकाममुपस्थितः ॥

विश्वस्तो जनः । नीटी.

तस्माद्विश्वासयेद्राजा सर्वभूतान्यमायया ।
सर्वतः परिरक्षेच्च यो महीं भोक्तुमिच्छति ॥

इष्टा दस्युसेना

[4]उद्यच्छेदेव न ग्लायेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ॥

[5]अप्यरण्यं समाश्रित्य चरेद्दस्युगणैः सह ।
न त्वेवोद्धृतमर्यादैर्दस्युभिः सहितश्चरेत् ।
दस्यूनां सुलभा सेना रौद्रकर्मसु भारत ॥

दस्युभिः दस्युप्रायैरमात्यैः । अत्यन्तापन्नस्य वनस्था दस्यवोऽपि कार्यकरा इत्याह— दस्यूनामिति । नीटी.

[6]एकान्तेन ह्यमर्यादात्सर्वोऽप्युद्विजते जनः ।
दस्यवोऽप्युपशङ्कन्ते निरनुक्रोशकारिणः ॥

तेष्वपि सत्येन मार्दवेन च स्थेयमित्याह— एकान्तत इति । नीटी.

[1]स्थापयेदेव मर्यादां जनचित्तप्रसादिनीम् ।
अल्पाऽप्यथेह मर्यादा लोके भवति पूजिता ॥

[2]नायं लोकोऽस्ति न पर इति व्यवसितो जनः ।
नालं गन्तुं च विश्वासं नास्तिके भयशङ्किनि ॥

जनः प्राकृतः । अलं पर्याप्तम्, युक्तमित्यर्थः । नीटी.

[3]यथा सद्भिः परादानमहिंसा दस्युभिस्तथा ।
अनुरज्यन्ति भूतानि समर्यादेषु दस्युषु ॥

सद्भिः दस्युभिः परादानं परस्वहरणमपि कृतं अहिंसा भवति, तथा वक्ष्ये इति शेषः । नीटी.

[4]अयुध्यमानस्य वधो दारामर्शः कृतघ्नता ।
ब्रह्मवित्तस्य चाऽऽदानं निःशेषकरणं तथा ।
स्त्रिया मोषः परिस्थानं दस्युष्वेतद्विगर्हितम् ॥

तदेवाऽऽह— अयुध्यमानस्येति । निःशेषकरणं सर्वहरणम् । स्त्रियाः कन्यायाः मोषः चौर्यम्, दारामर्षस्य प्रागुक्तेः । पतिस्थानं ग्रामादीनाक्रम्य तत्पतित्वेनावस्थानम्, आत्यन्तिकपरवृत्तिनिरोधात् । नीटी.

[5]स एष एव भवति दस्युरेतानि वर्जयन् ।
अभिसंदधते ये न विनाशायास्य भारत ।
नशेषमेवोपालभ्य न कुर्वन्तीति निश्चयः ॥

---

(१) भा. १२।१०३।३८ ; भामु. १२।१०२।३८ णां चा (णामा).

(२) भा. १२।१०३।३९ ; भामु. १२।१०२।३९ चरन् (चरेत्).

(३) भा. १२।१०३।४०–४१ ; भामु. १२।१०२। ४०–४१.

(४) भा. १२।१३१।९ ; भामु. १२।१३३।९–१० ग्लाये (नमे).

(५) भा. १२।१३१।१० ; भामु. १२।१३३।१०– ११ दस्यु (न्मृग) वोद्धृत (वोज्झित).

(६) भा. १२।१३१।११ ; भामु. १२।१३३।१२ कान्तेन (कान्ततो) प्युप (प्यभि).

(१) भा. १२।१३१।१२ ; भामु. १२।१३३।१३ अल्पाऽप्यथेह (अल्पेऽप्यर्थे च).

(२) भा. १२।१३१।१३ ; भामु. १२।१३३।१४ च (हि) शङ्किनि (शङ्किते).

(३) भा. १२।१३१।१४ ; भामु. १२।१३३।१५ भिस्तथा (भिः कृता).

(४) भा. १२।१३१।१५ ; भामु. १२।१३३।१६– १७ मर्श (मर्ष:) परि (पति).

(५) भा. १२।१३१।१६ ; भामु. १२।१३३।१७– १८ प्रथमार्धे (संश्लेषं च परस्त्रीभिर्दस्युरेतानि वर्जयेत् ।) ये न (ये च) चतुर्थचरणे (विश्वासायास्य मानवाः) तृतीयार्धे (अशेषमेवोपलभ्य कुर्वन्तीति विनिश्चयः ॥ ).

संश्लेषं सयोऽविभागे दूषणम् । ये मानवाः निःशेषीकृतास्तेऽस्य दस्योर्विश्वासायाभिसंदधते दस्युना सह विश्वासः कर्तव्य इति व्यवस्यन्ति । ततश्च विश्वासे जाते दस्योः स्थानादिकमुपलभ्य अशेषं दस्योरपि निःशेषं धनसंतानादिकं कुर्वन्ति । नीटी.

[1]तस्मात्सशेषं कर्तव्यं स्वाधीनमपि दस्युभिः ।
न बलस्थोऽहमस्मीति नृशंसानि समाचरेत् ॥

यस्मादेवं तस्मात्सशेषमेव परलुम्पनं कर्तव्यम् । नीटी.

[2]सशेषकारिणस्तात शेषं पश्यन्ति सर्वतः ।
निःशेषकारिणो नित्यमशेषकरणाद्भयम् ॥

यो यथा करोति तथैव प्रजाः कुर्वन्तीत्याह– सशेषेति । नीटी.

[3]स्थूणाश्मानं वाजिरथप्रधानां
ध्वजद्रुमैः संवृतकूलरोधसम् ।
पदातिनागैर्बहुकर्दमां नदीं
सपत्ननाशे नृपतिः प्रयायात् ॥

[4]अथोपपत्त्या शकटं पद्मं वज्रं च भारत ।
उशना वेद यच्छास्त्रं तत्रैतद्विहितं विभो ॥

शकटादयो व्यूहविशेषाः । नीटी.

## कौटिलीयमर्थशास्त्रम्

युद्धे सैन्यावासविधानरीतिः

[5]वास्तुकप्रशस्ते वास्तुनि नायकवर्धकिमौहूर्तिकाः स्कन्धावारं वृत्तं दीर्घं चतुरश्रं वा भूमिवशेन वा चतुर्द्वारं षट्पथं नवसंस्थानं मापयेयुः । खातवप्रसालद्वाराट्टालकसंपन्नं भये स्थाने च ॥

अथ साङ्ग्रामिकं नाम दशममधिकरणमारभ्यते । सङ्ग्राममधिकृत्य कृतं साङ्ग्रामिकमुच्यते । विजिगीषुणा हि शक्तिदेशकालबलाबलादिज्ञानपूर्वं सुविहितबाह्याभ्यन्तरादिविपत्प्रतीकारेणाभियाय सङ्ग्रामे करणीये तदीयमङ्गजातं तदारम्भपूर्वोत्तरकालानुष्ठेयमस्मिन्नधिकरणेऽभिधीयते । तत्र प्रथमं सूत्रम्– 'स्कन्धावारनिवेशः' इति । युद्धभूम्यासन्नं सैन्यावासस्थानं स्कन्धावारः । तस्य निवेशः निर्माणमुच्यते इति सूत्रार्थः ।

वास्तुकप्रशस्त इति । वास्तुविद्याविचक्षणश्लाघिते वास्तुनि प्रदेशे नायकवर्धकिमौहूर्तिकाः– नायकः सेनापतिः, वर्धकिः स्थपतिः, मौहूर्तिकः निर्माणारम्भार्थशुभकालनिश्चायकः, इत्येते मिलिताः स्कन्धावारं वृत्तं दीर्घं चतुरश्रं वा भूमिवशेन वा निर्माणभूमियोग्यतानुगुण्येनान्यादृशाकारं वेत्यर्थः, चतुर्द्वारं पूर्वतः पश्चिमतो दक्षिणत उत्तरतश्चेति चतुर्भिर्द्वारैरुपेतं षट्पथं दुर्गनिवेशोक्तरीत्या प्राक्प्रत्यगायतैस्त्रिभिः दक्षिणोत्तरायतैस्त्रिभिरिति षड्भिः पथिभिर्युक्तं नवसंस्थानं नवसंख्यसंनिवेशं मापयेयुः निर्मापयेयुः । खातेत्यादि । खातं परिखा, वप्रं प्राकाराधारः, सालः प्राकारः, द्वारं गोपुरम्, अट्टालकः उपरिगृहम्, एतैः संपन्नं युक्तम् । मापयेयुरिति संबध्यते । कदा एवंभूतं मापयेयुः ? भये स्थाने च पराघातभये चिरावस्थाने च । संभाविते इति शेषः । श्रीमूला.

मध्यमस्योत्तरे नवभागे राजवास्तुकं धनुःशतायाममर्धविस्तारम्, पश्चिमार्धे तस्यान्तःपुरम् । अन्तर्वंशिकसैन्यं चान्ते निविशेत । पुरस्तादुपस्थानम्, दक्षिणतः कोशशासनकार्यकरणानि, वामतो राजोपवाह्यानां हस्त्यश्वरथानां स्थानम् । अतो धनुःशतान्तराश्चत्वारः शकटमेथीप्रततिस्तम्भसालपरिक्षेपाः । प्रथमे पुरस्तान्मन्त्रिपुरोहितौ, दक्षिणतः कोष्ठागारं महानसं च, वामतः कुप्यायुधागारम् । द्वितीये मौलभृतानां स्थान-

(१) भा. १२।१३१।१७ ; भासु. १२।१३३।१९.

(२) भा. १२।१३१।१८ ; भासु. १२।१३३।२० स्तात (स्तत्र) सर्वतः (सर्वशः) स्मशो (स्तं निःशे).

(३) भा. १५।१२।१४ ; भासु. १५।७।१४ स्थूणा (तूणा) प्रधानां (प्रवाहां) यायात् (योजयेत्).

(४) भा. १५।१२।१५ ; भासु. १५।७।१५ पद्मं (पद्म) ; शर. २६ पूर्वार्धे (अथोपयायाच्छकटं वज्रं पद्मं च पार्थिवः ।) हितं (दितं).

(५) कौ. १०।१.

**मश्वरथानां सेनापतेश्च । तृतीये हस्तिनः श्रेण्यः प्रशास्ता च। चतुर्थे विष्टिर्नायको मित्रामित्राटवीबलं स्वपुरुषाधिष्ठितम् । वणिजो रूपाजीवाश्चानुमहापथम् । बाह्यतः लुब्धकश्वगणिनः सतूर्याग्नयो गूढाश्चाऽऽरक्षाः ॥**

मध्यमस्येति। वास्तुहृदयस्य उत्तरे उदग्भवे नवभागे नवमांशे राजवास्तुकं राजवासस्थानं धनुःशतायामं धनुःशतदीर्घम् अर्धविस्तारं पञ्चाशद्धनुर्विस्तारम् , कार्यमिति शेषः। मापयेयुरिति वा वर्तते । पश्चिमार्धे तस्येति। राजवास्तुकस्य पश्चिमभागे अन्तःपुरं राजस्त्रीवासस्थानं कार्यम्। अन्तर्वंशिकसैन्यं चेति । अन्तःपुररक्षिसैन्यं च अन्ते अन्तःपुरसमीपे निविशेत निवेशं लभेत। पुरस्तादिति। राजवास्तुकस्य पुरोभागे उपस्थानम् उपतिष्ठन्ते संदर्शनार्थिनो राजानमत्रेत्युपस्थानगृहम् , कर्तव्यमिति शेषः। दक्षिणत इति। दक्षिणभागे कोशशासनकार्यकरणानि— कोशः रत्नादिस्थानम् , शासनकरणम् अक्षपटलम् , कार्यकरणं व्यवहारदर्शनस्थानम् , इत्येतानि कर्तव्यानि। वामत इति। वामभागे राजौपवाह्यानां राजवाहनानां हस्त्यश्वरथानां स्थानं कर्तव्यम् । अत इति। राजवास्तुकात् परतः धनुःशतान्तराः धनुःशतपरिमाणपरस्परान्तरालाः चत्वारः शकटमेथीप्रततिस्तम्भसालपरिक्षेपाः— शकटैः कृतः परिक्षेपः प्रथमः , मेथ्यः कण्टकिवृक्षशाखाः , तासां प्रततिभिः प्रकृष्टाभिस्ततिभिः कृतः परिक्षेपो द्वितीयः , स्तम्भैर्दारुमयैः कृतः परिक्षेपस्तृतीयः , सालः प्राकारः , तत्कृतः परिक्षेपश्चतुर्थः , इत्येते, रक्षार्थे कर्तव्या इति शेषः। प्रथम इति । तेष्वादिमे शकटपरिक्षेपे पुरस्तात् प्राग्भागे मन्त्रिपुरोहितौ, निवेशनीयाविति शेषः। दक्षिणतः कोष्ठागारं धान्यादिस्थानं महानसं च पाकशाला च। इह 'अध्यक्षा गुप्तिस्थानं च' इत्यधिकपाठो नयचन्द्रिकायां प्रतिभाति। तत्र अध्यक्षाः समाहर्त्रादयः, गुप्तिस्थानम् आरक्षकबलस्थानम्। वामतः कुप्यायुधागारं कुप्यगृहम् आयुधशाला च निवेशनीयानि। द्वितीय इति। मेथीप्रततिपरिक्षेपे मौलभृतानां सैन्यानाम् अश्वरथानां सेनापतेश्च स्थानं कार्यम्। तृतीय इति। स्तम्भपरिक्षेपे हस्तिनः, श्रेण्यः श्रेणीबलानि। 'श्रेण्यः' इत्येतत् स्थाने 'गोण्यः' इत्यपपाठः। 'काम्बोजकसौराष्ट्रादयः' इति तु व्याचष्टे माधवः। प्रशास्ता च कण्टकशोधनाध्यक्षश्च निवेश्याः। चतुर्थ इति। सालपरिक्षेपे विष्टिः कर्मकरवर्गः, नायकः सेनापतिदशकपतिः, मित्रामित्राटवीबलं स्वपुरुषाधिष्ठितं स्वपुरुषनेतृकं मित्राणाम् अमित्राणां क्रयाद्यधिगतानाम् आटविकानां च बलम् । निविशेतेति शेषः। वणिज इति। ते रूपाजीवाश्च वेश्याश्च अनुमहापथं राजपथसमीपे निविशेरन्। बाह्यत इति। सर्वबहिर्देशे लुब्धकश्वगणिनः व्याधाः श्वगणजीविनश्च, सतूर्याग्नयः शत्रुबलागमनमात्मना विज्ञातं तूर्यघोषणेनाग्निदीपनधूपनैश्च राजादिभ्यः प्रकाशयितुं तूर्याग्निसहिताः गूढाश्चाऽऽरक्षाः गोपालादिवेषच्छन्नाः रक्षिपुरुषाश्च शत्रुचारग्रहणार्थाः। निविशेरन्निति शेषः। श्रीमूला.

**शत्रूणामापाते कूपकूटावपातकण्टकिनीश्च स्थापयेत्। अष्टादशवर्गाणामारक्षविपर्यासं कारयेत्। दिवायामं च कारयेदपसर्पज्ञानार्थम् ॥**

येन मार्गेण शत्रूणामापतनं संभाव्यते तस्मिन् मार्गे कूपकूटावपातकण्टकिनीश्च कूटकूपान् तृणच्छन्नान् कूपान् अवपातान् गर्तान् कण्टकिनीः कण्टकयुक्ताः फलकाश्च स्थापयेत्। अष्टादशवर्गाणां मौलभृतादीनां षण्णां प्रत्येकं पदिकसेनापतिनायकलक्षणैः पतिभिस्त्रिभिर्योगादष्टादशत्वं प्राप्तानां बलानाम् आरक्षविपर्यासम् अधिष्ठातृव्यत्ययम् कारयेत्। अर्थात् शत्रूपजापपरिहारार्थम्। दिवायामं च दिवासंचारनियमं च कारयेत्। किमर्थम्? अपसर्पज्ञानार्थे परचारज्ञानार्थम्। श्रीमूला.

**विवादसौरिकसमाजद्यूतवारणं च कारयेत्। मुद्रारक्षणं च ॥**

विवादः परस्परविप्रतिपत्तिः, सौरिकं सुरामद्यपाने, समाजः कौतुकगोष्ठी, द्यूतम् अक्षादिदेवनम् , एभ्यो वारणं च अर्थात् सैनिकानां कारयेत्। मुद्रारक्षणं च— प्रवेशनिर्गमयोरनुमतिचिह्नभूतराजकीयमुद्राप्रदर्शननियमः इह मुद्रा, तस्याः रक्षणम् अनुवर्तनं च कारयेत्।

श्रीमूला.

**सेनानिवृत्तमायुधीयमशासनं शून्यपालोऽनुबध्नीयात् ॥**

योद्धुं गतायाः सेनायाः निवृत्तं निवृत्य स्थानीयप्राप्तम् आयुधीयम् आयुधजीविनम् अशासनं निवृत्त्यनुमतिलेखरहितं शून्यपालः– सपरिकरराजरहितं स्थानीयं शून्यम्, तत्पालकः अनुबध्नीयात् अनुसरेत्। गृह्णीयादित्यर्थः। 'अन्तपालः' इति क्वचित् पाठः। श्रीमूला.

**पुरस्तादध्वनः सम्यक् प्रशास्ता रक्षणानि च। यायाद् वर्धकिविष्टिभ्यामुदकानि च कारयेत् ॥**

प्रशास्ता कण्टकशोधनाध्यक्षः पुरस्तात् सपरिकरराजप्रस्थानात् प्रागेव वर्धकिविष्टिभ्यां स्थपतिकर्मकराध्यक्षाभ्यां सह यायात्। पुरस्ताद्यानस्य फलमाह– अध्वनो रक्षणानि च विषमसमीकरणकण्टकापनयनदुष्टसत्त्वप्रतिरोधकाद्युत्सारणानि च उदकानि च निर्जलप्रदेशे जलानि च कारयेत्। श्रीमूला.

सैन्यावासमुद्दिश्य प्रयाणविधिः

**[1]ग्रामारण्यानामध्वनि निवेशान् यवसेन्धनोदकवशेन परिसंख्याय स्थानासनगमनकालं च यात्रां यायात्। तत्प्रतीकारद्विगुणं भक्तोपकरणं वाहयेत्। अशक्तो वा सैन्येष्वायोजयेत्। अन्तरेषु वा निचिनुयात् ॥**

'स्कन्धावारप्रयाणम्' इति सूत्रम्। यथोक्तरीत्या निर्मितं स्कन्धावारमुद्दिश्य राज्ञः सपरिकरस्य प्रयाणमुच्यत इति सूत्रार्थः।

ग्रामारण्यानामिति। ग्रामाणामरण्यानां च अध्वनि निवेशान् निवेशयोग्यदेशान् यवसेन्धनोदकवशेन तृणकाष्ठजलयोगवशेन परिसंख्याय इयत्तया निर्णीय, स्थानासनगमनकालं च– स्थानं पक्षमासाद्यवस्थानम्, आसनं पञ्चषदिनाद्यवस्थानम्, गमनम् एकरात्रमात्रावस्थानम्, एषां कालं च परिसंख्याय यात्रां यायात्। तत्प्रतीकारद्विगुणमिति। परिसंख्यातदेशकालपर्याप्तभक्तोपकरणतो द्विगुणं भक्तोपकरणं. भक्तं तण्डुलादि उपकरणं वस्त्रादि च वाहयेत् वाहनमारोप्य नयेत्। अशक्तो वेति। वाहयितुमशक्तश्चेत् सैन्येषु आयोजयेत् वहनीयत्वेनार्पयेत्। अन्तरेषु वा तत्तन्निवेशप्रदेशेषु वा निचिनुयात् पूर्वमेव निचित्य स्थापयेत्। श्रीमूला.

**पुरस्तान्नायकः। मध्ये कलत्रं स्वामी च। पार्श्वयोरश्वा बाहूत्सारः। चक्रान्तेषु हस्तिनः। प्रसारवृद्धिर्वा सर्वतः। वनाजीवः प्रसारः। स्वदेशादन्वायतिर्वीवधः। मित्रबलमासारः। कलत्रस्थानमपसारः। पश्चात् सेनापतिः पर्यायान्निविशेत ॥**

यातृयानक्रममाह– पुरस्तादिति। सेनाया अग्रे नायकः सेनापतिदशकपतिः। यायादिति शेषः। मध्ये कलत्रं दारादिकं स्वामी च राजा च यायात्। पार्श्वयोः अश्वाः अश्वरूपो दण्डो यायादित्यर्थः। स च बाहुभ्यां पराभिघातवारणार्थ इत्याह– बाहूत्सार इति। बाहुभ्याम् उत्सारयति पराभ्याघातं वारयतीति तथा। चक्रान्तेषु सेनायाः पश्चाद्भागेषु हस्तिनः गच्छेयुः। प्रसारवृद्धिर्वा सर्वत इति। वन्यमुपजीव्यं व्रीहितृणादिद्रव्यं प्रसारः, तस्य वृद्धिः प्रभूतः प्रसार इत्यर्थः। स च सर्वतः यायात्। प्रसारपदार्थमाह– वनाजीव इत्यादि। तत्प्रसङ्गात् विवधादीनाह– स्वदेशादिति। आत्मनो जनपदात् अन्वायतिः अविच्छिन्नः आजीवद्रव्यागमः वीवधः। सोऽपि सर्वतो गच्छेदित्यर्थः। मित्रबलम् आसारः आसारशब्दितम्। कलत्रस्थानम् अपसारः अपसारशब्दितम्। तदुभयमपि सुरक्षितं यायादित्यार्थम्। पश्चादिति। सेनायाः पश्चाद्भागे सेनापतिः पर्यायात् स्वस्वसेनापश्चाद्भागक्रमात् निविशेत तिष्ठेत्। श्रीमूला.

**पुरस्तादभ्याघाते मकरेण यायात्, पश्चाच्छकटेन, पार्श्वयोर्वज्रेण, समन्ततः सर्वतोभद्रेण, एकायने सूच्या ॥**

पुरोभागे अभ्याघाते पराभिघाते शङ्क्यमाने मकरेण– भोगाख्यस्य प्रकृतिव्यूहविशेषस्य प्रभेदो मकरो नाम दण्डभोगमण्डलासंहतव्यूहव्यूहनप्रकरणे (कौ. १०।६) वक्ष्यमाणः, तेन यायात्। पश्चात् अभ्याघाते शकटेन

(१) कौ. १०।२.

तदाख्येन भोगभेदेन यायात् । पार्श्वयोः अभ्याघाते वज्रेण– असंहताख्यस्य प्रकृतिव्यूहस्य प्रभेदो वज्रः, तेन यायात् । समन्ततः अभ्याघाते सर्वतोभद्रेण– मण्डलाख्यस्य प्रकृतिव्यूहस्य प्रभेदः सर्वतोभद्रः, तेन यायात् । एकायने एकैकमात्रगन्तव्ये मार्गे सूच्या तदाख्येन मण्डलभेदेन यायात् । श्रीमूला.

**पथिद्वैधीभावे स्वभूमितो यायात् । अभूमिष्ठानां हि स्वभूमिष्ठा युद्धे प्रतिलोमा भवन्ति । योजनमधमा, अध्यर्धे मध्यमा, द्वियोजनमुत्तमा, संभाव्या वा गतिः ॥**

पथः मार्गस्य द्वैधीभावे भूम्यानुगुण्यानानुगुण्याभ्यां द्विरूपत्वे सति स्वभूमितो यायात् स्वरथाश्वपदातिहस्त्यनुगुणया भूम्या गच्छेत् । सा च युद्धभूमिप्रकरणे (कौ. १०।४) वक्ष्यते । स्वभूमितो यानस्य फलमाह– अभूमिष्ठानां हीति । तेषां हि स्वभूमिष्ठाः युद्धे प्रतिलोमाः अनाक्रमणीयाः भवन्ति । कियान् अध्वा दिवसे एकस्मिन् गन्तव्य इत्याह– योजनमधमेत्यादि । योजनं षड्गोरुतम्, तत्परिच्छिन्ना गतिरवरा । सार्धयोजनपरिच्छिन्ना मध्यमा । द्वियोजनपरिच्छिन्ना उत्तमा । उक्ताधिकपरिमाणाऽपि देशकालाद्यानुगुण्येन गतिः संभाव्यत इत्याह– संभाव्या वा गतिरिति । श्रीमूला.

**आश्रयकारी, संपन्नघाती, पार्ष्णिरासारो मध्यम उदासीनो वा प्रतिकर्तव्यः, संकटो मार्गः शोधयितव्यः, कोशो दण्डो मित्रामित्राटवीबलं विष्टिर्ऋतुर्वा प्रतीक्ष्याः, कृतदुर्गकर्मनिचयरक्षाक्षयः क्रीतबलनिर्वेदो मित्रबलनिर्वेदश्चाऽऽगमिष्यति, उपजपितारो वा नातित्वरयन्ति, शत्रुरभिप्रायं वा पूरयिष्यतीति शनैर्यायात् । विपर्यये शीघ्रम् ।**

प्रस्थितस्य शनैर्यानशीघ्रयानयोर्निमित्तान्याह– आश्रयकारीति । आत्मोदयार्थं कमप्याश्रयं करिष्यन् । एतदादिषु 'इति शनैर्यायात्' इति संबध्यते । आत्मोदयार्थं कंचिदाश्रयं करिष्यामीत्यस्मिन् निमित्ते शनैर्यायादित्यर्थः । संपन्नघातीति शत्रुदेशं संपन्नं हनिष्यामीत्यस्मिन् निमित्ते, पार्ष्णिः पार्ष्णिग्राहः, आसारः मित्रबलम्, मध्यमः अरिविजिगीष्वोर्भूम्यनन्तरो विदिक्स्थः, उदासीनो वा अरिविजिगीषुमध्यमप्रकृतिबाह्यो वा प्रतिकर्तव्य इति प्रशमितकोपः कर्तव्य इत्यस्मिन् निमित्ते, संकटो मार्गः शोधयितव्य इति विषमो मार्गः सुगमतां नेतव्य इत्यस्मिन् निमित्ते, कोशः धनसंग्रहः, दण्डः स्वसैन्यं विक्षिप्तं मिलिष्यत्, मित्रामित्राटवीबलं मित्रामित्राटविकानां सैन्यं साहाय्यार्थमागमिष्यत्, विष्टिः कर्मकरवर्गः, ऋतुर्वा स्वबलसामर्थ्यानुरूपयुद्धयोग्यः कालो वा प्रतीक्ष्या इति प्रतिपाल्या इत्यस्मिन् निमित्ते, कृतदुर्गकर्मनिचयरक्षाक्षयः कृतस्य शत्रुणा पूर्वमनुष्ठितस्य दुर्गकर्मणः स्वदुर्गसंस्कारस्य निचयस्य धान्यादिसंचयस्य रक्षायाश्च क्षयः, क्रीतबलनिर्वेदः धनदानस्वीकृतस्य सैन्यस्य निर्वेदः, मित्रबलनिर्वेदश्च मित्रबलस्य साहाय्यागतस्य निर्वेदश्च अर्थात् कालविलम्बनिमित्तः आगमिष्यति शत्रोः संभविष्यति इत्यस्मिन् निमित्ते, उपजपितारो वा शत्र्वभियोगार्थमस्मानुपजपन्तः शत्रुदूष्या इत्यर्थः, नातित्वरयन्ति अभियोगेऽतित्वरां कर्तव्यां नेच्छन्ति इत्यस्मिन् वा निमित्ते, शत्रुः अभिप्रायं विजिगीषुमनोरथं पूरयिष्यति ऋते युद्धात् सफलयिष्यति इत्यस्मिन् वा निमित्ते शनैर्यायात् । विपर्यये यथोक्तनिमित्ताभावे शीघ्रं यायात् । श्रीमूला.

**हस्तिस्तम्भसंक्रमसेतुबन्धनौकाष्ठवेणुसंघातैरलाबुचर्मकरण्डदृतिप्लवगण्डिकावेणिकाभिश्चोदकानि तारयेत् ॥**

सैन्यस्य नद्यादितरणोपायानाह– हस्तिस्तम्भेत्यादि । हस्तिभिः गजैः, स्तम्भसंक्रमैः स्तम्भानामुपरि दारुफलकादिघटनया कल्पितैः संक्रमैः, सेतुबन्धैः, नौभिः, काष्ठसंघातैः वेणुसंघातैश्च । अलाबुचर्मकरण्डादिभिश्च । अलाबुभिः तुम्बीफलकोशैः, चर्मकरण्डैः चर्मावनद्धैर्विदलभाजनैः, दृतिभिः भस्त्राभिः, प्लवैः उडुपैः, गण्डिकाभिः प्लवनकाष्ठैरिति माधवः, वेणिकाभिः, रज्जुभिश्च उदकानि तारयेत् । श्रीमूला.

**तीर्थाभिग्रहे हस्त्यश्वैरन्यतो रात्रावुत्तार्य सत्रं गृह्णीयात् ॥**

तीर्थस्य अवतरणस्थानस्य अभिग्रहे परप्रतिरोधे शङ्क्यमाने हस्त्यश्वैः साधनैः अन्यतः अतीर्थे रात्रौ अन्याविदित इत्यर्थः, उत्तार्य सत्रं धान्वनसंकटादिकं कूटयुद्धविकल्पप्रकरणे ( कौ. १०।३ ) वक्ष्यमाणं गृह्णीयात् ।

श्रीमूला.

**अनुदके चक्रिचतुष्पदं चाध्वप्रमाणेन शक्त्योदकं वाहयेत् ॥**

अनुदकाध्वकरणीयमाह– अनुदक इति । तस्मिन् चक्रिचतुष्पदं चक्रीणि शकटानि चतुष्पदान् बलीवर्दादींश्च अध्वप्रमाणेन निरुदकमार्गप्रमाणपर्याप्तप्रमाणेन युक्तं शक्त्या वोढृशक्त्यानुगुण्येन उदकं वाहयेत् । इत्थं स्कन्धावारप्रयाणं व्युत्पादितम् । श्रीमूला.

सैन्यस्य व्यसनेभ्यो रक्षणम्

**दीर्घकान्तारमनुदकं यवसेन्धनोदकहीनं वा कृच्छ्राध्वानमभियोगप्रस्कन्नं क्षुत्पिपासाध्वक्लान्तं पङ्कतोयगभीराणां वा नदीदरीशैलानामुद्यानापयाने व्यासक्तमेकायनमार्गे शैलविषमे संकटे वा बहुलीभूतं निवेशे प्रस्थिते विसन्नाहं भोजनव्यासक्तमायतगतपरिश्रान्तमवसुप्तं व्याधिमरकदुर्भिक्षपीडितं व्याधितपत्त्यश्वद्विपमभूमिष्ठं वा बलव्यसनेषु वा स्वसैन्यं रक्षेत् । परसैन्यं चाभिहन्यात् ॥**

अथ– 'बलव्यसनावस्कन्दकालरक्षणम्' इति सूत्रम् । अमानितविमानितादीनि बलव्यसनानि, अवस्कन्दकालाः दीर्घकान्तारगमनादिकालाः 'दीर्घकान्तारमनुदकम्' इत्यादिना वक्ष्यमाणाः, तेभ्यः स्वबलरक्षणमुच्यते इति सूत्रार्थः ।

दीर्घकान्तारमित्यादि । दीर्घं कान्तारं दुर्गमो गन्तव्यमार्गः यस्य तत् तथाभूतं स्वसैन्यं रक्षेत् । अनुदकम् अलभ्यमार्गजलं स्वसैन्यं रक्षेत् । एवमुत्तराण्यपि विशेषणानि प्रत्येकं योज्यानि । यवसेन्धनोदकहीनं वा तृणकाष्ठजलरहितं वा । उदकस्य पुनर्ग्रहणं प्राधान्यद्योतनार्थम् । कृच्छ्राध्वानं कष्टलङ्घ्यमार्गमध्यगतम् । 'कृच्छ्राध्वगतम्' इति क्वचित् पाठः । अभियोगप्रस्कन्नं चिराभियोगावसन्नम्, क्षुत्पिपासाध्वक्लान्तम् अशनायोदन्यामार्गगमनैः परिश्रान्तम्, पङ्कतोयगभीराणां वा नदीदरीशैलानाम् अगाधपङ्कानामगाधतोयानां च नदीनां कन्दरपर्वतयोश्च उद्यानापयाने आरोहणेऽवरोहणे च व्यासक्तं व्यापृतम्, एकायनमार्गे एकमात्रगन्तव्ये मार्गे शैलविषमे संकटे वा पर्वतदन्तुरे दुर्गप्रदेशे वा बहुलीभूतं समूहितम्, निवेशे अवस्थाने प्रस्थिते यात्रायां विसन्नाहं शस्त्रावरणादिरहितम्, भोजनव्यासक्तं भोजनव्यापृतम्, आयतगतपरिश्रान्तं दीर्घाध्वगमनपरिखिन्नम्, अवसुप्तं प्राप्तनिद्रम्, व्याधिमरकदुर्भिक्षपीडितं रोगेण संघातमृत्युना सुभिक्षविरहेण वा पीडितम्, व्याधितपत्त्यश्वद्विपं रुग्णपद्गहयगजम्, अभूमिष्ठं वा स्वयुद्धाननुरूपभूमिस्थितं वा, बलव्यसनेषु वा तत्र स्थितं वा स्वसैन्यं रक्षेत् । परसैन्यं च, उक्तविशेषयुक्तमित्यार्थम्, अभिहन्यात् । श्रीमूला.

**एकायनमार्गप्रयातस्य सेनानिश्चारग्रासाहारशय्याप्रस्ताराग्निनिधानध्वजायुधसंख्यानेन परबलज्ञानम् । तदात्मनो गूहयेत् ॥**

परेण सह विग्रहस्य संधेर्वाऽनुष्ठाने तद्बलेयत्ताज्ञानस्यापेक्षितत्वात् तदुपायमाह– एकायनमार्गप्रयातस्येति । एकैकमात्रगम्येन मार्गेण प्रस्थितस्य शत्रोः । सेनानिश्चारग्रासाहारादिसंख्यानेन– सेनानिश्चारसंख्यानेन एकायनमार्गेणैकैकशो निश्चरत्सैनिकव्यक्तिपरिगणनेन, ग्रासः गजादिभोज्यम्, तत्संख्यानेन, आहारः योद्धृपुरुषभोज्यम्, तत्संख्यानेन, शय्याप्रस्तारः शयनीयास्तरणम्, तत्संख्यानेन, अग्निनिधानं चुल्ली, तत्संख्यानेन, ध्वजसंख्यानेन, आयुधसंख्यानेन च परबलज्ञानं शत्रुसैन्येयत्तानिश्चयः । कार्यं इति शेषः । तदात्मन इति । आत्मीयं सेनानिश्चारादिकमायुधान्तं स्वबलेयत्ताज्ञापकजातं गूहयेत् संवृणुयात् । श्रीमूला.

**पार्वतं वनदुर्गं वा सापसारप्रतिग्रहम् । स्वभूमौ पृष्ठतः कृत्वा युद्ध्येत निविशेत च ॥**

'प्रस्तरं गुहां वा पार्वतम्' ( कौ. २।३ ) इति दुर्गविधानोक्तलक्षणं पर्वतकृतं दुर्गम्, वनदुर्गं वा 'खञ्जनो-

दकं स्तम्बगहनं वा वनदुर्गम्' (कौ. २।३) इत्युक्तलक्षणं वा, सापसारप्रतिग्रहम्— पराजयेऽपसरणस्थानमपसारः, अभ्यापतत्परबलप्रतिग्रहणस्थानं प्रतिग्रहः, ताभ्यां सहितं पृष्ठतः कृत्वा सज्जीकृत्येत्यर्थः, स्वभूमौ आत्मानुगुणायां भूमौ युद्ध्येत निविशेत च ।

श्रीमूला.

प्रकाशयुद्धे स्वसैन्यहर्षोत्पादनोपायाः, परसैन्यापेक्षया स्वसैन्यनियोजनरीतिः

**[1]सङ्ग्रामस्तु निर्दिष्टदेशकालो धर्मिष्ठः ॥**

अथ 'स्वसैन्योत्साहनम्' इति सूत्रम् । स्वसैन्यस्य प्रकाशयुद्धे समुद्योजनमभिधीयते इति सूत्रार्थः ।

सङ्ग्रामस्त्विति । प्रकाशयुद्धं सङ्ग्रामः, स तु निर्दिष्टदेशकालः अमुकदेशे अमुककाले स्वपरसैन्यैः संनिधाय योद्धव्यमिति संभाषितदेशकालः धर्मिष्ठः धर्मादनपेतः । एतेन कूटयुद्धस्य पापीयस्त्वं प्रकाशयुद्धस्य तेनागतार्थत्वं चोक्तम् । श्रीमूला.

**संहत्य दण्डं ब्रूयात्— 'तुल्यवेतनोऽस्मि, भवद्भिः सह भोग्यमिदं राज्यम्, मयाऽभिहितः परोऽभिहन्तव्यः' इति । वेदेष्वप्यनुश्रूयते समाप्तदक्षिणानां यज्ञानामवभृथेषु— 'सा ते गतिर्या शूराणाम्' इति । अपीह श्लोकौ भवतः— 'यान् यज्ञसंघैस्तपसा च विप्राः स्वर्गैषिणः पात्रचयैश्च यान्ति । क्षणेन तानप्यतियान्ति शूराः प्राणान् सुयुद्धेषु परित्यजन्तः ॥ नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् । तत्तस्य मा भून्नरकं च गच्छेद्यो भर्तृपिण्डस्य कृते न युद्ध्येत् ॥' । इति मन्त्रिपुरोहिताभ्यामुत्साहयेद्योधान् ॥**

प्रोत्साहनप्रकारमाह— संहत्येति । संघीभूय, स्थितमिति शेषः, दण्डं स्वसैन्यं ब्रूयात्, अर्थात् राजा । कथम्? 'तुल्यवेतनोऽस्मि' । वेतनं लाभः, भवल्लाभसमानलाभोऽस्मि । तुल्यलाभतामेव विशदयति— भवद्भिः सह भोग्यमित्यादि । नाहमेकाकी युद्धविजितं राज्यं भोक्ष्ये, किंतु भवत्सहित एव भोक्ष्य इत्यर्थः । तदर्थं भवद्भिरेतावत् कर्तव्यमित्याह— मयाऽभिहित इत्यादि । मया निर्दिष्टः परः शत्रुः अभिहन्तव्यः, अर्थात् भवद्भिः । इति अनेन प्रकारेण ब्रूयादिति संबन्धः । इत्थं स्वयंवचनेन प्रोत्साहनमुक्त्वा मन्त्रिपुरोहितमुखेनापि प्रोत्साहनमाह— वेदेष्वपीत्यादि । सम्यगाप्तऋत्विग्दक्षिणानां यज्ञानामनुष्ठानसमाप्तिषु विषये फलमनुश्रूयते इत्यर्थः । अनुश्रूयमाणं मन्त्रवाक्यमाह— सा ते गतिर्या शूराणामितीति । युद्धत्यक्तजीवितानां शूराणां या गतिः सा सुसमापितयज्ञस्य तव भूयादिति तस्य वाक्यस्यार्थः । एतेन युद्धप्राणत्यागस्य भूरियज्ञानुष्ठानसमानफलत्वमुक्तम् । उक्तवेदार्थोपबृंहणपरौ श्लोकावपि प्रमाणभूतौ स्त इत्याह— अपीह श्लोकौ भवत इत्यादि । यानित्यादि । यान् वाञ्छितार्थान् । यज्ञसंघैः क्रतुशतैरनुष्ठितैरित्यर्थः । तपसा कायसंक्लेशनलक्षणेन । पात्रचयैश्च पात्रशब्देन योग्यप्रतिग्रहीतृनिर्वर्त्यस्य दानस्य लक्षणात् तथाविधदानशतैरित्यर्थः । एवं च सुयुद्धप्राणत्यागिनां शूराणां यज्ञतपोदानशतलभ्यफलातिशायिफलभाक्त्वमनेन श्लोकेनोक्तमिति द्रष्टव्यम् । नवमित्यादि । शरावं पात्रविशेषः । तद्धि उदकपूर्णं मन्त्राभिमन्त्रणसंस्कारयुक्तं दर्भसंवीतं युद्धजयाभ्युदयकालिकं प्राभृतं भर्तृपिण्डार्थमयुध्यमानस्य लभ्यं न भवति, नरके च स पततीति श्लोकार्थः । इतीति । वेदेष्वपीत्याद्युक्तेन प्रकारेण, वादयित्वेति शेषः, मन्त्रिपुरोहिताभ्याम् उत्साहयेत् योधान् । श्रीमूला.

**व्यूहसंपदा कार्तान्तिकादिश्चास्य वर्गः सर्वज्ञदैवसंयोगख्यापनाभ्यां स्वपक्षमुद्धर्षयेत्, परपक्षं चोद्वेजयेत् । 'श्वो युद्धम्' इति कृतोपवासः शस्त्रवाहनं चानुशयीत । अथर्वभिश्च जुहुयात् । विजययुक्ताः स्वर्गीयाश्चाऽऽशिषो वाचयेत् । ब्राह्मणेभ्यश्चाऽऽत्मानमतिसृजेत् ॥**

अस्य राज्ञः कार्तान्तिकादिः दैवज्ञनिमित्तज्ञादिः वर्गश्च व्यूहसंपदा— व्यूहानां राजकर्तृकाणां सैन्यविन्यासवैचित्र्याणां संपत् जयाव्यभिचारित्वगुणयोगः तया, सर्वज्ञदैवसंयोग-

(१) कौ. १०।३.

ख्यापनाभ्यां सर्वज्ञख्यापनेन त्रैकालिकफलसिद्धिज्ञत्वख्यापनेन दैवसंयोगख्यापनेन दैवसाक्षात्कारख्यापनेन च स्वपक्षम् उद्धर्षयेत् उद्भूतहर्षं कुर्यात्, परपक्षं च उद्वेजयेत् भग्नोत्साहं कुर्यात् । श्वो युद्धमित्यादि । श्वो युद्धमिति निश्चये सति अद्योपवासं कुर्वन् स्वीयशस्त्रवाहनयोरन्तिके रात्रौ शयीतेत्यर्थः । तयोरर्चनं तु अर्थाक्षिप्तं द्रष्टव्यम् । अथर्वभिश्चेति । शत्रुविध्वंसनैर्मन्त्रैश्च जुहुयात् । विजययुक्ता इत्यादि । शश्वभिभवे श्रीप्राप्तिरूपविजयानुकूलाः स्वर्गीयाश्च मरणे स्वर्गप्राप्त्यनुकूलाश्च आशिषः वाचयेत् । ब्राह्मणैरिति शेषः । ब्राह्मणेभ्यश्चेति । तेभ्यः आत्मानं अतिसृजेत् स्वरक्षणार्थमर्पयेत् । श्रीमूला.

**शौर्यशिल्पाभिजनानुरागयुक्तमर्थमानाभ्यामविसंवादितमनीकगर्भं कुर्वीत । पितृपुत्रभ्रातृकाणामायुधीयानामध्वजं मुण्डानीकं राजस्थानम् । हस्ती रथो वा राजवाहनमश्वानुबन्धे । यत्प्रायः सैन्यो यत्र वा विनीतः स्यात् तदधिरोहयेत् । राजव्यञ्जनो व्यूहाधिष्ठानमायोज्यः ॥**

शौर्यशिल्पादिगुणयुक्तं भूमिहिरण्यादिदानच्छत्राभरणादिबहुमानदानाभ्यां नित्यसंवादितं सैन्यं महासैन्यमध्ये स्थापयेत् स्वरक्षार्थमित्यर्थः । पितृपुत्रभ्रातृकाणामिति । पित्रादीनां राज्ञोऽन्तरङ्गसंबन्धिनाम् आयुधीयानां राजरक्षार्थधृतायुधानाम् अध्वजं राजसंबन्धित्वज्ञापकवेषरहितं मुण्डानीकम्– मुण्डं शिरः, तदिव प्रधानभूतं सैन्यं राजस्थानं राजसमानस्थानं कुर्वीत । राजा यत्र तिष्ठति तत्रैव स्थापयेदित्यर्थः । हस्तीति । सः रथो वा राजवाहनं राज्ञो वाहनम् अश्वानुबन्धे अश्वानां रक्षार्थानां साहचर्ये सति । भवेदिति शेषः । पक्षान्तरमाह– यत्प्रायः सैन्य इति । गजाश्वादिवाहनेषु मध्ये यद्वाहनबहुलः सैन्यः तत् वा वाहनम् अधिरोहयेत् अधिरोहेत् । यत्र वाहने विनीतः आरोहणशिक्षितः स्यात् राजा तत् वा वाहनम् अधिरोहेत् । राजव्यञ्जन इति । राजवेषधारी कश्चित् व्यूहाधिष्ठानं व्यूहस्य अधिष्ठानं शिरःस्थानं सर्वतल्लक्षणोपेतम् आयोज्यः आयुञ्जानः प्रयोजयितव्यः । अधिष्ठापयितव्य इति यावत् । राजा तु शत्रुभिर्लक्षितो मा भूदित्येतदर्थं नैवाऽऽयोज्य इत्यभिप्रायः । श्रीमूला.

**सूतमागधाः शूराणां स्वर्गमस्वर्गं भीरूणां जातिसंघकुलकर्मवृत्तस्तवं च योधानां वर्णयेयुः । पुरोहितपुरुषाः कृत्याभिचारं ब्रूयुः । सत्रिकवर्धकिमौहूर्तिकाः स्वकर्मसिद्धिमसिद्धिं परेषाम् ॥**

सूताः ऐतिहासिकाः मागधाः स्तुतिपाठकाश्च शूराणां स्वर्गम्, भीरुणाम् अस्वर्गं स्वर्गाभावम्, योधानां जातिसंघकुलकर्मवृत्तस्तवं च– जातिः ब्राह्मणत्वादिः, संघः तत्तद्देशीयसंघरूपता, कुलम् अन्ववायः, कर्म जीविका, वृत्तं शीलम्, इत्येषां स्तवं च वर्णयेयुः राज्ञः कथयेयुः । पुरोहितपुरुषा इति । ते कृत्याभिचारम्– शत्रुहिंसिनी देवता कृत्या, तद्द्वारेण अभिचारः शत्रुहिंसार्थोऽथर्वमन्त्रप्रयोगः कृत्याभिचारः, तं ब्रूयुः पुरोहिताऽऽधं कथयेयुः । सत्रिकेत्यादि । सत्रिकः सत्री, वर्धकिः तक्षा, मौहूर्तिकः युद्धारम्भमुहूर्तनिश्चायकः, एते स्वकर्मसिद्धिं परेषाम् असिद्धिं च ब्रूयुः । सत्रिकस्थाने 'यन्त्रिक' इति क्वचित् पाठः । तदा जामदग्न्यादियन्त्रशिल्पी यन्त्रिक इति व्याख्येयम् । श्रीमूला.

**सेनापतिरर्थमानाभ्यामभिसंस्कृतमनीकमाभाषेत– 'शतसाहस्रो राजवधः । पञ्चाशत्साहस्रः सेनापतिकुमारवधः दशसाहस्रः प्रवीरमुख्यवधः । पञ्चसाहस्रो हस्तिरथवधः । साहस्रोऽश्ववधः । शत्यः पत्तिमुख्यवधः । शिरो विंशतिकम् । भोगद्वैगुण्यं स्वयंग्राहश्च' इति । तदेषां दशवर्गाधिपतयो विद्युः ॥**

भूयो योधप्ररोचकमाह– सेनापतिरिति । सर्वसेनाध्यक्षः अर्थमानाभ्याम् अभिसंस्कृतम् अभिपूजितम् अनीकम् आभाषेत । आभाषणप्रकारमाह– राजवधः शतसाहस्र इति । केनचित् भटेन शत्रुराजवधे कृते तस्य सुवर्णलक्षलाभो भवेदित्यर्थः । परसेनापतिकुमारयोरन्यतरवधस्तदर्धलाभ इत्याह– पञ्चाशदित्यादि । प्रवीरपुरुषमुख्यस्य वधः दशसाहस्रलाभः, तदर्धलाभो हस्तिरथान्यतरवधः, साहस्रलाभोऽश्ववधः, शतलाभः पदातिमुख्यवध इत्याह– दश-

साहस्र इत्यादि। शिर इति। छित्त्वाऽऽनीतं योधसामान्यस्यैकं शिरः विंशतिकं पणविंशतिलाभकम्। योद्धृसामान्यस्य युद्धकालिकं लाभसामान्यमाह— भोगद्वैगुण्यमिति। भोगस्य भक्तवेतनात्मनः क्लृप्तस्य द्वैगुण्यम्, स्वयंग्राहश्च युद्धे परस्य सकाशात् अपह्रियमाणस्य कोशादेः अपहर्तृभिर्योधैः स्वत्वेन ग्रहणं च। भवेदिति शेषः। इतिशब्द आभाषणप्रकारसमाप्तौ। तदिति। यथोक्तं राजवधादिविशेषजातं दशवर्गाधिपतयः पदिकसेनापतिनायका वक्ष्यमाणाः विद्युः जानीयुः। श्रीमूला.

**चिकित्सकाः शस्त्रयन्त्रागदस्नेहवस्त्रहस्ताः, स्त्रियश्चान्नपानरक्षिण्यः पुरुषाणामुद्धर्षणीयाः पृष्ठतस्तिष्ठेयुः॥**

योद्धॄणां शस्त्रव्रणचिकित्साद्यर्थमाह— चिकित्सका इति। शल्यशास्त्रवेदिनः शस्त्रयन्त्रागदस्नेहवस्त्रहस्ताः— शस्त्राणि मण्डलाग्रादीनि, यन्त्राणि कङ्कमुखादीनि, अगदानि औषधानि, स्नेहाः घृतादीनि, वस्त्राणि व्रणबन्धपट्टार्थानि, एतानि हस्ते येषां ते तथाभूताः सन्तः, स्त्रियश्च अन्नपानरक्षिण्यः योधहितस्वाद्वन्नपानदायिन्यः पुरुषाणां उद्धर्षणीयाः उच्चैर्हृष्यन्त्याभिरिति तथाभूताः, उद्धर्षणार्था इत्यर्थः, पृष्ठतः युद्धभूमिपश्चाद्भागे तिष्ठेयुः। इत्थं स्वसैन्यप्रोत्साहनं व्याख्यातम्। श्रीमूला.

**अदक्षिणामुखं पृष्ठतःसूर्यमनुलोमवातमनीकं स्वभूमौ व्यूहेत। परभूमिव्यूहे चाश्वांश्चारयेयुः॥**

अथ 'स्वबलान्यबलव्यायोगः' इति सूत्रम्। स्वसैन्यस्य परसैन्यापेक्षया व्यायोगः विशिष्टमायोजनं व्यवस्थापनं दिक्सूर्यवाताद्यानुगुण्यं यथा स्यात् तथा व्यूहरचनमिति यावत्, तदिहाभिधीयते इति सूत्रार्थः।

अदक्षिणामुखमिति। दक्षिणाभिमुख्यस्यामाङ्गलिकत्वात् तदितरदिगभिमुखम्, पृष्ठतःसूर्ये अप्रतिसूर्यम्, अनुलोमवातम् अप्रतिवातम् अनीकं स्वभूमौ तद्योग्यभूमौ व्यूहेत अवस्थापयेत्। परानीकस्य तद्योग्यभूमौ व्यूहनप्रसङ्गे तद्विघातार्थं स्वीयानश्वांस्तत्र चारयेयुरित्याह— परभूमिव्यूहे चेत्यादि। श्रीमूला.

**यत्र स्थानं प्रजवश्चाभूमि व्यूहस्य, तत्र स्थितः प्रजवितश्चोभयथा जीयेत। विपर्यये जयत्युभयथा स्थाने प्रजवे च॥**

यत्र देशे व्यूहस्य स्थानं चिरावस्थानं प्रजवश्च क्षिप्रक्रिया च अभूमि अलब्धावकाशम् अशक्यमित्यर्थः, तत्र स्थितः चिरावस्थितः प्रजवितश्च क्षिप्रक्रियश्च उभयथा जीयेत परेण परिभूयेत। विपर्यये स्थानप्रजवयोरुभयोः सभूमित्वे उभयथा स्थाने प्रजवे च स्थितः प्रजवितश्च प्रकारद्वयेनापीत्यर्थः, जयति परं परिभवति। तथा च स्थानप्रजवोभयानुगुणायां भूमौ व्यूहः कार्य इति फलितम्। श्रीमूला.

**समा विषमा व्यामिश्रा वा भूमिरिति पुरस्तात् पार्श्वाभ्यां पश्चाच्च ज्ञेया। समायां दण्डमण्डलव्यूहाः, विषमायां भोगसंहतव्यूहाः, व्यामिश्रायां विषमव्यूहाः॥**

व्यूहानुगुण्यस्य भूमिविशेषाश्रयत्वात् भूमिं विभजते— समेत्यादि। समविषमव्यामिश्रभेदेन त्रिविधा भूमिः पुरःपार्श्वपश्चाद्भागसंबन्धात् प्रत्येकं त्रिविधेत्यर्थः। तत्र व्यूहव्यवस्थामाह— समायामिति। त्रिप्रकारायां समायाम्, दण्डमण्डलव्यूहाः दण्डव्यूहा मण्डलव्यूहाश्च। कार्या इति शेषः। विषमायां त्रिप्रकारायां भोगसंहतव्यूहाः भोगव्यूहाः संहतव्यूहाश्च कार्याः। व्यामिश्रायां तथाभूतायां विषमव्यूहाः कार्याः। व्यूहानां स्वरूपमधिकरणशेषे वक्ष्यते। श्रीमूला.

**विशिष्टबलं भङ्क्त्वा संधिं याचेत। समबलेन याचितः संदधीत। हीनमनुहन्यात्। न त्वेव स्वभूमिप्राप्तं त्यक्तात्मानं वा॥**

युद्धे शत्रुभङ्गदर्शने विजिगीषुणा कर्तव्यमाह— विशिष्टबलमिति। स्वाभ्यधिकबलं भङ्क्त्वा भङ्गेन योजयित्वा संधिं याचेत। न केवलं नानुप्रहरेत्, किंतु स्वयं संधिमप्यर्थयेत बलाधिकसख्यातिशयार्थमिति भावः। समबलेन भग्नेन याचितः संदधीत। न तु स्वयं संधिं याचेतेत्यर्थः। हीनं हीनबलं भग्नम् अनुहन्यात् अनुबध्य प्रहरेत्। पुनरनुन्मज्जनार्थमित्यर्थः। तत्र विशेषमाह— न त्वेवेत्यादि।

हीनमपि स्वानुगुणभूमिगतं वा जीवितनिराशं वा नानुहन्यादित्यर्थः । श्रीमूला.

**पुनरावर्तमानस्य निराशस्य च जीविते ।**
**अधार्यो जायते वेगस्तस्माद्भग्नं न पीडयेत् ॥**

जीवितनिराशतया प्रत्यावर्तमानस्य हीनबलस्यापि युद्धवेगो धारयितुमशक्यो यस्मात् तस्मात् भग्नं तं भूयः पीडनेन न प्रकोपयेदित्याह– पुनरावर्तमानस्येत्यादि । श्रीमूला.

युद्धानुकूला भूमयः, चतुरङ्गसेनाकर्माणि

**[1]स्वभूमिः पत्त्यश्वरथद्विपानामिष्टा युद्धे निवेशे च ॥**

'युद्धभूमयः' इति सूत्रम् । युद्धानुगुणाः समस्थिराभिकाशादिलक्षणाः भूमयः उच्यन्ते इति सूत्रार्थः ।

स्वभूमिरिति । स्वानुगुणा भूमिः पत्त्यश्वरथद्विपानां युद्धे निवेशे च अवस्थाने च इष्टा अपेक्षिता । श्रीमूला.

**धान्वनवननिम्नस्थलयोधिनां खनकाकाशदिवारात्रियोधिनां च पुरुषाणां नादेयपार्वतानूपसारसानां च हस्तिनामश्वानां च यथास्वमिष्टा युद्धभूमयः कालाश्च ॥**

धान्वनवननिम्नस्थलयोधिनामिति । धान्वनदुर्गयोधिनाम्, वनदुर्गयोधिनाम्, निम्नं जलम्, तद्योधिनाम्, स्थलयोधिनां च, खनकादीनां च– भूमिं खात्वा तत्र स्थित्वा युध्यमानाः खनकयोधिनः, प्राकारबहिर्देशे वृक्षादिशून्ये देशे वा स्थित्वा युध्यमानाः आकाशयोधिनः, दिवैव युध्यमानाः दिवायोधिनः, रात्रावेव युध्यमाना रात्रियोधिनः, इत्येषामष्टविधानां पुरुषाणां पदातीनाम्, नादेयादीनाम् च– नदीसंबन्धिनां पर्वतसंबन्धिनाम् अनूपसंबन्धिनां सरःसंबन्धिनां च हस्तिनाम् अश्वानां च युद्धभूमयः युद्धयोग्या भूमयः कालाश्च तत्तद्भूमियोग्याः ऋतवश्च यथास्वम् इष्टाः धान्वनयोधिनां धन्वभूमिरित्यादिक्रमेण नादेयानां नदीभूमिरित्यादिक्रमेण च यथायथमिष्यन्ते इत्यर्थः । श्रीमूला.

**समा स्थिराऽभिकाशा निरुत्खातिन्यचक्रखुराऽनक्षग्राहिण्यवृक्षगुल्मप्रततिस्तम्भकेदारश्वभ्रवल्मीकसिकतापङ्कभङ्गुरा दरणहीना च रथभूमिः ॥**

रथभूमिमाह– समेति । अदन्तुरा, स्थिरा अशिथिलावयवा, अभिकाशा अभितः काशते भासते तृणाद्यनवच्छन्नत्वात्, निरुत्खातिनी उत्पाटनरहिता, अचक्रखुरा अप्रविशन्तः चक्रखुराः चक्राणि रथाङ्गानि खुराः गवादिशफाश्च यस्यां सा तथाभूता, अनक्षग्राहिणी– अक्षः चक्राधारः, तद्ग्राहिणी न भवति, अवृक्षगुल्मप्रतत्यादिः वृक्षादिरहिता । तत्र गुल्मः सान्द्रपर्णो प्रतानशतगामिनी लता वीरुत्संज्ञा तृणसंघातो वा । प्रततिः लता । स्तम्भः स्थाणुः । केदारः धान्यवापः । श्वभ्रं गर्तः । भङ्गुरं वक्रप्रदेशः । शेषं प्रतीतम् । दरणहीना च दीर्घरेखाकारसुषिररहिता च रथभूमिः । 'भङ्गुरदरणहीना' इति समस्तपाठे स्तम्भशब्दात् प्राग् विसर्गान्तं छेत्तव्यम् । श्रीमूला.

**हस्त्यश्वयोर्मनुष्याणां च समे विषमे हिता युद्धे निवेशे च ॥**

उक्ता रथभूमिरेव हस्त्यश्वमनुष्याणां समे विषमे च देशे युद्धे निवेशे चानुगुणेत्याह– हस्त्यश्वयोरित्यादि । श्रीमूला.

**अण्वश्मवृक्षा ह्रस्वलङ्घनीयश्वभ्रा मन्ददरणदोषा चाश्वभूमिः । स्थूलस्थाण्वश्मवृक्षप्रततिवल्मीकगुल्मा पदातिभूमिः । गम्यशैलनिम्नविषमा मर्दनीयवृक्षा छेदनीयप्रततिः पङ्कभङ्गुरदरणहीना च हस्तिभूमिः ॥**

अश्वादीनां भूमिं सामान्यत उक्त्वा विशेषत आह– अण्वश्मवृक्षेति । क्रूराशिलावृक्षा, ह्रस्वलङ्घनीयश्वभ्रा ह्रस्वेनापि लङ्घयितुं शक्यं श्वभ्रं यस्यां सा तथाभूता, मन्ददरणदोषा स्वल्पदरणदोषा च अश्वभूमिः । मनुष्यभूमिमाह– स्थूलस्थाण्वित्यादि । हस्तिभूमिमाह– गम्य-

(१) कौ. १०।४.

शैलनिम्नविषमेति । गम्याः हस्तिभिः गन्तुं शक्याः शैलाः पर्वताः निम्नानि जलानि विषमाणि दन्तुरस्थलानि च यस्यां सा तथाभूता, मर्दनीयवृक्षा हस्तिमर्दनयोग्यवृक्षयुक्ता, छेदनीयप्रततिः । क्वचित् 'भञ्जनीयप्रततिः' इति पाठः । पङ्कभङ्गुरादिहीना च । 'भङ्गुरा' इत्याकारान्तपाठे भूम्यभिप्रायं स्त्रीत्वं विवक्षणीयम् । रथभूम्यतिदेशासिद्धं पङ्कभङ्गुरदरणहीनत्वं हस्तिभूमेः पुनरुच्यते तस्यां तन्नित्ययोगार्थम् । तेनाश्वपदातिभूम्योस्तद्योगानियमो द्रष्टव्यः । श्रीमूला.

**अकण्टकिन्यबहुविषमा प्रत्यासारवतीति पदातीनामतिशयः ॥**

रथहस्त्यश्वमनुष्याणां भूमेरतिशयलक्षणं गुणविशेषं प्रतिलोमक्रमेणाऽऽह— अकण्टकिनीत्यादि । अबहुविषमा बहुनिम्नोन्नतरहिता । प्रत्यासारवती— प्रत्यासारः प्रतिनिवर्तनावकाशः, तद्युक्ता । इति पदातीनामतिशय इति । एवंप्रकारभूमिलाभः पत्तीनाम् अतिशयहेतुरित्यर्थः ।

श्रीमूला.

**द्विगुणप्रत्यासारा कर्दमोदकखञ्जनहीना निःशर्करेति वाजिनामतिशयः ॥**

पुरःप्रसारावकाशद्विगुणप्रतिनिवर्तनावकाशा पङ्केन तत्प्रायजलेन च रहिता अश्मप्रायमृद्रहिता च भूमिः अश्वानामतिशयहेतुरित्यर्थः । श्रीमूला.

**पांसुकर्दमोदकनलशराधानवती श्वदंष्ट्राहीना महावृक्षशाखाघातवियुक्तेति हस्तिनामतिशयः ॥**

पांसवः रेणवः । कर्दमोदकं पङ्किलजलम् । नलः सुषिराख्यस्तृणविशेषः, शरः मुञ्जः, तयोराधानानि आधीयते धार्यतेऽनेनेत्याधानमिति व्युत्पत्त्या मूलशङ्कव इति नयचन्द्रिका । तैर्युक्ता । श्वदंष्ट्राहीना— श्वदंष्ट्रा गोकण्टकः, तद्धीना । महावृक्षशाखाघातवियुक्ता महतां वृक्षाणां विटपाभिघातहीना । इत्येवंप्रकारा भूमिः हस्तिनाम् अतिशयः । श्रीमूला.

**तोयाशयाश्रयवती निरुत्खातिनी केदारहीना व्यावर्तनसमर्थेति रथानामतिशयः । उक्ता सर्वेषां भूमिः ॥**

तोयाशयैः स्नपनयोग्यजलयुक्तैर्जलाधारैः आश्रयैः विश्रमस्थानैश्च उपेता, निरुत्खातिनी उत्पाटनरहिता, केदारहीना बीजवापहीना, व्यावर्तनसमर्था प्रतिनिवर्तनयोग्यविस्तारयुक्ता, इति ईदृशी भूमिः रथानाम् अतिशयः । भूप्रकरणमुपसंहरति— उक्तेत्यादि ।

श्रीमूला.

**एतया सर्वबलनिवेशा युद्धानि च व्याख्यातानि भवन्ति ॥**

यथोक्तप्रकारया भूम्या । एतामाश्रित्यैवेत्यर्थः । सर्वबलनिवेशाः सर्वेषां बलानां निवेशाः निवेशनकर्माणि युद्धानि च युद्धकर्माणि च व्याख्यातानि कर्तव्यतया निरूपितानि भवन्ति । श्रीमूला.

**भूमिवासवनविचयो विषमतोयतीर्थवातरश्मिग्रहणम्, वीवधासारयोर्घातो रक्षा वा, विशुद्धिः स्थापना च बलस्य, प्रसारवृद्धिः, बाहूत्सारः, पूर्वप्रहारः, व्यावेशनम्, व्यावेधनम्, आश्वासः, ग्रहणम्, मोक्षणम्, मार्गानुसारविनिमयः, कोशकुमाराभिहरणम्, जघनकोट्यभिघातः, हीनानुसारणम्, अनुयानम्, समाजकर्मेत्यश्वकर्माणि ॥**

युद्धभूमिमाश्रितानां बलानां कर्मनिरूपणार्थं सूत्रम्— 'पत्त्यश्वरथहस्तिकर्माणि' इति । पत्त्यादिचतुष्टयस्य कर्माणि अभिधीयन्ते इति सूत्रार्थः ।

तत्र प्रथममश्वकर्माण्याह— भूमिवासवनविचय इति । भूम्यादीनां त्रयाणां विचयः शोधनम् । तदश्वैः कर्तव्यमित्यर्थः । तत्र भूमेर्गूढपरबलनिरासः भूमिविचयः । यत्र बलं स्वैरविमुक्तं वसति तत्र उपद्रवपरिहारः वासविचयः । मार्गमध्यगेषु वनेषु चोरोत्सारणं वनविचयः । विषमेत्यादि । विषमादिपञ्चकग्रहणम्— परानाक्रमणीयस्य निवेशयोग्यस्य प्रदेशस्य पूर्वमेव ग्रहणं विषमग्रहणम्, तोयवतो

जलपूर्णतटाकादियुक्तस्य प्रदेशस्य पूर्वमेव ग्रहणं तोयग्रहणम्, नद्याद्युत्तरणानुकूलस्थानस्य ग्रहणं तीर्थग्रहणम्, स्वानुकूलवातानुभावकदेशग्रहणं वातग्रहणम्, स्वाप्रतिमुखसूर्यरश्मिपातानुगुणदेशग्रहणं रश्मिग्रहणम्। वीवधेत्यादि। स्वदेशादविच्छिन्न आजीवद्रव्यागमः वीवधः, सुहृद्बलागमनम् आसारः, तयोः घातः प्रतिहतिः परस्य, रक्षा वा आत्मीययोस्तु तयोः रक्षणं च। बलस्य सैन्यस्य विशुद्धिः गूढपरसैनिकप्रवेशदोषपरिहारः, स्थापना च परबलनिमित्तक्षोभावसरे स्थैर्यापादनं च। प्रसारवृद्धिः— सर्वतो वनाजीवः प्रसारः, तस्य वृद्धिः उपचयः। बाहूत्सारः परबलस्य बाहुभ्यामिवोत्सारणम्। तेन तद्धेतुभूतं स्वबलोभयपार्श्वयोरश्वानां प्रसरणं लक्ष्यते। पूर्वप्रहारः पूर्वं शत्रुबले प्रहारार्पणम्। तदश्वैरेव क्षिप्रकारिभिः क्रियत इत्यर्थः। व्यावेशनं परबलस्यान्तः प्रविश्य विक्षोभणम्। व्यावेधनं परबलस्य विविधव्यधोत्पादनम्। आश्वासः आश्वासनं स्वबलस्यात्यायासावसन्नस्यानुबलदानम्। ग्रहणं परयोधानामनुगम्याऽऽदानम्। मोक्षणं परगृहीतस्वीयभटमोचनम्। मार्गानुसारविनिमयः मार्गानुसारपरिवृत्तिः। स्वबलस्य मार्गमनुगच्छति परे परबलमार्गस्य स्वयमश्वद्वारेणानुगमनमित्यर्थः। कोशकुमाराभिहरणं परकीयस्य कोशस्य कुमारस्य च परस्यसर्वस्वभूतस्य अभिहरणं परसमक्षं हरणम्। जघनकोटयभिघातः जघने पश्चाद्भागे कोटौ पुरस्तात् पक्षे च अभिघातः। हीनानुसारणं भग्नाश्वयोधानुसारकरणम्। अनुयानं पलायमानपरसैन्यानुगमनम्। समाजकर्म विप्रकीर्णस्य सैन्यस्य संघत्वकरणम्। इत्यश्वकर्माणि उक्तप्रकाराणि अश्वसुकराणि कर्माणि। श्रीमूला.

**पुरोयानमकृतमार्गवासतीर्थकर्म बाहूत्सारस्तोयतरणावतरणे स्थानगमनावतरणं विषमसंबाधप्रवेशोऽग्निदानशमनमेकाङ्गविजयः भिन्नसंधानमभिन्नभेदनं व्यसने त्राणमभिघातो विभीषिका त्रासनमौदार्यं ग्रहणं मोक्षणं सालद्वाराट्टालकभञ्जनं कोशवाहनापवाहनमिति हस्तिकर्माणि॥**

हस्तिनां कर्माण्याह— पुरोयानमिति। स्वसैन्यस्याग्रे गमनम्। अकृतमार्गवासतीर्थकर्म अकृतानां पूर्वमकल्पितानां मार्गाणां वासस्थानानां नद्यवतरणघट्टानां च कल्पनम्। बाहूत्सारः बाहुभ्यामिव परसैन्यस्य स्वसैन्यपार्श्वे स्थित्वोत्सारणम्। तोयतरणावतरणे नद्यादिजले तत्परिमाणज्ञानार्थं तरणमवतरणं च। स्थानगमनावतरणम्— स्थानं शत्रुबलाक्रमणे पङ्क्तिशोऽवस्थितिः, गमनं तथैवाध्वयानम्, अवतरणं तथैवोच्चदेशादेरवरोहणं च। विषमसंबाधप्रवेशः तृणगुल्मादिदुःसंचरे देशे शत्रुसैन्यसमवायसंकटे च प्रवेशः। अग्निदानशमनम् अग्नेः परशिबिरे प्रक्षेपः तस्य स्वशिबिरे परदत्तस्य निर्वापणं च। एकाङ्गविजयः एकेनैव सेनाङ्गेन हस्तिलक्षणेनाश्वादिरहितेनापि शत्रुजयसिद्धिः। भिन्नसंधानं विशीर्णसैन्यैकीकरणम्। अभिन्नभेदनं संघीभूतस्य परसैन्यस्य विशरणम्। व्यसने त्राणं शत्र्वाक्रमणकृतायां रात्र्यादिसत्रोत्पादितायां वा विपदि हस्तिभिः रक्षणम्। अभिघातः परसैन्यमर्दनम्। विभीषिका केवलदर्शनेनापि भयजननम्। त्रासनं मदाद्यवस्थाभवैर्दुष्टचेष्टितैः साध्वसोत्पादनम्। औदार्यं सैन्यमहत्त्वम्। ग्रहणं शत्रुभटादिहरणम्। मोक्षणं परहृतस्वीयभटादिमोचनम्। सालद्वाराट्टालकभञ्जनम्— सालः प्राकारः, द्वारं गोपुरम्, अट्टालकः प्राकाराग्रगृहम्, एषां भञ्जनम्। कोशवाहनापवाहनं कोशस्य राजकीयस्य धनस्य वाहनं संचारणम् अपवाहनं भङ्गावसरे अपनयनं च। इति एवंप्रकाराणि हस्तिकर्माणि। श्रीमूला.

**स्वबलरक्षा चतुरङ्गबलप्रतिषेधः सङ्ग्रामे ग्रहणं मोक्षणं भिन्नसंधानमभिन्नभेदनं त्रासनमौदार्यं भीमघोषश्चेति रथकर्माणि॥**

स्वबलरक्षेति। 'प्राकारतुल्यसंस्थानतया रथानां स्वबलरक्षकत्वम्' इति माधवः। चतुरङ्गबलप्रतिषेधः सङ्ग्रामे युद्धे चतुरङ्गस्य परबलस्य वारणम्। ग्रहणमित्यादिकं षट्कं प्राक् व्याख्यातम्। भीमघोषश्च भयंकरध्वनिकरणं च। इति रथकर्माणि। श्रीमूला.

**सर्वदेशकालशस्त्रवहनं व्यायामश्चेति पदातिकर्माणि॥**

सर्वदेशकालशस्त्रवहनमिति । सर्वस्मिन् देशे समविषमादौ काले प्रावृडादौ च शस्त्राणां धारणम् । व्यायामश्च युद्धव्यायोगश्च । इति पदातिकर्माणि । श्रीमूला.

**शिबिरमार्गसेतुकूपतीर्थशोधनकर्म यन्त्रायुधावरणोपकरणग्रासवहनमायोधनाच्च प्रहरणावरणप्रतिविद्धापनयनमिति विष्टिकर्माणि ॥**

अथ विष्टीनां कर्माण्याह— शिबिरेत्यादि । शिबिरं सेनानिवेशः, मार्गः पन्थाः, सेतुः नद्यादौ जलविधारणकरणम्, कूपः तत्खननम्, तीर्थं नद्याद्यवतरणस्थानम्, एषां शोधनकर्म तृणाद्युन्मूलनादिना शुचीकरणम् । यन्त्रादिपञ्चकवहनम् । आयोधनाच्च प्रहरणावरणप्रतिविद्धापनयनं युद्धभूमेरायुधानां कञ्चुकादीनां बाणविद्धभटादीनां चान्यतोऽपनयनम् । इति विष्टिकर्माणि— अनायुधीयाः कर्मकराः विष्टयः, तेषां कर्माणि । श्रीमूला.

**कुर्याद् गवाश्वव्यायोगं रथेष्वल्पहयो नृपः ।**
**खरोष्ट्रशकटानां वा गर्भमल्पगजस्तथा ॥**

अल्पहयः अल्पाश्वः नृपः रथेषु गवाश्वव्यायोगं अश्वैः सह बलीवर्दानां योजनं कुर्यात् । तथा अल्पगजः नृपः खरोष्ट्रशकटानां गर्भं कुर्यात् खरोष्ट्रयुक्तशकटसंबद्धं सैन्यगर्भं कुर्यात् । गजव्याप्यं सैन्यगर्भं गजाभावात् खरोष्ट्रयुक्तशकटव्याप्तं कुर्यादित्यर्थः । श्रीमूला.

**'यन्त्रैरुपनिषद्योगैस्तीक्ष्णैर्व्यासक्तघातिभिः ।**
**मायाभिर्दैवसंयोगैः शकटैर्हस्तिभूषणैः ॥**
**दूष्यप्रकोपैर्गोयूथैः स्कन्धावारप्रदीपनैः ।**
**कोटीजघनघातैर्वा दूतव्यञ्जनभेदनैः ॥**
**दुर्गं दग्धं हृतं वा ते कोपः कुल्यः समुत्थितः ।**
**शत्रुराटविको वेति परस्योद्वेगमाचरेत् ॥**

श्लोकत्रयमेकान्वयमाह— यन्त्रैरित्यादि । यन्त्रैः जामदग्न्यादिभिः, उपनिषद्योगैः औपनिषदिके वक्ष्यमाणैर्विषधूमाम्बुदूषणादिभिरुपायैः, व्यासक्तघातिभिस्तीक्ष्णैः अन्यासक्तचित्तपुरुषहननशीलैः तीक्ष्णसंज्ञितैर्गूढपुरुषैः, मायाभिः असदर्थप्रदर्शनीभिरिन्द्रजालविद्याभिः, दैवसंयोगैः राज्ञो दैवसाक्षात्कारख्यापनैः, हस्तिभूषणैः शकटैः हस्त्युचितवेषाच्छादनादिच्छन्नस्वरूपैरनोभिः, दूष्यप्रकोपैः शत्रुदूष्याणां कोपोत्पादनैः, गोयूथैः अग्रे गोवृन्दनिवेशनैः, स्कन्धावारप्रदीपनैः शिबिरसंदीपनैः, कोटीजघनघातैर्वा कोटयोः पक्षयोः जघनयोः कक्षयोश्च घातैः अकाण्डप्रहारदानैः वा, दूतव्यञ्जनभेदनैः दूतवेषाणां चाराणामुपजापकरणैश्च परस्योद्वेगमाचरेदित्यग्रिमेणान्वयः । शत्रोर्भयोत्पादनेनैव स्वार्थमन्विच्छेत्, न त्वगतिकगतिभूतेन संदिग्धजयेन युद्धेनेत्यर्थः । भूयोऽप्युद्वेगहेतूनाह— दुर्गमिति । दग्धं हृतमित्यादौ इतिशब्दः प्रत्येकं संबध्यते । दुर्गं दग्धमिति तव दुर्गदाहो जात इत्यनेन हेतुना वा, हृतमिति वा तव दुर्गं स्वायत्तीकृतमित्यनेन वा, ते कुल्यः कोप इति वा त्वत्कुलभवपुरुषनिमित्तो जनपददाहाद्यनर्थरूपः कोप उत्पन्न इत्यनेन वा, ते शत्रुः सामन्तः समुत्थित इत्यनेन वा, ते आटविकः समुत्थित इत्यनेन वा परस्योद्वेगम् आचरेत् । श्रीमूला.

**एकं हन्यान्न वा हन्यादिषुः क्षिप्ता धनुष्मता ।**
**प्राज्ञेन तु मतिः क्षिप्ता हन्याद् गर्भगतानपि ॥**

युद्धान्मन्त्रो बलवत्तरः कार्यसिद्धावित्याह— एकमित्यादि । धानुष्केण बाणः प्रयुक्तः परं हन्यान्न वेति संशयः । यद्यपि वा एकमेव हन्यान्न ततोऽधिकम् । प्रज्ञावता तु केवला मतिरात्मनः प्रयुक्ता परं हन्यादेव, मती च नैकं परम्, किंतु तदीयान् गर्भस्थानपि जनान् हन्तीत्यहो मतेरिष्वपेक्षया शक्त्यतिशयवत्त्वेत्यर्थः । अत एवाऽऽहुः— 'युद्धं सर्वात्मना त्याज्यं राज्यकामेन धीमता । उपायैस्त्रिभिरादानमर्थस्याऽऽह बृहस्पतिः ॥' इति ।

श्रीमूला.

स्वपरबलाबलचिन्तनम्, तदनुसारेण राज्ञो वृत्तिश्च

**' 'बलीयसाऽभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वेतसधर्मा तिष्ठेत् । इन्द्रस्य हि स प्रणमति यो बलीयसो नमति ' इति भारद्वाजः ॥**

(१) कौ. १०।६.

(१) कौ. १२।१.

अथ द्वादशम् आबलीयसं नामाधिकरणमारभ्यते । प्रबलं कंचिदपेक्ष्य हीनबलः अबलः, तदपेक्षया अतिशयेन हीनबलः अबलीयान्, तमधिकृत्य प्रवृत्तं तत्कृत्यप्रतिपादकत्वात् आबलीयसमुच्यते । अथवा– कंचिदपेक्ष्य अतिशयेन बलयुक्तो बलीयान्, तद्भिन्नः अबलीयान् अर्थादतिशयप्रतियोगी दुर्बलः, तमधिकृत्य प्रवृत्तम् आबलीयसम् । प्रबलेऽभियोक्तरि दुर्बलेन यत् कर्तव्यं तदस्मिन्नधिकरणे प्रतिपाद्यते । तत्र 'दूतकर्म' इति प्रथमं सूत्रम् । दूतव्यापारोऽभिधीयते इति सूत्रार्थः । प्रबलस्य संधेयत्वात् संधेश्च दूतमुखत्वात् संधियाचनलक्षणानां दूतकर्मणामिहाभिधानम् ।

तत्र मतभेदान् दिदर्शयिषुरादौ भारद्वाजमतमाह– बलीयसेति । तेन अभियुक्तः दुर्बलः सर्वत्र सर्वविधेऽपि परिभवे अनुप्रणतः तदनुवर्तनपरः वेतसधर्मा तिष्ठेत् । यथा सर्वविधेऽपि जवे नम्रीभूय स्रोतसोऽनुवर्तनं कुर्वन् वञ्जुलस्तिष्ठति तथा स्थितिं कुर्यादित्यर्थः । न च बलीयांसं प्रति प्रणामो दुर्बलस्य लाघवाय, प्रत्युत गौरवावहोऽपीत्यभिप्रायेणाऽऽह– इन्द्रस्य हीत्यादि । श्रीमूला.

**'सर्वसंदोहेन बलानां युध्येत । पराक्रमो हि व्यसनमपहन्ति । स्वधर्मश्चैष क्षत्रियस्य । युद्धे जयः पराजयो वा' इति विशालाक्षः ॥**

विशालाक्षमतमाह– सर्वसंदोहेनेत्यादि । सर्वबलसमूहसाहित्येन युद्ध्वा जयमरणान्यतरप्राप्तिरेव क्षत्रियस्य स्वधर्मः, न तु शत्रुपादपतनमित्यर्थः । श्रीमूला.

**नेति कौटल्यः । सर्वत्रानुप्रणतः कुलैडक इव निराशो जीविते वसति । युध्यमानश्चाल्पसैन्यः समुद्रमिवाप्लवोऽवगाहमानः सीदति । तद् विशिष्टं तु राजानमाश्रितो दुर्गमविषह्यं वा चेष्टेत ॥**

मतद्वयमपि प्रतिषेधति– नेतीति । प्रणामवृत्तौ दोषमाह– सर्वत्रानुप्रणत इत्यादि । तथाभूतो हि कुलमेष इव स्वयूथभ्रष्टस्त्रासाज्जीवितनिराशः कथंचिद् वसतीत्यर्थः । योधने दोषमाह– युध्यमानश्चेत्यादि । अप्लवः तरणसाधनरहितः । सीदति नश्यति । अतः किं कर्तव्यमित्याह– तदिति । तस्मात् विशिष्टं तु राजानं शत्र्वपेक्षयाऽधिकबलमन्यं भूपतिं दुर्गमविषह्यं वा धर्षयितुमशक्यं दुर्गं वा आश्रितः चेष्टेत व्याप्रियेत, अर्थादभियोक्तरि विषये । श्रीमूला.

**त्रयोऽभियोक्तारो धर्मलोभासुरविजयिन इति । तेषामभ्यवपत्त्या धर्मविजयी तुष्यति । तमभ्यवपद्येत परेषामपि भयात् । भूमिद्रव्यहरणेन लोभविजयी तुष्यति । तमर्थेनाभ्यवपद्येत । भूमिद्रव्यपुत्रदारप्राणहरणेनासुरविजयी । तं भूमिद्रव्याभ्यामुपगृह्याग्राह्यः प्रतिकुर्वीत ॥**

चेष्टाभेदान्वक्तुं तद्विषयभूतानभियोक्तॄन् विभजते– त्रय इत्यादि । तेषामिति । त्रयाणां मध्ये धर्मविजयी अभ्यवपत्त्या तवाहमित्यात्मार्पणेन तुष्यति । तं धर्मविजयिनम् अभ्यवपद्येत परेषामपि भयात्, न केवलं धर्मविजयिभयात्, किंतु शत्र्वन्तरभयादपि । न केवलं स्वयं न बाधतेऽभ्यवपत्तारं धर्मविजयी, किंतु शत्र्वन्तरभयादपि स रक्षतीत्यभिप्रायः । भूमिद्रव्यहरणेनेत्यादि । अर्थेन अभ्यवपद्येत धनादिदानेनाऽऽवर्जयेत् । असुरविजयी भूमिद्रव्यपुत्रदारप्राणानां सर्वेषामप्यपहरणेन तुष्यति, अतस्तं भूमिद्रव्ययोर्दानेनाऽऽवर्ज्य तद्धस्तगोचरमप्राप्त एव सन् संध्यादिना प्रतिकुर्यादित्याह– भूमिद्रव्यपुत्रेत्यादि । श्रीमूला.

**तेषामुत्तिष्ठमानं संधिना मन्त्रयुद्धेन कूटयुद्धेन वा प्रतिव्यूहेत । शत्रुपक्षमस्य सामदानाभ्याम् । स्वपक्षं भेददण्डाभ्याम् । दुर्गं राष्ट्रं स्कन्धावारं वाऽस्य गूढाः शस्त्ररसाग्निभिः साधयेयुः ॥**

धर्मविजयिलोभविजय्यसुरविजयिनाम् अन्यतमम् उत्तिष्ठमानम् अभियुञ्जानं संधिना मन्त्रयुद्धेन कूटयुद्धेन वा वक्ष्यमाणप्रकारेण प्रतिव्यूहेत अपकुर्वीत । तत्र मन्त्रयुद्धस्य प्रकारमाह– शत्रुपक्षमिति । अस्य प्रबलस्याभियोक्तुः शत्रुपक्षं सामदानाभ्यां प्रतिव्यूहेत । स्वपक्षम् अमात्यादिप्रकृतिवर्गं भेददण्डाभ्यां प्रतिव्यूहेत । कूटयुद्धप्रकारमाह– दुर्गमिति । दुर्गं स्थानीयं राष्ट्रं जनपदं स्कन्धावारं वा सेनानिवेशं वा अस्य गूढाः गूढपुरुषाः

शस्त्ररसाग्निभिः आयुधप्रहारविषाग्निदाहैः साधयेयुः । श्रीमूला.

**सर्वतः पार्ष्णिमस्य ग्राहयेत् । अटवीभिर्वा राज्यं घातयेत् । तत्कुलीनावरुद्धाभ्यां वा हारयेत् ॥**

सर्वत इति । पृष्ठतः पार्श्वतश्च पार्ष्णिम् अस्य अभियोक्तुः ग्राहयेत् । अटवीभिर्वेति । आटविकैर्वा राज्यं दुर्गजनपदादिकं घातयेत् । तत्कुलीनावरुद्धाभ्यामिति । अभियोक्तुः कुलीनः ज्ञातिः, अवरुद्धः पुत्रादिः, ताभ्यां वा हारयेत् राज्यम् । श्रीमूला.

**अपकारान्तेषु चास्य दूतं प्रेषयेत् । अनपकृत्य वा संधानम् ॥**

इत्थमपकारान् कृत्वा तदनन्तरं संधानार्थं दूतं प्रेषयेदित्याह— अपकारान्तेषु चेत्यादि । अपकारबाधिते हि शत्रौ संधिः प्रयुज्यमानः तप्तलोहन्यायेनावश्यं फलतीत्यभिप्रायः । सर्वथैवापकारकरणाशक्तौ त्वाह— अनपकृत्य वा संधानमिति । याचनीयमिति शेषः ।

श्रीमूला.

**तथाऽप्यभिप्रयान्तं कोशदण्डयोः पादोत्तरमहोरात्रोत्तरं वा संधिं याचेत ॥**

सुवर्णादिपणनेन दण्डपणनेन वा याचितेऽपि संधौ अभियानादनिवर्तमानं प्रबलं कोशदण्डयोः पूर्वपणितसंख्यस्य धनस्य सैन्यस्य च पादोत्तरं चतुर्थांशाधिकं संधिं याचेत । पूर्वपणितं सुवर्णलक्षसंधिं अश्वादिशतसंधिं वा अनभ्युपगच्छति संधेये सुवर्णलक्षं पञ्चविंशतिसहस्राधिकं कृत्वा अश्वादिशतं पञ्चविंशत्यधिकं कृत्वा च भूयः संधिं याचेतेत्यभिप्रायः । अहोरात्रोत्तरं संधिं याचेतेत्यस्यायमर्थः— इयतो मासानिदं कर्तव्यमिति पूर्वपणितं माससंन्धिमनुपगच्छति संधेये पुनस्तमधिकदिवसयुक्तं कृत्वा याचेतेति । श्रीमूला.

**स चेद् दण्डसंधिं याचेत, कुण्ठमस्मै हस्त्यश्वं दद्यादुत्साहितं वा गरयुक्तम् ॥**

पणितयोः कोशदण्डयोर्दानविधिमाह— स इति । अबलीयान् दण्डसंधिं सैन्यसंधिं याचेत चेत्, अस्मै संधेयाय कुण्ठं कर्माशक्तं हस्त्यश्वं दद्यात् । वा अथवा उत्साहितं शूरं गरयुक्तं मासार्धमासाद्यभ्यन्तरकालमारकविषयुक्तं कृत्वा दद्यात् । श्रीमूला.

**पुरुषसंधिं याचेत, दूष्यामित्राटवीबलमस्मै दद्याद्योगपुरुषाधिष्ठितम् । तथा कुर्याद्यथोभयविनाशः स्यात् । तीक्ष्णबलं वाऽस्मै दद्यात्, यदवमानितं विकुर्वीत । मौलमनुरक्तं वा, यदस्य व्यसनेऽपकुर्यात् ॥**

पदातिदानसंधिं चेत् प्रार्थयेत, दूष्यामित्राटवीबलं दूष्यबलम् अमित्रबलम् आटविकबलं च अस्मै संधेयाय दद्यात् । कथंभूतम् ? योगपुरुषाधिष्ठितं योगपुरुषैः विषधूमाम्बुदानादिना दूष्यादिबलमारणक्षमैर्गूढपुरुषैरधिष्ठितम् । तथा कुर्यादिति । तेन प्रकारेण संविधानं कुर्यात् यथा येन प्रकारेण उभयविनाशः दूष्यादिबलशत्रुबलयोरुभयोर्विनाशः स्यात् । तीक्ष्णबलं वेत्यादि । विकुर्वीत कुपितं सत् अपकुर्यात् । व्यसने अपकुर्यात् अपकारस्थानं प्रतीक्ष्यापकारं कुर्यात् । श्रीमूला.

**कोशसंधिं याचेत, सारमस्मै दद्याद्यस्य क्रेतारं नाधिगच्छेत्, कुप्यमयुद्धयोग्यं वा ॥**

कोशसंधिं याचेतेति । तं चेत् प्रार्थयेत, सारं महार्घं रत्नादि अस्मै संधेयाय दद्यात् । सारं विशिनष्टि— यस्य सारस्य दत्तस्य क्रेतारं तदनुरूपमूल्यदानशक्तं नाधिगच्छेत् । कुप्यमिति । अयुद्धयोग्यं कुप्यं वा वस्त्रास्तरणादि वा दद्यात् । श्रीमूला.

**भूमिसंधिं याचेत, प्रत्यादेयां नित्यामित्रामनपाश्रयां महाक्षयव्ययनिवेशां वाऽस्मै भूमिं दद्यात् ॥**

नित्यामित्रां नित्यसंनिहितशत्रुकाम् । अनपाश्रयां दुर्गरहिताम् । महाक्षयव्ययनिवेशां महान्तौ क्षयव्ययौ युग्यपुरुषधान्यापचयौ यस्य स तथाभूतो निवेशो यस्यां तां तथाभूताम् । श्रीमूला.

**सर्वस्वेन राजधानीवर्जेन संधिं याचेत बलीयसः ॥**

राजधानीवर्जेन स्ववासार्थं राजधानीं वर्जयित्वा । बलीयसः बलवत्तरस्य सकाशादित्यर्थः । श्रीमूला.

**यत् प्रसह्य हरेदन्यस्तत् प्रयच्छेदुपायतः ।**
**रक्षेत् स्वदेहं न धनं का ह्यनित्ये धने दया ॥**

प्रसह्य बलात्कारेण । अन्यः बलीयान् । उपायतः संधिव्याजेन । का ह्यनित्ये धने दयेति । संति देहे नष्टधनप्रत्यार्जनमपि सुकरमिति कृत्वा तस्मिन् दयाऽवश्यं कर्तव्येत्यर्थः । श्रीमूला.

युद्धे परवञ्चनप्रकाराः

**'स चेत् संधौ नावतिष्ठेत, ब्रूयादेनम्– ' इमे षड्वर्गवशगा राजानो विनष्टाः, तेषामनात्मवतां नार्हसि मार्गमनुगन्तुम् । धर्ममर्थं चावेक्षस्व । मित्रमुखा ह्यमित्रास्ते ये त्वां साहसमधर्ममर्थातिक्रमं च ग्राहयन्ति । शूरैस्त्यक्तात्मभिः सह योद्धुं साहसम् । जनक्षयमुभयतः कर्तुमधर्मः । दृष्टमर्थं मित्रमदुष्टं च त्यक्तुमर्थातिक्रमः । मित्रवांश्च स राजा भूयश्चैतेनार्थेन मित्राण्युद्योजयिष्यति यानि त्वा सर्वतोऽभियास्यन्ति । न च मध्यमोदासीनयोर्मण्डलस्य वा परित्यक्तः, भवांस्तु परित्यक्तो ये त्वां समुद्युक्तमुपप्रेक्षन्ते– भूयः क्षयव्ययाभ्यां युज्यताम्, मित्राच्च भिद्यताम्, अथैनं परित्यक्तमूलं सुखेनोच्छेत्स्याम इति । भवान् नार्हति मित्रमुखानाममित्राणां श्रोतुम्, मित्राण्युद्वेजयितुम्, अमित्रांश्च श्रेयसा योक्तुम्, प्राणसंशयमनर्थं चोपगन्तुम् ' इति । यच्छेत् ॥**

' मन्त्रयुद्धम् ' इति सूत्रम् । मन्त्रः प्रज्ञोत्कर्षः, तेन युद्धं शत्रोर्मत्युत्पादनादिना वञ्चनं मन्त्रयुद्धम्, तदभिधीयते इति सूत्रार्थः । संधिं याचितः शत्रुर्यदि नोपगच्छेत् तदा किं कर्तव्यमित्येतदिहोपदिश्यते ।

स चेत् संधौ नावतिष्ठेतेत्यादि । ' इमे ' इत्यादिः ' प्राणसंशयमनर्थं चोपगन्तुम् ' इत्यन्तो वचनप्रकारः । इमे नामग्रहणपूर्वं निर्दर्शिताः । मित्रमुखा अमित्राः मित्रभावं वाचा बहिर्नाटयन्तः परमार्थतः शत्रव इत्यर्थः । त्यक्तात्मभिः उपेक्षितदेहैः । योद्धुं साहसं योधनमविचारितानुष्ठानमित्यर्थः । दृष्टमर्थं करगतं पणितमर्थं कोशादिम् । एतेनार्थेन त्वदस्वीकृतेन संधिद्रव्येण । त्वा सर्वतोऽभियास्यन्ति त्वां परिवार्याभियोक्ष्यन्ते । न च परित्यक्तः अर्थात् संधियाचकोऽभियोज्यः । मध्यमोदासीनमण्डलास्तव सुखोच्छेदाय शक्तिक्षयं बहुभिः प्रकारैः प्रतीक्षमाणाः सन्तस्त्वामिदानीं कृताभियोगमुपेक्षन्ते इत्याह– ये त्वामित्यादिना । ' यत् त्वाम् ' इति पाठे उपेक्षणकर्तारो गम्याः । ' उच्छेत्स्यामहे ' इति पाठे आत्मनेपदमार्षम् । श्रोतुम् अर्थादुपदेशान् । अनर्थम् अर्थहानिम् । यच्छेदिति । गृहीतयथोक्तोपदेशाय संध्यर्थं दद्यादित्यर्थः । श्रीमूला.

**तथापि प्रतिष्ठमानस्य प्रकृतिकोपमस्य कारयेद् यथा संघवृत्ते व्याख्यातम्, योगवामने च । तीक्ष्णरसदप्रयोगं च । यदुक्तमात्मरक्षितके रक्ष्यम्, तत्र तीक्ष्णान् रसदांश्च प्रयुञ्जीत ॥**

तमप्युपदेशमनभ्युपगच्छति संधेये कर्तव्यमाह– तथापीत्यादि । एवमुपदेशे कृतेऽपि प्रतिष्ठमानस्य अभियुञ्जानस्य अस्य प्रकृतिकोपम् अमात्यादिभेदनं कारयेत् । कथम् ? यथा येन प्रकारेण संघवृत्ते व्याख्यातम् उपदिष्टम् अर्थात् भेदनम्, योगवामने च योगवामनप्रकरणे व्याख्यास्यते च । तथेति शेषः । घातनमाह– तीक्ष्णरसदप्रयोगं चेति । कारयेदिति वर्तते । उक्तमेव विवृणोति– यदुक्तमित्यादि । स्पष्टार्थम् । श्रीमूला.

सेनामुख्यादिवधभेदनप्रकाराः

**बन्धकीपोषकाः परमरूपयौवनाभिः स्त्रीभिः सेनामुख्यानुन्मादयेयुः । बहूनामेकस्यां द्वयोर्वा मुख्ययोः कामे जाते तीक्ष्णाः कलहानुत्पादयेयुः । कलहे पराजितपक्षं परत्रापगमने यात्रासाहाय्यदाने वा भर्तुर्योजयेयुः ॥**

' सेनामुख्यवधः ' इति सूत्रम् । वधो भेदनस्याप्युपलक्षणम् । सेनामुख्यानां भेदनघातने उच्येते इति सूत्रार्थः । तयोः पूर्वोक्तयोः सेनामुख्या अपि विषया इति प्रकरणारम्भः ।

(१) कौ. १२।२.

भेदनोपायमाह— बन्धकीपोषका इत्यादि । बहूनामित्यादि । बहूनां त्रिप्रभृतीनां मुख्यानाम् । कलहे इत्यादि । परत्रापगमने पूर्वाश्रितपक्षापहानेन विजिगीषुपक्षाश्रयणे । भर्तुः स्वामिनो विजिगीषोः यात्रासाहाय्यदाने वा विजिगीषुयात्रासाह्यकरणे च । श्रीमूला.

**कामवशान् वा सिद्धव्यञ्जनाः सांवननिकीभिरोषधीभिरतिसंधानाय मुख्येषु रसं दापयेयुः ॥**

घातनोपायमाह— कामवशान् वेत्यादि । सेनामुख्येषु मध्ये ये कामवशगास्तान् सिद्धवेषाः स्त्रीसंवननप्रयोजनाभिरोषधीभिः सह विषम् अतिसंधानार्थं तन्मित्रव्यञ्जनद्वारेण प्राशयेयुरित्यर्थः । श्रीमूला.

**वैदेहकव्यञ्जनो वा राजमहिष्याः सुभगायाः प्रेष्यामासन्नां कामनिमित्तमर्थेनाभिवृष्य परित्यजेत् । तस्यैव परिचारकव्यञ्जनोपदिष्टः सिद्धव्यञ्जनः सांवननिकीमोषधीं दद्यात्— वैदेहकशरीरेऽवधातव्येति । सिद्धे सुभगाया अप्येनं योगमुपदिशेत्— राजशरीरेऽवधातव्येति । ततो रसेनातिसंदध्यात् ॥**

राज्ञो विषदानविधानमाह— वैदेहकव्यञ्जनो वेति । वणिग्व्यञ्जनः राजमहिष्याः सुभगायाः सुन्दर्याः प्रेष्यामासन्नाम् अन्तरङ्गपरिचारिकां कामनिमित्तं भोगार्थम् अर्थेन अभिवृष्य प्रचुरधनवर्षणेन संभाव्य परित्यजेत् पुनर्नोपगच्छेत् । तस्यैवेति । वैदेहकव्यञ्जनस्यैव परिचारकव्यञ्जनोपदिष्टः परिचारकवेषेण पुरुषेण प्रेरितः सिद्धव्यञ्जनः सांवननिकीम् ओषधीं दद्यात् । किमित्युक्त्वा ? वैदेहकशरीरे अवधातव्या क्षेप्तव्या तद्वशीकरणार्थमित्युक्त्वा । सिद्धे इति । तथाकरणेन वैदेहकवशीकरणे सिद्धे सति । वैदेहके तद्वश्यतामात्मनोऽभिनयति सतीति यावत् । सुभगाया अपि राजमहिष्या अपि एनम् उक्तं योगं सांवननिकौषधिप्रयोगम् उपदिशेत् । किमित्युक्त्वा ? राजशरीरे अवधातव्या अर्थात् ओषधिः इत्युक्त्वा । ततो रसेनातिसंदध्यादिति । तस्मिन् योगे विषयोजनेन राजानं घातयेदित्यर्थः । श्रीमूला.

**कार्तान्तिकव्यञ्जनो वा महामात्रं राजलक्षणसंपन्नं क्रमाभिनीतं ब्रूयात् । भार्यामस्य भिक्षुकी— 'राजपत्नी राजप्रसविनी वा भविष्यसि' इति ॥**

महामात्रभेदनमाह— कार्तान्तिकव्यञ्जनो वेति । लक्षणादिना भविष्यदर्थादेष्टा कार्तान्तिकः, तद्व्यञ्जनो गूढपुरुषो वा महामात्रं राजलक्षणसंपन्नं ब्रूयात् 'त्वं राजा भविष्यसि' इति वदेत् । कथंभूतम् ? क्रमाभिनीतं बहुकृत्वो निजादेशसंवादप्रदर्शनेनाभिमुखीकृतम् । विश्वासितमित्यर्थः । भार्यामिति । अस्य महामात्रस्य भार्यां भिक्षुकी । ब्रूयादिति संबध्यते । किमिति ? 'राजपत्नी राजप्रसविनी वा भविष्यसि' इति । इत्थं वचनेन महामात्रस्य राजत्वलोभोदयात् राज्ञा सह विरोधो जायेतेत्यभिप्रायः ।

श्रीमूला.

**भार्याव्यञ्जना वा महामात्रं ब्रूयात्— 'राजा किल मामवरोधयिष्यति, तवान्तिकाय पत्रलेख्यमाभरणं चेदं परिव्राजिकयाऽऽहृतम्' इति ॥**

प्रकारान्तरमाह— भार्याव्यञ्जना वेति । निजरूपगुणात् महामात्रस्य भार्यात्वं प्राप्य तदतिसंधानावसरं प्रतीक्षमाणा बन्धकीत्यर्थः, महामात्रं ब्रूयात् । कथमिति ? राजा किल मां अवरोधयिष्यति स्वान्तःपुरं नेष्यति, तव अन्तिकाय इदं पत्रलेख्यम् आभरणं च, राजदत्तमिति शेषः, परिव्राजिकया दूतीभूतया आहृतमिति । अनेन निमित्तेन महामात्रस्य राज्ञि द्वेषो जायेतेत्यभिप्रायः । श्रीमूला.

**सूदारालिकव्यञ्जनो वा रसप्रयोगार्थं राजवचनमर्थं चास्य लोभनीयमभिनयेत् । तदस्य वैदेहकव्यञ्जनः प्रतिसंदध्यात्, कार्यसिद्धिं च ब्रूयात् । एवमेकेन द्वाभ्यां त्रिभिरित्युपायैरेकैकमस्य महामात्रं विक्रमायापगमनाय वा योजयेदिति ॥**

प्रकारान्तरमाह— सूदारालिकव्यञ्जनो वेति । पाचकसूपकारव्यञ्जनो वा रसप्रयोगार्थं पानपानीयादिषु विषयोजनार्थं राजवचनम् । 'राजवचनात्' इति पाठो न समञ्जसः । अर्थं च धनं च अस्य रसप्रयोगस्य लोभनीयं

प्रभूतत्वेन हेतुना कामयितव्यम् अभिनयेत् स्वसै राज्ञा दत्तं व्यपदिशेत् । तदस्येति । अस्य राज्ञः तत् उक्तं कर्म वैदेहकव्यञ्जनः विषविक्रेतृवेषो गूढपुरुषः प्रतिसंदध्यात् संवादयेत् । 'राजवचनात् मया त्वत्सूदारालिकहस्ते विषं दत्तम्, तत् किमर्थमिति तु न वेद्मि' इत्यादिकथनेन सूदारालिकवचने महामात्रस्य विश्वासं जनयेदित्यभिप्रायः । कार्यसिद्धिं च ब्रूयादिति । तेन विषेण सद्योमरणलक्षणं कार्यं सिध्येदिति च वदेदित्यर्थः । अनेन प्रकारेण सामाद्युपायैर्व्यस्तैः समस्तैः यथासंभवं मिलितैर्वा राज्ञ एकैकं महामात्रं राज्ञा सह विरोधितं कृत्वा योधनायापसरणाय वा संनाहयेदित्याह– एवमेकेनेत्यादि । इत्थं महामात्राणां राज्ञो भेदनमभिहितम् ।

श्रीमूला.

**दुर्गेषु चास्य शून्यपालासन्नाः सत्रिणः पौरजानपदेषु मैत्रीनिमित्तमावेदयेयुः– "शून्यपालेनोक्ता योधाश्चाधिकरणस्थाश्च– 'कृच्छ्रगतो राजा जीवन्नागमिष्यति न वा, प्रसह्य वित्तमार्जयध्वममित्रांश्च हत" इति । बहुलीभूते तीक्ष्णाः पौरान् निशास्वाहारयेयुः, मुख्यांश्चाभिहन्युः– 'एवं क्रियन्ते, ये शून्यपालस्य न शुश्रूषन्ते' इति । शून्यपालस्थानेषु च सशोणितानि शस्त्रवित्तबन्धनान्युत्सृजेयुः । ततः सत्रिणः 'शून्यपालो घातयति विलोपयति च' इत्यावेदयेयुः ॥**

अथ शून्यपालात् पौराणां भेदनमाह– दुर्गेषु चेति । स्थानीयेषु च अस्य परस्य राज्ञः शून्यपालासन्नाः– शत्रभियोगप्रयाणवशात् राज्ञा विरहितं स्थानीयं शून्यम्, तत्पालः तद्रक्षकः, तस्य आसन्नाः आप्तत्वाभिनयिनः सत्रिणः पौरजानपदेषु मैत्रीनिमित्तं शून्यपालविषयानुरागोत्पादनार्थम् आवेदयेयुः प्रज्ञापयेयुः । 'शून्यपालेनोक्ताः' इत्यादिना आवेदनीयार्थोपन्यासः । 'कृच्छ्रगतः' इत्यादिना च शून्यपालवचनोपन्यासः । प्रसह्य बलात्कारेण । अमित्रांश्च हत स्वस्वशत्रूंश्च व्यापादयत । बहुलीभूत इति । सर्वतः प्रसृते सति अर्थाच्छून्यपालाज्ञाप्रवादे तीक्ष्णाः पौरान् निशासु रात्रिषु आहारयेयुः बलादाहरतः प्रयोजयेयुः, मुख्यांश्च अभिहन्युः 'एवं क्रियन्ते' इति । इत्थं बलादभिहन्यन्ते । के ? ये शून्यपालस्य न शुश्रूषन्ते आराधनं न कुर्वन्ति । इति अनेन प्रकारेण, अभिहननसमये वदन्त इति शेषः । एतच्च शून्यपाले परिवादसमारोपार्थम् । हननस्य शून्यपालकारितत्वप्रतीतिजननार्थं कर्तव्यमाह– शून्यपालस्थानेषु चेति । शून्यपालवास्तुषु सशोणितानि रुधिराङ्कितानि शस्त्रवित्तबन्धनानि आयुधानि धनबन्धनरज्जूश्च उत्सृजेयुः । तत इति । इत्थं शून्यपालापराधसंभावनानुकूलसंविधानकरणानन्तरं सत्रिणः आवेदयेयुः पौरान् बोधयेयुः । कथमिति ? 'शून्यपालो घातयति, विलोपयति च धनमाहारयति च' इति ।

श्रीमूला.

**एवं जानपदान् समाहर्तुर्भेदयेयुः ॥**

अनेन शून्यपालपौरभेदनन्यायेन जानपदान् समाहर्तुः समाहर्तृसकाशात् भेदयेयुः । श्रीमूला.

**समाहर्तृपुरुषांस्तु ग्राममध्येषु रात्रौ तीक्ष्णा हत्वा ब्रूयुः– 'एवं क्रियन्ते, ये जनपदमधर्मेण बाधन्ते' इति ॥**

अथ जानपदेभ्यः समाहर्तारं भेदयितुमुपायमाह– समाहर्तृपुरुषांस्त्विति । समाहर्तुरधश्चरान् पुरुषान् ग्राममध्येषु रात्रौ तीक्ष्णाः हत्वा ब्रूयुः । वक्तव्यप्रकारमाह– एवं क्रियन्ते इत्यादि । एवं स्वीयपुरुषहननेन तदपख्यातिसृष्ट्या च जानपदेभ्यः समाहर्ता विरज्य भिद्येतेत्यभिप्रायः । श्रीमूला.

**समुत्पन्ने दोषे शून्यपालं समाहर्तारं वा प्रकृतिकोपेन घातयेयुः । तत्कुलीनमवरुद्धं वा प्रतिपादयेयुः ॥**

इत्थं सत्र्यादिभिरारोपिते दोषे सर्वतः प्रथां प्राप्ते सति शून्यपालं समाहर्तारं वा प्रकृतिभिरेकलोष्टवधेन सत्रिणो घातयेयुः, परस्य ज्ञातिं तत्पुत्रं वाऽवरुद्धं राज्ये निवेशयेयुश्चेत्याह– समुत्पन्न इत्यादि । श्रीमूला.

**अन्तःपुरपुरद्वारद्रव्यधान्यपरिग्रहान् ।**
**दहेयुस्तांश्च हन्युर्वा ब्रूयुरस्याऽऽर्तवादिनः ॥**

अध्यायप्रान्ते श्लोकमाह— अन्तःपुरेत्यादि । अस्य शत्रोः अन्तःपुरपुरद्वारद्रव्यधान्यपरिग्रहान् अन्तःपुरं गोपुरं काष्ठादिद्रव्याणां शाल्यादिधान्यानां च संग्रहागाराणि च दहेयुः । तांश्च अन्तपुरादीन् अर्थात् तत्पालकांश्च हन्युर्वा । आर्तवादिनः दाहहननाभ्यामन्यकृताभ्यामिवाऽऽत्मानमार्तिमन्तमभिनयन्तः अस्य पौरस्य जानपदस्य च ब्रूयुः स्वकृतं दाहादिकमकृत्यं पौरजानपदकृतमिति वदेयुरित्यर्थः । श्रीमूला.

वञ्चनेन सेनामुख्यानां वधः, दशराजकमण्डले बलवत्तरस्य युद्धे प्रोत्साहनम्

**[1]राज्ञो राजवल्लभानां चाऽऽसन्नाः सत्रिणः पत्त्यश्वरथद्विपमुख्यानाम् 'राजा क्रुद्धः' इति सुहृद्विश्वासेन मित्रस्थानीयेषु कथयेयुः । बहुलीभूते तीक्ष्णाः कृतरात्रिचारप्रतीकाराः गृहेषु 'स्वामिवचनेनाऽऽगम्यताम्' इति ब्रूयुः । तान् निर्गच्छत एवाभिहन्युः । 'स्वामिसंदेशः' इति चाऽऽसन्नान् ब्रूयुः । ये च प्रवासितास्तान् सत्रिणो ब्रूयुः— 'एतत्तद् यदस्माभिः कथितम्, जीवितुकामेनापक्रान्तव्यम्' इति ॥**

सेनामुख्यवधप्रकरणस्यार्थशेषमाह— राज्ञ इति । तस्य राजवल्लभानां च आसन्नाः मित्रवेषाः सत्रिणः पत्त्यश्वरथद्विपमुख्यानाम्— पत्त्यादिशब्दैस्तत्तदध्यक्षा गृह्यन्ते, मुख्यशब्देन महामात्राः, तेषां मित्रस्थानीयेषु सुहृद्विश्वासेन सौहार्दविस्रम्भेण कथयेयुः । कथमिति ? राजा क्रुद्ध इति पत्त्यध्यक्षादीन् प्रति राजा कुपित इति । बहुलीभूत इति । राजकोपप्रवादे सर्वतः प्रसृते सति तीक्ष्णाः कृतरात्रिचारप्रतीकाराः सज्जितरात्रिसंचारदोषप्रतिक्रियाः सन्तः गृहेषु, गत्वेति शेषः, 'स्वामिवचनेन आगम्यताम्, अर्थात् स्वाम्यन्तिकम्' इति ब्रूयुः । तान् पत्त्यध्यक्षादीन् निर्गच्छत एव अभिहन्युः, स्वामिसंदेश इति च स्वाम्याज्ञया इदमस्माभिः कृतमिति च आसन्नान् मित्रवेषान् सत्रिणः ब्रूयुः । तथोक्ताश्च सत्रिणः अनेन राजसकाशानपक्रान्तमुख्यादिगतिनिदर्शनेन तदपक्रान्तपूर्वान् प्रति आत्मना पूर्वं कथितस्य राजदोषस्य प्रत्यक्षदृष्टतां बोधयेयुः शेषापक्रमणार्थमित्यभिप्रायकमाह— ये च प्रवासिता इत्यादि । इह अपक्रान्तव्यमित्यार्षम् । अपक्रमितव्यमिति हि भाव्यम् । श्रीमूला.

**येभ्यश्च राजा याचितो न ददाति, तान् सत्रिणो ब्रूयुः— "उक्तः शून्यपालो राज्ञा— 'अयाच्यमर्थमसौ चासौ मा याचते । मया प्रत्याख्याताः शत्रुसंहिताः । तेषामुद्धरणे प्रयतस्व' इति" । ततः पूर्ववदाचरेत् ॥**

उपजापस्य प्रकारान्तरमाह— येभ्यश्च राजा याचितो न ददातीत्यादि । मा माम् । प्रत्याख्याताः याचितार्थदानेन न संभाविताः, अर्थादयाच्ययाचितारः पुरुषविशेषाः । शत्रुसंहिताः अदाननिमित्तात् कोपाच्छत्रुणा संगताः । इतिशब्दानन्तरमन्य इतिशब्दोऽध्याहर्तव्यः । ततः पूर्ववदाचरेदिति । पूर्ववदाचरणं तु तीक्ष्णैः कतिपयानां रात्रौ घातनम् अघातितानां तद्वधनिदर्शनेन राजसकाशादपक्रामणं च पूर्वोक्तं द्रष्टव्यम् । श्रीमूला.

**येभ्यश्च राजा याचितो ददाति, तान् सत्रिणो ब्रूयुः— "उक्तः शून्यपालो राज्ञा— 'अयाच्यमर्थमसौ चासौ च मा याचते, तेभ्यो मया सोऽर्थो विश्वासार्थं दत्तः, शत्रुसंहिताः । तेषामुद्धरणे प्रयतस्व' इति" । ततः पूर्ववदाचरेत् ॥**

याचितार्थदानसंभावितविषयेऽप्युपजापमाह— येभ्यश्च राजा याचितो ददातीत्यादि । शत्रुसंहिताः शत्रुणा संगताः, अर्थात् ते याचितारः । श्रीमूला.

**ये चैनं याच्यमर्थं न याचन्ते तान् सत्रिणो ब्रूयुः— "उक्तः शून्यपालो राज्ञा— 'याच्यमर्थमसौ चासौ च मा न याचते, किमन्यत् स्वदोषशङ्कितत्वात् ? तेषामुद्धरणे प्रयतस्व' इति" । ततः पूर्ववदाचरेत् ॥**

(१) कौ. १२।२.

याच्यार्थायाचितृविषयेऽप्युपजापमाह– ये चैनं याच्यमर्थं न याचन्त इत्यादि । किमन्यदिति । अयाचने निमित्तं स्वदोषशङ्कितत्वातिरिक्तं न किंचित् भवितुमर्हतीत्यर्थः । श्रीमूला.

**एतेन सर्वः कृत्यपक्षो व्याख्यातः ॥**

उक्तं मुख्यभेदनप्रकारं क्रुद्धलुब्धभीतवर्गेऽतिदिशति – एतेनेत्यादि । श्रीमूला.

**प्रत्यासन्नो वा राजानं सत्री ग्राहयेत्– 'असौ चासौ च ते महामात्रः शत्रुपुरुषैः संभाषते' इति । प्रतिपन्ने दूष्यानस्य शासनहरान् दर्शयेत्– 'एतत्तत्' इति ॥**

इत्थं महामात्रादीनां राजसकाशात् भेदनमभिहितम् । इदानीं महामात्रादिसकाशात् राज्ञो भेदनमाह– प्रत्यासन्नो वेति । आसन्नच्छन्ना सत्री राजानं ग्राहयेत् बोधयेत् । कथमित्याह– असौ चासौ चेत्यादि । प्रतिपन्न इति । सत्रिवचनेऽङ्गीकृते सति अस्य दूष्यान् विजिगीषोर्दूषणीयत्वेन वध्यान् शासनहरान् महामात्रं प्रति शासननेतॄन् पथि गृहीतान् दर्शयेत् अर्थात् राज्ञे– एतत् तदिति यन्मयोक्तं पूर्वं तत् प्रत्यक्षं जातमिति । कथयन्निति शेषः । श्रीमूला.

**सेनामुख्यप्रकृतिपुरुषान् वा भूम्या हिरण्येन वा लोभयित्वा स्वेषु विक्रमयेदपवाहयेद् वा । योऽस्य पुत्रः समीपे दुर्गे वा प्रतिवसति तं सत्रिणोपजापयेत्– 'आत्मसंपन्नतरस्त्वं पुत्रस्तथाऽप्यन्तर्हितः, तत् किमुपेक्षसे? विक्रम्य गृहाण, पुरा त्वा युवराजो विनाशयति' इति ॥**

सेनामुख्याः बलाध्यक्षाः, प्रकृतयः अमात्यादयः, पुरुषाः भृतकाः, एतान् वा भूम्या हिरण्येन वा लोभयित्वा 'भूमिहिरण्ये वो दास्यामि' इत्युपप्रलोभ्य स्वेषु विक्रमयेत् अभियोजयेत्, अपवाहयेद्वा स्वेभ्योऽपसारयेद्वा । प्रकारान्तरमाह– य इति । यः अस्य राज्ञः पुत्रः समीपे राजधान्यां दुर्गे वा अन्तपालदुर्गस्थाने वा प्रतिवसति तं सत्रिणा उपजापयेत् । कथमुक्त्वा? त्वम् आत्मसंपन्नतरः पुत्रः युवराजभूतपुत्रापेक्षया अतिशयेनाऽऽत्मसंपद्युक्तः पुत्रः, तथापि अन्तर्हितः नियन्त्रितोऽसि । तत् तस्मात् किमुपेक्षसे? विक्रम्य गृहाण, अर्थात् राज्यभागम् । युवराजः त्वा त्वाम् विनाशयति पुरा विनाशयिष्यति, अर्थादात्मसंपदतिशययोगनिमित्तादमर्षात् इति । श्रीमूला.

**तत्कुलीनमवरुद्धं वा हिरण्येन प्रतिलोभ्य ब्रूयात्– 'अन्तर्बलं प्रत्यन्तस्कन्धमन्यं वाऽस्य प्रमृद्नीहि' इति ॥**

प्रकारमन्यमाह– तत्कुलीनमित्यादि । अन्तर्बलं मौलबलम् । प्रत्यन्तस्कन्धम्– स्कन्धः सैन्यम्, विषयान्तस्थितं सैन्यमित्यर्थः । अन्यं वा प्रत्यन्तस्कन्धातिरिक्तं स्कन्धं वा । 'अन्तम्' इति पाठश्चिन्त्यार्थः । प्रमृद्नीहि विध्वंसय । श्रीमूला.

**आटविकानर्थमानाभ्यामुपगृह्य राज्यमस्य घातयेत् ॥**

प्रकारान्तरमाह– आटविकानित्यादि । अर्थमानाभ्यां धनेन पूजया च उपगृह्य स्वायत्तीकृत्य । इत्थं सेनामुख्यवधशेषो व्याख्यातः । श्रीमूला.

**पार्ष्णिग्राहं वाऽस्य ब्रूयात्– 'एष खलु राजा मामुच्छिद्य त्वामुच्छेत्स्यति । पार्ष्णिमस्य गृहाण । त्वयि निवृत्तस्याहं पार्ष्णिं ग्रहीष्यामि' इति । मित्राणि वाऽस्य ब्रूयात्– 'अहं वः सेतुः, मयि विभिन्ने सर्वानेष वो राजाऽऽप्लावयिष्यति' इति । 'संभूय वाऽऽस्य यात्रां विहनाम' इति । तत्संहतानामसंहतानां च प्रेषयेत्– 'एष खलु राजा मामुत्पाट्य भवत्सु कर्म करिष्यति । बुध्यध्वम्, अहं वः श्रेयानभ्यवपत्तुम्' इति ॥**

'मण्डलप्रोत्साहनम्' इति सूत्रम् । दशराजकं मण्डलम्, तस्य प्रोत्साहनं बलवत्तरमभियोक्तारं प्रति समुद्योजनम् उच्यते इति सूत्रार्थः ।

तत्र पार्ष्णिग्राहप्रोत्साहनमाह– पार्ष्णिग्राहं वेत्यादि । त्वयि निवृत्तस्य त्वामभियुञ्जानस्य । मित्रप्रोत्साहनमाह– मित्राणि वाऽस्येत्यादि । सेतुः पराभियोगनिरोधकः । आप्लावयिष्यति नाशयिष्यति । सामवायिकप्रोत्साहन-

माह— संभूय वेति । संघीभूय वा अस्य परस्य यात्रां विहनाम विहतां करवाम । तत्संहतानामिति । तेन परेण सह संहतानां सामवायिकानाम् असंहतानां तदन्येषां च प्रेषयेत् अर्थात् संदेशहरम् । संदेशप्रकारमाह— एष खल्वित्यादि । कर्म उच्छेदनम् । अभ्यवपत्तुं श्रेयान् विपदि परित्रातुं योग्यतरः । श्रीमूला.

**मध्यमस्य प्रहिणुयादुदासीनस्य वा पुनः ।**
**यथासन्नस्य मोक्षार्थे सर्वस्वेन तदर्पणम् ॥**

मध्यमस्य उदासीनस्य वा यथासन्नस्य आसत्तिमनतिवर्तमानस्य स्वप्रत्यासन्नस्येत्यर्थः । त्वदर्पणम् 'तवाहमस्मि रक्षणीयः सर्वथा' इत्येवंरूपमात्मार्पणम् । 'तदर्पणम्' इति पाठे तस्मिन् आत्मनोऽर्पणमित्यर्थः । सर्वस्वेन सर्वस्वपणनेन प्रहिणुयात् प्रेषयेत् अर्थादबलीयान् । किमर्थम् । मोक्षार्थे बलीयसोऽभियुञ्जानात् स्वस्य मोचनार्थम् । श्रीमूला.

शत्रौ शस्त्राग्निरसानां गूढप्रयोगाः कर्तव्याः, शत्रोः धान्यादिसाधननाशः मित्रबलनाशश्च कर्तव्यः

**[1]ये चास्य दुर्गेषु वैदेहकव्यञ्जनाः, ग्रामेषु गृहपतिकव्यञ्जनाः, जनपदसंधिषु गोरक्षकतापसव्यञ्जनाः, ते सामन्ताटविकतत्कुलीनावरुद्धानां पण्यागारपूर्वं प्रेषयेयुः— 'अयं देशो हार्यः' इति । आगतांश्चैषां दुर्गे गूढपुरुषानर्थमानाभ्यामभिसत्कृत्य प्रकृतिच्छिद्राणि प्रदर्शयेयुः । तेषु तैः सह प्रहरेयुः ॥**

'शस्त्राग्निरसप्रणिधयः' इति सूत्रम् । शस्त्राग्निरसानां प्रणिधयः गूढप्रयोगाः अभिधीयन्ते इति सूत्रार्थः । प्रोत्साहितस्य मण्डलस्य परं प्रति अनुत्थाने उत्थानविलम्बे वा दृष्टे यत् विजिगीषुणा कर्तव्यं तदिहोच्यते ।

तत्र शस्त्रप्रणिधिमाह— ये चेत्यादि । अस्य परस्य । दुर्गेषु स्थानीयेषु । जनपदसंधिषु जनपदपरस्पराभ्यन्तरेषु । सामन्ताटविकतत्कुलीनावरुद्धानां परनिसर्गविरोधिनां सामन्तादीनां पण्यागारपूर्वं मार्गापेक्षितपण्यागारसंविधानपुरःसरं प्रेषयेयुः पुरुषान् प्रहिणुयुः । प्रेष्यमाणपुरुषार्पणीयं संदेशमाह— अयं देशो हार्य इतीति । 'परस्यैष देशो बहुच्छिद्रत्वात् युष्माभिर्हर्तुं शक्यः, तत् सद्य एवाऽऽगच्छत' इति संदिश्येत्यर्थः । आगतांश्चेति । आगतान् एषां सामन्ताटविकादीनां गूढपुरुषान् अर्थमानाभ्यां धनेन पूजया च अभिसत्कृत्य उपचर्य प्रकृतिच्छिद्राणि प्रकृतीनामन्योन्यक्रोधभयादीनि रन्ध्राणि प्रदर्शयेयुः तेभ्यः । तेषु दर्शितेषु छिद्रेषु तैः सह प्रहरेयुः । श्रीमूला.

**स्कन्धावारे वाऽस्य शौण्डिकव्यञ्जनः पुत्रमभित्यक्तं स्थापयित्वाऽवस्कन्दकाले रसेन प्रवासयित्वा 'नैषेचनिकम्' इति मदनरसयुक्तान् मद्यकुम्भाञ्छतशः प्रयच्छेत् । शुद्धं वा मद्यं पाद्यं वा मद्यं दद्यादेकमहः, उत्तरं रससिद्धं प्रयच्छेत् । शुद्धं वा मद्यं दण्डमुख्येभ्यः प्रदाय मदकाले रससिद्धं प्रयच्छेत् ॥**

रसप्रणिधिमाह— स्कन्धावारे वेति । अस्य परस्य स्कन्धावारे शौण्डिकव्यञ्जनः सौरिकवेषः सत्री । सौरिकेति क्वचित् पाठः । अभित्यक्तं वध्यं कंचित् पुत्रं स्थापयित्वा स्वपुत्रत्वेन व्यपदिश्य अवस्कन्दकाले रात्रिविलोपादिकाले रसेन विषेण प्रवासयित्वा मारयित्वा नैषेचनिकमिति मृतसन्तर्पणार्थमित्यपदेशेन मदनरसयुक्तान् मादकविषमिश्रान् मद्यकुम्भान् शतशः प्रयच्छेत् दद्यात् । विश्वासार्थे पक्षान्तरमाह— शुद्धं वा मद्यमित्यादि । शुद्धं विषसंबन्धरहितम् । पाद्यम्— मारणापेक्षिताया विषमात्रायाश्चतुर्थांशः पादः, तावन्मात्रयुक्तम् । एकमहः प्रथमं दिवसम् । अत्यन्तसंयोगे द्वितीया । उत्तरं द्वितीयादिकम् अहः । रससिद्धं पर्याप्तविषयोगनिष्पन्नम् । सेनामुख्याः प्रथममन्यं पाययित्वा पश्चात् स्वयं पिबन्तीति समुदाचारः । तस्मात् तेभ्यः शुद्धं मद्यं प्रथमं दत्त्वा तत्पानमत्तत्वदशायां विषयोगनिष्पन्नं दद्यादित्याह— शुद्धं वा मद्यं दण्डमुख्येभ्य इत्यादि । श्रीमूला०

(१) कौ. १२।४.

परविश्वासनार्थं कर्तव्यमिति वाक्यार्थः । तत्र सार्थगणवासिभिः धनिकगणान्तर्भूतैः । आतिवाहिकैः– अतिवाहः दुर्गममार्गोल्लङ्घनम्, तत्प्रयोजनैर्मार्गरक्षार्थिभिरित्यर्थः । इदं च षण्णां विशेषकम् । कन्यावाहिकैः कन्यां वहन्ति नयन्तीति कन्यावाहिकास्तैः । प्रव्रजितलिङ्गिभिः संन्यासिव्यञ्जनैः । शेषं स्पष्टार्थम् । इति राजापसर्पा इति । अनेन प्रकारेण राज्ञामपसर्पा विज्ञेयाः । श्रीमूला.

**एत एवाटवीनामपसर्पाः कण्टकशोधनोक्ताश्च । व्रजमटव्यासन्नमपसर्पाः सार्थं वा चोरैर्घातयेयुः । कृतसङ्केतमन्नपानं चात्र मदनरसविद्धं वा कृत्वाऽपगच्छेयुः । गोपालकवैदेहकाश्च ततश्चोरान् गृहीतलोप्त्रभारा मदनरसविकारकालेऽवस्कन्दयेयुः । संकर्षणदैवतीयो वा मुण्डजटिलव्यञ्जनः प्रहवणकर्मणा मदनरसयोगाभ्यामतिसंदध्यात् । अथावस्कन्दं दद्यात् । शौण्डिकव्यञ्जनो वा दैवतप्रेतकार्योत्सवसमाजेष्वाटविकान् सुराविक्रयोपायननिमित्तं मदनरसयोगाभ्यामतिसंदध्यात् । अथावस्कन्दं दद्यात् ॥**

ये एते राजापसर्पाः ये च कण्टकशोधनोक्ताः ते उभये आटविकानां प्रणिधेया इत्याह– एत एवेत्यादि । आटविकेष्वपसर्पकार्यमाह– व्रजमिति । गोष्ठम् अटव्यासन्नं वनसंनिकृष्टम् अपसर्पाः सार्थं वा पथिकवृन्दं वा चोरैः अर्थात् आटविकैः, आटविका हि चोरवृत्तय इति, घातयेयुः । तेषु स्वयमनुप्रविष्टा इत्यार्थम् । कृतसंकेतमिति । अमुकदेशकाले युष्माकमाहारसंविधा भविष्यतीति कृतसमयम् अन्नपानं च अत्र मदनरसविद्धं मदकरद्रव्येण विषेण च युक्तं कृत्वा अपगच्छेयुः । गोपालकवैदेहकाश्च, राजपुरुषभूता इति शेषः, ततः चोरान् मदनरसविकारकाले मादकविद्धान्नपानोपयोगनिमित्तचित्तविभ्रमावसरे विषविद्धान्नपानोपयोगनिमित्तसंज्ञानाशावसरे च गृहीतलोप्त्रभाराः चोरसकाशोपात्तमुष्ट(? मुषित )द्रव्यभाराः सन्तः अवस्कन्दयेयुः गृह्णीयुर्घातयेयुर्वा । मदनरसयोगस्य प्रकारान्तरमाह– संकर्षणदैवतीयो वेति । संकर्षणः बलभद्राख्यं मद्यप्रियं दैवतम्, तद्भक्तो वा मुण्डजटिलव्यञ्जनः प्रहवणकर्मणा तुष्टिभोजनदानच्छद्मना मदनरसयोगाभ्याम् अतिसंदध्यात्, अर्थात् चोरान् । अथ अवस्कन्दं दद्यात् मदनरसविकारकाले । प्रकारान्तरमाह– शौण्डिकव्यञ्जनो वेत्यादि । सुराविक्रयोपायननिमित्तं सुराया विक्रयार्थं यदुपायनम् उपहरणं तत् निमित्तं कृत्वेत्यर्थः । श्रीमूला.

**ग्रामघातप्रविष्टां वा विक्षिप्य बहुधाऽटवीम् ।**
**घातयेदिति चोराणामपसर्पाः प्रकीर्तिताः ॥**

प्रान्ते श्लोकमाह– ग्रामघातप्रविष्टां वेति । ग्रामघातार्थं प्रविष्टाम् अटवीम् आटविकांश्चोरानित्यर्थः, बहुधा बहुभिर्योगप्रकारैः विक्षिप्य विकृतचित्तान् कृत्वा घातयेत् । इति एवं चोराणामपसर्पाः प्रकीर्तिताः उपदिष्टाः ।

श्रीमूला.

परदुर्गस्य परितः सैन्यनिवेशः परदुर्गपरसैन्यावासनाशश्च

**[1]कर्शनपूर्वं पर्युपासनकर्म । जनपदं यथानिविष्टमभये स्थापयेत् । उत्थितमनुग्रहपरिहाराभ्यां निवेशयेदन्यत्रापसरतः । समग्रमन्यस्यां भूमौ निवेशयेदेकस्यां वा वासयेत् । न ह्यजनो जनपदो राज्यमजनपदं वा भवतीति कौटल्यः ॥**

‘ पर्युपासनकर्म ’ इति सूत्रम् । परदुर्गं परितः उपासनकर्म सैन्यनिवासनव्यापारः अभिधीयते इति सूत्रार्थः ।

कर्शनेत्यादि । पर्युपासनकर्म कर्शनपूर्वम्– कोशदण्डरेचनामात्यवधादि कर्शनम्, तत्पुरःसरम् । कर्तव्यमिति शेषः । कर्शने च शत्रोः क्रियमाणे जनपदो न पीडनीयः, किंतु रक्षणीय इति वक्तुमाह– जनपदमित्यादि । तं यथानिविष्टं यथापरनिवेशितरूपम् अभये स्थापयेत् । अभयमित्यपि पाठः । उत्थितमिति । कृष्यादिप्रयासोद्यतं जनम् अनुग्रहपरिहाराभ्यां धनदानकरमोक्षणाभ्यां निवेशयेत् अपसरतोऽन्यत्र अपसरन्तं वर्जयित्वा । अपसरतोऽनुग्रहपरिहारौ न कार्यावित्यर्थः । समग्रमिति । अधिकम् अन्यस्यां भिन्नभिन्नायां भूमौ निवेशयेत्, एकस्यां वा

(१) कौ. १३।४.

वासयेत् । 'एकस्थं वा' इत्यपि पाठः । किमर्थं जनस्थापनादिकं तात्पर्येणोपदिश्यते ? तत्राऽऽह– न ह्यजनो जनपद इत्यादि । जनरहितस्य जनपदव्यपदेशाभावात् जनपदरहितस्य राज्यव्यपदेशाभावाच्च जनस्थापनादिकमावश्यकमित्यर्थः । श्रीमूला.

**विषमस्थस्य मुष्टिं सस्यं वा हन्याद् वीवधप्रसारौ च ॥**

कर्शनप्रकारमाह– विषमस्थस्येति । शत्रुपरोधसंकटप्राप्तस्य मुष्टिं बीजवापं सस्यं वा हन्यात् । वीवधप्रसारौ च– वीवधः धान्यस्नेहादिभारः, प्रसारः तृणकाष्ठादिप्रवेशः, तौ च हन्यात् । श्रीमूला.

**प्रसारवीवधच्छेदान्मुष्टिसस्यवधादपि ।**
**वमनाद् गूढघाताच्च जायते प्रकृतिक्षयः ॥**

प्रकृतिक्षयहेतून् संगृह्णाति– प्रसारवीवधच्छेदादित्यादि । वमनात् अन्यत्र नयनात् । प्रकृतिक्षयः अमात्याद्यपचयः । श्रीमूला.

**'प्रभूतगुणवद्धान्यकुप्ययन्त्रशस्त्रावरणविष्टिरश्मिसमग्रं मे सैन्यमृतुश्च पुरस्तात्, अपर्तुः परस्य व्याधिदुर्भिक्षनिचयरक्षाक्षयः क्रीतबलनिर्वेदो मित्रबलनिर्वेदश्च' इति पर्युपासीत ॥**

कस्यामवस्थायां पर्युपासनं कर्तव्यमित्याह– प्रभूतेत्यादि । प्रचुरसारधान्यादिसत्तकसंपन्नम् । तत्र आवरणं पेटीचर्मादिः, विष्टिः कर्मकरः, रश्मिः प्रग्रहः । शेषं प्रतीतम् । मे सैन्यम् ऋतुश्च पुरस्तात् कालश्चानुकूलः उपस्थितः । परस्य अपर्तुः प्रतिकूलः कालः, व्याधिदुर्भिक्षनिचयरक्षाक्षयः व्याधिना दुर्भिक्षेण च निचयस्य संचितधनादेः रक्षायाः आरक्षकाणां च क्षयः, क्रीतबलनिर्वेदः क्रयेणाधिगतस्य बलस्य कृतश्रमवैफल्यदर्शनेन भूयःसाह्यकरणात् विरिंसा, मित्रबलनिर्वेदश्च । अस्तीति सर्वत्र शेषः । इति अस्याम्, अवस्थायामिति शेषः, पर्युपासीत । श्रीमूला.

**कृत्वा स्कन्धावारस्य रक्षां वीवधासारयोः पथश्च, परिक्षिप्य दुर्गं खातसालाभ्याम्, दूषयित्वोदकमवस्राव्य परिखाः संपूरयित्वा वा, सुरुङ्गाबलकुटिकाभ्यां वप्रप्राकारौ हारयेत् ॥**

पर्युपासनप्रकारमाह– कृत्वेत्यादि । स्कन्धावारस्य स्वसेनानिवेशस्य । परिक्षिप्य दुर्गं परस्य स्थानीयं परिगत्य । खातसालाभ्यां खातसालानुसारेण । अवस्राव्य निर्गतजलाः कृत्वा । सुरुङ्गाबलकुटिकाभ्यां तिर्यग्भूखातैः सैन्यपल्लीभिश्च । जातौ च इह एकत्वविवक्षया द्विवचनम् । हारयेत् आक्रामेत् । श्रीमूला.

**दारं च गुलेन निम्नं वा पांसुमालयाऽऽच्छादयेत् । बहुलारक्षं यन्त्रैर्घातयेत् । निष्करादुपनिष्कृष्याश्वैश्च प्रहरेयुः । विक्रमान्तरेषु च नियोगविकल्पसमुच्चयैश्चोपायानां सिद्धिं लिप्सेत दुर्गवासिनः ॥**

दारं दीर्णदेशम् । गुलेन छादनसाधनपिण्डेन । 'बहुलेन' इति पाठश्चिन्त्यार्थः । बहुलारक्षं प्रचुररक्षाविधानं प्रदेशम् । निष्करादिति । निन्दितकरणात्, कपटादित्यर्थः । अथवा करः शुण्डा, निरायतः करो यस्य स निष्करः प्रसारितकरः । अर्थात् करिणं तथाभूतं विधायेति ल्यब्लोपे पञ्चमी । 'दुष्करात्' इति पाठेऽपि कपटादित्यर्थः । 'निष्कुरात्' इत्युकारमध्यस्तु मृग्यार्थः पाठः । अश्वैश्च, चकारात् गजैश्च । प्रहरेयुः अर्थादारक्षान् । विक्रमान्तरेषु चेति । विक्रमविशेषेषु च परैः प्रदर्श्यमानेष्वित्यर्थः, उपायानां नियोगविकल्पसमुच्चयैश्च– 'अयमेवात्रोपायोऽनुष्ठेयः' इति व्यवस्था नियोगः, 'अयं वाऽसौ वा' इति विकल्पः, 'अयं चासौ च' इति समुच्चयः, एतैर्यथाविषयमनुष्ठितैः सिद्धिं लिप्सेत दुर्गवासिनः दुर्गगतस्य शत्रोः । श्रीमूला.

**श्येनकाकनप्तृभासशुकशारिकोलूककपोतान् ग्राहयित्वा पुच्छेष्वग्नियोगयुक्तान् परदुर्गे विसृजेयुः ॥**

श्येनकाकेत्यादि । तत्र नप्ता विष्किराख्यः पक्षी । शेषाः प्रतीताः । पुच्छेषु अग्नियोगयुक्तान् अग्निप्रज्वलनोपाययुक्तान् । विसृजेयुः विसृष्टश्येनादिपुच्छपरिपतिताग्नियोगद्वारेण परदुर्गं दीपयेयुरित्यर्थः । श्रीमूला.

**अपकृष्टस्कन्धावारादुच्छ्रितध्वजधन्वाऽऽरक्षा वा मानुषेणाग्निना परदुर्गमादीपयेत् ॥**

अपकृष्टस्कन्धावारादिति । अधःस्तात् स्वस्कन्धावारात् । उच्छ्रितध्वजधन्वा उच्छ्रिताः अग्निक्षेपार्थमुन्नमिताः ध्वजाः पताकाः धन्वानि धनूंषि च येन स तथाभूतः, आरक्षा वा मानुषेणाग्निना शत्रुनिहतस्य वा शूलारोपणमारितस्य वा मनुष्यस्य अस्थ्नि कल्माषवेणुना मथनादुत्थितेनाग्निना परदुर्गम् आदीपयेत् । आरक्षांशे आदीपयेयुरिति विपरिणामेन संबन्धः । 'आदीपयेयुः' इत्येव क्वचित् पाठः । श्रीमूला.

**गूढपुरुषाश्चान्तदुर्गपालका नकुलवानरबिडालशुनां पुच्छेष्वग्नियोगमाधाय काण्डनिचयरक्षाविधानवेश्मसु विसृजेयुः ॥**

अन्तदुर्गपालकाः अन्तपालकदुर्गपालकव्यञ्जना इत्यर्थः । काण्डनिचयरक्षाविधानवेश्मसु येषु बाणाः कुप्यादिवर्गो वा संचित्य रक्ष्यन्ते तेषु गृहेषु । श्रीमूला.

**शुष्कमत्स्यानामुदरेष्वग्निमाधाय वल्लूरे वा वायसोपहारेण वयोभिर्हारयेयुः ॥**

अग्निमाधाय वक्ष्यमाणगुलिकादिकर्माग्निधारणं निवेश्य । वल्लूरे वा शुष्कमांसे वा । वायसोपहारेण पक्षिसंबन्ध्युपहारात्मना । श्रीमूला.

**सरलदेवदारुपूतितृणगुग्गुलुश्रीवेष्टकसर्जरसलाक्षागुलिकाः खरोष्ट्राजावीनां लण्डं चाग्निधारणम् ॥**

सरलेत्यादि । तत्र सरलः पीतद्रुः, देवदारुः दारुहरिद्रा, पूतितृणं रोहिषतृणम्, गुग्गुलुः कालनिर्यासः, श्रीवेष्टकः सरलनिर्यासः, सर्जरसः यक्षधूपः, लाक्षा जतु । श्रीमूला.

**प्रियालचूर्णमवल्गुजमषीमधूच्छिष्टमश्वखरोष्ट्रगोलण्डमित्येष क्षेप्योऽग्नियोगः ॥**

प्रियालेत्यादि । तत्र प्रियालः राजादनः । अवल्गुजः सोमराजिसंज्ञौषधिः । मषी शेफालिकाभेदः । मधूच्छिष्टं सिक्थः । श्रीमूला.

**सर्वलोहचूर्णमग्निवर्णं वा कुम्भीसीसत्रपुचूर्णं वा पारिभद्रकपलाशपुष्पकेशमषीतैलमधूच्छिष्टकश्रीवेष्टकयुक्तोऽग्नियोगो विश्वासघाती वा । तेनावलिप्तः शणत्रपुसवल्कवेष्टितो बाण इत्यग्नियोगः ॥**

सर्वलोहचूर्णमित्यादि । तत्र कुम्भी श्रीपर्णी । सीसत्रपुणी लोहभेदौ । पारिभद्रकः निम्बः । पलाशः किंशुकः । केशं ह्रीबेरम् । विश्वासघाती विश्वासविषय एव सन् हन्तीति तथोच्यते । तेनावलिप्त इत्यादि । शणः क्षुपभेदः । त्रपुसं तन्नामप्रसिद्धः ओषधिभेदः । बाणः अर्जुनवृक्षः । श्रीमूला.

**न त्वेव विद्यमाने पराक्रमेऽग्निमवसृजेत् । अविश्वास्यो ह्यग्निः दैवपीडनं च, अप्रतिसंख्यातप्राणिधान्यपशुहिरण्यकुप्यद्रव्यक्षयकरः । क्षीणनिचयं चावाप्तमपि राज्यं क्षयायैव भवति ॥**

ते एतेऽग्नियोगाः पराक्रमसद्भावे न प्रयोक्तव्या इत्याह– न त्वेवेत्यादि । अविश्वास्यः अतिप्रवृद्धोऽदिघक्षितमपि निर्दहतीत्यतो विश्वसितुमनर्हः । दैवपीडनं च पीडनवर्गे प्रथमगणितं दैवपीडनं च । अप्रतिसंख्यातेत्यादिपदे अप्रतिसंख्यातेत्यस्य असंख्येत्यर्थः । क्षीणनिचयम्– प्राणिधान्यादिसंचयो निचयः, स क्षीणो यस्मिंस्तत् । श्रीमूला.

**इति पर्युपासनकर्म ॥**

इति पर्युपासनकर्मेति । व्याख्यातमिति शेषः । श्रीमूला.

**'सर्वारम्भोपकरणविष्टिसंपन्नोऽस्मि, व्याधितः पर उपधाविरुद्धप्रकृतिरकृतदुर्गकर्मनिचयो वा निरासारः सासारो वा पुरा मित्रैः संधत्ते' इत्यवमर्दकालः ॥**

'अवमर्दः' इति सूत्रम् । अवमर्दः परदुर्गग्रहणम्, स कदा कथं कर्तव्य इत्ययमर्थोऽत्राभिधीयते इति सूत्रार्थः ।

अवमर्दकालमाह– सर्वारम्भेत्यादि । सर्वविधैः सैन्यसंनाहैः सैन्यभक्तावरणाद्युपकरणैः कर्मकैश्चाहं संपन्नोऽस्मि,

शत्रुस्तु व्याधिपीडितो वा, उपधाप्रत्यक्षिताशुचिभावैरमात्यैर्युक्तो वा, अकृतदुर्गसंस्कारधनधान्यादिसंचयो वा, सुहृद्बलरहितो वा, संभावितसुहृद्बलोऽपि मित्रैः संधास्यते, न त्वद्यापि कृतसंधिः इति यदा विजिगीषुर्मन्यते तदा स परमवमृद्नीयादित्यर्थः। श्रीमूला.

**स्वयमग्नौ जाते समुत्थापिते वा प्रहवणे प्रेक्षानीकदर्शनसङ्गसौरिककलहेषु नित्ययुद्धश्रान्तबले बहुलयुद्धप्रतिविद्धप्रेतपुरुषे जागरणक्लान्तसुप्तजने दुर्दिने नदीवेगे वा नीहारसंप्लवे वाऽवमृद्नीयात् ॥**

स्वयमित्यादि। प्रेक्षानीकदर्शनसङ्गसौरिककलहेषु प्रेक्षायां नृत्तादौ, अनीकदर्शने सैन्यमिथ्यायुद्धप्रेक्षणे च, सङ्गः आसक्तिः तस्मिन्, सौरिककलहेषु शौण्डिकोत्पादितेषु कलहेषु च। नित्ययुद्धश्रान्तबले इत्यादिविशेषणत्रयस्य परस्मिन्निति विशेष्यं गम्यम्। नदीवेगे वेगवाहिनदीतरणकाले। नीहारसंप्लवे अवश्यायनिमित्तोपप्लवे। श्रीमूला.

**स्कन्धावारमुत्सृज्य वा वनगूढः शत्रुः सत्रान्निष्क्रान्तं घातयेत् ॥**

सत्रात् वनात्। यदि शत्रुर्वने गूढस्थितः तर्हि तस्य वनान्निष्क्रमणं प्रतीक्ष्य तं विजिगीषुर्घातयेदित्यर्थः। 'शत्रुं निष्क्रान्तम्' इति पाठे तु स्फुट एवार्थः। श्रीमूला.

**मित्रासारमुख्यव्यञ्जनो वा संरुद्धेन मैत्रीं कृत्वा दूतमभित्यक्तं प्रेषयेत्— 'इदं ते छिद्रम्, इमे दूष्याः, संरोद्धुर्वा छिद्रमयं ते कृत्यपक्षः' इति। तं प्रतिदूतमादाय निर्गच्छन्तं विजिगीषुर्गृहीत्वा दोषमभिविख्याप्य प्रवास्यापगच्छेत् ततः। मित्रासारव्यञ्जनो वा संरुद्धं ब्रूयात्— 'मां त्रातुमुपनिर्गच्छ, मया वा सह संरोद्धारं जहि' इति। प्रतिपन्नमुभयतःसंपीडनेन घातयेत्, जीवग्राहेण वा राज्यविनिमयं कारयेत्, नगरं वाऽस्य प्रमृद्नीयात्, सारबलं वाऽस्य वमयित्वाऽभिहन्यात् ॥**

मित्रासारमुख्यव्यञ्जनः मित्रव्यञ्जनो वा सुहृद्बलमुख्यवेषो वा। अभित्यक्तं वध्यम्। 'अभिव्यक्तम्' इति पाठे वध्यत्वेन निश्चितम्। प्रेषयेत्, लेखं दत्त्वेति शेषः। इदं ते इत्यादि लेखार्थप्रदर्शनम्। दूष्याः त्वदीयाः अपकर्तारः परस्य त्वच्छिद्रप्रविवक्षोः साहाय्यदानजागरूकाः। ते कृत्यपक्षः संरोद्धृच्छिद्रप्रविवक्षोस्तव साहाय्यदानजागरूकः परकीयक्रुद्धलुब्धादिवर्गः। तमित्यादि। तम् अभित्यक्तम्। प्रतिदूतम् आदाय प्रतिलेखार्थं गृहीत्वा। दोषम् आत्मापकारम्। प्रवास्य मारयित्वा। ततः अपगच्छेत् संरुद्धपक्षादपसरेत्। प्रकारान्तरमाह— मित्रासारव्यञ्जनो वेत्यादि। उभयतः पुरः पश्चाच्च। वमयित्वा दुर्गान्निर्गमय्य। श्रीमूला.

**तेन दण्डोपनताटविका व्याख्याताः ॥**

उक्ताः प्रकाराः दण्डोपनताटविकद्वाराऽप्यनुष्ठेया इत्याह— तेन दण्डोपनताटविका इत्यादि। श्रीमूला.

**दण्डोपनताटविकयोरन्यतरो वा संरुद्धस्य प्रेषयेत्— 'अयं संरोद्धा व्याधितः, पार्ष्णिग्राहेणाभियुक्तः, छिद्रमन्यदुत्थितम्, अन्यस्यां भूमावपयातुकामः' इति। प्रतिपन्ने संरोद्धा स्कन्धावारमादीप्यापयायात्, ततः पूर्ववदाचरेत् ॥**

तत्र प्रकारान्तरमाह— दण्डोपनताटविकयोरित्यादि। ततः पूर्ववदाचरेदिति। पूर्ववदाचरणं च उभयतःसंपीड्यघातनादिकं पूर्वोक्तम्। श्रीमूला.

**पण्यसंपातं वा कृत्वा पण्येनैनं रसविद्धेनातिसंदध्यात् ॥**

पण्यसंपातं पण्यविक्रेतृसंघागमनम्। श्रीमूला.

**आसारव्यञ्जनो वा संरुद्धस्य दूतं प्रेषयेत्— 'मया बाह्यमभिहतमुपनिर्गच्छाभिहन्तुम्' इति। प्रतिपन्नं पूर्ववदाचरेत् ॥**

प्रकारान्तरमाह— आसारव्यञ्जनो वेत्यादि। संदेशार्थमाह— मया बाह्यमित्यादि। मया प्रथममभिहन्यमानं शत्रुमनुहन्तुं दुर्गान्निष्क्रान्तो भवेत्यर्थः। प्रतिपन्न-

मित्यादि । पूर्ववदाचरेत् उभयतःसंपीड्यघातनादिकं कुर्यात् । श्रीमूला.

**मित्रं बन्धुं वाऽपदिश्य योगपुरुषाः शासनमुद्राहस्ताः प्रविश्य दुर्गं ग्राहयेयुः ॥**

मित्रं बन्धुं वाऽपदिश्य आत्मनो मित्रत्वं बन्धुत्वं वा निमित्तं कल्पयित्वा । शासनमुद्राहस्ताः मुद्रितकूटलेख्यहस्ताः । श्रीमूला.

**आसारव्यञ्जनो वा संरुद्धस्य प्रेषयेत्– ' अमुष्मिन् देशे काले च स्कन्धावारमभिहनिष्यामि, युष्माभिरपि योद्धव्यम्' इति । प्रतिपन्नं यथोक्तमभ्याघातसंकुलं दर्शयित्वा रात्रौ दुर्गान्निष्क्रान्तं घातयेत् ॥**

आसारव्यञ्जनेन कर्तव्यमन्यमतिसंधानप्रकारमाह– आसारव्यञ्जनो वेत्यादि । अभ्याघातसंकुलं विजिगीषुस्कन्धावाराभिहननतुमुलम् । तत्प्रदर्शनं च संरुद्धविश्वासार्थम् । श्रीमूला.

**यद्वा मित्रमावाहयेदाटविकं वा । तमुत्साहयेत्– ' विक्रम्य संरुद्धे भूमिमस्य प्रतिपद्यस्व ' इति । विक्रान्तं प्रकृतिभिर्दूष्यमुख्यावग्रहेण वा घातयेत्, स्वयं वा रसेन । ' मित्रघातकोऽयम् ' इत्यवाप्तार्थः ॥**

प्रकारान्तरमाह– यद्वेत्यादि । तं उत्साहयेत् मित्राटविकान्यतरं पराभियोगायोद्योजयेत् । प्रकृतिभिः अमात्यादिभिः । दूष्यमुख्यावग्रहेण वा दूष्यमुख्यस्वविधेयीकरणेन । ' दूष्यमुख्योपग्रहेण ' इति पाठे दूष्यमुख्यानुकूलनेनेत्यर्थः । मित्राघातकोऽयमित्यवाप्तार्थ इति । परं मित्रघातक इति प्रख्याप्य स्वार्थं साधयेदित्यर्थः । श्रीमूला.

**विक्रमितुकामं वा मित्रव्यञ्जनः परस्याभिशंसेत् । आप्तभावोपगतः प्रवीरपुरुषानस्योपघातयेत् ॥**

प्रकारान्तरमाह– विक्रमितुकामं वेत्यादि । विजिगीषुस्त्वयि विक्रमितुमिच्छतीत्येवं शत्रोस्तन्मित्रव्यञ्जनः कथयेत् । प्रतिपद्य चैवं तस्याऽऽप्तभावं तदीयान् प्रवीरपुरुषान् घातयेदित्यर्थः । श्रीमूला.

**संधिं वा कृत्वा जनपदमेनं निवेशयेत् । निविष्टमन्यजनपदमविज्ञातो हन्यात् ॥**

परेण संधिं कृत्वा तेनैव स्वराष्ट्रे जनपदनिवेशमन्यं कारयित्वा तं तदविज्ञातो हन्यादित्याह– संधिं वेत्यादि । श्रीमूला.

**अपकारयित्वा दूष्याटविकेषु वा बलैकदेशमतिनीय दुर्गमवस्कन्देन हारयेत् ॥**

स्वदूष्याटविकेषु विषये परस्य बलैकदेशमपकारं कारयित्वा तेन निमित्तेन तमतिदूरे नीत्वा च बलैकदेशविरहेण सुखाक्रमणीयतामापन्नं परदुर्गं प्रसभाक्रमणेनापहरेदिति प्रकारमन्यमाह– अपकारयित्वेत्यादि । श्रीमूला.

**दूष्यामित्राटविकद्वेष्यप्रत्यपसृताश्च कृतार्थमानसंज्ञाचिह्नाः परदुर्गमवस्कन्देयुः ॥**

अवस्कन्दसहायाः के इत्यत्राऽऽह– दूष्यामित्रेत्यादि । तत्र प्रत्यपसृताः परस्मादपसृत्य पुनस्तं प्रत्यागताः । शेषास्तु प्रतीताः । कृतार्थमानसंज्ञाचिह्नाः– कृतार्थमानाः धनाभरणादिदानसत्कृताः, कृतसंज्ञाचिह्नाश्च ग्राहितावस्कन्दकालसूचकसंकेताश्च । श्रीमूला.

**परदुर्गमवस्कन्द्य स्कन्धावारं वा पतितपराङ्मुखाभिपन्नमुक्तकेशशस्त्रभयविरूपेभ्यश्चाभयमयुध्यमानेभ्यश्च दद्युः । परदुर्गमवाप्य विशुद्धशत्रुपक्षः कृतोपांशुदण्डप्रतीकारमन्तर्बहिश्च प्रविशेत् ॥**

परदुर्गस्य परस्कन्धावारस्य वाऽवस्कन्दे सिद्धेऽनन्तरकरणीयमाह– परदुर्गमित्यादि । पतितेत्यादिपदे अभिपन्नः विपद्गतः, शस्त्रभयविरूपः शस्त्रभयविकृताकारः । शेषाः प्रतीताः । परदुर्गमित्यादि । विशुद्धशत्रुपक्षः उत्सारितशत्रुपक्ष्यः । ' विशुद्धशत्रुपक्षम् ' इति पाठे क्रियाविशेषणम् । अन्तर्बहिश्च दुर्गस्यान्तर्भागं बहिर्भागं च । श्रीमूला.

**एवं विजिगीषुरमित्रभूमिं लब्ध्वा मध्यमं लिप्सेत । तत्सिद्धावुदासीनम् । एष प्रथमो मार्गः पृथिवीं जेतुम् ॥**

अनेन प्रकारेण शत्रोर्भूमिं लब्ध्वा ततो मध्यमस्य तत उदासीनस्य च लब्धुमीहेतेत्येष पृथिवीजयस्य प्रथमो मार्ग इत्याह– एवं विजिगीषुरित्यादि । श्रीमूला.

**मध्यमोदासीनयोरभावे गुणातिशयेनारिप्रकृतीः साधयेत् । तत उत्तराः प्रकृतीः । एष द्वितीयो मार्गः ॥**

मध्यमोदासीनसत्तायामुक्तः क्रमः । तदभावे त्वाह– मध्यमोदासीनयोरभाव इत्यादि । गुणातिशयेन शत्रुगुणातिशायिना स्वगुणेन अरिप्रकृतीः साधयेत् शत्रोरमात्यादीन् स्वानुरक्तान् कुर्यात् । उत्तराः प्रकृतीः कोशदण्डादिकाः । श्रीमूला.

**मण्डलस्याभावे शत्रुणा मित्रं मित्रेण वा शत्रुमुभयतःसंपीडनेन साधयेत् । एष तृतीयो मार्गः ॥**

तृतीयं मार्गमाह– मण्डलस्याभाव इत्यादि । मण्डलं दशराजकम् , तस्याभावे । श्रीमूला.

**शक्यमेकं वा सामन्तं साधयेत् , तेन द्विगुणो द्वितीयम् , त्रिगुणस्तृतीयम् । एष चतुर्थो मार्गः पृथिवीं जेतुम् ॥**

चतुर्थमाह– शक्यमेकमित्यादि । शक्यम् आत्मसुजयम् । तेन द्विगुणः साधितेनैकेन सामन्तेन सहायभूतेन द्विगुणात्मबलः । श्रीमूला.

**जित्वा च पृथिवीं विभक्तवर्णाश्रमां स्वधर्मेण भुञ्जीत ॥**

स्वधर्मेण यथायथं वर्णाश्रमयोर्विहितेन धर्मेण मन्वाद्युक्तेन । श्रीमूला.

**उपजापोऽपसर्पो वा वामनं पर्युपासनम् ।**
**अवमर्दश्च पञ्चैते दुर्गलम्भस्य हेतवः ॥**

उक्तान् दुर्गलम्भहेतून् श्लोकेन संगृह्णाति– उपजापोऽपसर्पो वेत्यादि । 'उपजापापसर्पौ च' इति क्वचित् पाठः । श्रीमूला.

प्रयोक्तव्याः अधार्मिकाणां हिंसार्थं मन्त्रौषधयोगाः

**[1]चातुर्वर्ण्यरक्षार्थमौपनिषदिकमधर्मिष्ठेषु प्रयुञ्जीत ॥**

इत्थं त्रयोदशभिरधिकरणैस्तन्त्रावापौ प्रपञ्चितौ । अथ तदुभयानुकूलमौपनिषदिकं चतुर्दशमधिकरणमारभ्यते । उपनिषन्नाम औषधमन्त्ररहस्यम् । रहस्यत्वं च गुरूपदेशैकसमधिगम्यप्रयोगतया गोपनीयत्वात् । उपनिषदेव औपनिषदम् , तदधिकृत्य प्रवृत्तमौपनिषदिकम् । तच्चेदं हिंसात्मकत्वादधर्मिष्ठेष्वेव प्रयोक्तव्यमित्याह– चातुर्वर्ण्येत्यादि । चातुर्वर्ण्यरक्षार्थम् । वर्णग्रहणं जातेरप्युपलक्षणम् । तेन यथावर्णजातिविभक्तधर्मकर्मकं मनुष्यसामान्यं चातुर्वर्ण्यशब्दतो गृह्यते । तस्य रक्षार्थम् अधर्मिष्ठप्रभवाभ्य आपद्भ्योऽनन्यप्रतीकार्याभ्यः परित्राणसिद्धये । तत्र 'परघातप्रयोगः' इति सूत्रम् । शत्रुवधार्थं औषधप्रयोग उच्यते इति सूत्रार्थः । श्रीमूला.

**कालकूटादिर्विषवर्गः श्रद्धेयदेशवेषशिल्पभाजनापदेशैः कुब्जवामनकिरातमूकबधिरजडान्धच्छद्मभिर्म्लेच्छजातीयैरभिप्रेतैः स्त्रीभिः पुंभिश्च परशरीरोपभोगेष्वाधातव्यः ॥**

कालकूटादिरित्यादिपदेन वत्सनाभहलाहलादीनां ग्रहणम् । श्रद्धेयदेशवेषशिल्पभाजनापदेशैः विश्वसनीयं देशं वेषं शिल्पं भाजनं चाऽऽत्मनोऽपदिशद्भिः । कुब्जेत्यादिपदे कुब्जादयश्च मूकादिच्छद्मानश्चेति समासः । कुब्जः गडुलः , वामनः खर्वः , किरातः अल्पतनुः । अभिप्रेतैः इष्टैः । परशरीरोपभोगेषु शत्रोर्देहोपभोग्येषु वस्त्रादिषु । श्रीमूला.

**राजक्रीडाभाण्डनिधानद्रव्योपभोगेषु गूढाः शस्त्रविधानं कुर्युः , सत्राजीविनश्च रात्रिचारिणोऽग्निजीविनश्चाग्निनिधानम् ॥**

राजक्रीडाभाण्डनिधानद्रव्योपभोगेषु क्रीडनकनिधानेषु भूषणनिधानेषु सुगन्धिद्रव्यनिधानेषु च राजोपभोग्येषु गूढाः गूढपुरुषाः शस्त्रनिधानं शस्त्रनिवेशनं कुर्युः । यद्वा,

---

(१) कौ. १४।१.

राज्ञः क्रीडाभाण्डाद्युपभोगावसरेषु शस्त्रप्रयोगं कुर्युरित्यर्थः। सत्राजीविनश्च सत्रिणश्च, रात्रिचारिणः, अग्निजीविनश्च अयस्कारादयश्च अग्निनिधानम् अग्निनिवेशनं कुर्युः।

श्रीमूला.

**चित्रभेककौण्डिन्यकक्कणपञ्चकुष्ठशतपदीचूर्णमुच्चिदिङ्गकम्बलिशतकन्देध्मकृकलासचूर्णं गृहगौलिकान्धाहिकक्रकणकपूतिकीटगोमारिकाचूर्णं भल्लातकावल्गुकारसयुक्तं सद्यःप्राणहरमेतेषां वा धूमः॥**

चित्रभेकादिचूर्णं उच्चिदिङ्गादिचूर्णं गृहगौलिकादिचूर्णं च भल्लातकादिरसयुक्तं सद्यःप्राणहरम्, एषां चूर्णानां धूमो वा सद्यःप्राणहर इत्याह— चित्रेत्यादि। तत्र चित्रभेकः चित्रवर्णो मण्डूकः। कौण्डिन्यकः शकृन्मूत्रविषः कीटभेदः। कृकणः पक्षिभेदः कीटभेदो वा। पञ्चकुष्ठं कुष्ठस्य पारिभाव्यस्य त्वक्पत्रपुष्पफलमूलानि। शतपदी कर्णजलूका। उच्चिदिङ्गः अलविषः कीटभेदः। उचिटिङ्गः इति सुश्रुते। कम्बली कृमिभेदः। शतं शतमूली, नामैकदेशग्रहणात्। कन्दः कण्डूरः। इध्मं पलाशसमित्। कृकलासः सरटः। गृहगौलिका पल्ली। अन्धाहिकः मत्स्यभेदः। पूतिकीटः कीटभेदः। गोमारिका ओषधिभेदः। भल्लातकः अरुष्कराख्यो वृक्षभेदः। अवल्गुका अवल्गुजा सोमराजी।

श्रीमूला.

**कीटो वाऽन्यतमस्तस्तः कृष्णसर्पप्रियङ्गुभिः।**
**शोषयेदेष संयोगः सद्यःप्राणहरो मतः॥**

अन्यतमः उक्तेष्वेकतमः कीटः ततः शोषयेत् आघ्राणादिना उपयुज्यमानः शोषणं कुर्यात्। अयं केवलस्य गुणः। मिश्रितस्य गुणमाह— कृष्णसर्पप्रियङ्गुभिः कृष्णसर्पेण कङ्गुभिश्च सह संयोगः संप्राप्तयोगः। एष तत इत्यार्थम्। सद्यःप्राणहरो मतः।

श्रीमूला.

**धामार्गवयातुधानमूलं भल्लातकपुष्पचूर्णयुक्तमार्धमासिकः॥**

आर्धमासिकः अर्धमासेन प्राणहरो योग इत्यर्थः। तत्र धामार्गवः कोशातकी। यातुधानः राक्षसशब्दवाच्य ओषधिभेदः।

श्रीमूला.

**व्याघातकमूलं भल्लातकपुष्पचूर्णयुक्तं कीटयोगो मासिकः। कलामात्रं पुरुषाणां द्विगुणं खराश्वानां चतुर्गुणं हस्त्युष्ट्राणाम्॥**

भल्लातकपुष्पचूर्णयुक्तेन आरग्वधमूलेन सह ततः कीटः कश्चित् कीटयोगो भवति। स उपयुज्यमानो मासेनैकेन प्राणहरो भवतीत्यर्थः। कीटयोगोपयोगमात्रामाह— कलामात्रमित्यादि। कला अल्पोंऽशः। पुरुषाणां नराणाम्। द्विगुणं कलाद्वयमात्रम्।

श्रीमूला.

**शतकर्दमोच्चिदिङ्गकरवीरकटुतुम्बीमत्स्यधूमो मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वा प्रवातानुवाते प्रणीतो यावच्चरति तावन्मारयति॥**

शतकर्दमेत्यादि। तत्र कर्दमः यक्षकर्दमः। करवीरः हयमाराख्य ओषधिभेदः। कटुतुम्बी इक्ष्वाकुः। मदनः धुस्तूरः। कोद्रवः धान्यभेदः। हस्तिकर्णः कुस्तुम्बुरुः। पलाशः कच्चोरम्। पलालम् अफलो धान्यादिकाण्डः। प्रवातानुवाते प्रभूतमारुते अभिमारुते च।

श्रीमूला.

**पूतिकीटमत्स्यकटुतुम्बीशतकर्दमेध्मेन्द्रगोपचूर्णं पूतिकीटक्षुद्राऽरालाहेमविदारीचूर्णं वा बस्तशृङ्गखुरचूर्णयुक्तमन्धीकरो धूमः॥**

पूतिकीटेत्यादि। तत्र इन्द्रगोपः ज्योतिर्माली नाम कीटः। क्षुद्रा कण्टकारी। अराला यक्षधूपाख्यो निर्यासः। अत एव प्रयोगात् स्त्रियामप्ययम्। हेम धुस्तूरः। विदारी इक्षुगन्धा। अन्धीकरः अन्धकरणः।

श्रीमूला.

**पूतिकरञ्जपत्रहरितालमनःशिलागुञ्जारक्तकार्पासपलालान्यास्फोटकाचगोशकृद्रसपिष्टमन्धीकरो धूमः॥**

पूतिकरञ्जेत्यादि। तत्र पूतिकरञ्जः पूतिकाख्यो वृक्षभेदः। हरितालं नटमण्डनम्। मनःशिला कुनटी नाम धातुभेदः। गुञ्जा कृष्णला। आस्फोटः रक्तार्कः। काचं क्षारमृज्जो लवणभेदः। पिष्टमित्येकवचनं पूतिकरञ्जादिसमुदायविवक्षया, सामान्यविवक्षया च क्लीबत्वम्।

श्रीमूला.

**सर्पनिर्मोकं गोश्वपुरीषमन्धाहिकशिरश्चान्धीकरो धूमः ॥**

सर्पकञ्चुको गवाश्वशकृत् अन्धाहिकाख्यमत्स्यशिर इति त्रयस्य धूपितस्य धूमोऽन्धंकरण इत्याह— सर्पनिर्मोकमित्यादि । निर्मोकशब्दस्य नपुंसकत्वमार्षम् । श्रीमूला.

**पारावतप्लवकक्रव्यादानां हस्तिनरवराहाणां च मूत्रपुरीषं कासीसहिङ्गुयवतुषकणतण्डुलाः कार्पासकुटजकोशातकीनां च बीजानि गोमूत्रिकाभाण्डीमूलं निम्बशिग्रुफणिज्जकाक्षीबपीलुकभङ्गः सर्पशफरीचर्म हस्तिनखशृङ्गचूर्णमित्येष धूमो मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वा प्रणीतः प्रत्येकशो यावच्चरति तावन्मारयति ॥**

पारावतादिषट्कमूत्रपुरीषं कासीसादित्रिकं कार्पासादित्रिकबीजानि गोमूत्रिकादिद्विकमूलं निम्बादिपञ्चकभङ्गः सर्पादिद्विकचर्म हस्तिसंबन्धि नखशृङ्गचूर्णमित्येतेष्वेकैकस्य मदनकोद्रवपलालेन वा हस्तिकर्णपलाशपलालेन वा प्रधूपितस्य धूमः स्वसंचारसमकालमेव प्राणिनो मारयतीत्याह— पारावतेत्यादि । तत्र पारावतः कपोतः । प्लवकः पक्षिभेदः । क्रव्यादः गृध्रः । कासीसं धातुभेदः । हिङ्गु रामठम् । यवतुषकणतण्डुलं शितशूकसंबन्धी तुषकणतण्डुलानां समाहारः । कुटजः वृक्षभेदः । कोशातकी अपामार्गः । गोमूत्रिका तृणभेदः । भाण्डी योजनवल्ली । शिग्रुः शोभाञ्जनः । फणिज्जः जम्बीरभेदः । काक्षीबः शिग्रुविशेषः । पीलुकः वृक्षभेदः । श्रीमूला.

**कालीकुष्ठनडशतावरीमूलं सर्पप्रचलाककृकणपञ्चकुष्ठचूर्णं वा धूमः पूर्वकल्पेनाऽऽर्द्रे शुष्कपलाले वा प्रणीतः सङ्ग्रामावतरणावस्कन्दनसंकुलेषु कृततेजनोदकाक्षिप्रतीकारैः प्रणीतः सर्वप्राणिनां नेत्रघ्नः ॥**

नेत्रघ्नं धूमयोगमाह— कालीत्यादि । तत्र काली अम्बष्ठा । नडः पोटगलः । शतावरी शतमूली । प्रचलाकः मयूरबर्हः । पूर्वकल्पेन 'मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वा' इति पूर्वमभिहितेन प्रकारेण । 'पूर्वकल्केन' इति पाठे अर्थश्चिन्त्यः । 'आर्द्रशुष्कपलालेन वा' इति क्वचित् पाठः । कृततेजनोदकाक्षिप्रतीकारैः कृतं स्वचक्षुर्घातपरिहाराय सज्जितं तेजनोदकं स्वबलोपघातप्रतीकारप्रकरणे (कौ. १४।४) वक्ष्यमाणं वृक्षविशेषोदकम् अक्षिप्रतीकारश्च अपरश्च तज्जातीयश्चक्षुरुपघातप्रतिविधिभिस्तथाभूतैः, अर्थात् प्रणेतृभिः । श्रीमूला.

**शारिकाकपोतबकबलाकालण्डमर्काक्षिपीलुकस्नुहिक्षीरपिष्टमन्धीकरणमञ्जनमुदकदूषणं च ॥**

शारिकेत्यादि । तत्र शारिका गोराटी । बकः कह्वः । बलाका बिसकण्ठिका । अर्कः अर्कपर्णाख्या ओषधिः । अक्षी वृक्षभेदो बिभीतकप्रकारः । स्नुहिः समन्तदुग्धा । श्रीमूला.

**यवकशालिमूलमदनफलजातीपत्रनरमूत्रयोगाः प्लक्षविदारीमूलयुक्तो मूकोदुम्बरमदनकोद्रवक्वाथयुक्तो हस्तिकर्णपलाशक्वाथयुक्तो वा मदनयोगः । शृङ्गिगौतमवृक्षकण्टकारमयूरपदीयोगो गुञ्जालाङ्गलीविषमूलिकेङ्गुदीयोगः करवीराक्षिपीलुकार्कमृगमारणीयोगो मदनकोद्रवक्वाथयुक्तो हस्तिकर्णपलाशक्वाथयुक्तो वा मदनयोगः । समस्ता वा यवसेन्धनोदकदूषणाः ॥**

मदनयोगानाह— यवकेत्यादि । तत्र यवकः तोयपर्णिका । शालिः कलमादिः । जाती मालती । योगाः मिश्रणानि । प्लक्षः पिप्पलः । मूकम् आविलं जलम् । उदुम्बरः हेमदुग्धः । मदनयोगः चित्तविभ्रमकरो योगः । शृङ्गिगौतमेत्यादि । * शृङ्गिगौतमं शृङ्ग्याख्यमत्स्यविशेषस्य मेदः । वृक्षः लोध्रः । कण्टकारः शाल्मलिवृक्षः । मयूरपदी ओषधिभेदः । लाङ्गली पृथक्पर्णी । विषमूलिका कालकूटादिः । इङ्गुदी कटभी । मृगमारणी ओषधि-

---

* गौतमशब्दस्य मेदपर्यायता कोशेषु नोपलभ्यते । शब्दकल्पद्रुमे गौतमशब्दः स्थावरविषभेदवाचकः इति हेमचन्द्रीयं मतमुदाहृतम् । वाचस्पत्यकोशस्तु गौतमशब्दस्थाने गौत्तसशब्दं पठति ।

भेदः । उक्ताः सर्व एवैते योगाः यवसेन्धनोदकानि दूषयन्तीत्याह– समस्ता वेत्यादि । श्रीमूला.

**कृतकण्डलकृकलासगृहगौलिकान्धाहिकधूमो नेत्रवधमुन्मादं च करोति ॥**

नेत्रघातोन्मादोभयहेतुं धूममाह– कृतकण्डलेत्यादि । कृता पक्वा कण्डला रलयोरभेदात् कण्डरा स्नायुसंघातः येषां ते कृतकण्डलाः । तथाभूतानां कृकलासगृहगौलिकान्धाहिकानां धूमः अर्थात् कृकलासादिस्नायुसंघाततापनोत्पन्नो धूमः नेत्रवधम् उन्मादं चित्तविभ्रमं च करोति । कृतकण्डलेत्यादेरपरा व्याख्या– कृतकण्डलानां मिश्रितकपिकच्छूकानां कृकलासादीनां धूमः इति ।

श्रीमूला.

**कृकलासगृहगौलिकायोगः कुष्ठकरः ॥**

इह योगशब्दो योगजधूमपरः । कुष्ठं कोठम् ।

श्रीमूला.

**स एव चित्रभेकान्त्रमधुयुक्तः प्रमेहमापादयति, मनुष्यलोहितयुक्तः शोषम् ॥**

स एव कृकलासगृहगौलिकायोग एव । आन्त्रं परीतत् । प्रमेहम् अतिमूत्रस्रावरोगम् । शोषं क्षयम् ।

श्रीमूला.

**दूषीविषं मदनकोद्रवचूर्णमुपजिह्विकायोगो मातृवाहकाञ्जलिकारप्रचलाकभेकाक्षिपीलुकयोगो विषूचिकाकरः ॥**

दूषीविषम् औषधाद्युपहतवीर्यं विषम्, मदनकोद्रवचूर्णम्, उपजिह्विकायोगः वम्रीमिश्रणम्, मातृवाहकाञ्जलिकारप्रचलाकभेकाक्षिपीलुकयोगः– मातृवाहकः पक्षिभेदः, अञ्जलिकारः ओषधिभेदः, प्रचलाकभेकाक्षिपीलुका व्याख्याताः, एषां योगः विषूचिकाकरः । श्रीमूला.

**पञ्चकुष्ठककौण्डिन्यकराजवृक्षपुष्पमधुयोगो ज्वरकरः ॥**

पञ्चकुष्ठेत्यादि । तत्र राजवृक्षः आरग्वधः । पुष्पमधुः मधूकः । श्रीमूला.

**भासनकुलजिह्वाग्रन्थिकायोगः खरीक्षीरपिष्टो मूकबधिरकरो मासार्धमासिकः । कलामात्रं पुरुषाणामिति समानं पूर्वेण ॥**

भासनकुलेत्यादि । तत्र भासः शकुन्ताख्यः पक्षिविशेषः । जिह्वा मञ्जिष्ठासंज्ञं भेषजम् । ग्रन्थिका पिप्पलीमूलम् । खरीक्षीरपिष्टः गर्दभीदुग्धसंमिश्रितः । मूकबधिरकरो मासार्धमासिकः मासेनार्धमासेन वा मूकत्वबधिरत्वयोरापादकः । योगानामुपयोक्तव्यपरिमाणं तु ‘ कलामात्रं पुरुषाणां द्विगुणः खराश्वानां चतुर्गुणं हस्त्युष्ट्राणाम् ’ इति पूर्वोक्तेन परिमाणेन समानमित्याह– कलामात्रमित्यादि ।

श्रीमूला.

**भङ्गकाथोपनयनमौषधानां चूर्णं प्राणभृताम् । सर्वेषां वा काथोपनयनम् । एवं वीर्यवत्तरं भवति । इति योगसंपत् ॥**

उक्तेषु योगेष्वौषधानां यथास्वं भङ्गक्वाथेन साधनं प्राणिनां चूर्णनं च कार्यमित्याह– भङ्गेत्यादि । उभयेषामपि क्वाथोपनयनपक्षमाह– सर्वेषां वेत्यादि । क्वाथसाधितस्य वीर्यातिशयमाह– एवं वीर्यवत्तरमिति । इति योगसंपदिति । निरूपितेति शेषः । श्रीमूला.

**शाल्मलीविदारीधान्यसिद्धो मूलवत्सनाभसंयुक्तश्चुचुन्दरीशोणितप्रलेपेन दिग्धो बाणो यं विध्यति स विद्धोऽन्यान् दश पुरुषान् दशति, ते दष्टा दशान्यान् दशन्ति पुरुषान् ॥**

औषधवीर्यमाह– शाल्मलीत्यादि । तत्र धान्यं कुस्तुम्बुरु । मूलं पिप्पलीमूलम् । वत्सनाभः विषभेदः । चुचुन्दरी उग्रविषो मूषिकभेदः । दिग्धः लिप्तः ।

श्रीमूला.

**भल्लातकयातुधानापामार्गबाणानां पुष्पैरेलकाक्षिगुग्गुलुहालाहलानां च कषायं बस्तनरशोणितयुक्तं दंशयोगः । ततोऽर्धधरणिको योगः सक्तुपिण्याकाभ्यामुदके प्रणीतो धनुःशतायाममुदकाशयं दूषयति । मत्स्यपरंपरा ह्येतेन दष्टाऽभिमृष्टा वा विषीभवति, यश्चैतदुदकं पिबति स्पृशति वा ॥**

अन्यं दंशयोगमाह— भल्लातकेत्यादि । तत्र बाणः अर्जुनवृक्षः । पुष्पैः, साधितमिति शेषः । एलकः त्वग्गन्धाख्यो वृक्षः । दंशयोग इति । उक्तकषायोपयोगः पूर्ववत् बहुपुरुषदंशनोपायो भवतीत्यर्थः । तस्य वीर्यमाह— तत इत्यादि । ततः उक्तात् कषायात् । अर्धधरणिकः रूप्यमाषकाष्टकप्रमाणः । सक्तुपिण्याकाभ्यां सक्तुना धानाचूर्णेन पिण्याकेन तिलकल्केन च सह । एतेन उक्तदंशयोगदूषितेन । विषीभवति विषतां प्रतिपद्यते । विषीभवन्तीति बहुवचनान्तपाठे कर्तृपदं बहुवचनान्तं छेत्तव्यम् । यश्चेत्यादि । यो वा एतदुदकं पिबति स च विषीभवतीत्यर्थः । श्रीमूला.

**रक्तश्वेतसर्षपैर्गोधा त्रिपक्षमुष्ट्रिकायां भूमौ निखातायां निहिता वध्येनोद्धृता यावत् पश्यति तावन्मारयति । कृष्णः सर्पो वा ॥**

*निहाका नाम जलजन्तुः श्वेतैश्च रक्तैश्च सर्षपैः सह पञ्चचत्वारिंशतं दिवसान् मृद्भाण्डविशेषे भूमौ खात्वा स्थापिता पश्चात् वध्यपुरुषेणोद्धृता सती यावत् तामुद्धर्ता पश्यति तावत् तं मारयतीत्याह— रक्तश्वेतेत्यादि । कृष्णः सर्पो वेति । सोऽपि रक्तश्वेतसर्षपैः त्रीन् पक्षान् उष्ट्रिकायां भूखातस्थापितायां निहितो वध्येनोद्धृतो यावत् तमुद्धर्ता पश्यति तावन्मारयतीत्यर्थः । श्रीमूला.

**विद्युत्प्रदग्धोऽङ्गारोऽज्वालो वा विद्युत्प्रदग्धैः काष्ठैर्गृहीतश्चानुवासितः कृत्तिकासु भरणीषु वा रौद्रेण कर्मणाऽभिहुतोऽग्निः प्रणीतश्च निष्प्रतीकारो दहति ॥**

निष्प्रतीकारमाग्नेयं योगमाह— विद्युत्प्रदग्ध इत्यादि । विद्युत्प्रदग्धेन्धनस्थो निर्ज्वालस्तद्वैद्युताग्निर्विद्युत्प्रदग्धैः काष्ठैर्गृहीत्वाऽभिवर्धितः कृत्तिकायुक्ते भरणीयुक्ते वा काले रुद्रदेवताकेन कर्मणा कृतहोमः परदुर्गादिषु प्रयुक्तोऽशक्यप्रतिक्रियो दाह्यं दहतीत्यर्थः । कर्मानुष्ठानक्रमस्तु संप्रदायादवगन्तव्यः । श्रीमूला.

* गोधापदव्याख्यानमिदम् ।

**कर्मारादग्निमाहृत्य क्षौद्रेण जुहुयात् पृथक् ।**
**सुरया शौण्डिकादग्निं भार्ग्याऽयोग्निं घृतेन च ॥**
**माल्येन चैकपत्न्यग्निं पुंश्चल्यग्निं च सर्षपैः ।**
**दध्ना च सूतिकास्वग्निमाहिताग्निं च तण्डुलैः ॥**
**चण्डालाग्निं च मांसेन चिताग्निं मानुषेण च ।**
**समस्तान् बस्तवसया मानुषेण ध्रुवेण च ॥**
**जुहुयादग्निमन्त्रेण राजवृक्षकदारुभिः ।**
**एष निष्प्रतिकारोऽग्निर्द्विषतां नेत्रमोहनः ॥**

योगान्तरं श्लोकचतुष्टयेनाऽऽह— कर्मारादित्यादिना । कर्मारात् वेणोर्वेण्वन्तरसंघृष्टात् अग्निम् आहृत्य क्षौद्रेण माक्षिकेण पृथक् जुहुयात् । वक्ष्यमाणाग्निभ्यः पार्थक्येनावस्थापिते तस्मिन् होमं कुर्यात् । पृथगित्युत्तरेष्वपि संबध्यते । शौण्डिकात् अग्निमाहृत्य सुरया मद्येन जुहुयात् । अयोग्निम् अयःशब्देनायस्कारलक्षणात् अयस्कारसकाशादाहृतमग्निमित्यर्थः, भार्ग्या ब्राह्मणयष्टिकाख्ययौषध्या घृतेन च जुहुयात् । एकपत्न्यग्निं पतिव्रतासकाशादाहृतमग्निं माल्येन जुहुयात् । पुंश्चल्यग्निम्— पुंश्चली बन्धकी, तदीयमग्निं सर्षपैर्जुहुयात् । सूतिकासु, विद्यमानमाहृतमिति शेषः, अग्निं दध्ना जुहुयात् । आहिताग्निं आहिताग्निसंबन्धिनमग्निमित्यर्थः, तण्डुलैर्जुहुयात् । चण्डालाग्निं चण्डालादाहृतमग्निं मांसेन जुहुयात् । चिताग्निं शवचित्याग्निं मानुषेण जुहुयात् । समस्तान् व्यस्तान् पूर्वोक्तरीत्या पृथक् पृथगभिहुतान् नवविधानग्नीनेकीकृतानित्यर्थः, बस्तवसया मेषवपया मानुषेण ध्रुवेण च वटेन च राजवृक्षकदारुभिः आरग्वधकाष्ठैः अग्निमन्त्रेण अग्निस्तावकमन्त्रेण संप्रदायाधिगन्तव्येन जुहुयात् । एषोऽग्निः द्विषतां नेत्रमोहनः । एनमग्निं स्वदुर्गादिषु देदीप्यमानं शत्रवो न केवलं प्रतिकर्तुमशक्ताः, किंतु तद्दर्शनान्मौढ्यमपि प्रतिपद्यन्ते इत्यर्थः । श्रीमूला.

**अदिते नमस्ते, अनुमते नमस्ते, सरस्वति नमस्ते, देव सवितर्नमस्ते । अग्नये स्वाहा, सोमाय स्वाहा, भूः स्वाहा, भुवः स्वाहा ॥**

मन्त्रैकदेशं दर्शयति— अदिते नमस्ते इत्यादिः । श्रीमूला.

शत्रुवञ्चनाय प्रयोक्तव्यानि अद्भुतोत्पादनानि

**[1]शिरीषोदुम्बरशमीचूर्णं सर्पिषा संहृत्यार्धमासिकक्षुद्योगः ॥**

'प्रलम्भनम्' इति सूत्रम्। औषधमन्त्रप्रयोगद्वारा क्षुत्प्रतीकारविरूपकरणादिना शत्रुवञ्चनमुच्यते इति सूत्रार्थः। अद्भुतोत्पादनं भैष्यज्यमन्त्रप्रयोगः इति द्विधा विभज्य प्रकरणमिदमध्यायद्वयेन वितन्यते । अद्भुतं पक्षोपवासमासोपवासादिकम्।

तत्र पक्षोपवासानुकूलं योगमाह– शिरीषेत्यादि। शिरीषः कपीतनः। उदुम्बरः जन्तुफलाख्यो वृक्षः। शमी सक्तुफला। संहृत्य संयोज्य। श्रीमूला.

**कशेरुकोत्पलकन्देक्षुमूलबिसदूर्वाक्षीरघृतमण्डसिद्धो मासिकः ॥**

मासोपवासयोगमाह– कशेरुकेत्यादि। तत्र कशेरुकं वृष्यकन्दम्। उत्पलकन्दः कुवलयकन्दः। बिसं मृणालम्। दूर्वा सहस्रवीर्या। मण्डः रसाग्रः। श्रीमूला.

**माषयवकुलत्थदर्भमूलचूर्णं वा क्षीरघृताभ्याम्, वल्लीक्षीरघृतं वा समसिद्धं सालपृश्निपर्णीमूलकल्कं पयसा पीत्वा, पयो वा तत्सिद्धं मधुघृताभ्यामशित्वा मासमुपवसति ॥**

मासोपवासयोगस्य प्रकारान्तराण्याह– माषयवेत्यादि। माषादिचतुष्टयचूर्णं क्षीरघृताभ्यां मिश्रितं पीत्वेत्येकः प्रकारः। वल्लीक्षीरघृतं समप्रमाणसिद्धं पीत्वेति द्वितीयः। सालपृश्निपर्णीमूलकल्कं पयसा मिश्रं पीत्वेति तृतीयः। पृश्निपर्णीमूलकल्कैः सह क्वाथसाधितं क्षीरं मधुघृताभ्यां मिश्रितं पीत्वेति चतुर्थः। तत्र माषः मलदः। यवः दीर्घशूकः। कुलत्थः धान्यभेदः। क्वचित् 'कुलस्थ' इति पाठः। दर्भः अश्ववालः। वल्ली अजमोदकः। सालः अर्जुनः। पृश्निपर्णी लाङ्गली। कल्कः द्रवाधरचूर्णम्।

श्रीमूला.

**श्वेतबस्तमूत्रे सप्तरात्रोषितैः सिद्धार्थकैः सिद्धं तैलं कटुकालाबौ मासार्धमासस्थितं चतुष्पदद्विपदानां विरूपकरणम् ॥**

विरूपकरणयोगमाह– श्वेतबस्तमूत्र इत्यादि। सिद्धार्थकैः सर्षपैः। कटुकालाबौ कटुतुम्ब्याम्। श्रीमूला.

**तक्रयवभक्षस्य सप्तरात्रादूर्ध्वं श्वेतगर्दभस्य लण्डयवैः सिद्धं गौरसर्षपतैलं विरूपकरणम् ॥**

तस्य प्रकारान्तरमाह– तक्रेत्यादि। तक्रयवौ सप्तरात्रं भक्षयितुः पश्चात् धवलगर्दभस्य विष्ठाभिर्यवैश्च सह पक्वं गौरसर्षपतैलमशितं वैरूप्यकारकं भवतीत्यर्थः। श्रीमूला.

**एतयोरन्यतरस्य मूत्रलण्डरससिद्धं सिद्धार्थकतैलमर्कतूलपतङ्गचूर्णप्रतिवापं श्वेतीकरणम् ॥**

श्वेतीकरणमाह– एतयोरित्यादि। एतयोः श्वेतबस्तश्वेतगर्दभयोः। अर्कतूलपतङ्गचूर्णप्रतिवापम्– अर्कः धुस्तूरः, तूलं ब्रह्मकाष्ठकम्, पतङ्गः शालिः, एतेषां चूर्णे प्रतिवापः प्रतिवपन्ति प्रतिसर्जयन्ति प्रतियोजयन्त्यन्येनैनमिति व्युत्पत्त्या प्रतियोजनीयमौषधं यस्य तत् तथाभूतम्। श्रीमूला.

**श्वेतकुक्कुटाजगरलण्डयोगः श्वेतीकरणम् ॥**

श्वेतीकरणस्य प्रकारान्तरमाह– श्वेतकुक्कुटेत्यादि। धवलकृकवाकुशयुविष्ठायोगः श्वैत्यकारक इत्यर्थः।

श्रीमूला.

**श्वेतबस्तमूत्रे श्वेतसर्षपाः सप्तरात्रोषितास्तक्रमर्कक्षीरमर्कतूलकटुकमत्स्यविलङ्गाश्च । पक्षस्थितो योगः श्वेतीकरणम् ॥**

अन्यं प्रकारमाह– श्वेतबस्तमूत्र इत्यादि। श्वेतच्छागमूत्रे सप्तरात्रवासिताः श्वेतसर्षपाः, उदश्वित्, धुस्तूरदुग्धम्, अर्कवृक्ष-ब्रह्मकाष्ठक-पटोल-मत्स्य-कृमिघ्नाख्यौषधिभेदाश्च एतेषां योगः पञ्चदशरात्रस्थितः श्वेतीकारक इत्यर्थः। श्रीमूला.

**समुद्रमण्डूकीशङ्खसुधाकदलीक्षारतक्रयोगः श्वेतीकरणम् ॥**

प्रकारान्तरमाह– समुद्रमण्डूकीत्यादि। तत्र सुधा मूर्वाख्या ओषधिः। क्षारः लवणभेदः। श्रीमूला.

**कदल्यवल्गुजक्षाररसशुक्ताः सुरायुक्तास्तक्रार्कतूलस्नुहिलवणं धान्याम्लं च पक्षस्थितो योगः श्वेतीकरणम् ॥**

---

(१) कौ. १४१२.

प्रकारान्तरमाह— कदल्यवल्गुजेत्यादि । तत्र अवल्गुजः सोमराजी । क्षारः लवणभेदः । रसः पारदः । शुक्तः पूतिपरुषाम्लः कन्दमूलफलाद्यभिषवजद्रव्यं वा । धान्याम्लं काञ्जिकम् । श्रीमूला.

**कटुकालाबौ वल्लीगते नगरमर्धमासस्थितं गौरसर्षपपिष्टं रोम्णां श्वेतीकरणम् ॥**

लोमश्वेतीकरणमाह— कटुकेत्यादि । कटुकालाबौ कटुतुम्ब्याम् । वल्लीगते तल्लतायाः अव्यपवृक्ते । नागरं शुण्ठी । नगरमिति ह्रस्वादिकमेव तु पठ्यते ।

श्रीमूला.

**अर्कतूलोऽर्जुने कीटः श्वेता च गृहगौलिका ।**
**एतेन पिष्टेनाभ्यक्ताः केशाः स्युः शङ्खपाण्डराः ॥**

अपरं लोमश्वेतीकरणयोगं श्लोकेनाऽऽह— अर्कतूल इत्यादि । अर्जुने ककुभवृक्षो यवसं चेत्यर्जुनद्वयम् । कीटः, इह विशेषग्रहणं संप्रदायादवगन्तव्यम् । एतेन अर्कतूलादिसमुदायेन । श्रीमूला.

**गोमयेन तिन्दुकारिष्टकल्केन वा मर्दिताङ्गस्य भल्लातकरसानुलिप्तस्य मासिकः कुष्ठयोगः ॥**

कुष्ठरोगोत्पादहेतुं योगमाह— गोमयेनेत्यादि । तत्र तिन्दुकः कालस्कन्धः । अरिष्टः निम्बः । श्रीमूला.

**कृष्णसर्पमुखे गृहगौलिकामुखे वा सप्तरात्रोषिता गुञ्जाः कुष्ठयोगः ॥**

कुष्ठयोगस्य प्रकारान्तरमाह— कृष्णसर्पमुख इत्यादि ।

श्रीमूला.

**शुकपित्ताण्डरसाभ्यङ्गः कुष्ठयोगः ॥**

प्रकारान्तरमाह— शुकेत्यादि । शुकपित्ताण्डरसाभ्यङ्गः शुकस्य मायुना अण्डरसेन च अङ्गानुलेपनम् ।

श्रीमूला.

**कुष्ठस्य प्रियालकल्ककषायः प्रतीकारः ॥**

कुष्ठस्य प्रतीकारमाह— कुष्ठस्येत्यादि । प्रियालकल्ककषायः प्रियालस्य राजादनाख्यस्य वृक्षस्य कल्केन कषायः । श्रीमूला.

**कुक्कुटीकोशातकीशतावरीमूलयुक्तमाहारयमाणो मासेन गौरो भवति ॥**

गौरत्वापादकं योगमाह— कुक्कुटीत्यादि । तत्र कोशातकी पटोली । शतावरी शतमूली । श्रीमूला.

**वटकषायस्नातः सहचरकल्कदिग्धः कृष्णो भवति ॥**

कृष्णयोगमाह— वटकषायस्नात इत्यादि । सहचरकल्कदिग्धः सहचरस्य अव्यथापरनाम्नः कुरवकस्य कल्केन स्नातः । श्रीमूला.

**शकुनकङ्गुतैलयुक्ता हरितालमनःशिलाः श्यामीकरणम् ॥**

तस्य प्रकारान्तरमाह— शकुनेत्यादि । तत्र शकुनः गृध्रः । कङ्गुः प्रियङ्गुः । हरितालः नटमण्डनम् । मनःशिला कुनटी । श्रीमूला.

**खद्योतचूर्णं सर्षपतैलयुक्तं रात्रौ ज्वलति ॥**

योगविशेषमाह— खद्योतेत्यादि । खद्योतः ज्योतिरिङ्गणः, तस्य चूर्णं खद्योतचूर्णम् । श्रीमूला.

**खद्योतगण्डूपदचूर्णं समुद्रजन्तूनां भृङ्गकपालानां खदिरकर्णिकाराणां पुष्पचूर्णं वा शकुनकङ्गुतैलयुक्तं तेजनचूर्णम्, पारिभद्रकत्वङ्मषी मण्डूकवसया युक्ता गात्रप्रज्वालनमग्निना ॥**

शरीरे तदबाधेनाग्नेः प्रज्वलनानुकूलान् योगानाह— खद्योतेत्यादि । खद्योतगण्डूपदचूर्णं ज्योतिरिङ्गणकिञ्चुलुकयोश्चूर्णम् । समुद्रजन्तूनाम्, इह विशेषग्रहणं संप्रदायात् विज्ञेयम् । भृङ्गकपालानाम्— भृङ्गः कलिङ्गाख्यः पक्षी, कपालाः शिरोस्थीनि, तेषाम् । चूर्णमित्यार्थम् । खदिरकर्णिकाराणां खदिराणां दन्तधावनाख्यानां वृक्षाणां कर्णिकाराणां वृक्षोत्पलानां च पुष्पचूर्णं वा शकुनकङ्गुतैलयुक्तं गृध्रप्रियङ्गुतैलयुक्तम् । तेजनचूर्णं वेणुचूर्णम् अर्थात् तथाभूतम् । पारिभद्रकत्वङ्मषी निम्बत्वङ्मषी मण्डूकवसया युक्ता । एतेष्वेकैकमिति शेषः । अग्निना गात्रप्रज्वालनम् एतेष्वेकैकं गात्रेऽनुलिप्तं गात्रस्य पीडां विनैवाग्निप्रज्वलनसाधनमित्यर्थः । श्रीमूला.

**पारिभद्रकत्वग्वज्रकदलीतिलकल्कप्रदिग्धं शरीरमग्निना ज्वलति ॥**

पारिभद्रकेत्यादि । तत्र वज्रं श्रीवेरम् । श्रीमूला.

**पीलुत्वङ्मषीमयः पिण्डो हस्ते ज्वलति । मण्डूकवसादिग्धोऽग्निना ज्वलति ॥**

पिण्डः बोलाख्यं भेषजम् । हस्ते ज्वलति विनाऽप्यग्नियोगमित्यर्थः प्रतीयते, उत्तरवाक्ये मण्डूकवसादिग्धस्य पिण्डस्याग्निना ज्वलनवचनात् । श्रीमूला.

**तेन प्रदिग्धमङ्गं कुशाम्रफलतैलसिक्तं समुद्रमण्डूकीफेनकसर्जरसचूर्णयुक्तं वा ज्वलति ॥**

तेन पिण्डेन । कुशाम्रफलतैलसिक्तं कुशतैलाम्रफलतैलाभ्यां सिक्तम् । समुद्रमण्डूकीफेनकसर्जरसचूर्णयुक्तं वा समुद्रमण्डूकीसमुद्रफेनकयक्षधूपचूर्णैर्युक्तं वा ।

श्रीमूला.

**मण्डूकवसासिद्धेन पयसा कुलीरादीनां वसया समभागं तैलं सिद्धमभ्यङ्गो गात्राणामग्निप्रज्वालनम् । मण्डूकवसादिग्धोऽग्निना ज्वलति ॥**

मण्डूकवसासिद्धेन मण्डूकवसया सह पक्वेन पयसा क्षीरेण, मिश्रमिति शेषः, कुलीरादीनां वसया, इहापि मिश्रमिति शेषः, समभागं पयोवसातुल्यप्रमाणं तैलं सिद्धम् अभ्यङ्गः अभ्यज्यमानमित्यर्थः, गात्राणां अग्निप्रज्वालनम् । मण्डूकवसादिग्धः अर्थादुक्ततैलाभ्यक्तः अग्निना ज्वलति । श्रीमूला.

**वेणुमूलशैवललिप्तमङ्गं मण्डूकवसादिग्धमग्निना ज्वलति ॥**

वेणुमूलेत्यादि । तत्र शैवलं जलनीली । श्रीमूला.

**पारिभद्रकप्रतिबलावञ्जुलवज्रकदलीमूलकल्केन मण्डूकवसादिग्धेन तैलेनाभ्यक्तपादोऽङ्गारेषु गच्छति ॥**

पारिभद्रकेत्यादि । तत्र प्रतिबला ओषधिभेदः ।

श्रीमूला.

**उपोदका प्रतिबला वञ्जुलः पारिभद्रकः ।**
**एतेषां मूलकल्केन मण्डूकवसया सह ॥**
**साधयेत् तैलमेतेन पादावभ्यज्य निर्मलौ ।**
**अङ्गारराशौ विचरेद् यथा कुसुमसंचये ॥**

अङ्गारराशिपादचारयोगं श्लोकाभ्यामाह– उपोदकेत्यादि । उपोदका सुताह्व ओषधिभेदः । अपोदकेति मत्स्यकालीनाम्ना काचिदोषधिरपरा क्षीरस्वामिनोक्ता ।

श्रीमूला.

**हंसक्रौञ्चमयूराणामन्येषां वा महाशकुनीनामुदकप्लवानां पुच्छेषु बद्धा नलदीपिका रात्रावुल्कादर्शनम् ॥**

उल्काप्रदर्शनमाह– हंसेत्यादि । उदकप्लवानां जले प्लवमानानां कारण्डवादीनाम् । नलदीपिका– नलः तृणविशेषः, तत्र योजिता दीपिका । उल्कादर्शनम्– रक्षःपिशाचादिभावितमलातम् उल्का, तद्दर्शनमिव नलदीपिकाया दूरात् दर्शनं नराणां भीतिं जनयतीत्यर्थः ।

श्रीमूला.

**वैद्युतं भस्माग्निशमनम् ॥**

विद्युद्दग्धकाष्ठजं भस्म अग्निप्रशमनम् । श्रीमूला.

**स्त्रीपुष्पपायिता माषा व्रजकुलीमूलं मण्डूकवसामिश्रं चुल्ल्यां दीप्तायामपाचनम् । चुल्लीशोधनं प्रतीकारः ॥**

स्त्रीरजोवासिताः माषाः मण्डूकवसामिश्रं व्रजकुलीमूलं गोष्ठोत्पन्नाया हिङ्गुद्याः मूलं च चुल्ल्यां दीप्तायां प्रज्वलन्त्यामपि चुल्ल्याम् अपाचनं पाचनहीनं भवति । ते च तच्च पाकं न प्राप्नुवन्तीत्यर्थः । चुल्लीशोधनमिति । चुल्ल्या अवतार्य तेषां शुचीकरणं प्रतीकारः* । श्रीमूला.

* वस्तुतः ‘ उक्ता माषा उक्तं वज्रकुलीमूलं च चुल्ल्यां प्रक्षिप्तं सत् प्रदीप्तायामपि चुल्ल्यामधिश्रितस्य पाच्यपदार्थस्य अपाचनं पाकप्रतिबन्धकं भवति । चुल्लीतस्तन्निःसारणरूपं चुल्लीशोधनं पाकप्रतिबन्धप्रतीकारः ’ इत्येव सरलोऽर्थः ।

**पीलुमयो मणिरग्निगर्भः सुवर्चलामूलग्रन्थिः सूत्रग्रन्थिर्वा पिचुपरिवेष्टितो मुखादग्निधूमोत्सर्गः ॥**

पीलुमयो मणिः पीलुदारुनिर्मितं अलिञ्जरम् अग्निगर्भः अन्तर्गताग्निः, सुवर्चलामूलग्रन्थिः क्षुमामूलग्रन्थिः सूत्रग्रन्थिर्वा क्षुमासूत्रग्रन्थिर्वा पिचुपरिवेष्टितः निरस्थितूलवेष्टितः मुखात् अग्निधूमोत्सर्गः अग्न्युत्सर्गस्य धूमोत्सर्गस्य च साधनमित्यर्थः। श्रीमूला.

**कुशाम्रफलतैलसिक्तोऽग्निर्वर्षप्रवातेषु ज्वलति॥**

वर्षप्रवातेषु वृष्टिषु महावातेषु च । ज्वलति न निर्वाति । श्रीमूला.

**समुद्रफेनकस्तैलयुक्तोऽम्भसि प्लवमानो ज्वलति ॥**

स्पष्टार्थम् । श्रीमूला.

**प्लवङ्गमानामस्थिषु कल्माषवेणुना निर्मथितोऽग्निर्नोदकेन शाम्यति, उदकेन च ज्वलति ॥**

प्लवङ्गमानां मर्कटानाम् । श्रीमूला.

**शस्त्रहतस्य शूलप्रोतस्य वा पुरुषस्य वामपार्श्वपर्शुकास्थिषु कल्माषवेणुना निर्मथितोऽग्निः, स्त्रियाः पुरुषस्य वाऽस्थिषु मनुष्यपर्शुकया निर्मथितोऽग्निर्यत्र त्रिरपसव्यं गच्छति, न चात्रान्योऽग्निर्ज्वलति ॥**

शूलप्रोतस्य शूलप्रवेशितदेहस्य । वामपार्श्वपर्शुकास्थिषु वामपार्श्वगतेषु पर्शुकाशब्दवाच्येषु अस्थिषु। यत्र प्रदेशे। श्रीमूला.

**चुचुन्दरी खञ्जरीटः खारकीटश्च पिष्यते ।**
**अश्वमूत्रेण संसृष्टा निगलानां तु भञ्जनम् ॥**

निगलभञ्जनयोगं श्लोकेनाऽऽह— चुचुन्दरीत्यादि । खञ्जरीटः खञ्जनः । खारकीटः ऊषभूमिजः कीटः । पिष्यते प्रत्येकम् । संसृष्टाः पिष्टाश्चुचुन्दर्यादय एकीकृताः । भञ्जनं भञ्जनसाधनम् । श्रीमूला.

**अयस्कान्तो वा पाषाणः ॥**

अयस्कान्तो वा पाषाण इति । निगलानां भञ्जनमिति वर्तते । अयोमणयो हि बहुप्रकाराः, कश्चिदयश्चुम्बति, कश्चिदयो भ्रामयति, कश्चिदयो भनक्ति । तत्र भञ्जकोऽयस्कान्तविशेष इह ग्राह्यः । 'आयस्कान्तः' इति दीर्घादिः क्वचित् पठ्यते । श्रीमूला.

**कुलीराण्डदर्दुरखारकीटवसाप्रदेहेन द्विगुणो दारकगर्भः कङ्कभासपार्श्वोत्पलोदकपिष्टश्चतुष्पदद्विपदानां पादलेपः, उलूकगृध्रवसाभ्यामुष्ट्रचर्मोपानहावभ्यज्य वटपत्रैः प्रतिच्छाद्य पञ्चाशद्योजनान्यश्रान्तो गच्छति। श्येनकङ्ककाकगृध्रहंसक्रौञ्चवीचिरल्लानां मज्जानो रेतांसि वा योजनशताय । सिंहव्याघ्रद्विपिकाकोलूकानां मज्जानो रेतांसि वा सार्ववर्णिकानि गर्भपतनान्युष्ट्रिकायामभिषूय श्मशाने प्रेतशिशून् वा तत्समुत्थितं मेदो योजनशताय ॥**

पञ्चाशद्योजनाश्रान्तगमनयोगमाह— कुलीराण्डेत्यादि । द्विगुणः घनतां प्रतिपन्नः । दारकगर्भः सूकरगर्भः । कङ्केत्यादिपदे उत्पलः मत्स्यभेदः । पादलेपः पादलेपनसाधनम् । उष्ट्रचर्मोपानहौ उष्ट्रचर्ममय्यौ पादरक्षिण्यौ । योजनशतगमनयोगमाह— श्येनकङ्केत्यादि । तत्र वीचिरल्लः तरङ्गाकारकम्बलरेखाङ्कः प्राणीति व्याख्येयम् । क्वचित् 'चिरल्लानाम्' इति पठ्यते । तत्र रेफस्य लेखकप्रमादकृतत्वे चिल्लः आतायी नाम पक्षीति व्याख्येयम् । मज्जानः वसाः। योजनशताय योजनशतगमनाय। कल्पन्ते इति शेषः। प्रकारान्तरमाह— सिंहव्याघ्रेत्यादि । सार्ववर्णिकानि ब्राह्मणादिसर्ववर्णभवानि गर्भपतनानि पतितान् गर्भान् उष्ट्रिकायां मृद्भाण्डविशेषे अभिषूय अभिषवविधिना सारं गृहीत्वा । प्रेतशिशून् वा अभिषूयेति संबध्यते । मेदः पलतेजः । श्रीमूला.

**अनिष्टैरद्भुतोत्पातैः परस्योद्वेगमाचरेत् ।**
**आराज्यायेति निर्वादः समानः कोप उच्यते ॥**

श्लोकेनाध्यायमुपसंहरति— अनिष्टैरिति । इति उक्तप्रकारैः अद्भुतोत्पातैः आश्चर्यकरैरुपप्लवैः परस्य शत्रोः उद्वेगं भयम् आराज्याय तदराजत्वाय आचरेत् उत्पादयेत् । स चायं डिम्बप्रवर्तनलक्षणो व्यापारः कलङ्कहेतुभूतोऽपि किमर्थमुपदिश्यत इत्याह— निर्वाद इति ।

निर्वादः कलङ्कः लक्षणया तद्धेतुभूतो डिम्बप्रवर्तनलक्षणो व्यापारः कोपे सति समानः विजिगीषुपरयोस्तुल्यः अन्योन्यमुद्दिश्यानुष्ठानविषयः। रागवशादेकस्य डिम्बप्रवृत्तावन्यस्यापि तत्प्रतिविधित्सोः सा भवत्येवावर्जनीयेत्यभिप्रायः। अत एव उच्यते व्युत्पाद्यते। श्रीमूला.

शत्रुवञ्चनाय प्रयोक्तव्या भैषज्यमन्त्रप्रयोगाः

**[1]मार्जारोष्ट्रवृकवराहश्वाविद्वागुलीनप्तृकाकोलूकानामन्येषां वा निशाचराणां सत्त्वानामेकस्य द्वयोर्बहूनां वा दक्षिणानि वामानि वाऽक्षीणि गृहीत्वा द्विधा चूर्णं कारयेत्। ततो दक्षिणं वामेन वामं दक्षिणेन समभ्यज्य रात्रौ तमसि च पश्यति॥**

भैषज्यं तावदाह– मार्जारेत्यादि। तत्र मार्जारः वृषदंशकः। वृकः ईहामृगः। श्वावित् शललः। वागुली पक्षिभेदः। नप्ता विष्किरः। उलूकः दिवाभीतः। अन्येषां वाग्गुदादीनाम्। द्विधा पार्थक्येन। तत इत्यादि। दक्षिणम् अवामं स्वचक्षुः। वामेन मार्जारादिवामाक्षिचूर्णेन। समभ्यज्य सम्यगनुलिप्य। श्रीमूला.

**एकाम्लकं वराहाक्षि खद्योतः कालशारिवा।**
**एतेनाभ्यक्तनयनो रात्रौ रूपाणि पश्यति॥**

तमसि रूपदर्शनयोगस्य प्रकारान्तरमाह– एकाम्लकमित्यादि। तत्र अम्लकं लकुचम्। कालशारिबा कृष्णवर्णा भद्रा नामौषधिः। श्रीमूला.

**त्रिरात्रोपोषितः पुष्ये शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां यवानावास्याविक्षीरेण सेचयेत्। ततो यवविरूढमालामाबध्य नष्टच्छायारूपश्चरति॥**

अन्तर्धानयोगमाह– त्रिरात्रोपोषित इत्यादि। पुष्ये सिध्यनक्षत्रयुक्ते काले। आवास्य उप्त्वा। नष्टच्छायारूपः परैरदृष्टा छाया रूपं च यस्य स तथाभूतः। श्रीमूला.

**त्रिरात्रोपोषितः पुष्येण श्वमार्जारोलूकवागुलीनां दक्षिणानि वामानि चाक्षीणि द्विधा चूर्णं कारयेत्। ततो यथास्वमभ्यक्ताक्षो नष्टच्छायारूपश्चरति॥**

तस्यान्यं प्रकारमाह– त्रिरात्रोपोषितः पुष्येण श्वमार्जारेत्यादि। यथास्वं यथायथं दक्षिणचूर्णेन दक्षिणस्य स्वचक्षुषोऽभ्यञ्जनं वामचूर्णेन वामस्येति क्रमेणेत्यर्थः। श्रीमूला.

**त्रिरात्रोपोषितः पुष्येण पुरुषघातिनः काण्डकस्य शलाकामञ्जनीं च कारयेत्। ततोऽन्यतमेनाक्षिचूर्णेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति॥**

तृतीयं प्रकारमाह– त्रिरात्रोपोषितः पुष्येण पुरुषघातिन इत्यादि। काण्डकस्य बाणस्य, तल्लोहेनेत्यर्थः। शलाकाम् अञ्जनशलाकाम्। अञ्जनीं अञ्जनोत्पादपात्रीम्। अन्यतमेन अक्षिचूर्णेन श्वमार्जाराद्यन्यतमचक्षुश्चूर्णेन। श्रीमूला.

**त्रिरात्रोपोषितः पुष्येण कालायसीमाञ्जनीं शलाकां च कारयेत्। ततो निशाचराणां सत्त्वानामन्यतमस्य शिरःकपालमञ्जनेन पूरयित्वा मृतायाः स्त्रिया योनौ प्रवेश्य दाहयेत्। तदञ्जनं पुष्येणोद्धृत्य तस्यामञ्जन्यां निदध्यात्। तेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति॥**

चतुर्थं प्रकारमाह– त्रिरात्रोपोषितः पुष्येण कालायसीमित्यादि। कालायसीं कालायसमयीम्। निशाचराणां श्वमार्जारादीनाम्। तस्यामञ्जन्यां कालायस्यां पूर्वोक्तायाम्। श्रीमूला.

**यत्र ब्राह्मणमाहिताग्निं दग्धं दह्यमानं वा पश्येत्, तत्र त्रिरात्रोपोषितः पुष्येण स्वयंमृतस्य वाससा प्रसेवं कृत्वा चिताभस्मना पूरयित्वा तमाबध्य नष्टच्छायारूपश्चरति॥**

पञ्चमं प्रकारमाह– यत्र ब्राह्मणमित्यादि। प्रसेवं स्यूतं वस्त्रकोशमित्यर्थः। तम् आबध्य प्रसेवं स्वदेहसंबद्धं कृत्वा। श्रीमूला.

(१) कौ. १४।३.

**ब्राह्मणस्य प्रेतकार्ये या गौर्मार्यते तस्या अस्थिमज्जाचूर्णपूर्णाऽहिभस्त्रा पशूनामन्तर्धानम् ॥**

लोमवल्लाङ्गूलानां चतुष्पदानामन्तर्धानयोगं षष्ठमाह— ब्राह्मणस्येत्यादि । अस्थिमज्जाचूर्णपूर्णा अस्थ्नो मज्जायाश्च चूर्णेन पूर्णा । अहिभस्त्रा सर्पचर्म । श्रीमूला.

**सर्पदष्टस्य भस्मना पूर्णा प्रचालकभस्त्रा मृगाणामन्तर्धानम् ॥**

चतुष्पदसामान्यस्यान्तर्धानयोगं सप्तममाह— सर्पेत्यादि । श्रीमूला.

**उलूकवागुलीपुच्छपुरीषजान्वस्थिचूर्णपूर्णाऽहिभस्त्रा पक्षिणामन्तर्धानम् ॥**

पक्ष्यन्तर्धानयोगमष्टममाह— उलूकेत्यादि । उलूकवागुल्योर्यत् पुच्छादिचतुष्टयं तस्य चूर्णैः पूर्णा । श्रीमूला.

**इत्यष्टावन्तर्धानयोगाः ॥**

**बलिं वैरोचनं वन्दे शतमायं च शम्बरम् ।**
**भण्डीरपाकं नरकं निकुम्भं कुम्भमेव च ॥**
**देवलं नारदं वन्दे वन्दे सावर्णिगालवम् ।**
**एतेषामनुयोगेन कृतं ते स्वापनं महत् ॥**
**यथा स्वपन्त्यजगराः स्वपन्त्यपि चमूखलाः ।**
**तथा स्वपन्तु पुरुषा ये च ग्रामे कुतूहलाः ॥**
**भण्डकानां सहस्रेण रथनेमिशतेन च ।**
**इमं गृहं प्रवेक्ष्यामि तूष्णीमासन्तु भाण्डकाः ॥**
**नमस्कृत्वा च मनवे बद्ध्वा शुनकफेलकाः ।**
**ये देवा देवलोकेषु मानुषेषु च ब्राह्मणाः ॥**
**अध्ययनपारगाः सिद्धा ये च कैलासतापसाः ।**
**एते च सर्वसिद्धेभ्यः कृतं ते स्वापनं महत् ॥**
**अतिगच्छति च मय्यपगच्छन्तु संहताः ।**
**अलिते वलिते मनवे स्वाहा ॥**

अथ चतुरः प्रस्वापनयोगान् वक्ष्यति । तत्राऽऽद्ययोर्द्वयोः साधारणं मन्त्रमाह— बलिं वैरोचनमित्यादि । 'अलिते वलिते मनवे स्वाहा' इत्येतदन्तस्य मन्त्रस्यार्थः स्पष्टप्रायः संप्रदायतो निर्णेयः । श्रीमूला.

**एतस्य प्रयोगः— त्रिरात्रोपोषितः कृष्णचतुर्दश्यां पुष्ययोगिन्यां श्वपाकीहस्ताद् बिलखावलेखनं क्रीणीयात् । तन्माषैः सह कण्डोलिकायां कृत्वाऽसंकीर्ण आदहने निखानयेत् । द्वितीयस्यां चतुर्दश्यामुद्धृत्य कुमार्या पेषयित्वा गुलिकाः कारयेत् । तत एकां गुलिकामभिमन्त्रयित्वा यत्रैतेन मन्त्रेण क्षिपति तत् सर्वं प्रस्वापयति ॥**

अस्य मन्त्रस्य प्रयोगमाह— एतस्येत्यादिना । श्वपाकीहस्तात् चण्डालीहस्तात् । बिलखावलेखनम्— बिलं खनन्तीति बिलखाः आखुजातीया जन्तवश्चण्डालभक्ष्यभूताः, तेषामवलेखनं खण्डम् । तत् बिलखावलेखनम् । कण्डोलिकायां पिटे । असंकीर्णे अनाकीर्णे प्रदेशे । आदहने पितृवने । निखानयेत् खातायां भूमौ स्थापयेत् । द्वितीयस्यामित्यादि । कुमार्या कन्यकया । गुलिकाः गुटिकाः । तत् सर्वं तत्प्रदेशस्थं प्राणिजातम् । श्रीमूला.

**एतेनैव कल्पेन श्वाविधः शल्यकं त्रिकालं त्रिश्वेतमसंकीर्ण आदहने निखानयेत् । द्वितीयस्यां चतुर्दश्यामुद्धृत्याऽऽदहनभस्मना सह यत्रैतेन मन्त्रेण क्षिपति तत् सर्वं प्रस्वापयति ॥**

द्वितीयं प्रयोगमाह— एतेनैवेत्यादि । एतेनैव कल्पेन 'त्रिरात्रोपोषितः कृष्णचतुर्दश्यां पुष्ययोगिन्याम्' इत्यनेन विधिना । शल्यकं शलम् । त्रिकालं त्रिश्वेतं त्रिषु स्थानेषु कार्ष्ण्येन त्रिषु स्थानेषु श्वेतिम्ना च युक्तम् । क्षिपति अर्थाच्छल्यकम् । श्रीमूला.

**सुवर्णपुष्पीं ब्रह्माणीं ब्रह्माणं च कुशध्वजम् ।**
**सर्वाश्च देवता वन्दे वन्दे सर्वांश्च तापसान् ॥**
**वशं मे ब्राह्मणा यान्तु भूमिपालाश्च क्षत्रियाः ।**
**वशं वैश्याश्च शूद्राश्च वशतां यान्तु मे सदा ॥**
**स्वाहा । अमिले किमिले वसुजारे प्रयोगे फक्के वयुह्वे विहाले दन्तकटके स्वाहा ॥**
**सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः ।**
**श्वाविधः शल्यकं चैतत् त्रिश्वेतं ब्रह्मनिर्मितम् ॥**
**प्रसुप्ताः सर्वसिद्धा हि एतत् ते स्वापनं कृतम् ।**
**यावद् ग्रामस्य सीमान्तः सूर्यस्योद्गमनादिति ॥**
**स्वाहा ॥**

तृतीयस्य प्रस्वापनयोगस्य मन्त्रमाह– सुवर्णपुष्पी-मित्यादि । 'सूर्यस्योद्गमनादिति स्वाहा' इत्यन्तं मन्त्र-स्वरूपम् । तत्र 'वसुजारे' इत्यस्य स्थाने 'वयुचारे' इति क्वचित् पठ्यते, 'वयुह्वे' इत्यस्य स्थाने 'घुट्टे' इति 'कटके' इत्यस्य स्थाने 'कट्टके' इति च । श्रीमूला.

**एतस्य प्रयोगः– श्वाविधः शल्यकानि त्रिश्वेतकानि । सप्तरात्रोपोषितः कृष्णचतुर्दश्यां खादिराभिः समिधाभिरग्निमेतेन मन्त्रेणाष्टशत-संपातं कृत्वा मधुघृताभ्यामभिजुहुयात् । तत एकमेतेन मन्त्रेण ग्रामद्वारि गृहद्वारि वा यत्र निखन्यते तत् सर्वं प्रस्वापयति ॥**

अस्य मन्त्रस्य प्रयोगमाह– एतस्य प्रयोगः श्वाविध इत्यादिना । 'त्रिश्वेतानि' इत्येतदुत्तरम् 'आदहने निखानयेत्' इति संबन्धनीयम् । खादिराभिः– खदिरः दन्तधावनाख्यो वृक्षः, तन्मयीभिः । इह अणन्तत्वेऽपि ङीबभाव आर्षः । समिधाभिः समिद्भिः । इह 'आपं चैव हलन्तानाम्' इति वा(? भा)गुरिमतेन हलन्ताट्टाप् । अष्टशतसंपातं कृत्वा अष्टोत्तरं शतं संपाताः होमाः यस्मिंस्तं तथाभूतं कृत्वा । तत इत्यादि । ततः आदहन-निखातोद्धृतेभ्यः शल्यकेभ्यः । श्रीमूला.

**बलिं वैरोचनं वन्दे शतमायं च शम्बरम् ।**
**निकुम्भं नरकं कुम्भं तन्तुकच्छं महासुरम् ॥**
**अर्मालवं प्रमीलं च मण्डोलूकं घटोबलम् ।**
**कृष्णकंसोपचारं च पौलोमीं च यशस्विनीम् ॥**
**अभिमन्त्रयित्वा गृह्णामि सिद्धार्थं शवशारि-काम् ।**
**जयतु जयति च नमः शलकभूतेभ्यः स्वाहा ।**
**सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः ॥**
**सुखं स्वपन्तु सिद्धार्था यमर्थं मार्गयामहे ।**
**यावदस्तमयादुदयो यावदर्थं फलं मम ॥**
**इति स्वाहा ॥**

चतुर्थस्य प्रस्वापनयोगस्य मन्त्रमाह– बलिं वैरोचन-मित्यादिना 'फलं मम । इति स्वाहा' इत्यन्तेन । श्रीमूला.

**एतस्य प्रयोगः– चतुर्भक्तोपवासी कृष्ण-चतुर्दश्यामसंकीर्णे आदहने बलिं कृत्वैतेन मन्त्रेण शवशारिकां गृहीत्वा पोत्रीपोट्टलिकां बध्नीयात् । तन्मध्ये श्वाविधः शल्यकेन विद्ध्वा यत्रैतेन मन्त्रेण निखन्यते, तत् सर्वं प्रस्वापयति ॥**

एतस्य प्रयोगमाह– एतस्येत्यादि । चतुर्भक्तोपवासी चतुर्दिवसात्मानशनव्रती । शवशारिकां शवभूतां शारिकां मुखरां नाम पक्षिभेदम् । पोत्रीपोट्टलिकाम्– पोत्रं वस्त्रम्, तदल्पं पोत्री, पोट्टलिका 'पोट्टलम्' इति भाषाप्रसिद्धः पदार्थः, पोत्रीमयीं पोट्टलिकामित्यर्थः । तन्मध्य इत्यादि । तन्मध्ये तस्याः पोट्टलिकाया मध्ये । श्रीमूला.

**उपैमि शरणं चाग्निं दैवतानि दिशो दश ।**
**अपयान्तु च सर्वाणि वशतां यान्तु मे सदा ॥**
**स्वाहा ॥**

अथ द्वारापावरणयोगस्य मन्त्रमाह– उपैमि शरण-मित्यादि । श्रीमूला.

**एतस्य प्रयोगः– त्रिरात्रोपोषितः पुष्येण शर्करा एकविंशतिसंपातं कृत्वा मधुघृताभ्या-मभिजुहुयात् । ततो गन्धमाल्येन पूजयित्वा निखानयेत् । द्वितीयेन पुष्येणोद्धृत्यैकां शर्करा-मभिमन्त्रयित्वा कवाटमाहन्यात् । अभ्यन्तरं चतसृणां शर्कराणां द्वारमपाव्रियते ॥**

तत्प्रयोगमाह– एतस्य प्रयोगः–त्रिरात्रोपोषित इत्यादि । शर्कराः शिरोस्थीनि शिलाविशेषान् वा, गृहीत्वेति शेषः । अभिजुहुयात् अर्थादग्निम् । पूजयित्वा शर्करा एवाभ्यर्च्य । अभ्यन्तरमित्यादि । एकया शर्करया कवाटाघाते कृते शर्कराचतुष्टयान्तरालपरिमाणं विवरं कवाटे जायते इत्यर्थः । श्रीमूला.

**चतुर्भक्तोपवासी कृष्णचतुर्दश्यां भग्नस्य पुरुषस्यास्थ्ना ऋषभं कारयेदभिमन्त्रयेच्चैतेन । द्विगोयुक्तं गोयानमाहृतं भवति । ततः पर-माकाशे विक्रामति ॥**

उक्तस्यैव मन्त्रस्य प्रयोगान्तरमाह— चतुरित्यादि। एतेन 'उपैमि शरणम्' इत्यादिना स्वाहान्तेन मन्त्रेण। आहृतगोयानप्रयोजनमाह— ततः परमाकाश इत्यादि। श्रीमूला.

**सदारविरविः सगण्डपरिघाति सर्वं भणाति। चण्डालीकुम्बीत्तम्बकटुकसारीघः सनारीभगोऽसि स्वाहा॥**

तालोद्घाटनप्रस्वापनयोरुभयोः साधकं योगं वक्ष्यन् प्रथमं तस्य मन्त्रमाह— सदारविरविः सगण्डपरिघातीत्यादि। सगण्डस्थाने सगन्धेति क्वचित् पाठः। त्तम्बस्थाने तुम्भेति, 'सारीघः सनारी' इत्यस्य स्थाने 'सारीपसारी' इति च। श्रीमूला.

**तालोद्घाटनं प्रस्वापनं च॥**

तालस्य द्वारयन्त्रस्य उद्घाटनम्। श्रीमूला.

**त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां तुवरीरावास्योदकेन सेचयेत्। जातानां पुष्येणैव गृहीत्वा रज्जुकां वर्तयेत्। ततः सज्यानां धनुषां यन्त्राणां च पुरस्ताच्छेदनं ज्याच्छेदनं करोति॥**

अथ ज्याच्छेदनयोगमाह— त्रिरात्रोपोषित इत्यादि। तुवरीः आढकीः। आवास्य उप्त्वा। रज्जुकाम् अल्पां रज्जुम्। वर्तयेत् सृजेत्। अर्थात् तुवर्यङ्कुरैरेव। 'वर्तयति' इत्यपि पाठः। तत इत्यादि। सज्यानां समारोपितमौर्वीकाणाम्। ज्याच्छेदनमिति। एतत् यन्त्रावयवच्छेदनस्याप्युपलक्षणम्। श्रीमूला.

**उदकाहिभस्त्रामुच्छ्वासमृत्तिकया स्त्रियाः पुरुषस्य वा पूरयेत्। नासिकाबन्धनं मुखग्रहश्च॥**

नासिकाबन्धनमुखग्रहयोः साधकं योगमाह— उदकाहिभस्त्रामित्यादि। उच्छ्वासमृत्तिकया उच्छ्वाससंबद्धया मृत्तिकया नासिकाबन्धनं नासानिरोधः। मुखग्रहः मुखस्तम्भनम्। श्रीमूला.

**वराहवस्तिमुच्छ्वासमृत्तिकया पूरयित्वा मर्कटस्नायुनाऽवबध्नीयादानाहकारणम्॥**

आनाहयोगमाह— वराहवस्तिमित्यादि। उच्छ्वासमृत्तिकया अर्थात् स्त्रियाः पुरुषस्य वा। मर्कटस्नायुना वानरवस्नसया। 'स्नाय्वना स्नसा' इति यादवः। आनाहकारणम्— आनाहः मलविष्टम्भः, तस्य कारणम्। श्रीमूला.

**कृष्णचतुर्दश्यां शस्त्रहताया गोः कपिलायाः पित्तेन राजवृक्षमयीममित्रप्रतिमामञ्ज्यात्। अन्धीकरणम्॥**

शत्र्वन्धीकरणयोगमाह— कृष्णचतुर्दश्यामित्यादि। पित्तेन पित्तधातुना। अञ्ज्यात् चक्षुषोर्लिम्पेत्। अन्धीकरणम् अर्थादमित्रस्य। श्रीमूला.

**चतुर्भक्तोपवासी कृष्णचतुर्दश्यां बलिं कृत्वा शूलप्रोतस्य पुरुषस्यास्थ्ना कीलकान् कारयेत्। एतेषामेकः पुरीषे मूत्रे वा निखात आनाहं करोति। पादेऽस्याऽऽसने वा निखातः शोषेण मारयति। आपणे क्षेत्रे गृहे वा वृत्तिच्छेदं करोति॥**

आनाहयोगान्तरं शोषेण मारणयोगं वृत्तिच्छेदकरणयोगं चाऽऽह— चतुर्भक्तेत्यादि। बलिं कृत्वा यथाविहितं भूतोपहारं दत्त्वा। आनाहं करोतीति। यदीयं मूत्रादि तस्येत्यार्थम्। पादेऽस्येत्यादि। अस्य आसनादिस्वामिनः। वृत्तिच्छेदं जीविकाभङ्गम्। श्रीमूला.

**एतेन कल्पेन विद्युद्दग्धस्य वृक्षस्य कीलका व्याख्याताः॥**

शूलप्रोतपुरुषास्थिकीलकोक्तं विधिं विद्युद्दग्धवृक्षकीलकेष्वतिदिशति— एतेन कल्पेनेत्यादि। विद्युद्दग्धवृक्षकीलकानामप्येकः पुरीषादिनिखातस्तत्तत्कार्यं जनयतीत्यर्थः। श्रीमूला.

**पुनर्नवमवाचीनं निम्बः काकमधुश्च यः।**
**कपिरोम मनुष्यास्थि बद्ध्वा मृतकवाससा॥**
**निखन्यते गृहे यस्य पिष्ट्वा वा यं प्रपाययेत्।**
**सपुत्रदारः सधनस्त्रीन् पक्षान् नातिवर्तते॥**

योगान्तरं श्लोकद्वयेनाऽऽह— पुनर्नवमित्यादि। अवाचीनं पुनर्नवम् अवाग्भवं शोथघ्नीसंज्ञं शाकं तत्पुष्पं वा।

काकमधुः काकप्रियफलो वृक्षः । 'काममधुः' इति पाठान्तरम् । 'प्रपाययेत्' इत्यस्य स्थाने 'पदं नयेत्' इति क्वचित् पठ्यते । श्रीमूला.

**पुनर्नवमवाचीनं निम्बः काकमधुश्च यः ।**
**स्वयंगुप्ता मनुष्यास्थि पदे यस्य निखन्यते ॥**
**द्वारे गृहस्य सेनाया ग्रामस्य नगरस्य वा ।**
**सपुत्रदारः सधनस्त्रीन् पक्षान् नातिवर्तते ॥**

त्रिपक्षान्तरमारणयोगस्य प्रकारान्तरं श्लोकद्वयेनाऽऽह– पुनर्नवमित्यादि । स्वयंगुप्ता आत्मगुप्तापरपर्याया कच्छुरा नामौषधिः । श्रीमूला.

**अजमर्कटरोमाणि मार्जारनकुलस्य च ।**
**ब्राह्मणानां श्वपाकानां काकोलूकस्य चाऽऽहरेत् ।**
**एतेन विष्ठाऽवक्षुण्णा सद्य उत्सादकारिका ॥**

सद्य उत्सादकारकं योगं सार्धेनाऽऽह– अजमर्कटेत्यादि । एतेन अजमर्कटादिरोमसंघातेन सह । अवक्षुण्णा चूर्णिता । सद्य उत्सादकारिका तत्क्षणोत्सत्तिहेतुः, अर्थात् विष्ठिनः । श्रीमूला.

**प्रेतनिर्मालिका किण्वं रोमाणि नकुलस्य च ।**
**वृश्चिकाल्यहिकृत्तिश्च पदे यस्य निखन्यते ।**
**भवत्यपुरुषः सद्यो यावत् तन्नापनीयते ॥**

अपुरुषीकरणयोगं सार्धेनाऽऽह – प्रेतेत्यादि । प्रेतनिर्मालिका शवनिर्माल्यम् । किण्वं मद्यबीजम् । वृश्चिकाल्यहिकृत्तिः– वृश्चिकाही प्रसिद्धौ, अली पुच्छकण्टकवान् वृश्चिकभेदः, तेषां कृत्तिः चर्म । श्रीमूला.

**त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां गुञ्जा आवास्योदकेन च सेचयेत् । जातानाममावास्यायां पौर्णमास्यां वा पुष्ययोगिन्यां गुञ्जावल्लीर्ग्राहयित्वा मण्डलिकानि कारयेत् । तेष्वन्नपानभाजनानि न्यस्तानि न क्षीयन्ते ॥**

अन्नपानभाजनाक्षययोगमाह– त्रिरात्रोपोषित इत्यादि । गुञ्जावल्लीः पुंशिरःकपोलोत्पन्ना एव कृष्णलालताः । मण्डलिकानि मण्डलाकृतीन्यधिकरणानि । श्रीमूला.

**रात्रिप्रेक्षायां प्रवृत्तायां प्रदीपाग्निषु मृतधेनोः स्तनानुत्कृत्य दाहयेत् । दग्धान् वृषमूत्रेण पेषयित्वा नवकुम्भमन्तर्लेपयेत् । तं ग्राममपसव्यं परिणीय तत्र न्यस्तं नवनीतमेषां तत् सर्वमागच्छतीति ॥**

ग्रामगतसर्वनवनीतागमनयोगमाह– रात्रीत्यादि । रात्रिप्रेक्षायां रात्रिनृत्तादौ । परिणीय परिगमय्य । एषां ग्रामाणाम् । श्रीमूला.

**कृष्णचतुर्दश्यां पुष्ययोगिन्यां शुनो लम्नकस्य योनौ कालायसीं मुद्रिकां प्रेषयेत् । तां स्वयं पतितां गृह्णीयात् । तया वृक्षफलान्याकारितान्यागच्छन्ति ॥**

वृक्षफलानयनयोगमाह– कृष्णेत्यादि । लम्नकस्य मत्तस्य । शुनः, इह पुंस्त्वमविवक्षितम्, शुन्या इत्यर्थः । मुद्रिकाम् अङ्गुलीयकादिम् । तया मुद्रिकया । आकारितानि आहूतानि । श्रीमूला.

**मन्त्रभैषज्यसंयुक्ता योगा मायाकृताश्च ये ।**
**उपहन्यादमित्रांस्तैः स्वजनं चाभिपालयेत् ॥**

प्रान्ते श्लोकमाह– मन्त्रेत्यादि । मन्त्रभैषज्यसंयुक्ताः प्रकृताध्यायोक्ताः ये योगाः, ये च मायाकृताः गात्रप्रज्वालनाङ्गारराशिसंचारादिसाधका योगाः, तैः अमित्रान् अरातीन् उपहन्यात्, स्वजनं च अभिपालयेत् अमित्रोपघातद्वारेण रक्षेत् विजिगीषुः ।

दत्ता टिप्पणिकाऽस्माभिर्भैषज्यस्यैवमल्पशः ।
क्रमस्तु सर्वस्तस्यापि मन्त्रवत् सांप्रदायिकः ॥

श्रीमूला.

स्वसैन्ये परप्रयुक्तविषादीनां प्रतिकारः

**[1]स्वपक्षे परप्रयुक्तानां दूषिविषगराणां प्रतीकारे श्लेष्मातककपित्थदन्तिदन्तशठगोजीशिरीषपाटलीबलास्योनाकपुनर्नवाश्वेतावरणक्वाथयुक्तं चन्दनसालावृकीलोहितयुक्तं तेजनोदकं राजोपभोग्यानां गुह्यप्रक्षालनं स्त्रीणां सेनायाश्च विषप्रतीकारः ॥**

(१) कौ. १४।४.

'स्वबलोपघातप्रतीकारः' इति सूत्रम्। स्वसैन्यस्य परप्रयुक्तविषाम्बुदूषणादिनिमित्तो य उपघातः तस्य प्रतीकारोऽभिधीयते इति सूत्रार्थः।

स्वपक्ष इत्यादि। प्रतीकारे आकाङ्क्ष्यमाणे इति शेषः। श्लेष्मातकेत्यादि। राजभोग्यानां स्त्रीणां सेनायाश्च विषप्रयोगे परेण कृते श्लेष्मातकादिद्वादशकक्वाथयुक्तेन चन्दनजम्बुकीरुधिरयुक्तेन च तेजनोदकेन तद्गुह्यावनेजनं प्रतीकार इत्यर्थः। तत्र श्लेष्मातकः शेलुः वसन्तकुसुमाख्यः। कपित्थः दधित्थः। दन्ती उदुम्बरपर्णी। दन्तशठः जम्बीरः। गोजी गोजिह्वा दार्विकाख्या। शिरीषः कपीतनः शुकप्रियाख्यः। पाटली गोलिहः अमोघा वा। बला वाट्यालकः। स्योनाकः शुकनासाख्यः। पुनर्नवा शोथघ्नी। श्वेता पैष्टिकी सुरा। वरणः सेतुसंज्ञो वृक्षभेदः। श्रीमूला.

**पृषतनकुलनीलकण्ठगोधापित्तयुक्तं मषीराजिचूर्णं सिन्दुवारितवरणवारुणीतण्डुलीयकशतपर्वाग्रपिण्डीतकयोगो मदनदोषहरः॥**

मदनदोषप्रतीकारमाह— पृषतेत्यादि। पृषतादिचतुष्टयपित्तयुक्तं मषीराज्योश्चूर्णं सिन्दुवारितादिषट्कयोग इति द्वयं मदकरद्रव्यदोषहरमित्यर्थः। तत्र पृषतः बिन्दुचित्रो मृगभेदः। नकुलः बभ्रुः। नीलकण्ठः मयूरः। गोधा जलजन्तुभेदः। मषी नीलशेफालिका। राजिः राजसर्षपः। सिन्दुवारितः सिन्दुवारवृक्षः। वरणः सेतुः उद्भिद्भेदः। वारुणी दूर्वा। तण्डुलीयकः जीवशाकः। शतपर्वाग्रं वंशाग्रम्। पिण्डीतकः मरुबकः। श्रीमूला.

**सृगालविन्नामदनसिन्दुवारितवरणवारणवल्लीमूलकषायाणामन्यतमस्य समस्तानां वा क्षीरयुक्तं पानं मदनदोषहरम्॥**

उक्तस्यैव प्रतीकारस्य प्रकारान्तरमाह— सृगालेत्यादि। सृगालविन्नादिपञ्चकमूलकषायाणां व्यस्तानां समस्तानां वा क्षीरयुक्तं पानं मदं हरतीत्यर्थः। तत्र सृगालविन्ना ओषधिभेदः। मदनः प्रसिद्धः। वारणवल्ली गजाह्वा गजपिप्पली। श्रीमूला.

**कैडर्यपूतितिलतैलमुन्मादहरं नस्तःकर्म॥**

उन्मादप्रतीकारमाह— कैडर्यपूतितिलतैलमित्यादि। कैडर्यः कट्फलः। पूतिः पूतिकरजः। तिलाः प्रसिद्धाः। एतत्तैलेन क्रियमाणं नस्तःकर्म चित्तविभ्रमहरं भवतीत्यर्थः। श्रीमूला.

**प्रियङ्गुनक्तमालयोगः कुष्ठहरः॥**

कुष्ठहरं योगमाह— प्रियङ्गुनक्तमालयोग इत्यादि। तत्र प्रियङ्गुः कङ्गुः। नक्तमालः चिरिबिल्वः। श्रीमूला.

**कुष्ठलोध्रयोगः पाकशोषघ्नः॥**

कोठशाबरयोगः पाकशोषघ्नः— पाकः केशशौक्ल्यम्, शोषः क्षयः, तावुभौ हन्ति। श्रीमूला.

**कट्फलद्रवन्तीविलङ्गचूर्णं नस्तःकर्म शिरोरोगहरम्॥**

शिरोरोगहरं नस्तःकर्मविशेषमाह— कट्फलेत्यादि। तत्र कट्फलः कैडर्यः। द्रवन्ती शम्बरी नामौषधिभेदः। विलङ्गः कृमिघ्नः। श्रीमूला.

**प्रियङ्गुमञ्जिष्ठातगरलाक्षारसमधुकहरिद्राक्षौद्रयोगो रज्जूदकविषप्रहारपतननिःसंज्ञानां पुनःप्रत्यानयनाय॥**

नष्टसंज्ञाप्रत्यापत्तिसाधकं योगमाह— प्रियङ्ग्वित्यादि। प्रियङ्गुः कङ्गुः। मञ्जिष्ठा अञ्जनवल्लिका। तगरः नन्द्यावर्तः। लाक्षा अलक्तः। मधुकः मधुष्ठीलः। हरिद्रा रात्र्याख्या। क्षौद्रं माक्षिकम्। एषां योगः योगसिद्धमौषधमित्यर्थः। रज्जूदकविषप्रहारपतननिःसंज्ञानां रज्जुबन्धेन उदकमज्जनेन विषवेगेन ताडनेन उच्चदेशादधःपतनेन च नष्टसंज्ञानां प्राणिनां पुनःप्रत्यानयनाय पुनःसंज्ञाप्रतिलम्भनाय। कल्पते इति शेषः। श्रीमूला.

**मनुष्याणामक्षमात्रम्। गवाश्वानां द्विगुणम्। चतुर्गुणं हस्त्युष्ट्राणाम्॥**

उक्तानां प्रतीकारौषधानामुपयोक्तव्यां मात्रामाह— मनुष्याणामित्यादि। अक्षमात्रम्— अक्षः षोडशमाषकाः, तावन्मात्रमित्यर्थः। श्रीमूला.

**रुक्मगर्भश्चैषां मणिः सर्वविषहरः ॥**

रुक्मगर्भः अन्तर्गतस्वर्णः एषां मणिः उक्तप्रियङ्ग्वादिनिष्पन्ना गुलिकेत्यर्थः, सर्वविषहरः धार्यमाणः सर्वविधं विषं हरति । श्रीमूला.

**जीवन्तीश्वेतामुष्ककपुष्पवन्दाकानामक्षीबे जातस्याश्वत्थस्य मणिः सर्वविषहरः ॥**

जीवन्त्यादीनां मणिः अक्षीबे जातस्याश्वत्थस्य मणिश्च सर्वविषहर इत्यर्थः । तत्र जीवन्ती गुलूची । श्वेता शङ्खिनी । मुष्ककः मोक्षकवृक्षः । पुष्पम् ओषधिभेदः । वन्दाका लताभेदः । अक्षीबः शिग्रुः महानिम्बो वा । श्रीमूला.

**तूर्याणां तैः प्रलिप्तानां शब्दो विषविनाशनः ।**
**लिप्तध्वजं पताकां वा दृष्ट्वा भवति निर्विषः ॥**
**एतैः कृत्वा प्रतीकारं स्वसैन्यानामथाऽऽत्मनः ।**
**अमित्रेषु प्रयुञ्जीत विषधूमाम्बुदूषणान् ॥**

अध्यायप्रान्ते श्लोकावाह– तूर्याणामित्यादि । तूर्याणां वाद्यानाम् । तैः जीवन्त्यादिसाधितैरौषधैः । ध्वजं केतुदण्डम् । पताकां दण्डोर्ध्वबद्धमंशुकम् । एतैरिति । औषधयोगैरुक्तैः स्वसैन्यानाम् आत्मनश्च प्रतीकारं रक्षां कृत्वा विषधूमाम्बुदूषणान् विषधूमयोगान् उदकदूषणयोगांश्च अमित्रेषु शत्रुषु प्रयुञ्जीत । श्रीमूला.

## मनुः

युद्धभूमौ विविधाः सैन्यव्यूहनिवेशाः शत्रुस्थानापेक्षया

**'दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ।**
**वराहमकराभ्यां वा सूच्या वा गरुडेन वा ॥**

(१) परराष्ट्रं प्रत्यभिप्रस्थितः– दण्डेनेति । तत्र दण्डाकारो व्यूहः दण्डव्यूहः । एवं शकटाकृतिस्थानात् शकट इत्यादि योज्यम् । पुरस्तात् बलाध्यक्षो मध्ये राजा पश्चात् सेनापतिः पार्श्वयोर्हस्तिनस्तेषां समीपेऽश्वास्ततः पदातय इत्येष सर्वतः समवायो दण्डव्यूहोऽतिर्यग्भवति सर्वतो भयकार्यः । सूचीव्यूहः स्थलसमुत्थानसैनिकः प्रवीरपुरुषमुखोऽतिदीर्घ ऊर्ध्वो यतः परकक्षोऽन्यैः( ? पक्षकक्षोरस्यैः ) समं प्रवर्तमानः । मकरव्यूहस्तु मुखे जघनयोः पृथुरुभयतो (भ)येन प्रशस्तः । सर्वे न फल्गुबलं लभते न चानर्थम् । तद्धि शूरैर्हन्यमानमन्येषामपि भङ्गाय भवति । तस्मात्तमन्यकार्यमवरुद्धं निश्चयेनावतिष्ठते । परिशिष्टं तु बलं व्यूहस्यान्तः प्रक्षिपेत् । एवं रचनाविशेषैरुक्तैरुक्तप्रयोजनापेक्षया वा विशेषेण तु समायां भूमौ दण्डगरुडसूचिभिर्यायात् । विषमायां संकटायां शकटमकरवराहैरिति । * मेधा.

( २ ) दण्डाकृतिर्व्यूहरचनादिः दण्डव्यूहः । एवं शकटादिर्व्यूहा अपि । तत्राग्रे बलाध्यक्षो मध्ये राजा पश्चात्सेनापतिः पार्श्वयोर्हस्तिनस्तत्समीपे घोटकास्ततः पदातय इत्येवं कृतरचनो दीर्घः सर्वतः समविन्यासो दण्डव्यूहः । तेन तत् यातव्यं मार्गे सर्वतो भये सति यायात् । सूच्याकाराग्रः पश्चात् पृथुलः शकटव्यूहः । तेन पृष्ठतो भये सति गच्छेत् । सूक्ष्ममुखपश्चाद्भागः पृथुमध्यो वराहव्यूहः । एष एव पृथुतरमध्यो गरुडव्यूहः । ताभ्यां पार्श्वयोर्भये सति व्रजेत् । वराहविपर्ययेण मकरव्यूहः । तेनाग्रे पश्चाच्चोभयत्र भये सति गच्छेत् । पिपीलिकापङ्क्तिरिव अग्रपश्चाद्भावेन संहतरूपतया यत्र यत्र सैनिकावस्थानं स शीघ्रप्रवीरपुरुषमुखः सूचीव्यूहः । तेनाग्रतो भये सति यायात् । † ममु.

( ३ ) युद्धार्थं सैन्यसंनाहरचनामाह मनुः– दण्डव्यूहेनेति । पमा. ४०१

( ४ ) व्यूहे दण्डादिपदप्रक्षेपस्तदाकृतिसूचनार्थः । व्यूहस्तु सेनायाः संस्थानम् । तेऽत्र सप्त । गारुडस्त्वग्रे पश्चाच्च सूक्ष्मः प्रसारितपक्षवद्दीर्घः पृथूदरः । ‡ मच.

**'यतश्च भयमाशङ्केत्ततो विस्तारयेद्बलम् ।**
**पद्मेन चैव व्यूहेन निविशेत सदा स्वयम् ॥**

* मवि. , नन्द. , भाच. मेधागतम् ।

† गोरा. , रार. ममुगतम् ।

‡ शेषं मेधागतं ममुगतं च ।

(१) मस्मृ. ७।१८७ ; राक. १२४ ; रार. ३५ ; पमा. ४०१ ; राप्र. ४०० तन्मा (तं मा) गरु (गारु).

(१) मस्मृ. ७।१८८ ; राक. १२४ प्रथमचरणे (यतः शङ्केत सभयं) विशेत स (वसेत त) ; रार. ३५

( १ ) तस्मिन् पथि यस्मात्प्रदेशात् परहितकारिभ्यो भयाशङ्का स्यात् तेन प्रदेशेन पूर्वव्यूहाद्विस्तारयेद्बलं गव्यूतिमात्रमधिकं वा । यव(?जव)संपन्नदृढप्रहार-विस्तीर्णशत्रु(?जत्रु)पुष्टपरस्परावरुद्धरथिकाश्वारोहकरिबला-न्यवहितानि भवन्ति । समन्ताद्विस्तृतपरिमण्डलो मध्य-निविष्टविजिगीषुः पद्मव्यूहः । एवं नित्यं निविशेत् पुरा-न्निर्गच्छेद्ग्रामाद्वा । § मेधा.

( २ ) यस्या दिशः शत्रुकृतं भयमाशङ्क्येत तस्यामेव बलं विस्तारयेत् । समन्ततो विस्तृतपरिमण्डलः मध्योप-विष्टविजिगीषुः पद्मव्यूहः । तेन पुरान्निर्गत्य एवं सर्वदा स्वयं सुस्थातव्यम् । † गोरा.

( ३ ) एषां च विकल्पेन करणे निमित्तमाह— यतश्चेति । निविशेत शिबिरं कुर्यात् । मवि.

**[1]सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत् ।**
**यतश्च भयमाशङ्केत्प्राचीं तां कल्पयेद्दिशम् ॥**

( १ ) सेनापतिः, समग्रस्य धनस्य(?बलस्य) अधि-पतिः बलाध्यक्षः । तयोर्बहुत्वाभावात् द्विवचननिर्देशाच्च सर्वदिक्षु तदसंभव इति तत्पुरुषास्तच्छब्देनोच्यन्ते । तदीयपुरुषसंनिवेशाच्च सर्वदिक्षु तावेव संनिवेशितौ भवतः । तेन भिन्नैस्तुरगगजादिभिस्तत्प्रतिबद्धनिवेशानां संयोधनाय समन्ततो निवेश्य, गिरिं वनं गर्तं वा पृष्ठतोऽध्यक्षं कृत्वा । यतो भयमाशङ्केत यथा सा प्राची दिग्भवति । एवं निवेशं कुर्यात् अभिमुखनिर्गमार्थमिव विद्वद्भिः । * मेधा.

( २ ) सेनापतिबलाध्यक्षाविति । हस्त्यश्वरथपदात्यात्म-कस्याङ्गदशकस्यैकः पतिः कार्यः, सः पत्तिकः उच्यते । पत्तिकदशकस्यैकः पतिः स सेनापतिः । तद्दशकस्यैकः स नायकः । स एव च बलाध्यक्षः । तौ सर्वासु दिक्षु अनेक-प्रधानत्वे सति संघर्षयुद्धार्थं नियोजयेत् । यस्याश्च दिशो भयमाशङ्केत तामग्रे दिशं कुर्यात् । § गोरा.

( ३ ) सेनापतिः सैन्ये प्रधानभूतः स्वयं योद्धा । बलाध्यक्षः बलावेक्षकः । प्राचीं तामिति तत्संमुखो निविशे-तेत्यर्थः । ¶ मवि.

**[1]गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः ।**
**स्थाने युद्धे च कुशलानभीरूनविकारिणः ॥**

( १ ) गुल्मान् मनुष्यसमवायान् । केचित् साक्षात्स-मन्ततः सशङ्खपटहाः । अन्ये विपरीताः । तत्र चोत्पन्नं दुश्चिकित्स्यं महते चानर्थाय । गुणैर्विशेषयति— आप्तान् आप्तसदृशानित्यभेदार्थम् । कृतसंज्ञान् कृता संज्ञा सं-बोधनाय यैस्ते कृतसंज्ञाः, तान् । अवसरे युद्धेषु शङ्ख-भेरीनादध्वजादिभिर्वाद्यैस्तूर्यमेवाऽऽहरिष्यामः, तदपगमा-शङ्कायां चैवमेव कुर्यात्, शङ्खे आहते ध्वजे वोच्छ्रिते पृथक्पृथगवस्थातव्यम्, एवं संहतैरेवं प्रहर्तव्यम्, एवं व्यावर्तितव्यमित्यादि स्थितम् । स्थाने कुशलाः अन्यैः शूरैः शक्यमागन्तुं समेतेन शक्यमस्मिन् वयमपृथक् परे पृथगित्यादि । युद्धे अनुसरणादौ कुशला भवन्तः संहत-कैर्योधनीयाप्रसारं कृत्वा प्रविष्टाः पृष्ठदेशात्प्रहारिणः चित्रं योजयितव्याः, भग्नानामनेकायनशतानां पृष्ठं ग्राह्य-

---

§ मच., भाच. मेधागतम् ।

† ममु. गोरागतम् ।

सदा (तदा); पमा. ४०२ सदा (तथा); मच. प्रथम-चरणे 'आशङ्केत भयं यस्मात्' इति मेधातिथिपाठं निर्दिशति; राप्र. ४०० प्रथमचरणे (यतः शङ्केत सभयं) पद्मे (पाद्मे) विशेत (वसेत).

(१) मस्मृ. ७।१८९; राक. १२४ उत्तरार्धे (भयं यतो वा शङ्केत तां प्राचीं कल्पयेद्दिशम् ॥); रार. ३५; पमा. ४०२ पतिबलाध्यक्षौ (पतीन् बलाध्यक्षान्) त्प्राचीं तां (त्तां प्राचीं); राप्र. ४०० राकवत्.

* रार. मेधागतम् ।

§ ममु. गोरावत् । मच., भाच. गोरागतम् ।

¶ नन्द. मविगतम् ।

(१) मस्मृ. ७।१९०; राक. १२४ द्वितीयचरणे (शतसंख्यांस्ततस्ततः) भीरूनवि (भीतानधि); रार. ३५; पमा. ४०२; राप्र. ४०१ द्वितीयचरणे (शतसंख्यांस्तत-ततः).

मित्यादि। अभीरवः अनेन विस्तीर्णसमेताः। अविकारिणोऽभेदात्मकैर्यैर्युक्तमपरस्य। एवमेतान् गुल्मान् समन्ततः तिसृषु दिक्षु गव्यूतिमात्रव्यापिनः प्रत्यहमनियतदेशान् बहून् स्थापयेत्। भयप्रतिबोधनार्थमवहितो भवेत्। जनो विश्वस्तो भवति दानमानकार्यदर्शनादिभिः। अपवृत्ते युद्धेऽमात्यादिभिः सह सर्वेषां स्वार्थः सङ्ग्रामः, मम नाममात्रं राजेति, सर्वे वयं समानविभवोपभोगाय, जये राज्यं पराजये स्वर्ग इति हेतुना आगताः। मेधा.

(२) गुल्मान् गुल्मदेशस्थान्। कृतसंज्ञाने तत्संकेतश्चस्यैव प्रवेशादय इति संकेतं कृत्वा। स्थाने गुल्मस्थानावस्थाने। युद्धे युद्धादिभूमिस्थाने। कुशलान् कृतानुभवान्। अभीरून् सङ्ग्राममरणादभीतान्। अविकारिणः आसत्त्वे सत्यपि कदाचिदागन्तुकविचाररहितान्। मवि.

(३) गुल्मान् सैन्यैकदेशान् आप्तपुरुषाधिष्ठितान् स्थानापसरणयुद्धार्थं कृतभेरीपटहशङ्खादिसंकेतान् अवस्थानयुद्धयोः प्रवीणान् निर्भयान् अव्यभिचारिणः सेनापतिबलाध्यक्षान् दूरतः सर्वदिक्षु पारक्यप्रवेशवारणाय शत्रुचेष्टापरिज्ञानाय च नियोजयेत्। * ममु.

(४) किंच, गुल्मान् आप्तपुरुषाधिष्ठितसैन्यैकदेशान् कृतसंज्ञान् युद्धोद्यमसूचकभेरीपटहशङ्खादिसंकेतान् सेनापतिबलाध्यक्षयोर्दूरतः स्थापयेदित्यन्वयः। कुशलान् अवस्थानयुद्धयोः। अविकारिणः धनलोभादिना विकर्तुमशीलान्। † मच.

(५) सेनानिवेशविशेषः गुल्मः। स्थाने अपलायने। अविकारिणः अकृतापराधान्। नन्द.

(६) सेनायाः समन्ततः। कृतसंज्ञान् शिरस्युपरि पत्रं पुष्पं धारयेदित्यर्थः। एतादृशान् गुल्मान् रक्षकान् आप्तान् स्थापयेत्। स्थाने युद्धस्थाने युद्धे च कुशलान्। भाच.

* गोरा. ममुगतम्। रार., भाच. ममुगतम्।

† शेषं ममुगतम्।

**'संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून्।**
**सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत्॥**

(१) असंहता हि बलवद्विस्तीर्णं बलमासाद्यावयवशो विध्वंसनाय वाहनाघातैः क्षयं यान्ति, तद्विनाशे चोत्सन्ना इमे अतोऽल्पानात्मीयान् संहतान् योधयेत्। अन्योन्यापेक्षया युध्यमानानभिघ्नतः इतरेतरानुग्रहात्परस्परानुरागात् स्पर्धायां च परान् संहतान् सोढुं समर्था भवन्ति। कामं यथेष्टं कार्यार्थे बहून् विस्तारयेत् विप्रकीर्णान् योधयेदित्यादि मन्येत। भिन्नांस्ताश्चैतान् भयमेष्यति, परान् स्वान्वा बहून् दृष्ट्वा त्रासः स्यादिति। सूची पूर्वोक्तो व्यूहभेदः। (वज्रः) अग्रतः पृष्ठतश्च त्रिधा व्यवस्थितः। पार्श्वयोर्भेदनेन तेन चाऽऽत्मानं सूचिव्यूहं विभज्य योधयेत्। सतां च सर्वव्यूहानां प्रतिष्ठाव्यूहनसमर्थाविति प्रतिगृहीताववेकारणात्। यदा तु परबले ह्येतावेव भवतस्तदा स्वे बले विपर्ययः कार्यः। तुल्यत्वे तु पुष्टिमत्त्वानुरक्तकुशलमाननप्रभूतैकार्थकारित्वादितो विशेषो यथासंभवं वा(क्यैः?)। योधयेदिति वचनाद्राजा स्वयं तत्प्रतिसंधानार्थं व्यूहदुर्गाद्याश्रये प्रतिग्रहभूतस्तिष्ठेत्। समानतन्त्रेणोक्तम्– 'द्वे शते धनुषां गत्वा राजा तिष्ठेत्प्रतिग्रहः। भिन्नसंघातनार्थं तु न युध्येताप्रतिग्रहः॥' (कौ. १०।५)। मेधा.

(२) अल्पान् योधान् संहतान् कृत्वा योधयेत्। बहून् पुनर्यथेच्छं विस्तारयेत्। सूच्या पूर्वोक्तया वज्राख्येन वा व्यूहेन त्रिधाऽवस्थितबलेन रचयित्वा योधान् योधयेत्। * गोरा.

(३) सूच्याऽल्पान्। वज्रेण बहून्। मवि.

(४) कथं योद्धव्यमित्यस्योत्तरमाह– संहतानिति। संहतान् परकीयान् प्रति अल्पान् योधान् योधयेत् युद्धाय नियोजयेत्, अल्पान् प्रति वा बहूंश्चेद्विस्तारयेत् प्रदर्शयेत्। वज्रेणेति। 'त्रिधा व्यवस्थितबलो वज्र इत्यभिधीयते'। मच.

* ममु. गोरावत्। रार., भाच. गोरागतम्।

(१) मस्मृ. ७।१९१; राक. १३०; रार. ३६ व्यूहेन व्यूह्य (व्यूह्य व्यूहेन); पमा. ४०२; शप्र. ४०४.

(५) अल्पबलश्चेदल्पान् स्वकीयान् योधान् संहतान् कृत्वा योधयेत्। * नन्द.

देशानुरूपयुद्धसाधनविवेकः

**[1]स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा।**
**वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले॥**

(१) सेनानां देशस्य प्रक्लृप्त्यर्थमाह— स्यन्दनेति। समप्रदेशे रथैरश्वैश्च युध्येत। तत्र हि तेषामप्रतिघातः। अनूपः पानीयप्रायः। तत्राप्यल्पोदके हस्तिभिः, अगाधोदके तु नौभिः। तेषां हि तत्र सुखप्रचारता। वृक्षैर्गुल्मैश्च संछन्ने धनुर्भिः। तद्ग्रहणाच्च बलीवर्दगर्ताद्याकुलो गृह्यते, समानकार्यत्वात्। स्थलमिति पाषाणवृक्षलतागर्तादिरहितो देशः, तस्मिन् सिद्धिः। धार्यैः शरा-(?अस्या)दिभिरायुधैश्च शक्त्यादिभिर्युध्येत, आसन्नयुद्धत्वात्। एवं सामर्थ्यप्रदर्शनार्थत्वादस्य। मेधा.

(२) समभूभागे रथाश्वैर्योद्धव्यम्, तत्र रथसामर्थ्यात्। तथा अनुगतोदके नौहस्तिभिः, वृक्षगुल्मव्याप्ते धनुर्भिः, पाषाणकण्टकगर्तादिरहिते खड्गफलकाख्यैरायुधैः। ‡ गोरा.

(३) स्यन्दनाश्वैः स्यन्दनैरश्वैश्च। चापैरसिचर्मायुधैरिति पदातीनामायुधकथनम्। अश्वादयो देशविशेषे, पदातयस्तु सर्वत्रेत्याशयः। मवि.

(४) यथाक्रमं युद्धोचितं देशमाह— स्यन्दनेति। समे समस्थले, शुष्के इति यावत्। अनूपे अल्पोदकस्थले। नावश्च, द्विपाः करिणः, तैः। वृक्षाश्च, गुल्माः वंशादयः, तैरावृते। स्थले निम्नोन्नते। मच.

(५) अनूपः प्रभूतजलो देशः। नन्द.

* शेषं मविवत्।

‡ ममु. गोरावत्। भाच. गोरागतम्।

(१) मस्मृ. ७।१९२; राक. १३० पूर्वार्धे (युध्येत स्यन्दनाश्वेन समे भूपोन्नतद्विपैः।); रार. ३६; पमा. ४०२; राप्र. ४०५ पूर्वार्धे (युध्येत स्यन्दनाश्वेन समेऽनूपोन्नते द्विपैः।).

अग्रसैन्ये नियोज्याः

**[1]कुरुक्षेत्रांश्च मत्स्यांश्च पञ्चालाञ्शूरसेनजान्।**
**दीर्घांल्लघूंश्चैव नरानग्रानीकेषु योजयेत्॥**

(१) कुरुक्षेत्रं प्रसिद्धम्। मत्स्यसंज्ञो विराटदेशः। नागपुरे पञ्चालाः उभये कान्यकुब्जा आहिच्छत्राश्च। शूरसेनजाः माथुराः। क्वचिच्चात्र भवार्थे प्रत्ययो लुप्तनिर्दिष्टः। एतद्देशजा हि प्रायेण महावर्ष्माणो बलवन्तः पृथुवक्षसः शूरा अभिमानिनो दुर्विषहा इत्यत्र ये-(? इत्यग्रा)ऽनीकस्थिताः परेषां भयहेतवो भवन्ति। दीर्घकाया अध्यस्ताल्पदेशा अपि दीर्घश्वासकराः, महाकायत्वात्। लघवस्तु मारणासमर्था निर्भयेन जनेन प्रच्छन्ना विद्धाः प्रहरन्तोऽपकारसमर्थाः। आदर्शभूताश्चैते इतरेषां भवन्ति। मेधा.

(२) लघून् शीघ्रान्। अग्रानीकेषु, तेषामापततामधृष्यत्वात्। मवि.

(३) कुरुक्षेत्रभवान्, मत्स्यान् विराटदेशनिवासिनः, पञ्चालान् कान्यकुब्जाहिच्छत्रोद्भवान्, शूरसेनजान् माथुरान् प्रायेण पृथुशरीरशौर्याहंकारयोगान् सेनाग्रे योजयेत्। तथा अन्यदेशोद्भवानपि दीर्घलघुदेहान् मनुष्यान् युद्धाभिमानिनः सेनाग्रे एव योजयेत्। * ममु.

(४) कुरुक्षेत्राद्युपलक्षणम्, अन्यानपीति श्रीकरः। रार. ३६

(५) मनुष्यसंनिवेशप्रकारमाह— कौरुक्षेत्रांश्चेति। कुरुक्षेत्रादयो देशविशेषाः, तदुद्भवान्। लघून् शरीरतो विक्रमतश्च। अग्रानीकेषु अनीकानां सेनानाम् अग्रेषु। मच.

* गोरा. ममुवत्।

(१) मस्मृ. ७।१९३; मेधा. कुरु (कौर); राक. १३० पञ्चा (पाञ्चा) नग्रा (नुग्रा); रार. ३६ पञ्चा (पाञ्चा); पमा. ४०२ राखत्; मच. कुरु (कौरु); राप्र. ४०५ कुरु (कौरु) मत्स्यां (मात्स्यां) पञ्चा (पाञ्चा) नग्रा (नुग्रा).

( ६ ) कुरुक्षेत्रादिदेशजाः कृतज्ञाः शूरजाश्च, तेष्वपि दीर्घाः प्रतिपक्षभीषणाश्च, तेष्वपि लघवः प्रवृत्तिक्षमाश्च । अतस्तानग्रानीकेषु योजयेदित्यभिप्रायः । नन्द.

( ७ ) दीर्घान् नालसंघान् पश्चिमदेशनिवासिनः । लघून् पर्वतवासिनः । भाच.

स्वसैन्यस्योत्साहनं परीक्षणं च

**[1]प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक्परीक्षयेत् ।**
**चेष्टाश्चैव विजानीयादरीन् योधयतामपि ॥**

( १ ) व्यूहं रचयित्वा स्वबलं भृशं दर्शयन् ‘ किमेषां जीयते ? जिता एवामी युष्मत्प्रतापेन ’ इत्येवं प्रहर्षयेत् । ‘ जये महानर्थलाभः, आश्रितोपाश्रितसुखम् । वधे वाऽपि स्वर्गो भर्तृपिण्डनिर्यातनं च । पराजये त्रितयाभावः ’ इत्यादि नैमित्तिकोऽपि तदुपदेशः । तादृशनिमित्तनियमान्मानय सहस्वोर्व्यावश्यंभावो यदि प्रधानपुरुषः स्वजनवधो राजा तदप्रतिग्रहव्याजेन स्थितो भीरुत्वात् स्वयं युद्धं न कामयते इत्यादि । तत्र ये ब्रूयुः– ‘ नैतदेवम् । स्वार्थ एवायमस्माकमत्र वधः शस्त्रोपजीविभूतानां सङ्ग्रामविशेषधर्मोऽव्ययीभावः स्वधर्मायासोऽनर्थहेतुः राजा सर्वप्रकारैः रक्षणीयः । परिश्रान्तानां चास्माकमपरिश्रान्तसुखमनुग्रहं करिष्यतीत्येवमर्थं स्थितः ’ इति, तान् विशेषतो गृह्णीयात् । जेतुः ( ? ये तु ) प्रशंसितुः परसंव्ययं वा कारयेयुस्तानुपग्रहैः परिष्वङ्गालङ्कारदानादिना च वशीकुर्यात् । चेष्टां चैवारीणां योधयतां विजानीयात् । कथं युद्धे चेष्टन्ते कोशा बलं वा । केचित् द्विधाहृदयाः केचित्तु पक्षान्त इत्यादिचिन्तानित्यत्वान्मनुष्याणामुपकुर्वतोऽपि स्वार्थवशादुपकुर्वन्तीत्यत्र दुष्टानाप्तवलमध्ये विन्यसेत् । मेधा.

( २ ) बलं रचयित्वा जये धर्मार्थौ, पराजये स्वर्गानृण्ये, इत्येवमादिना युद्धार्थं प्रोत्साहयेत् । तांश्च योधान् समीक्ष्य परीक्षयेत्– ‘ क एवमुक्त्वा हृष्यन्ति कुप्यन्ति च ’ इति । तथा योधानामरिष्वयुध्यमानानामपि सोपधानयुद्धादिचेष्टाः विजानीयात् । † गोरा.

( ३ ) परीक्षयेत् स्वयमनुसंदध्यात् । मवि.

( ४ ) प्रहर्षयेत्– ‘ जये तु यशोभूम्यादिलाभः, सङ्ग्राममरणे तु यशोदिव्यस्वर्गलाभोत्तमसुखानि, पलायनेऽर्थहानिरकीर्तिर्नरकदुःखानि, रणादपक्रान्तस्यापि काले मरणमवश्यमेव ’ इत्यादिसप्रमाणवाक्यैः । ‘भेर्यादिभिरपि’ इति पल्लवः । बलमत्र सेनान्यादिपरम् । ‘ बलमत्र षड्विधम्, इभादेरपि हर्षेण जयसंपत्तेः ’ इति लक्ष्मीधरः । इष्टतया किमनिष्टतया, इच्छया किमनिच्छया युध्यते इतिज्ञापकेङ्गितादिरूपा चेष्टा । रार. ३७

( ५ ) ‘ स्वर्गद्वारमपावृतम् । सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥, हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् । ’ ( भ. गी. २।३२,३७ ) इति, तथा ‘ग्रामं दास्यामि, धनं दास्यामि’ इत्यादिना प्रहर्षयेत् योधानां हर्षमुत्पादयेत् । योधयतां चेष्टाः स्वपरपक्षपातिकर्माणि विजानीयात् । दूतेनेति शेषः । मच.

( ६ ) तान् अग्रानीकेषु योजितान् । योधयतां बलाध्यक्षाणाम् । नन्द.

शत्रुदुर्गप्राप्त्युपायाः

**[1]उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् ।**
**दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥**

( १ ) यदा अरिर्दुर्गाश्रितो भवति, तद्दुर्गलम्भोपायमाह– उपेति । उपरोधस्तथा कर्तव्यो यथा न कश्चिन्निष्क्रामति, न किंचित्प्रविशति । राष्ट्रं दुर्गाद्बहिर्देशः, तस्योपपीडनं स्वदेशापवाहोपमर्दनादिभिः । यवसादीनां दूषणं विनाशनमसद्द्रव्यमिश्रणादिभिः । मेधा.

---

(१) मस्मृ. ७।१९४ ; राक. १३० तांश्च सम्यक् (भृशार्तांश्च) दरीन् (दाराद्) ; रार. ३७ ; पमा. ४०२ ; राप्र. ४०५ राकवत् ; भाच. चेष्टाश्चै (चेष्टां चै).

† ममु., भाच. गोरागतम् ।

(१) मस्मृ. ७।१९५ ; मिता. १।३४३ ; राक. १२५ चास्य (द्वाऽस्य) ; रार. ३७ ; पमा. ४०२ ; राप्र. ४०३.

(२) दुर्गाद्याश्रितमपि युध्यमानमरिं दुर्गवेष्टनद्वारेणाऽऽवेष्ट्याऽऽसीत । अस्य च रात्रौ दुर्गाद्बहिर्देशं लुण्ठनादिना उपपीडयेत् । घासान्नोदकेन्धनानि वाऽस्य सर्वदाऽपद्रव्यसंमिश्रादिना दूषयेत् । गोरा.

(३) इन्धनदूषणं जलेनाऽऽर्द्रीकरणादि । मवि.

(४) दुर्गाश्रयमदुर्गाश्रयगतं रिपुमयुध्यमानमप्यावेष्ट्याऽऽसीत । * ममु.

(५) अरिषु कृत्यान्तरमाह– उपेति त्रिभिः । उपरुध्यावपीडयेत् लुण्ठनाग्न्यादिदानेन । दूषयेत् भेदयेत् विषादिना वा । मच.

(६) यदि च परबलं दृष्ट्वा शत्रुर्युद्धोपक्रमं न करोति, आसनमेव करोति, तदा किं कर्तव्यमित्यपेक्षायामाह– उपरुध्येति । राप्र. ४०३

(७) नगरवेष्टनमाह– उपरुध्येति त्रिभिः । अरिं शत्रुम् उपरुध्य वेष्टयित्वा आसीत स्थितो भवेत् । अस्य राज्ञः राष्ट्रं देशम् उपपीडयेत् । च पुनः यवसान्नोदकेन्धनानि दूषयेत् । यवसेन्धनमग्निना दाहयेत्, (एतानि ?) अन्नं क्षेत्रस्थं लुम्पेत्, मार्गावरोधेन महार्घं कुर्यात् । भाच.

**[1]भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा ।**
**समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा ॥**

(१) तडागग्रहणं सर्वजलाशयदर्शनार्थम् । तत्र तडागस्य सेतुबन्धेन प्रयोजनभेदनम् । प्राकारस्य यन्त्रैर्विदारणं सुरङ्गया वा भङ्गः । परिखायाः पूरणेन पार्श्वभङ्गेन वा । छिद्रेषु प्रवीरपुरुषैरवस्कन्दयेत् । दुर्गे रात्रौ च वित्रासयेत् अग्निकुम्भशिरस्कैः शिवावत् रुतानि कुर्वद्भिर्मनुष्यैः । येन नराः स्वयमुत्पातदर्शनाद्रात्रौ जाग्रति । जागरणावजीर्णो लोकः सुसाध्यो भवति । मेधा.

(२) दुर्गस्योपजीव्यानि तडागादीनि प्रभेदेन नाशयेत् । तथा दुर्गप्राकारान् भिन्द्यात् । तत्परिखाश्च पूरयेत्, छिद्रकरणेन वा निरुदकाः कुर्यात् । एवं च शत्रुमशङ्कितमेव सम्यगवस्कन्दयेत् तस्योपरि निपतेद्रात्रौ वा दिवा वा । शिवावासितादिभिर्वित्रासयेत् । * गोरा.

(३) समवस्कन्दयेत् सौप्तिकेन हन्यात् । मवि.

(४) तडागानि जलाशयान् तथा परिखाः समन्ततो व्यापका अगाधजलशालिनीः खातस्वरूपाः भिन्द्यात् । समवस्कन्दयेत् शक्तितो गृह्णीयात् । अग्निप्रक्षेपादिना चैनमरिं शोषयित्वा त्रासयेत् रात्रौ च ढक्कादिशब्देन । मच.

(५) समवस्कन्दयेत् सौप्तिकं कारयेत् । 'अवस्कन्दस्तु सौप्तिकम्' इति नैघण्टवाः । § नन्द.

**‡[2]उपजप्यानुपजपेद्बुध्येतैव च तत्कृतम् ।**
**युक्ते च दैवे युध्येत जयप्रेप्सुरपेतभीः ॥**

## बृहत्पराशरः

निर्भेदस्य स्वसैन्यस्य व्यूहनिवेशः, भेदादयः परनाशोपायाः कर्तव्याः

**[3]मासे सहसि यात्रार्थी कृतपुण्याहघोषवान् ।**
**विधिवद्यानकं कुर्याद्यद्व्यूहे रक्षयन् बलम् ॥**
**यत्राचलसरोरक्षा वृक्षरक्षा तु यत्र च ।**
**वासं तत्र विधायैव रात्रौ रक्षेत्स्वकं बलम् ॥**
**चतुर्दिक्षु च सैन्यस्य निशि शूरान् धनुर्धरान् ।**
**स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम् ॥**
**[4]निर्भेदं स्वबलं कुर्यान्निहन्याद्भिन्नचेतनम् ।**
**दासीकर्मकरान् दासान् भिन्दतो रक्षयेन्नृपः ॥**

---

* शेषं गोरागतम् ।

(१) मस्मृ. ७।१९६ ; राक. १२५ गानि (कानि) ; रार. ३७ कार (कारं) ; पमा. ४०२ तडागानि प्रा (तटाकानि प्र) स्तथा (दपि) ; राप्र. ४०३.

* ममु. गोरागतम् ।

§ भाच. नन्दगतम् ।

‡ अस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'उपायाः– सामान्यविचारः' इत्यस्मिन् प्रकरणे (पृ. १९३३) द्रष्टव्यः ।

(१) मस्मृ. ७।१९७.

(२) बृपसं. १२।२६–२८.

(३) बृपसं. १२।३०–३९, ४३–४८.

निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः।
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी ॥
एते परस्य यत्नेन भेदनीयास्ततोऽपरे।
यथा परो न जानाति तथा भेदं समाचरेत् ॥
परामात्यप्रधानानां व्यलीकदूतशब्दितम्।
उत्थापयेत् स्वसेनायाः स्याद्यथा चित्तभेदना ॥
परसैन्ये बहुगतान् विविधान् कुहकानपि।
कारयेद् गरदानादि वह्निपातानिनेकशः ॥
स्वसैन्ये गरदानादि नृपो यत्नेन रक्षयेत्।
नियुज्य विज्ञः पुरुषानुक्तं सर्वं निशामयेत् ॥
अन्तर्भीरून् बहिःशूरान् साग्निकान् ब्राह्मणोत्तमान्।
धर्मज्ञान् कुलसंपन्नान् बिभृयादात्मसंनिधौ ॥
प्रविशन् परदेशे च प्रजां स्वीकृत्य संविशेत्।
उत्सार्य मार्गतो लोकान् दूरीकृत्य व्रजेन्नृपः ॥
सस्यादि दाहयेत्सर्वं यवसानि धनानि च।
भिन्द्यात् सर्वनिपानानि प्राकारान् परिखास्तथा ॥
अपसृत्य समादाय भूमिं साधारणां नृपः।
गमयेद्वार्षिकान् मासानासाद्य स्वधरां नृपः ॥
स्वधरात्यन्तिके देशे युद्धमिच्छेत् स्वधर्मवित्।
न तु प्रविश्य तद्दूरभूमिं युद्धं समाचरेत् ॥
किंचित्सुप्तेषु लोकेषु क्षपायां युद्धमाचरेत्।
सुधीरव्यसने चापि योधयेत् परसैनिकैः ॥
व्यूहैर्व्यूह्य यथोक्तैर्वा रक्षां कृत्वाऽपि चाऽऽत्मनः।
सैनिकांस्तान् समस्तांश्च प्रेरयेद्युद्धविन्नृपः ॥
संमानयेत् समस्तांश्च योद्धॄन् सेनापतीन् नृपः।
अन्विच्छञ् जयलक्ष्मीं च नीतिज्ञः पृथिवीपतिः ॥
स्नेहेनापि समं पत्न्या शय्यास्थोऽपि हि मानवः।
पुष्पैरपि न युध्येत युद्धं तत्र विपत्तये ॥
हीनं परबलं मत्वा निरुत्साहमनादरम्।
समस्तबलसंयुक्तः स्वयमुत्थाप्य योधयेत् ॥

## बुधः

शत्रुराष्ट्रग्रहणविधिः

[1]अनिच्छति( ? च्छन्तं ) पलायमानमुपरुध्य परदुर्गं गृह्णीयात् ॥

मन्त्रौषधिप्रयोगेण परं निःसंज्ञं कृत्वा राज्यं गृह्णीयात् ॥

## आश्वलायनः

शिबिरकरणं शिबिररक्षणं च

[2]न्यायेन शिबिरं कुर्यात् सर्वेषां मध्य आत्मनः।
प्रवसंस्तस्य रक्षां च सुपरीक्ष्य स कारयेत् ॥

## स्कन्दपुराणम्

शत्रुभूमिषु युद्धमिष्टम्

[3]संनह्य प्रथमं याति यः सैन्यं शत्रुभूमिषु।
स क्षत्रियो विजयते तस्य राज्यं च वर्धते ॥

## विष्णुधर्मोत्तरपुराणम्

युद्धभूम्यनुरोधेन व्यूहनिवेशः, योधानामुत्तेजनम्

[4]पत्तिभूर्विषमा ज्ञेया रथाश्वानां तथा समा।
सकर्दमा च नागानां युद्धभूमिरुदाहृता ॥
[5]एवं विरचितव्यूहः कृतपृष्ठदिवाकरः।
तथाऽनुलोमशुक्रो वा दिक्पालबुधमारुताः ॥
[6]योधानुत्तेजयेत् सर्वान्नामगोत्रापदानतः।
भोगप्राप्तिश्च विजये स्वर्गप्राप्तिर्मृतस्य च ॥
[7]धन्यानि तु निमित्तानि वदन्ति विजयं द्विज।
स्पन्दनं शुभगात्राणां शुभस्वप्ननिदर्शनम् ॥

---

(१) बुस्मृ. ४४–४५. (२) आश्वस्मृ. ८।११८.

(३) स्कन्द. ७।२।१७।८१.

(४) विध. २।१७७।४९ ज्ञेया (जेया) श्वानां (श्वस्य) सकर्दमा (शर्मादुमा); अग्नि. २३६।४९–५०.

(५) विध. २।१७७।५० ; अग्नि. २३६।५०–५१ शुक्रो वा (शुक्रार्कि) बुध (मृदु).

(६) विध. २।१७७।५१ ; अग्नि. २३६।५१–५२ पदा (वदा) प्तिश्च (प्त्या च) प्तिर्मृ (प्त्या मृ).

(७) विध. २।१७७।५२–५६.

निमित्तं च गजाश्वस्य सर्वतो दृश्यते शुभम् ।
शकुना मङ्गलाश्चैव दृश्यन्ते हि मनोनुगाः ॥
विपरीतसरीसर्पान् मृत्युः स्पृशति नान्यथा ।
भवन्तोऽपि कुले जाताः सर्वेशस्त्रास्त्रपारगाः ॥
गान्धर्वे च परा नित्यं नित्यं सन्मार्गमाश्रिताः ।
अनाहार्याः परैर्नित्यं कथं न स्याज्जयो मम ॥
राजश्रीर्भवतामेव भवद्भिः केवलं मम ।
द्वे चामरेऽधिके शूराच्छत्रं चर्माभमेव च ॥
[1]जित्वाऽरीन् भोगसंप्राप्तिर्मृतस्य च परा गतिः ।
निष्कृतिः स्वामिपिण्डस्य नास्ति युद्धसमा गतिः ॥
[2]शूराणां यद्विनिर्याति रक्तमाबाधतः क्वचित् ।
तेनैव सह पाप्मानं सर्वं त्यजति धार्मिक ॥
[3]तथा बाधचिकित्सायां वेदनासहिते तथा ।
ततो नास्त्यधिकं लोके किंचित्परमदारुणम् ॥
मृतस्य नाग्निसंस्कारो नाशौचं नोदकक्रिया ।
कर्तुमिच्छन्ति यस्येह सङ्ग्रामादधिकं नु किम् ॥
तपस्विनो दानपरा यज्वानो बहुदक्षिणाः ।
शूराणां गतिमिच्छन्ति दृष्ट्वा भोगाननुत्तमान् ॥
[4]वराप्सरःसहस्राणि शूरमायोधने हतम् ।
अभिद्रवन्ति कामार्ता मम भर्ता भविष्यति ॥
[5]स्वामी सुकृतमादत्ते भग्नानां विनिवर्तताम् ।
ब्रह्महत्याफलं तेषां तथा प्रोक्तं पदे पदे ॥

(१) विध. २।१७७।५७ ; अग्नि. २३६।५२–५३.
(२) विध. २।१७७।५८ ; अग्नि. २३६।५३–५४ ( शूराणां रक्तमायाति तेन पापं त्यजन्ति ते । घातादिदुःखसहनं रणे तत् परमं तपः ॥ ).
(३) विध. २।१७७।५९–६१.
(४) विध. २।१७७।६२ ; अग्नि. २३६।५४ ( वराप्सरःसहस्राणि यान्ति शूरं रणे मृतम् । ) पू.
(५) विध. २।१७७।६३; अग्नि. २३६।५५ वर्तताम् ( वर्तिनाम् ).

[1]यः सहायान् परित्यज्य स्वस्तिमान् गन्तुमिच्छति ।
अस्वस्ति तस्य कुर्वन्ति देवाः शक्रपुरोगमाः ॥
[2]अश्वमेधफलं प्रोक्तं भग्नानामनिवर्तताम् ।
पदे पदे महाभागा(?ग) संमुखानां महात्मनाम् ॥
[3]देवस्त्रियस्तथा लक्ष्मीः पाप्मानमयशस्तथा ।
प्रतीक्षन्ते महाभाग सङ्ग्रामे समुपस्थिते ॥
पराङ्मुखा मया ग्राह्या जीवन्तोऽप्यभवा मृताः ।
इत्येवमयशस्तस्य पाप्मना सह तिष्ठति ॥
लक्ष्मीः संतिष्ठते तस्य जीवतः कृतकर्मणः ॥
मृतस्य चापि तिष्ठन्ति विमानस्थाः सुरस्त्रियः ।
एवमुद्घोषणं कृत्वा धर्मेणेच्छेज्जयं रणे ॥

युद्धे अश्वरथरथिहस्त्यादीनां संनहनविधिः

पुष्कर उवाच–

[4]संनद्धैश्चर्मिभिर्भाव्यं तथा बद्धकृपाणिभिः ।
चर्माणि तत्र वैयाघ्रमाहिषाण्यृषभाणि च ॥
खेटकाद्यथवा राम चर्माणि प्रभवन्ति तु ।
तथा वरणमुख्यानि खड्गानि विविधानि च ॥
बद्धादिभिः सतूणीरैस्तथा राम सतोमरैः ।
बद्धगोधाङ्गुलित्राणैर्बद्धादर्शैर्विभीषणैः ॥
तथा परश्वधोपेतै राम स्वासनयोधिभिः ॥
गदाधरास्तथैवात्र सकृत्पाणिपरिच्छदाः ।
सुसंनद्धाः सुमनसो भवेयुर्विपुलौजसः ॥
यत्र यस्य विशेषेण शस्त्रास्त्रैर्घातकौशलम् ।
तदेव तस्य निर्दिष्टं यथावन्मनुजोत्तम ॥

(१) विध. २।१७७।६४; अग्नि. २३६।५६ (त्यक्त्वा सहायान् यो गच्छेद्देवास्तस्य विनष्टये । ) पू.
(२) विध. २।१७७।६५ ; अग्नि. २३६।५७ द्वितीयचरणे ( शूराणामनिवर्तिनाम् ) पू.
(३) विध. २।१७७।६६–६९.
(४) विध. २।१८३।१–३१.

सखलीनाः सपर्याणास्तथा सास्तरणा हयाः ।
कार्याः सकवचा युद्धे चामरापीडधारिणः ॥
अश्वी भवेत् सुसंनद्धो रश्मिप्रग्रहकोविदः ।
तथा सावरणो राम सकृपाणीपरिच्छदः ॥
बद्धासिर्बद्धजीवश्च तुरगारूढपिण्डकः ।
ससुप्रासो भवेद्राम नानायुधधरस्तथा ॥
रथः कार्यस्तथा युक्त ईषादण्डकबन्धुरैः ।
सुचक्रोपस्करयुतः सर्वरूपः पताकराट् ॥
त्रिवेणुसंततश्चैव वैयाघ्रपरिवारणः ।
किङ्किणीजालनिर्घोषस्तथा वै सुप्रतिष्ठितः ॥
उपासङ्गैर्निषङ्गैश्च तूणीरैर्वरकार्मुकैः ।
सर्वायुधैरुपेतश्च तथा वृक्षादनीयुतः ॥
तोयजीरकपिण्डीभिर्युक्तः शृङ्गैस्तथैव च ।
संनद्धः सारथिस्तत्र भवेद्राम प्रतोदवान् ॥
रश्मिग्रहणविच्चापि तथा मण्डलकोविदः ।
तथाऽश्वहृदयज्ञश्च दूरदृष्टिः सुयन्त्रितः ॥
स्वासनः कालविच्चैव बद्धासिः पाशसंयुतः ।
पार्ष्णिः स्यादायुधज्ञस्य तथैवाऽऽयुधकोविदः ॥
चिरेण मूले यस्य स्यादवस्थानं महाभुजः ।
पताकावरणं यस्य आयुधानां समर्पणम् ॥
समायान्तं महाभागं तथा सारथिरक्षणम् ।
स्यातां धनुर्धरौ तत्र तथा च रथिनावुभौ ॥
योधौ धनुर्भृतां श्रेष्ठ सर्वायुधविशारदौ ।
तुरगाश्च सुसंनद्धा दान्ताः कार्यास्तथा रथे ॥
तुल्यवेगबलाश्चैव तथा लघुपरिच्छदाः ।
अतः परं प्रवक्ष्यामि तव नागेद्रकल्पनम् ॥
कुञ्जरः स्यात् सुसंनद्धः सपर्याणः कुथावृतः ।
सर्वायुधधरश्चैव तथा योधा वरायुधाः ॥
परश्वधकराश्चैव तोयजीरकसंयुताः ।
सम्यग्विभाज्याश्च तथा शृङ्खलावततास्तथा ॥
पताका च तथा कार्या कुञ्जरस्य सुशोभना ।
वराङ्कुशधरौ तत्र स्यातां मनुजपुङ्गवौ ॥
एकः पृष्ठस्थितस्तत्र द्वितीयः स्कन्धगो भवेत् ।
योधौ द्वौ वरधानुष्कौ द्वौ च खड्गधरौ दरौ ॥
तयोरनु भवेतां वै तथा रक्षापरायणौ ।
एकः पार्ष्णिस्थितस्तत्र वरशक्तिपताकधृक् ॥
पालयेज्जघनं यद्वत् कुञ्जरस्य महामते ।
एवं परस्परायत्ता रक्षा तेषां यथा भवेत् ॥
महामात्रस्य धर्मज्ञ तथा च गजयोधिनः ।
एवमेव तथा रक्ष्यो रथिनः स रथी भवेत् ॥
कुञ्जरस्य तु रक्षार्थं भवेद्रथचतुष्टयम् ।
रथे रथे गजे वाऽपि तुरगाणां त्रयं भवेत् ॥
धानुष्काणां त्रयं प्रोक्तं रक्षार्थं तुरगस्य च ।
धन्विनो रक्षणार्थाय वर्मिणोऽपि नियोजयेत् ॥
कार्यं सर्वं सुसंबाधं तथा तोरणरक्षणम् ।
योजना च तथा कार्या यथा तु स्याद्धृतिक्रमः ॥
संबाधश्च तथा राम न भवेच्च परस्परम् ॥
नागेन्द्रकल्पं तव सर्वमुक्तं
संक्षेपतो भार्गववंशमुख्य ।
एतत्तु कृत्वाऽपि नरः स युद्धे
जयत्यवश्यं समुपार्जने च ॥

## अग्निपुराणम्

### युद्धे सैन्यनिवेशविधिः

[1]स्कन्धावारनिवेशज्ञो निमित्तज्ञो रिपुं जयेत् ।
स्कन्धावारस्य मध्ये तु सकोषं नृपतेर्गृहम् ॥
मौलीभूतं श्रेणिसुहृद्द्विषदाटविकं बलम् ।
राजहर्म्यं समावृत्य क्रमेण विनिवेशयेत् ॥
सैन्यैकदेशः संनद्धः सेनापतिपुरःसरः ।
परिभ्रमेच्चत्वरांश्च मण्डलेन बहिर्निशि ॥
वार्ताः स्वका विजानीयाद्दूरसीमान्तचारिणः ।
निर्गच्छेत् प्रविशेच्चैव सर्व एवोपलक्षितः ॥

### अवस्थाविशेषे स्वसैन्यरक्षणं परसैन्यघातनं च, हस्तिरथाश्वपत्तिविहीनां कर्माणि, युद्धभूमिविवेकः विजयानुकूलः

[2]कन्दरे शैलगहने निम्नगावनसंकटे ।
दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितक्लमम् ॥

(१) अग्नि. २४१।४२–४५.
(२) अग्नि. २४२।९–१३.

व्याधिदुर्भिक्षमरकपीडितं दस्युविद्रुतम् ।
पङ्कपांशुजलस्कन्धं व्यस्तं पुञ्जीकृतं पथि ॥
प्रसुतं भोजनव्यग्रमभूमिष्ठमसुस्थितम् ।
चौराग्निभयवित्रस्तं वृष्टिवातसमाहतम् ॥
इत्यादौ स्वचमूं रक्षेत् परसैन्यं च घातयेत् ।
विशिष्टो देशकालाभ्यां भिन्नविप्रकृतिर्बली ॥
कुर्यात् प्रकाशयुद्धं हि कूटयुद्धं विपर्यये ॥
[1]प्रयाणे पूर्वयायित्वं वनदुर्गप्रवेशनम् ।
अभिन्नानामनीकानां भेदनं भिन्नसंग्रहः ।
विभीषिकाद्वारघातं कोषरक्षेभकर्म च ॥
अभिन्नभेदनं मित्रसंधानं रथकर्म च ।
वनदिङ्मार्गविचये वीवधासारलक्षणम् ॥
अनुयानापसरणे शीघ्रकार्योपपादनम् ।
दीनानुसरणं घातः कोटीनां जघनस्य च ॥
अश्वकर्माथ पत्तेश्च सर्वदा शस्त्रधारणम् ।
शिबिरस्य च मार्गादेः शोधनं बस्ति(? विष्टि)-
कर्म च ॥
संस्थूलस्थाणुवल्मीकवृक्षगुल्मापकण्टकम् ।
सापसारा पदातीनां भूर्नातिविषमा मता ॥
स्वल्पवृक्षोपला क्षिप्रलङ्घनीयनगा स्थिरा ।
निःशर्करा विपङ्का च सापसारा च वाजिभूः ॥
निःस्थाणुवृक्षकेदारा रथभूमिरकर्दमा ।
मर्दनीयतरुच्छेद्यव्रततीपङ्कवर्जिता ॥
निर्झरागम्यशैला च विषमा गजमेदिनी ॥

योधेभ्यः शत्रुविशेषघातिभ्यो द्रव्यदानम्

[2]यत्र राजा तत्र कोषः कोषाधीना हि राजता ॥
योधेभ्यस्तु ततो दद्यात् किंचिद्दातुं न
युज्यते ।
द्रव्यलक्षं राजघाते तदर्धं तत्सुतार्दने ॥
सेनापतिवधे तद्वद् दद्याद्धस्त्यादिमर्दने ॥

(१) अग्नि. २४२।२३–३१.
(२) अग्नि. २४२।३३–३५.

सैन्यरचनाविधिः

[1]संनद्धैः संयुगे भाव्यं सशस्त्रैस्तैर्गजादिभिः ॥
वराङ्कुशधरौ चोभावेको ग्रीवागतोऽपरः ।
स्कन्धगौ द्वौ च धानुष्कौ द्वौ च खड्गधरौ
गजे ॥
रथे रथे रणे चैव तुरङ्गाणां त्रयं भवेत् ।
धानुष्काणां त्रयं प्रोक्तं रक्षार्थं तुरगस्य च ॥
धन्विनो रक्षणार्थाय चर्मिणं तु नियोजयेत् ।
स्वमन्त्रैः शस्त्रमभ्यर्च्य शास्त्रं त्रैलोक्यमोहनम् ।
यो युद्धे याति स जयेदरीन् संपालयेद्भुवम् ॥

## कामन्दकीयनीतिसारः

यानकाले शत्रुवृत्तेरुच्छेदनं पुरःप्रदेशविचयनं परकर्मवेदनं मार्गशोधनमन्नोदकविधानं च कार्यम्

[2]संपन्नसस्यं विषयं परस्य
यायात् प्रमृद्नन् विजयाय राजा ।
सस्योपघातेन परस्य वृत्ते-
श्छेदः स्वसैन्योपचयश्च साधु ॥

(१) प्रमृद्नन् विलुम्पन् विषयमिति संबन्धः ।
जम.

(२) राजा विजयीत्यर्थः, विजयाय संपन्नशास्यं परिपक्वानेकशस्यं प्रमृग्यं यानयोग्यं परस्य यातव्यस्य विषयं राज्यं यायात् आक्रामेत् । 'यायात् प्रमृग्यम्' इत्यत्र 'यायाद्विभूतिम्' इति पाठे परस्य देशं विभूतिं च आक्रामेदिति भावः । यतः शस्योपघातेन शस्यनिर्लुण्ठनेन परस्य वृत्तिच्छेदः स्वसैन्यानाम् उपचयः पुष्टिश्च साधु, यथा तथा भवेदिति शेषः ।

उनिसा.

(१) अग्नि. २५२।३०–३३.
(२) कानी. १६।४; उनिसा. सस्यं (शस्यं) मृद्नन् (मृग्यं) सस्यो (शस्यो) वृत्तेश्छेदः (वृत्तिच्छेदः).

[1]विशुद्धपृष्ठः पुरतो विचिन्वन्
भयप्रदेशान् परकर्मवेदी ।
स्ववीवधासारविशुद्धमार्गो
विशेद्धरित्रीं द्विषतोऽप्रमत्तः ॥

(१) विशुद्धपृष्ठः कृतपश्चात्प्रतिविधान इत्यर्थः । भयप्रदेशान् दुर्गान् शङ्क्यमानभयहेतून् । परकर्म अवस्कन्दनादिकम् । स्वकीययोर्वीवधासारयोर्विशुद्धो मार्गो यस्य । जम.

(२) पार्ष्णिग्राहविधानात् विशुद्धपश्चाद्भागः, पुरतः अग्रे भयप्रदेशान् संकटस्थानानि विचिन्वन् निरूपयन्, परकर्मवेदी शत्रुचेष्टितमभिजानन्, सुवीवधासारविशुद्धमार्गः– सु अप्रतिहतः वीवधः धान्यादेः प्राप्तिः आसारः सुहृद्बलं विशुद्धमार्गश्च यस्य सः, अप्रमत्तः सावधानः विजिगीषुः द्विषतः शत्रोः धरित्रीम् अधिकृतां भूमिं विशेत् । 'विशुद्धमार्गः' इत्यत्र 'विशुद्धमार्गाम्' इति पाठे 'धरित्रीम्' इत्यस्य विशेषणत्वेन योजनीयम् । उनिसा.

[2]समे प्रदेशे विषमे च भूमेर्निम्ने स्थले वा स्वमुखेन यायात् ।
अनातुरः सन्नभयो हि विद्वान्
संनद्धगुल्मो विहितान्नतोयः ॥

(१) समे विषमे च स्थलभेदे । निम्ने स्थले । स्वमुखेनेति । समादिषु येन प्रदेशेन स्वसैन्यमुखं सुगमः पन्थाः समुत्पद्यते तेन यायादित्यर्थः । अनातुरः अवस्कन्दकालेऽप्यनाकुलः सन् विभयोऽपि भवति । गुल्मः आत्मरक्षाधिकृतं सैन्यम् । विहितान्नतोयः स्वसैन्यस्य । जम.

(२) संनद्धः सुसज्जितः गुल्मः कल्पितसैन्यव्यूहभेदो यस्य सः, विहितान्नपानः विहितं सुनिरूपितम् आहृतं च अन्नं भक्ष्यं पानं जलादिकं येन सः, विद्वान् नीतिशास्त्रनिपुणः विजयी समे प्रदेशे समभूमौ विषमे उन्नतानतस्थाने च भूमेः निम्ने स्थले निम्नस्थाने वा अनातुरः कातरताहीनः अभयः निर्भीकश्च सन् सुमुखेन वीरपुरुषाधिष्ठितसेनामुखेन यायात् अभिगच्छेत् । उनिसा.

गजानामनुकूलः अभियानयोग्यः कालः

[1]ग्रीष्मे प्रभूताम्बुवनेन याया-
न्निर्वापणार्थं करिणां पथा तु ।
ऋतेऽम्भसो ग्रीष्मकृतात् प्रतापात्
भवन्ति कुष्ठानि मतङ्गजानाम् ॥

(१) स्वमुखेनेत्यस्य प्रदर्शनार्थमाह– ग्रीष्म इत्यादि । प्रभूताम्बुवनेन पथेति । प्रभूतमम्बु वनं च यस्मिन् पथि । निर्वापणं तापापनयनम् । ऋतेऽम्भस इति । हस्तिनोऽन्तस्तापात् तोयमनवगाहमानाः कुष्ठिनो भवन्ति, अपिबन्तश्चान्धाः । जम.

(२) ग्रीष्मे ग्रीष्मसमये करिणां हस्तिनां निर्वापणार्थं श्रेयोविधानार्थं प्रभूताम्बुवनेन प्रभूतानि बहुलानि अम्बूनि जलानि वनानि च यत्र तेन, पथा इति शेषः, यायात् गच्छेत् । अम्बु पेयं वनं भक्ष्यं करिणां भविष्यतीति भावः । 'निर्वापणार्थम्' इत्यत्र 'निर्वासनार्थम्' इति पाठान्तरम् । अम्भस ऋते जलाभावेन ग्रीष्मप्रभावात् हस्तिनां कुष्ठानि श्वित्ररोगाः भवन्ति इति हस्तिचिकित्सासंमतम् । उनिसा.

[2]स्वस्थक्रियाणामपि कुञ्जराणा-
मूष्मा शरीरेषु हि जाज्वलीति ।
आयासयोगेन च संप्रवृद्धः
प्रसह्य हन्ति द्विरदान् प्रतापः ॥

(१) स्वस्थक्रियाणां स्थानस्थितानाम् । आयासः पथि शारीरो व्यायामः । जम.

(१) कानी. १६।५.
(२) कानी. १६।६ ; उनिसा. स्व (सु) तोयः (पानः).
(१) कानी. १६।७ ; उनिसा. पथा (यथा).
(२) कानी. १६।८ ; उनिसा. षु हि जा (ष्वभिजा) च (हि).

(२) स्वस्थक्रियाणां स्वस्थाः सुस्थताव्यञ्जिकाः क्रियाः कार्याणि येषां ते स्वस्थक्रियाः तेषामपि कुञ्जराणां शरीरेषु उष्मा उत्तापः अभिजाज्वलीति देदीप्यते। हिं निश्चये। स प्रतापः कुञ्जरशरीरान्तर्गतस्तापः आयासयोगेन पथि श्रान्त्या संप्रवृद्धः उत्तेजितः सन् द्विरदान् तानेव कुञ्जरान् प्रसह्य सहसा हन्ति विनाशयति। 'शरीरेष्वभिजाज्वलीति' इत्यत्र 'शरीरेषु हि जाज्वलीति' इति पाठान्तरम्। उनिसा.

[1]सर्वाणि सत्त्वानि खलूष्णकाले
विनाऽम्बुना यान्ति परामवस्थाम्।
अत्यर्थमुष्णप्रतितप्तकायाः
प्रयान्ति सद्यः करिणोऽपिबन्तः॥

(१) अपिबन्तः जलमित्यर्थात्। तस्मादेते परिरक्ष्याः, तत्प्रतिबद्धत्वाद्राज्यस्य, सेनाङ्गेषु प्रधानत्वात् अनेककार्यकरणाच्च। जम.

(२) परामवस्थां मरणावस्थाम्। शिष्टं स्पष्टम्। उनिसा.

[2]सुगन्धिदानच्युतशीकरेषु
दन्ताभिघातस्फुटितोपलेषु।
गजेषु नीलाभ्रसमप्रभेषु
राज्यं निबद्धं पृथिवीपतीनाम्॥

(१) यदाह श्लोकत्रयेण— सुगन्धीत्यादि। स्फुटितमित्यन्तर्भावितण्यर्थं द्रष्टव्यम्। जम.

(२) सुगन्धिदानच्युतिशीकरेषु सुरभिमदक्षरणरूपजलबिन्दुवत्सु। दन्ताभिघातेन स्फुरिता उत्पला येषां तेषु। तडित्साम्यमेतत्। शेषं सुगमम्। उनिसा.

[3]सुकल्पितः संयति दृष्टमार्गः
स्वधिष्ठितो धीरतरेण पुंसा।
तुरंगमाणामपि कल्पितानामेको गजः षष्टिशतानि हन्ति॥

(१) सुकल्पितः साङ्ग्रामिकेण विधानेन। संयत् युद्धम्। पुंसा आधोरणेन। जम.

(२) गजेषु राज्यं निबद्धमित्यस्य हेतुमाह— सुकल्पित इति। सुकल्पितः जययोग्यस्थाने रक्षितः। संयुगदृष्टमार्गः संयुगे दृष्टः मार्गो येन। सङ्ग्रामकौशलश इति भावः। षष्टिशतानि षट्सहस्राणि। शेषं स्पष्टम्। उनिसा.

[1]जले स्थले च द्रुमसंकटे च
समेऽसमे साधु चलेऽचले च।
प्राकारहर्म्याट्टविदारणे च
ध्रुवं जयो नागवतां बलानाम्॥

(१) समेऽसमे चेति स्थलभेदाः। जम.

(२) गजेषु राज्यं निबद्धमित्यस्य हेतुमाह— जले स्थल इति। जले नदीतडागाद्युत्तारे महाप्रमाणत्वात्, स्थले वालुकाचितदुर्गमस्थाने, द्रुमसंकटे द्रुमभङ्गसमर्थत्वात्, साधारणे जलस्थलमिश्रे वा, विषमे उन्नतपाषाणवल्मीकस्थाणुप्रभृतिभिर्बन्धुरे, समेऽपि कान्तारे प्रान्तरे वाऽपि, प्राकारहर्म्यादिविदारणे च नागवतां बलानां सकुञ्जरसैन्यानां जयः ध्रुवं निश्चयेन, भवतीति शेषः। 'जले स्थले चङ्क्रमसंकटे च समेऽसमे साधुबलेऽबले च। प्राकारहर्म्याद्रिविदारणेन जयो ध्रुवं नागवतां बलानाम्॥' इति पाठान्तरम्। उनिसा.

[2]तस्माद्यतो भूरिजलस्तु पन्था
यतोऽन्नपानोपचयोऽविशङ्कः।
ततो हि यायाज्जनयन् प्रतापं
शनैः शनैर्विश्रमयन्बलानि॥

(१) यतो भूरिजल इति यत्र देशे ग्रीष्मे प्रभूतजलो मार्गः। पानं जलादन्यत्। अविशङ्कः, सामन्ताटविकादिप्रतिभयाभावात्। तत इति तेन प्रदेशेन। प्रतापं

---

(१) कानी. १६।९.

(२) कानी. १६।१०; उनिसा. च्युत (च्युति) स्फुटि (स्फुरि).

(३) कानी. १६।११; उनिसा. यति दृ (युगदृ).

(१) कानी. १६।१२; उनिसा. द्वितीयचरणे (साधारणे वा विषमे समेऽपि) हर्म्याट्ट (हर्म्यादि).

(२) कानी. १६।१३; उनिसा. चयोऽवि (चितो वि) ततो हि (तेनाभि) विश्र (रश्र).

जनयन् देशविलोपादिना। विश्रमयन् बलानीति।

जम.

(२) यस्मात् नागवतां बलानां ध्रुवं जयः तस्मात् यतो भूरिजलः पन्थाः, यतश्च अन्नपानाभ्याम् उपचितः पुष्टः भवति तेन पथा विशङ्कः शङ्कारहितः सन् प्रतापं जनयन् प्रभावं प्रकटयन् बलानि अश्रमयन् न श्रान्तानि कुर्वन् शनैः शनैः अभियायात् शत्रुपुरीं प्रविशेत्।

उनिसा.

स्कन्धावारनिवेशपद्धतिः शत्रुदेशे रिपुपुरसंनिधौ

**'यात्वा वैरिपुराभ्याशं भूभागे साधुसंमते।**
**स्कन्धावारनिवेशज्ञः स्कन्धावारं निवेशयेत्॥**

(१) अभियानोत्तरकालभावित्वाद्विग्रहस्य तदनन्तरं विग्रहशेषभूतो विधिः सर्गचतुष्टयेनोच्यते। तत्रास्मिन् सर्गे प्रकरणद्वयम्– स्कन्धावारनिवेशो निमित्तज्ञानं च। तत्र यात्वा शत्रुदेशमनिवेशितस्कन्धावारस्य विग्रहासंभवात् स्कन्धावारनिवेश उच्यते द्वाविंशत्या श्लोकैः। यदाह– यात्वेत्यादि। वैरिपुराभ्याशं यत्र शत्रुर्यातव्यः स्वकटकेनावस्थितस्तस्याभ्याशम्। भूभागे देशे। साधुसंमते वास्तुकर्मप्रशस्ते।

जम.

(२) यानानन्तरं साङ्ग्रामिकस्कन्धावारसंनिवेशमाह– यायादिति। वैरिपुराभ्याशं शत्रुनगरोपकण्ठम् अथवा यातव्यशिबिरसमीपं यायात् पूर्वोक्तरीत्या गच्छेत्। विजिगीषुरिति शेषः। पश्चात् साधुसंमते साधूनां वास्तुविद्याविदां संमते अभिप्रेते भूभागे आत्मरक्षणोपयोगिप्रदेशे इत्यर्थः, स्कन्धावारनिवेशज्ञैः स्कन्धावारस्य सेनासंनिवेशस्य निवेशज्ञैः निर्माणकुशलैः शिल्पविद्याविशारदपुरुषैरित्यर्थः, स्कन्धावारं सेनानिवेशस्थानं निवेशयेत् निर्मायात्।

उनिसा.

**'चतुरश्रं चतुर्द्वारं नातिविस्तारसंकटम्।**
**साट्टप्रतोलीप्राकारं महाखातसमावृतम्॥**

(१) चतुरश्रमगारमिति संबन्धः। चतुर्द्वारं चतसृषु दिक्षु। नातिविस्तारसंकटम्। तत्र हि अन्योन्यरक्षणं परस्परापीडनं च सैन्यं निवेश्यते। साट्टप्रतोलीप्राकारमिति। समन्तान्महाप्राकारमन्तराऽन्तरा चाट्टालकानि। द्वयोर्द्वयोश्चाट्टालकयोर्मध्ये प्रतोलीमुपस्थापयेत्। महाखातसमावृतं प्राकाराद्बहिः।

जम.

(२) स्कन्धावारनिवेशप्रणालीमाह– चतुरस्रमिति। चतुरस्रं समचतुष्कोणम्। चतुर्द्वारं दिक्चतुष्टये द्वारचतुष्टयभूषितमित्यर्थः। नातिविस्तारसंकटं नातिविस्तृतं नाप्यतिसंकीर्णमित्यर्थः। महाप्रतोलीप्राकारं महत्यः सुदीर्घाः प्रतोल्यः अभ्यन्तरमार्गाः दुर्गद्वाराणि वा प्राकाराः प्राचीराश्च यस्य तम्। महापरिखया महत्या दुरतिक्रमणीयया परिखया नगरादिवेष्टनखातेन वृतं परिवृतम्। परिखालक्षणं यथा ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डे १०३ अध्याये– 'प्रस्थे च परिखामानं शतहस्तप्रशस्तकम्। परितः शिबिराणां च गम्भीरं दशहस्तकम्॥ संकेतपूर्वकं चैव परिखाद्वारमीप्सितम्। शत्रोरगम्यं मित्रस्य गम्यमेव सुखेन च॥' (ब्रह्मवै. ४।१०३।६९–७१) इति।

उनिसा.

**'शृङ्गाटकार्धचन्द्रं वा मण्डलं दीर्घमेव वा।**
**भूमिप्रदेशसामर्थ्यादगारमुपकल्पयेत्॥**

(१) भूमिप्रदेशसामर्थ्यादिति। भूमिप्रदेशसंस्थानवशात् चतुरश्रशृङ्गाटकादिसंस्थानभेदं स्कन्धावारस्य अगारं स्थानं कल्पयेत्।

जम.

(२) भूमिप्रदेशसामर्थ्यात् भूमेः मृत्तिकायाः प्रदेशस्य स्थानस्य च सामर्थ्यात् आनुगुण्येन आगारं तत्रत्यपटावाससंनिवेशं शृङ्गाटं त्रिकोणाकारम् अर्धचन्द्रं वा अर्धचन्द्राकारं वा मण्डलं वा गोलाकारं वा दीर्घं वा

---

(१) कानी. १७।१; उनिसा. यात्वा (यायात्) शज्ञः (शज्ञैः); नीम. ६० यात्वा (यायात्) भ्याशं (भ्याशे) निवेश (विशेष).

(१) कानी. १७।२; उनिसा. रश्र (रस्र) साट्ट (महा) खातसमावृ (परिखया वृ).

(२) कानी. १७।३; उनिसा. टकार्ध (टमर्ध) दगार (दागार); नीम. ६० देश (देशे) उत्त.

दीर्घाकारं वा उपकल्पयेत् रचयेत् । 'शृङ्गाटमर्धचन्द्रं वा' इत्यत्र 'शृङ्गाटकार्धचन्द्रं वा' इति पाठे 'शृङ्गारकार्धचन्द्रं वा' इति च पाठे स एवार्थः । शृङ्गाट–शृङ्गाटक–शृङ्गार–शृङ्गारकशब्देन त्रिकोणाकारोऽभिधीयते । उनिसा.

**[1]विभक्तैश्च विविक्तैश्च पार्श्वैरन्वितमायतैः ।**
**गुप्तं कक्षपुटाकारं महामार्गसमावृतम् ॥**

(१) पार्श्वैरिति । प्राकारस्याऽऽभ्यन्तरे भागे स्कन्धावारस्य चत्वारि पार्श्वानि, यैरहोरात्रं स्कन्धावारस्य जागरकाः परिभ्रमन्ति, तैर्विभक्तैर्दण्डमात्रविस्तारैः विविक्तैः शून्यैः आयतैः प्रगुणैः अन्वितमगारमिति संबन्धः । गुप्तं समन्तान्निश्छिद्रत्वात् । कक्षपुटाकारं नवसंस्थानम् । तत्र वास्तुपुरुषहृदयपरिहारार्थं तुल्यप्रमाणान् नवकोष्ठान् प्रकल्पयेदित्यर्थः । महामार्गसमावृतम् 'त्रयः प्राचीना राजमार्गाः त्रय उदीचीनाः' (कौ. २।४) इति, तैर्युक्तम् । नम.

(२) सेनासंनिवेशप्रणालीमाह– विविक्तैरिति । विविक्तैः विरलैः, न तु संकीर्णैः, विभक्तैः यथास्थानं पृथक्पृथक् संस्थापितैः, आयतैः दीर्घैः, पटाकारैः वस्त्रमयैः शृङ्गैः शिखरैः पटमण्डपैरित्यर्थः, अन्वितं युक्तम् । गुप्तकक्षं गुप्ताः गूढाः सुरक्षिता वा कक्षाः सेनानिवेशान्तरालानि यस्य तम् । महामार्गसमावृतं चतुर्द्वारत्वात् द्वारचतुष्टयस्पृशा चतुर्विधेन महामार्गेण सुप्रशस्तमार्गेण समावृतं व्याप्तम् । उनिसा.

**[2]तस्य मध्ये मनोह्लादि महन्मौलबलावृतम् ।**
**अन्तः कोशगृहोपेतं कारयेद्राजमन्दिरम् ॥**

(१) तस्येति अगारस्य । मध्य इति मध्यमो यो नवमभागः तं पुनर्नवधा विभज्य मध्यं भागं त्यक्त्वा तस्योत्तरे नवभागे राजमन्दिरं कारयेत् । तथा चोक्तम् – 'मध्यमस्योत्तरे नवभागे राजवास्तुनिवेशं कारयेत्' (कौ. १०।१) इति । महत् मन्दिरमिति संबन्धः । अन्तः कोशगृहोपेतं राजमन्दिरस्य मध्ये कोशमन्दिरमपरं कारयेत् । जम.

(२) राजगृहसंनिवेशमाह– तस्य मध्य इति । तस्य स्कन्धावारस्य मध्ये मनोह्लादि चित्तप्रसादजनकम्, महामौलबलावृतं महद्भिः मौलबलैः भूरिपरिमाणान्तरङ्गयोधपुरुषैः आवृतं परिवृतम्, अन्तः कोषगृहोपेतम्– अन्तः मध्ये कोषगृहेण धनागारेण उपेतं युक्तम्, 'कोषाधीनो हि राजा' इति व्यवहितः कोषो न विधेयः इति, राजमन्दिरं नरपतिगृहं कारयेत् स्थापयेत् । उनिसा.

**[1]मौलं भृतं श्रेणिसुहृद्द्विषदाटविकं बलम् ।**
**राजहर्म्यं समावृत्य क्रमेण विनिवेशयेत् ॥**

(१) क्रमेणेति । राजमन्दिरं समन्तादावृत्य मौलं बलं क्रमागतं विनिवेशयेत् । ततो भृत्यबलं वेतनप्रतिबद्धम् । ततोऽपि श्रेणिबलं जानपदम् । अत्र श्रेणिशब्दः स्वलिङ्गे नैव स्थितः । तस्मादपि सुहृद्भूतं बलम् । ततोऽपि द्विषद्भूतम् । ततश्चाऽऽटविकमिति । जम.

(२) बलानां संनिवेशमाह– मौलभुक्तमिति । राजहर्म्यं राजगृहं समावृत्य वेष्टयित्वा क्रमेण यथाक्रमं मौलभुक्तं पुरुषानुक्रमेण वेतनभोगिसैन्यम्, ततः श्रेणि श्रेणिबलं व्यूहरचनया समवेतयोद्धृवर्गमित्यर्थः, तद्बहिः सुहृत् मित्रबलम्, तद्बाह्ये द्विषत् शत्रुबलम्, तद्बहिः आटविकम् अटवीपतीनां बलम्, एतत् पञ्चविधं बलं विनिवेशयेत् स्थापयेत् । उनिसा.

---

(१) कानी. १७।४; उनिसा. (विविक्तैश्च विभक्तैश्च शृङ्गैरन्वितमायतैः । गुप्तकक्षं पटाकारैर्महामार्गसमावृतम् ॥); नीम. ६० (गुप्तं स्वच्छं पुराकारं महाद्विपसमावृतम् । पार्ष्णिग्राहेण शुद्धं च रथपत्तिसमावृतम् ॥).

(२) कानी. १७।५; उनिसा. महन्मौ (महामौ); नीम. ६० पूर्वार्धे (तन्मध्ये मानसाह्लादि महन्मौलं बलावृतम् ।) गृह (ग्रह).

(१) कानी. १७।६; उनिसा. मौलं भृतं (मौलभुक्तं); नीम. ६० मौलं भृतं (मौलभूत).

**[1]अन्तः स्ववर्गिणः क्रूरानलुब्धान् दृष्टकर्मणः।**
**पर्याप्तवेतनानाप्तान् मण्डलेन निवेशयेत्॥**

(१) अन्तः स्ववर्गसहितान् स्कन्धावारस्य। दृष्टकर्मणः साक्षात्कृतसमस्तव्यापारान्। पर्याप्तवेतनान् लोभाभावात् परस्याभेद्यान्। मण्डलेन निवेशयेत् स्कन्धावारं परिवृत्येत्यर्थः। जम.

(२) अन्ते च स्कन्धावारप्रान्तभागे च सर्वदिक्षु इत्यर्थः, पर्याप्तवेतनान् प्रार्थनाधिकवृत्तिप्रदानेनाऽऽत्मसात्कृतान् अत एव स्वाप्तान् विश्वासभूमिमधिरूढान् अगणितान् असंख्यान् दुष्टकर्मणः क्रूरकार्यनियतान् क्रूरान् खलान् लुब्धकान् लोभिनः मण्डलेन परितो मण्डलाकारेण निवेशयेत् स्थापयेत्। उनिसा.

**[2]हस्तिनो लब्धनामानस्तुरङ्गाश्च मनोजवाः।**
**गृहोपकण्ठे नृपतेर्वसेयुः स्वाप्तरक्षिताः॥**

(१) लब्धनामानः प्रभाविनः। जम.

(२) हस्तिन इति। लब्धनामानः सङ्ग्रामे विख्याताः, तादृशाः मनोजवाः वातरयाः तुरङ्गाः अश्वाः स्वाप्तरक्षिताः विश्वस्तपुरुषैः पालिताः सन्तः नृपतेः भूपालस्य गृहोपकण्ठे राजमन्दिरसंनिधौ वसेयुः तिष्ठेयुः। उनिसा.

**[3]यामवृत्त्या सुसंनद्धं रात्रिंदिवमुदायुधम्।**
**अन्तर्वंशिकसैन्यं च तिष्ठेद्राजाभिगुप्तये॥**

(१) यामवृत्त्या प्रहरपर्यायेण। उदायुधं संनद्धमपि स्वकोशादुत्खातायुधम्। अन्तर्वंशिकसैन्यम् अन्तःपुररक्षानियुक्तं सैन्यम्। जम.

(२) अन्तर्वंशिकसैन्यमिति। अन्तर्वंशः राज्ञः पुत्रदारम्, तत्र नियुक्तं सैन्यम् अन्तर्वंशिकसैन्यं यामवृत्त्या– यामः अहोरात्राष्टमभागः, तत्र सावधानत्वेनावस्थितिः यामवृत्तिः, तत्पर्यायेणेत्यर्थः, रात्रिंदिवम् अहोरात्रं सुसंनद्धं कृतसंनाहं सङ्ग्रामसज्जया सज्जितमित्यर्थः, उदायुधम् उद्यतशस्त्रं च सत् राजाभिगुप्तये नरपतिशरीररक्षार्थं तिष्ठेत्। 'अन्तर्वंशिकसैन्यम्' इत्यत्र 'अन्तर्वंशिकसैन्यम्' इति 'अन्तर्वासिकसैन्यम्' इति च पाठान्तरम्। उनिसा.

**[1]युद्धयोग्यो महादन्ती संनद्धः साध्वधिष्ठितः।**
**तिष्ठेन्नरपतिद्वारे वेगवांश्च तुरंगमः॥**

(१) साध्वधिष्ठितः आप्ताधिष्ठितः। तिष्ठेन्नरपतिद्वारे प्रहरपर्यायेण। तदात्वे हि कार्योत्पत्तौ तमारुह्य कार्यकरणसमर्थो भवति। जम.

(२) स्पष्टः श्लोकार्थः। उनिसा.

**[2]सैन्यैकदेशः संनद्धः सेनापतिपुरःसरः।**
**प्रयत्नवान् परिपतेन्मण्डलेन बहिर्निशि॥**

(१) सैन्यैकदेशश्च तृतीयश्चतुर्थो वा भागः। परिपतेत् स्कन्धावारात् बहिः परिभ्रमेत् परावस्कन्दप्रतिविधानार्थम्। जम.

(२) सेनापतिपुरःसरः सेनापतिः सेनानीः पुरःसरः अग्रसरः यस्य तादृशः संनद्धः कृतसंनाहः सैन्यैकदेशः बलैकभागः प्रयत्नवान् अवहितः सन् निशि रात्रिकाले बहिः स्कन्धावारस्य सर्वदिक्षु परिचरेत् परिभ्रमेत्। 'प्रयत्नवान् परिचरेत्' इत्यत्र 'प्रपन्नवान् परिपतेत्' इति मुद्रितपुस्तकपाठः। उनिसा.

**[3]परसैन्यप्रचारांश्च सत्त्वाढ्याः शीघ्रगामिनः।**
**वाताश्विका विजानीयुर्दूरसीमान्तचारिणः॥**

(१) परसैन्यप्रचारांश्च विजानीयुः तदनुरूपप्रतिविधानार्थम्। सत्त्वाढ्याः सत्त्वाधिकाः। वाताश्विकाः

---

(१) कानी. १७।७ ; उनिसा. पूर्वार्धे (अन्ते चागणितान् क्रूरांल्लुब्धकान् दुष्टकर्मणः।) नाना (नान् स्वा) ; नीम. ६० (अन्ते श्वगणिनः शूरांल्लुब्धकान् दुष्टकर्मणः। पर्याप्तवेतनानाप्तान् मण्डले विनिवेशयेत्॥).

(२) कानी. १७।८ ; नीम. ६० ङ्गाश्च (ङ्गास्तु).

(३) कानी. १७।९.

(१) कानी. १७।१० ; नीम. ६० दन्ती (मन्त्री) पतिद्वारे (पतेर्द्वारि).

(२) कानी. १७।११ ; उनिसा. पतेत् (चरेत्).

(३) कानी. १७।१२ ; उनिसा. (परसैन्यप्रचारं च संनद्धाः शीघ्रपातिनः। वाताश्वका विजानीयुर्दूरसीमान्तपातिनः॥).

वाताश्वचारिणः। शीघ्रपातिनोऽपि केचित् दूरं सीमान्तं परिभ्रमितुमशक्ता इति पृथगुपादानम्। जम.

(२) संनद्धाः कृतसङ्ग्रामवेशाः वाताश्वकाः पवनवद्वेगशालितुरंगमारूढाः अत एव शीघ्रपातिनः द्रुतगामिनः दूरसीमान्तपातिनः दूरस्थिताक्रान्तभूभागप्रान्तपर्यन्तचारिणः, पुरुषा इति शेषः, परसैन्यप्रचारं शत्रुसैन्यानां गतिविधिं विजानीयुः। 'दूरसीमान्तपातिनः' इत्यत्र 'दूरसीमान्तचारिणः' इति पाठान्तरम्। उनिसा.

**'तोरणाबद्धमाल्येषु यन्त्रवत्सु पताकिषु।**
**द्वारेषु परमां गुप्तिं कारयेदाप्तकारिभिः॥**

(१) यन्त्रवत्स्विति चतुर्द्वारेषु शरपाषाणप्रमोक्षार्थं सर्वतोभद्रादीनि यन्त्राण्युपस्थापयेत्। गुप्तिं रक्षाम्। आप्तकारिभिः विजिगीषोरिष्टकारिभिः। जम.

(२) तोरणेषु बहिर्द्वारचतुष्टयशिखरेषु आबद्धानि विन्यस्तानि माल्यानि पुष्पमाला नवपल्लवमालाश्च येषां तेषु, यन्त्रवत्सु– यस्यते संयस्यते अनेनेति यन्त्रं प्राकृतिकसाधनम्, तद्वत्सु विपक्षाणां दुष्प्रवेशेषु इत्यर्थः, पताकिषु पताकामण्डितेषु द्वारेषु बहिर्द्वारचतुष्टयेषु आप्तकारिभिः आप्तं हितं कर्तुं शीलं येषां तैः, पुरुषैरिति शेषः, परमां गुप्तिं सर्वतोभावेन रक्षां कारयेत्। उनिसा.

**'निर्गच्छेत् प्रविशेच्चैव सर्व एवोपलक्षितः।**
**तिष्ठेयुः परदूताश्च राजशासनगोचराः॥**

(१) राजशासनगोचरा इति। परकीयेभ्यः प्रवेशो न देय इति राजशासनम्। यदा चायं प्रवेशमादिशति तदा प्रविशेयुः, अन्यदा तु तच्छासनगोचरा एव तिष्ठेयुः। जम.

(२) सर्व एव जनः उपलक्षितः द्वाररक्षकपुरुषैः परिदृष्टः सन् निर्गच्छेत् स्कन्धावारात् बहिर्गच्छेत् विशेच्चापि। परदूताश्च राजशासनगोचराः राजादेशावकाशाः सन्तः तिष्ठेयुः। उनिसा.

**'वृथाकोलाहलाद्धास्यात् द्यूतात्पानाच्च वारितः।**
**सज्जोपकरणस्तिष्ठेत् सर्वः कार्योन्मुखो जनः॥**

(१) वृथाकोलाहलात् क्रीडोत्पत्तिकृतात् हास्यात् द्यूतात् पानाच्च कलहहेतोः। सज्जोपकरणः तिष्ठेत् कार्योन्मुखः यस्य च यस्मिन्नियोगस्तदवहितः। जम.

(२) जनः स्कन्धावारस्थितः सर्व एव लोकः वृथाकोलाहलात् अकारणकलहात् हास्यात् हास्यपरिहासात् द्यूतात् अक्षक्रीडनात् पानाच्च अपरिमितसुरापानाच्च वारितः निवारितः सन्, तथा सज्जोपकरणः सर्वदा बद्धपरिकरः उदायुधश्च, तथा सर्वकार्योन्मुखः अवस्कन्दप्रतीकारकार्योन्मुखः तिष्ठेत्। उनिसा.

**'बहिः खातात्तु सैन्यानां मुक्त्वा संचारमात्मनः।**
**परसैन्यविघातार्थं सर्वां भूमिं विनाशयेत्॥**

(१) मुक्त्वा संचारमिति। चतुर्द्वारेषु स्वसैन्यानां संचारमार्गमात्रं त्यक्त्वा शेषां भूमिं नाशयेत्। जम.

(२) खातात् परिखायाः बहिः बाह्यप्रदेशे स्वसिज्ञानां शोभनखड्गायुधज्ञानां योधपुरुषाणाम् आयतं विस्तृतं संचारं प्रचारभूमिं मुक्त्वा विहाय परसैन्यविनाशार्थं शत्रुबलोत्सादनार्थं सर्वां भूमिं विनाशयेत्। कण्टकशाखादिभिरिति शेषः। विपक्षसमागममार्गे कुत्रापि लौहकीलकं निखनेत्, कुत्रापि तृणाच्छादितकूपं कारयेत्, कुत्रापि कण्टकशाखा दद्यात्, कुत्रापि कूपजलं विषाक्तं कुर्यात्, कुत्रापि सैन्यसंहारकयन्त्रविशेषं सुगुप्तं स्थापयेदित्यर्थः। उनिसा.

---

(१) कानी. १७।१३.

(२) कानी. १७।१४; उनिसा. प्रविशेच्चैव (च विशेच्चापि).

(१) कानी. १७।१५; उनिसा. सर्वः कार्यो (सर्वकार्यो); नीम. ६० पूर्वार्धे (निशितान्यो बहिर्गच्छेद्गच्छेच्चेद्द्वारि वारितः।) नास्ति (णं ति).

(२) कानी. १७।१६; उनिसा. तु सैन्यानां (स्वसिज्ञानां) मात्मनः (मायतम्) घाता (नाशा); नीम. ६० पूर्वार्धे (बहिश्च खातान् संच्छन्नान् तृणैरुपरि संवृतान्।).

**[1]क्वचित् कण्टकशाखाभिः क्वचिच्छूलैरयोमुखैः।**
**दूषयेत् परितो भूमिं प्रच्छन्नैः प्रदरैरपि ॥**

(१) कथमित्याह– क्वचिदित्यादिना। अयोमुखैः शूलैः। प्रदरैः श्वभ्रैः तृणादिप्रच्छन्नैः। जम.

(२) समरभूमिविनाशमाह– क्वचिदिति। क्वचित् कुत्रचित् कण्टकशाखाभिः, क्वचित् अयोमुखैः लौहमयाग्रैः कीलैः दारुमयशङ्कुभिः, क्वचित् प्रच्छदप्रदरैरपि तृणाच्छादितगर्तैरपि परितः भूमिं दूषयेत् विनाशयेत्। 'कीलैः' इत्यत्र 'शूलैः' इति, 'दूषयेत्' इत्यत्र 'भूषयेत्' इति, 'प्रच्छदप्रदरैरपि' इत्यत्र 'विप्रच्छन्नैः समाहितः' इति पाठान्तरम्। उनिसा.

**[2]निर्वृक्षक्षुपपाषाणस्थाणुवल्मीकनिर्दरे।**
**कारयेत् करणैश्चित्रैः सैन्यव्यायामभूमिकाः ॥**

(१) निर्वृक्षेति। निर्गता वृक्षादयो यस्मात् प्रदेशादिति विग्रहः। क्षुपः गुल्मः। निर्दरं भूमेर्विदारणम्। व्यायामः युद्धचर्या, न तु व्यायाममात्रम्, करणशब्दसंनिधानात्। जम.

(२) स्वसैन्यानां युद्धाभ्यासमाह– निर्वृक्षेति। वृक्षाः तरवः। क्षुपाः ह्रस्ववृक्षाः। पाटलाः(?) पल्लवाः। स्थाणवः शाखाहीनवृक्षाः। वल्मीकः उपधीकाकृतमृत्तिकास्तूपः। निर्दरः गर्तः। एते न सन्ति यत्र तत्स्थाने अन्वहं प्रतिदिनं चित्रैः अपूर्वैः कारणैः उपायैः सैन्यव्यायामं कारयेत्। 'वल्मीकनिर्दरे' इत्यत्र 'वल्मीकनिर्द्रवैः' इति मुद्रितपुस्तकपाठः न समीचीनः। उनिसा.

**[3]यस्मिन् देशे यथाकामं सैन्यव्यायामभूमयः।**
**परस्य विपरीताश्च श्रुतो देशः स उत्तमः ॥**

(१) स्कन्धावारनिवेशार्थं विग्रहार्थं च देशस्योत्तममध्यमाधमतां दर्शयति– यस्मिन्नित्यादिना। यथाकाममिति यथाऽऽत्मनो हस्त्यादीनां यथेष्टं चेष्टमानानां भूमयः। परस्य विपरीताः अयथाकामम्। जम.

(२) स्वबलानुकूलं देशमाह– यस्मिन् देश इति। सुगमम्। 'परस्य विपरीताश्च' इत्यत्र 'परस्य विपरीतश्च' इति मुद्रितपुस्तकपाठः। उनिसा.

**[1]आत्मनश्च परेषां च तुल्या व्यायामभूमयः।**
**यत्र मध्यम उद्दिष्टो देशः शास्त्रार्थचिन्तकैः ॥**

(१) तुल्या व्यायामभूमयः सैन्यस्य। जम.

(२) पक्षद्वयस्याप्यनुकूलं देशमाह– आत्मनश्चेति। स्पष्टम्। 'स मध्यमः समुद्दिष्टः' इत्यत्र 'सुमध्यमः स उद्दिष्टः' इति मुद्रितपुस्तकपाठः। उनिसा.

**[2]अरातिसैन्यव्यायामसुपर्याप्तमहीतलः।**
**आत्मनो विपरीतश्च यः स देशोऽधमः स्मृतः ॥**

(१) सुपर्याप्तं सुप्रचारम्। जम.

(२) स्वबलप्रतिकूलं देशमाह– अरातिसैन्येति। अरातिसैन्यानां विपक्षबलानां व्यायामे युद्धानुशीलने सुपर्याप्तं यथेष्टं महीतलं यस्य सः, आत्मनः निजबलस्य विपरीतश्च सैन्यव्यायामस्थानशून्य इत्यर्थः, यो देशः सः अधमः निकृष्टः स्मृतः निर्णीतः। 'अरातिसैन्यव्यायामसुपर्याप्त' इत्यत्र 'अरातिसैन्यव्यायाममुपर्याप्त' इति 'अरातिसैन्यव्यायाममपर्याप्त' इति च पाठान्तरं न समीचीनम्। उनिसा.

**[3]नित्यमुत्तममाकाङ्क्षेत् तदभावे तु मध्यमम्।**
**अधमं बन्धनागारं नोपसेवेत सिद्धये ॥**

(१) उत्तममाकाङ्क्षेत् निवेशार्थं विग्रहार्थं च। बन्धनागारम्, तत्र हि चेष्टासंरोधात् बद्धस्येवावस्थानम्। जम.

---

(१) कानी. १७।१७ ; उनिसा. शूलैः (कीलैः) च्छन्नैः (च्छद) ; नीम. ६० शूलैः (कीलैः) च्छन्नैः प्रद (च्छदप्रव).

(२) कानी. १७।१८ ; उनिसा. पाषाण (पाटल) करणै (कारणै) भूमिकाः (मन्वहम्) ; नीम. ६० निर्वृक्ष (निगूढ) निर्दरे (निह्नुताम्) पू.

(३) कानी. १७।१९ ; नीम. ६० कामं (कालं) श्रुतो (स्मृतो).

(१) कानी. १७।२० ; उनिसा. तृतीयचरणे (स मध्यमः समुद्दिष्टः) ; नीम. ६० तुल्या (तुल्य).

(२) कानी. १७।२१ ; नीम. ६० यः स (स वै).

(३) कानी. १७।२२.

(२) अधमदेशं नाऽऽश्रयेदित्याह— नित्यमिति। प्रथमतः उत्तमदेशम्, तदभावे मध्यमदेशम् आकाङ्क्षेत्, न तु कदाचिदधमदेशम्। यतः बन्धनागारसमोऽयं देशः। अतः सिद्धये जयलाभाय नोपसेवेत नाऽऽश्रयेत्। विजिगीषुरिति शेषः। उनिसा.

**'तन्मूलत्वात्प्रजानां तु राजा स्कन्ध उदाहृतः।**
**आवारोऽमात्यदण्डादिर्वृतिरावार उच्यते॥**

(१) कः पुनः स्कन्धावारः? यस्य निमित्तज्ञानमित्याह— तन्मूलत्वादिति। यथा शाखानां वृक्षस्कन्ध आश्रयस्तथा राजा प्रजानामाश्रयत्वात् स्कन्ध उच्यते। आवारः अमात्यदण्डौ, अमात्यप्रकृतेर्दण्डप्रकृतेश्च सचेतनायाः प्राधान्येन व्याप्रियमाणत्वात्। 'वृतिरावार उच्यते' इति फलत आवारत्वमात्रं दर्शयति। जम.

(२) स्कन्धावारशब्दं व्याख्यातुमाह— तन्मूलत्वादिति। तन्मूलत्वात् स एव राजैव मूलं यासां तासां भावः तत्त्वात् प्रजानां राजा स्कन्धः। वृक्षशाखासमूहस्य वृक्षमूलमिव राजा मूलकारणमित्यर्थः। राज्ञा रक्षिताः प्रजा जीवन्तीति भावः। अमात्यदण्डादिः चतुरङ्गबलम् आवारः आवरणम्। तस्य मूलभूतस्य राज्ञ आवरणमिति यावत्। यथा आवरणेन वृक्षमूलं शाखादिकं कण्टकादिभ्यो रक्षति तथा मूलभूतो राजाऽपि अमात्यदण्डादिरूपावरणेन शत्रुभ्यः प्रजा रक्षतीति भावः। आवारशब्दप्रतिपाद्यमाह— वृतिरावार उच्यते इति। वृतिः वेष्टनम् (वेडा इति प्रसिद्धिः) आवारः आवारपदप्रतिपाद्यः। 'वृत्तिरावार उच्यते' इति मुद्रितपुस्तकपाठो न समीचीनः। 'वृतिरावार उच्यते' इत्येव पाठः समीचीनत्वेन प्रतिभाति। उनिसा.

**भूतानां भूतिनिष्पत्तेरावारेण महीयसा।**
**आवृतस्तु यतः स्कन्धः स्कन्धावारस्ततः स्मृतः॥**

(१) भूतानां भूतिनिष्पत्तेरिति प्रजानां त्रिवर्गनिष्पत्तेः कारणादित्यपरं प्रयोजनम्। 'आवृतस्तु यतः स्कन्धः' इति करणसाधनात्मिकां व्युत्पत्तिं दर्शयति। इदमुक्तं भवति— प्रजाभिः स्वभूतिनिष्पत्त्यर्थिनीभिस्तत्परिरक्षार्थं तत्साहायकार्थं चाऽऽम्रियते अमात्यदण्डादिकया वृत्या स्कन्धोऽनेनेति स्कन्धावारः। जम.

(२) एतदेव स्पष्टयन्नाह— भूतानामिति। यतः यस्मात् कारणात् महीयसा अतिमहता आवारेण अमात्यदण्डादिरूपेण आवृतः वेष्टितः स्कन्धः मूलभूतो राजा भूतानां प्राणिनाम्, प्रजानामिति यावत्, भूतिनिष्पत्तेः— भूतिः संभूतिः संपत्तिर्वा, तस्या निष्पत्तेः। कारणं भवतीति वाक्यशेषः। ततः तस्मात् कारणात् सपरीवारो राजा स्कन्धावारः स्मृतः। चतुस्त्रिंशश्लोकावधि अष्टत्रिंशश्लोकपर्यन्तानां प्रतीकधारणं न मुद्रितपुस्तकानुसारेण, किंतु हस्तलिखितपुस्तकानुसारेणैव, यतः मुद्रितपुस्तके अनियमेन श्लोका अङ्किताः। उनिसा.

**'समवस्कन्दघासाम्बुवीवधासारनिग्रहाः।**
**एते प्रयत्नतो रक्ष्याः स्कन्धावारस्य मृत्यवः॥**

(१) अस्य निवेशितस्य रक्षणोपायमाह— समवस्कन्देत्यादि। निग्रहशब्दो विघाते द्रष्टव्यः घासादिभिश्च प्रत्येकं योज्यः। जम.

(२) स्कन्धावारविनाशकारणप्रतीकारार्थमाह— समेति। समवस्कन्दवासाम्बुवीवधासारनिग्रहाः— समवस्कन्दः बलभिः(?), वासः सैन्यानामवस्थानयोग्यस्थानम्, अम्बु सैन्यपेयजलम्, वीवधासारौ कृतव्याख्यौ, तेषां निग्रहाः निरोधाः प्रत्येकं स्कन्धावारस्य मृत्यवः। भवन्तीति शेषः। यतः अन्नपानादिभिर्विना प्राणिनो न जीवन्ति। अत एव एते समवस्कन्दादयः यत्नतः रक्ष्याः। प्रतीकारद्वारेण एते अरक्षिताश्चेत् तदा स्कन्धावारस्य मृत्यवो भवन्तीति भावः। उनिसा.

**²इति प्रयत्नेन निवेशयेद्बलं**
**शुभाशुभं चास्य तथोपलक्षयेत्।**
**परस्य चैतन्निपुणं विलोकयेत्**
**समारभेताशुभहीनदर्शने॥**

(१) कानी. १७।३८–३९.

(१) कानी. १७।४०; उनिसा. घासा (वासा).

(२) कानी. १७।४१; उनिसा. चास्य तथो (वाऽस्य तदो).

( १ ) प्रकरणद्वयार्थमुपसंहरन्नाह– इतीत्यादि । परस्य विलोकयेत् निवेशं शुभाशुभं च । अशुभहीनदर्शन इति । परस्कन्धावारस्याशुभस्य च दर्शने हीनस्य च दर्शने समारभेत विग्रहमित्यर्थात् । जम.

( २ ) उपसंहरन्नाह– इतीति । इति उक्तप्रकारेण प्रयत्नेन बलं मौलादिकं निवेशयेत् स्थापयेत् । तदा निवेशकाले शुभाशुभं वा शुभाशुभं च, वाकारः समुच्चये, उपलक्षयेत् संपश्येत् । परस्य यातव्यस्य च एतत् शुभाशुभं निपुणं सम्यक् विलोकयेत् पश्येत् । अशुभहीनदर्शने अशुभाभावदर्शने स्वपक्षस्येति शेषः, समारभेत सङ्ग्रामोद्योगं कुर्यात् । विजिगीषुरिति शेषः । अशुभदर्शने तु न किंचिदारब्धव्यमिति भावः । उनिसा.

व्यसनप्रतिकारः

**[१]कन्दरे शैलगहने निम्नगावनसंकटे ।**
**दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितक्लमम् ॥**
**[२]व्याधिदुर्भिक्षमरणपीडितं दस्युभिर्द्रुतम् ।**
**पङ्कपांसुजलच्छन्नं व्यस्तं पुञ्जीकृतं पथि ॥**
**[३]प्रसुप्तं भोजनव्यग्रमभूमिष्ठमसंस्थितम् ।**
**चोराग्निभयवित्रस्तं वृष्टिवातसमाकुलम् ॥**
**[४]एवमादिषु जातेषु व्यसनेष्वसमाकुलः ।**
**स्वसैन्यं साधु संरक्षेत् परसैन्यं च घातयेत् ॥**

( १ ) कानी. १९।५० ; उनिसा. न्दरे ( न्दरा ) गहने ( गहन ) दीर्घा ( दीर्घेऽ ) हित ( हिम ) ; नीम. ६१ हितक्ल ( हृतश्र ).

( २ ) कानी. १९।५१; उनिसा. मरण ( मरकैः ) भिर्द्रुत ( विद्रुत ) पांसु ( पांशु ) च्छन्नं (क्लिन्नं ) ; नीम. ६१ ( व्याधिदुर्भिक्षमरकैः पीडितं दस्युविद्रुतम् । पङ्कपांसुजलस्कन्धव्यस्तं श्वासातुरं तथा ॥ ) पूर्वोत्तरार्धयोर्मध्ये उत्तरश्लोकोत्तरार्धं पठितम्.

( ३ ) कानी. १९।५२ ; नीम. ६१ जन ( जने ) चोरा ( घोरा ) कुलम् ( हतम् ).

( ४ ) कानी. १९।५३ ; उनिसा. ष्वसमाकुलः ( षु समाकुलम् ) ; नीम. ६१ नेष्वसमाकुलः (नेन समाकुलम् ).



( १ ) व्यसनरक्षणमधिकृत्याऽऽह– कन्दर इत्यादि । कन्दरादिष्ववतरणारोहणोत्तरणादिव्यासक्तम् । छन्नं पङ्कादिगतम् । व्यस्तं विक्षिप्तम् । पुञ्जीकृतं पथि एकायने । अभूमिष्ठं स्वबलायोग्यायां भूमौ स्थितम् । असंस्थितम् अनिविष्टम् । एवमादिष्विति । आदिशब्दादशेषबलव्यसनोपग्रहः । असमाकुलः सावधानः । स्वसैन्यं रक्षेत् परावस्कन्दात् । जम.

( २ ) कन्दराशैलगहननिम्नगावनसंकटे– कन्दरा पर्वतदरी, शैलाः पर्वताः, गहनानि दुर्गमानि, निम्नगाः नद्यः, वनानि वृक्षगुल्मादीनि, एतैः संकटे संकीर्णे दीर्घे दूरे अध्वनि प्रयाणमार्गे परिश्रान्तं क्लान्तम् । क्षुत्पिपासाहिमक्लमं क्षुत्पिपासाहिमैः क्लमः क्लान्तिः यस्य तत् । व्याधिदुर्भिक्षमरकैः पीडितम्– व्याधयः ज्वरादयः, दुर्भिक्षं देशे भक्ष्याभावः, मरकं मारीभयम्, एतैः पीडितम् उपद्रुतम् । दस्युविद्रुतं दस्युभिः विद्रुतम् उत्पीडितम् । पङ्कपांशुजलक्लिन्नम्– पङ्काः कर्दमाः, पांशवः रजांसि, जलानि, एतैः क्लिन्नं समाकुलम् । व्यस्तं पृथग्भूतम् । पुञ्जीकृतं संकीर्णम् । प्रसुप्तं निद्रितम् । भोजनव्यग्रं भक्षणोत्कण्ठम् । अभूमिष्ठं युद्धानुपयोगिभूमिस्थितम् । असंस्थितं विशृङ्खलम् । एवमादिषु व्यसनेषु विपत्सु जातेषु समाकुलं व्याकुलं स्वसैन्यं निजबलं साधु सम्यक् रक्षेत् । परसैन्यं च शत्रुबलं च घातयेत् विनाशयेत् । उनिसा.

चतुर्णां सैन्याङ्गानां कर्माणि भूमयश्च

**[१]प्रयाणे पूर्वयायित्वं वनदुर्गप्रवेशनम् ।**
**अकृतानां च मार्गाणां तीर्थानां च प्रवर्तनम् ॥**

( १ ) अस्मिन् सर्गे पञ्च प्रकरणानि– गजाश्वरथपत्तिकर्माणि, पत्त्यश्वरथगजभूमयः, दानकल्पना, व्यूहविकल्पाः, प्रकाशयुद्धं चेति । तत्र चतुरङ्गं स्वकर्मभिः कूटयुद्धादौ व्याप्रियत इति तत्कर्माण्युच्यन्ते नवभिः श्लोकैः– प्रयाण इत्यादि । प्रयाणकाले पैरैर्मार्गे संरुद्धे

( १ ) कानी. २०।१–२.

संरोधभङ्गार्थं हस्तिनां पुरो यानम्। वनदुर्गे अश्वाद्यगम्ये प्रवेशनं हस्तिभिः सैन्यस्य। तीर्थानां जलावतरणानां प्रवर्तनं संक्षोभ्यकरणम्। जम.

(२) कूटयुद्धमभिधाय अत्र प्रकाशयुद्धं संपादयितुं बलाङ्गानां कर्माणि, तत्र हस्तिकर्म श्लोकत्रयेण दर्शयति— प्रयाण इति। प्रयाणे युद्धयात्रायां पूर्वयायित्वम्। वनदुर्गप्रवेशनम्, परेषां त्रासजननार्थमिति शेषः। अकृतानाम् अकृतपूर्वाणां मार्गाणां पथां तीर्थानां जलावतरणिकानां च प्रवर्तनं महाकायत्वादिति भावः। 'कृतानां च प्रवर्तनम्' इति पाठान्तरम्। उनिसा.

**तोयावतारसंतारावेकाङ्गविजयस्तथा।**
**अभिन्नानामनीकानां भेदनं भिन्नसंग्रहः॥**

(१) तोयावतारसंताराविति। जलदुर्गविजयार्थं हस्तिभिस्तोयावतरणम्, नाव्यतोयानां च नदीनां संतरणम्, एकाङ्गविजयः सुकृतेन सुकल्पितेन केवलेन हस्तिना विजयः। अभिन्नानां परानीकानां पराक्रमातिशयात्। भिन्नसंग्रहः भिन्नव्यूहानां छिद्रपूरणेन संधानम्। जम.

(२) तोयावतारसंतारौ। तथा एकाङ्गविजयः एकेनैव हस्त्यङ्गेन परसैन्यविजयः। अभिन्नानां मिलितानाम् अनीकानां परसैन्यानां भेदनं पृथक्करणं हस्तिसमूहप्रेरणादिति भावः। भिन्नानां विक्षिप्तानां स्वसैन्यानां संग्रहः एकीकरणम्। उनिसा.

**[1]विभीषिकाऽभिघातश्च प्राकारद्वारभञ्जनम्।**
**कोशनीतिर्भयत्राणं हस्तिकर्म प्रचक्षते॥**

(१) विभीषिका भीतिजननं संनाहसंभ्रमेणैव। अभिघातः परेषां व्यसने। कोशनीतिः प्रयाणकोशवहनम्। भयात् प्रत्युपस्थितात् त्राणम्। जम.

(२) विभीषिका शत्रुषु भयप्रदर्शनम्। विघातः शत्रूणां व्याघातकरणम्। पुरप्राकारभञ्जनं पुरस्य नगरस्य प्राकारभञ्जनं प्राचीरभङ्गः। 'प्राकारद्वारभञ्जनम्' इति मुद्रितपुस्तकपाठः। कोषनीतिः कोषानयनम्। भयत्राणं भयात् रक्षणम्। एतानि हस्तिकर्म प्रचक्षते वदन्ति। पूर्वाचार्याः इति शेषः। 'कोषनीतिर्भयत्राणम्' इत्यत्र 'कोषनीतिभयत्राणम्' इति मुद्रितपुस्तकपाठो न सम्यक्। उनिसा.

**[1]चतुरङ्गस्य सैन्यस्य निषेधो बलरक्षणम्।**
**अभिन्नभेदनं भिन्नसंधानं रथकर्म तत्॥**

(१) चतुरङ्गस्य बलस्य परकीयस्य निषेधो रथैः। बलस्य आत्मीयस्य रक्षणम्। जम.

(२) रथकर्माभिधातुमाह— चतुरङ्गस्येति। चतुरङ्गस्य सैन्यस्य परानीकस्य निषेधः प्रतिषेधः। बलरक्षणं स्वकीयबलरक्षणम्। अभिन्नसंधानं (? अभिन्नभेदनं भिन्नसंधानं च) हस्तिकर्मवत् द्रष्टव्यम्। इति रथकर्मैव तत्। हस्तिकर्माभिधायकश्लोकानन्तरं रथकर्माभिधायकश्लोको मुद्रितपुस्तके हस्तलिखितपुस्तकेषु च पतितः। परंतु हस्तलिखितपुस्तकेषु हस्तिकर्माभिधायकश्लोकव्याख्यानानन्तरं रथकर्माभिधायकश्लोकस्य व्याख्यानं वर्तते। तच्च व्याख्यानमस्माभिर्यथादृष्टमुद्धृतं मूलादर्शनात् अपरिशोधितमेव। उनिसा.

**[2]वनदिङ्मार्गविचयो वीवधासाररक्षणम्।**
**अनुयानापसरणे शीघ्रकार्योपपादनम्॥**

(१) वनदिङ्मार्गविचयः वनानां सोपद्रवाणां निरूपणमश्वैः। अनुयानं भग्नस्य परबलस्य पश्चात् सरणम्। अपसरणं पलायनम्। शीघ्रकार्योपपादनं वार्ताज्ञानादिकार्यसंपादनम्। जम.

(२) वनानां दिशां मार्गाणां विचयः निरूपणम् अश्वकर्मेति संबन्धः। वीवधासाररक्षणम्— वीवधः तण्डुला-

---

(१) कानी. २०१३; जम. विभी (विभी); उनिसा. काऽभि (का वि) प्राकारद्वार (पुरप्राकार).

(१) कानी. २०१४.

(२) कानी. २०१५; उनिसा. चयो (धयो) शीघ्र (शीघ्रं).

दिसंग्रहः, आसारः सैन्यानां सर्वतो व्याप्तिः, तयोः रक्षणम्। अनुयानापसरणे परसैन्यस्य त्रासोत्पादनार्थम् अनु पश्चात् यानं गमनम्, भङ्गदर्शनेन परबलान्याकृष्य हन्तुरपसरणम्। शीघ्रं कार्योपपादनं शीघ्रं संपादनीयानां कार्याणामुपपादनम्। 'वनदिङ्मार्गप्रचयः' इति मुद्रितपुस्तकपाठः। उनिसा.

**[१]दीनानुसरणं घातः कोटीनां जघनस्य च।**
**इत्यश्वकर्म पत्तेश्च सर्वदा शस्त्रधारणम्॥**

(१) दीनानुसरणं यतो यतः सैन्यं दैन्यमापद्यते ततस्ततोऽनुसरणम्। घातः कोटीनां बलाग्रभागानाम्। जघनस्य पृष्ठभागस्य आशु परिवृत्य घातः। पत्तेश्चेति चशब्दात् सर्वमेदेषु शस्त्रधारणं कर्म। जम.

(२) दीनानुसरणं दीनानाम् अनुकम्पनीयानां स्वबलानां भयापसरणार्थं पश्चाद्गमनम् अनुसरणम्। कोटीनाम् उभयपक्षस्थितबलानां जघनस्य अवनिपृष्ठभागस्थितबलस्य च। अनुसरणमिति शेषः। इत्यश्वकर्म। पत्तेः पदातिकबलस्य च सर्वदा शस्त्रधारणम्। पदातिकर्मेति शेषः। उनिसा.

**[२]शोधनं कूपतीर्थानां मार्गाणां शिबिरस्य च।**
**यवसादि च यत् किंचिद्विज्ञेयं विष्टिकर्म तत्॥**

(१) द्विविधाः पत्तयः– युद्धयोग्या इतरे च। तत्र पूर्वेषां कर्मोक्तम्, इतरेषामाह– शोधनमित्यादि। प्रयाणे कूपादीनां शिबिरस्य परिक्षेपस्य शोधनं कर्म। यवसादि च यत्किंचित् संपाद्यं तत् विष्टिकर्म विज्ञेयम्। आदिशब्दात् यन्त्रावरणोपकरणादिवहनं ज्ञेयम्। जम.

(२) कूपतीर्थानां कूपजलावतरणिकानां शोधनं खननक्रिया, शिबिरस्य स्कन्धावारस्थानस्य मार्गाणां यवसादिषु पललादिषु आदिग्रहणात् लोष्टकण्टकशाखादिषु च यत् किंचित् कर्म तत् विश्वकर्म विश्वेषां सकलबलानां कर्म विज्ञेयम्। 'यवसादि च यत्किंचित्' इत्यत्र 'यवसादिषु यत्किंचित्' इति टीकोद्धृतपाठः। 'विश्वकर्म तत्' इत्यत्र 'विश्वकर्मवत्' इति मुद्रितपुस्तकपाठो न समीचीनः। उनिसा.

**[१]जातिः सत्त्वं वयःस्थानं प्राणिता वर्ष्म वेगिता।**
**तेजः शिल्पमुदग्रत्वं स्थैर्यं साधु विधेयता॥**

(१) जात्यादियुक्ताश्च हस्त्यादयः स्वकर्मसु क्षमा भवन्तीत्याह– जातिरित्यादि। तत्र पदातीनां जातिर्ब्राह्मणादिः, हस्तिनां भद्रमन्द्रादिः, अश्वानां बाह्लीककाम्बोजादिः। सत्त्वं पदातीनां व्यसनेऽभ्युदये च यदविकारकम्, हस्त्यादीनां च देवमानुषासुरगन्धर्वभावः। वयःस्थानं वयःस्थता त्रयाणामिति तृतीया चतुर्थी पञ्चमी च दशा। प्राणिता प्राणवत्त्वम्। प्राणस्त्रिविधः– उत्तमो मध्यमोऽधमश्चेति। वर्ष्म महाकायता। वेगिता जवः। सोऽपि त्रिविधः पूर्ववत्। तेजः शौर्यम्। शिल्पं तत्र पदातीनां कृतास्त्रता, हस्त्यश्वानां तु आहितविनयता। उदग्रत्वम् उन्नतपूर्वकायता। स्थैर्यं दृढकायमनस्कता। विधेयता तत्र पदातीनां स्वामिनः, इतरयोर्यन्तुः। जम.

(२) बललक्षणान्यभिधातुमाह– जातिरिति। जातिः विशुद्धजातिमत्त्वम्। सत्त्वम् उत्तमत्वम्। वयः तरुणत्वम्। स्थानम् उत्पत्तिस्थानस्य उत्तमत्वम्। प्राणिता बलवत्त्वम्। मर्म जीवनस्थानसंधिस्थानादीनां विशुद्धत्वम्। वेगिता वेगवत्त्वम्। तेजः तैक्ष्ण्यम्। शिल्पं स्वे स्वे विषये कृतविद्यत्वम्। उदग्रत्वम् उन्नतत्वम्। स्थैर्यं स्थितेरचलत्वम्। 'धैर्यम्' इति पाठान्तरम्। साधु विधेयिता साधु यथा भवति तथा यथोक्तकारिता इत्येतत्। 'जातिः सत्त्वम्' इत्यत्र 'जातिस्थानम्' इति, 'प्राणिता' इत्यत्र 'प्राणिनाम्' इति, 'उदग्रत्वम्' इत्यत्र 'शीघ्रगत्वम्' इति मुद्रितपुस्तकपाठा न समीचीनाः। उनिसा.

**[२]सुव्यञ्जनाचारतेति पत्तिकुञ्जरवाजिनाम्।**
**इति लक्षणमेतेन युक्तान् कर्मसु योजयेत्॥**

---

(१) कानी. २०१६ ; उनिसा. घातः (चैव).

(२) कानी. २०१७ ; उनिसा. सादि च (सादिषु) विष्टि (विश्व).

(१) कानी. २०१८ ; उनिसा. यःस्था (यः स्था) वर्ष्म (मर्म) यता (यिता).

(२) कानी. २०१९ ; उनिसा. पूर्वार्धे (सव्यञ्जनाचारवतां पत्त्यश्वरथदन्तिनाम्।).

(१) सुव्यञ्जनता प्रशस्तलक्षणता । स्वाचारता– तत्र पदातीनां शिष्टाचरणम्, हस्त्यश्वानां सेनान्याद्याचारचरणता। इति लक्षणमिति। पत्तिकुञ्जरवाजिनां स्वस्वकर्मनिष्पादनयोग्यताया अनेन लक्ष्यमाणत्वात्। तस्मादनेन युक्तान् स्वकर्मसु योजयेत् । तत्र च हस्त्यश्वबललक्षणैः रथानामप्युक्तमेव, तदधीनत्वात् रथचर्यायाः। संनिवेशसारदारुमयत्वादिकं प्रसिद्धमेवेति नोक्तम्। जम.

(२) सव्यञ्जनाचारवतां स्वकीयलक्षणाचारयुक्तानाम् पत्त्यश्वरथदन्तिनां लक्षणम् असाधारणचिह्नम्। एतेन उक्तलक्षणेन युक्तान् विशिष्टान्, पत्त्यश्वरथदन्तिन इति शेषः, कर्मसु युद्धकर्मसु योजयेत् प्रेरयेत्। 'पत्त्यश्वरथदन्तिनाम्' इत्यत्र 'पत्त्यश्वरथवाजिनाम्' इति मुद्रितपुस्तकपाठो न समीचीनः। उनिसा.

**'सस्थूलस्थाणुवल्मीकवृक्षगुल्माऽपकण्टका।**
**सापसारा पदातीनां भूर्नातिविषमा मता॥**

(१) यथा तत्कर्माणि युद्धार्थानि तथा तद्भूमयोऽपीति पत्त्यश्वरथगजभूमय उच्यन्ते पञ्चभिः श्लोकैः– सस्थूलेत्यादि। स्थूलस्थाणुभिः वल्मीकवृक्षगुल्मैश्च योधाश्रयैः सह वर्तते युद्धभूमिः। अपकण्टका कण्टकरहिता संचरणयोग्या। सापसारा अपसरणमार्गोपेता। नातिविषमा स्तोकनिम्नोन्नता। जम.

(२) पदातीनां युद्धानुकूलां भूमिमभिधातुमाह– सस्थूणेति। सापसारा अपसरणप्रदेशसहिता नातिविषमा नातिबन्धुरा या भूमिः सा पदातीनाम्। युद्धानुकूला इति शेषः। अन्यत् स्पष्टम्। उनिसा.

**'स्वल्पवृक्षोपला क्षिप्रलङ्घनीयदरा स्थिरा।**
**निःशर्करा विपङ्का च सापसारा च वाजिभूः॥**

(१) स्वल्पवृक्षोपला वाजिनामसङ्गकारिणी भवति। क्षिप्रलङ्घनीयप्रदरवती बृहच्छ्वभ्राभावात्। स्थिरा यत्र खुरा न विशन्ति। जम.

(२) अश्वानां युद्धानुकूलां भूमिमभिधातुमाह– अल्पेति। अल्पवृक्षोपला अल्पा वृक्षा उपलाश्च यस्यां सा तथाभूता, अच्छिद्रा गर्तरहिता, अलतिका लतारहिता, अविदरा स्फोटनरहिता, स्थिरा दृढा, निःशर्करा सूक्ष्मपाषाणरहिता, निष्पङ्का, सापसारा, एवंभूता या भूमिः सा वाजिभूः अश्वानां युद्धानुकूला भूमिरित्यर्थः। उनिसा.

**'निःस्थाणुसिकतापङ्का निर्वल्मीकोपला समा।**
**केदारव्रततिश्वभ्रवृक्षगुल्मविवर्जिता॥**

**निरुत्खाता निर्दरणा खुरचङ्क्रमणक्षमा।**
**स्थिरा चक्रसहा चैव रथभूमिः प्रकीर्तिता॥***

(१) निःस्थाणुसिकतापङ्का निर्वल्मीकोपला च भूः चक्रसहा तदारोहणचर्यानुकूला। केदारं क्षेत्रम्। व्रततिः वल्ली। निरुत्खाता चक्राप्रतिघातिनी। खुरचङ्क्रमणयोग्या स्थिरत्वात्। जम.

---

(१) कानी. २०।१० ; उनिसा. स्थूल (स्थूण).

(२) कानी. २०।११ ; उनिसा. पूर्वार्धे (अल्पवृक्षोपलाऽच्छिद्राऽलतिकाऽविदरा स्थिरा।) विपङ्का (निष्पङ्का).

* अतः परम् 'रथानां शस्यते भूमिर्ध्रुवः सर्वास्तु हस्तिनाम्। नागम्या नाम भूरेषां तेन नागाः स्मृता बुधैः॥' इति श्लोकः प्रक्षिप्तः। अत्र हिंदीभाषापुस्तके 'रथानां वाजिनां भूमिः स्थिरा सर्वत्र हस्तिनाम्। न ह्यस्थानभूरेषा न नागानां विदुर्बुधाः॥' इति पाठभेदः। एवमग्रिमश्लोकोत्तरम् 'द्वे शते धनुषां गत्वा राजा तिष्ठेत्प्रतिग्रहे। भिन्नसंधारणस्तस्मान्न युध्येताप्रतिग्रहः॥ नागम्या नाम भूरेषां तेन नागाः स्मृता बुधैः। तस्मादेता भुवोऽस्यर्थं नागानां संप्रकीर्तिताः॥ तुरगादीनि भिन्नानि प्रतिगृह्णाति यद्बलम्। प्रतिग्रह इति ख्यातः स तु कार्यो भरक्षमः॥ तेन शून्यस्तु यो व्यूहः स भिन्न इव लक्ष्यते। तस्माद्विद्वाञ्जयाकाङ्क्षी न युध्येताप्रतिग्रहः॥' इति चत्वारः श्लोकाः प्रक्षिप्ताः।

(१) कानी. २०।१२–१४.

(२) रथयुद्धानुकूलां भूमिमभिधातुमाह— निःस्थाण्विति। श्लोकद्वयं प्रतीतम्। मुद्रितपुस्तके त्रयोदशसंख्यकः श्लोकः असंगतत्वात् हस्तलिखितपुस्तकेऽविद्यमानत्वाच्च न व्याख्यातः। उनिसा.

**मर्दनीयतरुश्छेद्यव्रततिः पङ्कवर्जिता।**
**सुगम्यशैलविषमा हस्तिभूरिति कीर्तिता॥**

(१) गजभूमिमाह— मर्दनीयतरुश्छेद्यव्रततिरिति। शक्यमर्दनवृक्षा छेद्यव्रततिश्च हस्तिनां तदारोहाणां चाबाधनी। सुगम्यशैलविषमेति। हस्तिनां गम्याः शैला विषमाश्च। जम.

(२) गजानुकूलां भूमिमभिधातुमाह— मर्दनीयेति। श्लोकार्थः सुगमः। उनिसा.

[1]**जयार्थी नृपतिस्तिष्ठेत् दूरं गत्वा प्रतिग्रहे।**
**भिन्नं च प्रतिगृह्णीयान्न हि युध्येत तं विना॥**

(१) बलान्तराणां त्वगम्यां भूमिं प्रसङ्गादाह— जयार्थीति। यत्र स्थितः स्वबलं प्रतिगृह्णाति स प्रतिग्रह उच्यते। तथा चोक्तम्— 'द्वे शते धनुषां गत्वा राजा तिष्ठेत्प्रतिग्रहे। भिन्नसंधारणस्तस्मान्न युध्येताप्रतिग्रहः॥' (कौ. १०।५) इति। जम.

(२) युद्धे राजस्थानमभिधातुमाह— जयेति। अप्रतिग्रहः अनाक्रमणीयः मतिमान् नीतिशास्त्रनिपुणः जयार्थी विजिगीषुः नैव युध्येत स्वयं युद्धं न कुर्वीत। वा यदि आवश्यकत्वात् युध्येत तदा अतिबलवेष्टितः सन् युध्येतेत्यर्थः। हस्तलिखितपुस्तके तु श्लोकोऽयं भिन्नक्रमेण लिखितः। स च क्रमः 'जयार्थी नृपतिस्तिष्ठेद्दूरं गत्वाऽप्रतिग्रहे। भिन्नं च प्रतिगृह्णीयान्न हि युध्येत तं विना॥' इति। व्याख्यानं तु— जयार्थी विजिगीषुः राजा दूरम्, युद्धक्षेत्रादिति शेषः, गत्वा तिष्ठेत् अप्रतिग्रहे स्थाने। स्थितः भिन्नं परैरुपहतं प्रतिग्रहविह्वलमिति यावत्, स्वसैन्यमिति शेषः, प्रतिगृह्णीयात् रक्षेदित्यर्थः। हि यतः तं राजानं विना न युध्येत। सैन्यमिति शेषः। उनिसा.

(१) कानी. २०।१५ ; उनिसा. पाठभेदो न निर्णीयते.

योधेभ्यः शत्रुविशेषघातिभ्यः द्रव्यदानम्

[1]**गजेष्वारोपितः साधुः शीघ्रपातैरधिष्ठितः।**
**यत्र राजा तत्र कोशः कोशाधीना हि राजता॥**

(१) यथा युद्धभूमयो युद्धार्थास्तथा योधेभ्यो दानमपीति तत्कल्पनोच्यते षड्भिः श्लोकैः। तत्र 'पक्षादिनाऽनेन गृहीतकोशः पक्षादिहीनं रिपुमभ्युपेयात्' (कानी. १६।३५) इत्युक्तम्। स च कोशो युद्धकाले क्व तिष्ठेदित्याह— गजेष्वित्यादि। साधुः सारभूतः देशकालानुरूपद्रव्ययुक्तो वा। शीघ्रपातैः प्रजविभिर्जनैरासैः अधिष्ठितः। कोशाधीना हि राजतेति। राजसमूहो राजता। सा चार्थतृष्णया युध्यमाना तदधीना भवति। तस्माद्राजसमीप एव कोशः स्यादिति। अन्यस्त्वाह— रञ्जनाद्राजा। दूरस्थे हि कोशे कथं तदानीं योधान् रञ्जयेदिति। जम.

(२) कोषस्थानमभिधातुमाह— गजेष्विति। कोषः गजेषु आरोपितः कार्यः, तथा च सुरक्ष्यो भवतीति। शीघ्रयानैः तुरङ्गोष्ट्रादिभिर्यानैः अधिष्ठितः संनिधापितः। रक्षासौकर्यार्थमेवेति भावः। यत्र राजा विजिगीषुः तत्र कोषः। हि यस्मात् राजता कोषाधीना। यस्य कोषः स एव राजा भवतीत्यर्थः। उनिसा.

[2]**प्रत्यग्रे कर्मणि कृते श्लाघमानः कृतादरः।**
**योधेभ्यस्तु ततो दद्यात् को हि दातुर्न युध्यते॥**

(१) कर्मणि कृते वक्ष्यमाणे। श्लाघमानः बहुमन्यमानः। कृतादरः यथार्हकृतमानः। जम.

(२) कोषप्रयोजनमभिधातुमाह— प्रत्यग्र इति। प्रत्यग्रे अभिनवे कर्मणि शत्रुवधादौ कृते निर्वर्तिते सति श्लाघमानः वर्णयत् कृतादरः कृतसंमानः योधेभ्यः ततः तस्मात् दद्यात् स्वकोषं प्रयच्छेत्। हि यस्मात् कः को नाम पुरुषः दातुः दानशीलस्य विजिगीषोः न युध्येत? अपि तु सर्व एव युध्येत। उनिसा.

(१) कानी. २०।१६ ; उनिसा. पातै (यानै) ; नीम. ५० पातै (यानै).

(२) कानी. २०।१७ ; नीम. ६५.

**¹दद्यात् प्रहृष्टो नियुतं भराणां राजघातने ।**
**तदर्धं तत्सुतवधे सेनापतिवधे तथा ॥**

(१) नियुतं भराणां यथादेशप्रसिद्धानामाहतद्रव्याणां लक्षम् । तदर्धं पञ्चाशत्सहस्राणि । जम.

(२) दानसंख्यामभिधातुमाह– दद्यादिति । विजिगीषुः प्रहृष्टः आह्लादितः सन् राजघातिने शत्रुबलेषु यो राजा तद्घातिने, वर्णानाम् आहितद्रविणविशेषाणां नियुतं लक्षं दद्यात् । तत्सुतवधे तस्य राज्ञः सुतवधे तथा सेनापतिवधे तदर्धं नियुतार्धं पञ्चाशत्सहस्राणीत्यर्थः । दद्यादिति पूर्वेणान्वयः । एवमुत्तरत्रापि । उनिसा.

**²प्रवीराणां तु मुख्यस्य शतं शतगुणं वधे ।**
**तदर्धं कुञ्जरवधे प्रदेयं स्यन्दनस्य च ॥**

(१) मुख्यनायकस्य शतं शतगुणं दश सहस्राणीत्यर्थः । तदर्धं पञ्च सहस्राणि । जम.

(२) प्रवीराणां प्रकृष्टवीराणां यः मुख्यः प्रधानं तस्य वधे शतगुणं शतं दशसहस्रम् । कुञ्जरवधे हस्तिवधे तदर्धं शतगुणशतार्धं पञ्चसहस्रमिति यावत् । प्रधानस्यन्दनस्य प्रधानरथस्य वधे विनाशे च तदर्धमिति संबन्धः । 'प्रधानस्यन्दनस्य च' इत्यत्र 'प्रदानं स्यन्दनस्य च' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**³साहस्रोऽश्ववधः शत्यः पत्तिमुख्यवधः स्मृतः ।**
**शिरो विंशतिकं शेषं भोगद्वैगुण्यमेव च ॥**

(१) साहस्रोऽश्ववधः सहस्रं दीयतेऽस्मिन्निति । शतं दीयतेऽस्मिन्निति शत्यः । शिरो विंशतिकं शेषमिति । शेषाणां शिरः प्रमाणीकृत्य विंशतिर्देया । भोगद्वैगुण्यमेव चेति । यथोक्तानामनुक्तानां च कृतकर्मणां पूर्वोचिता या यस्य यस्य वृत्तिस्तस्य तस्य तत्तद्भोग्यद्वैगुण्यं कल्पनीयम् । जम.

(२) चापिवधे धन्विवधे सहस्रं दशशतम् । पत्तिमुख्यवधे पदातिप्रधानविनाशे गवां विंशतिकम् । सर्वं समस्तं सैन्यं भोगद्वैगुण्यम्– भोगः उपजीविका, तस्य द्वैगुण्यं यत्र तत् तथाभूतम्, कुर्यादिति शेषः । 'पत्तिमुख्यवधे' इत्यत्र 'पतिमुख्यवधे' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**¹युग्यं हेम च कुप्यं च यो यज्जयति तस्य तत् ।**
**दद्याद्वस्त्वनुरूपं वा हृष्टो योधान् प्रहर्षयेत् ॥**

(१) स्वयं गृहीतानां च परबलद्रव्याणामनुज्ञानं यदाह– युग्यमित्यादि । युग्यं वाहनम् । कुप्यं कम्बलास्तरणादि । दद्यात् वस्त्वनुरूपं वेति उक्ताद्विधानान्तरं दर्शयति । योधान् प्रहर्षयेत् । तद्यथा– 'यान् यज्ञसंघैस्तपसा च विप्राः स्वर्गैषिणः पात्रचयैश्च यान्ति । क्षणेन तानप्यतियान्ति शूराः प्राणान् सुयुद्धेषु परित्यजन्तः ॥ नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् । तत्तस्य मा भून्नरकं च गच्छेद्यो भर्तृपिण्डस्य कृते न युध्येत् ॥' (कौ. १०।३) इति । जम.

(२) रूप्यं रजतम्, हेम सुवर्णम्, कुप्यं स्वर्णरौप्यभिन्नधातुः, यः यत् जयति तस्य तत् । वा अथवा हृष्टः आह्लादितः नराधिपः राजा योधान् वस्त्वनुरूपं कार्यानुरूपं दद्यात् । 'वस्त्वनुरूपं वा' इत्यत्र 'वस्त्वनुरूपं हि' इति मुद्रितपुस्तकपाठः । 'योधान् नराधिपः' इत्यत्र 'योधान् प्रहर्षयन्' इति पाठान्तरम् । 'रूप्यम्' इत्यत्र 'गुण्यम्' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

रिपुदोषान् वीक्ष्य रिपुबलहननं विशेषतो हस्तिबलहननं स्वरक्षणं च

**²यतः फल्गु यतो भिन्नं यतो दूष्यैरधिष्ठितम् ।**
**ततो रिपुबलं हन्यादात्मनश्चोपबृंहयेत् ॥**

---

(१) कानी. २०।१८ ; उनिसा. भराणां (वर्णानां) तने (तिने).

(२) कानी. २०।१९ ; उनिसा. प्रदेयं (प्रधान).

(३) कानी. २०।२० ; उनिसा. (सहस्रं च चापिवधे पत्तिमुख्यवधे स्मृतम् । गवां विंशतिकं सर्वं भोगद्वैगुण्यमेव च ॥).

(१) कानी. २०।२१ ; उनिसा. युग्यं (रूप्यं) प्रहर्षयेत् (नराधिपः) ; नीम. ६५ युग्यं (रूप्यं) च यो (यो यो) वा (च) येत् (यन्).

(२) कानी. २०।५७ ; उनिसा. भिन्नं (ऽभिन्नं) दूष्यै (व्यूहै) त्मनश्चोप (त्मानं चापि).

(१) यत इति यस्मिन् परव्यूहस्य भागे। फल्गु असारम्। भिन्नं कृतोपजापं विश्लिष्टन्यासं वा। दूष्यैः क्रुद्धलुब्धादिभिः। ततः तस्मिन् भागे। आत्मनश्चोपबृंहयेत् बलं पराघातप्रतिषेधार्थम्। जम.

(२) विजिगीषुः उभयपक्षेऽपि यतः यत्र फल्गु असारं सैन्यम्, तथा यतः यत्र अभिन्नं संहतं सैन्यम्, एवं यतः यत्र व्यूहैरधिष्ठितम्, ततः तत्र रिपुबलं हन्यात्। आत्मानं चापि स्वकीयबलं चापि बृंहयेत् वर्धयेत्। 'व्यूहैरधिष्ठितम्' इत्यत्र 'दुष्टैरधिष्ठितम्' इति मुद्रितपुस्तकपाठः। उनिसा.

**[१]सारं द्विगुणसारेण फल्गु सारेण पीडयेत्।**
**संहतं च गजानीकैः प्रचण्डैरपसारयेत्॥**

(१) फल्गु बलं सारेण पीडयेदिति संबन्धः। संहतं दुर्भेद्यम्। जम.

(२) सारं सारवत् अरिसैन्यं द्विगुणसारेण अरिसैन्यसारात् द्विगुणसारवता निजबलेन, फल्गु असारम् अरिसैन्यं सारेण सारवता निजबलेन पीडयेत् हन्यात्। संहतम् अभिन्नम् अरिसैन्यं प्रचण्डैः भीषणैः गजानीकैः गजसैन्यैः वारयेत् पीडयेत्। 'सारम्' इत्यत्र 'अरिम्' इति मुद्रितपुस्तकपाठो न समीचीनः। उनिसा.

**[२]दुर्जयान् करिणः सिंहवसासिक्तैर्मतङ्गजैः।**
**आहन्यात् करिणीनां वा समूहैः साध्वधिष्ठितैः॥**

(१) सिंहवसासिक्तैः क्षान्तिपूर्वकम्। साध्वधिष्ठितैः निपुणयोधाधिष्ठितैः। जम.

(२) सिंहवसासिक्तैः सिंहस्य वसया मेदसा सिक्तैः उक्षितैः। अन्यत् स्पष्टम्। उनिसा.

(१) कानी. २०।५८; उनिसा. रपसार (रेव वार).

(२) कानी. २०।५९.

**[१]सलोहजालैर्दृढबन्धदन्तैः**
**सुकल्पितैरूर्जितपादरक्षैः।**
**प्रवीरयोधैर्मददुर्निवारै-**
**र्हन्याद्गजेन्द्रैर्द्विषतामनीकम्॥**

(१) सलोहजालैः आवरणैः लोहस्थगितैः शक्तिभिर्वा। पादरक्षाः पादगोपाः प्रतियोद्धारः। जम.

(२) सलोहजालैः लोहजालावृतैः, दृढबद्धदन्तैः, सुकल्पितैः सुसज्जितैः, ऊर्जितपादरक्षैः सुदृढचर्मसंनद्धपादैः, प्रवीरयोधैः प्रकृष्टवीराधिष्ठितैः, मददुर्निवारैः मदोत्कटैः गजेन्द्रैः द्विषतां शत्रूणाम् अनीकं हन्यात्। उनिसा.

**[२]एकोऽपि वारणपतिर्द्विषतामनीकं**
**युक्तं निहन्ति मदसत्त्वगुणोपपन्नः।**
**नागेषु हि क्षितिभृतां विजयो निबद्ध-**
**स्तस्माद्गजाधिकबलो नृपतिः सदा स्यात्॥**

(१) एकोऽपि, किं पुनर्बहवः? गुणः विनयाधानम्। नागेषु हि विजयो निबद्ध इति सेनाया हस्तिनः प्रधानमङ्गमिति दर्शयति। जम.

(२) एकोऽपि असहायोऽपि मदसत्त्वगुणोपपन्नः मदबलगुणसंपन्नः वारणपतिः गजेन्द्रः द्विषतामनीकं व्यक्तं सम्यक् निहन्ति। हि यतः क्षितिभुजां राज्ञां विजयः नागेषु हस्तिषु निबद्धः तस्मात् नृपतिः सदा गजाधिकबलः स्यात्। उनिसा.

## शुक्रनीतिः

सैन्याय पारितोष्यदानम्, याने राजादीनां मध्येऽवस्थानम्

**[३]दुर्वृत्तेऽप्यकुलीने तु बलं दातरि रज्यते।**
**हृष्टं कृत्वा स्वीयबलं पारितोष्यप्रदानतः॥**

(१) कानी. २०।६०; उनिसा. बन्ध (बद्ध).

(२) कानी. २०।६१; उनिसा. युक्तं (व्यक्तं) भृतां (भुजां).

(३) शुनी. ४।७।२६२–२६३.

**नायकः पुरतो यायात् प्रवीरपुरुषावृतः ।**
**मध्ये कलत्रं कोशश्च स्वामी फल्गु च यद्धनम् ।**
**ध्वजिनीं च सदोद्युक्तः स गोपायेद्दिवानिशम् ॥**

दुर्वृत्ते दुराचारेऽपि अकुलीने असद्वंशप्रसूतेऽपि राजनि दातरि दानशीले सति बलं रज्यते अनुरक्तं भवति । तस्मात् पारितोष्यप्रदानतः पुरस्कारदानेन स्वीयबलं हृष्टं संतुष्टं कृत्वा नायकः सेनापतिः प्रवीरपुरुषैः आवृतः सन् पुरतः अग्रतः यायात् गच्छेत् । मध्ये कलत्रं स्त्रीवर्गः कोशः द्रव्यसमूहः स्वामी प्रभुः यच्च फल्गु सारं( ?असारं) धनं तत् यायात् । सः नायकः सदोद्युक्तः सदा उद्योगी सन् दिवानिशं ध्वजिनीं गोपायेत् रक्षेत् ।
शुनीटी.

युद्धलक्षणं युद्धप्रकाराश्च

[1]**आबिभ्रतोः शत्रुभावमुभयोः संयतात्मनोः ।**
**अस्त्राद्यैः स्वार्थसिद्ध्यर्थं व्यापारो युद्धमुच्यते ॥**

शत्रुभावम् आबिभ्रतोः धारयतोः संयतात्मनोः निश्चलमनसोः उभयोः स्वार्थसिद्ध्यर्थम् अस्त्राद्यैः व्यापारः युद्धमुच्यते । शुनीटी.

**मन्त्रास्त्रैर्दैविकं युद्धं नालाद्यस्त्रैस्तथाऽऽसुरम् ।**
**शस्त्रबाहुसमुत्थं तु मानवं युद्धमीरितम् ॥**

मन्त्रास्त्रैः दैविकम्, नालादिभिः अस्त्रैः आसुरम्, शस्त्रबाहुसमुत्थं शस्त्रैः तलवारादिभिः बाहुभिश्च समुत्पन्नं मानवं युद्धम् ईरितम् उक्तम् । शुनीटी.

**एकस्य बहुभिः सार्धं बहूनां बहुभिश्च वा ।**
**एकस्यैकेन वा द्वाभ्यां द्वयोर्वा तद्भवेत् खलु ॥**

तत् युद्धम् एकस्य बहुभिः सार्धं सह, बहूनां बहुभिश्च सार्धम्, एकस्य एकेन सार्धम्, द्वयोः द्वाभ्यां वा सार्धं खलु निश्चितं भवेत् । शुनीटी.

( १ ) शुनी. ४।७।२२०–२२२.

[1]**उत्तमं मान्त्रिकास्त्रेण नालिकास्त्रेण मध्यमम् ।**
**शस्त्रैः कनिष्ठं युद्धं तु बाहुयुद्धं ततोऽधमम् ॥**

मान्त्रिकास्त्रेण मन्त्रसिद्धेन अस्त्रेण युद्धम् उत्तमम् । नालिकास्त्रेण मध्यमम् । शस्त्रैः कनिष्ठम् अधमम् । बाहुयुद्धं तु ततः अधमादपि अधमम् । शुनीटी.

**मन्त्रेरितमहाशक्तिबाणाद्यैः शत्रुनाशनम् ।**
**मान्त्रिकास्त्रेण तद्युद्धं सर्वयुद्धोत्तमं स्मृतम् ॥**

मन्त्रयुद्धमाह– मन्त्रेति । मन्त्रेण ईरितैः महाशक्तिबाणाद्यैः यत् शत्रूणां नाशनं तत् मान्त्रिकास्त्रेण युद्धम् । तच्च सर्वेषु युद्धेषु उत्तमं श्रेष्ठं स्मृतम् । शुनीटी.

**नालाग्निचूर्णसंयोगाल्लक्ष्ये गोलनिपातनम् ।**
**नालिकास्त्रेण तद्युद्धं महाह्रासकरं रिपोः ॥**

नालयुद्धमाह– नालेति । नालेन अग्निचूर्णसंयोगात् लक्ष्ये लक्षणीये शत्रौ यत् गोलनिपातनं गोलाकारज्वलल्लोहपिण्डनिक्षेपणं तत् नालिकास्त्रेण युद्धम् । तच्च रिपोः शत्रोः महात्रासकरं अतिभयङ्करमित्यर्थः । शुनीटी.

**कुन्तादिशस्त्रसंघातैर्नाशनं रिपुणां च यत् ।**
**शस्त्रयुद्धं तु तज्ज्ञेयं नालास्त्राभावतः सदा ॥**

शस्त्रयुद्धमाह– कुन्तेति । कुन्तादीनां शस्त्राणां संघातैः समूहैः यत् रिपुणां रिपूणामित्यर्थः, दीर्घाभाव आर्षः, नाशनं तत् शस्त्रयुद्धं सदा नालास्त्राणां अभावात् ज्ञेयम् । नालास्त्रासद्भावे तैरेव योद्धव्यमिति भावः ।
शुनीटी.

**कर्षणैः संधिमर्माणां प्रतिलोमानुलोमतः ।**
**बन्धनैर्घातनं शत्रोर्युक्त्या तत् बाहुयुद्धकम् ॥**

बाहुयुद्धमाह– कर्षणैरिति । युक्त्या कौशलेन शत्रोः संधिमर्माणां संधीनां शरीरग्रन्थीनां मर्माणां च कर्षणैः प्रपीडनैः प्रतिलोमानुलोमतः प्रतिलोमेन अस्वाभाविकरीत्या अनुलोमतः स्वभावगत्या च, तथा बन्धनैः, बाहुभिरिति शेषः, यत् घातनं नाशनं तत् बाहुयुद्धकम् । शुनीटी.

( १ ) शुनी. ४।७।३३४–३५३.

**वामपाणिकचोत्पीडा भूमौ निष्पेषणं बलात् ।**
**मूर्ध्नि पादप्रहरणं जानुनोदरपीडनम् ॥**
**मालूराकारया मुष्ट्या कपोले दृढताडनम् ।**
**कफोणिपातोऽप्यसकृत् सर्वतस्तलताडनम् ।**
**जालेन युद्धे भ्रमणं नियुद्धं स्मृतमष्टधा ॥**

नियुद्धं निरूपयति– वामेत्यादि । नियुद्धम् अष्टधा अष्टप्रकारं स्मृतम् । यथा वामपाणिना वामहस्तेन कचानां केशानाम् उत्पीडा उत्पीडनम्, धारणमित्यर्थः । बलात् भूमौ निष्पेषणं दलनम् । मूर्ध्नि शिरसि पादप्रहरणं पदाघातः । जानुना उदरपीडनम् । मालूरः श्रीफलम्, तस्येव आकारः यस्याः तादृश्या मुष्ट्या कपोले गण्डे दृढताडनं कठिनप्रहारः । असकृत् पुनः पुनः कफोण्योः कूर्परयोः पातः भूतले बलात् पातनम् । सर्वतः सर्वैः प्रकारैः तलेन चपेटेन ताडनं प्रहारः । तथा जालेन कापट्येन, शत्रूणां रन्ध्रार्थितयेति शेषः, युद्धे भ्रमणम् । शुनीटी.

**चतुर्भिः क्षत्रियं हन्यात् पञ्चभिः क्षत्रियाधमम् ।**
**षड्भिर्वैश्यं सप्तभिस्तु शूद्रं संकरमष्टभिः ।**
**शत्रुष्वेतानि युञ्जीत न मित्रेषु कदाचन ॥**

चतुर्भिः, नियुद्धप्रकारैरिति सर्वत्र शेषः, क्षत्रियम्, पञ्चभिः क्षत्रियाधमम् अधमक्षत्रियम्, षड्भिः वैश्यम्, सप्तभिः शूद्रम्, अष्टाभिस्तु संकरं संकीर्णजातिम् अम्बष्ठादिकं हन्यात् । एतानि अष्टविधानि नियुद्धानि शत्रुषु युञ्जीत प्रयुञ्ज्यात् । मित्रेषु कदाचन न । शुनीटी.

युद्धस्वरूपनिरूपणम्, स्वसैन्यरक्षणं व्यसनेभ्यः

**नालास्त्राणि पुरस्कृत्य लघूनि च महान्ति च ।**
**तत्पृष्ठगांश्च पादातान् गजाश्वान् पार्श्वयोः स्थितान् ।**
**कृत्वा युद्धं प्रारभेत भिन्नामात्यबलारिणा ॥**

लघूनि च महान्ति च नालास्त्राणि पूर्वोक्तानि पुरस्कृत्य अग्रेकृत्य* पादातान् पदातिवर्गान् तत्पृष्ठगान् तेषां नालास्त्राणां पृष्ठगामिनः, तथा गजाश्वान् गजबलानि अश्वबलानि च पार्श्वयोः स्थितान् कृत्वा भिन्नानि भेदं गतानि अमात्याः बलानि च यस्य तादृशेन अरिणा शत्रुणा सह युद्धं प्रारभेत । शुनीटी.

**सांमुख्येन प्रपातेन पार्श्वाभ्यामपयानतः ।**
**युद्धानुकूलभूमेस्तु यावल्लाभस्तथाविधम् ।**
**सैन्यार्धांशेन प्रथमं सेनपैर्युद्धमीरितम् ॥**

युद्धानुकूलभूमेः सङ्ग्रामोपयोगिस्थानस्य यावल्लाभः यादृशः लाभः तथाविधं तादृशं तथा यथा सांमुख्येन पार्श्वाभ्यां वा प्रपातेन अपयानतः अपसरणेन च सेनपैः सेनापतिभिः सैन्यानाम् अर्धांशेन सह प्रथमं युद्धम् ईरितं कथितम् । शुनीटी.

**अमात्यगोपितैः पश्चादमात्यैः सह तद्भवेत् ।**
**नृपसंगोपितैः पश्चात् स्वतः प्राणात्यये च तत् ॥**

पश्चात् अमात्यैः गोपितैः रक्षितैः सैन्यैः अमात्यैः, शत्रूणामिति शेषः, सह तत् युद्धं भवेत् । पश्चात् अमात्यनाशे इत्यर्थः, नृपसंगोपितैः राजरक्षितैः तैः सैन्यैः युद्धं भवेत् । ततश्च प्राणात्यये प्राणनाशसंकटे स्वतः स्वयम्, अन्येन अगुप्तैरपीत्यर्थः, तत् युद्धं भवेत् । शुनीटी.

**दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितश्रमम् ।**
**व्याधिदुर्भिक्षकरकैः पीडितं दस्युविद्रुतम् ॥**
**पङ्कपांसुजलस्कन्नं व्यस्तं श्वासातुरं तथा ।**
**प्रसुप्तं भोजने व्यग्रमभूमिष्ठमसंस्थितम् ॥**
**घोराग्निभयवित्रस्तं वृष्टिवातसमाहतम् ।**
**एवमादिषु जातेषु व्यसनैश्च समाकुलम् ।**
**स्वसैन्यं साधु रक्षेत्तु परसैन्यं विनाशयेत् ॥**

दीर्घाध्वनि दीर्घे मार्गे परिश्रान्तं क्लान्तम्, क्षुधा पिपासया च आहितः जनितः श्रमः क्लान्तिः यस्य तादृशम्, व्याधिभिः पीडाभिः दुर्भिक्षैः अकालैः करकैः शिलावृष्टिभिश्च पीडितम्, दस्युभिः विद्रुतम् आक्रान्तम्, पङ्कैः कर्दमैः पांसुभिः रजोभिः जलैश्च स्कन्नं क्लिन्नम्, व्यस्तम् उद्विग्नम्, श्वासातुरं श्वासेन रोगेण आतुरं कातरम्, प्रसुप्तं निद्रितम्, भोजने व्यग्रं क्षुधितमित्यर्थः, अभूमिष्ठं वृक्षाद्यारूढमित्यर्थः, असंस्थितं दुर्गतं चञ्चलं वा,

* गतिसंज्ञाभावान्नात्र समासो भवतीत्यतः 'अग्रे कृत्वा' इत्येव वक्तुमुचितम् ।

घोरेण भीषणेन अग्निभयेन वित्रस्तं भीतम्, वृष्टिभिर्वातैश्च समाहतम् आकुलितम्, एवमादिषु जातेषु घटनासु व्यसनैः विपद्भिः समाकुलं स्वसैन्यम्, साधु सम्यक् रक्षेत् । परसैन्यं तु विनाशयेत् । शुनीटी.

**बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।**
**मुख्यो भेदो हि तेषां तु पापिष्ठो विदुषां मतः ॥**

मनीषिभिः विद्वद्भिः इह शास्त्रे यानि बलस्य व्यसनानि दोषाः उक्तानि तेषां मध्ये तेषां भेदः परस्परं विच्छेदः मुख्यः श्रेष्ठः विदुषां पण्डितानां पापिष्ठः अतिपापः मतश्च । शुनीटी.

**भिन्ना हि सेना नृपतेर्दुःखदेह भवत्युत ।**
**मौला हि पुरुषव्याघ्र किमु नानासमुत्थिता ॥**

हे पुरुषव्याघ्र, नृपतेः नानासमुत्थिता विविधप्रकारेण समागता सेना भिन्ना भेदं गता सती इह दुःखदा भवति । मौला सेना किमुत? दुःखदेति किं वक्तव्यमित्यर्थः । शुनीटी.

**उपायान् षड्गुणं मन्त्रं शत्रोः स्वस्यापि चिन्तयेत् ।**
**धर्मयुद्धैः कूटयुद्धैर्हन्यादेव रिपुं सदा ॥**

शत्रोः स्वस्य आत्मनः अपि उपायान् सामादीन् षड्गुणान् संध्यादीन् मन्त्रं च चिन्तयेत् । तथा धर्मयुद्धैः कूटयुद्धैर्वा सदा रिपुं हन्यादेव । शुनीटी.

**याने सपादभृत्या तु स्वभृत्यान् वर्धयन् नृपः ।**
**स्वदेहं गोपयेद्युद्धे चर्मणा कवचेन च ॥**

नृपः याने युद्धयात्रायां स्वभृत्यान् सपादभृत्या चतुर्थांशाधिकया भृत्या वेतनेन वर्धयन् रञ्जयन् युद्धे चर्मणा ढाल इति भाषाप्रसिद्धेन, कवचेन शरीरत्राणेन परिच्छदविशेषेण स्वदेहं गोपयेत् रक्षेत् । शुनीटी.

**पाययित्वा मदं सम्यक् सैनिकान् शौर्यवर्धनम् ।**
**उत्तेजितांश्च निर्द्वैधान् मन्त्रान् युद्धे नियोजयेत् ॥**

सैनिकान् शौर्यवर्धनं वीर्यवृद्धिकरं मदं सम्यक् पाययित्वा उत्तेजितान्, कृत्वेति शेषः, तथा निर्द्वैधान् निःसंशयान् मन्त्रान् युद्धे नियोजयेत् । शुनीटी.

**नालिकास्त्रेण खड्गाद्यैः सैनिकः पातयेदरीन् ।**
**कुन्तेन सादी बाणेन रथगो गजगोऽपि च ॥**

सैनिकः पदातिः नालिकास्त्रेण खड्गाद्यैश्च, सादी अश्वारूढः कुन्तेन, रथगः तथा गजगः गजारूढश्च बाणेन अरीन् पातयेत् । शुनीटी.

शत्रुवञ्चनमपि इष्टम्

**[1]प्रफुल्लवदनेनैव तथा कोमलया गिरा ।**
**अङ्गीकृतापराधेन सेवादाननतिस्तवैः ॥**
**उपकारैः स्वाशयेन दिव्यैर्विश्वासयेत् परम् ।**
**क्षुरधारेण मनसा रिपोश्छिद्रं सुलक्षयेत् ॥**

प्रफुल्लेन प्रसन्नेन वदनेन, कोमलया गिरा वाचा, अङ्गीकृतेन स्वीकृतेन अपराधेन दोषेण, सेवया दानेन, नत्या प्रणामेन, स्तवेन गुणकीर्तनेन, उपकारैः हितानुष्ठानैः, स्वाशयेन सुष्ठुभावेन आशयेन, तथा दिव्यैः शपथैः परं शत्रुं विश्वासयेत् । परंतु क्षुरधारेण मनसा रिपोः शत्रोः छिद्रं दोषं सुलक्षयेत् । शुनीटी.

**अवमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।**
**स्वकार्यं साधयेत् प्राज्ञः कार्यध्वंसो हि मूर्खता ॥**

प्राज्ञः पण्डितः जनः अवमानं पुरस्कृत्य अग्रेकृत्य स्वीकृत्येत्यर्थः, पृष्ठतः पश्चात् मानं कृत्वा मानमविगणय्येत्यर्थः, स्वकार्यं साधयेत् । हि यतः कार्यध्वंस एव मूर्खता भवति । शुनीटी.

भिन्ना स्वसेना नाश्या, विशिष्टयुक्तकर्मकर्तृभ्यः स्वयोधेभ्यः पारितोष्यदानम्

**मञ्चासीनः शतानीकः सेनाकार्यं विचिन्तयेत् ।**
**सदैव व्यूहसंकेतवाद्यशब्दान्तवर्तिनः ॥**
**संचरेयुः सैनिकाश्च राजराष्ट्रहितैषिणः ।**
**भेदितां शत्रुणा दृष्ट्वा स्वसेनां घातयेच्च ताम् ॥**

मञ्चासीनः पर्यङ्कगतः शतानीकः शतसंख्यकसेनापरिवृतः राजा सेनाकार्यं सेनानां कार्यम् अनुरागापरागजनितमित्यर्थः, विचिन्तयेत् । राजराष्ट्रहितैषिणः सैनिकाः,

---

(१) शुनी. ४।७।३६१-३७१.

सुविश्वस्ता इति भावः, व्यूहस्य यः संकेतवाद्यशब्दः तस्य अन्ते वर्तिनः तदनुसारिण इत्यर्थः, सदा संचरेयुः। अपरक्तसैनिककार्यानुसंधानार्थमिति भावः। ततश्च शत्रुणा भेदितां स्वसेनां दृष्ट्वा तां स्वसेनां घातयेच्च नाशयेदपि। शुनीटी.

**प्रत्यग्रे कर्मणि कृते योधैर्दद्याद्धनं च तान्।**
**पारितोष्यं चाधिकारं क्रमतोऽर्हं नृपः सदा॥**

योधैः प्रत्यग्रे अभिनवे कर्मणि कृते सति नृपः सदा तान् योधान्। 'तान्' इति कर्मविवक्षया द्वितीया। तेभ्य इत्यर्थः। क्रमतः यथाक्रमम् अर्हं योग्यं पारितोष्यं धनम् अधिकारं च दद्यात्। शुनीटी.

शत्रुपीडाप्रकाराः विविधा शत्रुनाशरीतिश्च

**जलान्नतृणसंरोधैः शत्रून् संपीड्य यत्नतः।**
**पुरस्ताद्विषमे देशे पश्चाद्धन्यात् तु वेगवान्॥**

वेगवान् त्वरावान् सन् पुरस्तात् अग्रतः जलानाम् अन्नानां तृणानां च संरोधैः सम्यक् निरोधैः यत्नतः शत्रून् संपीड्य पश्चात् विषमे देशे, रणभूमौ इत्यर्थः, हन्यात्। शुनीटी.

**कूटस्वर्णमहादानैर्भेदयित्वा द्विषद्बलम्।**
**नित्यविश्रम्भसंसुप्तं प्रजागरकृतश्रमम्॥**

**विलोभ्यापि परानीकमप्रमत्तो विनाशयेत्।**
**तत्सहायबलं नैव व्यसनासमपि क्वचित्॥**

कूटानां स्वर्णानां महादानैः, बहुकृत्रिमस्वर्णदानैरित्यर्थः, द्विषतां शत्रूणां बलं विलोभ्य विशेषेण लोभयित्वा अप्रमत्तः स्वयं सावधानः सन् भेदयित्वा शत्रुतः विच्छिद्य नित्यविश्रम्भेण विश्वासेन संसुप्तं प्रजागरेण कृतः श्रमः येन तं शत्रुभयात् निद्रारहितं परस्य शत्रोः अनीकं सैनिकं विनाशयेत्। व्यसनासं कामादिष्वासक्तम् अपि तस्य सहायबलं क्वचित् कदाचित् नैव विनाशयेदित्यर्थः।
शुनीटी.

**स्वसमीपतरं राज्यं नान्यस्माद्ग्राहयेत् क्वचित्॥**

अन्यस्मात् शत्रोः इति कर्मणि पञ्चमी आर्षा इति बोध्या। क्वचित् कदाचित् स्वस्य आत्मनः समीपतरं निकटस्थं राज्यं न ग्राहयेत्। तथात्वे शत्रोर्निकटवर्तितया महानर्थसंभव इति भावः। शुनीटी.

**क्षणं युद्धाय सज्जेत क्षणं चापसरेत् पुनः।**
**अकस्मान्निपतेद्दूराद्दस्युवत् परितः सदा॥**

क्षणं युद्धाय सज्जेत उद्युञ्जीत। क्षणं च पुनः अपसरेत्। रणादिति शेषः। तथा अकस्मात् सहसा दूरात् परितः समन्तात् दस्युवत् सदा निपतेच्च। शुनीटी.

**[1]सेनां युद्धे नियुञ्जीत प्रत्यनीकविनाशिनीम्।**
**न युञ्ज्याद्रिपुराष्ट्रस्थां मिथः स्वद्वेषिणीं न च॥**

प्रत्यनीकविनाशिनीं शत्रुसैन्यनाशिनीं सेनां युद्धे नियुञ्जीत। रिपुराष्ट्रस्थां शत्रुराज्यवासिनीं सेनां न। मिथः रहसि स्वस्य आत्मनः द्वेषिणीं विद्वेषकारिणीं च सेनां न युञ्ज्यात्। शुनीटी.

**न नाशयेत् स्वसेनां तु सहसा युद्धकामुकः॥**

युद्धकामुकः रणप्रियः सन् सहसा स्वस्य आत्मनः सेनां न नाशयेत्। शुनीटी.

**[2]सुवस्त्राभरणैर्नैव न कुटुम्बेन संयुतः।**
**विशिष्टचिह्नितो भीतो युद्धे गच्छेन्न वै क्वचित्॥**

सुवस्त्राभरणैः शोभनवसनालंकारैः तथा कुटुम्बेन परिवारेण संयुतः न, विशिष्टचिह्नितः विशिष्टम् अन्यविलक्षणं यत् चिह्नं तदस्य जातमिति तथाभूतः न, भीतश्च न क्वचित् कदाचित् युद्धे गच्छेत्। शुनीटी.

**क्षणं नासावधानः स्यात् भृत्यस्त्रीपुत्रशत्रुषु॥**

क्षणमपि भृत्यस्त्रीपुत्रशत्रुषु भृत्येषु स्त्रीषु पुत्रेषु शत्रुषु च असावधानः न स्यात्। शुनीटी.

## योगयात्रा

समर्थसैन्यलक्षणानि

**[3]शूरकृतास्त्रमहाकुलजाताः**
**स्वामिहिता बलिनः कृतयोग्याः।**
**इष्टकरा बहुबान्धवमित्रा**
**नागकरोरुभुजाः कठिनाङ्गाः॥**

---

(१) शुनी. ५।६–७. (२) शुनी. ५।१६–१७.
(३) योया. १५।१; नीम. ५८ योग्याः (यज्ञाः) इष्टकरा (दृष्टगुणा).

[1]व्याघ्रमृगेश्वरगोवृषनादाः
श्येनदृशः शुकसंनिभनासाः ।
केकरजिह्मनिमीलितनेत्राः
पुण्यकृतां समरेषु सहायाः ॥
[2]देशगुणैः प्रथिताश्च पुरोगा-
स्ते बहवो गुणलक्षणलक्ष्याः ।
काकभृतो भृकुटीकृतवक्त्रा
धर्मभृतो विविधायुधहस्ताः ॥

प्रयाणे योधस्वरूपमाह मिहिरः— शूरेत्यादि ।
नीम. ५८

स्वसैन्योत्साहनविधिः

[3]रणे प्रत्यासन्ने सदसि नृपतिर्मन्त्रिविदितं
बलोत्साहं कुर्यादहित...विद्रावण-करम् ।
जयं नो दैवज्ञः कथयति जनः सत्यवचनो
निमित्तानीष्टानि द्विपतुरगयोधादिषु च मे ॥
[4]अभिजनयुता यूयं शौर्ये जनाः कथयन्ति वो
धनुषि परशौ शक्त्यां चक्रे तथैव कृतश्रमाः ।
मयि च भवतामस्ति स्नेहः कथं न जयो मम
द्विरदतुरगं स्यादाक्रान्तं भवद्भिरिदं यदा ॥

योधान् प्रति उपदेश उक्तः— अभिजनेत्यादिना ।
नीम. ६२

[5]बृहन्ति हेषन्ति शिवं जुषन्ति
दीप्यन्ति शोचन्ति मुदाऽन्विताश्च ।
नागाश्च विप्रानलशत्रुयोधाः
कः संशयश्चात्र रणे जयस्य ॥

[1]द्वैपायनेन मुनिना मनुना च धर्मा
युद्धेषु ये निगदिता विदितांश्च ते वः ।
स्वाम्यर्थगोद्विजहिते त्यजतां शरीरं
लोका भवन्ति सुलभा विपुलं यशश्च ॥

[2]तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिज्यया च या ।
व्रजन्ति तामाशु गतिं मनस्विनो
रणाश्वमेधे पशुतामुपागताः ॥

[3]यस्य तपो न जनाः कथयन्ति
नो मरणं समरे विजयं वा ।
न श्रुतदानमहाधनता वा
तस्य भवः कृमिकीटसमानः ॥

[4]स्वर्गस्य मार्गा बहवः प्रदिष्टा-
स्ते कृच्छ्रसाध्याः कुटिलाः सविघ्नाः ।
निमेषमात्रेण महाफलोऽय-
मृजुश्च पन्थाः समरे व्यसुत्वम् ॥

ज्योतिष्टोमादियज्ञैः स्वर्गावाप्तिः, तत्र च ज्ञानाद्यनेकं साधनं महत्कष्टायाससाध्यम् । तथा उपासनायां पञ्चा-ग्न्यादितपःसु च क्लेशादिकं स्पष्टमेव । योगोऽपि वायु-निरोधनाहारनिद्राव्यायामनिरोधनादिना दुःसाध्य एव । सर्वत्र च कीर्तने कृते पुण्यक्षयः । अतः सर्वापेक्षया रणमरणमेव स्वल्पायाससाध्यं साधीयः । तत्र हि पापि-नामपि स्वर्गः, किमुतान्यस्य ? तदुक्तम्— द्वैपायने-नेत्यादिना ।
नीम. ६३

(१) योया. १५।२ ; नीम. ५८.
(२) नीम. ५८.
(३) योया. १६।१.
(४) योया. १६।२ ; नीम. ६३.
(५) योया. १६।३.

(१) योया. १६।४ ; नीम. ६३ ताश्च (तास्तु).
(२) योया. १६।५ ; नीम. ६३.
(३) योया. १६।६ नता (नतां) ; नीम. ६३.
(४) योया. १६।७ ; नीम. ६३.

[1]संरक्ष्यमाणमपि नाशमुपैत्यवश्य-
मेतच्छरीरमपहाय सुहृत्सुतार्थान् ।
तत्किं वरं प्रलुठतः सुहृदां समक्षं
किं निघ्नतः परबलं भृकुटीमुखस्य ॥

[2]हा तात तातेति च वेदनार्तः
क्वणञ्शकृन्मूत्रकफानुलिप्तः ।
वरं मृतः किं भवने किमाजौ
संदष्टदन्तच्छदभीमवक्त्रः ॥

[3]लोकोऽशुभस्तिष्ठतु तावदन्यः
पराङ्मुखानां समरेषु पुंसाम् ।
पत्न्योऽपि तेषां न ह्रिया मुखानि
पुरः सखीनामवलोकयन्ति ॥

[4]शत्रुसैन्यमवदार्य जीवतां
यत् सुखं तु कथयामि तादृशम् ।
शृण्वतां स्वकयशोग्रपल्लवं
दिग्वधूवदनकर्णपूरकम् ॥

[5]निपतति शिरसि द्विपस्य सिंहः
स्वतनुशताधिकमांसराशिमूर्तेः ।
पिबति च तदसृङ् मदेष्टगन्धं
वदनगतांश्च शनैः प्रमृज्य मुक्तान् ॥

[6]यदभावि न मेऽस्ति यत् (? तत्) क्वचित्
सकृद्भावि(? यदभावि) न मे क
यास्यति ।
इति संपरिचिन्त्य पण्डिताः
परसैन्यानि विशन्त्यविक्लवाः ॥

(१) योया. १६।८ ; नीम. ६३ प्रलुठतः सुहृदां (प्रलुपतां सुहृशां ).

(२) योया. १६।९ ; नीम. ६३ तातेति (मातेति) क्वण ( किर ).

(३) योया. १६।१० ; नीम. ६३.

(४) योया. १६।११ ; नीम. ६३ जीव (वर्तं) स्वकयशोग्रपल्लवं (स्वयशसोपपल्लवान् ) पूरकम् (पूरकान् ).

(५) योया. १६।१२ ; नीम. ६३.

(६) योया. १६।१३.

[1]रुचिमत्कुचबाहुपञ्जरे
हरिणाक्ष्यः प्रवरोरुपीडनम् ।
रमयन्ति विमानसंस्थिताः
सुरवध्वोऽतिमुदोऽरिणाऽर्चितान् ॥

[2]एकतोऽस्य सुरसुन्दरीजनः
श्रीः प्रतीच्छति युयुत्सुतोऽन्यतः ।
पाप्मना सह पलायतेऽयश-
श्चैकतः कुलकलङ्ककारकम् ॥

[3]चित्रं किमस्मिन् वद साहसं वा
यत् स्वामिनोऽर्थे गणयन्ति
नासून् ।
युद्धात् प्रणष्टो विदितोऽरिमध्ये
यद् बालिशस्तिष्ठति साहसं तत् ॥

न केवलं गात्रविभूषणानि
क्षतानि शूरस्य रणे कृतानि ।
यशस्तरोर्मूलकृषिक्षतानि
तान्येव वंशस्य विभूषणानि ॥

भग्नेषु योधेष्ववपूर्य शस्त्रा-
ण्याजौ प्रवृत्ता व्यसवः कृता ये ।
ऊर्ध्वानना वाजिकृताप्तलोका-
स्तेषां विमानान्यवलोकयन्ति ॥

भङ्गे जाते प्रत्यावृत्तौ फलातिशयः उच्यते– भग्नेष्विति । अश्वमेधप्राप्तलोकेभ्योऽपि उत्तमं लोकं यान्तीत्यर्थः । नीम. ६४

यैरश्वमेधो विहितः फलं वा
देवैर्द्विजैर्वा श्रुतिशास्त्रकारैः ।
तैरेव भङ्गे प्रतिलोमगस्य
पदे पदे वाजिमखः प्रदिष्टः ॥

(१) योया. १६।१४ ; नीम. ६४ मुदोऽरिणा (मुदा रणा ).

(२) योया. १६।१५ ; नीम. ६४ त्सुतो ( त्सतो ).

(३) योया. १६।१६–२२ ; नीम. ६४–६५.

संमूर्छितं संयुगसंप्रहारैः
पश्यन्ति सुप्तप्रतिबुद्धतुल्यम् ।
आत्मानमङ्केषु सुराङ्गनानां
मन्दाकिनीमारुतवीजिताङ्गाः ॥
जीवतोऽपि निहतस्य वा रणे
धर्म एव हि नरस्य युध्यतः ।
निश्चयात्तु मरणं हि संगरे
नैव भीरुरजरामरः क्वचित् ॥
मानमात्रमवलम्ब्य युध्यते
कीटकोऽथ विहगोऽथवा पशुः ।
को हि नाम पुरुषस्त्यजेद् रणं
स्वर्गमानसुखकीर्तिवित्तदम् ॥
*......'रयुतं स्त्रीगीतनृत्यान्वितं
बालार्कोपममाविशन्त्यभिमुखा युद्धे
विमानं हताः ॥

युद्धकाले युद्धान्ते च शुभाशुभनिमित्तानि

'छत्रध्वजप्रहरणान्यभिमन्त्रितानि
कुर्वन्ति शत्रुकदनं रिपुवाहिनीनाम् ।
मन्त्रं जगाद भगवानुशनाश्च (? ना च )
शास्त्रे
यल्लिख्यते तदिह पूर्वविधिक्रमेण ॥
प्रचलितगजवाजिशूरयोधं
समभिमुखोद्यतशत्रुमभ्युपेतम् ।
अभिमुखदिलकृतप्रभञ्जनं च
स्थिरहृदयोऽरिबलं सुखेन
हन्यात् ॥
अशुभखगमृगं च दक्षिणे
निपतति केतुपताकमेव च ।
परुषविषममन्दजर्जरो
यदि खलु भू(? तू)र्यरवोऽस्य
वामतः ॥
यत्पृष्ठतोऽशेषगजाश्वयोध-
मनिष्ठितव्यूहमरातिसैन्यम् ।
यस्येन्द्रचापं च ललाटसंस्थं
तत्पृष्ठभागः कुशलोऽभिहन्यात् ॥
दिग्दाहक्षितिजरजोऽश्मवृष्टिपातै-
र्निर्घातक्षितिचलनादिवैकृतैश्च ।
युद्धान्ते मृगशकुनैश्च दीप्तनादै-
र्नो भद्रं भवति जयोऽपि
पार्थिवस्य ॥
शुभा मृगपतत्रिणो मृदुसमीरणो
ह्लादकृद्
ग्रहाः स्फुटमरीचयो विग(लि ?)-
तरेणु दिग्मण्डलम् ।
यदन्यदपि वैकृतं न विजयावसाने भवेत्
तदा सुखमकण्टकं नृपतिरत्ति देशं
विभोः ॥

## नीतिवाक्यामृतम्

सैन्यसारासारविवेकः

'वरमल्पमपि सारं बलं न भूयसी मुण्ड-मण्डली ॥

अथ बलस्य सारेतरतामाह– वरमिति । वरं प्रधानं स्वल्पं स्तोकमपि सारम् उत्तमं बलं सैन्यम्, न भूयसी प्रभूताऽपि मुण्डमण्डली असारसंघातः । तथा च नारदः– 'वरं स्वल्पाऽपि च श्रेष्ठा नास्वल्पाऽपि च कातरा । भूपतीनां च सर्वेषां युद्धकाले पताकिनी ॥'। नीवाटी.

असारबलभङ्गः सारबलभङ्गं करोति ॥

अथ असारबलस्य स्वरूपमाह– असारेति । यत् असारबलं तत् परचक्रे दृष्टमात्रे भज्यते । तस्य भङ्गे सारबलमपि भज्यते । तस्मादसारबलं न कर्तव्यम् । तथा च कौशिकः– 'कातराणां च यो भङ्गः सङ्ग्रामे स्यान्महीपतेः । स हि भङ्गं करोत्येव सर्वेषां नात्र संशयः ॥'।
नीवाटी.

---

* श्लोकैकदेश उच्छिन्नः ।

( १ ) योया. १६।२३

( २ ) योया. १७।१–४, ७–८.

(१) नीवा. ३०।१६–२३.

विजिगीषोर्युद्धोद्यतस्य कर्तव्यम् .

**नाप्रतिग्रहो युद्धमुपेयात् ॥**

अथ भूभुजा सङ्ग्रामे यथा गन्तव्यं तथाऽऽह– नाप्रतिग्रह इति । नोपेयात् न गच्छेत् । कम् ? युद्धं सङ्ग्रामम् । कोऽसौ ? राजा । किंविशिष्टः ? अप्रतिग्रहः एकाकी । एकाकिना भूपतिना सङ्ग्रामे न गन्तव्यम् । तथा च गुरुः– 'एकाकी यो व्रजेद्राजा सङ्ग्रामे सेव्यवर्जितः । स नूनं मृत्युमाप्नोति यद्यपि स्याद्धनंजयः ॥'। नीवाटी.

**राजव्यञ्जनं पुरस्कृत्य पश्चात् स्वाम्यधिष्ठितस्य सारबलस्य निवेशनं प्रतिग्रहः ॥**

अथ सङ्ग्रामकाले पार्थिवप्रतिग्रहकरणस्वरूपमाह– राजेति । राजव्यञ्जनं राजचिह्नं स्वामिनं पुरस्कृत्य पुरतः कृत्वा अग्रे कृत्वा पश्चात्तस्य सारबलं प्रधानसैन्यं ध्रियते यत् स प्रतिग्रहः स्यात् । एतदुक्तं भवति– भूपतेः पश्चात् युद्धकाले उत्तमबलनिवेशनं क्रियते स प्रतिग्रहः । तथा च नारदः– 'स्वामिनं पुरतः कृत्वा तत्पश्चादुत्तमं बलम् । ध्रियते युद्धकाले यः स प्रतिग्रहसंज्ञितः ॥' । नीवाटी.

**सप्रतिग्रहं बलं साधु युद्धायोत्सहते ॥**

अथ सप्रतिग्रहबलस्य युद्धकाले यत् भवति तदाह– सप्रतिग्रहमिति । उत्सहते उत्साहं करोति । किं तत् ? बलं सैन्यम् । किमर्थम् ? युद्धाय सङ्ग्रामाय । किंविशिष्टं बलम् ? सप्रतिग्रहम् । सह प्रतिग्रहेण वर्तते इति सप्रतिग्रहम् । राज्ञा उपस्थितेनेत्यर्थः । तथा च शुक्रः– 'राजा पुरःस्थितो यत्र तत्पश्चात् संस्थितं बलम् । उत्साहं कुरुते युद्धे ततः स्याद्विजये पदम् ॥' । नीवाटी.

**पृष्ठतः सदुर्गजला भूमिर्बलस्य महानाश्रयः ॥**

अथ युद्धकाले यादृशी भूमिः पार्थिवेन समाश्रयणीया तस्या लक्षणमाह– पृष्ठत इति । युद्धकाले यस्य सैन्यस्य पृष्टि(?ष्ठ)प्रदेशे सदुर्गजला भूमिः दुर्गेण जलेन सह भूमिर्भवति सा तस्य बलस्य महान् आश्रयः स्थानं भवति । एतदुक्तं भवति– पराजयेऽपि प्राप्ते दुर्गप्रवेशः स्यात् जलप्राप्तिश्च । तथा च गुरुः– 'जलदुर्गवती भूमिर्यस्य सैन्यस्य पृष्ठतः । पृष्ठदेशे भवेत्तस्य तन्महाश्वासकारणम् ॥' । नीवाटी.

**नद्या नीयमानस्य तटस्थपुरुषदर्शनमपि जीवितहेतुः ॥**

अथ जलदुर्गवत्या भूमेः पृष्ठतायाः कारणमाह– नद्या इति । ..........* एतदुक्तं भवति– सदुर्गजला नदी जीवितस्य सेनाया महाश्वासं करोति । तथा च जैमिनिः– 'नीयमानोऽत्र यो नद्या तटस्थं वीक्षते नरम् । हेतुं तं मन्यते सोऽत्र जीवितस्य हितात्मनः ॥' । नीवाटी.

**निरन्नमपि सप्राणमेव बलं यदि जलं लभेत ॥**

अथ जलस्य माहात्म्यमाह– निरन्नमिति । यदि अन्नं न प्राप्यते, सप्राणमेव बलं सावष्टम्भमेव यदि तावज्जलं लभेत । एतस्मात् कारणात् युद्धकाले जलं पृष्टि(?ष्ठ)देशे नीयते । यदि कथमपि पराजयो भवति तत्पृष्ठस्थं जलं प्राणानां रक्षाय भवति अन्नबाह्यमपि । तथा च भारद्वाजः– 'अन्नाभावादपि प्रायो जीवितं न जलं विना । तस्माद्युद्धं प्रकर्तव्यं जलं कृत्वा च पृष्ठतः ॥' । नीवाटी.

**[1]विद्विषां चाटुकारं न बहु मन्येत ॥**

अथ शत्रोर्मधुरवचनस्य यत्कर्तव्यं तदाह– विद्विषामिति । गतार्थमेतत् । नीवाटी.

**जिह्वया लिहन् खड्गो मारयत्येव ॥**

अथ शत्रोः खड्गव्याजेन मधुरवचनस्य स्वरूपमाह– जिह्वयेति । खड्गः निस्त्रिंशः जिह्वया धार्यमाणः कोमलयाऽपि मारयत्येव, तथा शत्रुरपि मधुरवचनानि वदन् मारयत्येव । नीवाटी.

**तन्त्रावापौ नीतिशास्त्रम् ॥**

अथ नीतिशास्त्रस्य लक्षणमाह– तन्त्रेति । मण्डलपालनाभियोगः तन्त्रम् अवापश्च नीतिरुच्यते । नीवाटी.

---

* अस्मात्पूर्वो ग्रन्थः प्रभ्रष्टः ।

(1) नीवा. ३०।४३–५६.

**स्वमण्डलपालनाभियोगः तन्त्रम् ॥**

तत्र तन्त्रलक्षणमाह— स्वेति । यत् स्वमण्डलपरिपालनं क्रियते तत् तन्त्रम् । यतः स्नेहेन हस्त्यश्वादिकं तन्त्रं भवति । नीवाटी.

**परमण्डलावाप्त्यभियोगोऽवापः ॥**

तथा— परमण्डलेति । कथ्यते । आभ्यां संयोगेन नीतिशास्त्रं कथ्यते । तथा च शुक्रः— 'स्वमण्डलस्य रक्षाय यत्तन्त्रं परिकीर्तितम् । परदेशस्य संप्राप्त्या अवापो नयलक्षणम् ॥' । नीवाटी.

**बहूनेको न गृह्णीयात् । सदर्पोऽपि सर्पो व्यापाद्यत एव पिपीलिकाभिः ॥**

अथ विजिगीषोः स्वरूपमाह— बहूनिति । न गृह्णीयात् न योधयेत् । कोऽसौ ? एकः । कान् ? बहून् । केन दृष्टान्तेन ? यतः सदर्पोऽपि सर्पो व्यापाद्यते एव पिपीलिकाभिः । तथा च नारदः— 'एकाकिना न योद्धव्यं बहुभिः सह दुर्बलैः । वीर्याढ्येनापि हन्येत यथा सर्पः पिपीलिकैः ॥' । नीवाटी.

**अशोधितायां परभूमौ न प्रविशेन्निर्गच्छेद्वा ॥**

गतार्थमेतत् । नीवाटी.

**विग्रहकाले परस्मादागतं न किंचिदपि गृह्णीयात् । गृहीत्वा न संवासयेदन्यत्र तद्दायादेभ्यः । श्रूयते हि निजस्वामिना सह कूटकलहं विधायावातविश्वासः कृकलासो नामानीकपतिरात्मविपक्षं विरूपाक्षं जघानेति ॥**

अथ विग्रहकाले भूभुजा यत् कर्तव्यं तदाह— विग्रहेति । एतद् वृत्तान्तं द्वाभ्यामपि बृहत्कथायां ज्ञातव्यम् । नीवाटी.

**बलमपीडयन् परानभिषेणयेत् ॥**

अथ भूभुजा भूयोऽपि यत्कर्तव्यं तदाह— बलमिति । आत्मीयं बलमपीडयन् सुखाढ्यं कुर्वन् परान् शत्रून् अभिषेणयेत् सेनया (सह) तद्देशे विग्रहं कर्तुं यायात् । नीवाटी.

**दीर्घप्रयाणोपहतं बलं न कुर्यात् स तथाविधमनायासेन भवति परेषां साध्यम् ॥**

अथ भूभुजा शत्रूणामुपरि गच्छता यन्न कर्तव्यं तदाह— दीर्घेति । भूभुजा परराष्ट्रप्रविष्टेन दीर्घप्रयाणकं न दातव्यम् । यतो दीर्घप्रयाणोपहतं बलम् अनायासेन सुखेन साध्यं भवति । केषाम् ? परेषां शत्रूणाम् । नीवाटी.

**न दायादादपरः परबलस्याऽऽकर्षणमन्त्रोऽस्ति ॥**

अथ भूपतेराकृष्टिमन्त्र उत्कृष्टसभाया भवति तदाह— नेति । दायादात् गोत्रिणः सकाशात् अपरः द्वितीयः कश्चित् (परबलस्याऽऽकर्षणमन्त्रः ?) नास्ति न विद्यते । कोऽसौ ? मन्त्रः अभिचारलक्षणः । कस्मिन् विषये ? परबलस्याऽऽकर्षणे शत्रुसैन्यनिषूदने । तथा च शुक्रः— 'न दायादात् परो वैरी विद्यतेऽत्र कथंचन । अभिचारकमन्त्रश्च शत्रुसैन्यनिषूदने ॥' । नीवाटी.

**यस्याभिमुखं गच्छेत्तस्यावश्यं दायादानुत्थापयेत् ॥**

**कण्टकेन कण्टकमिव परेण परमुद्धरेत् ॥**

**बिल्वेन हि बिल्वं हन्यमानमुभयथाऽप्यात्मनो लाभाय ॥**

सर्वं गतार्थम् । नीवाटी.

**(१)दैवानुलोम्यं पुण्यपुरुषोपचयोऽप्रतिपक्षता च विजिगीषोरुदयः ॥**

अथ विजिगीषोर्लक्षणमाह— दैवेति । यद्येतानि लक्षणानि विजिगीषोर्भवन्ति तदाऽस्य सोऽभ्युदयः । प्रथमं तावत् दैवानुलोम्यम् । दैवं प्राक्तनं कर्म, तस्य आनुलोम्यं प्राञ्जलता । तथा पुण्यपुरुषोपचयः उत्तमपुरुषप्राप्तिः । तथा अप्रतिपक्षता अविवादो वादिनाम् । तथा च गुरुः— 'यदि स्यात्प्राञ्जलं कर्म प्राप्तिर्योग्यनृणां तथा । तथा चाप्रतिपक्षत्वं विजिगीषोरिमे गुणाः ॥' । नीवाटी.

**पराक्रमकर्कशः प्रवीरानीकश्चेद्धीनः संधाय साधूपचरितव्यः ॥**

---

(१) नीवा. ३०।६१–६७.

अथ येन सह संधिः कार्यस्तमाह– पराक्रमेति। यदा पराक्रमकर्कशः शौर्यनिष्ठुरः शत्रुर्भवति, तथा प्रवीरानीकश्च यदा भवति, (तदा) एवमुपचरितव्यः उपचारेण संयुक्तः कार्यः। तथा च शुक्रः– 'यदा स्याद् वीर्यवान् शत्रुः श्रेष्ठसैन्यसमन्वितः। आत्मानं बलहीनं च तदा तस्योपचर्यते ॥'। नीवाटी.

**दुःखामर्षजं तेजो विक्रमयति ॥**

अथ यादृशं तेजः पराक्रमाढ्यं भवति तदाह– दुःखेति। §......... तथा च– 'दुःखामर्षोद्भवं तेजो यत् पुंसां संप्रजायते। तच्छत्रुं समरे हत्वा ततश्चैव निवर्तते ॥'। नीवाटी.

**स्वजीविते हि रोगस्या(? विरागस्या)वार्यो भवति वीर्यवेगः ॥**

अथावार्यो वीर्यवेगो यथा भवति तथाऽऽह– स्वेति। यस्य पुरुषस्य जीविते रोगो (? विरागो) भवति प्रभूतकाले जीवितव्ये वाञ्छा (न) भवति तस्य अवार्यस्य (? र्यः) असंयतावार्य(?) वीर्यवेगो भवति, न चिरं जीवितुं वाञ्छमानस्य। तथा च नारदः– 'न तेषां जायते वीर्यं जीवितव्यस्य वाञ्छकाः। न मृत्योर्वै भयं चक्रुस्तेऽप्पला(? प्यल्पाः) स्युर्जयान्विताः ॥'। नीवाटी.

**लघुरपि सिंहशावो हन्त्येव दन्तिनम् ॥**

अथाल्पस्य बलवता सह युध्यमानस्य यथा जयो भवति पुरुषस्य तथाऽऽह– लघुरिति। सिंहशावः मृगराजशिशुः गुरुमपि दन्तिनं विनाशयत्येव। तथा च जैमिनिः– 'यद्यपि स्याल्लघुः सिंहस्तथाऽपि द्विपमाहवे। एवं राजाऽपि वीर्याढ्यो महारिं हन्ति चेल्लघुः ॥'। नीवाटी.

**नातिभग्नं पीडयेत् ॥**

अथ शत्रौ भग्ने विजिगीषुणा यत्कर्तव्यं तदाह– नेति। शत्रुर्भग्नो यदा भवति तदा तत्पृष्ठेन न व्रजेत्। यतः स वध्यमानः पराक्रमं करोति। तथा च विदुरः– 'भग्नः शत्रुर्न गन्तव्यः पृष्ठतो विजिगीषुणा। कदाचिच्छूरतां याति मरणे कृतनिश्चयः ॥'। नीवाटी.

**शौर्यैकधनस्योपचारो मनसि तच्छागस्येव पूजा ॥**

अथ बलवतः प्रियोपचारः कृतो यथा स्यात्तथाऽऽह– शौर्यैकेति। शौर्यशालिनः यः प्रियोपचारः अभीष्टपूजा सत्कारः स किंविशिष्ट इव? पूजेव सत्कार इव। कस्य? मनसि तच्छगलस्य उपयाचितकृतस्य मनसि तमुपयाचितमार्तस्याभीष्टदेवतायाः (?)। तथा च भागुरिः– उपयाचितदानेन च्छागेनापि प्रहृष्यति। चण्डिका बलवान् भूपः स्वल्पयाऽपि तथेज्यया ॥'। नीवाटी.

**[१]स धर्मविजयी राजा यो विधेयमात्रेणैव संतुष्टः प्राणार्थाभिमानेषु न व्यभिचरति ॥**

अथ धर्मविजयिनो राज्ञः स्वरूपमाह– स इति। यो राजा विधेयमात्रेण संतुष्टः सन् न व्यभिचरति न अन्यायकारी भवति। केषु? प्राणार्थाभिमानेषु प्राणेषु अर्थेषु अभिमानेषु लोकानाम्, स धर्मविजयी कीर्त्यते। तथा च शुक्रः– 'प्राणवित्ताभिमानेषु यो राजा (न) द्रुहेत् प्रजाः। स धर्मविजयी लोके यथालाभेन कोशभाक् ॥'। नीवाटी.

**स लोभविजयी राजा यो द्रव्येण कृतप्रीतिः प्राणाभिमानेषु न व्यभिचरति ॥**

अथ लोभविजयिनो राज्ञः स्वरूपमाह– स इति। यो राजा द्रव्येण कृतप्रीतिर्भवति, प्राणार्थं मानार्थं प्रजानां न व्यभिचरति, स लोभविजयी भण्यते। तथा च शुक्रः– 'प्राणेषु चाभिमानेषु यो जनेषु प्रवर्तते। स लोभविजयी प्रोक्तो यः स्वार्थेनैव तुष्यति ॥'। नीवाटी.

**सोऽसुरविजयी यः प्राणार्थमानोपघातेन महीमभिलषति ॥**

अथासुरविजयिनो राज्ञः स्वरूपमाह– स इति। स राजा असुरविजयी कीर्त्यते। यः किंविशिष्टः? अभिलषति। काम्? महीम्। केन? प्राणार्थमानोपघातेन।

§ अत्र ग्रन्थः प्रभ्रष्टः।

(१) नीवा. ३०।७०–७४.

केषाम्? लोकानाम्। तथा च शुक्रः— 'अर्थमानोपघातेन यो महीं वाञ्छते नृपः। देवारिविजयी प्रोक्तो भूलोकेऽत्र विचक्षणैः॥'। नीवाटी.

**असुरविजयिनः संश्रयः सूनागारे मृगप्रवेश इव॥**

अथासुरविजयिनः संश्रयो यादृक् भवति तदाह— असुरेति। *सूनः अन्त्यजः, तस्य अगारं गृहम्, तस्मिन् मृगप्रवेश इव। यथा अन्त्यजगृहे प्रविष्टस्य मृगस्य मरणं भवति तथा असुरविजयिनं संश्रयमाणस्येत्यर्थः। तथा च शुक्रः— 'असुरविजयिनं भूपं संश्रयेन्मतिवर्जितः। स नूनं मृत्युमाप्नोति सूनं प्राप्य मृगो यथा॥'। नीवाटी.

**यादृशस्तादृशो वा यायिनः स्थायी बलवान् यदि साधुचरः संचारः॥**

अथ श्रेष्ठवचनस्य भूपस्य यद् भवति तदाह— यादृश इति। यादृशस्तादृशो वा दुर्बलो हीनकोशो वा स्थायी यायिनः सकाशात् बलवान् भवति। यदि किं स्यात्? यदि साधुजनो भवति शोभनजनसंनिधिर्भवति तथा तादृशश्च सावधानश्च भवति। तथा च नारदः— 'राजा च दुर्बलो वाऽपि स्थायी स्याद् बलवत्तरः। सकाशाद् यायिनश्चेत् स्यात् सुसंनद्धः सुचारकः॥'।

नीवाटी.

**'मतिनदीयं नाम सर्वेषां प्राणिनामुभयतो वहति पापाय धर्माय च, तत्राऽऽद्यं स्रोतोऽतीव सुलभं दुर्लभं तद् द्वितीयमिति॥**

अथ सर्वेषां प्राणिनामुभयतो मतिनदीयं यथा भवति तथाऽऽह— मतीति। नाम अहो, सर्वेषां प्राणिनां मनुष्याणां मतिनदी बुद्धिलक्षणा उभयतः द्विप्रकारा वहति पापाय धर्माय च। तत्र आद्यं प्रथमं स्रोतः पापलक्षणम्, तत् अतीव अतिशयेन सुलभं सुखेन लभ्यते। पापं कुर्वाणस्य पुरुषस्य कष्टं न भवति, प्रत्युत तस्य (सुखमेव)। मतिनद्याः द्वितीयं प्रोक्तं स्रोतः धर्मलक्षणम्, तत् दुर्लभं कृच्छ्रेण (यदि?) लभ्यते इति। तथा च गुरुः— मतिर्नाम नदी ख्याता पापधर्मोद्भवा नृणाम्। द्विस्रोतः प्रथमं तस्याः पापो धर्मस्तथाऽपरम्॥'।

नीवाटी.

**सत्येनापि शप्तव्यम्। महतामभयप्रदानवचनमेव शपथः॥**

अथ महतां वचनस्य माहात्म्यमाह— सत्येनेति। किल सत्यः शपथः कार्यः विश्वासविषये शत्रूणाम्। महताम् उत्तमपुरुषाणाम् अभयवचनं यत् स एव शपथः। तथा च शुक्रः— 'उत्तमानां नृणामत्र यद्वाक्यमभयप्रदम्। स एव सत्यः शपथः किमन्यैः शपथैः कृतैः॥'।

नीवाटी.

**सतामसतां च वचनायत्ताः खलु सर्वे व्यवहाराः। स एव सर्वलोकमहनीयो यस्य वचनमन्यमनस्कतयाऽप्यायातं भवति शासनम्॥**

अथ साधूनामसाधूनां ये व्यवहारास्ते कथ्यन्ते— सतामिति। सत्पु(? स पु)रुषः निश्चयेन सर्वलोकमहनीयः अखिलजनपूजनीयः भवति, यस्य पुरुषस्य वचनं वाक्यम् अन्यमनस्कतया निजमाहात्म्येनापि आयातं व्याख्यातं विस्तीर्णं यथा शासनं तत्सदृशं भवति। तथा च शुक्रः— 'स एव पूज्यो लोकानां यद्वाक्यमपि शासनम्। विस्तीर्णं (च) प्रसिद्धं च लिखितं शासनं यथा॥'।

नीवाटी.

**नयोदिता वाग्वदति सत्या ह्येषा सरस्वती॥**

अथ वाचां माहात्म्यमाह— नयोदितेति। या वाणी नयोदिता भवति नित्यात्मिका भवति सा हि स्फुटम् एषा प्रत्यक्षा सरस्वती भारती। तथा च गौतमः— 'नीत्यात्मिकाऽत्र या वाणी प्रोच्यते साधुभिर्जनैः। प्रत्यक्षा भारती ह्येषा विकल्पो नास्ति कश्चन॥'। नीवाटी.

**व्यभिचारिवचनेषु नैहिकी पारलौकिकी वा॥**

अथ व्यभिचारिवचनेषु यद् भवति तदाह— व्यभिचारीति। इह जन्मभवा परलोकोत्पन्ना वा। केषु? व्यभिचारिवचनेषु— व्यभिचरति अन्यथा भवति वचनं

* शब्दोऽयम् 'सूनाऽस्यास्ति' इति पचाद्यचा व्युत्पादनीयः। 'सूनायाः अगारः' इति तु व्याख्यातुमुचितम्।

(१) नीवा. ३०।७८–९२.

येषां ते व्यभिचारिवचनाः, तेषु । वा अत्र समुच्चये । तथा च गौतमः— 'न तेषामिह लोकोऽस्ति न परोऽस्ति दुरात्मनाम् । यैरेव वचनं प्रोक्तमन्यथा जायते पुनः ॥'। नीवाटी.

**न विश्वासघातात् परं पातकमस्ति ॥**

अथ विश्वासघातकस्य यद् भवति तदाह— नेति । नास्ति न विद्यते । किं तत् ? पातकम् । किंविशिष्टम् ? परम् उत्कृष्टमन्यत् । कस्मात् ? विश्वासघातात् । तथा चाङ्गिराः— 'विश्वासघातकादन्यः परः पातकसंयुतः । न विद्यते धरापृष्ठे तस्मात्तं दूरतस्त्यजेत् ॥'। नीवाटी.

**विश्वासघातकः सर्वेषामविश्वासं करोति ॥**

अथ भूयोऽपि विश्वासघातकस्य यद् भवति तदाह— विश्वासेति । यः पुरुषः विश्वासघातको भवति स सर्वेषां लोकानां सर्वेषु पदार्थेषु अविश्वासं करोति । न तस्य कश्चित् विश्वासं याति । तथा च रैभ्यः— 'विश्वासघातको यः स्यात्तस्य माता पिताऽपि च । विश्वासं न करोत्येव जनेष्वन्येषु का कथा ॥'। नीवाटी.

**असत्यसंधिषु *कोशपानं जातान् हन्ति ॥**

असत्यकोशघाते यद् भवति तदाह— असत्येति । हन्ति विनाशयति । किं तत् ? कोशपानं प्रसिद्धम् । कान् ? जातान् पुत्रपौत्रादीन् । केषु ? असत्यसंधिषु मृषाप्रतिज्ञेषु । ये परान् वञ्चयित्वा दुष्टदेवपानीयं पिबन्तीत्यर्थः । 'यदसत्यं जने कोशपानं तदिह निश्चितम् । करोति पुत्रपौत्राणां घातं गोत्रसमुद्भवम् ॥'। नीवाटी.

**बलं बुद्धिर्भूमिर्ग्रहानुलोम्यं परोद्योगश्च प्रत्येकं बहुविकल्पं दण्डमण्डलभोगासंहतव्यूहरचनाया हेतवः ॥**

अथ व्यूहरचनायाः कारणान्याह— बलमिति । गतार्थमेतत् । नीवाटी.

* कोशपानपदार्थस्तु व्यवहारकाण्डे दिव्यप्रकरणे द्रष्टव्यः ।

**साधुरचितोऽपि व्यूहस्तावत्तिष्ठति यावन्न परबलदर्शनम् ॥**

अथ व्यूहस्य स्थैर्यकालं प्राह— साधुरचित इति । व्यूहः पूरादिकस्तावत्तिष्ठति यावत् (न) परबलदर्शनम् । किंविशिष्टोऽपि ? साधुरचितोऽपि बुद्धिमता रचितोऽपि । परबलदर्शने जाते ये वीर्योत्कटा भवन्ति (ते) व्यूहं त्यक्त्वा परसैन्ये प्रवेशं कुर्वन्ति । ततः स्यात् संकुलयुद्धम् । तथा च शुक्रः— 'व्यूहस्य रचना तावत्तिष्ठति शास्त्रनिर्मिता । यावदन्यद् बलं नैव दृष्टिगोचरमागतम् ॥'। नीवाटी.

**न हि शास्त्रशिक्षाक्रमेण योद्धव्यं किंतु परप्रहाराभिप्रायेण ॥**

अथ योधैर्यथा योद्धव्यं तदाह— पूर्वं शास्त्रशिक्षा कृता एकाकिना सह । किंतु परप्रहाराभिप्रायेण योद्धव्यम् । यथा शत्रवः प्रहारान् प्रयच्छन्ति, तथा तेषु कालं च विज्ञाय प्रकाशयुद्धं प्रकटयुद्धं कर्तव्यम् । हि स्फुटार्थम् । तथा च शुक्रः— 'शिक्षाक्रमेण नो युद्धं कर्तव्यं रणसंकुले । प्रहारान् प्रेक्ष्य शत्रूणां तदर्हं युद्धमाचरेत् ॥'।

नीवाटी.

**व्यसनेषु प्रमादेषु वा परपुरे सैन्यप्रेषणमवस्कन्दः ॥**

अथ शत्रौ विजिगीषुणा यथा गन्तव्यं तदाह— व्यसनेष्विति । परव्यसनेषु संजातेषु प्रमादेषु वा तस्य पुरे स्यात्(? स्व-) सैन्यप्रेषणम् (अवस्कन्दः) । अवस्कन्दशब्देन धाटीप्रदानमुच्यते । तथा यायात् शत्रुसैन्ये । तथा च शुक्रः— 'व्यसने वा प्रमादे वा संसक्तः स्यात् परो यदि । तदाऽवस्कन्ददानं च कर्तव्यं भूतिमिच्छता ॥'। नीवाटी.

**अन्याभिमुखं प्रयाणकमुपक्रम्यान्योपघातकरणं कूटयुद्धम् ॥**

अथ कूटयुद्धलक्षणमाह— अन्येति । अन्याभिमुखम् अन्यस्य शत्रोः उपरि प्रयाणकम् उपक्रम्य कृत्वा अन्योपघातकरणम्, व्याघुट्योपघातः क्रियते शत्रोः तत् कूटयुद्धमुच्यते । तथा च शुक्रः— 'अन्याभिमुखमार्गेण गत्वा

किंचित्प्रयाणकम्। व्याघुस्य घातः क्रियते सदैव कुटिलाहवः ॥'। नीवाटी.

**विषविषमपुरुषोपनिषदवाग्योगोपजापैः परोपघातानुष्ठानं तूष्णींदण्डः ॥**

अथ तूष्णींयुद्धस्य लक्षणमाह– विषेति। यच्छत्रोर्विषप्रदानं क्रियते, तथा विषमपुरुषोपनिषदवाग्योगसंबन्धः, तथा उपजापः अभिचारकप्रयोगः, एतैर्य उपघातः क्रियते स तूष्णींदण्डः मौनसङ्ग्रामः। तथा च गुरुः– 'विषदानेन योऽन्यस्य हस्तेन क्रियते वधः। अभिचारककृत्येन रिपोर्मौनाहवो हि सः ॥'। नीवाटी.

**एकं बलस्याधिकृतं न कुर्यात्। भेदापराधेनैकः समर्थो जनयति महान्तमनर्थम् ॥**

अथैकेन बलाधिपेन कृतेन यद् भवति तदाह– एकमिति। न कुर्यात् न विदधीत। कम्? बलाध्यक्षम् एकम्। बहूनामेको यतः समर्थः स्वतन्त्रः सन् राज्ञोऽप्यधिकः सन् जनयति। कम्? अनर्थं व्यसनम्। किंविशिष्टम्? महान्तम् अशुभतरमिति। तथा च भागुरिः– 'एकं कुर्यान्न सैन्येशं सुसमर्थं विशेषतः। धनाकृष्टः परैर्भेदं कदाचित् स परैः क्रियात् ॥'।

नीवाटी.

**'विग्रहायोच्चलितस्यार्धं बलं सर्वदा संनद्धमासीत। सेनापतिः प्रयाणमावासं च कुर्वीत। चतुर्दिशमनीकान्यदूरेण संचरेयुस्तिष्ठेयुश्च ॥**

अथ विग्रहार्थं चलितेन भूभुजा यत् कर्तव्यं तदाह– विग्रहायेति। विग्रहाय युद्धाय उच्चलितस्य राज्ञः सेनाध्यक्षेण अर्धं बलम् अर्धं सैन्यं संनद्धं कार्यं प्रयाणं यदा भवति। तथा च सैन्यावासं समुद्यतस्य चतुर्दिशम् अनीकानि सैन्यानि अदूरे समीपे संचरेयुः परिभ्रमणं कुर्युः, तथा तिष्ठेयुः तिष्ठन्ति स्म। यतः प्रयाणसमये समर्थोऽपि राजवर्गो व्याकुलो भवति, शूराः परालम्बं मत्वा प्रहरन्ति। तथा च शुक्रः– 'परभूमिप्रतिष्ठानां नृपतीनां शुभं भवेत्। आवासे च प्रयाणे च यतः शत्रुः परीक्ष्यते ॥'। नीवाटी.

(१) नीवा. ३०।९६–१०१.

**धूमाग्निरजोविषाणध्वनिव्याजेनाऽऽटविकाः प्रणिधयः परबलान्यागच्छन्ति निवेदयेयुः ॥**

अथ प्रणिधीनां स्वरूपमाह– धूमेति। निवेदयेयुः परबलान्यागच्छन्ति शत्रुसैन्यान्यायान्ति। केन कृत्वा? धूमाग्निरजोविषाणध्वनिव्याजेन। आगच्छति परसैन्ये दूरस्थिते स्वामिनि धूमं कुर्युः, अग्निं वा ज्वालयन्ति, रजो वा दर्शयन्ति, विषाणं माहिषं शृङ्गं वा वादयन्ति। तथा च गुरुः– 'प्रभौ दूरस्थिते वैरी यदाऽऽगच्छति संनिधौ। धूमादिभिर्निवेद्यः स चरैश्चारण्यसंभवैः ॥'। नीवाटी.

**पुरुषप्रमाणोत्सेधमबहुजनविनिवेशनाचरणापसरणयुक्तमग्रतोमहामण्डपावकाशं च तदङ्गमध्यास्य सर्वदाऽऽस्थानं दद्यात् ॥**

अथ भूमिगतेन भूभुजा यथा स्थानं देयं तस्य स्वरूपमाह– पुरुषेति। दद्यात्। किं तत्? आस्थानं सभागृहम्। किंविशिष्टम्? पुरुषोत्सेधं पुरुषप्रमाणोत्सेधम्। पुनरपि किंविशिष्टम्? अबहुजनं(?नः) स्तोकजनम्(?नः), (तस्य) निवेशनं प्रवेशनम् आचरणं परिभ्रमणम् अपसरणं निर्गमयुक्तं (?मः, तैर्युक्तं) भवति। तत्र स्थानगृहे स्तोकाः प्रविशन्ति परिभ्रमन्ति गच्छन्तीति। पुनरपि कथंभूतम्? यदग्रतोमण्डपावकाशं मण्डपप्रदेशं च। तदङ्गमध्यास्य स्थानं दद्यात्। नीवाटी.

**सर्वसाधारणभूमिकं तिष्ठतो नास्ति शरीररक्षा ॥**

अथ सर्वसाधारणस्थानेन दत्तेन यद् भवति तदाह– सर्वेति। सर्वजनसाधारणं सर्वजनगम्यम् आस्थानं वितन्वतः ददतः शरीररक्षा नास्ति न भवति, घातकानां पातात्। तथा च शुक्रः– 'परदेशं गतो यः स्यात् सर्वसाधारणं नृपः। आस्थानं कुरुते मूढो घातकैः स निहन्यते ॥'।

नीवाटी.

**भूचरो दोलाचरस्तुरंगचरो वा न कदाचित् परभूमौ प्रविशेत् ॥**

अथ परभूमिप्रविष्टेन भूभुजा परिभ्रमणं यथा कार्यं तदाह– भूचर इति। न प्रविशेत् न गच्छेत्। कोऽसौ?

राजा । कस्याम् ? परभूमौ । किंविशिष्टः सन् ? भूचरः सन् पदातिः सन् । तथा दोलाचरः शिविकारूढः । तथा तुरंगचरः अश्वारूढः । यतो घातपार्श्वाद् भव्यं(?) भवति । तथा च गुरुः– 'परभूमिं प्रविष्टो यः पारदारी (? पादचारी) परिभ्रमेत् । हये स्थितो वा दोलायां घातकैर्हन्यते हि सः ॥'। नीवाटी.

**करिणं जम्पाणं वाऽप्यध्यासने न प्रभवन्ति क्षुद्रोपद्रवाः ॥**

अथ परभूमिं परिभ्रमतो राज्ञो यथा क्षुद्रोपद्रवा न भवन्ति तथाऽऽह– करिणमिति । (न प्रभवन्ति । के ? क्षुद्रोपद्रवाः ।) कस्य ? राज्ञः । क ? अध्यासी(? स)ने आरोहणे । कम् ? करिणं हस्तिनम्, जम्पाणं वाहनविशेषम् । तथा च भागुरिः– 'परभूमौ महीपालः करिणं यः समाश्रितः । व्रजन् जम्प(? म्पा)णमध्यास्य तस्य कुर्वन्ति किं परे ॥'। नीवाटी.

## युक्तिकल्पतरुः

### युद्धप्रकारा युद्धविशेषदेशाश्च

**'स्वयं राज्ञा न योद्धव्यं येऽपि शस्त्रास्त्रकोविदाः ।**
**मृता युद्धेषु दृश्यन्ते शक्तेभ्यः शक्तिमत्तराः ॥**
**रथयुद्धं समे देशे विषमे हस्तिसंगरः ।**
**अश्वयुद्धं मरौ देशे पत्तियुद्धं च दुर्गमे ॥**
**अत्यये सर्वयुद्धं स्यान्नौकायुद्धं जलप्लुते ।**
**संहत्य योधयेदन्यान् कामं विस्तारयेद् बहून् ॥**
**सूचीमुखमनीकं स्यादल्पं हि बहुभिः सह ।**
**अपि पञ्चाशतः शूरा निघ्नन्ति परवाहिनीम् ॥**
**येऽपि वा पञ्च षट् सप्त संहताः कृतनिश्चयाः ॥**

## मानसोल्लासः

### ज्योतिर्विद्योक्तः नक्षत्रयुक्तकोटचक्रविधिः

### जयपराजयज्ञापकः

**'चतुरस्रं लिखेत् तज्ज्ञः कोटचक्रं विराजितम् ।**
**तत्र न्यासं प्रकुर्वीत नक्षत्राणां यथाक्रमम् ॥**
**सर्वेष्वीशानकोणेषु कृत्तिकादिचतुष्टयम् ।**
**अन्तर्विशँल्लिखेत् तत्र कोटचक्रे विचक्षणः ॥**
**विनिर्गच्छंस्तथा लेख्यं पुनर्वस्वादिकत्रयम् ।**
**पूर्वस्यां दिशि चाऽऽग्नेयकोणादन्तर्विशंस्तथा ॥**
**चतुष्टयं मघादीनां पुनर्निर्गमतो लिखेत् ।**
**चित्रादित्रितयं याम्ये नैर्ऋतेऽन्तर्विशँल्लिखेत् ॥**
**मैत्रादिकचतुष्कं तु निर्गच्छन् पश्चिमे लिखेत् ।**
**उत्तरादित्रयं तद्वत् कोणाद्वायोर्दिशं लिखेत् ॥**
**धनिष्ठादिचतुष्कं तु पुनरुत्तरनिर्गतम् ।**
**रेवत्यादित्रयं लेख्यं नक्षत्राणामयं विधिः ॥**
**अन्तःस्थचतुरस्रा ये रेखाया मध्यतः स्थिताः ।**
**स्तम्भताराः समाख्याता ज्योतिर्विद्याविशारदैः ॥**
**तस्य बाह्यस्थितास्तारा अष्टौ प्राकारसंगताः ।**
**ततो बाह्यस्थिताश्चान्यास्तारा बाह्याः प्रकीर्तिताः ॥**
**स्तम्भप्राकारवर्तीनि नक्षत्राण्यपराणि हि ।**
**इतराणि विजानीयाद्वाह्यानीति विचक्षणः ॥**
**अन्तःस्थिते ग्रहे पापे कोटनाशं प्रपद्यते ।**
**शुभग्रहे च बाह्यस्थे बहिःस्थानां जयो भवेत् ॥**
**यस्यां दिशि भवेच्चन्द्रस्तस्यां खण्डी विनिष्पतेत् ।**
**खण्डीस्थानं परिज्ञाय तत्र कुर्वीत संगरम् ॥**

### विविधदुर्गयुद्धविधिः

**परिखासंस्थितं तोयं खनित्वा परिवाहयेत् ।**
**सेतुं वा कारयेत्तत्र पूरयेद्वा मृदादिभिः ॥**
**यद्यगाधं महत्तोयं तरेद्वा तन्नरादिभिः (?) ।**
**एवमुत्तार्य सैन्यानि दुर्गं वारिमयं जयेत् ॥**
**दुरारोहं तु गिरिजं दुर्गमावेष्ट्य सेनया ।**
**अप्रवेशात्तु धान्यानां दुर्गस्थानामनिर्गमात् ॥**
**अन्नक्षयान्निरोधाच्च निर्बन्धाद्भेदतोऽपि च ।**
**एवंविधैरुपायैश्च गिरिदुर्गं जयेन्नृपः ॥**
**पाषाणैरिष्टकाभिर्वा मृदा वा निर्मितं च यत् ।**
**तद्दुर्गं यन्त्रपाषाणैः खननैश्च निपातयेत् ॥**

(१) युक. ९१५८–६२.
(२) मासो. २।१०४८–१०७४.

मण्डपैश्चर्मभिर्नद्धैश्चलद्भिश्चक्रयन्त्रकैः ।
नदद्भिः संस्थितैर्योधैः प्रसरद्भिः समन्ततः ॥
अग्नितैलमुखैर्बाणैर्वायुसंप्रेरितैरपि ।
आरोहद्भिर्भटानीकैः शूरैर्निःश्रेणिकान्वितैः ॥
दन्तिदन्तदृढाघातैर्योधोन्मुक्तशरोत्करैः ।
प्रतिदुर्गविधानेन दुर्गत्रितयमाहरेत् ॥
कुठारैः शतसाहस्रैश्छेदयेद्विटपांस्तरून् ।
दहन् दावाग्निना वाऽपि वनदुर्गं जयेन्नृपः ॥
पूर्णानि जलभाण्डानि तोयैर्दूरसमाहृतैः ।
महिषोष्ट्रबलीवर्दैर्बहुधैर्वाऽधिकैरपि ॥
आनीय च निजानीकैः संतर्प्य च चतुर्दिशम् ।
आवेष्ट्य च खनेत्कूपानगाधांश्च समन्ततः ॥
आरभेत ततो युद्धं यन्त्रपाषाणपावकैः ।
अनलश्चा( ? लं चा )नुकूलेन वायुना समुदापयेत् ॥
अग्नितैलमयं वह्निं सर्वतो धुक्षयेदतः ।
जलाभावेन संतप्ता नाशमेष्यन्ति दुर्गगाः ॥
तोयपानेन संतृप्तं कुर्यादात्मबलं नृपः ।
एवंप्रकारैरन्यैश्च मरुदुर्गं प्रसाधयेत् ॥
साधयेद्दारुजं दुर्गं चूर्णनाद्गजघट्टनैः ।
पाषाणपातिभिर्यन्त्रैर्दाहनाद् दहनेन वा ॥
नरदुर्गं जयेद्राजा गजाश्वबलसंयुतः ।
एवं दण्डः समाख्यातो दुर्गभङ्गसमाह्वयः ॥

राज्ञः युद्धपूर्वदिनकृत्यं युद्धनिर्गमदिनकृत्यं च

[1]युद्धपूर्वदिने राजा कृतोत्साहः सभागतः ।
कुमारमण्डलाधीशान् सामन्तान्मान्यकानपि ॥
सुवर्णवस्त्राभरणैस्तोषयेत्सैन्यकांस्तथा ।
वाग्भिः प्रोत्साहयेत्तांश्च गुणकीर्तनमाननैः ॥
तेषां प्रतिज्ञां संश्रित्य सुभटानां नृपोत्तमः ।
मातङ्गान्मदसंयुक्तान् वाजिनश्च जवोत्तमान् ॥
दद्याद्यथार्हं सर्वेषां सङ्ग्रामजयकाङ्क्षया ।
ततो विसर्जयेत्सर्वान् युद्धाय कृतनिश्चयः ॥
तस्यां रात्र्यामलातैश्च पूरयेद्गगनाङ्गणम् ।
महातूर्यप्रघोषैश्च काहलाशङ्खनिस्वनैः ॥
सिंहनादैर्भटानां तु त्रासयेद्रिपुसैनिकान् ।
अधिवास्य ततो राजा शस्त्राणि कुलदेवताः ॥
ततः शयीत मेदिन्यां कुशानास्तीर्य यत्नतः ।
ततः प्रातः समुत्थाय निरीक्ष्य घृतदर्पणौ ॥
स्नात्वा तीर्थजलैः पुण्यैश्चित्राम्बरविभूषितः ।
समाराध्य जगन्नाथमिष्टमिष्टफलप्रदम् ॥
ततः कृत्वा महापूजां विविधां कुलदैवते ।
धेनुं भूमिं हिरण्यं च विप्रेभ्यो विधिनाऽर्पयेत् ॥
तदाशिषः समादाय नीराजितहयद्विपः ।
दक्षिणाग्रखुरोल्लेखाद्धयानां हेषितादपि ॥
वामेतरविषाणाग्रवेष्टनात् स्वकरेण च ।
बृंहितेन गजानां च जानीयाज्जयमञ्जसा ॥
नराणां शुभवाक्यैश्च मङ्गलद्रव्यदर्शनैः ।
प्रदक्षिणागमैश्चापि भरद्वाजशिखण्डिनाम् ॥
अन्यैश्च शकुनैर्भव्यैर्जयमङ्गलसूचकैः ।
दक्षिणाक्ष्णः परिस्पन्दाद्दक्षिणस्य भुजस्य च ॥
मनसश्च प्रसादेन स्वानुकूलानिलेन च ।
एवं निमित्तैर्निश्चित्य जयं समरदुर्जयः ॥
शुभस्थानस्थितैः सर्वैर्ग्रहैस्ताराभिरेव च ।
उदितेन स्वरेणाथ जयभूमिबलेन च ॥
निमित्तैर्विहितोत्साहो निर्गत्य निजमन्दिरात् ।
ताडयित्वा महाभेरीं प्रतिसैनिकभीषणीम् ॥
धनुषां द्वे शते गत्वा तत्र स्थित्वा नृपोत्तमः ।
मेलयित्वा बलं सर्वमेवमाघोषयेत्ततः ॥

युद्धे कृतकार्याणां योधानां कृते पारितोषिकघोषणम्

तस्मै दास्यामि नियुतं राजानं हन्ति यो रणे ।
तत्कुमारनिहन्तॄणां दास्यामि प्रयुतत्रयम् ॥
सामन्तमण्डलाधीशहन्तॄणां प्रयुतं तथा ।
सचिवामात्यहन्तॄणामयुतं पारितोषिकम् ॥

(१) मासो. २।११४६–११६७.

प्रधानयोधहन्तॄणां दास्ये पञ्चसहस्रकम्।
द्विसहस्रं प्रसादेन प्रदास्ये गजघातिनाम्॥
सहस्रं प्रतिदास्यामि स्यन्दनस्य विघातिनाम्।
अश्वसादिनिहन्तॄणां प्रदास्ये शतपञ्चकम्॥
शतं तस्मै प्रदास्यामि समानयति यः शिरः।
एवं प्रलोभ्य तान् सर्वान् प्रयायाद्युद्धसंमुखम्॥

युद्धस्वरूपम्

[1]शूराणां सिंहनादैश्च खुरारावैश्च वाजिनाम्।
महामात्रकरास्फालमातङ्गगलगर्जितैः॥
भेरीप्रहारघोषैश्च काहलाशङ्खनिस्वनैः।
युद्धाशंसिमहातूर्यनिनादैः स्फोटयन् दिशः॥
यतः फल्गु यतो भिन्नं यतो दूष्यैरधिष्ठितम्।
तद्बलं प्रथमं हन्यादात्मनश्चोपबृंहयन्॥
सारं द्विगुणसारेण फल्गु सारेण पीडयेत्।
संहतं तु गजानीकैः प्रचण्डैरवदारयेत्॥
प्रचण्डैर्वीरमुख्यैश्च फल्गुसैन्यं विदारयेत्।
अश्वव्यूहैर्भटानीकं वाजिव्यूहं तु दन्तिभिः॥
बाणसारैस्तथा कुन्तैः पाशपट्टिशतोमरैः।
अग्नितैलार्चितैर्बाणैर्निर्भिन्द्याद् द्विपयूथपान्॥
प्रभूतकुञ्जरानीकघटासंघट्टघट्टनैः।
पाटनैः करटिव्रातं द्विषतां रणमूर्धनि॥

विमृश्य राजचिह्नानि निश्चित्य नृपतेः पदम्।
सर्वसैन्येन संयुक्तस्तत्र यायाज्जयोत्सुकः॥
नाराचैर्जर्जरीकृत्य कुन्तैर्निर्भिद्य निर्भरम्।
चक्राघातैर्द्विधाकृत्य पाशैराकृष्य पातयेत्॥
संचूर्ण्य मुद्गराघातैश्छित्वा परशुना भटान्।
स्वारूढकुञ्जरेणाथ संयोज्य परवारणम्॥
तद्गजं स्वगजोद्दामदन्ताघातैर्निपात्य च।
निस्त्रिंशेन रिपोश्छिन्द्यात्कुण्डलालंकृतं शिरः॥

जयोत्तरकृत्यम्

एवं निहत्य सङ्ग्रामे दुष्टशत्रुं मदोद्धतम्।
जयतूर्यनिनादेन हर्षयन् सुभटान् स्वकान्॥
कुमारामात्यसचिवान् सामन्तान् मण्डलेश्वरान्।
विनिहत्याऽऽगतानां च दानं दद्याद्यथोदितम्॥
द्विषतां रक्तपूरेण तर्पयित्वा तु मेदिनीम्।
पिशितेन पिशाचांश्च क्रव्यादानन्त्रमालया॥
पलायनपरान् भीतान् रक्षयित्वा तु धर्मतः।
आरोहमुक्तान् स्वीकृत्य त्वरया वरवारणान्॥
धेनुकाश्वोष्ट्रसंघांश्च निःशेषं कोशमेव च।
परिगृह्य तथा सर्वं प्रयत्नाद्वीक्ष्य सर्वतः॥
एवं तु वध्यते यत्र युद्धे शत्रुर्महाबलः।
नृपेण बलिना स स्याद्दण्डो युद्धवधाभिधः॥

---

(१) मासो. २।१२०८–१२२४.

## महाभारतम्

कौरवपाण्डवानां व्यूहप्रतिव्यूहप्रकल्पाः, भीष्मादिरचितः सर्वतोमुखः व्यूहः

[1]एवमुक्ता महीपाला भीष्मेण भरतर्षभ।
निर्ययुः स्वान्यनीकानि शोभयन्तो रथोत्तमैः॥
स तु वैकर्तनः कर्णः सामात्यः सह बन्धुभिः।
न्यासितः समरे शस्त्रं भीष्मेण भरतर्षभ॥
अपेतकर्णाः पुत्रास्ते राजानश्चैव तावकाः।
निर्ययुः सिंहनादेन नादयन्तो दिशो दश॥
[2]श्वेतैश्छत्रैः पताकाभिर्ध्वजवारणवाजिभिः।
तान्यनीकान्यशोभन्त रथैरथ पदातिभिः॥
[3]भेरीपणवशब्दैश्च पटहानां च निस्वनैः।
रथनेमिनिनादैश्च बभूवाऽऽकुलिता मही॥
[4]काञ्चनाङ्गदकेयूरैः कार्मुकैश्च महारथाः।
भ्राजमाना व्यदृश्यन्त जङ्गमाः पर्वता इव॥
[5]तालेन महता भीष्मः पञ्चतारेण केतुना।
विमलादित्यसंकाशस्तस्थौ कुरुचमूपतिः॥

तालेन ध्वजभूतेन। नीटी.

[6]ये त्वदीया महेष्वासा राजानो भरतर्षभ।
अवर्तन्त यथादेशं राजञ्शान्तनवस्य ते॥

(१) भा. ६।१७।१२–१४; भामु. ६।१७।१२–१४.

(२) भा. ६।१७।१५; भामु. ६।१७।१५ न्यशोभन्त रथै (नि शोभन्ते गजै).

(३) भा. ६।१७।१६; भामु. ६।१७।१६ पटहा (दुन्दुभी).

(४) भा. ६।१७।१७; भामु. ६।१७।१७ व्यदृश्यन्त जङ्गमाः (व्यराजन्त साग्नयः).

(५) भा. ६।१७।१८; भामु. ६।१७।१८ पतिः (परि).

(६) भा. ६।१७।१९–२०; भामु. ६।१७।१९–२०.

स तु गोवासनः शैब्यः सहितः सर्वराजभिः।
ययौ मातङ्गराजेन राजार्हेण पताकिना।
पद्मवर्णस्त्वनीकानां सर्वेषामग्रतः स्थितः॥

गोवासनः तद्देश्यः। नीटी.

[1]अश्वत्थामा ययौ यत्तः सिंहलाङ्गूलकेतनः।
श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः॥
[2]शल्यो भूरिश्रवाश्चैव विकर्णश्च महारथः।
एते सप्त महेष्वासा द्रोणपुत्रपुरोगमाः।
स्यन्दनैर्वरवर्णाभैर्भीष्मस्याऽऽसन् पुरःसराः॥
[3]तेषामपि महोत्सेधाः शोभयन्तो रथोत्तमान्।
भ्राजमाना व्यदृश्यन्त जाम्बूनदमया ध्वजाः॥
[4]जाम्बूनदमयी वेदिः कमण्डलुविभूषिता।
केतुराचार्यमुख्यस्य द्रोणस्य धनुषा सह॥
[5]अनेकशतसाहस्रमनीकमनुकर्षतः।
महान् दुर्योधनस्याऽऽसीन्नागो मणिमयो ध्वजः॥
[6]तस्य पौरवकालिङ्गौ काम्बोजश्च सुदक्षिणः।
क्षेमधन्वा सुमित्रश्च तस्थुः प्रमुखतो रथाः॥

(१) भा. ६।१७।२१; भामु. ६।१७।२१ केतनः (केतुना) तृतीयचरणे (श्रुतायुधश्चित्रसेनः).

(२) भा. ६।१७।२२; भामु. ६।१७।२२–२३ वर्णाभैर्भी (वर्माणो भी) पुरःसराः (पुरोगमाः).

(३) भा. ६।१७।२३; भामु. ६।१७।२३–२४ दृश्य (रोच).

(४) भा. ६।१७।२४; भामु. ६।१७।२४–२५ वेदिः (वेदी).

(५) भा. ६।१७।२५; भामु. ६।१७।२५–२६.

(६) भा. ६।१७।२६; भामु. ६।१७।२६–२७ पूर्वार्धे (तस्य पौरवकालिङ्गकाम्बोजाः ससुदक्षिणाः।) सुमित्रश्च (च शल्यश्च).

[1]स्यन्दनेन महार्हेण केतुना वृषभेण च ।
प्रकर्षन्निव सेनाग्रं मागधश्च नृपो ययौ ॥

[2]तदङ्गपतिना गुप्तं कृपेण च महात्मना ।
शारदाभ्रचयप्रख्यं प्राच्यानामभवद् बलम् ॥

अङ्गपतिना कर्णपुत्रेण वृषकेतुना । नीटी.

[3]अनीकप्रमुखे तिष्ठन् वराहेण महायशाः ।
शुशुभे केतुमुख्येन राजतेन जयद्रथः ॥

वराहेण केतुमुख्येनेति संबन्धः । नीटी.

शतं रथसहस्राणां तस्याऽऽसन् वशवर्तिनः ।
अष्टौ नागसहस्राणि सादिनामयुतानि षट् ॥

[4]तत्सिन्धुपतिना राजन् पालितं ध्वजिनीमुखम् ।
अनन्तरथनागाश्वमशोभत महद्बलम् ॥

[5]षष्ट्या रथसहस्रैस्तु नागानामयुतेन च ।
पतिः सर्वकलिङ्गानां ययौ केतुमता सह ॥

[6]तस्य पर्वतसंकाशा व्यरोचन्त महागजाः ।
यन्त्रतोमरतूणीरैः पताकाभिश्च शोभिताः ॥

[7]शुशुभे केतुमुख्येन पादपेन कलिङ्गपः ।
श्वेतच्छत्रेण निष्केण चामरव्यजनेन च ॥

निष्केण कण्ठाभरणेन । नीटी.

(१) भा. ६।१७।२७ ; भामु. ६।१७।२७ न्निव (न्नेव) धश्च नृपो (धस्य कृपो).

(२) भा. ६।१७।२८ ; भामु. ६।१७।२८ महात्म (मनस्वि) भ्रचय (म्बुधर) नामभव (नां सुमह).

(३) भा. ६।१७।२९–३० ; भामु. ६।१७।२९–३०.

(४) भा. ६।१७।३१ ; भामु. ६।१७।३१ राजन् (राज्ञा).

(५) भा. ६।१७।३२ ; भामु. ६।१७।३२.

(६) भा. ६।१७।३३ ; भामु. ६।१७।३३ भिश्च (भिः सु).

(७) भा. ६।१७।३४ ; भामु. ६।१७।३४ दपे (वके) ङ्गपः (ङ्गकः).

[1]केतुमानपि मातङ्गं विचित्रपरमाङ्कुशम् ।
आस्थितः समरे राजन् मेघस्थ इव भानुमान् ॥
तेजसा दीप्यमानस्तु वारणोत्तममास्थितः ।
भगदत्तो ययौ राजा यथा वज्रधरस्तथा ॥

गजस्कन्धगतावास्तां भगदत्तेन संमितौ ।
विन्दानुविन्दावावन्त्यौ केतुमन्तमनुव्रतौ ॥

[2]स रथानीकवान् व्यूहो हस्त्यङ्गोत्तमशीर्षवान् ।
वाजिपक्षः पतन्नुग्रः प्राहरत् सर्वतोमुखः ॥

[3]द्रोणेन विहितो राजन् राज्ञा शान्तनवेन च ।
तथैवाऽऽचार्यपुत्रेण बाह्लीकेन कृपेण च ॥

सर्वतोमुखः धर्मराजरचितः इन्द्रस्य वज्राख्यो व्यूहः

धृतराष्ट्र उवाच–

[4]अक्षौहिण्यो दशैकां च व्यूढां दृष्ट्वा युधिष्ठिरः ।
कथमल्पेन सैन्येन प्रत्यव्यूहत पाण्डवः ॥

[5]यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
कथं भीष्मं स कौन्तेयः प्रत्यव्यूहत पाण्डवः ॥

संजय उवाच–

[6]धार्तराष्ट्राण्यनीकानि दृष्ट्वा व्यूढानि पाण्डवः ।
अभ्यभाषत धर्मात्मा धर्मराजो धनंजयम् ॥
महर्षेर्वचनात्तात वेदयन्ति बृहस्पतेः ।
संहतान् योधयेदल्पान् कामं विस्तारयेद् बहून् ॥

(१) भा. ६।१७।३५–३७ ; भामु. ६।१७।३५–३७.

(२) भा. ६।१७।३८ ; भामु. ६।१७।३८ ङ्गोत्तम (ङ्गो नृप) पतन्नुग्रः प्राहरत् (पतत्युग्रः प्रहसन्).

(३) भा. ६।१७।३९ ; भामु. ६।१७।३९.

(४) भा. ६।१९।१ ; भामु. ६।१९।१ कां च व्यूढां (का च व्यूढा).

(५) भा. ६।१९।२ ; भामु. ६।१९।२ पाण्डवः (संजय).

(६) भा. ६।१९।३–५ ; भामु. ६।१९।३–५.

अल्पैः संहत्यैव योद्धव्यम्, बहुभिस्तु विशकलितैरपि योद्धुं शक्यमित्यर्थः । नीटी.

**सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ।**
**अस्माकं च तथा सैन्यमल्पीयः सुतरां परैः ॥**
**[1]एतद्वचनमाज्ञाय महर्षेर्व्यूह पाण्डव ।**
**तच्छ्रुत्वा धर्मराजस्य प्रत्यभाषत फल्गुनः ॥**

व्यूह व्यूहं कुरु । नीटी.

**[2]एष व्यूहामि ते राजन् व्यूहं परमदुर्जयम् ।**
**अचलं नाम वज्राख्यं विहितं वज्रपाणिना ॥**
**[3]यः स वात इवोद्धूतः समरे दुःसहः परैः ।**
**स नः पुरो योत्स्यति वै भीमः प्रहरतां वरः ॥**
**[4]तेजांसि रिपुसैन्यानां मृद्नन्पुरुषसत्तमः ।**
**अग्रेऽग्रणीर्यास्यति नो युद्धोपायविचक्षणः ॥**
**[5]यं दृष्ट्वा पार्थिवाः सर्वे दुर्योधनपुरोगमाः ।**
**निवर्तिष्यन्ति संभ्रान्ताः सिंहं क्षुद्रमृगा इव ॥**
**[6]तं सर्वे संश्रयिष्यामः प्राकारमकुतोभयम् ।**
**भीमं प्रहरतां श्रेष्ठं वज्रपाणिमिवामराः ॥**
**[7]न हि सोऽस्ति पुमाँल्लोके यः संक्रुद्धं वृकोदरम् ।**
**द्रष्टुमत्युग्रकर्माणं विषहेत नरर्षभम् ॥**

(१) भा. ६।१९।६ ; भामु. ६।१९।६ उत्तरार्धे (एतच्छ्रुत्वा धर्मराजं प्रत्यभाषत पाण्डवः ॥).

(२) भा. ६।१९।७ ; भामु. ६।१९।७ राजन् व्यूहं परमदु (व्यूहं राजसत्तम दु).

(३) भा. ६।१९।८ ; भामु. ६।१९।८ द्धूतः (द्भूतः) त्स्यति (त्स्यते).

(४) भा. ६।१९।९ ; भामु. ६।१९।९ र्यास्य (र्योत्स्य).

(५) भा. ६।१९।१० ; भामु. ६।१९।१० पार्थिवाः (कुरवः) संभ्रान्ताः (संत्रस्ताः) इव (यथा).

(६) भा. ६।१९।११ ; भामु. ६।१९।११ भयम् (भयाः) वज्रपाणि (देवराज).

(७) भा. ६।१९।१२–१३ ; भामु. ६।१९।१२, २१.

**भीमसेनो गदां बिभ्रद्वज्रसारमयीं दृढाम् ।**
**चरन् वेगेन महता समुद्रमपि शोषयेत् ॥**
**[1]केकया धृष्टकेतुश्च चेकितानश्च वीर्यवान् ।**
**एते तिष्ठन्ति सामात्याः प्रेक्षकास्ते नरेश्वर ।**
**धृतराष्ट्रस्य दायादा इति बीभत्सुरब्रवीत् ॥**

धृतराष्ट्रस्य दायादा इत्यनेन तवैवैते भाग इति सूचयति । नीटी.

**[2]भीमसेनं तदा राजन् दर्शयस्व महाबलम् ॥**
**[3]ब्रुवाणं तु तथा पार्थं सर्वसैन्यानि मारिष ।**
**अपूजयंस्तदा वाग्भिरनुकूलाभिराहवे ॥**
**[4]एवमुक्त्वा महाबाहुस्तथा चक्रे धनंजयः ।**
**व्यूह्य तानि बलान्याशु प्रययौ फल्गुनस्तदा ॥**
**[5]संप्रयातान् कुरून् दृष्ट्वा पाण्डवानां महाचमूः ।**
**गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ॥**

स्पन्दमाना किंचिच्चलन्ती । नीटी.

**[6]भीमसेनोऽग्रणीस्तेषां धृष्टद्युम्नश्च पार्षतः ।**
**नकुलः सहदेवश्च धृष्टकेतुश्च वीर्यवान् ॥**
**[7]समुद्योज्य ततः पश्चाद्राजाऽप्यक्षौहिणीवृतः ।**
**भ्रातृभिः सह पुत्रैश्च सोऽभ्यरक्षत पृष्ठतः ॥**

(१) भा. ६।१९।१४ ; भामु. ६।१९।२१–२२ केकया (कैकेयो) चतुर्थचरणे (प्रेक्षन्तस्ते जनाधिप), अस्य प्रथमार्धम् अर्धत्रयात्मकस्यैकविंशश्लोकस्य प्रथमार्धत्वेन पठितम्.

(२) भामु. ६।१९।२३.

(३) भा. ६।१९।१५ ; भामु. ६।१९।२३–२४ मारिष (भारत).

(४) भा. ६।१९।१६ ; भामु. ६।१९।१३ फल्गुनस्तदा (फाल्गुनस्तथा).

(५) भा. ६।१९।१७ ; भामु. ६।१९।१४ स्यन्द (स्पन्द).

(६) भा. ६।१९।१८ ; भामु. ६।१९।१५ पार्षतः (वीर्यवान्) वीर्यवान् (पार्थिवः).

(७) भा. ६।१९।१९ ; भामु. ६।१९।१६ समुद्योज्य (विराटश्च) ऽप्य (ऽथा).

[1]चक्ररक्षौ तु भीमस्य माद्रीपुत्रौ महाद्युती।
द्रौपदेयाः ससौभद्राः पृष्ठगोपास्तरस्विनः॥

धृष्टद्युम्नश्च पाञ्चाल्यस्तेषां गोप्ता महारथः।
सहितः पृतनाशूरै रथमुख्यैः प्रभद्रकैः॥

शिखण्डी तु ततः पश्चादर्जुनेनाभिरक्षितः।
यत्तो भीष्मविनाशाय प्रययौ भरतर्षभ॥

[2]पृष्ठगोपोऽर्जुनस्यापि युयुधानो महारथः।
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ॥

[3]राजा तु मध्यमानीके कुन्तीपुत्रो युधिष्ठिरः।
बृहद्भिः कुञ्जरैर्मत्तैश्चलद्भिरचलैरिव॥

[4]अक्षौहिण्या च पाञ्चाल्यो यज्ञसेनो महामनाः।
विराटमन्वयात् पश्चात् पाण्डवार्थे पराक्रमी॥

[5]तेषामादित्यचन्द्राभाः कनकोत्तमभूषणाः।
नानाचिह्नधरा राजन् रथेष्वासन् महाध्वजाः॥

[6]समुत्सर्प्य ततः पश्चाद् धृष्टद्युम्नो महारथः।
भ्रातृभिः सह पुत्रैश्च सोऽभ्यरक्षद्युधिष्ठिरम्॥

[7]त्वदीयानां परेषां च रथेषु विविधान् ध्वजान्।
अभिभूयार्जुनस्यैको ध्वजस्तस्थौ महाकपिः॥

(१) भा. ६।१९।२०–२२ ; भामु. ६।१९।१७–१९.

(२) भा. ६।१९।२३ ; भामु. ६।१९।२० पूर्वार्धे (पृष्ठतोऽप्यर्जुनस्याऽऽसीद्युयुधानो महाबलः।).

(३) भा. ६।१९।२४ ; भामु. ६।१९।२४–२५.

(४) भा. ६।१९।२५ ; भामु. ६।१९।२५ ण्या च (ण्याऽथ) वार्थे (वार्थं).

(५) भा. ६।१९।२६ ; भामु. ६।१९।२६ चिह्न (चित्र).

(६) भा. ६।१९।२७ ; भामु. ६।१९।२७ त्सर्प्य (त्सार्य).

(७) भा. ६।१९।२८ ; भामु. ६।१९।२८ ; विविधान् (विपुलान्) ध्वजस्त (रथे त).

[1]पादातास्त्वग्रतोऽगच्छन्नसिशक्त्यृष्टिपाणयः।
अनेकशतसाहस्रा भीमसेनस्य रक्षिणः॥

[2]वारणा दशसाहस्राः प्रभिन्नकरटामुखाः।
शूरा हेममयैर्जालैर्दीप्यमाना इवाचलाः॥

वारणा राजानमन्वयुरिति संबन्धः। अचलाः निष्कम्पाः। नीटी.

[3]क्षरन्त इव जीमूता मदार्द्राः पद्मगन्धिनः।
राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः॥

जीमूताः पर्वताः। 'जीमूतोऽद्रौ' इति मेदिनी। नीटी.

[4]भीमसेनो गदां भीमां प्रकर्षन् परिघोपमाम्।
प्रचकर्ष महत्सैन्यं दुराधर्षो महामनाः॥

[5]तमर्कमिव दुष्प्रेक्ष्यं तपन्तं रश्मिमालिनम्।
न शेकुः सर्वतो योधाः प्रतिवीक्षितुमन्तिके॥

[6]वज्रो नामैष तु व्यूहो दुर्भिदः सर्वतोमुखः।
चापविद्युद्ध्वजो घोरो गुप्तो गाण्डिवधन्वना॥

[7]यं प्रतिव्यूह्य तिष्ठन्ति पाण्डवास्तव वाहिनीम्।
अजेयो मानुषे लोके पाण्डवैरभिरक्षितः॥

(१) भा. ६।१९।२९ ; भामु. ६।१९।२९ पादा (पदा).

(२) भा. ६।१९।३० ; भामु. ६।१९।३०.

(३) भा. ६।१९।३१ ; भामु. ६।१९।३१ मदार्द्राः (महार्हाः) चतुर्थचरणे (जीमूता इव वार्षिकाः).

(४) भा. ६।१९।३२ ; भामु. ६।१९।३२ महत्सै (महासै).

(५) भा. ६।१९।३३ ; भामु. ६।१९।३३ रश्मिमालिनम् (इव वाहिनीम्) तो योधाः (योधास्ते).

(६) भा. ६।१९।३४ ; भामु. ६।१९।३४ तु (स) दुर्भिदः (निर्भयः).

(७) भा. ६।१९।३५ ; भामु. ६।१९।३५.

भीष्मरचिता मानुषदैवगान्धर्वासुराख्या व्यूहाः

[1]साग्रं शतसहस्रं तु नागानां तव भारत ।
नागे नागे रथशतं शतं चाश्वा रथे रथे ॥
[2]अश्वेऽश्वे दश धानुष्का धानुष्के दश चर्मिणः ।
एवं व्यूढान्यनीकानि भीष्मेण तव भारत ॥
[3]अव्यूहन् मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
दिवसे दिवसे प्राप्ते भीष्मः शान्तनवोऽग्रणीः ॥
[4]महारथौघविपुलः समुद्र इव पर्वणि ।
भीष्मेण धार्तराष्ट्राणां व्यूहः प्रत्यङ्मुखो युधि ॥

पाण्डवकृतः प्रतिव्यूहः

संजय उवाच–

[5]ततो युधिष्ठिरो राजा स्वां सेनां समचोदयत् ।
प्रतिव्यूहन्ननीकानि भीष्मस्य भरतर्षभ ॥
[6]यथोद्दिष्टान्यनीकानि प्रत्यव्यूहन्त पाण्डवाः ।
स्वर्गं परमभीप्सन्तः सुयुद्धेन कुरूद्वहाः ॥
[7]मध्ये शिखण्डिनोऽनीकं रक्षितं सव्यसाचिना ।
धृष्टद्युम्नस्य च स्वयं भीमेन परिपालितम् ॥
[8]अनीकं दक्षिणं राजन् युयुधानेन पालितम् ।
श्रीमता सात्वताग्र्येण शक्रेणेव धनुष्मता ॥

(१) भा. ६।२०।१६ ; भामु. ६।२०।१६ शतं चाश्वा ( शतमश्वा ).

(२) भा. ६।२०।१७ ; भामु. ६।२०।१७ दश च ( शतच ).

(३) भा. ६।२०।१८ ; भामु. ६।२०।१८ अव्यूहन् ( संव्यूह्य ).

(४) भा. ६।२०।१९ ; भामु. ६।२०।१९ पर्वणि ( घोषवान् ).

(५) भा. ६।२२।१ ; भामु. ६।२२।१ चोद ( नोद ).

(६) भा. ६।२२।२ ; भामु. ६।२२।२ मभीप्स ( ममिच्छ ).

(७) भा. ६।२२।३ ; भामु. ६।२२।३ उत्तरार्धे ( धृष्टद्युम्नश्चरन्नग्रे भीमसेनेन पालितः ॥ ).

(८) भा. ६।२२।४ ; भामु. ६।२२।४.

[1]महेन्द्रयानप्रतिमं रथं तु
सोपस्करं हाटकरत्नचित्रम् ।
युधिष्ठिरः काञ्चनभाण्डयोक्त्रं
समास्थितो नागकुलस्य मध्ये ॥

पुरस्य मध्ये स्थितम् इदानीमानीतमिति भावः । नीटी.

बृहस्पत्युपदिष्टः युधिष्ठिरकृतः क्रौञ्चारुणो नाम व्यूहः

[2]तमब्रवीत्ततः पार्थः पार्षतं पृतनापतिम् ।
व्यूहः क्रौञ्चारुणो नाम सर्वशत्रुनिबर्हणः ॥
[3]यं बृहस्पतिरिन्द्राय तदा देवासुरेऽब्रवीत् ।
तं यथावत् प्रतिव्यूह परानीकविनाशनम् ।
अदृष्टपूर्वं राजानः पश्यन्तु कुरुभिः सह ॥
[4]तथोक्तः स नृदेवेन विष्णुर्वज्रभृता इव ।
प्रभाते सर्वसैन्यानामग्रे चक्रे धनंजयम् ॥
[5]आदित्यपथगः केतुस्तस्याद्भुतमनोरमः ।
शासनात् पुरुहूतस्य निर्मितो विश्वकर्मणा ॥
इन्द्रायुधसवर्णाभिः पताकाभिरलंकृतः ।
आकाशग इवाऽऽकाशे गन्धर्वनगरोपमः ।
नृत्यमान इवाऽऽभाति रथचर्यासु मारिष ॥

आकाशग इव पक्षीव । रथचर्यासु रथवर्त्मसु । नीटी.

[6]तेन रत्नवता पार्थः स च गाण्डीवधन्वना ।
बभूव परमोपेतः स्वयंभूरिव भानुना ॥

(१) भा. ६।२२।५ ; भामु. ६।२२।५ कुलस्य ( पुरस्य ).

(२) भा. ६।४६।३९ ; भामु. ६।५०।३९–४०.

(३) भा. ६।४६।४० ; भामु. ६।५०।४०–४१ व्यूह ( व्यूहं ).

(४) भा. ६।४६।४१ ; भामु. ६।५०।४२ तथो ( यथो ) इव ( यथा ).

(५) भा. ६।४६।४२–४३ ; भामु. ६।५०।४३–४५.

(६) भा. ६।४६।४४ ; भामु. ६।५०।४५–४६ स्वयंभू ( सुमेरु ).

परमोपेतः– परा उत्कृष्टा चासौ मा लक्ष्मीश्चेति परमा, तया उपेतः । नीटी.

[1]शिरोऽभूद्द्रुपदो राजा महत्या सेनया वृतः ।
कुन्तिभोजश्च चैद्यश्च चक्षुष्यास्तां जनेश्वर ॥

[2]दाशार्णकाः प्रयागाश्च दाशेरकगणैः सह ।
अनूपगाः किराताश्च ग्रीवायां भरतर्षभ ॥

[3]पटच्चरैश्च हुण्डैश्च राजन् पौरवकैस्तथा ।
निषादैः सहितश्चापि पृष्ठमासीद्युधिष्ठिरः ॥

[4]पक्षौ तु भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ।
द्रौपदेयाभिमन्युश्च सात्यकिश्च महारथः ॥

[5]पिशाचा दरदाश्चैव पुण्ड्राः कुण्डीविषैः सह ।
मडका लडकाश्चैव तङ्गणाः परतङ्गणाः ॥

[6]बाह्लिकास्तित्तिराश्चैव चोलाः पाण्ड्याश्च भारत ।
एते जनपदा राजन् दक्षिणं पक्षमाश्रिताः ॥

[7]अग्निवेश्या जगत्तुण्डा पलदाशाश्च भारत ।
शबरास्तुम्बुपाश्चैव वत्साश्च सह नाकुलैः ।
नकुलः सहदेवश्च वामं पार्श्वं समाश्रिताः ॥

(१) भा. ६।४६।४५ ; भामु. ६।५०।४६–४७ चतुर्थचरणे ( चक्षुर्भ्यां तौ जनेश्वरौ ).

(२) भा. ६।४६।४६ ; भामु. ६।५०।४७–४८ प्रयागाश्च ( प्रभद्राश्च ).

(३) भा. ६।४६।४७ ; भामु. ६।५०।४८–४९ हुण्डै ( पौण्ड्रै ).

(४) भा. ६।४६।४८ ; भामु. ६।५०।४९–५०.

(५) भा. ६।४६।४९ ; भामु. ६।५०।५०–५१ दर ( दार ) मडका लडका ( मारुता धेनुका ).

(६) भा. ६।४६।५० ; भामु. ६।५०।५१–५२ पाण्ड्या ( पण्ड्या ).

(७) भा. ६।४६।५१ ; भामु. ६।५०।५२–५३ प्रथमार्धे ( अग्निवेशास्तु हुण्डाश्च मालवा दानभारयः । ) स्तुम्बुपा ( उड्रसा ) पार्श्वं ( पक्षं ).

[1]रथानामयुतं पक्षौ शिरश्च नियुतं तथा ।
पृष्ठमर्बुदमेवाऽसीत् सहस्राणि च विंशतिः ।
ग्रीवायां नियुतं चापि सहस्राणि च सप्ततिः ॥

[2]पक्षकोटिप्रपक्षेषु पक्षान्तेषु च वारणाः ।
जग्मुः परिवृता राजंश्चलन्त इव पर्वताः ॥
जघनं पालयामास विराटः सह केकयैः ।
काशिराजश्च शैब्यश्च रथानामयुतैस्त्रिभिः ॥

[3]एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः ।
सूर्योदयनमिच्छन्तः स्थिता युद्धाय दंशिताः ॥

भीष्मकृतः महान् व्यूहः

[4]ततो द्रोणश्च भीष्मश्च तव पुत्रश्च मारिष ।
अव्यूहन्त महाव्यूहं पाण्डूनां प्रतिबाधने ॥

[5]भीष्मः सैन्येन महता समन्तात् परिवारितः ।
ययौ प्रकर्षन् महतीं वाहिनीं सुरराडिव ॥
तमन्वयान्महेष्वासो भारद्वाजः प्रतापवान् ।
कुन्तलैश्च दशार्णैश्च मागधैश्च विशां पते ॥
विदर्भैर्मेकलैश्चैव कर्णप्रावरणैरपि ।
सहिताः सर्वसैन्येन भीष्ममाहवशोभिनम् ॥
गान्धाराः सिन्धुसौवीराः शिबयोऽथ वसातयः ।
शकुनिश्च स्वसैन्येन भारद्वाजमपालयत् ॥

[6]ततो दुर्योधनो राजा सहितः सर्वसोदरैः ।
अश्वातकैर्विकर्णैश्च तथा शर्मिलकोसलैः ॥

(१) भा. ६।४६।५२ ; भामु. ६।५०।५४–५५ शिरश्च ( शिरस्तु ).

(२) भा. ६।४६।५३–५४ ; भामु. ६।५०।५५ –५७.

(३) भा. ६।४६।५५ ; भामु. ६।५०।५७–५८ मेतं ( मेनं ) दयनमि ( दयं त इ ).

(४) भा. ६।४७।१० ; भामु. ६।५१।१० द्रोणश्च भीष्म ( भीष्मश्च द्रोण ) पुत्र ( पुत्रा ) बाधने ( बाधकम् ).

(५) भा. ६।४७।११–१४ ; भामु. ६।५१।११–१४.

(६) भा. ६।४७।१५ ; भामु. ६।५१।१५ शर्मिल ( चाम्बष्ठ ).

[1]दरदैश्चूचुपैश्चैव तथा क्षुद्रकमालवैः।
अभ्यरक्षत संहृष्टः सौबलेयस्य वाहिनीम्॥
[2]भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष।
विन्दानुविन्दावावन्त्यौ वामं पार्श्वमपालयन्॥
[3]सौमदत्तिः सुशर्मा च काम्बोजश्च सुदक्षिणः।
शतायुश्च श्रुतायुश्च दक्षिणं पार्श्वमास्थिताः॥
[4]अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः।
महत्या सेनया सार्धं सेनापृष्ठे व्यवस्थिताः॥
पृष्ठगोपास्तु तस्याऽऽसन् नानादेश्या जनेश्वराः।
केतुमान् वसुदानश्च पुत्रः काश्यस्य चाभिभूः॥

अभिभवति अभिभूः। क्विप्। नीटी.

भीष्मकृतः गारुडाख्यो व्यूहः

[5]गारुडं च महाव्यूहं चक्रे शान्तनवस्तदा।
पुत्राणां ते जयाकाङ्क्षी भीष्मः कुरुपितामहः॥
गरुडस्य स्वयं तुण्डे पिता देवव्रतस्तव।
चक्षुषी च भरद्वाजः कृतवर्मा च सात्वतः॥
[6]अश्वत्थामा कृपश्चैव शीर्षमास्तां यशस्विनौ।
त्रिगर्तैर्मत्स्यकैकेयैर्वाटधानैश्च संयुतौ॥
[7]भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष।
मद्रकाः सिन्धुसौवीरास्तथा पञ्चनदाश्च ये॥

(१) भा. ६।४७।१६; भामु. ६।५१।१६ श्चूचुपै (श्च शकै).

(२) भा. ६।४७।१७; भामु. ६।५१।१७ रिष (रिषः).

(३) भा. ६।४७।१८; भामु. ६।५१।१८ तृतीयचरणे (श्रुतायुश्चाच्युतायुश्च) पार्श्वं (पक्ष).

(४) भा. ६।४७।१९–२०; भामु. ६।५१।१९–२०.

(५) भा. ६।५२।२–३; भामु. ६।५६।२–३.

(६) भा. ६।५२।४; भामु. ६।५६।४ त्रिगर्तैर्मत्स (त्रैगर्तैरथ) युतौ (युगे).

(७) भा. ६।५२।५; भामु. ६।५६।५ मद्रकाः (मद्रकः) पञ्च (पाञ्च).

[1]जयद्रथेन सहिता ग्रीवायां संनिवेशिताः।
पृष्ठे दुर्योधनो राजा सोदर्यैः सानुगैर्वृतः॥
[2]विन्दानुविन्दावावन्त्यौ काम्बोजश्च शकैः सह।
पुच्छमासन् महाराज शूरसेनाश्च सर्वशः॥
[3]मागधाश्च कलिङ्गाश्च दाशेरकगणैः सह।
दक्षिणं पक्षमासाद्य स्थिता व्यूहस्य दंशिताः॥
[4]काननाश्च विकुञ्जाश्च मुक्ताः पुण्ड्राविषस्तथा।
बृहद्बलेन सहिता वामं पक्षमुपाश्रिताः॥

अर्जुनकृतः अर्धचन्द्रव्यूहः

[5]व्यूढं दृष्ट्वा तु तत्सैन्यं सव्यसाची परंतपः।
धृष्टद्युम्नेन सहितः प्रत्यव्यूहत संयुगे।
अर्धचन्द्रेण व्यूहेन व्यूहं तमतिदारुणम्॥
दक्षिणं शृङ्गमास्थाय भीमसेनो व्यरोचत।
नानाशस्त्रौघसंपन्नैर्नानादेश्यैर्नृपैर्वृतः॥
तदन्वेव विराटश्च द्रुपदश्च महारथः।
तदनन्तरमेवाऽऽसीन्नीलो नीलायुधैः सह॥
[6]नीलादनन्तरं चैव धृष्टकेतुर्महारथः।
चेदिकाशिकरूषैश्च पौरवैश्चाभिसंवृतः॥
[7]धृष्टद्युम्नः शिखण्डी च पाञ्चालाश्च प्रभद्रकाः।
मध्ये सैन्यस्य महतः स्थिता युद्धाय भारत॥

(१) भा. ६।५२।६; भामु. ६।५६।६ दर्यैः (दर्यैः).

(२) भा. ६।५२।७; भामु. ६।५६।७.

(३) भा. ६।५२।८; भामु. ६।५६।८ दाशे (दासे).

(४) भा. ६।५२।९; भामु. ६।५६।९ कानना (कारूषा) मुक्ताः पुण्ड्राविष (मुण्डाः कुण्डीवृषा) पक्षमुपाश्रिताः (पार्श्वमवस्थिताः).

(५) भा. ६।५२।१०–१२; भामु. ६।५६।१०–१३.

(६) भा. ६।५२।१३; भामु. ६।५६।१३–१४ रं चैव (रश्चैव) रथः (वलः) वैश्चाभि (वैरपि).

(७) भा. ६।५२।१४; भामु. ६।५६।१४–१५ पाञ्चा (पञ्चा).

[1]तथैव धर्मराजोऽपि गजानीकेन संवृतः ।
ततस्तु सात्यकी राजन् द्रौपद्याः पञ्च चाऽऽत्मजाः ॥

[2]अभिमन्युस्ततस्तूर्णमिरावांश्च ततः परम् ।
भैमसेनिस्ततो राजन् केकयाश्च महारथाः ॥

[3]ततोऽभूद् द्विपदां श्रेष्ठो वामं पार्श्वमुपाश्रितः ।
सर्वस्य जगतो गोप्ता गोप्ता यस्य जनार्दनः ॥

[4]एवमेतन्महाव्यूहं प्रत्यव्यूहन्त पाण्डवाः ॥

कौरवाणां व्यालव्यूहः

[5]तं व्यालनानाविधगूढसारं
गजाश्वपादातरथौघपक्षम् ।
व्यूहं महामेघसमं महात्मा
ददर्श दूरात् कपिराजकेतुः ॥

व्यालः व्यूहविशेषः, तेन नानाविधं गूढसारं च । नीटी.

[6]प्रकर्षता गुप्तमुदायुधेन
किरीटिना लोकमहारथेन ।
तं व्यूहराजं ददृशुस्त्वदीया-
श्चतुश्चतुर्व्यालसहस्रकीर्णम् ॥

चतुश्चतुरावृत्तं व्यालानां गजानां सहस्रं कर्णेषु विदिग्भागेषु यस्य तम् । नीटी.

(१) भा. ६।५२।१५ ; भामु. ६।५६।१५–१६ तथैव (तत्रैव).

(२) भा. ६।५२।१६ ; भामु. ६।५६।१६–१७ तस्तूर्णमि (तः शूर इ).

(३) भा. ६।५२।१७ ; भामु. ६।५६।१७–१८.

(४) भा. ६।५२।१८ ; भामु. ६।५६।१८ मेतन्म (मेतं म).

(५) भा. ६।५६।७ ; भामु. ६।६०।७.

(६) भा. ६।५६।१० ; भामु. ६।६०।१० कीर्णम् (कर्णम्).

मकर-श्येन-क्रौञ्च-मण्डल-वज्र-महाव्यूह-शृङ्गाटक--सर्वतोभद्र-सुदुर्जय-शकट-सुपर्ण-मण्डलार्ध--चक्र-पद्म-सूचीमुख-बार्हस्पत्याख्या व्यूहप्रतिव्यूहाः

[1]पाण्डवा धार्तराष्ट्राश्च राजन् दुर्मन्त्रिते तव ।
व्यूहौ च व्यूह्य संरब्धाः संप्रयुद्धाः प्रहारिणः ॥

[2]अरक्षन्मकरव्यूहं भीष्मो राजन् समन्ततः ।
तथैव पाण्डवा राजन्नरक्षन् व्यूहमात्मनः ॥

[3]स निर्ययौ रथानिकं पिता देवव्रतस्तव ।
महता रथवंशेन संवृतो रथिनां वरः ॥

[4]इतरेतरमन्वीयुर्यथाभागमवस्थिताः ।
रथिनः पत्तयश्चैव दन्तिनः सादिनस्तथा ॥

[5]तान् दृष्ट्वा प्रोद्यतान् संख्ये पाण्डवाश्च यशस्विनः ।
श्येनेन व्यूहराजेन तेनाजय्येन संयुगे ॥

[6]अशोभत मुखे तस्य भीमसेनो महाबलः ।
नेत्रे शिखण्डी दुर्धर्षो धृष्टद्युम्नश्च पार्षतः ॥

[7]शीर्षं तस्याभवद् वीरः सात्यकिः सत्यविक्रमः ।
[8]विधुन्वन् गाण्डिवं पार्थो ग्रीवायामभवत्तदा ॥
अक्षौहिण्या समग्रा या वामपक्षोऽभवत्तदा ।
महात्मा द्रुपदः श्रीमान् सह पुत्रेण संयुगे ॥

(१) भा. ६।६५।३ ; भामु. ६।६९।३ युद्धाः (दृप्ताः).

(२) भा. ६।६५।४ ; भामु. ६।६९।४.

(३) भा. ६।६५।५ ; भामु. ६।६९।५ रथानीकं (महाराज).

(४) भा. ६।६५।६ ; भामु. ६।६९।६.

(५) भा. ६।६५।७ ; भामु. ६।६९।७ प्रोद्य (ऽभ्युद्य) वाश्च (वा हि).

(६) भा. ६।६५।८ ; भामु. ६।६९।८.

(७) भा. ६।६५।९ ; भामु. ६।६९।९ शीर्षं (शीर्षे).

(८) भा. ६।६५।१० ; भामु. ६।६९।१० समग्रा या (समं तत्र).

[1]दक्षिणश्चाभवत्पक्षः कैकेयोऽक्षौहिणीपतिः ।
पृष्ठतो द्रौपदेयाश्च सौभद्रश्चापि वीर्यवान् ॥
[2]पृष्ठे समभवच्छ्रीमान् स्वयं राजा युधिष्ठिरः ।
भ्रातृभ्यां सहितो धीमान् यमाभ्यां चारुविक्रमः ॥
[3]प्रविश्य तु रणे भीमो मकरं मुखतस्तदा ।
भीष्ममासाद्य सङ्ग्रामे छादयामास सायकैः ॥
[4]ततो युधिष्ठिरो राजा धृष्टद्युम्नमभाषत ।
व्यूहं व्यूह महाबाहो मकरं शत्रुतापनम् ॥
[5]एवमुक्तस्तु पार्थेन धृष्टद्युम्नो महारथः ।
व्यादिदेश महाराज रथिनो रथिनां वरः ॥
शिरोऽभूद् द्रुपदस्तस्य पाण्डवश्च धनंजयः ।
चक्षुषी सहदेवश्च नकुलश्च महारथः ।
तुण्डमासीन्महाराज भीमसेनो महाबलः ॥
सौभद्रो द्रौपदेयाश्च राक्षसश्च घटोत्कचः ।
सात्यकिर्धर्मराजश्च व्यूहग्रीवां समास्थिताः ॥
पृष्ठमासीन्महाराज विराटो वाहिनीपतिः ।
धृष्टद्युम्नेन सहितो महत्या सेनया वृतः ॥
[6]केकया भ्रातरः पञ्च वामं पार्श्वं समाश्रिताः ।
धृष्टकेतुर्नरव्याघ्रः करकर्षश्च वीर्यवान् ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य रक्षणे ॥
[7]पादयोस्तु महाराज स्थितः श्रीमान्महारथः ।
कुन्तिभोजः शतानीको महत्या सेनया वृतः ॥
शिखण्डी तु महेष्वासः सोमकैः संवृतो बली ।
इरावांश्च ततः पुच्छे मकरस्य व्यवस्थितौ ॥
[1]एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः ।
सूर्योदये महाराज पुनर्युद्धाय दंशिताः ॥
[2]कौरवानभ्ययुस्तूर्णं हस्त्यश्वरथपत्तिभिः ।
समुच्छ्रितैर्ध्वजैश्चित्रैः शस्त्रैश्च विमलैः शितैः ॥
[3]व्यूहं दृष्ट्वा तु तत्सैन्यं पिता देवव्रतस्तव ।
क्रौञ्चेन महता राजन् प्रत्यव्यूहत वाहिनीम् ॥
[4]तस्य तुण्डे महेष्वासो भारद्वाजो व्यरोचत ।
अश्वत्थामा कृपश्चैव चक्षुरास्तां नरेश्वर ॥
[5]कृतवर्मा तु सहितः काम्बोजारट्टबाह्लिकैः ।
शिरस्यासीन्नरश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥
[6]ग्रीवायां शूरसेनस्तु तव पुत्रश्च मारिष ।
दुर्योधनो महाराज राजभिर्बहुभिर्वृतः ॥
[7]प्राग्ज्योतिषस्तु सहितो मद्रसौवीरकेकयैः ।
उरस्यभून्नरश्रेष्ठ महत्या सेनया वृतः ॥
[8]स्वसेनया च सहितः सुशर्मा प्रस्थलाधिपः ।
वामं पक्षं समाश्रित्य दंशितः समवस्थितः ॥

---

(१) भा. ६।६५।११ ; भामु. ६।६९।११.
(२) भा. ६।६५।१२ ; भामु. ६।६९।१२ धीमान् (वीरो).
(३) भा. ६।६५।१३ ; भामु. ६।६९।१३.
(४) भा. ६।७१।४ ; भामु. ६।७५।४ ताप (नाश).
(५) भा. ६।७१।५-८ ; भामु. ६।७५।५-९.
(६) भा. ६।७१।९ ; भामु. ६।७५।९-१० वामं पार्श्वं (वामपार्श्वं) करकर्ष (चेकितान) स्थिता (स्थितौ).
(७) भा. ६।७१।१०-११ ; भामु. ६।७५।११-१२.

(१) भा. ६।७१।१२ ; भामु. ६।७५।१३ मेतन्म (मेतं म).
(२) भा. ६।७१।१३ ; भामु. ६।७५।१४ श्चित्रैः (श्छत्रैः).
(३) भा. ६।७१।१४ ; भामु. ६।७५।१५ व्यूहं (व्यूढं).
(४) भा. ६।७१।१५ ; भामु. ६।७५।१६ रास्तां न (रासीन्न).
(५) भा. ६।७१।१६ ; भामु. ६।७५।१७ जारट्ट (जवर).
(६) भा. ६।७१।१७ ; भामु. ६।७५।१८ नस्तु (नश्च).
(७) भा. ६।७१।१८ ; भामु. ६।७५।१९.
(८) भा. ६।७१।१९ ; भामु. ६।७५।२० वामं प (वामप).

[1]तुषारा यवनाश्चैव शकाश्च सह चूचुपैः ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य भारत ॥
श्रुतायुश्च शतायुश्च सौमदत्तिश्च मारिष ।
व्यूहस्य जघने तस्थू रक्षमाणाः परस्परम् ॥
[2]ततः प्रभाते विमले स्वेनानीकेन वीर्यवान् ।
अव्यूहत स्वयं व्यूहं भीष्मो व्यूहविशारदः ॥
[3]मण्डलं मनुजश्रेष्ठ नानाशस्त्रसमाकुलम् ।
संपूर्णं योधमुख्यैश्च तथा दन्तिपदातिभिः ॥
[4]रथैरनेकसाहस्रैः समन्तात्परिवारितम् ।
अश्ववृन्दैर्महद्भिश्च ऋष्टितोमरधारिभिः ॥
[5]नागे नागे रथाः सप्त सप्त चाश्वा रथे रथे ।
अन्वश्वं दश धानुष्का धानुष्के सप्त चर्मिणः ॥
[6]एवंव्यूहं महाराज तव सैन्यं महारथैः ।
स्थितं रणाय महते भीष्मेण युधि पालितम् ॥
[7]भीष्मेण धार्तराष्ट्राणां व्यूढः प्रत्यङ्मुखो युधि ।
मण्डलः सुमहाव्यूहो दुर्भेद्योऽमित्रघातिनाम् ।
सर्वतः शुशुभे राजन् रणेऽरीणां दुरासदः ॥
[8]मण्डलं तु समालोक्य व्यूहं परमदारुणम् ।
स्वयं युधिष्ठिरो राजा व्यूहं वज्रमथाकरोत् ॥

(१) भा. ६।७१।२०–२१ ; भामु. ६।७५।२१–२२.

(२) भा. ६।७७।११ ; भामु. ६।८१।११–१२ नानीकेन ( न सैन्येन ).

(३) भा. ६।७७।१२ ; भामु. ६।८१।१२–१३ श्रेष्ठ ( श्रेष्ठो ).

(४) भा. ६।७७।१३ ; भामु. ६।८१।१३–१४.

(५) भा. ६।७७।१४ ; भामु. ६।८१।१४–१५ सप्त चर्मिणः ( दश चर्मिणः ).

(६) भा. ६।७७।१५ ; भामु. ६।८१।१५–१६ एवंव्यूहं ( एवं व्यूढं ).

(७) भा. ६।७७।२० ; भामु. ६।८१।२१–२२ सुमहा ( स महा ) घातिनाम् ( घातनः ).

(८) भा. ६।७७।२१ ; भामु. ६।८१।२२–२३ दारुणम् ( दुर्जयम् ) व्यूहं वज्र ( वज्रं व्यूह ).

[1]ततो दुर्योधनो राजा चित्रसेनो विविंशतिः ।
भीष्मश्च रथिनां श्रेष्ठो भारद्वाजश्च वै द्विजः ॥
[2]एकीभूताः सुसंयत्ताः कौरवाणां महाचमूः ।
व्यूहाय विदधू राजन् पाण्डवान् प्रति दंशिताः ॥
[3]भीष्मः कृत्वा महाव्यूहं पिता तव विशां पते ।
सागरप्रतिमं घोरं वाहनोर्मितरङ्गिणम् ॥
अग्रतः सर्वसैन्यानां भीष्मः शान्तनवो ययौ ।
मालवैर्दाक्षिणात्यैश्च आवन्त्यैश्च समन्वितः ॥
ततोऽनन्तरमेवाऽऽसीद् भारद्वाजः प्रतापवान् ।
पुलिन्दैः पारदैश्चैव तथा क्षुद्रकमालवैः ॥
[4]द्रोणादनन्तरं यत्तो भगदत्तः प्रतापवान् ।
मागधैश्च कलिङ्गैश्च पिशाचैश्च विशां पते ॥
[5]प्राग्ज्योतिषादनु नृपः कौसल्योऽथ बृहद्बलः ।
मेकलैस्त्रैपुरैश्चैव चिच्छिलैश्च समन्वितः ॥
[6]बृहद्बलात्ततः शूरस्त्रिगर्तः प्रस्थलाधिपः ।
काम्बोजैर्बहुभिः सार्धं यवनैश्च सहस्रशः ॥
[7]द्रौणिस्तु रभसः शूरस्त्रिगर्तादनु भारत ।
प्रययौ सिंहनादेन नादयानो धरातलम् ॥
[8]तथा सर्वेण सैन्येन राजा दुर्योधनस्तदा ।
द्रौणेरनन्तरं प्रायात् सोदर्यैः परिवारितः ॥

(१) भा. ६।८३।३ ; भामु. ६।८७।३ द्विजः ( नृप ).

(२) भा. ६।८३।४ ; भामु. ६।८७।४ चमूः ( चमूम् ).

(३) भा. ६।८३।५–७ ; भामु. ६।८७।५–७.

(४) भा. ६।८३।८ ; भामु. ६।८७।८ माग ( मग ).

(५) भा. ६।८३।९ ; भामु. ६।८७।९ लैस्त्रैपुरैश्चैव चिच्छिलै ( लैः कुरुविन्दैश्च त्रैपुरै ).

(६) भा. ६।८३।१० ; भामु. ६।८७।१०.

(७) भा. ६।८३।११ ; भामु. ६।८७।११ रभि (रभै).

(८) भा. ६।८३।१२ ; भामु. ६।८७।१२.

[1]दुर्योधनादनु कृपस्ततः शारद्वतो ययौ ।
एवमेष महाव्यूहः प्रययौ सागरोपमः ॥
[2]रेजुस्तत्र पताकाश्च श्वेतच्छत्राणि चाभिभो ।
अङ्गदान्यथ चित्राणि महार्हाणि धनूंषि च ॥
[3]तं तु दृष्ट्वा महाव्यूहं तावकानां महारथः ।
युधिष्ठिरोऽब्रवीत्तूर्णं पार्षतं पृतनापतिम् ॥
[4]पश्य व्यूहं महेष्वास निर्मितं सागरोपम् ।
प्रतिव्यूहं त्वमपि हि कुरु पार्षत मा चिरम् ॥
[5]ततः स पार्षतः शूरो व्यूहं चक्रे सुदारुणम् ।
शृङ्गाटकं महाराज परव्यूहविनाशनम् ॥

शृङ्गाटकं चतुष्पथाकारम् । नीटी.

[6]शृङ्गेभ्यो भीमसेनश्च सात्यकिश्च महारथः ।
रथैरनेकसाहस्रैस्तथा हयपदातिभिः ॥

शृङ्गाभ्यां शृङ्गयोः । नीटी.

[7]नाभ्यामभून्नरश्रेष्ठः श्वेताश्वो वानरध्वजः ।
मध्ये युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ ॥
[8]अथेतरे महेष्वासाः सहसैन्या नराधिपाः ।
व्यूहं तं पूरयामासुर्व्यूहशास्त्रविशारदाः ॥

(१) भा. ६।८३।१३ ; भामु. ६।८७।१३ कृपस्ततः (ततः कृपः).

(२) भा. ६।८३।१४ ; भामु. ६।८७।१४ चाभिभो (वा विभो).

(३) भा. ६।८३।१५ ; भामु. ६।८७।१५.

(४) भा. ६।८३।१६ ; भामु. ६।८७।१६ मा चिरम् (सत्वरम्).

(५) भा. ६।८३।१७ ; भामु. ६।८७।१७ शूरो (क्रूरो).

(६) भा. ६।८३।१८ ; भामु. ६।८७।१८ शृङ्गेभ्यो (शृङ्गाभ्यां).

(७) भा. ६।८३।१९ ; भामु. ६।८७।१९ पूर्वार्धे (ताभ्यां बभौ नरश्रेष्ठः श्वेताश्वः कृष्णसारथिः । ).

(८) भा. ६।८३।२० ; भामु. ६।८७।२० थेतरे (थोत्तरे).

[1]अभिमन्युस्ततः पश्चाद्विराटश्च महारथः ।
द्रौपदेयाश्च संहृष्टा राक्षसश्च घटोत्कचः ॥
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः ।
अतिष्ठन् समरे शूरा योद्धुकामा जयैषिणः ॥
[2]ततः शान्तनवो भीष्मो निर्ययौ सेनया सह ।
व्यूहं चाव्यूहत महत्सर्वतोभद्रमाहवे ॥
[3]कृपश्च कृतवर्मा च शैब्यश्चैव महारथः ।
शकुनिः सैन्धवश्चैव काम्बोजश्च सुदक्षिणः ॥
भीष्मेण सहिताः सर्वे पुत्रैश्च तव भारत ।
अग्रतः सर्वसैन्यानां व्यूहस्य प्रमुखे स्थिताः ॥
द्रोणो भूरिश्रवाः शल्यो भगदत्तश्च मारिष ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य दंशिताः ॥
[4]अश्वत्थामा सोमदत्त आवन्त्यौ च महारथौ ।
महत्या सेनया युक्ता वामं पक्षमपालयन् ॥
[5]दुर्योधनो महाराज त्रिगर्तैः सर्वतो वृतः ।
व्यूहमध्ये स्थितो राजन् पाण्डवान् प्रति भारत ॥
[6]अलम्बुसो रथश्रेष्ठः श्रुतायुश्च महारथः ।
पृष्ठतः सर्वसैन्यानां स्थितौ व्यूहस्य दंशितौ ॥
[7]एवमेते तदा व्यूहं कृत्वा भारत तावकाः ।
संनद्धाः समदृश्यन्त प्रतपन्त इवाग्नयः ॥

(१) भा. ६।८३।२१–२२ ; भामु. ६।८७।२१–२२.

(२) भा. ६।९५।२६ ; भामु. ६।९९।१ सेनया सह (सह सेनया) माहवे (मात्मनः).

(३) भा. ६।९५।२७–२९ ; भामु. ६।९९।२–४.

(४) भा. ६।९५।३० ; भामु. ६।९९।५ दत्त आ (दत्तश्चा).

(५) भा. ६।९५।३१ ; भामु. ६।९९।६.

(६) भा. ६।९५।३२ ; भामु. ६।९९।७ म्बुसो (म्बुषो).

(७) भा. ६।९५।३३ ; भामु. ६।९९।८ एवमेते (एवं च तं).

[1]तथा युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ।
नकुलः सहदेवश्च माद्रीपुत्रावुभावपि ।
अग्रतः सर्वसैन्यानां स्थिता व्यूहस्य दंशिताः ॥
[2]धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः ।
स्थिताः सैन्येन महता परानीकविनाशनाः ॥
शिखण्डी विजयश्चैव राक्षसश्च घटोत्कचः ।
चेकितानो महाबाहुः कुन्तिभोजश्च वीर्यवान् ।
स्थिता रणे महाराज महत्या सेनया वृताः ॥
[3]अभिमन्युर्महेष्वासो द्रुपदश्च महारथः ।
केकया भ्रातरः पञ्च स्थिता युद्धाय दंशिताः ॥
[4]एवं तेऽपि महाव्यूहं प्रतिव्यूह्य सुदुर्जयम् ।
पाण्डवाः समरे शूराः स्थिता युद्धाय मारिष ॥
[5]शिखण्डिनं पुरस्कृत्य निर्याताः पाण्डवा युधि॥
कृत्वा व्यूहं महाराज सर्वशत्रुनिबर्हणम् ।
शिखण्डी सर्वसैन्यानामग्र आसीद्विशां पते ॥
चक्ररक्षौ ततस्तस्य भीमसेनधनंजयौ ।
पृष्ठतो द्रौपदेयाश्च सौभद्रश्चैव वीर्यवान् ॥
[6]सात्यकिश्चेकितानश्च तेषां गोप्ता महारथः ।
धृष्टद्युम्नस्ततः पश्चात् पाञ्चालैरभिरक्षितः ॥
[7]ततो युधिष्ठिरो राजा यमाभ्यां सहितः प्रभुः ।
प्रययौ सिंहनादेन नादयन् भरतर्षभ ॥

(१) भा. ६।९५।३५ ; भामु. ६।९१।९–१० तथा (ततो).

(२) भा. ६।९५।३५–३६; भामु. ६।९१।१०–१२.

(३) भा. ६।९५।३७ ; भामु. ६।९१।१३–१४ रथः (बलः) रथः । + (युयुधानो महेष्वासो युधामन्युश्च वीर्यवान् ।) रः पञ्च (रश्चैव).

(४) भा. ६।९५।३८ ; भामु. ६।९१।१४–१५ मारिष (दंशिताः).

(५) भा. ६।१०४।३–५ ; भामु. ६।१०८।३–५.

(६) भा. ६।१०४।६ ; भामु. ६।१०८।६ पाञ्चा (पञ्चा).

(७) भा. ६।१०४।७ ; भामु. ६।१०८।७.

[1]विराटस्तु ततः पश्चात् स्वेन सैन्येन संवृतः ।
द्रुपदश्च महाराज ततः पश्चादुपाद्रवत् ॥
[2]केकया भ्रातरः पञ्च धृष्टकेतुश्च वीर्यवान् ।
जघनं पालयामास पाण्डुसैन्यस्य भारत ॥
[3]एवं व्यूह्य महत्सैन्यं पाण्डवास्तव वाहिनीम् ।
अभ्यद्रवन्त सङ्ग्रामे त्यक्त्वा जीवितमात्मनः ॥
[4]तथैव कुरवो राजन् भीष्मं कृत्वा महाबलम् ।
अग्रतः सर्वसैन्यानां प्रययुः पाण्डवान् प्रति ॥
[5]पुत्रैस्तव दुराधर्षै रक्षितः सुमहाबलैः ।
ततो द्रोणो महेष्वासः पुत्रश्चास्य महारथः ॥
[6]भगदत्तस्ततः पश्चाद्गजानीकेन संवृतः ।
कृपश्च कृतवर्मा च भगदत्तमनुव्रतौ ॥
काम्बोजराजो बलवांस्ततः पश्चात् सुदक्षिणः ।
मागधश्च जयत्सेनः सौबलश्च बृहद्बलः ॥
[7]तथेतरे महेष्वासाः सुशर्मप्रमुखा नृपाः ।
जघनं पालयामासुस्तव सैन्यस्य भारत ॥
[8]दिवसे दिवसे प्राप्ते भीष्मः शान्तनवो युधि ।
आसुरानकरोद्व्यूहान् पैशाचानथ राक्षसान् ॥

(१) भा. ६।१०४।८ ; भामु. ६।१०८।८ राज (वाहो).

(२) भा. ६।१०४।९ ; भामु. ६।१०८।९ मास (मासुः).

(३) भा. ६।१०४।१० ; भामु. ६।१०८।१० महत्सै (महासै).

(४) भा. ६।१०४।११ ; भामु. ६।१०८।११ बलम् (रथम्).

(५) भा. ६।१०४।१२ ; भामु. ६।१०८।१२ धर्षै (धर्षो) रथः (बलः).

(६) भा. ६।१०४।१३–१४ ; भामु. ६।१०८।१३–१४.

(७) भा. ६।१०४।१५ ; भामु. ६।१०८।१५ तथेतरे (तथैवान्ये).

(८) भा. ६।१०४।१६ ; भामु. ६।१०८।१६.

संजय उवाच–

[1]सेनापत्यं तु संप्राप्य भारद्वाजो महारथः ।
युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह ॥
[2]सैन्धवश्च कलिङ्गश्च विकर्णश्च तवाऽऽत्मजः ।
दक्षिणं पार्श्वमास्थाय समतिष्ठन्त दंशिताः ॥
[3]प्रपक्षः शकुनिस्तेषां प्रवरैर्हयसादिभिः ।
ययौ गान्धारकैः सार्धं विमलप्रासयोधिभिः ॥
[4]कृपश्च कृतवर्मा च चित्रसेनो विविंशतिः ।
दुःशासनमुखा यत्ताः सव्यं पार्श्वमपालयन् ॥
[5]तेषां प्रपक्षाः काम्बोजाः सुदक्षिणपुरःसराः ।
ययुरश्वैर्महावेगैः शकाश्च यवनैः सह ॥
[6]मद्रास्त्रिगर्ताः साम्बष्ठाः प्रतीच्योदीच्यवासिनः ।
शिबयः शूरसेनाश्च शूद्राश्च मलदैः सह ॥
[7]सौवीराः कितवाः प्राच्या दाक्षिणात्याश्च सर्वशः ।
तवाऽऽत्मजं पुरस्कृत्य सूतपुत्रस्य पृष्ठतः ॥
[8]हर्षयन् सर्वसैन्यानि बलेषु बलमादधत् ।
ययौ वैकर्तनः कर्णः प्रमुखे सर्वधन्विनाम् ॥
[9]अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत् ।
परेषां क्रौञ्च एवाऽऽसीद्व्यूहो राजन् महात्मनाम् ।
प्रीयमाणेन विहितो धर्मराजेन भारत ॥

(१) भा. ७।६।१ ; भामु. ७।७।१० सेना (सैना).
(२) भा. ७।६।२ ; भामु. ७।७।११ त्मजः (त्मजाः). (३) भा. ७।६।३ ; भामु. ७।७।१२.
(४) भा. ७।६।४ ; भामु. ७।७।१३ पार्श्व (पक्ष).
(५) भा. ७।६।५ ; भामु. ७।७।१४.
(६) भा. ७।६।६ ; भामु. ७।७।१५ वासिनः (मालवाः).
(७) भा. ७।६।७ ; भामु. ७।७।१६.
(८) भा. ७।६।८ ; भामु. ७।७।१७–१८ पूर्वार्धे (हर्षयन्तः स्वसैन्यानि ययुस्तव सुतैः सह। प्रवरः सर्वयोधानां बलेषु बलमादधत् ।).
(९) भा. ७।६।१५ ; भामु. ७।७।२४–२५.

[1]निष्क्रान्ते च रणात् पार्थे संशप्तकवधं प्रति ॥
[2]व्यूढानीकस्ततो द्रोणः पाण्डवानां महाचमूम् ।
अभ्ययाद्भरतश्रेष्ठ धर्मराजजिघृक्षया ॥
[3]व्यूहं दृष्ट्वा सुपर्णं तु भारद्वाजकृतं तदा ।
व्यूहेन मण्डलार्धेन प्रत्यव्यूहद्युधिष्ठिरः ॥
[4]मुखमासीत् सुपर्णस्य भारद्वाजो महारथः ।
शिरो दुर्योधनो राजा सोदर्यैः सानुगैः सह ॥
[5]चक्षुषी कृतवर्मा च गौतमश्चास्यतां वरः ।
भूतवर्मा क्षेमशर्मा करकर्षश्च वीर्यवान् ॥
[6]कलिङ्गाः सिंहलाः प्राच्याः शूराभीरा दशेरकाः ।
शका यवनकाम्बोजास्तथा हंसपदाश्च ये ॥
[7]ग्रीवायां शूरसेनाश्च दरदा मद्रकेकयाः ।
गजाश्वरथपत्त्यौघास्तस्थुः शतसहस्रशः ॥
[8]भूरिश्रवाः शलः शल्यः सोमदत्तश्च बाह्लिकः ।
अक्षौहिण्या वृता वीरा दक्षिणं पक्षमाश्रिताः ॥
[9]विन्दानुविन्दावावन्त्यौ काम्बोजश्च सुदक्षिणः ।
वामं पक्षं समाश्रित्य द्रोणपुत्राग्रगाः स्थिताः ॥

(१) भा. ७।१९।२ ; भामु. ७।२०।२ रणात् (तदा).
(२) भा. ७।१९।३ ; भामु. ७।२०।३.
(३) भा. ७।१९।४ ; भामु. ७।२०।४ व्यूहं (व्यूढं).
(४) भा. ७।१९।५ ; भामु. ७।२०।५ मुखमा (मुखं त्वा) सह (वृतः).
(५) भा. ७।१९।६ ; भामु. ७।२०।५–६ च (ऽऽसीत्) भूतवर्मा (भूतशर्मा) कर्ष (काश).
(६) भा. ७।१९।७ ; भामु. ७।२०।६–७ पदा (पथा).
(७) भा. ७।१९।८ ; भामु. ७।२०।७–८ पत्त्यौ (पत्त्यो) शतसहस्रशः (परमदंशिताः).
(८) भा. ७।१९।९ ; भामु. ७।२०।८–९ शलः (तथा) पक्ष (पार्श्व).
(९) भा. ७।१९।१० ; भामु. ७।२०।९–१० पक्षं (पार्श्वं) ग्रगाः (ग्रतः).

[1]पृष्ठे कलिङ्गाः साम्बष्ठा मागधाः पौण्ड्रमद्रकाः।
गान्धाराः शकुनिप्राग्याः पार्वतीया वसातयः ॥
[2]पुच्छे वैकर्तनः कर्णः सपुत्रज्ञातिबान्धवः।
महत्या सेनया तस्थौ नानाध्वजसमुत्थया ॥
[3]जयद्रथो भीमरथः सांयात्रिकसभो जयः।
भूमिंजयो वृषक्राथो नैषधश्च महाबलः ॥
[4]वृता बलेन महता ब्रह्मलोकपुरस्कृताः।
व्यूहस्योपरि ते राजन् स्थिता युद्धविशारदाः ॥
[5]द्रोणेन विहितो व्यूहः पदात्यश्वरथद्विपैः।
वातोद्धूतार्णवाकारः प्रवृत्त इव लक्ष्यते ॥
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ॥
[6]चक्रव्यूहो महाराज आचार्येणाभिकल्पितः।
तत्र शक्रोपमाः सर्वे राजानो विनिवेशिताः ॥
[7]आरास्थानेषु विन्यस्ताः कुमाराः सूर्यवर्चसः ॥
[8]संघातो राजपुत्राणां सर्वेषामभवत्तदा।
कृताभिसमयाः सर्वे सुवर्णविकृतध्वजाः ॥
रक्ताम्बरधराः सर्वे सर्वे रक्तविभूषणाः।
सर्वे रक्तपताकाश्च सर्वे वै हेममालिनः ॥
[9]चन्दनागुरुदिग्धाङ्गाः स्रग्विणः सूक्ष्मवाससः।
सहिताः पर्यधावन्त कार्ष्णिं प्रति युयुत्सवः ॥

(१) भा. ७।१९।११ ; भामु. ७।२०।१०–११ निप्राग्याः ( नाः प्राच्याः ).

(२) भा. ७।१९।१२ ; भामु. ७।२०।११–१२ ध्वजसमु ( जनपदो ).

(३) भा. ७।१९।१३ ; भामु. ७।२०।१२–१३ सांयात्रिकसभो ( संपातिर्ऋषभो ).

(४) भा. ७।१९।१४ ; भामु. ७।२०।१३–१४ पुरस्कृताः ( परिष्कृताः ) स्योपरि ( स्योरसि ).

(५) भा. ७।१९।१५–१६ ; भामु. ७।२०।१४–१५.

(६) भा. ७।३३।१२ ; भामु. ७।३४।१३.

(७) भामु. ७।३४।१४.

(८) भा. ७।३३।१३–१४ ; भामु. ७।३४।१४–१६.

(९) भामु. ७।३४।१६–१७.

[1]तेषां दशसहस्राणि बभूवुर्दृढधन्विनाम्।
पौत्रं तव पुरस्कृत्य लक्ष्मणं प्रियदर्शनम् ॥
[2]अन्योन्यसमदुःखास्ते अन्योन्यसमसाहसाः।
अन्योन्यं स्पर्धमानाश्च अन्योन्यस्य हिते रताः ॥
[3]दुर्योधनस्तु राजेन्द्र सैन्यमध्ये व्यवस्थितः ॥
[4]कर्णदुःशासनकृपैर्वृतो राजा महारथैः।
देवराजोपमः श्रीमाञ्श्वेतच्छत्राभिसंवृतः।
चामरव्यजनाक्षेपैरुदयन्निव भास्करः ॥
[5]प्रमुखे तस्य सैन्यस्य द्रोणोऽवस्थितनायके।
सिन्धुराजस्तथाऽतिष्ठच्छ्रीमान् मेरुरिवाचलः ॥

प्रमुखे अग्रे। सैन्यस्य नायको द्रोणः। अवस्थितेति छन्दोनुरोधाद्विसर्गलोपः। नीटी.

[6]सिन्धुराजस्य पार्श्वस्था अश्वत्थामपुरोगमाः।
सुतास्तव महाराज त्रिंशत्त्रिदशसंनिभाः ॥
गान्धारराजः कितवः शल्यो भूरिश्रवास्तथा।
पार्श्वतः सिन्धुराजस्य व्यराजन्त महारथाः ॥
[7]भारद्वाजो महाराज जयद्रथमथाब्रवीत् ॥
त्वं चैव सौमदत्तिश्च कर्णश्चैव महारथः।
अश्वत्थामा च शल्यश्च वृषसेनः कृपस्तथा ॥
शतं चाश्वसहस्राणां रथानामयुतानि षट्।
द्विरदानां प्रभिन्नानां सहस्राणि चतुर्दश ॥
[8]पदातीनां सहस्राणि दंशितान्येकविंशतिः।
गव्यूतिषु त्रिमात्रेषु मामनासाद्य तिष्ठत ॥

(१) भा. ७।३३।१५ ; भामु. ७।३४।१७–१८.

(२) भा. ७।३३।१६ ; भामु. ७।३४।१८–१९.

(३) भामु. ७।३४।१९.

(४) भा. ७।३३।१७ ; भामु. ७।३४।२०–२१.

(५) भा. ७।३३।१८ ; भामु. ७।३४।२१–२२ यके ( यकः ).

(६) भा. ७।३३।१९–२० ; भामु. ७।३४।२२–२४.

(७) भा. ७।६३।११–१३ ; भामु. ७।८७।११–१३.

(८) भा. ७।६३।१४ ; भामु. ७।८७।१४ मात्रेषु ( मात्रासु ).

त्रिमात्रासु त्रिसंख्यासु । तिसृषु इत्यर्थः । नीटी.

[1]तत्रस्थं त्वां न संसोढुं शक्ता देवाः सवासवाः ।
किं पुनः पाण्डवाः सर्वे समाश्वसिहि सैन्धव ॥
एवमुक्तः समाश्वस्तः सिन्धुराजो जयद्रथः ।
संप्रायात् सह गान्धारैर्वृतस्तैश्च महारथैः ।
वर्मिभिः सादिभिर्यत्तैः प्रासपाणिभिरास्थितैः ॥
[2]चामरापीडिनः सर्वे जाम्बूनदविभूषिताः ।
जयद्रथस्य राजेन्द्र हयाः साधुप्रवाहिनः ।
ते चैव सप्तसाहस्रा द्विसाहस्राश्च सैन्धवाः ॥
[3]मत्तानामधिरूढानां हस्त्यारोहैर्विशारदैः ।
नागानां भीमरूपाणां वर्मिणां रौद्रकर्मिणाम् ॥
[4]अध्यर्धेन सहस्रेण पुत्रो दुर्मर्षणस्तव ।
अग्रतः सर्वसैन्यानां योत्स्यमानो व्यवस्थितः ॥
[5]ततो दुःशासनश्चैव विकर्णश्च तवाऽऽत्मजौ ।
सिन्धुराजार्थसिध्यर्थमग्रानीके व्यवस्थितौ ॥
[6]दीर्घो द्वादशगव्यूतिः पश्चार्धे पञ्च विस्तृतः ।
व्यूहः स चक्रशकटो भारद्वाजेन निर्मितः ॥

पश्चार्धे पश्चाद्भागे पञ्चगव्यूतिः । चक्रशकटः चक्रगर्भः शकटः । नीटी.

[7]नानानृपतिभिर्वीरैस्तत्र तत्र व्यवस्थितैः ।
रथाश्वगजपत्त्योघैर्द्रोणेन विहितः स्वयम् ॥

(१) भा. ७।६३।१५–१६ ; भामु. ७।८७।१५–१७.

(२) भा. ७।६३।१७ ; भामु. ७।८७।१७–१८ चैव स ( चैकस ) स्रा द्वि ( स्रास्त्रि ).

(३) भा. ७।६३।१८ ; भामु. ७।८७।१९ नामधि ( नां सुवि ).

(४) भा. ७।६३।१९ ; भामु. ७।८७।२० योत्स्य ( युध्य ).

(५) भा. ७।६३।२० ; भामु. ७।८७।२१.

(६) भा. ७।६३।२१ ; भामु. ७।८७।२२ व्यूहः स ( व्यूहस्तु ).

(७) भा. ७।६३।२२ ; भामु. ७।८७।२३.

[1]पश्चार्धे तस्य पद्मस्तु गर्भव्यूहः सुदुर्भिदः ।
सूची पद्मस्य मध्यस्थो गूढो व्यूहः पुनः कृतः ॥
[2]एवमेतं महाव्यूहं व्यूह्य द्रोणो व्यवस्थितः ।
सूचीमुखे महेष्वासः कृतवर्मा व्यवस्थितः ॥
[3]अनन्तरं च काम्बोजो जलसंधश्च मारिष ।
दुर्योधनः सहामात्यस्तदनन्तरमेव च ॥
[4]ततः शतसहस्राणि योधानामनिवर्तिनाम् ।
व्यवस्थितानि सर्वाणि शकटे सूचिरक्षिणः ॥
[5]तेषां च पृष्ठतो राजा बलेन महता वृतः ।
जयद्रथस्ततो राजन् सूचिपाशे व्यवस्थितः ॥
[6]शकटस्य तु राजेन्द्र भारद्वाजो मुखे स्थितः ।
अनु तस्याभवद् भोजो जुगोपैनं ततः स्वयम् ॥
[7]व्यूहं व्यूह्य महेष्वासो माकरं शत्रुतापनः ।
प्रत्युद्ययौ तदा कर्णः पाण्डवान् विजिगीषया ॥
[8]मकरस्य तु तुण्डे वै कर्णो राजन् व्यवस्थितः ।
नेत्राभ्यां शकुनिः शूर उलूकश्च महारथः ॥
द्रोणपुत्रस्तु शिरसि ग्रीवायां सर्वसोदराः ।
मध्ये दुर्योधनो राजा बलेन महता वृतः ॥

(१) भा. ७।६३।२३ ; भामु. ७।८७।२४ मध्यस्थो ( गर्भस्थो ) पुनः कृतः ( कृतः पुनः ).

(२) भा. ७।६३।२४ ; भामु. ७।८७।२५.

(३) भा. ७।६३।२५ ; भामु. ७।८७।२६ सहामात्यस्त ( च कर्णश्च त ).

(४) भा. ७।६३।२६ ; भामु. ७।८७।२७ सूचिरक्षिणः ( मुखरक्षिणाम् ).

(५) भा. ७।६३।२७ ; भामु. ७।८७।२८ राजन् सूचिपाशे ( राजा सूचीपार्श्वे ).

(६) भा. ७।६३।२८ ; भामु. ७।८७।२९.

(७) भा. ८।७।१४ ; भामु. ८।११।१४ माकरं ( मकरं ) तदा ( तथा ).

(८) भा. ८।७।१५–१६ ; भामु. ८।११।१५–१६.

[1]वामे पादे तु राजेन्द्र कृतवर्मा व्यवस्थितः ।
नारायणबलैर्युक्तो गोपालैर्युद्धदुर्मदः ॥

[2]पादे तु दक्षिणे राजन् गौतमः सत्यविक्रमः ।
त्रिगर्तैश्च महेष्वासैर्दाक्षिणात्यैश्च संवृतः ॥

[3]अनुपादस्तु यो वामस्तत्र शल्यो व्यवस्थितः ।
महत्या सेनया सार्धं मद्रदेशसमुत्थया ॥

अनुपादे पादस्थानस्यापि पश्चाद्भागे । नीटी.

[4]दक्षिणे तु महाराज सुषेणः सत्यसंगरः ।
वृतो रथसहस्रैश्च दन्तिनां च शतैस्तथा ॥

दक्षिणे अनुपादे । नीटी.

[5]पुच्छे आस्तां महावीरौ भ्रातरौ पार्थिवौ तदा ।
चित्रसेनश्च चित्रश्च महत्या सेनया वृतौ ॥

[6]भ्रातुस्तद्वचनं श्रुत्वा पाण्डवः श्वेतवाहनः ।
अर्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥

[7]वामपार्श्वेऽभवद्राजन् भीमसेनो व्यवस्थितः ।
दक्षिणे च महेष्वासो धृष्टद्युम्नो महाबलः ॥

(१) भा. ८।७।१७ ; भामु. ८।११।१७ वामे पा ( वामपा ) दुर्मदः ( दुर्मदैः ).

(२) भा. ८।७।१८ ; भामु. ८।११।१८ गर्तैश्च ( गर्तैः सु ).

(३) भा. ८।७।१९ ; भामु. ८।११।१९ पादस्तु ( पादे तु ).

(४) भा. ८।७।२० ; भामु. ८।११।२० स्रैश्च ( स्रेण ) शतैस्तथा ( त्रिभिः शतैः ).

(५) भा. ८।७।२१ ; भामु. ८।११।२१ आस्तां ( ह्यास्तां ) वीरौ ( वीर्यौ ) तृतीयचरणे ( चित्रश्च चित्रसेनश्च ).

(६) भा. ८।७।२७ ; भामु. ८।११।२८ तुस्तद्वचनं ( तुरेतद्वचः ).

(७) भा. ८।७।२८ ; भामु. ८।११।२९ ऽभवद्राजन् ( तु तस्याथ ) महाबलः ( व्यवस्थितः ).

[1]मध्ये व्यूहस्य साक्षात्तु पाण्डवः कृष्णसारथिः ।
नकुलः सहदेवश्च धर्मराजश्च पृष्ठतः ॥

[2]चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
नार्जुनं जहतुर्युद्धे पाल्यमानौ किरीटिना ॥

[3]शेषा नृपतयो वीराः स्थिता व्यूहस्य दंशिताः ।
यथाभावं यथोत्साहं यथासत्त्वं च भारत ॥

[4]एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः ।
तावकाश्च महेष्वासा युद्धायैव मनो दधुः ॥

संजय उवाच–

[5]शृणु व्यूहस्य रचनामर्जुनश्च यथा गतः ।
परिदाय नृपं तेभ्यः सङ्ग्रामश्चाभवद्यथा ॥

[6]कृपः शारद्वतो राजन् मागधश्च तरस्विनः ।
सात्वतः कृतवर्मा च दक्षिणं पक्षमाश्रिताः ॥

[7]तेषां प्रपक्षे शकुनिरुलूकश्च महारथः ।
सादिभिर्विमलप्रासैस्तवानीकमरक्षताम् ॥

गान्धारिभिरसंभ्रान्तैः पार्वतीयैश्च दुर्जयैः ।
शलभानामिव व्रातैः पिशाचैरिव दुर्दृशैः ॥

[8]चतुस्त्रिंशत्सहस्राणि रथानामनिवर्तिनाम् ।
संशप्तका युद्धशौण्डा वामं पार्श्वमपालयन् ॥

(१) भा. ८।७।२९ ; भामु. ८।११।३० साक्षात्तु ( राजा तु ) कृष्णसारथिः ( च धनंजयः ) राजश्च (राजस्य).

(२) भा. ८।७।३० ; भामु. ८।११।३१.

(३) भा. ८।७।३१ ; भामु. ८।११।३२ भावं ( भागं ) सत्त्वं ( यत्नं ).

(४) भा. ८।७।३२ ; भामु. ८।११।३३.

(५) भा. ८।३१।१० ; भामु. ८।४६।१० दाय ( वार्य ) तेभ्यः ( स्वं स्वं ).

(६) भा. ८।३१।११ ; भामु. ८।४६।११ धश्च ( धाश्च ).

(७) भा. ८।३१।१२–१३ ; भामु. ८।४६।१२ –१३.

(८) भा. ८।३१।१४ ; भामु. ८।४६।१४ स्त्रिंशत्स ( विंशत्स ).

[1]समुच्चितास्तव सुतैः कृष्णार्जुनजिघांसवः ।
तेषां प्रपक्षः काम्बोजाः शकाश्च यवनैः सह ॥

[2]निदेशात् सूतपुत्रस्य सरथाः साश्वपत्तयः ।
आह्वयन्तोऽर्जुनं तस्थुः केशवं च महाबलम् ॥

[3]मध्येसेनामुखं कर्णो व्यवातिष्ठत दंशितः ।
चित्रवर्माङ्गदः स्रग्वी पालयन् ध्वजिनीमुखम् ॥

[4]रक्ष्यमाणः सुसंरब्धैः पुत्रैः शस्त्रभृतां वरः ।
वाहिनीप्रमुखं वीरः संप्रकर्षन्नशोभत ॥

[5]अयोरत्निर्महाबाहुः सूर्यवैश्वानरद्युतिः ।
महाद्विपस्कन्धगतः पिङ्गलः प्रियदर्शनः ।
दुःशासनो वृतः सैन्यैः स्थितो व्यूहस्य पृष्ठतः ॥

[6]तमन्वयान्महाराज स्वयं दुर्योधनो नृपः ।
चित्राश्वैश्चित्रसंनाहैः सोदर्यैरभिरक्षितः ॥

[7]रक्ष्यमाणो महावीर्यैः सहितैर्मद्रकेकयैः ।
अशोभत महाराज देवैरिव शतक्रतुः ॥

(१) भा. ८।३१।१५ ; भामु. ८।४६।१५ समुच्चि (समन्वि) पक्षः (पक्षाः).

(२) भा. ८।३१।१६ ; भामु. ८।४६।१६.

(३) भा. ८।३१।१७ ; भामु. ८।४६।१७ मध्येसेनामुखं कर्णो व्य (मध्ये सेनामुखे कर्णोऽप्य) ध्वजि (वाहि).

(४) भा. ८।३१।१८ ; भामु. ८।४६।१८ रक्ष्यमाणः (रक्ष्यमाणैः) नीप्रमुखं (नीं प्रमुखे).

(५) भा. ८।३१।१९ ; भामु. ८।४६।१९-२० अयोरत्निर्म (अभ्यवर्तन्म) द्युतिः (प्रभः) पिङ्गलः (पिङ्गाक्षः).

(६) भा. ८।३१।२० ; भामु ८।४६।२०-२१ त्राश्वै (त्राश्वै).

(७) भा. ८।३१।२१ ; भामु. ८।४६।२१-२२.

[1]अश्वत्थामा कुरूणां च ये प्रवीरा महारथाः ।
नित्यमत्ताश्च मातङ्गाः शूरैर्म्लेच्छैरधिष्ठिताः ।
अन्वयुस्तद्रथानीकं क्षरन्त इव तोयदाः ॥

[2]ते ध्वजैर्वैजयन्तीभिर्ज्वलद्भिः परमायुधैः ।
सादिभिश्चाऽऽस्थिता रेजुर्द्रुमवन्त इवाचलाः ॥
तेषां पदातिनागानां पादरक्षाः सहस्रशः ।
पट्टिशासिधराः शूरा बभूवुरनिवर्तिनः ॥
सादिभिः स्यन्दनैर्नागैरधिकं समलंकृतैः ।
स व्यूहराजो विबभौ देवासुरचमूपमः ॥

[3]बार्हस्पत्यः सुविहितो नायकेन विपश्चिता ।
नृत्यतीव महाव्यूहः परेषामादधद्भयम् ॥

[4]गजानां रथिनो मध्ये रथानामनु सादिनः ।
सादिनामन्तरा स्थाप्यं पादातमिह दंशितम् ॥

गजानां मध्ये रथिनः, रथिनां मध्ये सादिनः, सादिनां मध्ये पादातम् । 　　　　नीटी.

[5]य एवं व्यूहते राजा स नित्यं जयते द्विषः ।
तस्मादेवं विधातव्यं नित्यमेव युधिष्ठिर ॥

## वाल्मीकिरामायणम्

रामसैन्यस्य महाव्यूहः

[6]बलं च तद्वै विभजञ्शास्त्रदृष्टेन कर्मणा ।
शशास कपिसेनाया बलमादाय वीर्यवान् ॥
अङ्गदः सह नीलेन तिष्ठेदुरसि दुर्जयः ॥

(१) भा. ८।३१।२२ ; भामु. ८।४६।२२-२३ च्छैरधिष्ठि (च्छैः समन्वि).

(२) भा. ८।३१।२३-२५ ; भामु. ८।४६।२४-२६.

(३) भा. ८।३१।२६ ; भामु. ८।४६।२७ चतुर्थचरणे (परेषां भयमादधत्).

(४) भा. १२।१००।९ ; भामु. १२।९९।९ मन्तरा (मन्तरे) मिह (मपि).

(५) भा. १२।१००।१० ; भामु. १२।९९।१० जयते (जयति).

(६) वाराकु. ६।२४।१४-२१.

तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः ।
आश्रित्य दक्षिणं पार्श्वमृषभो वानरर्षभः ॥
गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
तिष्ठेद्वानरवाहिन्याः सव्यं पार्श्वं समाश्रितः ॥
मूर्ध्नि स्थास्याम्यहं युक्तो लक्ष्मणेन समन्वितः॥
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः॥
जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ।
पश्चार्धमिव लोकस्य प्रचेतास्तेजसा वृतः ॥
सुविभक्तमहाव्यूहा महावानररक्षिता ।
अनीकिनी सा विबभौ यथा द्यौः साभ्रसंप्लवा॥

रामकृतः गारुडव्यूहः

[1]एवं वृक्षशिलाभिश्च पूरयित्वा महार्णवम् ।
द्वारमावृत्य लङ्काया रामस्तिष्ठति सायुधः ॥
[2]गारुडं व्यूहमास्थाय वानरैर्बहुभिर्वृतः ।
मां विसृज्य महातेजा लङ्कामेवोपवर्तते ॥

## कौटिलीयमर्थशास्त्रम्

परसैन्यापेक्षया स्वसैन्यव्यूहनरीतिः

*[3]अदक्षिणामुखं पृष्ठतःसूर्यमनुलोमवातमनीकं स्वभूमौ व्यूहेत । परभूमिव्यूहे चाश्वांश्चारयेयुः ॥

यत्र स्थानं प्रजवश्चाभूमि व्यूहस्य, तत्र स्थितः प्रजवितश्चोभयथा जीयेत । विपर्यये जयत्युभयथा स्थाने प्रजवे च ॥

समा विषमा व्यामिश्रा वा भूमिरिति पुरस्तात्पार्श्वाभ्यां पश्चाच्च ज्ञेया । समायां दण्डमण्डलव्यूहाः, विषमायां भोगसंहतव्यूहाः, व्यामिश्रायां विषमव्यूहाः ॥

सम–विषम–शुद्ध-मिश्रव्यूहविचारः बलसारासारानुसारेण रिपुभयप्रकारानुसारेण च

[1]पञ्चधनुःशतावकृष्टदुर्गमवस्थाप्य युद्धमुपेयात्, भूमिवशेन वा । विभक्तमुख्यामचक्षुर्विषये मोक्षयित्वा सेनां सेनापतिनायकौ व्यूहेयाताम् ॥

'पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः' इति सूत्रम् । पक्षौ पञ्चव्यूहात्मना स्थाप्यमानस्य बलस्य बहिः पुरस्तात्कोट्यौ, कक्षौ पश्चादन्तःपार्श्वे, उरस्यं मध्यम्, एषां पञ्चानां समूहविशेषाणां बलाग्रतः बलस्य सैन्यस्य अग्रं परिमाणं तदानुगुण्येन व्यूहविभागः व्यूहस्य विन्यासस्य विभजनम् अभिधीयते इति सूत्रार्थः । व्यूहविभागपूर्वं युध्यमानस्यैव सैन्यस्य जयलाभो भवतीति व्यूहविभागस्येह कथनम् ।

पञ्चधनुःशतावकृष्टदुर्गमिति । पञ्चभिर्धनुःशतैर्विप्रकृष्टं दुर्गं स्कन्धावारः यस्मात् तत् तथाभूतम् अवस्थाप्य कृत्वा युद्धं युद्धस्थलम् उपेयात् स्वीकुर्यात् । युद्धभूमिं स्कन्धावारात् पञ्चधनुःशतविप्रकृष्टां कुर्यादित्यर्थः । भूमिवशेन वेति । लभ्यमानभूमिपरिमाणानुरोधेन पञ्चधनुःशतदूरविप्रकृष्टां तदधिकदूरविप्रकृष्टां तन्न्यूनदूरविप्रकृष्टां वा युद्धभूमिं कुर्यादित्यर्थः । विभक्तमुख्यामिति । प्रतिग्रहदेशपक्षकक्षोरस्येषु विभज्य निवेशितप्रधानां सेनाम् अचक्षुर्विषये मोक्षयित्वा प्रतिव्यूहरचनशङ्कया परदृष्ट्यगोचरे स्थापयित्वा सेनापतिनायकौ– सेनापतिः पदिकदशकपतिः, नायकः तद्दशकाधिपतिः, एतौ व्यूहेयातां विभज्य विन्यसेताम् । श्रीमूला.

शमान्तरं पत्तिं स्थापयेत् । त्रिशमान्तरमश्वम् । पञ्चशमान्तरं रथं हस्तिनं वा । द्विगुणान्तरं त्रिगुणान्तरं वा व्यूहेत । एवं यथासुखमसंबाधं युध्येत ॥

---

* एषां वचनानां व्याख्यानम् 'युद्धसामान्यविचारः' इति यात्रावान्तरप्रकरणे (पृ. २६१४) द्रष्टव्यम् ।

(१) वारा. ६।६।१० ; वाराकु. ६।३०।१२ एवं वृक्ष (एष शैलैः) वृत्य (श्रित्य).

(२) वारा. ६।६।११ ; वाराकु. ६।३०।१३ गारुडं (गरुडं) वानरैर्बहु (सर्वतो हरि) वोप (वाभि).

(३) कौ. १०।३.

(१) कौ. १०।५.

पदात्यादीनां व्यूहनप्रकारानाह— शमान्तरमिति । शमान्तरम्— शमः चतुर्दशाङ्गुलः, तत्परिमितम् अन्तरं पत्त्योर्मिथोऽन्तरालं यस्मिन् कर्मणि तत् तथा पत्तिं स्थापयेत् । पत्तित्रिगुणान्तरालमश्वं पत्तिपञ्चगुणान्तरालं रथं हस्तिनं च स्थापयेदित्याह— त्रिशमान्तरमित्यादि । पदात्यादीनां चतुर्णां बहुत्वेऽन्तरालमानमवरकल्पेनोक्त्वा तेषां बहुत्वे मध्यमोत्तमकल्पाभ्यामन्तरालमानं विधत्ते— द्विगुणान्तरमित्यादि । तत्तदुक्तमानद्विगुणान्तरालं तत्त्रिगुणान्तरालं वा पत्त्यादिचतुष्टयं स्थापयेदित्यर्थः । अन्तरालमानवर्धनस्य फलमाह— एवमित्यादि । असंबाधं संमर्दरहितम् । श्रीमूला.

**पञ्चारत्नि धनुः, तस्मिन् धन्विनं स्थापयेत् । त्रिधनुष्यश्वम् । पञ्चधनुषि रथं हस्तिनं वा । पञ्चधनुरनीकसंधिः पक्षकक्षोरस्यानाम् ॥**

अथ धन्विविषयमुत्तमोत्तमाश्वादिविषयं चान्तरालविधिमाह— पञ्चेत्यादि । पञ्चारत्नि पञ्चहस्तं धनुः तत्संज्ञम् । तस्मिन् धनुर्मितेऽन्तराले धन्विनं धानुष्कं स्थापयेत् । त्रिधनुषि पञ्चदशहस्तान्तराले अश्वं स्थापयेत् । पञ्चधनुषि पञ्चविंशतिहस्तान्तराले रथं हस्तिनं वा गजं च स्थापयेत् । पक्षादीनां पञ्चानामनीकानां परस्परान्तरालं कियत् कर्तव्यमित्याह— पञ्चधनुरिति । पक्षकक्षोरस्यानाम्— पक्षौ बलस्य बहिः पुरस्तात्कोटयौ, कक्षौ पश्चादन्तःपार्श्वे, उरस्यं मध्यम्, इत्येषां पञ्चानामनीकानाम् अनीकसंधिः अनीकमिथोन्तरालं पञ्चधनुः पञ्चविंशतिहस्तमानम् । श्रीमूला.

**अश्वस्य त्रयः पुरुषाः प्रतियोद्धारः । पञ्चदश रथस्य हस्तिनो वा, पञ्च चाश्वाः । तावन्तः पादगोपाः वाजिरथद्विपानां विधेयाः ॥**

अश्वादीनामग्रगा भूत्वा शत्रुं ये प्रतियुध्यन्ते तेषां संख्यामाह— अश्वस्य त्रय इत्यादि । पञ्चदशेति । तावन्तः प्रतियोद्धारः रथस्य हस्तिनो वा गजस्य च । पञ्च चाश्वा इति । एकैकस्य रथस्य गजस्य च त्रयः पुरुषा न केवलमग्रयायिनः, किंतु पञ्च पञ्चाश्वा अप्यग्रयायिन इत्यर्थः । तावन्त इति । पञ्च पादगोपाः पादरक्षकाः वाजिरथद्विपानां विधेयाः कर्तव्याः । तदेवं रथस्यैकस्य पुरोगाः पुरुषाः पञ्चदश पञ्चाश्वाः पादगोपाश्च पञ्चेति सिद्धम् । श्रीमूला.

**त्रीणि त्रिकाण्यनीकं रथानामुरस्यं स्थापयेत् । तावत् कक्षं पक्षं चोभयतः । पञ्चचत्वारिंशदेवं रथा व्यूहे भवन्ति ॥**

यथोक्तपुरुषादियुक्ता रथा उरस्यस्थानीकस्य कति स्थापनीया इत्याह— त्रीणीति । रथानां त्रीणि त्रिकाणि पृथक् पृथगेकपङ्क्तिरूपतया मिलितस्थितानि त्रीणि त्रितयानि उरस्यम् अनीकं स्थापयेत् मध्यानीकात्मना कल्पयेत् । एवं नव रथा मध्यानीके भवन्ति । तावदिति । उरस्यानीकतुल्यरथपरिमाणं कक्षं कक्षानीकं पक्षं च पक्षानीकं च उभयतः उभयोः पार्श्वयोः कोटयोश्च भवतीत्यर्थः । अनेन प्रकारेण उरस्यादिपञ्चानीकात्मके व्यूहे प्रत्येकं नवरथयोगात् संकलनया पञ्चचत्वारिंशत् रथा भवन्तीत्याह— पञ्चेत्यादि । श्रीमूला.

**द्वे शते पञ्चविंशतिश्चाश्वाः, षट्शतानि पञ्चसप्ततिश्च पुरुषाः प्रतियोद्धारः । तावन्तः पादगोपा वाजिरथद्विपानाम् ॥**

रथानां पञ्चचत्वारिंशत्त्वेऽश्वादीनां सिध्यन्तीमियत्तामाह— द्वे शते इत्यादि । एकैकस्य रथस्य पञ्चाश्वत्वात् पञ्चचत्वारिंशतो रथानाम् अश्वाः पञ्चविंशत्यधिकद्विशतसंख्या भवन्ति, एकैकस्याश्वस्य पुरोयायिपुरुषत्रित्वयोगात् तावतामश्वानां पुरोयायिपुरुषाः पञ्चसप्तत्यधिकषट्छतसंख्या भवन्तीत्यर्थः । तावन्त इत्यादि । अश्वानां यावन्तः पुरोयायिपुरुषाः तावन्तः पादगोपाः, तथा रथानां द्विपानां च यावन्तः पुरोयायिनोऽश्वाः पुरुषाश्च तावन्तः पादगोपा भवन्तीत्यर्थः । श्रीमूला.

**एष समव्यूहः । तस्य द्विरथोत्तरा वृद्धिरा एकविंशतिरथात् । इत्येवमोजा दश समव्यूहप्रकृतयो भवन्ति ॥**

एष समव्यूह इति । यथोक्तः समव्यूह इत्युच्यते, त्रिकतुल्यत्वादित्यर्थः । तस्येति । व्यूहावयवस्य त्रिकस्य द्विरथोत्तरा द्वौ द्वौ रथावुत्तरौ पूर्वो पूर्वो प्रकृतिं

कृत्वा वर्धमानौ यस्याः सा तथाभूता आ एकविंशतिरथात् यावदेकविंशतिरथा वर्धिता भवन्ति तावत्पर्यन्तेत्यर्थः, वृद्धिः । इत्येवम् अनेन प्रकारेण ओजाः अयुग्माः त्रिकप्रकृतौ द्वियोगेन पञ्च, पञ्चके द्वियोगेन सप्त, सप्तके द्वियोगेन नव, नवके द्वियोगेन एकादश, एकादशके द्वियोगेन त्रयोदश, त्रयोदशके द्वियोगेन पञ्चदश, पञ्चदशके द्वियोगेन सप्तदश, सप्तदशके द्वियोगेन एकोनविंशतिः, एकोनविंशतौ द्वियोगेनैकविंशतिरित्येवमयुग्मरूपा इत्यर्थः, दश समव्यूहप्रकृतयो भवन्ति समव्यूहनयोनयः प्रभेदा जायन्ते । श्रीमूला.

**पक्षकक्षोरस्यानामतो विषमसंख्याने विषमव्यूहः । तस्यापि द्विरथोत्तरा वृद्धिरा एकविंशतिरथात् । इत्येवमोजा दश विषमव्यूहप्रकृतयो भवन्ति ॥**

विषमव्यूहमाह- पक्षकक्षोरस्यानामिति । तेषाम् अतः व्यूहाङ्गतः विषमसंख्याने व्यूहाङ्गसंख्यासाम्यविरहे इत्यर्थः, विषमव्यूहः । विषमव्यूहस्यापि द्विरथोत्तरैकविंशतिरथपर्यन्तवृद्ध्या दशायुग्मरूपा विषमव्यूहयोनयो भेदा भवन्तीत्याह- तस्यापीत्यादि । श्रीमूला.

**[1]अतः सैन्यानां व्यूहशेषमावापः कार्यः । रथानां द्वौ त्रिभागावङ्गेष्वावापयेत् । शेषमुरस्यं स्थापयेत् । एवं त्रिभागोनो रथानामावापः कार्यः । तेन हस्तिनामश्वानामावापो व्याख्यातः ॥**

अथाऽऽवापविधिमाह- अत इति । एषु समविषमव्यूहेषु सैन्यानां व्यूहशेषं व्यूहनादवशिष्टं सैन्यम् आवापः कार्यः आवापतां नेतव्यम् । आ समन्तादुप्यते इति व्युत्पत्त्या आवापः प्रक्षेपः । व्यूहावशिष्टं सैन्यं व्यूहेषु प्रक्षेप्तव्यमित्यर्थः । प्रक्षेपणप्रकारमाह- रथानामित्यादि । व्यूहनशिष्टानां रथानां त्रिधा विभक्तानां द्वौ त्रिभागौ अङ्गेषु बहिः पुरस्तात्कोट्योः पश्चादन्तःपार्श्वयोश्चेत्येतेषु आवापयेत् । शेषम् अवशिष्टं त्रिभागम् उरस्यं स्थापयेत् मध्यगं कुर्यात् । आवाप्यत्वेनावशिष्टस्य सैन्यस्य व्यूढसैन्यापेक्षया परिमाणतोऽधिकत्वे न्यूनत्वे समत्वे वा कथमावापः कर्तव्य इत्यत्राऽऽह- एवं त्रिभागोन इत्यादि । व्यूढं रथानीकमपेक्ष्य त्रिभागन्यून एव रथावापः कर्तव्यः, न तु ततोऽधिकस्तेन समो वेत्यभिप्रायः । रथन्यायं हस्तिष्वश्वेषु चातिदिशति- तेनेत्यादि । हस्तिनोऽश्वांश्च त्रेधा विभज्य द्वौ त्रिभागौ पक्षकक्षयोः शेषमुरस्ये च प्रक्षिपेदित्यर्थः । श्रीमूला.

**[1]यावदश्वरथद्विपानां युद्धसंबाधं न कुर्यात् तावदावापः कार्यः ॥**

यत्परिमाणं बलशेषं व्यूहेषु प्रक्षिप्यमाणम् अश्वरथद्विपानां युद्धसंबाधं युद्धसंमर्दं न कुर्यात् तावत् आवापः कार्यः । त्रिभागोन इत्यादयस्तु विषयः प्रदर्शनार्था इति भावः । श्रीमूला.

**दण्डबाहुल्यमावापः । पत्तिबाहुल्यं प्रत्यावापः । एकाङ्गबाहुल्यमन्वावापः । दूष्यबाहुल्यमत्यावापः ॥**

प्रत्यावापादीन् आवापविशेषान् वक्तुमावापपदार्थमाह- दण्डबाहुल्यमिति । दण्डस्य बलस्य व्यूहरचनविनियुक्तस्य बाहुल्यं व्यूहरचनातिरिक्तबलप्रक्षेपेण वर्धनम् आवापः आवापपदार्थः । पत्तिबाहुल्यं पदातिमात्रेण वर्धनं प्रत्यावापः । एकाङ्गबाहुल्यमिति । एकेनाङ्गेन अश्वगजरथान्यतमबलेन वर्धनम् अन्वावापः । दूष्यबाहुल्यमिति । दूष्याः राजावग्रहचारिणो मुख्याः, तद्बाहुल्यम् अत्यावापः । श्रीमूला.

**परावापात् प्रत्यावापाद्याचतुर्गुणादाष्टगुणादिति वा विभवतः सैन्यानामावापः कार्यः ॥**

व्यूढे परकीयबले यावान् आवापः तदपेक्षया चतुर्गुणाद्यष्टगुणपर्यन्तप्रमाणः स्वविभवानुगुण्येन वा सैन्यानामावापः कार्य इत्याह- परावापादिति । इह वाशब्दः 'एवं त्रिभागोनः' इति व्यूढस्वबलापेक्षया पूर्वमुक्तादावापप्रमाणादस्याऽऽवापप्रमाणस्य पक्षान्तरत्वद्योतनार्थः ।

---

(१) कौ. १०।५ ; जम. २०।४० (रथानां द्वौ त्रिभागावङ्गेष्वावपेच्छेषमुरस्यवस्थापयेत् । तेन हस्तिनामश्वानां चाऽऽवापा व्याख्याताः ।) एतावदेव.

(१) कौ. १०।५.

इह 'परावापात्' इत्येतदनन्तरं 'प्रत्यावापात्' इत्यधिकं पठ्यते। तच्च नातिप्रयोजनकम्। तदित्थम् 'त्रीणि त्रिकाण्यनीकं रथानामुरस्यं स्थापयेत्' इत्यादिना रथव्यूहोऽभिहितः। श्रीमूला.

**रथव्यूहेन हस्तिव्यूहो व्याख्यातः। व्यामिश्रो वा हस्तिरथाश्वानाम्। चक्रान्तयोर्हस्तिनः, पार्श्वयोरश्वमुख्याः, रथा उरस्ये। हस्तिनामुरस्यं रथानां कक्षावश्वानां पक्षाविति मध्यभेदी। विपरीतोऽन्तर्भेदी॥**

रथव्यूहविधानं हस्तिव्यूहेऽतिदिशति– रथव्यूहेनेत्यादि। हस्तिप्रधानो व्यूहो हस्तिव्यूहः। तत्र हस्तिनां संख्या रथव्यूहोक्तया रथसंख्यया समाना, न तु ततोऽधिकेत्यभिप्रायः। हस्तिरथाश्वमिश्रणरूपो वा हस्तिव्यूहः कर्तव्य इत्याह– व्यामिश्रो वेत्यादि। करणप्रकारमाह– चक्रान्तयोरिति। चक्रस्य सैन्यस्य अन्तयोः बहिःपुरस्तात्कोटयोः पक्षशब्दवाच्ययोः हस्तिनः, स्थाप्या इति शेषः। पार्श्वयोः पश्चादन्तःकक्षयोर्जघनापरपर्याययोः अश्वमुख्याः स्थाप्याः। 'अश्वा मुख्याः' इति व्यस्तमपि पठ्यते। रथाः उरस्ये मध्ये स्थाप्याः। एवंविधहस्त्यादिस्थापनयुक्तो हस्तिव्यूहस्यैकः प्रकार इत्यभिप्रायः। द्वितीयं प्रकारमाह– हस्तिनामित्यादि। इति मध्यभेदी अयं प्रकारो मध्यभेदीत्युच्यते, मध्ये हस्तिस्थापनरूपविशेषवत्त्वादित्यर्थः। तृतीयं प्रकारमाह– विपरीत इति। उक्तप्रकारद्वयविपरीतः। पार्श्वापरपर्याययोः कक्षयोर्गजाः रथाः पक्षयोः उरस्येऽश्वा इत्येवंविधहस्त्यादिविन्यासवानित्यर्थः। अन्तर्भेदी पश्चादन्तःपार्श्वयोर्हस्तिस्थापनरूपविशेषवत्त्वादन्तर्भेदीत्युच्यते। अनेन न्यायेन प्रथमः प्रकारः पक्षभेदीति व्यपदेष्टुमर्हः, पक्षयोर्हस्तिविन्यासरूपविशेषवत्त्वादिति बोद्धव्यम्। श्रीमूला.

**हस्तिनामेव तु शुद्धः। सांनाह्यानामुरस्यम्, औपवाह्यानां जघनम्, व्यालानां कोट्याविति॥**

अथ शुद्धं व्यूहमाह– हस्तिनामेव तु शुद्ध इति। केवलानां गजानाम् अश्वादिमिश्रणरहितः शुद्धो व्यूहो भवति। तत्र सांनाह्यादीनां त्रिविधानां गजानां विन्यासस्थानान्याह– सांनाह्यानामिति। युद्धयोग्यानाम् उरस्यं मध्यम्, स्थानमिति शेषः। औपवाह्यानां राजवाहनानां जघनं पश्चादन्तःपार्श्वे स्थानम्। व्यालानां दुष्टगजानां कोट्यौ पक्षौ स्थानम्। इतिशब्दः शुद्धहस्तिव्यूहकथनसमाप्तौ। श्रीमूला.

**अश्वव्यूहो वर्मिणामुरस्यं शुद्धानां कक्षपक्षाविति॥**

शुद्धेऽश्वव्यूहेऽश्वानां स्थापनप्रकारमाह– अश्वव्यूह इत्यादि। वर्मिणाम्– वर्म कवचम्, तद्वतामश्वानाम्। शुद्धानां वर्मरहितानामित्यर्थः। श्रीमूला.

**पत्तिव्यूहः पुरस्तादावरणिनः पृष्ठतो धन्विनः। इति शुद्धाः॥**

शुद्धे पत्तिव्यूहे पत्तीनां स्थापनप्रकारमाह– पत्तिव्यूह इत्यादि। पुरस्तात् कोट्योः। आवरणिनः कवचिनः पत्तयः। पृष्ठतः पश्चादन्तःपार्श्वयोः। शुद्धा इति। अव्यामिश्रा गजादिव्यूहा दर्शिता इत्यर्थः। श्रीमूला.

**पत्तयः पक्षयोरश्वाः पार्श्वयोः, हस्तिनः पृष्ठतो रथाः पुरस्तात्, परव्यूहवशेन वा विपर्यासः। इति द्व्यङ्गबलविभागः। तेन त्र्यङ्गबलविभागो व्याख्यातः॥**

अथ मिश्रव्यूहे दर्शयितव्ये प्रथमं द्विसेनाङ्गमिश्रमाह– पत्तय इत्यादि। इह पार्श्वयोरित्यन्तेनैको द्व्यङ्गबलविभागः उक्तः, पुरस्तादित्यन्तेनापरः, परव्यूहेत्यादिना चान्यः। तत्र परव्यूहवशेन वेत्यादेरयमर्थः– उक्तव्यवस्थाद्वयव्यत्ययोऽपि शत्रुव्यूहभञ्जनानुगुण्यमवेक्ष्य कर्तव्य इति। त्र्यङ्गबलविभागेऽप्ययं न्यायोऽनुसर्तव्य इत्याह– तेनेत्यादि। इत्थं पक्षादीनां बलाग्रतो व्यूहविभागः प्रपञ्चितः। श्रीमूला.

**दण्डसंपत् सारबलं पुंसाम्। हस्त्यश्वयोर्विशेषः– कुलं जातिः सत्त्वं वयःस्थता प्राणो वर्ष्म जवस्तेजः शिल्पं स्थैर्यमुदग्रता विधेयत्वं सुव्यञ्जनाचारतेति॥**

अथ बलानां सारफल्गुभाववशादपि विभागं वक्तुं सूत्रयति– 'सारफल्गुबलविभागः' इति। साराणां पितृपैतामहत्वनित्यत्वादिदण्डसंपद्युक्तानां फल्गूनां तदति-

रिक्तानां च बलानां पत्त्यादीनां विभागः विभज्य पक्षादिषु निवेशनम् अभिधीयते इति सूत्रार्थः ।

तत्र पदात्यादीनां सारबलत्वं व्यवस्थापयति– दण्डसंपदिति । या 'पितृपैतामहो नित्यो वश्यः' (कौ. ६।१) इत्यादिना प्रकृतिसंपत्प्रकरणेऽभिहिता सा सारबलं पुंसां पदातीनां सारबलत्वमित्यर्थः । हस्त्यश्वयोः कुलजातिसत्त्वादिरूपा गुणविशेषा एव सारबलत्वमित्याह– हस्त्यश्वयोर्विशेष इत्यादि । तत्र कुलम् एकप्रभवत्वम्, जातिः भद्रमन्द्रत्वादिः, सत्त्वं धैर्यम्, वयःस्थता कर्मक्षमवयःप्राप्तिः, प्राणः कायबलम्, वर्ष्म समुचितोत्सेधायामपरिणाहयोगित्वम्, जवः वेगः, तेजः पराक्रमणशीलत्वं परिभवासहिष्णुता वा, शिल्पं सुशिक्षितत्वम्, स्थैर्यं प्रहारेऽप्यारब्धकर्मापरित्यागित्वम्, उदग्रता उच्छ्रितमुखत्वम्, विधेयत्वं नियन्तृवश्यता, सुव्यञ्जनाचारता शोभनलक्षणत्वं शोभनचेष्टितत्वं च । तन्विह रथानां सारबलत्वं कस्मान्नोक्तम्? उच्यते । तेषां हि सारबलत्वं नेतृपुरुषाश्वद्वारकं वक्तव्यम्, तच्च पुरुषाश्वयोः सारबलत्ववचनेनैवोक्तप्रायमित्यदोषः । श्रीमूला.

**पत्त्यश्वरथद्विपानां सारत्रिभागमुरस्यं स्थापयेत्, द्वौ त्रिभागौ कक्षं पक्षं चोभयतः । अनुलोममनुसारम् । प्रतिलोमं तृतीयसारम् । फल्गु प्रतिलोमम् । एवं सर्वमुपयोगं गमयेत् ॥**

यथोक्तरूपं पत्त्यादिसारं व्यूहे कथमुपयुञ्जीतेत्यपेक्षायामाह– पत्त्यश्वरथद्विपानामिति । तेषां सारत्रिभागं सारस्य त्रिधा विभक्तस्यैकं त्रिभागम् उरस्यं स्थापयेत् उरस्यात्मना निवेशयेत् । मध्यगतं कुर्यादित्यर्थः । द्वौ त्रिभागौ कक्षं पक्षं चोभयतः कक्षात्मना पक्षात्मना चेत्युभयात्मना स्थापयेत् । तयोस्त्रिभागयोरेकं पश्चादन्तःपार्श्वयोरपरं पुरस्तात्कोट्योश्चार्धशो निवेशयेदित्यर्थः । एष उत्तमसारस्य विनियोगप्रकारः । तदपेक्षया किंचिदवरस्यानुसाराख्यस्य सारभेदस्य विनियोगमाह– अनुलोममनुसारमिति । स्थापयेदिति वर्तते । अनुसारं बलम् अनुलोमं स्थापयेत् उत्तमसारस्य पृष्ठतो निवेशयेत् । अनुलोमं ह्यनुसारमुच्यते यत् पृष्ठगं भवति । प्रतिलोमं तु तद्विपरीतं पुरोगतम् । अनुसारात् किंचिदवरस्य सारभेदस्य विनियोगमाह– प्रतिलोममिति । तृतीयसारं द्वितीयभूतानुसारापेक्षया तृतीयं सारं प्रतिलोमं स्थापयेत् उत्तमसारस्याग्रगतं कुर्यात् । अथ फल्गुनो बलस्य विनियोगमाह– फल्ग्विति । तत् प्रतिलोमं स्थापयेत् । तृतीयसारस्यापि पुरःस्थितं कुर्यादित्यर्थः । एवमिति । अनेन प्रकारेण सर्वं सर्वप्रकारं बलम् उपयोगं गमयेत् नयेत् । श्रीमूला.

**फल्गुबलमन्तेष्ववधाय वेगोऽभिहुतो भवति । सारबलमग्रतः कृत्वा कोटीष्वनुसारं कुर्यात् । जघने तृतीयसारम्, मध्ये फल्गुबलमेतत् सहिष्णु भवति ॥**

किमर्थं सारे विद्यमाने फल्गुबलस्याग्रतो निवेशनमित्यत्राऽऽह– फल्गुबलमिति । तत् अन्तेषु पक्षादीनामग्रेषु अवधाय निवेश्य, युध्यमानेनेति शेषः, वेगः आपततां प्रतिबलानामग्रिमो जवः अभिहुतः कृतहोमः पुरःस्थितफल्गुबलरूपाग्निसात्कारप्रशमित इत्यर्थः, भवति । क्षयोऽपि तद्वशात् फल्गुबलस्य मनाक् भवन् सारबलस्येव नातिदोषावह इत्यभिप्रायः । 'अभिहतः' इत्यपि माधवपाठः । फल्गुबलविषयत्वापादनेन क्षपितसामर्थ्य इति तदाऽर्थः । 'अभिहूलितः' इति त्वपपाठः । व्यूहान्तरं तत्फलं चाऽऽह– सारेत्यादि । अग्रतः सारबलस्य कोटिष्वनुसारबलस्य कक्षयोस्तृतीयसारस्य मध्ये फल्गुबलस्य च निवेशनतोऽपि व्यूहो जायते, तथा व्यूढं सैन्यं परबलवेगेन नाभिभूयते चेत्यर्थः । श्रीमूला.

**व्यूहं तु स्थापयित्वा पक्षकक्षोरस्यानामेकेन द्वाभ्यां वा प्रहरेत् । शेषैः प्रतिगृह्णीयात् ॥**

अथ व्यूढे सैन्ये योधनप्रकारमाह– व्यूहं त्विति । तं स्थापयित्वा पक्षकक्षोरस्यानां पक्षयोः पुरस्तात्कोट्योः कक्षयोः पश्चादन्तःपार्श्वयोः उरस्यस्य मध्यस्य चेत्येतेषां पञ्चधा विभक्तानां मध्ये एकेन अङ्गेन द्वाभ्यामङ्गाभ्यां वा प्रहरेत् अर्थात् विजिगीषुः परबलम् । शेषैः त्रिभिरङ्गैः प्रतिगृह्णीयात् प्रतीच्छेत् अर्थात् स्वयं प्रहारप्रवृत्तं परबलम् ।

श्रीमूला.

**यत् परस्य दुर्बलं वीतहस्त्यश्वं दूष्यामात्यकं कृतोपजापं वा तत् प्रभूतसारेणाभिहन्यात्। यद्वा परस्य सारिष्ठं तद् द्विगुणसारेणाभिहन्यात्। यदङ्गमल्पसारमात्मनस्तद् बहुनोपचिनुयात्। यतः परस्यापचयस्ततोऽभ्याशे व्यूहेत, यतो वा भयं स्यात् ॥**

परबले प्रहारस्थानमाह– यदिति। परस्य यत् सैन्यं दुर्बलम् अल्पबलम्, वीतहस्त्यश्वं सारमपि हस्त्यश्वरहितम्, दूष्यामात्यकं दूष्याः क्रुद्धभीतादिरूपा अमात्या यस्मिंस्तत् तथाभूतम्, कृतोपजापं वा कृतभेदनं वा, तत् सैन्यं प्रभूतसारेण प्रचुरेण सारबलेन अभिहन्यात्। यद्वेति। यत् परस्य सारिष्ठं सारतमं बलं तत् द्विगुणसारेण तदपेक्षया द्विगुणसारेण बलेन अभिहन्यात्। यदिति। यत् आत्मनः अङ्गं पत्त्याद्यन्यतमम् अल्पसारं तत् बहुना प्रभूतेनाङ्गेन उपचिनुयात् वर्धयेत्। पराभिघातानुगुणमात्माभयानुगुणं च व्यूहनविशेषमाह– यत इत्यादि। परव्यूहस्य संबन्धिनि यस्मिन् पक्षकक्षाद्यन्यतमे सेनाङ्गापचयो दृश्यते तस्यान्तिके वा, यतः पक्षकक्षाद्यन्यतमात् भयं संभाव्यते तस्यान्तिके वा स्वबलं व्यूहेतेत्यर्थः। तदित्थमुभयथा व्यूहविभागविधिः प्रतिपादितः।

श्रीमूला.

चतुरङ्गबलयुद्धविवेकः

**अभिसृतं परिसृतमतिसृतमपसृतमुन्मथ्यावधानं वलयो गोमूत्रिका मण्डलं प्रकीर्णिका व्यावृत्तपृष्ठमनुवंशमग्रतः पार्श्वाभ्यां पृष्ठतो भग्नरक्षा भग्नानुपात इत्यश्वयुद्धानि ॥**

अथ युद्धकर्माभिधातव्यम्। तत्र 'पत्त्यश्वरथहस्तियुद्धानि' इति सूत्रम्। पत्त्यादीनां चतुर्णां युद्धान्युच्यन्ते इति सूत्रार्थः।

तत्राऽऽदावश्वकर्माणि त्रयोदशरूपाण्याह– अभिसृतमित्यादि। इदमित्थं व्याचक्षते– स्वबलात् परबलं प्रति पूर्वमभिसरणम् अभिसृतम्, परबलस्य पुरः पृष्ठतः पार्श्वे चाभिहत्य परितो भ्रमणं परिसृतम्, परबलं मध्यतो भित्त्वा सूचीवदभिगमनम् अतिसृतम्, तेनैव मार्गेण पुनर्निर्गमनम् अपसृतम्, बहुभिरश्वैरितस्ततश्चोन्मथ्यावभज्यावधानं पुनरेकत्रावस्थानम् उन्मथ्यावधानम्, द्विधा सूचिमार्गेणाभिगमनं वलयः, गोमूत्रवत् वक्रगत्या प्रवृत्तिः गोमूत्रिका, परबलस्यैकदेशमवच्छिद्य तत्परिवेष्टनं मण्डलम्, सर्वगतीनां सांकर्येण प्रयोगः प्रकीर्णिका, अपसारं कृत्वा पुनरतिसरणं व्यावृत्तपृष्ठम्, परबलाभिमुखस्य स्वबलस्यानुवर्तनम् अनुवंशम्, प्रहरतामेव युद्धान्निवृत्य स्वबलप्रवेशः इत्यन्ये, भग्नानां स्वबलानां अग्रतः पार्श्वभ्यां पृष्ठतो भ्रमणं भग्नरक्षा, भग्नस्य परबलस्यानुवर्तनं भग्नानुपातः इति।

श्रीमूला.

**प्रकीर्णिकावर्जान्येतान्येव, चतुर्णामङ्गानां व्यस्तसमस्तानां वा घातः, पक्षकक्षोरस्यानां च प्रभञ्जनमवस्कन्दः सौप्तिकं चेति हस्तियुद्धानि ॥**

हस्तियुद्धान्याह– प्रकीर्णिकावर्जानीति। अलघुवपुरशक्यप्रकीर्णिकातिरिक्तानि एतान्येव अभिसृतादीनि, चतुर्णाम् अङ्गानां पत्त्यादीनां व्यस्तसमस्तानां वा घातः, पक्षकक्षोरस्यानां च प्रभञ्जनम् अवमर्दनम्, अवस्कन्दः छिद्रमुपलभ्य प्रहारः, सौप्तिकं सुप्तघातः इति हस्तियुद्धानि।

श्रीमूला.

**उन्मथ्यावधानवर्जान्येतान्येव, स्वभूमावभियानापयानस्थितयुद्धानीति रथयुद्धानि ॥**

रथकर्माण्याह– उन्मथ्यावधानवर्जानीति। उन्मथ्यावधानव्यतिरिक्तानि एतान्येव हस्तिकर्माण्येव, स्वभूमौ अभियानापयानस्थितयुद्धानि 'समा स्थिराभिकाशा' (कौ. १०।४) इत्यादिना लक्षितायां स्वयोग्यायां भूमौ स्थित्वा अभियानं परबलाभिक्रमणम्, अपयानं परबलमभिभूयापसरणम्, स्थितयुद्धं च कृतपरिरक्षस्य शत्रोः प्राकारं परिवृत्य चिरमवस्थाय तेन सह योधनं च, इत्येतानि च रथयुद्धानि।

श्रीमूला.

**सर्वदेशकालप्रहरणमुपांशुदण्डश्चेति पत्तियुद्धानि ॥**

पत्तियुद्धान्याह– सर्वदेशकालेत्यादि। स्पष्टार्थम्।

श्रीमूला.

**एतेन विधिना व्यूहानोजान् युग्मांश्च कारयेत् ।**
**विभवो यावदङ्गानां चतुर्णां सदृशो भवेत् ॥**

एतेन विधिनेति । उक्तेन कल्पेन ओजान् अयुग्मान् युग्मांश्च समांश्च व्यूहान् कारयेत् । कथम् ? यावत् यथा चतुर्णाम् अङ्गानां द्विपहयरथपत्तीनां विभवः समृद्धिः सदृशो भवेत् व्यूहानामनुरूपः स्यात् । अङ्गविभवानुरूप्येण व्यूहान् निवेशयेदित्यभिप्रायः । श्रीमूला.

**[1]द्वे शते धनुषां गत्वा राजा तिष्ठेत् प्रतिग्रहे ।**
**भिन्नसंघातनं तस्मान्न युध्येताप्रतिग्रहः ॥**

युद्धे प्रवृत्ते क्व राजा तिष्ठेदित्यत्राऽऽह– द्वे शते धनुषां गत्वेति । व्यूहात् धनुर्द्विशतमानमन्तरालं विहाय राजा प्रतिग्रहे सैन्यपृष्ठे तिष्ठेत् । 'प्रतिग्रहः' इति प्रथमान्तपाठे तात्स्थ्यात् ताच्छब्द्यं बोद्धव्यम् । किमर्थम् ? तस्मात् भिन्नसंघातनं परबलकृताभिघातभिन्नानां स्वबलानाम् एकीकरणलक्षणं प्रयोजनं राज्ञः सैन्यपृष्ठावस्थानात् सिध्यतीत्यर्थः । अत एवाऽऽह– न युध्येताप्रतिग्रह इति । अनाश्रितसैन्यपृष्ठो न युद्धं कुर्यादित्यर्थः । श्रीमूला.

चतुर्भेदाः प्रकृतिव्यूहाः, तेषामवान्तरभेदाः व्यूहविभागाश्च

**[2]पक्षावुरस्यं प्रतिग्रह इत्यौशनसो व्यूहविभागः । पक्षौ कक्षावुरस्यं प्रतिग्रहः इति बार्हस्पत्यः ॥**

'दण्डभोगमण्डलासंहतव्यूहव्यूहनम्' इति सूत्रम् । दण्डव्यूहव्यूहनं भोगव्यूहव्यूहनं मण्डलव्यूहव्यूहनम् असंहतव्यूहव्यूहनमिति चतुर्विधं व्यूहनमुच्यते इति सूत्रार्थः ।

तत्र शुक्रबृहस्पत्योर्मतभेदमाह– पक्षाविति । पक्षौ बहिःपुरस्तात्कोट्यौ, उरस्यं मध्यम्, प्रतिग्रहः सैन्यपृष्ठदेशः इति, चतुरवयव इति शेषः, औशनसः उशनसोक्तः व्यूहविभागः । पक्षौ बहिःपुरस्तात्कोट्यौ, कक्षौ पश्चादन्तःपार्श्वे, उरस्यं मध्यम्, प्रतिग्रहः सैन्यपृष्ठम् इति, षडवयवः इति शेषः, बार्हस्पत्यः बृहस्पत्युक्तः । व्यूहविभाग इति संबध्यते । श्रीमूला.

**प्रपक्षकक्षोरस्या उभयोर्दण्डभोगमण्डलासंहताः प्रकृतिव्यूहाः । तत्र तिर्यग्वृत्तिर्दण्डः । समस्तानामन्वावृत्तिर्भोगः । सरतां सर्वतोवृत्तिर्मण्डलः । स्थितानां पृथगनीकवृत्तिरसंहतः ॥**

प्रपक्षकक्षोरस्या इति । वक्ष्यमाणरीत्या प्रविभक्तानि पक्षकक्षोरस्यानि बहिःकोटयन्तःपार्श्वमध्यसैन्यानि येषां ते तथाभूताः उभयोर्दण्डभोगमण्डलासंहताः शुक्रबृहस्पतिमतयोर्द्वयोरपि दण्डाद्यात्मना चतुर्भेदा इत्यर्थः, प्रकृतिव्यूहाः । भवन्तीति शेषः । तेषां लक्षणमाह– तत्रेति । चतुर्षु दण्डादिव्यूहेषु मध्ये तिर्यग्वृत्तिर्दण्डः तिरश्चीनावस्थानो दण्डसंज्ञो व्यूहः । समस्तानामिति । औशनसमते कक्षवर्जितानां चतुर्णां बार्हस्पत्यमते कक्षाभ्यां सह षण्णामित्यर्थः, अन्वावृत्तिः अनुबन्धेनाऽऽवृत्तिः वृत्तबहुलतया स्थितिः भोगः तत्संज्ञः । सरतामिति । शत्रुसैन्याभिमुखं गच्छतां सर्वानीकानां सर्वतोवृत्तिः एकीभावेन सर्वतो व्यापारवत्त्वं मण्डलः तत्संज्ञः । स्थितानामिति । शत्रुबलाभिमुख्येन चलनात् पूर्वम् 'पञ्चधनुरनीकसंधिः' (कौ. १०।५) इति नियमानुसारितयाऽवस्थितानां चतुर्णां षण्णां वाऽनीकानां पृथगनीकवृत्तिः शत्रुबलाभिमुख्येन चलनेऽप्यसंहतानीकतया वृत्तिः वर्तनं पूर्वस्थितामसंहतिमपरित्यज्यैव चेष्टमानतेत्यर्थः, असंहतः तदाख्यो व्यूहः । इत्थं शुक्रबृहस्पतिमतानुगुणं लक्षणमभिहितम् । श्रीमूला.

**पक्षकक्षोरस्यैः समं वर्तमानो दण्डः । स कक्षाभिक्रान्तः प्रदरः । स एव पक्षाभ्यां प्रतिक्रान्तो दृढकः । स एवातिक्रान्तः पक्षाभ्यामसह्यः । पक्षाववस्थाप्योरस्याभिक्रान्तः श्येनः । विपर्यये चापं चापकुक्षिः प्रतिष्ठः सुप्रतिष्ठश्च । चापपक्षः संजयः । स एवोरस्यातिक्रान्तो विजयः । स्थूलकर्णपक्षः स्थूलकर्णः । द्विगुणपक्ष-**

(१) कौ. १०।५; मेधा. ७।१९१ प्रतिग्रहे (प्रतिग्रहः) तनं तस्मान्न (तनार्थं तु न) समानतन्त्रम्; जम. २०।१५ (=) घातनं (धारणं).

(२) कौ. १०।६.

**स्थूलो विशालविजयः । त्र्यभिक्रान्तपक्षश्चमूमुखः । विपर्यये झषास्यः । ऊर्ध्वराजिर्दण्डः सूची । द्वौ दण्डौ वलयः । चत्वारो दुर्जयः । इति दण्डव्यूहाः ॥**

अथ स्वमतेन दण्डादीनामन्यल्लक्षणं कक्षानङ्गीकर्तृशुक्रमतविरुद्धं बृहस्पतिमताविरुद्धमाह— पक्षकक्षोरस्यैरिति । पक्षादिभिः पञ्चभिरनीकैः समम् अवैषम्येण वर्तमानः स्थानगमनादि कुर्वन् दण्डः दण्डव्यूहः । एष च प्रकृतिव्यूहः । एतद्विकारान् प्रदरादीन् लक्षयति— स इति । सः दण्डः कक्षाभिक्रान्तः पश्चादन्तःपार्श्वाभ्यां परबलाभिमुखं क्रममाणः प्रदरः तदाख्यो दण्डविकारः । स एवेति । उक्त एव दण्डः पक्षाभ्यां बहिःपुरस्तात्कोटिभ्यां प्रतिक्रान्तः प्रतिलोमं क्रममाणः, अर्थात् कक्षाभिमुखमागच्छतः प्रतिबलस्य पीडनार्थम्, दृढकः तदाख्यो दण्डविकारः । स एवेति । दृढक एव अतिक्रान्तः पक्षाभ्यां बहिःकोटिभ्याम् अतिशयेन क्रान्तः परबलस्यान्तर्गाढं प्रविष्ट इत्यर्थः, असह्यः तदाख्यः । पक्षाविति । द्वौ पक्षौ अवस्थाप्य स्वस्थाने स्थापयित्वा उरस्याभिक्रान्तः उरस्येन परबलाभिमुखं क्रममाणः श्येनः तदाख्यः । विपर्यय इत्यादि । उक्तप्रदरादिचतुष्टयवैपरीत्ये चापं चापकुक्षिः प्रतिष्ठः सुप्रतिष्ठश्च इति क्रमाच्चत्वारो व्यूहा भवन्तीत्यर्थः । तत्र कक्षाभ्यामभिक्रान्तः यः प्रदर उक्तस्तद्विपरीतः कक्षाभ्यां प्रतिक्रान्तश्चापव्यूहः । यः पक्षाभ्यां प्रतिक्रान्तो दृढक उक्तस्तस्य विपरीतः पक्षाभ्यामभिक्रान्तश्चापकुक्ष्याख्यो व्यूहः । यः पक्षाभ्यामतिक्रान्तोऽसह्य उक्तस्तस्य विपरीतः पक्षाभ्यां प्रतिक्रान्तः प्रतिष्ठाख्यो व्यूहः । यः पक्षाववस्थाप्योरस्याभिक्रान्तः श्येनः उक्तस्तस्य विपरीत उरस्येन पक्षाभ्यां चाभिक्रान्तो यद्वाऽतिक्रान्तः सुप्रतिष्ठनामा व्यूहः । एवमष्टौ दण्डव्यूहस्य विकारान् दर्शयित्वा भूयो विकारमाह— चापपक्ष इति । चापाकारौ पक्षौ यस्य स तथाभूतः संजयः तदाख्यो दण्डविकारः । स एवेति । दण्ड एव उरस्यातिक्रान्तः उरस्येन परबलस्यान्तःप्रविष्टः विजयः तदाख्यः । स्थूलकर्णपक्ष इति । स्थूलकर्णौ पक्षौ यस्य स तथाभूतः स्थूलकर्णः तदाख्यः । 'स्थूणाकर्णः' इत्यादर्शेषु पाठः । द्विगुणपक्षस्थूल इति । द्विगुणः विजयापेक्षया पक्षयोः स्थूलः विशालविजयः तदाख्यः । 'द्विगुणपक्षस्थूणः' इति तु त्रिष्वादर्शेषु पठ्यते । त्र्यभिक्रान्तपक्ष इति । कक्षादित्रिकाभिक्रान्तौ पक्षौ यस्य स तथाभूतः चमूमुखः तदाख्यः । विपर्यय इति । त्र्यभिक्रान्तोरस्यत्वे त्र्यभिक्रान्तकक्षत्वे वा झषास्यः तदाख्यः । उर्ध्वराजिरिति । उपरि परबलाभिमुखी राजिः बलश्रेणी यस्य स तथाभूतः दण्डः सूची तदाख्यः । द्वौ दण्डौ वलय इति । 'पक्षकक्षोरस्येषु तिर्यक्स्थितौ द्वौ दण्डौ यस्य स वलयाख्यः' इति माधवः । चत्वारो दुर्जय इति । दण्डावित्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते । पक्षकक्षोरस्येषु प्रत्येकं चत्वारो दण्डाः तिर्यग्दण्डाकारा बलश्रेण्यो यत्र भवेयुः स दुर्जयाख्य इत्यर्थः । इति दण्डव्यूहा इति । एवं दण्डप्रदरदृढकादयोऽष्टादशप्रकारा दण्डव्यूहा उक्ताः ।

श्रीमूला.

**पक्षकक्षोरस्यैर्विषमं वर्तमानो भोगः । स सर्पसारी गोमूत्रिका वा । स युग्मोरस्यो दण्डपक्षः शकटः । विपर्यये मकरः । हस्त्यश्वरथैर्व्यतिकीर्णः शकटः पारिपतन्तकः । इति भोगव्यूहाः ॥**

भोगव्यूहानाह— पक्षकक्षोरस्यैरिति । पक्षादिभिः विषमं वर्तमान इति । समं वर्तमानो हि उक्तः पूर्वम्, तद्विपरीत इत्यर्थः । भोगः तदाख्यो व्यूहः सर्पकायकुटिलावस्थानत्वादित्यर्थः । स इति । भोगव्यूहः सर्पसारी सर्पवदेकाकारः, गोमूत्रिका वा गोमूत्रवत् बहुधा विभिन्नाकारो वा । इति द्विधेति शेषः । स इति । भोगः युग्मोरस्यः द्विधाविभक्तदण्डाकारमध्यः दण्डपक्षः दण्डौ एकैकदण्डाकारौ पक्षौ यस्य स तथाभूतः शकटः तदाख्यः । विपर्यये मकर इति । द्विधाविभक्तदण्डाकारपक्षः एकदण्डाकारोरस्यो मकराख्य इत्यर्थः । हस्त्यश्वरथैरित्यादि । शकटव्यूह एव हस्त्यश्वरथैः संकीर्णः पारिपतन्तकसंज्ञ इत्यर्थः । इति भोगव्यूहा इति । अनेन प्रकारेण सर्पसार्यादयः पञ्च ( भोग )व्यूहा उक्ताः ।

श्रीमूला.

**पक्षकक्षोरस्यानामेकीभावे मण्डलः । स सर्वतोमुखः सर्वतोभद्रः, अष्टानीको दुर्जयः । इति मण्डलव्यूहाः ॥**

मण्डलव्यूहं लक्षयति– पक्षकक्षोरस्यानामिति । तेषाम् एकीभावे पूर्वोक्तानीकसंधिरूपमन्तरालं विनाऽन्योन्यमेलने मण्डलः तदाख्यो व्यूहः । 'सरतां सर्वतो वृत्तिर्मण्डलः' इति पूर्वं लक्षितस्येदं स्वाभिमतं लक्षणम् । स इति । मण्डलः सर्वतोमुखः चतुर्दिक्षु प्रतिबलाभिमुखः सर्वतोभद्रः सर्वतोभद्राख्यः । अष्टानीको दुर्जय इति । युग्मोरस्कश्चतुष्पक्षो द्विकक्षो मण्डलः दुर्जयसंज्ञः । इति मण्डलव्यूहा इति । बहुत्वाविवक्षया मण्डलव्यूहावित्यर्थः । अनुक्तोह्यत्वाभिप्रायं वा बहुत्वम् । श्रीमूला.

**पक्षकक्षोरस्यानामसंहतादसंहतः । स पञ्चानीकानामाकृतिस्थापनाद्वज्रो गोधा वा । चतुर्णामुद्यानकः काकपदी वा । त्रयाणामर्धचन्द्रिकः कर्कटकशृङ्गी वा । इत्यसंहतव्यूहाः ॥**

'स्थितानां पृथगनीकवृत्तिरसंहतः' इति पूर्वं लक्षितस्य स्वीयं लक्षणमाह– पक्षकक्षोरस्यानामित्यादि । पक्षादीनां पञ्चानां स्थाने परबलाभिमुखगमने चासंहतत्वादसंहताख्यो व्यूह इत्यर्थः । असंहतः पक्षकक्षोरस्यानां पञ्चानामनीकानां वज्राद्याकारेण स्थापनात् वज्राख्यो गोधाख्य इति द्विरूपो भवतीत्याह– स पञ्चानीकानामित्यादि । चतुर्णामिति । आकृतिस्थापनादिति वर्तते । चतुर्णां पक्षयोरुरस्यस्य प्रतिग्रहस्येत्येषाम् आकृतिस्थापनात् उद्यानकः काकपदी वा । त्रयाणामिति । पक्षयोः प्रतिग्रहोरस्यान्तरस्येत्येवं त्रयाणाम् आकृतिस्थापनात् अर्धचन्द्रिकः कर्कटकशृङ्गी वा । इत्यसंहतव्यूहा इति । एवं षट्प्रकाराः असंहतव्यूहाः । श्रीमूला.

**रथोरस्यो हस्तिकक्षोऽश्वपृष्ठोऽरिष्टः ॥**

एवं दण्डभोगमण्डलासंहताख्यान् भेदानभिधाय व्यूहस्यान्यांस्त्रीन् भेदानाह– रथोरस्य इति । रथमध्यः, हस्तिकक्षः द्विपाः अन्तःपार्श्वयोर्यस्य स तथा, अश्वपृष्ठः, अर्थात् पत्तिपक्षश्च, अरिष्टः रिष्टम् अशुभं न विद्यतेऽस्मिन्निति कृत्वा तदाख्यः । श्रीमूला.

**पत्तयोऽश्वा रथा हस्तिनश्चानुपृष्ठमचलः ॥**

पत्तय इति । ते अर्थात् पक्षयोः, अश्वाः अर्थादुरस्ये, रथाः कक्षयोः, अनुपृष्ठं हस्तिनश्च यस्मिन् भवन्ति, स इति शेषः, अचलः तदाख्यः । श्रीमूला.

**हस्तिनोऽश्वा रथाः पत्तयश्चानुपृष्ठमप्रतिहतः ॥**

हस्तिन इत्यादि । ते पक्षयोः, अश्वाः उरस्ये, रथाः कक्षयोः, पत्तयश्चानुपृष्ठं पृष्ठे पदातयश्च यत्र भवन्ति, स इति शेषः, अप्रतिहतः तदाख्यो व्यूहः । श्रीमूला.

**तेषां प्रदरं दृढकेन घातयेत् । दृढकमसह्येन । श्येनं चापेन । प्रतिष्ठं सुप्रतिष्ठेन । संजयं विजयेन । स्थूलकर्णं विशालविजयेन । पारिपतन्तकं सर्वतोभद्रेण । दुर्जयेन सर्वान् प्रतिव्यूहेत ॥**

इति दण्डभोगमण्डलासंहतव्यूहव्यूहनमुक्त्वा प्रतिव्यूहस्थापनमभिधातुं सूत्रम्– 'तस्य प्रतिव्यूहस्थापनम्' इति । तस्य उक्तस्य बलव्यूहस्य प्रतिबलव्यूहस्थापनमधीयते इति सूत्रार्थः ।

उक्तानां प्रदरादीनां व्यूहानां मध्ये कतमं कतमेन प्रतिव्यूहेन घातयेदित्याकाङ्क्षायामाह– तेषां प्रदरमित्यादि । दण्डव्यूहभेदतया मण्डलव्यूहभेदतया चोक्तो यो दुर्जयव्यूहः स सर्वेषामपि व्यूहानां प्रतिघातक्षमः प्रतिव्यूहो भवतीत्याह– दुर्जयेन सर्वान् प्रतिव्यूहेतेति ।

श्रीमूला.

**पत्त्यश्वरथद्विपानां पूर्वं पूर्वमुत्तरेण घातयेत् । हीनाङ्गमधिकाङ्गेन चेति ॥**

व्यूहानां प्रत्येकं प्रतिव्यूहनियममुक्त्वा सेनाङ्गानां पत्त्यादीनां प्रतिबलनियममाह– पत्त्यश्वरथद्विपानामित्यादि । पत्तिम् अश्वेन अश्वं रथेन रथं द्विपेन च घातयेदित्यर्थः । हीनाङ्गमिति । अवरसारपरिमाणम् अङ्गम् अधिकाङ्गेन अधिकसारपरिमाणेनाङ्गेन । घातयेदित्यनुषज्यते । चकारो वाक्यार्थसमुच्चये । इतिशब्दः प्रतिबलनियमविधिसमाप्त्यर्थः । श्रीमूला.

**'अङ्गदशकस्यैकः पतिः पदिकः, पदिकदशकस्यैकः सेनापतिः, तद्दशकस्यैको नायक इति। स तूर्यघोषध्वजपताकाभिर्व्यूहाङ्गानां संज्ञाः स्थापयेदङ्गविभागे संघाते स्थाने गमने व्यावर्तने प्रहरणे च॥**

सेनाङ्गानां विभागसंघातादिकर्मकर्तव्यत्वसूचकास्तदधिपतिना संकेताः कल्पनीया इति वक्ष्यति। तमेवाधिपतिं लक्षयंस्त्रिधा विभज्य दर्शयति— अङ्गदशकस्येति। इहाङ्गशब्देन प्रधानभूते रथहस्तिरूपे व्यूढे सेनाङ्गे गृह्येते। तेन रथदशकहस्तिदशकयोरित्यर्थः। एकः पतिः भर्ता पदिकः तत्संज्ञः। ननु अस्मिन् प्रधानाङ्गदशकारब्धे व्यूहे अन्ययोरप्यङ्गयोरश्वपत्तिरूपयोरवश्यंभावात् तत्संख्याऽप्यभिधानीया। सत्यम्, किंतु अर्थसिद्धा सेति कृत्वा नोक्ता। अर्थसिद्धिश्चेत्थम्— एकैकस्य रथस्य हस्तिनो वा पुरोयायिनः पञ्च पादगोपाः पञ्चेत्याहत्य दशानामश्वानां योगात् रथदशकेनाश्वशतकमाक्षिप्तं भवति। तथा एकैकस्याश्वस्य त्रयः पुरोयायिनः पुरुषास्त्रयः पादगोपा इत्याहत्य षण्णां पत्तीनां योगादश्वशतकेन पत्तीनां षट्शतमाक्षिप्तं भवतीति। एवं च रथानां हस्तिनां वा दशकस्याश्वशतकपत्तिषट्शताभ्यां युक्तस्य नेता पदिकसंज्ञ इत्युक्तं भवति। पदिकदशकस्येति। पदिकानां दशकस्य स्वस्वनेयबलसहितस्य एकः पतिः सेनापतिः तत्संज्ञः। तद्दशकस्येति। सेनापतिदशकस्य एकः पतिः नायकः इति। आख्यायते इति शेषः। स इत्यादि। नायकः व्यूहाङ्गानां व्यूढहस्त्यादीनाम् अङ्गविभागे संहतानामङ्गानां विभजने, संघाते विभक्तानां पिण्डीभावे, स्थाने गतिनिवृत्तौ, गमने गतिकरणे, व्यावर्तने अभियोधनात् प्रत्यावर्तने, प्रहरणे च अभियोधने च, करणीये इति शेषः, तूर्यघोषध्वजपताकाभिः संज्ञाः स्थापयेत् तूर्यघोषविशेषैः ध्वजपताकाविशेषैश्च संकेतान् स्थापयेत्। ईदृशे तूर्यघोषे श्राविते विभागसंघातादिष्विदमिदं कर्तव्यम्, ईदृशीषु ध्वजपताकासु प्रदर्शितास्विदमिदं कर्तव्यमिति संकेतान् कल्पयित्वाऽनुतिष्ठेदित्यर्थः। 　　　　श्रीमूला.

(१) कौ. १०।६; जम. २०।३२ (=) (अङ्गदशकस्यैकः पतिः, पतिदशकस्यैकः सेनापतिः, तद्दशकस्यैको नायकः) एतावदेव.

**'समे व्यूहे देशकालसारयोगात् सिद्धिः॥**

दण्डादिव्यूहेषु स्वबलपरबलयोः समानेषु सत्सु देशकालसारयोगात्— देशः समविषमादिः, कालः रात्र्यादियोधिनां रात्र्यादिः, सारः शौर्यादिः, एषां योगात् सिद्धिः जयः। भवतीति शेषः। 　　　　श्रीमूला.

## मनुः

दण्डशकटवराहमकरसूचीगरुडपद्मव्यूहाः, रिपुभयप्रकारानुसारेण व्यूहनम्

***'दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा।**
**वराहमकराभ्यां वा सूच्या वा गरुडेन वा॥**
**यतश्च भयमाशङ्केत्ततो विस्तारयेद्बलम्।**
**पद्मेन चैव व्यूहेन निविशेत सदा स्वयम्॥**
**सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत्।**
**यतश्च भयमाशङ्केत् प्राचीं तां कल्पयेद्दिशम्॥**
**गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः।**
**स्थाने युद्धे च कुशलानभीरूनविकारिणः॥**
**संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून्।**
**सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत्॥**

## आश्वलायनः

क्रौञ्चश्येनादयो व्यूहाः

**'क्रौञ्चश्येनाभिमकरचक्रमण्डलगारुडान्।**
**शृङ्गाटकार्धचन्द्राब्जसूचीमुखगदाम्बुदान्॥**

* एतदादिश्लोकपञ्चकस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'यात्रा—युद्धसामान्यविचारः' इत्यस्मिन्प्रकरणे (पृ. २६६३–२६६६) द्रष्टव्यः।

(१) कौ. १०।६. (२) मस्मृ. ७।१८७–१९१. (३) आश्वस्मृ. ८।११९–१२०.

अश्ववज्राभिशकटान् व्यूहान् व्यूह्य विधानतः ।
युध्येत शूरान् संस्थाप्य भक्तान् सेनामुखे नृपः ॥

## विष्णुधर्मोत्तरपुराणम्

विविधव्यूहप्रकल्पनं गरुडादिप्राणिरूपैश्चन्द्रादिद्रव्यरूपैश्च, सैन्यव्यवस्था पञ्चविधा

[1]कुञ्जरं वा रथं चाश्वमारुहेदभिमन्त्रितम् ।
आरुह्य शिबिराद्राजा निष्क्रम्य समये शुभे ॥

[2]देशे त्वदृश्यः शत्रूणां कुर्यात् प्रकृतिकल्पनाम् ।
संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ॥

[3]सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ।
व्यूहाः प्राण्यङ्गरूपाश्च द्रव्यरूपाश्च कल्पिताः ॥

[4]गारुडो मकरव्यूहश्चक्रं श्येनस्तथैव च ।
अर्धचन्द्रश्च चन्द्रश्च शकटव्यूह एव च ॥

[5]व्यूहश्च सर्वतोभद्रः सूचीव्यूहस्तथैव च ।
पद्मश्च मण्डलव्यूहः प्राधान्येन प्रकीर्तिताः ॥

[6]व्यूहानामथ सर्वेषां पञ्चधा सैन्यकल्पना ।
द्वौ पक्षौ बन्धपक्षौ द्वावौरस्यः पञ्चमो भवेत् ॥

(१) विध. २।१७७।१५ ; राप्र. ४०१ चाश्व (वाऽश्व) निष्क्रम्य समये (विनिष्क्रम्य समे).

(२) विध. २।१७७।१६ ; अग्नि. २३६।२७ ; राप्र. ४०१.

(३) विध. २।१७७।१७ ; अग्नि. २३६।२८ कल्पिताः (कीर्तिताः) ; राप्र. ४०१.

(४) विध. २।१७७।१८ ; अग्नि. २३६।२९ चक्रं (चक्रः) चन्द्रश्च श (वज्रश्च श) ; राप्र. ४०१.

(५) विध. २।१७७।१९ ; अग्नि. २३६।३० व्यूहश्च (मण्डलः) स्तथैव च (श्च ते नव [? दश]) पू. ; राप्र. ४०१.

(६) विध. २।१७७।२० ; अग्नि. २३६।३०–३१ उत्तरार्धे (द्वौ पक्षावनुपक्षौ द्वाववश्यं पञ्चमं भवेत् ॥) ; राप्र. ४०१ वौरस्यः (उरस्थः).

[1]एकेन यदि वा द्वाभ्यां भागाभ्यां युद्धमाचरेत् ।
भागत्रयं स्थापयेत्तु तेषां रक्षार्थमेव च ॥

[2]न व्यूहे कल्पना कार्या राज्ञो भवति कर्हिचित् ।
पत्रच्छेदे फलच्छेदे वृक्षच्छेदावकल्पने ॥

[3]पुनः प्ररोहमायाति मूलच्छेदे विनश्यति ।
स्वयं राज्ञा न योद्धव्यमपि सर्वास्त्रशालिना ॥

राज्ञो व्यूहे कल्पना व्यूहरचनामध्ये पक्षादिका या कल्पना तत्तत्प्रदेशावस्थानरूपा, सा न कार्या भवति । तत्र हेतुः– पत्रच्छेद इति । छेदावकल्पने छेदकरणे । राप्र. ४०१

[4]नित्यं लोके हि दृश्यन्ते शक्तेभ्यः शक्तिमत्तराः ।
सैन्यस्य पश्चात्तिष्ठेत्तु क्रोशमात्रे महीपतिः ॥

[5]भग्नसंधारणं तत्र योधानां परिकीर्तितम् ।
प्रधानभङ्गे सैन्यस्य नावस्थानं विधीयते ॥

तत्र क्रोशमात्रावस्थिते राज्ञि । राप्र. ४०२

[6]न भग्नान् पीडयेच्छत्रूनेकायनगता हि ते ।
मरणे निश्चिताः सर्वे हन्युः शत्रूंश्चमूरपि ॥

युध्यता राज्ञा किं कर्तव्यमित्यपेक्षायामाह– न भग्नान् इत्यादिश्लोकैः । राप्र. ४०२

(१) विध. २।१७७।२१ एकेन (अनेन) ; अग्नि. २३६।३१–३२ ; राप्र. ४०१.

(२) विध. २।१७७।२२ ; अग्नि. २३६।३२ व्यूहे क (व्यूहक) ; राप्र. ४०१.

(३) विध. २।१७७।२३ ; अग्नि. २३६।३३ (मूलच्छेदे विनाशः स्यान्न युध्येच्च स्वयं नृपः ।) एतावदेव ; राप्र. ४०१.

(४) विध. २।१७७।२४ ; अग्नि. २३६।३३ उत्त. ; राप्र. ४०२.

(५) विध. २।१७७।२५ ; अग्नि. २३६।३४ ; राप्र. ४०२.

(६) विध. २।१७७।२६ ; राप्र. ४०२.

[1]शठा भङ्गच्छलेनापि नयन्ति स्वभुवं परान् ।
तेषां स्वभूमिसंस्थानां वधः स्यात् सुकरस्तदा ॥
[2]न संहतार्तविरलान् योधान् व्यूहे प्रकल्पयेत् ।
आयुधानां तु संमर्दो यथा न स्यात्परस्परम् ॥
[3]तथा तु कल्पना कार्या योधानां भृगुनन्दन ।
भेत्तुकामः परानीकं संहतैरेव भेदयेत् ॥
[4]भेदरक्षापरेणापि कर्तव्या संहता तथा ।
स्वेच्छया कल्पयेद्व्यूहं ज्ञात्वा वा रिपुकल्पितम् ॥
[5]व्यूहे भेदावहं कुर्याद्रिपुव्यूहस्य पार्थिवः ।
गजस्य देया रक्षार्थं चत्वारस्तु रथा द्विज ॥
[6]रथस्य चाश्वाश्चत्वारश्चत्वारस्तस्य चर्मिणः ।
चर्मिभिश्च समास्तत्र धन्विनः परिकीर्तिताः ॥
पुरतश्चर्मिणो देया देयास्तदनु धन्विनः ।
धन्विनामनु चाश्वीयं रथांस्तदनु योजयेत् ॥

(१) विध. २।१७७।२७ शठा ( शटा ) नयन्ति ( नयति ) परान् ( पराम् ) ; राप्र. ४०२.

(२) विध. २।१७७।२८ ; अग्नि. २३६।३५ तार्तवि ( तान्न वि ) ; राप्र. ४०२ अग्निवत्.

(३) विध. २।१७७।२९ ; अग्नि. २३६।३६ उत्त. ; राप्र. ४०३.

(४) विध. २।१७७।३० ; अग्नि. २३६।३६ ( भेदरक्ष्याः परेणापि कर्तव्याः संहतास्तथा । ) पू. ; राप्र. ४०३ रिपु ( ऽरिप्र ).

(५) विध. २।१७७।३१ ; अग्नि. २३६।३७ ( व्यूहं भेदावहं कुर्यात् परव्यूहेषु चेच्छया । गजस्य पादरक्षार्थाश्चत्वारस्तु तथा द्विज ॥ ) ; राप्र. ४०३ व्यूहे ( व्यूहं ).

(६) विध. २।१७७।३२–३३ द्वितीयचरणे ( अश्वस्य तस्य च वर्मिणः ) चर्मि ( वर्मि ) तश्च ( स्ताच ) ; अग्नि. २३६।३८–३९ ( रथस्य चाश्वाश्चत्वारः समास्तस्य च चर्मिणः । धन्विनश्चर्मिभिस्तुल्याः पुरस्ताच्चर्मिणो रणे । पृष्ठतो धन्विनः पश्चाद्धन्विनां तुरगा रथाः ॥ ) ; राप्र. ४०३.

[1]रथानां कुञ्जराश्चानु दातव्याः पृथिवीक्षिता ।
पदातिकुञ्जराश्वानां वर्म कार्यं प्रयत्नतः ॥
[2]अवर्मयित्वा यो वाहं चाऽऽत्मानं वर्मयेन्नरः ।
स राम नरकं याति सुकृतेनापि कर्मणा ॥
[3]शूराः प्रमुखतो देया न देया भीरवः क्वचित् ।
शूरान् वा मुखतो दत्त्वा स्कन्धमात्रप्रदर्शनम् ॥
[4]कर्तव्यं भीरुसंघेन शत्रुविद्रावकारकम् ।
दारयन्ति पुरस्तात्तु विद्रुता भीरवः पुरः ॥
[5]प्रोत्साहयन्त्येव रणे भीरूञ्शूराः पुरःस्थिताः ।
प्रांशवः शुकनासाश्च ये चाजिह्मेक्षणा नराः ॥

## अग्निपुराणम्

### षड्विधबलस्य व्यूहनप्रतिव्यूहनप्रकाराः व्यूहप्रकाराश्च

राम उवाच–
[6]षड्विधं तु बलं व्यूह्य देवान् प्राच्यं रिपुं व्रजेत् ।
मौलं भूतं श्रो( ? श्रे )णिसुहृद्द्विषदाटविकं बलम् ॥
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनं तथा ।
षडङ्गं मन्त्रकोषाभ्यां पदात्यश्वरथद्विपैः ॥

(१) विध. २।१७७।३४ ; अग्नि. २३६।३९–४० राश्चानु ( राः पश्चात् ) वर्म कार्यं ( धर्मकार्यं ) ; राप्र. ४०३.

(२) विध. २।१७७।३५ सुकृते ( स्वकृते ) ; राप्र. ४०३ वाहं चा ( वाहमा ).

(३) विध. २।१७७।३६ स्कन्ध ( स्कन्द ) ; अग्नि. २३६।४०–४१ न ( नो ) वा मु ( प्रमु ) ; राप्र. ४०३ प्रमु ( प्राङ्मु ).

(४) विध. २।१७७।३७ ; अग्नि. २३६।४१–४२ विद्रुता ( न देया ) ; राप्र. ४०३ द्राव ( द्रव ).

(५) विध. २।१७७।३८ पूर्वार्धे ( प्रोत्सारयन्ते वरुणी भीरूञ्शूरान् पुनः स्थिताः । ) चाजिह्मे ( च जिह्मे ); अग्नि० २३६।४२–४३.

(६) अग्नि. २४२।१–८,११–२३,२५–७२.

नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत्।
सेनापतिस्तत्र तत्र गच्छेद् व्यूहीकृतैर्बलैः॥
नायकः पुरतो यायात् प्रवीरपुरुषावृतः।
मध्ये कलत्रं स्वामी च कोषः फल्गु च यद्बलम्॥
पार्श्वयोरुभयोरश्वा वाजिनां पार्श्वयो रथाः।
रथानां पार्श्वयोर्नागा नागानां चाटवीबलम्॥
पश्चात् सेनापतिः सर्वं पुरस्कृत्य कृती स्वयम्।
यायात् संनद्धसैन्यौघः खिन्नानाश्वासयञ्शनैः॥
यायाद् व्यूहेन महता मकरेण पुरो भये।
श्येनेनोद्धृतपक्षेण सूच्या वा वीरवक्त्रया॥
पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसंज्ञितम्।
सर्वतः सर्वतोभद्रं भये व्यूहं प्रकल्पयेत्॥
उरस्यादीनि भिन्नानि प्रतिगृह्णन् बलानि हि॥
प्रतिग्रह इति ख्यातो राजकार्यान्तरक्षमः।
तेन शून्यस्तु यो व्यूहः स भिन्न इव लक्ष्यते॥
जयार्थी न च युध्येत मतिमानप्रतिग्रहः॥
अथवा खलु युध्येरन् पत्त्यश्वरथदन्तिनः॥
यथा भवेदसंबाधो व्यायामविनिवर्तने।
असंकरेण युध्येरन् संकरः संकुलावहः॥
महासंकुलयुद्धेषु संश्रयेरन् मतंगजम्।
अश्वस्य प्रतियोद्धारो भवेयुः पुरुषास्त्रयः॥
इति कल्प्यास्त्रयश्चाश्वा विधेयाः कुञ्जरस्य तु।
पादगोपा भवेयुश्च पुरुषा दश पञ्च च॥
विधानमिति नागस्य विहितं स्यन्दनस्य च।
अनीकमिति विज्ञेयमिति कल्प्या नव द्विपाः॥
तथाऽनीकस्य रन्ध्रं तु पञ्चधा संप्रचक्षते।
इत्यनीकविभागेन स्थापयेद् व्यूहसंपदः॥
उरस्यकक्षपक्षांस्तु कल्प्यानेतान् प्रचक्षते।
उरःकक्षौ च पक्षौ च मध्यं पृष्ठं प्रतिग्रहः॥
कोटी च व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह उच्यते।
उरस्यकक्षपक्षास्तु व्यूहोऽयं सप्रतिग्रहः॥
गुरोरेष च शुक्रस्य कक्षाभ्यां परिवर्जितः।
तिष्ठेयुः सेनापतयः प्रवीरैः पुरुषैर्वृताः॥
अभेदेन च युध्येरन् रक्षेयुश्च परस्परम्।
मध्यव्यूहे फल्गुसैन्यं युद्धवस्तु जघन्यतः॥

युद्धं हि नायकप्राणं हन्यते तदनायकम्।
उरसि स्थापयेन्नागान् प्रचण्डान् कक्षयो रथान्॥
हयांश्च पक्षयोर्व्यूहो मध्यभेदी प्रकीर्तितः।
मध्यदेशे हयानीकं रथानीकं च कक्षयोः॥
पक्षयोश्च गजानीकं व्यूहोऽन्तर्भेद्ययं स्मृतः।
रथस्थाने हयान् दद्यात् पदातींश्च हयाश्रये॥
रथाभावे तु द्विरदान् व्यूहे सर्वत्र दापयेत्।
यदि स्याद्दण्डबाहुल्यमाबाधः संप्रकीर्तितः॥
मण्डलासंहतो भोगो दण्डस्ते बहुधा शृणु।
तिर्यग्वृत्तिस्तु दण्डः स्याद् भोगोऽन्या वृत्तिरेव च॥
मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः।
प्रदरो दृढकोऽसह्यश्चापो वै कुक्षिरेव च॥
प्रतिष्ठः सुप्रतिष्ठश्च श्येनो विजयसंजयौ।
विशालो विजयः सूची स्थूणाकर्णचमूमुखौ॥
सर्पास्यो वलयश्चैव दण्डभेदाश्च दुर्जयाः।
अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्यां चैकपक्षतः॥
अतिक्रान्तस्तु पक्षाभ्यां त्रयोऽन्ये तद्विपर्यये।
पक्षोरस्यैरतिक्रान्तः प्रतिष्ठोऽन्यो विपर्ययः॥
स्थूणापक्षो धनुष्पक्षो द्विस्थूणो दण्ड ऊर्ध्वगः।
द्विगुणोऽन्तस्त्वतिक्रान्तपक्षोऽन्यस्य विपर्ययः॥
द्विचतुर्दण्ड इत्येते ज्ञेया लक्षणतः क्रमात्।
गोमूत्रिकाहिसंचारी शकटो मकरस्तथा॥
भोगभेदाः समाख्यातास्तथा पारिप्लवङ्गकः।
दण्डपक्षौ युगोरस्यः शकटस्तद्विपर्यये॥
मकरो व्यतिकीर्णश्च शेषः कुञ्जरराजिभिः।
मण्डलव्यूहभेदौ तु सर्वतोभद्रदुर्जयौ॥
अष्टानीको द्वितीयस्तु प्रथमः सर्वतोमुखः।
अर्धचन्द्रक ऊर्ध्वाङ्गो वज्रभेदास्तु(? उद्धानो वज्रो भेदास्त्व-)संहतेः॥
तथा कर्कटशृङ्गी च काकपादी च गोधिका।
त्रिचतुष्पञ्चसैन्यानां ज्ञेया आकारभेदतः॥

दण्डस्य स्युः सप्तदश व्यूहा द्वौ मण्डलस्य च।
असंघातस्य षट् पञ्च भोगस्यैव तु संगरे॥
पक्षादीनामथैकेन हत्वा शेषैः परिक्षिपेत्।
उरसा वा समाहत्य कोटिभ्यां परिवेष्टयेत्॥
परे कोटी समाक्रम्य पक्षाभ्यामप्रतिग्रहात्।
कोटिभ्यां जघनं हन्यादुरसा च प्रपीडयेत्॥
यतः फल्गु यतो भिन्नं यतश्चान्यैरधिष्ठितम्।
ततश्चारिबलं हन्यादात्मनश्चोपबृंहयेत्॥
सारं द्विगुणसारेण फल्गुसारेण कल्पयेत्।
संहतं च गजानीकैः प्रचण्डैर्दारयेद् बलम्॥
स्यात् कक्षपक्षोरस्यैश्च वर्तमानस्तु दण्डकः।
तत्र प्रयोगो दण्डस्य स्थानं तुर्येण दर्शयेत्॥
स्याद्दण्डसमपक्षाभ्यामतिक्रान्तः प्रदारकः।
भवेत् स पक्षकक्षाभ्यामतिक्रान्तो दृढः स्मृतः॥
कक्षाभ्यां च प्रतिक्रान्तव्यूहोऽसह्यः स्मृतो यथा।
कक्षपक्षावधः स्थाप्योरस्यैः क्रान्तश्च खातकः॥
द्वौ दण्डौ वलयः प्रोक्तो व्यूहो रिपुविदारणः।
दुर्जयश्चतुर्वलयः शत्रोर्बलविमर्दनः॥
कक्षपक्षोरस्यैर्भोगो विषमं परिवर्जयेत्।
सर्पचारी गोमूत्रिका शकटः शकटाकृतिः॥
विपर्ययोऽमरः प्रोक्तः सर्वशत्रुविमर्दकः।
स्यात् कक्षपक्षोरस्यानामेकीभावस्तु मण्डलः॥
चक्रपद्मादयो भेदा मण्डलस्य प्रभेदकाः।
एवं च सर्वतोभद्रो वज्राक्षवरकाकवत्॥
अर्धचन्द्रश्च शृङ्गाटो ह्यचलो नामरूपतः।
व्यूहा यथासुखं कार्याः शत्रूणां बलवारणाः॥

### कामन्दकीयनीतिसारः

रिपुभयानुसारेण व्यूहनम्, व्यूहनप्रतिव्यूहन-प्रकाराः, व्यूहप्रकाराः

[१]नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत्।
सेनापतिस्तत्र तत्र गच्छेद्व्यूहीकृतैर्बलैः॥

(१) नद्यद्रिवनदुर्गेष्विति। दुर्गशब्दः प्रत्येकं योज्यः। भयं सामन्ताटविकादिभ्यः। व्यूहीकृतैः संनद्धैः। जम.

(२) व्यूहीकृतैर्बलैः व्यूहरचितैर्बलैः। अन्यत् प्रतीतम्। उनिसा.

[१]नायकः पुरतो यायात् प्रवीरपुरुषावृतः।
मध्ये कलत्रं स्वामी च कोशः फल्गु च यद् बलम्॥

(१) व्यूहीकृतैर्यातव्यमित्युक्तम्, तत् कथं व्यूह्य यायात्, गच्छंश्च केषु व्यसनेषु पराभियोगात् रक्षेदिति प्रयाणव्यसनरक्षणमुच्यते नवभिः श्लोकैः। तत्र प्रयाणमधिकृत्याऽऽह— नायक इत्यादि। नायकः बलाध्यक्षः पुरतो यायात् रक्षन् मार्गावासयोश्च संपादनार्थम्। कलत्रम् अन्तःपुरम्। स्वामी विजिगीषुः। फल्गु बलं विष्ट्यादिकम्। जम.

(२) स्कन्धावारप्रयाणमभिधातुमाह— नायक इति। जातावेकवचनम्। नायकः सहस्रबलनेता प्रवीरपुरुषावृतः प्रवीराः पुरुषाः तैरावृतः सन्। 'प्रवीरपृतनावृतः' इति मुद्रितपुस्तकपाठे तु प्रकृष्टा वीरा यत्र सा, तथाभूतया पृतनया सेनया आवृतः सन्। पुरतः अग्रतः यायात् गच्छेत्। मध्ये स्कन्धावारस्य मध्ये कलत्रम् अन्तःपुरादिकम्, सकलपुत्रदारमिति यावत्, स्वामी विजिगीषुः, कोशः धनसमुदायः, यत् बलं फल्गु असारं तच्च बलम्। यायादिति पूर्वेणान्वयः। 'फल्गु च यद्बलम्' इत्यत्र 'फल्गु महद्धनम्' इति मुद्रितपुस्तकपाठो न सम्यक्। उनिसा.

(३) नायकः सेनापतिः। फल्गु अन्नादि। तद्रक्षणीयमित्यर्थः। नीम. ६१

(१) कानी. १९।४४; रार. ४० भवेत् (नृप) उत्तरार्धे (तत्र तत्र च सेनानीर्यायाद्व्यूहीकृतैर्बलैः॥).

(१) कानी. १९।४५; नीम. ६१ उत्तरार्धे (मध्ये कलत्रं कोशश्च स्वामी फल्गु च यद्धनम्॥).

[1]पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वयो रथाः ।
रथानां पार्श्वयोर्नागा नागानां चाटवीबलम् ॥

(१) पार्श्वयोरुभयोः स्वामिन इत्यर्थः । अटवीबलं तात्स्थ्यादाटविकम् । जम.

(२) सर्वत्र यायादिति अनुषञ्जनीयम् । श्लोकार्थः सुगमः । उनिसा.

[2]पश्चात् सेनापतिः सर्वं पुरस्कृत्य कृती स्वयम् ।
यायात् संनद्धसैन्यौघः खिन्नानाश्वासयञ्छनैः ॥

(१) पश्चात् स्वामिनो गच्छतः । सर्वं सैन्यम् । खिन्नानां सैनिकानामाश्वासनकरणस्वभावः । जम.

(२) कृती निपुणः सेनापतिः कृतलक्षणः पुरुषः सर्वं सकलसैन्यं पुरस्कृत्य अग्रेकृत्य संबद्धसैन्यौघः सम्यग्व्यूहीकृतसेनासमूहः तथा खिन्नान् प्राप्तखेदान् शनैः मन्दं यथा स्यात्तथा आश्वासयन् आश्वासं प्रापयन् सन् स्वयं पश्चात् यायात् । उनिसा.

(३) पूर्वं सेनापतेरग्रे यानमुक्तम्, अधुना पश्चाद्यानम् । अतो ज्ञायते अग्रे याता पश्चाद्याता चेति सेनापतिद्वयमिति । नीम. ६१

[3]यायाद्व्यूहेन महता मकरेण पुरोभये ।
श्येनेनोद्धृतपक्षेण सूच्या वा वीरवक्त्रया ॥

(१) पुरोभय इति पुरस्तात् परोऽभिहनिष्यतीति भयमुत्प्रेक्ष्य मकरव्यूहेन यायात् । स हि विस्तीर्णमुखत्वादशेषं बलं रक्षति । श्येनेन उद्धृतपक्षेण विस्तृतपक्षेण यदा तिर्यग्भागे भयमुत्प्रेक्षेत । सूच्या वा वीरवक्त्रया मुखनिवेशितशूरयोधया यद्येकायनमार्गे पुरोभयमाशङ्क्येत । जम.

(२) प्रयाणक्रममभिधातुमाह– यायादिति । पुरः अग्रतः भये आक्रमणाशङ्कायां सति मकरेण वक्ष्यमाणलक्षणेन महता व्यूहेन वा अथवा उद्धतपक्षेण बलवत्पक्षानीकेन श्येनेन वक्ष्यमाणलक्षणेन व्यूहेन तथा धीरवक्त्रया धीराः वक्त्रे सेनामुखे अग्रे इति यावत्, यस्याः तथाभूतया सूच्या सूच्याकारवक्ष्यमाणलक्षणव्यूहेन यायादित्यर्थः । 'उद्धतपक्षेण' इत्यत्र 'उभयपक्षेण' इति 'धीरवक्त्रया' इत्यत्र 'धीरचक्रया' इति च पाठद्वयं न समीचीनम् । उनिसा.

(३) व्यूहस्तु मकरश्येनसूचीशकटवज्रसर्वतोभद्रभेदात् षोढा । तेषां विनियोग उक्तो महाभारते– 'यायाद्व्यूहेन......' । अन्ये च गरुडादयो व्यूहभेदा नोक्ताः, तेषामेष्वेवान्तर्भावात् । नीम. ६१

[4]पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसंज्ञितम् ।
सर्वतः सर्वतोभद्रं भये व्यूहं प्रकल्पयेत् ॥

(१) पश्चाद्भये शकटम्, तस्य पश्चाद्विस्तीर्णमुखत्वात् । पार्श्वयोरुभयोर्वज्रसंज्ञितम्, तदुभयतो विस्तीर्णमुखम् । सर्वतो भये सर्वतोभद्रम्, तस्य सर्वतोमुखत्वात् । जम.

(२) पश्चाद्भये सति शकटं शकटाख्यं वक्ष्यमाणलक्षणं व्यूहम् । प्रकल्पयेदित्यनेन संबन्धः । एवं सर्वत्र । पार्श्वयोर्भये सति वज्रसंज्ञितं वज्राख्यं वक्ष्यमाणलक्षणं व्यूहम् । सर्वतः समन्तात् भये सर्वतोभद्रं वक्ष्यमाणलक्षणं व्यूहम् । 'भये व्यूहम्' इत्यत्र 'भयव्यूहम्' इति मुद्रितपुस्तकपाठो न समीचीनः । उनिसा.

[5]द्वे शते धनुषां गत्वा राजा तिष्ठेत् प्रतिग्रहः ।
भिन्नसाधारणस्तस्मान्न युध्येताप्रतिग्रहः ॥
तुरगादीनि भिन्नानि प्रतिगृह्णाति यद्बलम् ।
प्रतिग्रह इति ख्यातः स तु कार्यो भरक्षमः ॥

---

(१) कानी. १९।४६ ; रार. ४० यो रथाः (तो रथाः) योर्ना (तो ना) चाटवीबलम् (च पदातयः) ; नीम. ६१ अश्वानां (वाजिनां).

(२) कानी. १९।४७ ; रार. ४० (पश्चात् सेनापतिर्यायात् सेनामाश्वासयञ्छनैः ॥) एतावदेव ; उनिसा. नद्ध (बद्ध) ; नीम. ६१ स्वयम् (बलम्) उत्तरार्धे (यायात् संनद्धसैन्यौघैः खिन्नांश्चाऽऽश्वासयञ् जनान् ॥).

(३) कानी. १९।४८ ; उनिसा. नोद्धृ (नोद्ध) वीर (धीर) ; नीम. ६१ नोद्धृत (नोभय) वीरवक्त्रया (धीरचक्रया) महाभारते.

(१) कानी. १९।४९ ; नीम. ६१ महाभारते.

(२) कानी. २०।१४–१५ इति श्लोकयोर्मध्ये प्रक्षिप्तमिदं श्लोकत्रयम् .

**तेन शून्यस्तु यो व्यूहः स भिन्न इव लक्ष्यते।**
**तस्माद्विद्वाञ्जयाकाङ्क्षी न युध्येताप्रतिग्रहः॥**
**[1]जयार्थी नृपतिस्तिष्ठेद्दूरं गत्वा प्रतिग्रहः।**
**भिन्नं च प्रतिगृह्णीयान्न हि युध्येत तं विना॥**

(१) बलान्तराणां त्वगम्यां भूमिं प्रसङ्गादाह— जयार्थीति। यत्र स्थितः स्वबलं प्रतिगृह्णाति स प्रतिग्रह उच्यते। तथा चोक्तम्— 'द्वे शते धनुषां गत्वा राजा तिष्ठेत् प्रतिग्रहः। भिन्नसंधारणस्तस्मान्न युध्येताप्रतिग्रहः॥' (कौ. १०।५) इति। जम.

(२) युद्धे राजस्थानमभिधातुमाह— जयेति। अप्रतिग्रहः अनाक्रमणीयः मतिमान् नीतिशास्त्रनिपुणः जयार्थी विजिगीषुः नैव युध्येत स्वयं युद्धं न कुर्वीत। वा यदि आवश्यकत्वात् युध्येत तदा अतिबलवेष्टितः सन् युध्येत इत्यर्थः। हस्तलिखितपुस्तके तु श्लोकोऽयं भिन्नक्रमेण लिखितः। स च क्रमः— 'जयार्थी नृपतिस्तिष्ठेद् दूरं गत्वाऽप्रतिग्रहे। भिन्नं च प्रतिगृह्णीयान्न हि युध्येत तं विना॥' इति। व्याख्यानं तु— जयार्थी विजिगीषुः राजा दूरम्, युद्धक्षेत्रात् इति शेषः, गत्वा तिष्ठेत्। अप्रतिग्रहे स्थाने स्थितः भिन्नं परैरुपहतं प्रतिग्रहविह्वलमिति यावत्, स्वसैन्यमिति शेषः, प्रतिगृह्णीयात् रक्षेदित्यर्थः। हि यतः तं राजानं विना न युध्येत, सैन्यमिति शेषः। उनिसा.

**[2]पञ्चारत्नि धनुस्तस्मिन् धन्विनं स्थापयेद्युधि।**
**त्रिगुणेऽश्वं गजरथौ योज्यौ पञ्चसु पञ्चसु॥**

(१) यथा युद्धार्थं दानकल्पना तथा व्यूहोऽपि युद्धनिमित्तमिति तद्विकल्पा उच्यन्ते। तत्र व्यूहविधानं दशभिः श्लोकैराह— पञ्चारत्नीत्यादि। पञ्चहस्तप्रमाणमिह धनुर्ग्राह्यम्, न चतुर्हस्तम्। तस्मिन् धन्विनं स्थापयेदिति तावत्यधिष्ठाने पदातिरेको योद्धुं व्याप्रियेत। धन्विनमिति वचनादधन्विनां स्थानमनियतम्। तच्चानुक्तमपि यथासुखं कल्पनीयम्। त्रिगुणे त्रिधनुषि अश्वं स्थापयेत्; पञ्चसु पञ्चसु धनुःषु गजरथौ स्थाप्यौ, तावति तेषां यथासुखं व्याप्रियमाणत्वात्। जम.

(२) व्यूहरचनायां बलानाम् अवस्थानभूमिमभिधातुमाह— पञ्चेति। अरत्निः विस्तृतकनिष्ठः बद्धमुष्टिहस्तः। तैः पञ्चभिः कल्पितं देशमानं धनुः। तस्मिन् धनुषि, पञ्चारत्निप्रमाणभूभागे इति यावत्, धन्विनं धनुर्धरं युधि सङ्ग्रामे स्थापयेत्। त्रिगुणे धनुस्त्रयपरिमितस्थाने पञ्चदशारत्निभूभागे इति यावत्, अश्वः, योज्य इति शेषः। *पञ्चसु पञ्चसु पञ्चगुणितेषु पञ्चधनुःषु, पञ्चविंशत्यरत्निप्रमाणभूभागेष्विति यावत्, रथगजौ योज्यौ स्थापनीयौ। 'पञ्चारत्निर्धनुस्तस्मिन् स्थापयेद्धन्विनम्' इत्यत्र 'पश्चात्तद्विधमुत्सर्पन् स्थापयेद्धलिनम्' इति मुद्रितपुस्तकपाठो न सम्यक्। 'त्रिगुणेऽश्वः' इत्यत्र 'त्रिगुणाश्वौ' इति मुद्रितपुस्तकपाठोऽपि न सम्यक्। उनिसा.

**†[3]शमान्तरस्तु पुरुषस्तुरंगस्त्रिशमान्तरः।**
**कुञ्जरः स्यन्दनश्चैव स्मृतौ पञ्चशमान्तरौ॥**

---

(१) कानी. २०।१५; उनिसा. (जयार्थी नैव युध्येत मतिमानप्रतिग्रहः। युध्येताऽऽवश्यकत्वाद्वा तदाऽतिबलवेष्टितः॥).

(२) कानी. २०।२२; उनिसा. पूर्वार्धे (पञ्चारत्निर्धनुस्तस्मिन् स्थापयेद धन्विनं युधि।) ऽश्वं गजरथौ (ऽश्वो रथगजौ).

* "'पञ्चसु पञ्चसु' इति न वीप्सार्थकं द्विर्वचनम्, अपि तु एकं पञ्चपदं गुणकसंख्याबोधकमपरं च गुण्यसंख्याबोधकम्। संख्येयान्यत्र धनूंषि" इति टीकाकृदभिप्रायोऽत्र स्पष्टं प्रतीयते। एवं च धनुषां पञ्चविंशतित्वमरत्नीनां पञ्चविंशत्यधिकशतत्वं च संपद्यते। तथा चाग्रेऽरत्निपञ्चविंशतित्वोक्तिः पूर्वग्रन्थविरुद्धा। धनुषां संख्येयत्वोक्तिः प्रामादिकीति विरोधपरिहारार्थमरत्नीनां संख्येयत्वकल्पने तु 'तस्मिन्, त्रिगुणे' इति धनुषः प्रक्रान्तत्वात् भग्नप्रक्रमतादोषः। तस्मात् 'पञ्चसु पञ्चसु' इति धनुःपरं वीप्साद्विर्वचनमेवेति युक्तम्।

† पूर्वश्लोके पुरुषाश्वगजरथानां युद्धव्यापारक्षेत्रपरिमाणमुक्तम्, प्रकृतश्लोके तु तत्तत्क्षेत्राणामन्तरमुक्तमिति विषयभेदो जम-टीकायां स्पष्टः, उनिसा टीकायामप्यवतरणिकातस्तथैव

(१) कानी. २०।२३; उनिसा. शमा (समा).

(१) चतुर्दशाङ्गुलः शम इत्युच्यते। द्वयोः पदात्यधिष्ठानयोरन्तरं शमप्रमाणं स्थापयेत्। एवमश्वाधिष्ठानयोरन्तरं त्रिशमम्, हस्त्यधिष्ठानस्यन्दनाधिष्ठानयोश्च पञ्चशममिति। जम.

(२) व्यूहरचनायां बलानामसंकुलार्थं परस्परान्तरमभिधातुमाह– समेति। समः चतुर्दशाङ्गुलप्रमाणम्, सः अन्तरम् अन्तरालं यस्य स तथाभूतः पुरुषः पदातिपुरुषः। एकपदातिपुरुषात् अपरपदातिपुरुषस्यान्तरं चतुर्दशाङ्गुलप्रमाणमिति भावः। तुरंगः अश्वः त्रिसमान्तरः द्विचत्वारिंशदङ्गुलप्रमाणान्तरः। एकतुरंगात् अपरतुरंग उक्तप्रमाणान्तर इति भावः। कुञ्जरः हस्ती स्यदनः रथश्च पञ्चसमान्तरः सप्तत्यङ्गुलप्रमाणान्तरः। एककुञ्जरादपरकुञ्जर एकस्यन्दनादपरस्यन्दनश्च उक्तप्रमाणान्तर इति भावः। उनिसा.

**[1]तथा वा खलु युध्येरन् पत्त्यश्वरथदन्तिनः।**
**यथा भवेन्न संबाधो व्यायामविनिवर्तने॥**

(१) तथा वा युध्येरन् पत्त्यादयो द्विगुणं त्रिगुणं वाऽन्तरं परिकल्प्य, यथा व्यायामे विनिवर्तने च परस्परस्य संबाधो न भवेत्। संबाधश्चाङ्गविक्षेपविधुरत्वम्। जम.

(२) व्यायामे युद्धार्थप्रसरणे तथा विनिवर्तने विश्रामार्थापसरणे यथा येन प्रकारेण असंबाधो भवेत् संकीर्णता न भवेत् तथा तेन प्रकारेण पत्त्यश्वरथदन्तिनः युध्येरन्। विस्तीर्णायां रणभूमौ पूर्वोक्तप्रमाणादधिकमप्यन्तरालं कार्यमिति भावः। 'व्यायामे' इत्यत्र 'व्यायामः' इति मुद्रितपुस्तकपाठो न साधुः। उनिसा.

**[2]असंकरेण युध्येरन् संकरः संकुलावहः।**
**महासंकरयुद्धे च संश्रयेरन् महागजान्॥**

(१) तत् भङ्गकारणं संभवतीत्याह– असंकरेणेति। संश्रयेरन् महागजान्, न योधानिति शेषः, तदानीं पत्त्यश्वानामसंचारात्। जम.

(२) असंकरेण भिन्नजातीयामिश्रणेन युध्येरन्। यतः संकरः भिन्नजातीयमिश्रणं संकुलावहः संकीर्णताप्रापकः। तु पुनः महासंकुलयुद्धे महागजान् संश्रयेरन्। आकुलत्वापनोदनार्थमिति भावः। 'असंकरेण' इत्यत्र 'संकरेण च' इति 'महागजान्' इत्यत्र 'महाकुलान्' इति च मुद्रितपुस्तकपाठो न समीचीनः। उनिसा.

**[3]अश्वस्य प्रतियोद्धारो भवेयुः पुरुषास्त्रयः।**
**इति कल्प्यास्तु पञ्चाश्वा विधेयाः कुञ्जरस्य च॥**

(१) अश्वस्य प्रतियोद्धार इति। अश्वस्य योद्धुः पुरस्तात्, त्रयः पुरुषाः, प्रतियोद्धारः अग्रयायिनः, स्थापयितव्याः। इति कल्प्या इति। प्रतियोद्धृपुरुषत्रययोजनया कल्पनीयाः पञ्चाश्वाः, ते च कुञ्जरस्य पुरस्तात् प्रतियोद्धारो विधेयाः। जम.

(२) बलविशेषस्य प्रतियोद्धृनभिधातुमाह– अश्वस्येति। अश्वस्य अश्वारोहिणः पुरुषस्य त्रयः त्रिसंख्यकाः पुरुषाः पदातयः प्रतियोद्धारो भवेयुः। कुञ्जरस्य हस्त्यारोहिणः पुरुषस्य पञ्चाश्वाः पञ्चसंख्यकाः अश्वारोहिणः पुरुषाः प्रतियोद्धारो भवेयुरिति पूर्वेणान्वयः। इति कल्पाः एवं प्रणाल्यः, विधेयाः विधातव्याः। 'अश्वस्य' इत्यत्र 'अवश्यम्' इति मुद्रितपुस्तकपाठो न सम्यक्। उनिसा.

---

प्रतीयते। विषयभेदाभावे सामान्यतः पौनरुक्त्यं विशेषतो विरोधश्चाऽऽपद्येत। तथा च धनुःप्रमाणक्षेत्रमध्यस्थितैकपुरुषादपरतादृशक्षेत्रमध्यस्थितापरपुरुषस्यान्तरमेकशमाधिकधनुःप्रमाणं निष्पद्यते। एवमश्वादावप्यूह्यम्। तस्मादस्मिन् श्लोके उनिसा-टीकायां च पुरुषादिशब्दाः पुरुषादिक्षेत्रपरा इति ज्ञेयम्।

[1] कानी. २०।२४; 'याम' इति 'यामे' इति वा जमपाठो न निर्णीयते; **उनिसा.** व्र सं (दसं) याम (यामे).

[2] कानी. २०।२५; **उनिसा.** करयुद्धे च (कुलयुद्धे तु).

[3] कानी. २०।२६; **उनिसा.** कल्प्या (कल्पा); नीम. ६५ भवेयुः (भवन्ति) इति कल्प्या (प्रतिकल्पा).

**[1]पादगोपाश्च तावन्तः पुरुषा दश पञ्च च ।**
**विधानमिति नागस्य कथितं स्यन्दनस्य च ॥**

(१) पादगोपाश्च तावन्त इति । हस्तिनः पादरक्षकास्तावन्त एव पञ्चाश्वाः पञ्चदशपुरुषान्विता विधेयाः । ते चरणमूलस्थाः प्रतियोद्धारस्तु पुरःसरा इति विशेषः । विधानमिति । एकस्य हस्तिनो व्यूहविधानमेतदुक्तम् । स्यन्दनस्य चेति । द्विविधो हि व्यूहः– शुद्धो व्यामिश्रश्चेति । तत्र शुद्धो हस्तिव्यूहो रथव्यूहश्च । यथा हस्तिव्यूहस्येदं विधानं तथा रथव्यूहस्यापि द्रष्टव्यम् । व्यामिश्रस्य तु विधानं वक्ष्यति । जम.

(२) कुञ्जरस्य प्रतियोद्धन्तरमभिधातुमाह– पादचारा इति । दश पञ्च च पादचाराः पुरुषाः पञ्चदशसंख्यकाः पदातिपुरुषाः । कुञ्जरस्य प्रतियोद्धारो भवेयुरिति शेषः । नागस्य हस्तिनः कथितम् उक्तम् इति एवं विधानं स्यन्दनस्य रथस्य । विज्ञेयमिति शेषः । 'पादचारा भवेयुश्च' इत्यत्र 'पादशो भावयेदश्व' इति मुद्रितपुस्तकपाठो न समीचीनः । उनिसा.

**[2]अनीकमिति विज्ञेयमिति कल्प्या नव द्विपाः ।**
**अनीकस्य च रन्ध्रं च पञ्चचापं प्रचक्षते ॥**

(१) इति कल्प्या नव द्विपा इति । एकहस्तिविधानेन प्रत्येकं नव द्विपाः कल्पनीयाः, तच्चानीकमिति विज्ञेयम् । तथा चोक्तम्– 'त्रीणि त्रिकाण्यनीकम्' (कौ. १०।५) इति । एवमनीके पञ्चचत्वारिंशदश्वाः, शतं पञ्चत्रिंशच्च पुरुषाः प्रतियोद्धारो भवन्ति, तावन्तश्चाश्वपुरुषाः पादगोपा इति । अनीकस्य रन्ध्रमिति । द्वयोरनीकयोरसंबाधार्थमन्तरं पञ्चधनुःप्रमाणम् । जम.

(२) अनीकानां परस्परान्तरमभिधातुमाह– अनीकेति । अनीकं व्यूहाङ्गम् इति उक्तक्रमेण अश्वपदातियुक्ता नव द्विपा अनीकमपि कल्प्याः कल्पनीयाः । तथा च तस्यानीकस्य रन्ध्रम् अन्तरालं पञ्चचापं पञ्चविंशत्यरत्निप्रमाणम् । भवतीति शेषः । अस्य श्लोकस्य पूर्वार्धं मुद्रितपुस्तके नास्ति । पूर्वार्धं तु 'अनीकमिति विज्ञेयमिति कल्प्या नव द्विपाः' । 'तस्यानीकस्य' इत्यत्र 'तथाऽनीकस्य' इति मुद्रितपुस्तकपाठः । यत् *शेषार्धमुक्तं तत् हस्तलिखितपुस्तके अवर्तमानमतीवासंगतं च । उनिसा.

**[1]इत्यनीकविधानेन स्थापयेद्व्यूहसंपदः ।**
**उरस्यकक्षपक्षांश्च तुल्यानेतान् प्रचक्षते ॥**

(१) व्यूहसंपदः व्यूहप्रकारान्, अनीकसमुदायत्वात् व्यूहस्येति । अनीकभेदानाह– उरस्यकक्षपक्षांश्चेति । मध्ये त्रिकत्रयकल्पितमनीकम् उरस्यम्, तस्य पार्श्वयोस्तत्प्रमाणौ कक्षस्थानीयौ कक्षौ, ततो बहिरुभयतः पक्षस्थानीयौ पक्षाविति तुल्यानेतान् प्रचक्षते । एवमस्मिन् पञ्चानीके व्यूहे पञ्चचत्वारिंशद्धस्तिनो भवन्ति, द्वे शते पञ्चविंशतिश्चाश्वाः, षट् शतानि पञ्चसप्ततिश्च पुरुषाः प्रतियोद्धारः, तावन्तश्च पादगोपा इति । जम.

(२) इत्यनीकविभागेन नवद्विपपरिकल्पितेन व्यूहसंपदः बलर्द्धीः स्थापयेत् । उरस्यकक्षपक्षान्– उरस्याः उरसि व्यूहस्य मध्ये रचितसैन्यानि, कक्षाः कक्षस्थितसैन्यानि, पक्षाः पक्षस्थितसैन्यानि, एतान् तुल्यान् समद्विपसंस्था(? ख्या)न् प्रचक्षते । अयं श्लोको मुद्रितपुस्तके नास्ति । श्लोकस्तु 'इत्यनीकविभागेन... प्रचक्षते ॥' इति । उनिसा.

**[2]उरः कक्षौ च पक्षौ च मध्यः पृष्ठं प्रतिग्रहः ।**
**कोटी च व्यूहशास्त्रज्ञैः सप्ताङ्गो व्यूह इष्यते ॥**

* मुद्रितपुस्तके 'सर्वव्यूहविधानज्ञा युद्धकर्मसु कर्मणः (? र्मिणः)' इत्युत्तरार्धम् । तस्य च 'प्रचक्षते' इत्यत्र कर्तृत्वेनान्वयान्नासंगतत्वम् ।

(१) कानी. २०।२७ ; उनिसा. गोपाश्च तावन्तः (चारा भवेयुश्च).

(२) कानी. २०।२८ ; उनिसा. अनीकस्य च (तस्यानीकस्य).

(१) कानी. २०।२९ ; उनिसा. धाने (भागे).

(२) कानी. २०।३० ; उनिसा. मध्यः (मध्यं) कोटी (कोटिः).

( १ ) सप्ताङ्गो व्यूह इष्यते पञ्चानीक एव । तद्यथा – उरस्यं कक्षौ पक्षौ च त्रीण्यङ्गानि स्थापयित्वा तेषामेव पृष्ठतः प्रोरस्यं प्रकक्षौ प्रपक्षौ च स्थापयेत् । तत्र प्रोरस्यो मध्य उच्यते, प्रकक्षौ पृष्ठम् , प्रपक्षौ कोटीत्यपराणि त्रीण्यङ्गानि । प्रतिग्रहश्च सप्तममङ्गम् । सोऽपि विभिन्न-संधानहेतुत्वात् व्यूहेऽन्तर्भवति । जम.

( २ ) व्यूहस्य अङ्गान्यभिधातुमाह– उर इति । उरः व्यूहमध्यस्थमनीकम् । कक्षौ उरस्यस्य संनिहितपार्श्वद्वय-स्थमनीकम् । पक्षौ कक्षाधः पार्श्वद्वयस्थमनीकम् । मध्यं पक्षयोर्बहिःस्थितमनीकम् । पृष्ठं मध्यस्य पृष्ठतोऽवस्थित-मनीकम् । प्रतिग्रहः पृष्ठाख्यादनीकात् द्विशतधनुर्व्यवहित-मनीकम् । कोटिः एकपक्षस्थितमनीकम् । व्यूहशास्त्रज्ञैः व्यूहशास्त्रनिपुणैः सप्ताङ्गः उरःप्रभृतिसप्तविधाङ्गसंपन्नः व्यूहः इष्यते । उनिसा.

**[१]उरस्यकक्षपक्षैस्तु व्यूहोऽयं सप्रतिग्रहः ।**
**गुरोरेष च शुक्रस्य कक्षाभ्यां परिवर्जितः ॥**

( १ ) तत्र सप्ताङ्गे मतभेदं दर्शयितुमाह– उरस्य-कक्षपक्षैस्त्विति । अयं षडनीको राजस्थानलक्षणेन प्रति-ग्रहेण सह बृहस्पतेर्व्यूहविभागः । एष एव शुक्रस्य कक्षाभ्यां परिवर्जितः चतुरनीक इत्यर्थः । प्रपक्षपक्षोरस्य-प्रोरस्यास्तूभयोरपि यथासंभवं द्रष्टव्याः । तत्र शुक्रस्य पञ्चाङ्गो व्यूहः, कक्षप्रकक्षाभावात् । बृहस्पतेस्तु सप्ताङ्गः । जम.

( २ ) आचार्यमतमभिधातुमाह– उरस्येति । उरस्य-कक्षपक्षैस्तु उरःस्थितकक्षस्थितपक्षस्थितानीकैः प्रतिग्रहैश्च प्रतिग्रहस्थितानीकैश्च अयं व्यूहः गुरोः बृहस्पतेः । पक्षाभ्यां परिवर्जितः पक्षस्थितानीकविरहितः एष व्यूहः शुक्रस्य शुक्राचार्यस्य । अभिमतः इति शेषः। ' कक्षाभ्यां परिवर्जितः ' इति मुद्रितपुस्तकपाठः । ' उरस्यकक्षपक्षैस्तु व्यूहोऽयं च प्रतिग्रहैः ' इत्यत्र ' उरश्च कक्षपक्षौ च व्यूहोऽयं सप्रतिग्रहः ' इति मुद्रितपुस्तकपाठः । उनिसा.

**[२]अभेद्याः कुलजा मौला लब्धलक्षाः प्रहारिणः ।**
**सेनाङ्गपतयः कार्या युद्धदृष्टप्रतिक्रियाः ॥**

( १ ) एवं व्यूहविधानमुक्त्वा सारफल्गुबलविनियोगं चतुर्भिः श्लोकैर्दर्शयति– अभेद्या इत्यादि । अभेद्याः परबलस्य । लब्धलक्षाः प्रतापवन्तः । प्रहारिणः शूराः । ते व्यवस्थाकरणाय सेनाङ्गस्य पतयः कार्याः । तथा चोक्तम्– 'अङ्गदशकस्यैकः पतिः पतिदशकस्यैकः सेनापति-स्तद्दशकस्यैको नायकः ' (कौ. १०।६ ) इति । युद्धदृष्ट-प्रतिक्रियाः युद्धे दृष्टा प्रतिक्रिया प्रतिविधानं यैरिति । जम.

( २ ) सेनाङ्गपतिलक्षणमभिधातुमाह– अभेद्या इति । अभेद्याः भेदेनावश्याः । कुलजाः सद्वंशोत्पन्नाः । मौलाः मूलपुरुषसंबन्धादागताः । लब्धलक्ष्याः लब्धो लक्ष्यो यैः ते तथाभूताः । प्रहारिणः प्रहरणशीलाः । दृष्टयुद्धप्रतिक्रियाः दृष्टा युद्धप्रतिक्रिया युद्धप्रतिकारः यैः ते तथाभूताः । एवंभूता जनाः सेनाङ्गपतयः सेनाङ्गानां हस्त्यश्वरथपदाति-रूपचतुरङ्गबलानां पतयः अधिष्ठातारः कार्याः । ' मौलाः ' इत्यत्र ' मेध्याः ' इति मुद्रितपुस्तकपाठः । उनिसा.

**[२]प्रवीरपुरुषैरेते तिष्ठेयुः परिवारिताः ।**
**अभेदेनैव युध्येरन् रक्षेयुश्च परस्परम् ॥**

( १ ) एते सेनाङ्गपतयः । तिष्ठेयुः परिवारिताः । तद्वशे प्रवीरपुरुषैः स्थातव्यमित्यर्थात् कथयति । अभेदेन संभूय । जम.

( २ ) सेनाङ्गपतिविधेयमभिधातुमाह– प्रवीरेति । श्लोकार्थः प्रतीतः । उनिसा.

**[३]फल्गु सैन्यस्य यत्किंचिन्मध्ये व्यूहस्य तद्भवेत् ।**
**युद्धवस्तु च यत्किंचित् प्रायस्तज्जघने भवेत् ॥**

---

( १ ) कानी. २०।३१ ; उनिसा. सप्रतिग्रहः ( च प्रतिग्रहैः ) कक्षाभ्यां ( पक्षाभ्यां ).

( १ ) कानी. २०।३२ ; उनिसा. लक्षाः ( लक्ष्याः ) युद्धदृष्ट ( दृष्टयुद्ध ).

( २ ) कानी. २०।३३.

( ३ ) कानी. २०।३४ ; उनिसा. सैन्यस्य ( सैन्यं च ).

(१) सैन्यस्य चतुरङ्गस्य यत्किंचिदसारं सैन्यं तत् व्यूहस्य मध्ये प्रोरस्ये भवेत्। एवं तत्सहिष्णु भवति। युद्धवस्तु यन्त्रायुधाद्युपकरणम्। जघने पृष्ठे। जम.

(२) फल्गु असारं यत्किंचित् सैन्यं तत् व्यूहस्य सप्ताङ्गव्यूहस्य मध्ये भवेत्। यत्किंचित् युद्धवस्तु युद्धोपकरणादिकं तत् जघने व्यूहस्य जघनप्रदेशे भवेत् 'फल्गु सैन्यं च' इत्यत्र 'फल्गु सैन्यस्य' इति मुद्रितपुस्तकपाठो न सम्यक्। उनिसा.

**[१]युद्धार्थं युद्धकुशलं मुण्डानीकं प्रयोजयेत्।**
**युद्धं हि नायकप्राणं हन्येत तदनायकम्॥**

(१) मुण्डानीकमिति। यत् राजस्थानमध्वजत्वादनभिलक्ष्यभूतं तत् मुण्डानीकम्। युद्धकुशलं सैन्यं युद्धार्थं बलमध्ये नियोजयेत्। अन्यथा तत् सैन्यमनायकं हन्येत। उक्तं च— 'पितृपुत्रभ्रातृकाणामायुधीयानामध्वजं मुण्डानीकं राजस्थानं कुर्वीत' (कौ. १०।३) इति। जम.

(२) प्रतिग्रहानीकस्यैव विशेषमभिधातुमाह— युद्धार्थमिति। युद्धकुशलः युद्धशास्त्रनिपुणः, विजिगीषुरिति शेषः, युद्धार्थं सङ्ग्रामार्थं मुण्डानीकं छत्रचामरादिराजचिह्नरहितं सैन्यं नियोजयेत्। स्वयं तु युद्धस्थले न यायादिति भावः। तेनैव राजा रक्षितो भवति। हि यतः युद्धं नायकप्राणं विजिगीषुप्राणम्। तत् युद्धम् अनायकं विजिगीषुरहितं सत् हन्यते विफलं भवति। 'युद्धकुशलः' इत्यत्र 'युद्धकुशलम्' इति मुद्रितपुस्तकपाठो न साधुः। 'मुण्डानीकम्' इत्यत्र 'चण्डानीकम्' इति मुद्रितपुस्तकपाठः। उनिसा.

**[२]श्येनः सूची च वज्रश्च शकटं मकरध्वजः।**
**इत्येवमादयो व्यूहाः शास्त्रज्ञैः समुदाहृताः॥**

**[३]व्यूहोऽनुपृष्ठमचलः पत्यश्वरथदन्तिभिः।**
**तथाऽप्रतिहतो ज्ञेयो हस्त्यश्वरथपत्तिभिः॥**

(१) व्यामिश्रं व्यूहविधानं पञ्चभिः श्लोकैर्दर्शयति— व्यूह इत्यादि। अनुपृष्ठमिति। पुरस्तात् पत्तयः, तत्पृष्ठेऽश्वाः, तत्पृष्ठे रथाः, तत्पृष्ठे हस्तिन इति अचलो नाम। तथा हस्तिनोऽश्वा रथाः पत्तयश्चानुपृष्ठमित्यप्रतिहतसंज्ञः। तदुभयं चतुरनीकम्। जम.

(२) अचलव्यूहमप्रतिहतव्यूहं चाभिधातुमाह— व्यूह इति। अनुपृष्ठमिति वीप्सा द्रष्टव्या। तथा च *अनुपृष्ठम् अनुपृष्ठं विन्यस्तैः पत्यश्वरथदन्तिभिः अचलः अचलनामकः व्यूहः। भवतीति शेषः। तद्यथा— पत्तीनां पृष्ठतः अश्वाः, अश्वानां पृष्ठतः रथाः, रथानां पृष्ठतः दन्तिनः। तथा अनुपृष्ठमनुपृष्ठं विन्यस्तैः हस्त्यश्वरथपत्तिभिः अप्रतिहतः अप्रतिहताख्यः व्यूहः ज्ञेयः। तद्यथा —हस्तिनां पृष्ठतः अश्वाः, अश्वानां पृष्ठतः रथाः, रथानां पृष्ठतः पत्तय इति। उनिसा.

**‡उरसि स्थापयेन्नागान् प्रचण्डान् कक्षयो रथान्।**
**हयांश्च पक्षयोर्व्यूहो मध्यभेदी प्रकीर्तितः॥**

उरसि उरस्ये। मध्यभेदी हस्तिभिर्दृढीकृतमध्यत्वान्मध्येन परबलस्य भेदनशीलः। जम.

**मध्यदेशे हयानीकं रथानीकं तु कक्षयोः।**
**पक्षयोश्च गजानीकं व्यूहोऽन्तभिदयं स्मृतः॥**

(१) मध्यदेशे उरस्ये। व्यूहः अन्तयोर्दृढः अन्तभेदी, अन्तयोर्हस्तिभिर्दृढीकृतत्वात्। जम.

(२) अन्तभिदं व्यूहमभिधातुमाह— मध्येति। यस्य व्यूहस्य मध्यदेशे हयानीकम् अश्वसैन्यम्, कक्षयोः रथानीकं रथारूढसैन्यम्, पक्षयोः गजानीकं गजारूढसैन्यम्, सोऽयं व्यूहः अन्तभित् अन्तं शत्रुबलस्य मध्यं भिनत्ति यः स तथाभूतः स्मृतः। उनिसा.

**रथस्थाने हयान् दद्यात् पदातींश्च हयाश्रये।**
**रथाभावे तु सर्वत्र नागानेव प्रकल्पयेत्॥**

---

(१) कानी. २०।३५; उनिसा. कुशलं (कुशलः) प्रयो (नियो) हन्येत (हन्यते).

(२) कानी. २०।३५ इति श्लोकानन्तरं प्रक्षिप्तः.

(३) कानी. २०।३६–३९.

* 'अनुदिनम्' इतिवत् वीप्सार्थेऽनोरव्ययीभावं स्वीकृत्य सकृद्वचनेनापीष्टार्थलाभात् समीपार्थे पश्चादर्थे वाऽनोरव्ययीभावमुपेत्य वीप्सार्थलाभायेयमश्रुतद्विर्वचनकल्पना व्यर्था।

‡ अस्मिन् श्लोके उनिसा-व्याख्यानं नास्ति।

(१) रथस्थाने कक्षयोरित्यर्थः। हयाश्रये मध्यदेशे। पक्षयोस्तु गजानीकं स्यादेव। इत्येवमपरोऽन्तभेदी। रथाभावे त्विति। सर्वत्र व्यामिश्रे व्यूहे रथाभावे तत्स्थाने नागानेव प्रकल्पयेत्, अश्वपदातीनामस्थिरत्वात्। जम.

(२) *बलानां कस्यचिदभावे व्यूहविधौ विधेयमाह– रथेति। श्लोकार्थः सुगमः। उनिसा.

**[1]विभज्य प्रक्षिपेद्व्यूहे रथपत्त्यश्वकुञ्जरान्।**
**यदि स्याद्दण्डबाहुल्यं स चाऽऽवापः प्रकीर्तितः॥**

(१) विभज्य प्रक्षिपेदिति शुद्धं व्यामिश्रं वा व्यूहं कल्पयित्वा यदि दण्डबाहुल्यं स्यात् तद्वाढ्यर्थं पुनस्तस्मिन् रथादीन् विभज्य प्रक्षिपेत्। तत्र रथादींस्त्रीन् भागान् कृत्वा भागमेकं कक्षयोर्द्वितीयं पक्षयोस्तृतीयमुरस्ये प्रक्षिपेत्। तथा हस्तिनामश्वानां चायमेव विभागः। तथा चोक्तम्– 'रथानां द्वौ त्रिभागावङ्गेष्वावपेच्छेषमुरस्यवस्थापयेत्। तेन हस्तिनामश्वानां चाऽऽवापा व्याख्याताः' (कौ. १०।५) इति। स चाऽऽवापः प्रकीर्तितः समन्तात् उप्यते प्रक्षिप्यते इति कृत्वा। जम.

(२) बलानां बाहुल्ये विधेयमाह– विभज्येति। पत्त्यश्वरथकुञ्जरान् विभज्य व्यूहे साकारे व्यूहे प्रक्षिपेत्। यदि दण्डबाहुल्यं बलप्राचुर्यं स्यात् तदा व्यूहः आवापः प्रकीर्तितः, अधिकबलानामावपनात्। अस्य श्लोकस्य उत्तरार्धस्थाने अपरार्धं मुद्रितपुस्तके मुद्रितम्, तदर्धं तु अत्र न संगतम्। अस्य शेषार्धं तु एकचत्वारिंशदङ्कितश्लोकस्य पूर्वार्धस्थाने मुद्रितम्। तत्तु– 'यदि स्याद्दण्डबाहुल्यं तदाऽऽवापः प्रकीर्तितः' इति। 'व्यूहे' इत्यत्र 'मध्ये' इति मुद्रितपुस्तकपाठः। उनिसा.

---

* पूर्वार्धमपि सर्वव्यूहविषयम्, नान्तर्भिन्नमात्रविषयमिति टीकाद्वयमाभिप्रैतीति प्रतीयते। अस्मिन्पक्षे पूर्वार्धे रथस्थाने हयदानस्योक्तत्वादुत्तरार्धं पक्षान्तरत्वेन व्याख्येयम्। अन्यथा विरोधः।

(१) कानी. २०।४० ; उनिसा. रथपत्त्यश्व (पत्त्यश्वरथ) स चा (तदा).

***[1]धनुः सूची च दण्डश्च शकटो मकरध्वजः।**
**इत्यादयो महाव्यूहास्तदाकारान् प्रकल्पयेत्॥**

महाव्यूहस्य भेदानभिधातुमाह– धनुरिति। श्लोकार्थः सुगमः। अयं श्लोकः हस्तलिखितपुस्तकद्वये नास्ति। उनिसा.

**[2]मण्डलोऽसंहतो भोगो दण्डश्चेति मनीषिभिः।**
**चत्वारः प्रकृतिव्यूहा भेदास्त्वेषां प्रकीर्तिताः॥**

(१) इदानीं संस्थानतो व्यूहभेदांश्चतुर्दशभिः श्लोकैर्दर्शयति– मण्डल इत्यादि। एते च मण्डलादयश्चत्वारः स्वस्वभेदापेक्षया प्रकृतिव्यूहाः। जम.

(२) साकारव्यूहानां तद्भेदानां च उद्देशमभिधातुमाह– मण्डलेति। मण्डलश्च असंहतश्च मण्डलासंहतौ वक्ष्यमाणलक्षणौ। भोगो दण्डश्च एतावपि वक्ष्यमाणलक्षणौ। एते चत्वार एव मनीषिभिः प्रकृतिव्यूहाः विकृतिरहिता व्यूहाः प्रकीर्तिताः। 'मण्डलासंहतौ' इत्यत्र 'मण्डलोऽसंहतः' इति मुद्रितपुस्तकपाठः। उनिसा.

**[3]तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्वावृत्तिरेव च।**
**मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः॥**

(१) एषां स्वरूपभेदमाह– तिर्यग्वृत्तिरित्यादि। पक्षादीनां तिर्यग्वृत्तिः दण्डः। भोगोऽन्वावृत्तिः अनु समस्तानामनीकानामावृत्तिः अन्योन्यानुगता वृत्तिः भोगः सर्पशरीरवत्। मण्डलः सर्वतोवृत्तिः अनीकानां समन्तात् वृत्तिर्मण्डलः। पृथग्वृत्तिरसंहतः। पृथग्ग्रहणमनीकसंघे:

---

* श्लोकोऽयं जयमङ्गलापुस्तके नास्ति। कानी. २०।५४ इति श्लोकादूर्ध्वम् 'श्येनः सूचीमुखो वज्रः शकटो मकरोऽम्बुजः। इत्यादयः स्मृता व्यूहास्तदाकारान्प्रकारयेत्॥' इति प्रक्षिप्तः श्लोकोऽत्रानुसंधेयः।

(१) कानी. २०।४० इति श्लोकानन्तरम् उनिसापुस्तके समुद्धृतोऽयं श्लोकः.

(२) कानी. २०।४१ ; उनिसा. लोऽसंहतो (लासंहतौ).

(३) कानी. २०।४२–४३.

पञ्चधनुःप्रमाणादपि विश्लेषतरार्थम् । विश्लिष्टतरानीकोऽसंहतः, अनीकानामितरेतरासंहतत्वात् । जम.

(२) दण्डादिव्यूहानां स्वरूपमभिधातुमाह— तिर्यगिति । तिर्यक् वृत्तिः अवस्थितिः यस्यासौ दण्डः दण्डाख्यः व्यूहः । सैन्यानां दण्डवत्तिर्यगवस्थितिर्दण्ड इति भावः । भोगः भोगाख्यः व्यूहः अन्वावृत्तिः अनु पश्चाद्भावेन आवृत्तिर्यस्यासावन्वावृत्तिः । 'भोगोऽन्वावृत्तिरेव च' इत्यत्र 'भोगत्वादावृत्तिरेव च' इति मुद्रितपुस्तकपाठो न सम्यक् । मण्डलः सर्वतोवृत्तिः सर्वतोमुखः । मण्डलाकारे व्यूहे सर्पशरीरवन्मण्डलस्थितानां गजादिसैन्यानामवस्थितिरिति भावः । पृथग्वृत्तिः असंहतः असंहताख्यः व्यूहः । अत्र व्यूहे समस्तसैन्यानां पृथग्भावेनावस्थितिरिति भावः । तद्यथा— [*आकृतिः] । अस्य श्लोकस्य शेषार्धं मुद्रितपुस्तके नास्ति । शेषार्धं तु 'मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः' इति । उनिसा.

**प्रदरो दृढकोऽसह्यश्चापस्तत्कुक्षिरेव च ।**
**प्रतिष्ठः सुप्रतिष्ठश्च श्येनो विजयसंजयौ ॥**

**[1]विशालविजयः सूची स्थूणाकर्णश्चमूमुखः ।**
**झषास्यो वलयश्चैव दण्डभेदाः सुदुर्जयः ॥**

(१) कः पुनरेषां भेद इत्याह— प्रदर इत्यादि । तत्र प्रदराद्या दुर्जयान्ताः सप्तदश दण्डभेदाः । जम.

(२) दण्डव्यूहस्य भेदानभिधातुमाह— प्रदर इत्यादिना । दण्डस्य प्रदरेत्यादयः सप्तदश भेदा भवन्ति । अन्यत् प्रतीतम् । 'दण्डभेदास्तु दुर्जयः' इत्यत्र 'दण्डभेदाः सुदुर्जयः' इति मुद्रितपुस्तकपाठः । उनिसा.

---

* उपाध्यायनिरपेक्षानुसारिण्यां काश्चिद्व्यूहाकृतयः प्रदर्शिताः । तास्तु न यथार्था इति मन्यमानैरस्माभिर्न संगृहीताः । एतत्प्रकरणीयकामन्दकीयनीतिसारान्तेऽस्माभिः संग्रहीष्यमाणा आकृतयस्तत्र तत्रानुसंधेयाः ।

(१) कानी. २०।४४ ; उनिसा. 'झषास्यो' इत्यत्र 'सुखास्यो' इति पाठः, 'द्विगुणान्त्य' (कानी. २०।४७) इतिश्लोकव्याख्यानात् । सुदुर्जयः (तु दुर्जयः).

**[1]अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्यां कक्षपक्षतः ।**
**अतिक्रान्तश्च पक्षाभ्यां त्रयोऽन्ये तु विपर्यये ॥**

(१) एषां यथाक्रमं लक्षणमाह— अतिक्रान्त इत्यादि । तत्र 'पक्षकक्षोरस्यैः समं वर्तमानो दण्डः' (कौ. १०।६) इति पक्षादयो यस्य व्यूहस्योद्दिष्टा इयं तावद्दण्डप्रकृतिः । अस्याः प्रदरादयो भेदाः । अतिक्रान्तः कक्षाभ्यामिति संबन्धः । स एव दण्डः पुरोनिर्गतकक्षः प्रदरः । (तस्य प्रयोगः ?) प्रतिक्रान्तः कक्षपक्षत इति संबन्धः । स एव दण्डः कक्षाभ्यां पक्षाभ्यां च प्रतिक्रान्तः प्रविष्टः, उरस्यमात्रेण निर्गतः दृढकः । अतिक्रान्तश्च पक्षाभ्यामिति । दण्ड एव पक्षमात्राभ्यां निर्गतः असह्यः । त्रयोऽन्ये तु विपर्यय इति । प्रदरादीनां त्रयाणां यथासंख्येन विपर्यये चापश्चापकुक्षिः प्रतिष्ठश्चेति त्रयोऽन्ये ज्ञेयाः । तत्र प्रदरविपर्यये प्रतिक्रान्तकक्षः चापसंस्थानत्वात् चापः । दृढकविपर्यये कक्षाभ्यां पक्षाभ्यां चातिक्रान्त उरस्यमात्रेण प्रविष्टश्चापकुक्षिः । असह्यविपर्यये पक्षाभ्यां प्रतिक्रान्तो रेखीभूतशेषानीकः प्रतिष्ठसंज्ञको व्यूहो भवति । जम.

(२) *प्रदरादीनां लक्षणान्याह— अतिक्रान्त इत्यादिना । अतिक्रान्तस्तु पक्षाभ्याम् अविपर्यये इत्यर्थः । स एव दण्डः पक्षाभ्याम् अतिक्रान्तः अतिक्रम्य गतः प्रदरो भवति । उभयकक्षस्थपरानीकप्रदारणात् प्रदराख्य इति भावः । तस्याऽऽकारो यथा— [आकृतिः] । प्रतिक्रान्तः पक्षाभ्यां प्रतिक्रान्तः पश्चाद्गतः दृढको भवति । तस्याऽऽकारः तद्यथा— [आकृतिः] । अतिक्रान्तस्तु पक्षाभ्यामिति । कक्षपक्षाभ्याम् अतिक्रान्तः असह्यो व्यूहः । तस्याऽऽकारः तद्यथा— [आकृतिः] । त्रयोऽन्येऽस्येति व्यूहत्रितयस्य विपर्ययः । चापः कक्षाभ्यां प्रतिक्रान्तत्वात् चापसंज्ञः । तद्यथा— [आकृतिः] । तद्विपर्ययः दृढक-

---

* सर्वमिदं व्याख्यानमशुद्धिसंकुलं यथावस्थितमेव संगृहीतम् ।

(१) कानी. २०।४५ ; उनिसाव्याख्यानस्याशुद्धतरत्वात्पाठभेदा न निर्णीयन्ते.

विपर्ययः, अतिक्रान्तपक्षत्वात्। असह्यविपर्ययः प्रतिष्ठः, प्रतिक्रान्तपक्षत्वात्। उनिसा.

[1]पक्षोरस्यैरतिक्रान्तः प्रविष्टोऽन्यो विपर्यये।
स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्ध्वगः॥

(१) पक्षोरस्यैरतिक्रान्तः प्रविष्टोऽन्यो विपर्यय इति। पक्षाभ्यामतिक्रान्त उरस्येन च प्रविष्टोऽन्यः (सु)प्रतिष्ठ इति। अन्यशब्दः काकाक्षिवदुभयत्र संबध्यते। अस्य सुप्रतिष्ठस्य विपर्यये अन्यः श्येनो ज्ञेयः। प्रतिक्रान्तपक्षो निर्गतोरस्यो मध्यकक्षश्च। स्थूणापक्ष इति। स्थूणाकर्णो व्यूहः स्थूणेत्युच्यते। यथा देवदत्तो दत्त इति। स्थूणाकर्णस्य लक्षणं वक्ष्यति– 'द्विगुणान्त्यः' इति। स्थूणाकर्णावेव पक्षौ यस्य दण्डव्यूहस्य सोऽर्धतुरीयव्यूहसंघातः सप्तदशानीको विजयो नाम। धनुःपक्ष इति। चापव्यूहावेव पक्षौ यस्य दण्डस्य स संजयोऽर्धतृतीयव्यूहसंघातस्त्रयोदशानीकः। द्विस्थूण इति। द्वौ स्थूणाकर्णावुपर्युपरि निविष्टौ चतुर्दशानीको विशालविजयाख्यो व्यूहः। उपर्युपरि निविष्टैः पक्षादिभिर्यो दण्ड ऊर्ध्वगो भवति स एवंलक्षणः सूचीसंज्ञको व्यूहः। जम.

(२) *श्येनाकारत्वात् श्येनाख्यः। स्थूणापक्षः पक्षयोः स्थाने स्थूणाव्यूहो यस्यासौ स्थूणापक्षः। अयं विजयाख्यो व्यूहः। धनुःपक्ष इति। चापव्यूहः पक्षयोः स्थाने यस्यासौ धनुःपक्षः। अयं संजयाख्यो व्यूहः। द्विस्थूण इति। द्विगुणितस्थूणः। अयं विशालविजयाख्यो व्यूहः। तस्याऽऽकारः तद्यथा– [आकृतिः]। दण्ड ऊर्ध्वग इति। ऊर्ध्वगो दण्ड इत्येव सूचीव्यूहो भवति। तद्यथा– [आकृतिः]। उनिसा.

[2]द्विगुणान्त्यस्त्र्यभिक्रान्तपक्षोऽन्योऽस्य विपर्यये।
द्विचतुर्दण्ड इत्येते ज्ञेया लक्षणतः क्रमात्॥

(१) द्विगुणान्त्य इति। द्विगुणौ अन्त्यौ पक्षौ यस्य दण्डव्यूहस्य स स्थूणाकर्णो नाम। त्र्यभिक्रान्तपक्ष इति। त्रयस्त्रयोऽभिक्रान्ताः पक्षा यस्य दण्डस्य स चतुर्गुणपक्ष एकादशानीकश्चमूमुखसंज्ञः। अन्योऽस्य विपर्यये। प्रतिक्रान्तपक्षोऽन्यः झषास्यो नाम व्यूहः। सोऽप्येकादशानीकः। द्विचतुर्दण्ड इति। दण्डग्रहणं प्रत्येकं योज्यम्। द्वौ दण्डव्यूहौ एको दशानीको वलयो नाम। चतुर्दण्डो विंशत्यनीको दुर्जयः। इति दण्डभेदा निर्दिष्टा इति। जम.

(२) *कर्णयोः स्थाने स्थूणाव्यूहो यस्यासौ स्थूणाकर्णः। अतिक्रान्तपक्ष इति। अयं चमूमुखः व्यूहः। अन्योऽस्य विपर्यय इति। अस्य चमूमुखस्य व्यूहस्य विपर्ययः, (उत्तरस्य ?) पक्षाभ्यां प्रतिक्रान्तपक्षत्वात्, सुखाख्यो‡ व्यूहो भवति। तद्यथा– [आकृतिः]। द्विचतुर्दण्ड इति। द्विगुणितदण्डो वलयो भवति। चतुर्गुणितदण्डो दुर्जयो भवति। तद्यथा– [आकृतिः]। उनिसा.

[1]गोमूत्रिकाऽहिसारी च शकटो मकरस्तथा।
भोगभेदाः समाख्यातास्तथा परिपतन्तिकः॥

(१) भोगव्यूहभेदानाह– गोमूत्रिकेत्यादि। पक्षादिविषमं वर्तमानो भोगः। तत्र गोमूत्रमार्गप्रतिच्छन्दः गोमूत्रिका। सर्पसृतिप्रतिच्छन्दः अहिसारी। तयोर्यौगिकेन नाम्ना निर्देशादेव लक्षणमप्युक्तं वेदितव्यम्। जम.

(२) भोगभेदानामुद्देशमाह– गोमूत्रिकेत्यादि। गोमूत्रिका गवां मूत्रवद्रेखाकारो विद्यते अस्याः तथाभूता। अहिसारी अहेः सरणस्थानं चाहिसारीत्यभिधीयते। 'अहिसारी च' इत्यत्र 'अहिसंचारी' इति मुद्रितपुस्तकपाठः। अनयोः प्रयोगः तद्यथा– [आकृतिः]। उनिसा.

[2]गोमूत्रिका गवां मूत्ररेखाकारो विभाव्यते।
अहेश्च सरणस्थानं चाहिसार्यभिधीयते॥

---

* अस्मात्पूर्वतनो ग्रन्थस्त्रुटितः प्रतीयते।

(१) कानी. २०१४६.

(२) कानी. २०१४७; उनिसा. स्त्र्यभि (स्त्वति) र्ययेये (पर्ययः).

* अस्मात् पूर्वो ग्रन्थः प्रभ्रष्ट इति प्रतीयते।

‡ झषास्यशब्दस्थानेऽयं लेखकप्रमादः स्यात्।

(१) कानी. २०१४८; उनिसा. पतन्ति (पताक).

(२) कानी. २०१४८ इत्यत ऊर्ध्वं प्रक्षिप्तः.

**'दण्डपक्षो युगोरस्यः शकटस्तद्विपर्यये ।**
**मकरो व्यवकीर्णश्च शेषः कुञ्जरवाजिभिः ॥**

(१) शेषाणां लक्षणमाह— दण्डपक्ष इत्यादि । शकट-संस्थानस्य विवक्षितत्वादूर्ध्वराजी अत्र दण्डो ग्राह्यः । तथा च पक्ष इति पक्षकक्षयोः सामान्येन ग्रहणम् । यस्य पौर्वापर्येण दण्डवदवस्थितौ कक्षपक्षौ । युगोरस्यः द्विगुणोरस्यः शकटः । तद्विपर्यये मकरः । तद्विपरीतसंस्थान इत्यर्थः । द्वावप्येतौ षडनीकौ । व्यवकीर्णश्च शेष इति । हस्त्यादिभिरावापैर्मध्येऽवकीर्णः शकटो मकरो वा व्यूहः शेषः परिपतन्तिको व्यूहः । स च स्पष्टत्वान्न दर्शितः । जम.

(२) दण्डव्यूहः पक्षस्थाने यस्यासौ दण्डपक्षः । युगोरस्य इति । उरस्यं द्विगुणितं विधेयमित्यर्थः । अर्थापत्त्या कक्षानीके विधेयः(? ये) । तद्विपर्ययो मकर इति । सर्वशकटसंस्थविपर्ययमुखो मकरः । तथा व्यतिकीर्णः शेषः कुञ्जरवाजिभिरिति । परितः पताकाकारोऽयं व्यूहः मध्ये कुञ्जरवाजिभिर्व्यतिकीर्णो भवति मकर एवेति । 'व्यवकीर्णः' इति 'कुञ्जरराजिभिः' इति च मुद्रितपुस्तकपाठः । पूर्वश्लोके 'परिपताककः' इत्यत्र 'परिपतन्तकः' इति मुद्रितपुस्तकपाठो न समीचीनः । उनिसा.

**'मण्डलव्यूहभेदौ च सर्वतोभद्रदुर्जयौ ।**
**अष्टानीको द्वितीयस्तु प्रथमः सर्वतोमुखः ॥**

(१) मण्डलव्यूहभेदावाह— मण्डलेत्यादि । अष्टानीको द्वितीयस्तु प्रथमः सर्वतोमुख इति । पक्षादीनां मण्डलवृत्तिरचनया सर्वतोवृत्तिर्मण्डलः । तत्र बहिर्मुखत्वेनावस्थितः सर्वतोमुखः सर्वतःसैन्यः सर्वतोभद्रः । स एव यत्र यत्र भयातिशयस्तत्र तत्र द्विगुणमुरस्यं कल्पयित्वा तद्वत् कक्षयोश्च द्वैगुण्यादष्टानीको दुर्जयसंज्ञः । ननु च सर्वतोभद्रेण यायादित्युक्तम् (कानी. १९।४९), तत् कथं पार्श्वतः पुरतो गम्यते इति ? उच्यते— सर्वतोभयागमनवेलायामस्य सर्वतोमुखत्वम् । यानवेलायां तु तद्विधसंस्थानानामेव यातव्यमार्गाभिमुखता भविष्यति । जम.

(२) मण्डलभेदानभिधातुमाह— मण्डलेति । मण्डलव्यूहभेदौ सर्वतोभद्रदुर्जयौ । तत्र प्रथमः सर्वतोमुखः । गजा(? अष्टा)नीकोऽयं दुर्जयः । उनिसा.

**'अर्धचन्द्रक उद्धानो वज्रो भेदास्त्वसंहते ।**
**तथा कर्कटशृङ्गी च काकपादी च गोधिका ॥**

(१) असंहतभेदानाह— अर्धचन्द्रक इत्यादि । भेदास्त्वसंहत इति । असंहतव्यूहेऽर्धचन्द्रादयो भेदा ज्ञेया इति संबन्धः । तथेति । यथा अर्धचन्द्रादयोऽसंहतव्यूहभेदाः तथा कर्कटशृङ्ग्यादयोऽपीति । जम.

(२) *असंहतभेदानभिधातुमाह— अर्धचन्द्रक इति । अर्धचन्द्रकः अर्धचन्द्राकृतिः तद्यथा— [ आकृतिः ] । उद्धारः चतुःसैन्यः, तथा पञ्चसैन्यः, तथा कर्कटाख्यः, तथा काकपादिका, तथा गोधिका इत्यादयो व्यूहास्त्वाकारभेदेन ज्ञेयाः । कर्कटशृङ्गाद्याकारसदृशरचिततत्तत्सैन्यं व्यूहानां कर्कटशृङ्ग्यादीनि नामधेयानि भवन्तीति फलितार्थः । उनिसा.

**'त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः ।**
**इति व्यूहाः समाख्याता व्यूहभेदप्रयोक्तृभिः ॥**

अर्धचन्द्रादित्रयेण सह कर्कटकशृङ्ग्यादीनां त्रयाणां यथाक्रमं सैन्यसाम्यं दर्शयति— त्रिचतुःपञ्चसैन्यानामाकारभेदत इति । त्रयाणामनीकानां तदाकृतिसंस्थानादर्धचन्द्रः कर्कटकशृङ्गी च, चतुर्णामुद्धानकः काकपादी च, पञ्चानां वज्रो गोधा चेत्येषां क्रमः । तत्र कक्षाववस्थाप्य समधिकोरस्यस्य मध्येन किंचिदन्तःप्रवेशात् द्वयोश्च पक्षयोः किंचिदतिक्रमात् त्रयाणामनीकानां प्रवेशनिर्गमापेक्षयाऽर्धचन्द्रसंस्थानत्वात् अर्धचन्द्रकः । एवमेकेनोरस्येन प्रविश्य द्वाभ्यां (च) क(? प)क्षाभ्यां यथावस्थितयोरेव प(? क)क्षयोर्द्विगुणीकरणादिति त्रयाणां प्रवेशवशात्

---

(१) कानी. २०।४९ ; उनिसा. पर्यये ( पर्ययः ) व्यव ( व्यति ).

(२) कानी. २०।५० ; उनिसा. अष्टा ( गजा ).

* उत्तरश्लोकस्यापि व्याख्यानमिदम्, तच्चाशुद्धम् ।

(१) कानी. २०।५१ ; उनिसा. द्धानो ( द्धारो ).

(२) कानी. २०।५२.

कर्कटकशृङ्गी, तत्संस्थानत्वात् । कक्षयोः पक्षयोश्च कोणस्थयोर्मध्यस्थितेनोरस्येन यथावस्थितेन सहोभयतो रचनाविशेषात् चतुर्णामनीकानां प्रवेशनिष्कासादुद्धानकसादृश्यादुद्धानः । मध्ये उरस्यमवस्थाप्य पार्श्वयोर्द्वयोरुपर्यधस्ताच्च क्रमात् प्रसारितकक्षपक्षत्वाच्चतुर्णामनीकानां प्रसारणवशात् काकपदसंस्थानत्वाच्चतुःशाखा काकपदी । पञ्चानामनीकानामाकृतिसंस्थानात् वज्रो गोधा च । तत्र संस्थानानि– त्रीणि त्रिकाणि हस्तिनामुरस्यः, ततः क्रमाच्चत्वारः पञ्च च हस्तिनः, तेषां द्वयोर्द्वयोश्च परत एकैकम् । एते त्रयस्त्रयः शाखास्थानीया इत्युभयतःपक्षो वज्रसंस्थानत्वात् वज्रः । तथैवोरस्य(? स्यं)कक्षौ चावस्थाप्य मध्यतो गोधाया द्वौ त्रीन् द्वौ शिरस्येकमेकं जिह्वास्थानीयं न्यसेदिति मुखतः पक्षत एकं द्वौ त्रीण्येकमिति पादपुच्छतः तन्मध्ये पञ्चपुच्छोऽयमिति पक्षो( ? व्यूहो )ऽयं गोधासंस्थानात् गोधाव्यूहः । जम.

'एते सप्तदश प्रोक्ता दण्डव्यूहास्तु भेदतः ।
तथा व्यूहद्वयं चैव मण्डलस्य समासतः ॥

( १ ) इदानीं व्यूहानां संख्यापूर्वकं नियोगं दर्शयति– एत इत्यादि । सप्तदश प्रकृतिव्यूहेन सहाष्टादश । जम.

( २ ) प्रयोक्तृभिः व्यूहविधानज्ञैः एते सप्तदश भेदतः विभागतः प्रोक्ताः प्रकर्षेण कथिताः । तथा मण्डलस्य मण्डलाख्यस्य व्यूहस्य भेदतः व्यूहद्वयं प्रोक्तम् । उनिसा.

'असंहतास्तु षड् व्यूहा भोगव्यूहास्तु पञ्चधा ।
व्यूहज्ञैस्ते प्रयोज्याः स्युर्युद्धकाल उपस्थिते ॥

( १ ) युद्धकाल इति प्रकाशयुद्धकाले । जम.

( २ ) असंहताः असंहताख्या व्यूहाः षट् षड्विधाः । भोगव्यूहाः भोगाख्यव्यूहाः पञ्चधा पञ्चप्रकाराः । युद्धकाले उपस्थिते युद्धसमये आगते व्यूहज्ञैः प्रयोज्याः स्युः प्रागुक्ता व्यूहाः प्रयोक्तव्या भवेयुः । 'दण्डव्यूहाश्च भेदतः' इत्यत्र 'दण्डव्यूहाश्च पञ्चधा' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

'श्येनः सूचीमुखो वज्रः शकटो मकरोऽम्बुजः ।
इत्यादयः स्मृता व्यूहास्तदाकारान् प्रकारयेत् ॥

'पक्षादीनामथैकेन हत्वा शेषैः परिक्षिपेत् ।
उरसा वा समाहत्य कोटिभ्यां परिवेष्टयेत् ॥

( १ ) युद्धकाल इत्युक्तत्वात् तदिदानीं प्रकाशयुद्धं सप्तभिः श्लोकैर्दर्शयति– पक्षादीनामित्यादि । अथेति अनीकप्रकरणप्रस्तावार्थम् । एकानीकेन परव्यूहं हत्वा शेषैरनीकैः परिक्षिपेत् । उरसा वा उरस्येन । कोटिभ्यां प्रपक्षाभ्याम् । जम.

( २ ) पक्षादीनामनीकेन पक्षादिस्थितसैन्येन हत्वा विनाश्य शेषैः अवशिष्टानीकैः परिक्षिपेत् वेष्टयेत् । उरसा उरःस्थितानीकेन समाहत्य कोटीभ्यां कोटिद्वयस्थसैन्यैः परिवेष्टयेत् । शत्रुसैन्यानीति शेषः । 'शेषैः' इत्यत्र 'शेषम्' इति 'परिवेष्टयेत्' इत्यत्र 'परिवेष्टयन्' इति च मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

'परकोटी समाक्रम्य पक्षाभ्यां सप्रतिग्रहः ।
कोटिभ्यां जघनं हन्यादुरसा च प्रपीडयेत् ॥

( १ ) परकोटी परव्यूहस्य प्रपक्षौ, पक्षाभ्यामाक्रम्य, जघनं प्रोरस्यम्, प्रतिग्रहकोटिभ्यां हन्यात् । उरसा च प्रपीडयेत् जघनम् । एतेन च तदुभयं तदुभयपीडनेन भिद्यते । जम.

( २ ) परकोटीत्यादिश्लोकद्वयं प्रतीतार्थम् । उनिसा.

---

( १ ) कानी. २०।५३ ; उनिसा. हास्तु ( हाश्च ) समासतः ( प्रयोक्तृभिः ).

( २ ) कानी. २०।५४.

( १ ) कानी. २०।५४ इति श्लोकादूर्ध्वं प्रक्षिप्तः.

( २ ) कानी. २०।५५ ; उनिसा. थैकेन ( नीकेन ) कोटि ( कोटी ).

( ३ ) कानी. २०।५६.

**'एवं व्यूह्य प्रयत्नेन यत्नवान् पृथिवीपतिः ।**
**विदारयेद्व्यूहकृतैर्बलैर्विद्विषतो बलम् ॥***

'व्यूहप्रयत्नेन' इत्यत्र 'व्यूहप्रयोगेन' इति पाठान्तरम् । 'व्यूहकृतैः' इत्यत्र 'व्यूहजातम्' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

---

* सटीकनीतिसारमुद्रितपुस्तके तत्संपादकैर्जयमङ्गलाकृतव्यूहाकृत्युपवर्णनानुसारेण या व्यूहाकृतयः प्रदर्शितास्ताः प्रायो यथाभूता एवात्रास्माभिः संगृहीताः । तत्र प्रायः सर्वास्वाकृतिषु जयमङ्गलोपवर्णनस्य समन्वयः स्फुटमवबुध्यते । वज्र-गोधिकोपवर्णनस्य दुर्बोधत्वात्तत्समन्वयस्तदाकृत्योर्नावबुध्यते । शकट-मकरयोरुपवर्णनस्यापि संदिग्धत्वेन तदनुरोधेनानेकविधाकृतिसंभवात्तदाकृत्योरपि न मनः समाधानं भजते । अत्रानीकस्थानप्रदर्शनस्यैवाऽऽकृत्युल्लेखनप्रयोजनत्वात् आकृतीः स्पष्टयितुं रेखादिमुद्रणं न कृतम् । अनीकानां तत्तद्व्यूहाकृत्यनुकूलैः सरलत्ववक्रत्वादिरूपैः प्रातिस्विकसंस्थानैस्तत्तदाकृतयः संपद्यन्ते इति ज्ञेयम् । अत एवात्र कचिदाकृतिसाम्यं दृश्यते । आकृतिषु जयमङ्गलोपवर्णनसमन्वयस्य सुबोधत्वायेदमत्रानुसंधेयम्– व्यूहः शुद्धो व्यामिश्रश्चेति द्विप्रकारः । शुद्धोऽपि हस्तिव्यूहो रथव्यूहश्चेति द्विप्रकारः । तत्र हस्तिमात्रघटितो हस्तिव्यूहः, रथमात्रघटितो रथव्यूहः । मात्रशब्दः क्रमेण रथहस्तिनोर्व्यावृत्त्यर्थः, न रथहस्तिपरिवारभूतानामश्वादीनाम् । हस्तिरथोभयघटितो व्यामिश्रः । अत्रत्याः सर्वा व्यूहाकृतयः शुद्धव्यूहानामेव । ते च हस्तिव्यूहा वा भवेयू रथव्यूहा वा । ते पुनः प्रकृतिव्यूहा विकृतिव्यूहाश्चेति द्विधा । तत्र दण्डभोगमण्डलासंहतरूपाः प्रकृतिव्यूहाश्चत्वारः, तेषां विकृतिव्यूहाः क्रमेण सप्तदश, पञ्च, द्वौ, षट् चेत्याहत्य चतुस्त्रिंशद्व्यूहाः । अनीकैर्व्यूहा व्यूह्यन्ते । प्रत्यनीकं हस्त्यादिसंख्या मूले जयमङ्गलायां च स्पष्टैव । हस्त्याद्यवयवतस्तत्संख्यातश्चैकविधमेवानीकं स्थानविशेषवशात् उरस्यम्, कक्षः, पक्षश्चेति संज्ञात्रयं लभते । तत्र सारत्व-फल्गुत्वकृतविशेषोऽस्तीत्यन्यदेतत् । प्रतिव्यूहं राजस्थानरूपः प्रतिग्रहः, एकमुरस्यं द्वौ कक्षौ द्वौ पक्षाविति पञ्चानीकानि चेत्यङ्गानि समानानि । प्रोरस्याद्यङ्गानामुरस्यादिशब्दैरेव संगृहीतत्वात्तेषां व्यूहविधाने न पृथग्विचारः । केषुचिद्व्यूहेषु केषांचिदनीकानां द्वैगुण्याद्यस्ति, कुत्रचिद्व्यूहे व्यूहान्तरमङ्गं भवति, कुत्रचिद्धस्त्यादीनामावापः क्रियते । आवापो नाम सैन्याधिक्येऽधिकसैन्यस्यानीकेषु प्रक्षेपः । व्यूहाकृत्यनुरोधेनानीकानां प्रतिग्रहविरुद्धदिशा प्राकृतस्थानात् पुरःसरणम् 'अतिक्रमः, निर्गमः, निष्कासः' इत्यादिशब्दैर्व्यपदिश्यते । अनीकानां प्राकृतस्थानात् प्रतिग्रहदिशाऽपसरणम् 'प्रतिक्रमः, प्रवेशः' इत्यादिशब्दैर्व्यपदिश्यते ।

अत्रोपयोजितसंक्षिप्तसंज्ञानामर्थाः– उ = उरस्यम्, क = कक्षः, प = पक्षः, प्र = प्रतिग्रहः इति ।

मूलपाठक्रमेणाऽऽकृतयो यथा ( प्रकृतिक्रमो विकृतिक्रमानुरोधेन परिवर्तितः )–

### प्रकृतिव्यूहाः

**(१) दण्डप्रकृतिः**

प क उ क प
प्र

**(२) भोगप्रकृतिः**

पकउकप
प्र

अत्रानीकानामन्योन्यानुगमो दण्डाद्विशेषः ।

**(३) मण्डलप्रकृतिः**

उ
क क
पं प
प्र

**(४) असंहतप्रकृतिः**

प क उ क प
प्र

दण्डादिष्वनीकानि संहतानि भवन्ति, अत्र त्वसंहतानीति विशेषः ।

### दण्डविकृतिव्यूहाः

**(१) प्रदरः**
**पञ्चानीकः**

क क
प उ प
प्र

**(२) दृढकः**
**पञ्चानीकः**

उ
प क क प
प्र

**(३) असह्यः**
**पञ्चानीकः**

प प
क उ क
प्र

---

( १ ) कानी. २०५६ इति श्लोकादूर्ध्वं जमपुस्तके प्रक्षिप्तः ; उनिसा. व्यूह्य प्र ( व्यूहप्र ).

(४) चापः पञ्चानीकः

प उ प
क क
प्र

(५) चापकुक्षिः पञ्चानीकः

प क क प
उ
प्र

(६) प्रतिष्ठः पञ्चानीकः

क उ क
प प
प्र

(७) सुप्रतिष्ठः पञ्चानीकः

प प
क क
उ
प्र

(८) श्येनः पञ्चानीकः

उ
क क
प प
प्र

(९) विजयः सप्तदशानीकः

प प क उ क प प क उ क प प क उ क प प
(स्थूणाकर्णः) प्र (स्थूणाकर्णः)

अस्य पक्षस्थानयोः स्थूणाकर्णौ ।

(१०) संजयः त्रयोदशानीकः

प उ प क उ क प उ प
क क क क
(चापः) प्र (चापः)

अस्य पक्षस्थानयोश्चापौ ।

(११) विशालविजयः चतुर्दशानीकः

प प क उ क प प
प प क उ क प प
प्र

(अधरौपरिष्टभावेन निविष्टौ द्वौ स्थूणाकर्णौ)

(१२) सूची पञ्चानीकः

प
क
उ
क
प
प्र

(१३) स्थूणाकर्णः सप्तानीकः

प प क उ क प प
प्र

(१४) चमूमुखः एकादशानीकः

प प
प प
प प
प क उ क प
प्र

(१५) झषास्यः एकादशानीकः

प क उ क प
प प
प प
प प
प्र

(१६) वलयः दशानीकः

प क उ क प
प क उ क प
प्र

(१७) दुर्जयः विंशत्यनीकः

प क उ क प
प क उ क प
प क उ क प
प क उ क प
प्र

## भोगविकृतिव्यूहाः

(१) गोमूत्रिका पञ्चानीकः

प
क
उ
क
प
प्र

(२) अहिसारी पञ्चानीकः

क क
प उ प प्र

(३) शकटः षडनीकः (जयमङ्गलामते)

क उ उ क
प प
प्र

(३) शकटः चतुर्दशानीकः (दण्डशब्दो दण्डव्यूहपर इति मते)

प क उ उ क प
क क
उ उ
क क
प प
प्र

अत्र पक्षस्थानीययोर्दण्डव्यूहयोः शकटाकारानुरोधेनोर्ध्वत्वं कल्प्यते ।

**(४) मकरः षडनीकः**
( जयमङ्गलामते )

प प
क उ उ क
प्र

**(४) मकरः चतुर्दशानीकः**
( पूर्वोक्तमतान्तरे )

प प
क क
उ उ
क क
प क उ उ क प
प्र

**(५) परिपतन्तिकः**

पूर्वोक्तमतभेदेन षडनीकश्चतुर्दशानीको वा। आवापभूतैः कुञ्जरवाजिभिर्मध्ये व्यवकीर्णः शकट एव मकर एव वा परिपतन्तिकसंज्ञ इति न स पृथग्दर्शनीयः।

## मण्डलविकृतिव्यूहौ

**(१) सर्वतोभद्रः पञ्चानीकः**

उ
क क
प प
प्र

**(२) दुर्जयः अष्टानीकः**

उ उ
क क
क क
प प
प्र

## असंहतविकृतिव्यूहाः

**(१) अर्धचन्द्रकः पञ्चानीकः**

प प
क क
क क
उ
प्र

**(२) उद्धानः पञ्चानीकः**

क क
उ
प प
प्र

**(३) वज्रः पञ्चानीकः**

प्रत्यनीकं नव नव हस्तिनो भवन्तीत्युक्तम्। तेषां सपरिवाराणां संस्थानविशेषैरयं व्यूहः संपद्यते। अतोऽत्र चिह्नैर्हस्तिस्थानानि दर्शितानि। तत्र हस्तिनामनीकान्तरीयत्वबोधार्थं चिह्नभेदाः संकेतिताः। संकेतार्थश्चेत्थम्— '⊙' = उरस्यहस्तिनः, '+' = कक्षहस्तिनः, '।' = पक्षहस्तिनः इति। रथव्यूहात्मकवज्रव्यूहे हस्तिस्थानेषु रथाः कल्पनीयाः।

\+ + + + ⊙ ⊙ ⊙ + + + + +
। ।
।
\+ + + + ⊙ ⊙ ⊙ + + + + +
। ।
।
\+ + + + ⊙ ⊙ ⊙ + + + + +
। ।
।
प्र

**(४) कर्कटशृङ्गी सप्तानीकः**

क क
प प उ प प
प्र
अथवा
प प प प
क उ क
प्र

**(५) काकपदी पञ्चानीकः**

क क
उ
प प
प्र

**(६) गोधिका पञ्चानीकः**

अयमपि वज्रवत् हस्तिनां संस्थानविशेषैः संपद्यते। वज्रवदेवात्रापि चिह्नसंकेतादि सर्वं ज्ञेयम्।

।
।
। ।
। । ।
। ।
\+ + + + ⊙ ⊙ ⊙ + + + + +
।
। ।
⊙ ⊙ ⊙
। । ।
\+ + + + ⊙ ⊙ ⊙ + + + + +
। ।
।
प्र

## शुक्रनीतिः

रिपुभयानुसारेण व्यूहनम् , व्यूहनप्रतिव्यूहनप्रकाराः ,
व्यूहप्रकाराः

**[1]नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् ।**
**सेनापतिस्तत्रतत्र गच्छेद्व्यूहकृतैर्बलैः ॥**

नदीषु, अद्रिषु, वनेषु, दुर्गेषु दुर्गमस्थानेषु च यत्र यत्र भयं भवेत् , सेनापतिः व्यूहकृतैः कृतव्यूहैः बलैः तत्र तत्र गच्छेत् । शुनीटी.

**यायाद्व्यूहेन महता मकरेण पुरो भये ।**
**श्येनेनोभयपक्षेण सूच्या वा धीरवक्त्रया ॥**

पुरः अग्रे भये उपस्थिते सति महता मकरेण व्यूहेन उभयपक्षेण श्येनेन व्यूहेन वा धीरवक्त्रया धीरमुखया सूच्या व्यूहेन यायात् । शुनीटी.

**पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसंज्ञिकम् ।**
**सर्वतः सर्वतोभद्रं चक्रं व्यालमथापि वा ।**
**यथादेशं कल्पयेद्वा शत्रुसेनाविभेदकम् ॥**

पश्चात् भये संभवति शकटं शकटाकारम् , पार्श्वयोः भये आपतिते वज्रसंज्ञिकं वज्राख्यम् , सर्वतः भये उपस्थिते सर्वतोभद्रं चक्रम् अथवा व्यालं शत्रुसेनाविभेदकं शत्रुबलभञ्जकं व्यूहं यथाप्रदेशं कल्पयेद्वा रचयेदेव । शुनीटी.

**व्यूहरचनसंकेतान् वाद्यभाषासमीरितान् ।**
**स्वसैनिकैर्विना कोऽपि न जानीयात् तथाविधान् ॥**

स्वसैनिकैः विना कोऽपि जनः वाद्यभाषया समीरितान् वाद्यध्वनिविशेषसूचितान् तथाविधान् व्यूहरचनानां संकेतान् न जानीयात् । शुनीटी.

**नियोजयेच्च मतिमान् व्यूहान्नानाविधान् सदा ॥**

मतिमान् भूपः नानाविधान् व्यूहान् सदा सर्वस्मिन् समये नियोजयेच्च । शुनीटी.

**अश्वानां च गजानां च पदातीनां पृथक् पृथक् ।**
**उच्चैः संश्रावयेद्व्यूहसंकेतान् सैनिकान् नृपः ॥**

नृपः अश्वानां गजानां पदातीनां च पृथक्पृथक् सैनिकान् व्यूहसंकेतान् उच्चैः यथा तथा संश्रावयेत् । शुनीटी.

**वामदक्षिणसंस्थो वा मध्यस्थो वाऽग्रसंस्थितः ।**
**श्रुत्वा तान् सैनिकैः कार्यमनुशिष्टं यथा तथा ॥**

* सैनिकपुरुषः वामदक्षिणसंस्थः वामसंस्थः वा दक्षिणसंस्थः वा मध्यस्थः अथवा अग्रतः स्थितः अस्तु, किंतु तैः तैः सैनिकैः तान् संकेतान् श्रुत्वा यथा अनुशिष्टं कर्तुं संकेतितं तथा कार्यम् । शुनीटी.

**संमीलनं प्रसरणं परिभ्रमणमेव च ।**
**आकुञ्चनं तथा यानं प्रयाणमपयानकम् ॥**
**पर्यायेण च सांमुख्यं समुत्थानं च लुण्ठनम् ।**
**संस्थानं चाष्टदलवच्चक्रवद्गोलतुल्यकम् ॥**
**सूचीतुल्यं शकटवदर्धचन्द्रसमं तु वा ।**
**पृथग्भवनमल्पाल्पैः पर्यायैः पङ्क्तिवेशनम् ॥**
**शस्त्रास्त्रयोर्धारणं च संधानं लक्ष्यभेदनम् ।**
**मोक्षणं च तथाऽस्त्राणां शस्त्राणां परिघातनम् ॥**
**द्राक् संधानं पुनः पातो ग्रहो मोक्षः पुनः पुनः ।**
**स्वगूहनं प्रतीघातः शस्त्रास्त्रपदविक्रमैः ॥**
**द्वाभ्यां त्रिभिश्चतुर्भिर्वा पङ्क्तितो गमनं ततः ।**
**तथा प्राग्भवनं चापसरणं तूपसर्जनम् ॥**

व्यूहस्थदैनिककार्याण्याह– संमीलनमित्यादि । संमीलनम् , प्रसरणम् , परिभ्रमणम् , आकुञ्चनम् , यानम् , प्रयाणम् , अपयानकम् , पर्यायेण सांमुख्यम् , समुत्थानम् , लुण्ठनम् , अष्टदलवत् संस्थानम् , चक्रवत् गोलतुल्यकं गोलाकारेण वेष्टनमित्यर्थः , सूचीतुल्यम् , शकटवत् शकटाकारं वा अर्धचन्द्रसमम् , पृथक् विभिन्नं भवनं वर्तनम् , अल्पाल्पैः पर्यायैः पङ्क्तिवेशनं पङ्क्तिषु प्रवेशनम् , शस्त्रास्त्रयोः धारणम् , संधानम् , लक्ष्यभेदनम् , अस्त्राणां मोक्षणं निक्षेपः , शस्त्राणां परिघातनं शस्त्रैः प्रहरणमित्यर्थः , द्राक् झटिति संधानम् , पुनःपुनः पातः पतनम् , ग्रहः ग्रहणम् , मोक्षः त्यागः , स्वस्य आत्मनः गूहनम् रक्षणम् , शस्त्रास्त्रपदविक्रमैः शस्त्रैः

---

(१) शुनी. ४।७।२६४–२८४.

* वस्तुतः पूर्वार्धं पूर्वश्लोकोत्तरार्धान्वयीति युक्तं भाति ।

अस्त्रैः पदविक्रमैश्च प्रतीघातः, द्वाभ्यां त्रिभिः चतुर्भिर्वा पङ्क्तितः पङ्क्तिक्रमेण गमनम्, तथा प्राग्भवनं पुरोवर्तनम्, अपसरणं पुरतः पलायनम्, तथा उपसर्जनं समीपगमनं च। शुनीटी.

**अपसृत्यास्त्रसिद्ध्यर्थमुपसृत्य विमोक्षणे।**
**प्राग्भूत्वा मोचयेदस्त्रं व्यूहस्थः सैनिकः सदा॥**

व्यूहस्थः विन्यस्तबलमध्यवर्ती सैनिकः अस्त्रसिद्ध्यर्थम् अपसृत्य विमोक्षणे अस्त्रत्यागे उपसृत्य समीपं गत्वा तथा प्राक् अग्रगः भूत्वा सदा अस्त्रं मोचयेत्। शुनीटी.

**आसीनः स्याद्विमुक्तास्त्रः प्राग्वा चापसरेत् पुनः।**
**प्रागासीनं तूपसृतो दृष्ट्वा स्वास्त्रं विमोचयेत्॥**

**एकैकशो द्विशो वाऽपि संघशो बोधितो यथा॥**

विमुक्तास्त्रः विक्षिप्तास्त्रः सैनिकः आसीन उपविष्टः स्यात्। वा अथवा प्राक् अपसरेत्। पुनश्च उपसृतः संनिहितः सन् प्राक् आसीनं रिपुं दृष्ट्वा यथा बोधितः संकेतितः तथा एकैकशः द्विशः वा संघशः बहुशः स्वस्य आत्मनः अस्त्रं विमोचयेत् विक्षिपेत्। शुनीटी.

**क्रौञ्चानां खे गतिर्यादृक् पङ्क्तितः संप्रजायते।**
**तादृक् संचारयेत् क्रौञ्चव्यूहं देशबलं यथा॥**

क्रौञ्चव्यूहमाह– क्रौञ्चानामिति। खे आकाशे क्रौञ्चानां बकानां यादृक् पङ्क्तिशः पङ्क्तिक्रमेण गतिः जायते, देशबलं स्थानीयबलं यथा, स्थानीयबलानुसारेण इत्यर्थः, क्रौञ्चव्यूहं तादृक् यथा तथा संचारयेत् विन्यसेत्। शुनीटी.

**सूक्ष्मग्रीवं मध्यपुच्छं स्थूलपक्षं तु पङ्क्तितः।**
**बृहत्पक्षं मध्यगलपुच्छं श्येनं मुखे तनु॥**

श्येनव्यूहमाह– सूक्ष्मेति। सूक्ष्मा ग्रीवा यस्य तत्, मध्ये पुच्छं यस्य तथोक्तम्, स्थूलौ विशालौ पक्षौ यस्य तथाभूतम्, पङ्क्तितश्च, बृहत्पक्षं दीर्घपार्श्वम्, मध्ये गले च पुच्छं यस्य तादृशम्, तथा मुखे तनु सूक्ष्मं स्वल्पमित्यर्थः, श्येनं श्येनव्यूह इत्यर्थः। शुनीटी.

**चतुष्पान्मकरो दीर्घस्थूलवक्त्रद्विरोष्ठकः।**
**सूची सूक्ष्ममुखो दीर्घसमदण्डान्तरन्ध्रयुक्॥**

मकरसूचीव्यूहावाह– चतुष्पादिति। चतुष्पात् चतुश्चरणः, चतुर्धा विभक्त इत्यर्थः, दीर्घं स्थूलं च वक्त्रं मुखं यस्य तादृशः, तथा द्विरोष्ठकः ओष्ठद्वयसंयुतः मकरः मकरव्यूहः। सूक्ष्ममुखः तथा दीर्घस्य समस्य च दण्डस्य अन्ते रन्ध्रयुक् छिद्रयुक्तः सूची सूचीव्यूहः। शुनीटी.

**चक्रव्यूहश्चैकमार्गो ह्यष्टधा कुण्डलीकृतः।**
**चतुर्दिक्ष्वष्टपरिधिः सर्वतोभद्रसंज्ञकः॥**
**अमार्गश्चाष्टवलयी गोलकः सर्वतोमुखः।**
**शकटः शकटाकारो व्यालो व्यालाकृतिः सदा॥**

चक्रसर्वतोभद्रशकटव्यालव्यूहान् निर्वक्ति– चक्रेति, अमार्ग इति। अष्टधा कुण्डलीकृतः वेष्टितः, एक एव मार्गः पन्थाः यस्य तथाभूतः व्यूहः चक्रव्यूहः। चतुर्दिक्षु अष्टपरिधिः अष्टधा कुण्डलीकृत इत्यर्थः, अमार्गः अपथः, अष्टवलयी वेष्टनाष्टकयुतः, गोलकः मण्डलाकृतिः, सर्वतोमुखः व्यूहः सर्वतोभद्रसंज्ञकः सर्वतोभद्र इति प्रसिद्धः। शकटः शकटस्येव आकारः यस्य सः। व्यालः सदा व्यालस्येव सर्पस्येव आकृतिर्यस्य तथाभूतः। शुनीटी.

**सैन्यमल्पं बृहद्वाऽपि दृष्ट्वा मार्गं रणस्थलम्।**
**व्यूहैर्व्यूहेन व्यूहाभ्यां संकरेणापि कल्पयेत्॥**

सैन्यम् अल्पं वा बृहत् अधिकं दृष्ट्वा व्यूहेन व्यूहाभ्यां वा व्यूहैः संकरेणापि व्यूढेन अव्यूढेन च सैन्येन मार्गं रणस्थलं च कल्पयेत्। शुनीटी.

## योगयात्रा

रविमङ्गलादिग्रहस्वामिकाः व्यूहप्रकाराः

**[1]दण्डोरगौ रविसुतस्य रवेस्तु चक्रं**
**शुक्रस्य पद्मशकटौ गरुडो बुधस्य।**
**व्यूहौ तु सूचिमकरौ धरणीसुतस्य**
**श्येनो गुरोः शिशिरगोः परिमण्डलाख्यः॥**

---

(१) योया. १५।३--४.

व्यूहमात्मशुभदग्रहस्य यद्
विद्विषामशुभसंस्थितस्य च ।
तत्प्रयोज्यमरियोजितस्य वा
घातनं तदरिभिर्बतोत्तरैः ॥

## नीतिवाक्यामृतम्

रिपुबलाबलविवेकानुसारेण व्यूहनप्रतिव्यूहनप्रकाराः

*[1]नाप्रतिग्रहो युद्धमुपेयात् ॥

राजव्यञ्जनं पुरस्कृत्य पश्चात् स्वाम्यधिष्ठितस्य सारबलस्य निवेशनं प्रतिग्रहः ॥

सप्रतिग्रहं बलं साधु युद्धायोत्सहते ॥

बलं बुद्धिर्भूमिर्ग्रहानुलोम्यं परोद्योगश्च प्रत्येकं बहुविकल्पं दण्डमण्डलभोगासंहतव्यूहरचनाया हेतवः ॥

साधुरचितोऽपि व्यूहस्तावत्तिष्ठति यावन्न परबलदर्शनम् ॥

## मानसोल्लासः

भूमिपरीक्षकयोजनम्, भूमि-परव्यूहानुसारेण व्यूहरचना, व्यूहविभागाः, तेषां सैन्यविवेकः

[2]सुभटान् बलसंयुक्तान् हयविद्याविशारदान् ।
वरवाजिसमारूढान् भूपरीक्षाविचक्षणान् ॥
द्विशतं वा शतं वाऽपि तदर्धं हयसादिनः ।
पुनः प्रस्थापयेद्राजा युद्धभूमिपरीक्षणे ॥
गत्वा समागतानां तु विज्ञप्त्या च भुवो गुणान् ।
परेषां व्यूहरचनां परिज्ञाय क्षितीश्वरः ॥
संस्थूलस्थूलवल्मीकवृक्षगुल्मोपकण्टके ।
भूभागे रचयेद्राजा व्यूहं व्यूहविचक्षणः ॥
अल्पवृक्षोपलाऽच्छिद्राऽलङ्घनीयदरीस्थिता ।
निःशर्करा विपङ्का भूरश्वव्यूहाय शस्यते ॥
निःस्थाणुसिकतापङ्का निर्वल्मीकोपला समा ।
केदारव्रततिश्वभ्रवृक्षगुल्मविवर्जिता ॥
अतीवकठिना भूश्च क्षुरचङ्क्रमणक्षमा ।
स्थिरा चक्रसमा धात्री रथव्यूहे प्रशस्यते ॥
सुगम्यशैला विषमा मृदुवृक्षावभेदिनी ।
सुपङ्कदरभङ्गा भूर्गजव्यूहे वरा मता ॥
सर्वदोषोज्झिता भूमिः कुत्रचिद्वारिसंयुता ।
विशाला गुणभूयिष्ठा चतुरङ्गबलोचिता ॥
एवं परीक्ष्य भूभागं यस्मिन् यत्र यथोचितम् ।
तत्र संरचयेद्व्यूहान् नृपो युद्धविशारदः ॥
सर्वलक्षणसंपूर्णे भूभागे रिपुमर्दनः ।
रचयेदुत्तमं व्यूहं परव्यूहविभेदकम् ॥
मुखं पूर्वविभागः स्यादुरश्च तदनन्तरम् ।
उरसा पश्चिमे भागे प्रौरस्यं परिकीर्तितम् ॥
प्रौरस्यस्य तथा पृष्ठे प्रतिग्रह इतीरितः ।
कक्षौ प्रकक्षौ पक्षौ च प्रपक्षौ पार्श्वयोः क्रमात् ॥
प्रतिग्रहपरो भागः पृष्ठमित्यभिधीयते ।
एवं व्यूहविभागांश्च विज्ञाय नृपतिस्ततः ॥
मुखे मदमुखं नागं शूरारूढं सुशिक्षितम् ।
तनुत्राणसमोपेतं योधद्वयसमन्वितम् ॥
पश्चिमासनरूढेन सुभटेन समन्वितम् ।
त्रिशतैः षट्शतैर्वाऽपि नवभिर्वा तथा शतैः ॥
त्रिधा विभक्तैः सुभटैः स्थानत्रयसुसंस्थितैः ।
पृष्ठे च कक्षभागे च रक्षितं खड्गपाणिभिः ॥
प्रकक्षदेशनिक्षिप्तैश्चण्डकोदण्डमण्डितैः ।
सुभटैः शतसंख्यातैः सुलक्षैर्दृढघातिभिः ॥
पक्षदेशे तथा शूरैः शक्तिखेटकधारिभिः ।
सहस्रद्वयसंख्यातैस्तदर्धैर्वा शतैर्वृतम् ॥
प्रपक्षे जवसंयुक्तैर्गात्रत्राणसुरक्षितैः ।
अश्वैः सर्वायुधोपेतैर्वाहकैश्च समन्वितैः ॥
शतपञ्चकसंख्यातैः प्रपक्षद्वयकल्पितैः ।
तुरगैः पत्तिभिः शूरैरावृतं पुरतो न्यसेत् ॥
वारणं सर्वसैन्यानां वारणं वैरिवारणम् ।
एवंविधबलोपेतं व्यूहस्याग्रे नियोजयेत् ॥

---

* एतेषां नीवा-सूत्राणां व्याख्यानम् 'यात्रा-युद्धसामान्य-विचारः' इत्यस्मिन्प्रकरणे (पृ. २६९५, २६९९) द्रष्टव्यम् ।

(१) नीवा. ३०।१८–२०,८६–८७.

(२) मासो. २।११६८–१२०७.

त्रिमुखं द्विमुखं तद्वदेकवक्त्रमथापि वा ।
परव्यूहस्य भेदार्थं कुर्याद्व्यूहमुखं नृपः ॥
उरःस्थाने महीपालः श्रेणमाटविकं बलम् ।
अमित्रं च तथा फल्गु युद्धभूमौ प्रकल्पयेत् ॥
प्रौरस्ये युद्धभाण्डानि शस्त्राणि विविधानि च ।
वारि भूरि नयेदुष्ट्रैस्तृषार्तानां सुतृप्तये ॥
प्रतिग्रहप्रदेशे तु स्वयं तिष्ठेन्महीपतिः ।
भद्रलक्षणसंपूर्णमैरावणकुलोद्भवम् ॥
विष्णवंशकशुभानूकं कालिङ्गवनसंभवम् ।
भूभृच्छिखरसंचारं शिक्षितं तु वधावधि ॥
मदावस्थां चतुर्थीं च संप्राप्तं गिरिसंनिभम् ।
शूरं महाबलं दान्तं धीरमन्वर्थवेदिनम् ॥
सुवर्णघटितोदारपक्षरक्षासमन्वितम् ।
तनुत्राणसमोपेतं दृढढेक्काकधारिणम् ॥
मयूरपिच्छगुच्छाङ्कध्वजदण्डविमण्डितम् ।
नानावर्णविचित्राङ्गं पताकापरिशोभितम् ॥
ढेक्काकान्तःस्थितैर्योधैर्मध्ये कुन्तधरोद्धतम् ।
पाश्चात्यसादिना युक्तं शक्तितोमरपाणिना ॥
अन्तरारूढशूरेण खेटकद्वयधारिणा ।
ईदृग्गुणयुतं नागमारोहेद्विजयोद्यतः ॥
विज्ञातनामभिर्मौलैः कृत्तिकाचर्मपाणिभिः ।
अङ्गरक्षान्वितैः शूरैर्हतः सन्नङ्गरक्षकैः ॥
कक्षस्थैर्दशसाहस्रैस्तदर्धैर्वा सुरक्षितः ।
प्रकक्षे सचिवामात्यकुमारे(? रैः) च घटान्वितः (? तैः) ॥
मित्रभृत्यबलैः पक्षे चापसायकधारिभिः ।
शक्तितोमरनिस्त्रिंशकुन्तमुद्गरपाणिभिः ॥
वरवारणसंनद्धैः सुभटैर्लक्षसंमितैः ।
क्रमशः स्थापितैर्योधैर्यथोदीरितनामभिः ॥
नानायुधधरैर्वीरैरश्वारूढैः सुशिक्षितैः ।
प्रकक्षे(? प्रपक्षे)ऽयुतयुग्मेन संवृतश्च महीपतिः ॥
पृष्ठे भूमौ वशारूढपुष्पकान्तरसंस्थितैः ।
अवरोधवधूवृन्दै रक्षिभिः परिरक्षितैः ॥

*धेनुकाव्याशिताशेन(?) कोशेनाधिष्ठितस्तथा ।
तेषां तु पृष्ठरक्षार्थं नरवाजिबलं न्यसेत् ॥
ईदृशीं व्यूहरचनां विधाय परवीरहा ।
व्रजेदब्धिरिव क्षुब्धो निगिरन् परवाहिनीम् ॥

## भूपालवल्लभः

व्यूहाः बलाक-काक-श्येन-क्रौञ्च-शकट-सिंह-चक्र-पद्म-माला-पुष्करिणी-सर्पा-ग्नि-खलक-सौपर्ण-दण्ड-मकर-सूच्यादयः, व्यूहनप्रतिव्यूहनप्रकाराः

[1]बलाकापङ्क्तिवद् व्यूहो बलाकाख्यः कृतो रणे ।
काकव्यूहः काकसंघो बलाकाव्यूहभञ्जकः ॥
तावुभावपि भज्येते श्येनव्यूहेन निश्चितम् ।
एको रथोऽग्रे कर्तव्यः पश्चाद् द्विरदसप्तकम् ॥
त्रिंशदश्वाः खड्गिशतं पार्श्वे कुन्तधरास्तथा ।
मध्येऽष्टौ रथिनस्त्रिंशदश्वाः पश्चाद् गजद्वयम् ॥
ततः सर्वगतं सर्वं श्येनव्यूहः स उच्यते ।
अग्रे द्वौ पृष्ठगाश्चान्ये क्रौञ्चव्यूहः स उच्यते ॥
बलाककाकौ क्रौञ्चेन क्रौञ्चः श्येनेन भज्यते ।
अग्रे रथद्वयं पश्चाद् गजाः सप्त व्यवस्थिताः ॥
तत्पृष्ठे विंशतिरिभाः पञ्चाशद्वाजिवाहकाः ।
सप्त सप्त रथाः पार्श्वे गजौ द्वौ द्वौ ततः स्थितौ ॥
तत्प्रमाणै रथैर्वेदी बहिस्तद्वद् गजाः स्थिताः ।
मध्ये पदातयो वाहाः पार्श्वयोश्च तुरंगमाः ॥
विज्ञेयः शकटव्यूहो न भेद्यस्त्रिदशैरपि ।
अग्रे रथत्रयं पृष्ठे गजाकारो गजव्रजः ॥
स्यन्दनाः पञ्च पञ्चैव पार्श्वकोणचतुष्टये ।
मध्यं प्रपूरयेदश्वैर्लाङ्गूलगजमालिका ॥
मध्ये खड्गिधनुष्मन्तः पार्श्वयो रथिनो गजाः ।
पृष्ठतः सकला सेना सिंहव्यूहः स जायते ॥

---

* अत्र 'धेनुकाव्यासितांशेन' इति शुद्धिः कल्प्यते । धेनुकासु करिणीषु व्यासिताः विभज्याऽऽरोपिताः अंशा यस्य तथाभूतेनेति तदर्थः ।

(१) ज्योनि. पृ. ३४५-३४६ श्लो. ३-३३.

शकटव्यूहकालेन सूचीव्यूहेन भिद्यते।
पद्मव्यूहस्तु सिंहेन सूची काकेन भिद्यते॥
गजषोडशकं मध्ये वृत्ताकारेण कल्पयेत्।
बाह्यतो रथिभिर्वेष्ट्यं तद्बाह्ये कुन्तधारकौ (?काः)॥
शरचापधरा बाह्ये खड्गचर्मधरास्ततः।
बाह्यतोऽश्वैः समावेष्ट्य पङ्क्तित्रितयतः क्रमात्॥
पुनः पुनः प्रकुर्वीत यावद् भवति वाहिनी।
चक्रव्यूहः स विज्ञेयो दुर्भेद्यस्त्रिदशैरपि॥
अन्तरे रथमेकैकं स्थानपृष्ठेषु कल्पयेत्।
तदन्तरे गजान् पञ्च नवाश्वान् स्थापयेत्ततः॥
ततः पत्तीन् पञ्चदश पत्रे पत्रे प्रकल्पयेत्।
तन्मध्ये स्यन्दनान् सप्त गजांश्चैव त्रयोदश॥
एकोनविंशतिहयान् पदाति(?तीं)श्चाष्टविंशतिः(?तिम्)।
गजैरश्वैः पूरणीया पद्ममध्यस्थकर्णिका॥
तन्मध्ये गजमारूढश्चमूपो वाऽथवा नृपः।
अन्तरे द्रोणिकायां तु रथद्विरदवाजिनः॥
त्रयस्त्रयश्च सर्वत्र त्रयस्त्रिंशत् पदातयः।
पद्मव्यूहः स विज्ञेयः पद्माकारकृतो यदा॥
रथं गजं हयं पत्तिं मालाकारेण विन्यसेत्।
पुनः पुनः श्रेणिबन्धान्मालाव्यूहः स उच्यते॥
चतुर्दिक्षु रथौ द्वौ द्वौ तत्पृष्ठे द्विरदा दश।
चतुर्विंशतिरश्वाश्च त्रिंशत् खड्गधरास्तथा॥
शरचापधराश्चैव दश वा खेटधारिणः।
तेषां पृष्ठे कुन्तधरा यन्त्रधरास्तथैव च॥
वेद्याकाराः पूरणीया गजैरश्वैः पदातिभिः।
अग्रे नृपः स विज्ञेयो व्यूहः पुष्करिणीति च॥
सर्पाकारं रथेनाश्वैः पूरयेत् सैनिकैरपि।
सर्पव्यूहः स विज्ञेयः कृतान्तो युद्धकर्मणि॥
सप्तधा स्युः सप्त रथा गजवाजिपदातयः।
रथेभाश्व(?श्वाः)पत्तयश्च सप्त सप्तगुणाः क्रमात्॥
अधोधः कल्पयेदेवमग्निव्यूहः स उच्यते।
सर्वोत्तमोऽयं व्यूहानामग्निवन्नाशकारकः॥
चतूरेखाङ्कितां सेनां वेद्याकारां प्रकल्पयेत्।
रथैर्हयैर्गजैः षड्भिः क्रमेणैव चतुर्दिशः॥
ततश्चतुर्षु द्वारेषु रथौ द्वौ द्वौ तथा गजौ।
अश्वावपि पदाती च चतुर्दिक्षु प्रकल्पयेत्॥
तन्मध्ये नृपतिस्तिष्ठेद् वेद्याकारेऽन्तरे सुधीः।
विज्ञेयः खलकव्यूहः खलको द्वारवस्थितौ॥
सौपर्णः श्येनवत् कार्यस्तत्संख्या द्विगुणा पुनः।
शकटोऽग्निश्चक्रसंज्ञो व्यूहेषु बलवत्तराः॥
दण्डाकारो भवेद् दण्डो मकरो मकराकृतिः।
सूचीव्यूहः समः सूच्याः स्वनामसदृशाः परे॥

## अनिर्दिष्टकर्तृकवचनानि

वज्रव्यूहः

[1]त्रिधा व्यवस्थितबलो वज्र इत्यभिधीयते॥

(१) मच. ७।१९१.

# यात्रा– धर्मयुद्धम्

## गौतमः

युद्धं धर्मः, युद्धनिवृत्तिर्निषिद्धा, युद्धहिंसा न दोषः, धर्मयुद्धे वध्यावध्यविवेकः

**[1]सङ्ग्रामे संस्थानमनिवृत्तिश्च ॥**

(१) सङ्ग्रामे युद्धे संस्थानं निर्भयस्यावस्थानम् अनिवृत्तिश्च तत्रैव प्राणपरित्यागः। चकाराद्युद्धं च, विसमासात् गुप्ताश्रयत्वं च। मभा.

(२) सङ्ग्रामः युद्धम्, तत्र संस्थानं प्राणात्ययः। निवृत्तिः पलायनम्, तदभावः अनिवृत्तिः। एतौ च राज्ञोऽधिकौ धर्मौ। गौमि.

**[2]न दोषो हिंसायामाहवे ॥**

इदानीं 'नित्यमहिंस्रः' (गौध. ९।७०) इत्यस्यापवादमाह– न दोष इति। आहवः युद्धम्। प्रकृतस्यापि पुनर्वचनं विशेषार्थम्– यस्मिन्नन्योन्यमाहूय पुरुषाः प्रवर्तन्ते तत्रैव न दोषः, नान्यावस्थायामिति। *मभा.

**[3]अन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः ॥**

(१) एवंविधान् हिंसतो दोषः। विशब्दः त्रिभिः संबध्यते– व्यश्वः विसारथिः व्यायुध इति। कृताञ्जलिः बद्धाञ्जलिः। प्रकीर्णकेशः विमुक्तकेशः। पराङ्मुखः अन्यमुखः। उपविष्टः आसीनः। स्थलारूढः पर्वतारूढः। वृक्षारूढः प्रसिद्धः। 'दूतोऽहम्, ब्राह्मणोऽहम्' इति च यो वदति, यश्च गोवच्छब्दं करोति। एभ्योऽन्यत्र न दोषः। मभा.

(२) यस्य अश्वो हतः स व्यश्वः। यस्य सारथिर्हतः स विसारथिः। यस्य आयुधं कृत्तं पतितं वा स व्यायुधः। कृताञ्जलिः भयेन। प्रकीर्णकेशः केशानपि नियन्तुमक्षमः। पराङ्मुखः भयेन पृष्ठीकृत्य पलायमानः। उपविष्टः पलायितुमप्यसमर्थ आसीनः। स्थलवृक्षाधिरूढः– स्थलम् उन्नतप्रदेशः, तं वृक्षं वा आरूढः। दूतः वार्ताहरः। 'गौरसि, ब्राह्मणोऽसि' इति ये वदन्ति ते गोब्राह्मणवादिनः। एतेभ्योऽन्यत्राऽऽहवे हिंसायां न दोषः। एतेषु दोष इति। * गौमि.

(३) वादिशब्दो दूतादिभिः प्रत्येकं संबन्धनीयः। अदूतोऽपि दूतोऽहमिति यो वदति, गौरहं ब्राह्मणोऽहमिति। * बौवि. १।१८।११

* गौमि. मभागतम्।

(१) गौध. १०।१५; मभा.; गौमि. १०।१६; राप्र. ४०५.

(२) गौध. १०।१६; मिता. १।३२६; राक. १३१; मभा.; गौमि. १०।१७; वीमि. १।३२६; राप्र. ४०७; बौवि. १।१८।११.

(३) गौध. १०।१७; मिता. १।३२६ व्यायुध (व्यनायुध) रूढ (रूढोन्मत्त) णवादि (णादि); राक. १३१–१३२ रूढदूत (रूढाद्दूते); मभा.; गौमि. १०।१८ रूढ (धिरूढ); वीमि. १।३२६ व्यायुध (व्यनायुध) रूढ (धिरूढ); राप्र. ४०७ व्र व्यश्व (व्राश्व) व्यायुध (व्यनायुध); बौवि. १।१८।११ व्यायुध (व्यनायुध).

## बौधायनः

युद्धात्पलायनं दोषः, विषदिग्धशस्त्रं निषिद्धम्, युद्धे वधानर्हाः, आततायिवधे न दोषः

**[1]सङ्ग्रामे न निवर्तेत ॥**

युद्धे उपस्थिते पलायनपरायणेन न भवितव्यमित्यर्थः। बौवि.

**न कर्णिभिर्न दिग्धैः प्रहरेत् ॥**

युद्धे तु वर्तमाने– नेति। कर्णवन्ति अस्त्राणि कर्णीनि शूलादीनि। विषेण लिप्तानि दिग्धानि। असमासः प्रत्येकं प्रतिषेधप्राप्त्यर्थः। बौवि.

* शेषं मभागतम्।

(१) बौध. १।१८।९–१०.

[1]भीतमत्तोन्मत्तप्रमत्तविसंनाहस्त्रीबालवृद्धब्राह्मणैर्न युध्येतान्यत्राऽऽततायिनः ॥

किंच– भीतेति। भीतः त्रस्तः। मत्तः सुरादिपानी। उन्मत्तः विरुद्धचेष्टः। प्रमत्तः विगतचेताः। विसंनाहः विगलितकवचादिबन्धः विगतव्यापारो वा। शेषाः प्रसिद्धाः। तैर्न युध्येत तान् न हिंस्यादित्यर्थः। तथा च गौतमः– 'न दोषो हिंसायामाहवे। अन्यत्र व्यश्वसारथ्यनायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः' (गौध. १०।१६–१७) इति। पूर्वोक्तान् विशिनष्टि– अन्यत्राऽऽततायिन इति। आततायी साहसकारी। बौवि.

[2]अथाप्युदाहरन्ति–

अध्यापकं कुले जातं यो हन्यादाततायिनम्।
न तेन भ्रूणहा भवति मन्युस्तं मन्युमृच्छतीति ॥

तद्धिंसायां दोषाभावं परकीयमतेनोपन्यस्यति– अथेति। भ्रूणहा यज्ञसाधनवधकारी। भ्रूणः यज्ञः बिभर्ति सर्वमिति। एवं ब्रुवता एतदभिप्रेतम्– आततायिविषयेऽपि ब्राह्मणवधे दोषोऽस्तीति। इतरथा 'न तेन भ्रूणहा भवति' इति नावक्ष्यत्। बौवि.

## आपस्तम्बः

उपदिष्टयुद्धयुक्तयः युक्ताः

[3]युद्धे तद्योगा यथोपायमुपदिशन्ति तथा प्रतिपत्तव्यम् ॥

क्षत्रियस्य युद्धं स्वकर्मेत्युक्तम् (आध. २।१०।७)। तत्कथं कर्तव्यमित्यत आह– युद्ध इति। युद्धविषये तथा प्रतिपत्तव्यं यथा तद्योगा उपायमुपदिशन्ति। तस्मिन् युद्धकर्मणि युद्धशास्त्रे वा येषामभियोगः ते तद्योगाः। उ.

(१) बौध. १।१८।११ ; राक. १३१ ; राप्र. ४०६.

(२) बौध. १।१८।१२.

(३) आध. २।१०।११ ; हिध. २७।४।१०.

युद्धे वधानर्हाः

[1]न्यस्तायुधप्रकीर्णकेशप्राञ्जलि *पराङ्गावृत्तानामार्या वधं परिचक्षते ॥

न्यस्तायुधः त्यक्तायुधः। प्रकीर्णकेशः केशानपि नियन्तुमक्षमः। प्राञ्जलिः कृताञ्जलिः। पराङ्गावृत्तः पराङ्मुखः। सर्वे एते भीताः। एतेषां युद्धे वधम् आर्याः सन्तः गर्हन्ते। परिगणनात् अन्येषां वधे न दोषः। तथा च गौतमः– 'न दोषो हिंसायामाहवे' (गौध. १०।१६) इति। 'न्यस्तायुधः प्रकीर्णकेशः' इति विसर्जनीयं केचित्पठन्ति सोऽपपाठः। पराङ्गावृत्त इति ङकारश्छान्दसः। उ.

धर्म्ये युद्धे राज्ञो मरणं यज्ञः

[2]ब्राह्मणस्वान्यपजिगीषमाणो राजा यो हन्यते तमाहुरात्मयूपो यज्ञोऽनन्तदक्षिण इति ॥

(१) ब्राह्मणस्वानि चोरादिभिरपहृतानि अपजिगीषमाणः अपजित्य प्रत्यानेतुमिच्छन् यो राजा युध्यमानो हन्यते असौ साक्षात् यज्ञधर्म इत्यर्थः। राक. १३४

* आनन्दाश्रमप्रकाशिते हिरण्यकेशिधर्मसूत्रे 'पराशवृत्तानाम्' इत्यस्य पाठस्य प्रामादिकतां संभाव्य तत्राऽऽपस्तम्बधर्मसूत्रानुसारेण 'पराङ्गवृत्तानाम्' इति शुद्धिः संपादकमहोदयेन संसूचिता। परम् 'पराशवृत्तानाम्' इति नापपाठः। 'परं युद्धभूमेरन्यं देशं अश्नुते व्याप्नोतीति पराशम्, तादृशं वृत्तं पलायनं येषां ते पराशवृत्ताः' इत्यभिप्रायेण, 'परागता आशा यस्मात् स पराशः, तस्य इव वृत्तं पराङ्मुखत्वपलायनादि येषां ते पराशवृत्ताः' इत्यभिप्रायेण वा एतत्पाठस्यापि साधुत्वं सूपपादम्।

(१) आध. २।१०।१२ ; हिध. २७।४।११ पराङ्ग (पराश).

(२) आध. २।२६।२ ; राक. १३३ ; राप्र. ४०७ (ब्राह्मणस्वान्यपजिगीषमाणः प्रत्यानेतुमिच्छन् युध्यमानो हतोऽसौ साक्षायजः ?).

(२) ब्राह्मणस्वानि चोरादिभिरपहृतानि अपजिगीषमाणः ब्राह्मणेभ्यो दानायापजित्य ग्रहीतुमिच्छन् यो राजा युद्धे चोरैर्हन्यते तमात्मयूपोऽनन्तदक्षिणो यज्ञ इत्याहुर्धर्मज्ञाः। सङ्ग्रामः यज्ञः। तस्य आत्मा यूपस्थानीयः। आत्मेति शरीरमाह। अन्तरात्मा तु पशुस्थानीयः। प्रत्यानिनीषितं तु द्रव्यं दक्षिणा। सूत्रे तु तं यज्ञ इत्याहुरिति गौणो वादः। उ.

**[1]एतेनान्ये शूरा व्याख्याताः प्रयोजने युध्यमानास्तनुत्यजः॥**

प्रयोजनं चोरादिभिरपहृतानां ब्राह्मणस्वानां प्रत्यानयनादि, तदर्थं युध्यमाना ये शूरास्तनुत्यजो भवन्ति तेऽप्येतेन राज्ञा व्याख्याताः आत्मयूपा यज्ञा अनन्तदक्षिणा इति। उ.

## विष्णुः

धर्म्यं युद्धम्, धर्मयुद्धे मरणं राज्ञो धर्मः

**[2]नास्ति राज्ञां समरे तनुत्यागसदृशो धर्मः॥**

राज्ञां क्षत्रियाणाम्, न पार्थिवानाम्। वै.

**[3]गोब्राह्मणनृपमित्रधनदारजीवितरक्षणाद्ये हतास्ते स्वर्गलोकभाजः॥**

**[4]वर्णसंकररक्षणार्थं च॥**

परदाराभिमर्शनेन जायमानात् वर्णसंकरात् यद्रक्षणं वर्णानां तदर्थमपि ये हताः बन्दिग्राहजारादिभिस्तेऽपि स्वर्गलोकभाजो भवन्ति। वै.

(१) आध. २।२६।३.

(२) विस्मृ. ३।४४; राक. १३३ (=) रे तनु (रतनु); राप्र. ४०६ (=) राकवत्.

(३) विस्मृ. ३।४५; राक. १३३ (=) (नृप०) (दारजीवित०) णाद्ये हता (णार्थं मृता); राप्र. ४०६ (=) (लोक०) शेषं राकवत्.

(४) विस्मृ. ३।४६.

## शङ्खः

युद्धे अवध्याः

**[1]न पानीयं पिबन्तं न भुञ्जानं नोपानहौ मुञ्चन्तं नावर्माणं सवर्मा न स्त्रियं न करेणुं न वाजिनं न सारथिनं न सूतं न दूतं न ब्राह्मणं न राजानमराजा हन्यात्॥**

## महाभारतम्

रणमरणं क्षत्रधर्मः, सत्यधर्मपक्षरक्षणार्थं युद्धं धर्मः

**[2]द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ।**
**परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः॥**
**[3]आददानस्य शस्त्रं हि क्षत्रधर्मं परीप्सतः।**
**निधनं ब्राह्मणस्याऽऽजौ वरमेवाऽऽहुरुत्तमम्॥**
**[4]एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः।**
**सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः॥**
**भस्म कुर्याज्जगदिदं मनसैव जनार्दनः।**
**न तु कृत्स्नं जगच्छक्तं भस्म कर्तुं जनार्दनम्॥**
**यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः।**
**ततो भवति गोविन्दो यतः कृष्णस्ततो जयः॥**

लोभान्विताः क्षत्रियादयो ब्राह्मणव्यतिरिक्ता युद्धे वध्याः, स्वधर्मरक्षणार्थं युद्धं धर्मः क्षत्रियस्य

**[5]क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः।**
**अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता॥**
**अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात्।**
**गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक्॥**

(१) मिता. १।३२६; वीमि. १।३२६; नीम. ६५ मुञ्च (प्रमुञ्च) थिनं (थिं) (न सूतं०).

(२) भामु. ५।३३।६१; मेधा. ७।८९ व्याघ्र (यौ लोके) रणे चा (शूरश्चा).

(३) भा. ५।५०।५१; भामु. ५।५१।५१ ब्राह्मण (क्षत्रिय).

(४) भा. ५।६६।७-९; भामु. ५।६८।७-९.

(५) भा. ५।८०।१६-१७; भामु. ५।८२।१६-१७.

प्रसृतं प्रदत्तं च तदग्र्यं( ? ग्रं) च तस्य भोक्ता प्रसृताग्रभुक्। पूज्य इत्यर्थः। नीटी.

[1]यथाऽवध्ये भवेद्दोषो वध्यमाने जनार्दन।
स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः॥

[2]स्वधर्ममनुतिष्ठन्तो यदि माधव संयुगे।
शस्त्रेण निधनं काले प्राप्स्यामः स्वर्गमेव तत्॥

[3]मुख्यश्चैवैष नो धर्मः क्षत्रियाणां जनार्दन।
यच्छयीमहि सङ्ग्रामे शरतल्पगता वयम्॥

[4]ते वयं वीरशयनं प्राप्स्यामो यदि संयुगे।
अप्रणम्यैव शत्रूणां न नस्तप्स्यति माधव॥

[5]कश्च जातु कुले जातः क्षत्रधर्मेण वर्तयन्।
भयाद् वृत्तिं समीक्ष्यैवं प्रणमेदिह कस्यचित्॥

[6]उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम्।
अप्यपर्वणि भज्येत न नमेदिह कस्यचित्॥

उद्यच्छेदेव उद्यमं कुर्यादेव। अपर्वणि अप्रस्तावे। 'पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे' इति विश्वः। नीटी.

[7]इति मातङ्गवचनं परीप्सन्ति हितेप्सवः।
धर्माय चैव प्रणमेद् ब्राह्मणेभ्यश्च मद्विधः॥

मातङ्गः मुनिः। नीटी.

अचिन्तयन् कंचिदन्यं यावज्जीवं तथाऽऽचरेत्।
एष धर्मः क्षत्रियाणां मतमेतच्च मे सदा॥

[1]क्षत्रधर्मः किल रणे तनुत्यागोऽभिपूजितः॥

गुरुब्राह्मणाद्याततायिवधो न दोषः

*अयं चापि विशुद्धात्मन् पुराणे श्रूयते विभो।
मरुत्तेन महाबुद्धे गीतः श्लोको महात्मना॥

[2]गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः।
उत्पथप्रतिपन्नस्य कार्यं भवति शासनम्॥

अवलिप्तस्य दृप्तस्य। नीटी.

[3]स त्वं गुरुरिति प्रेम्णा मया संमानीतो भृशम्।
गुरुवृत्तं न जानीषे तस्माद् योत्स्याम्यहं त्वया॥

[4]गुरुं न हन्यां समरे ब्राह्मणं च विशेषतः।
विशेषतस्तपोवृद्धमेवं क्षान्तं मया तव॥

[5]उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत्।
यो हन्यात् समरे क्रुद्धो युध्यन्तमपलायिनम्।
ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः॥

[6]क्षत्रियाणां स्थितो धर्मे क्षत्रियोऽस्मि तपोधन।
यो यथा वर्तते यस्मिंस्तथा तस्मिन् प्रवर्तयन्।
नाधर्मं समवाप्नोति नरः श्रेयश्च विन्दति॥

---

(१) भा. ५।८०।१८; भामु. ५।८२।१८ भवेद्दोषो वध्यमाने (वध्यमाने भवेद्दोषो).

(२) भा. ५।१२५।१५; भामु. ५।१२७।१५ तिष्ठ (पश्य).

(३) भा. ५।१२५।१६; भामु. ५।१२७।१६.

(४) भा. ५।१२५।१७; भामु. ५।१२७।१७ प्स्यति (प्स्यन्ति).

(५) भा. ५।१२५।१८; भामु. ५।१२७।१८ कस्य (कर्हि).

(६) भा. ५।१२५।१९; भामु. ५।१२७।१९ कस्य (कर्हि).

(७) भा. ५।१२५।२०-२१; भामु. ५।१२७। २०-२१.

* भीष्मस्य भार्गवरामं प्रत्युक्तिरियम्।

(१) भा. ५।१५६।७; भामु. ५।१५९।७ त्यागोऽभि (त्यागो हि).

(२) भा. ५।१७८।२३; भामु. ५।१७८।४७.

(३) भा. ५।१७८।२४; भामु. ५।१७८।४८ चतुर्थचरणे (परित्यागो विधीयते).

(४) भा. ५।१७८।२५; भामु. ५।१७८।४९ वृत्तं (वृत्तिं) म्यहं (मि वै).

(५) भा. ५।१७८।२६; भामु. ५।१७८।५०.

(६) भा. ५।१७८।२७; भामु. ५।१७८।५१-५२ क्रुद्धो (क्रुद्धं).

(७) भा. ५।१७८।२८; भामु. ५।१७८।५२-५३ स्तथा तस्मिन् (स्तस्मिन्नेव) नरः श्रेय (न चाश्रेय).

यः पुमान् यस्मिन् नरे यथा प्रीत्या द्वेषेण वा वर्तते सः नरः तस्मिन् तथैव प्रीतिं द्वेषं वा प्रवर्तयन् । नीटी.

युद्धे वध्यावध्यविवेकः, युद्धमरणं स्वर्ग्यम्

[1]ततस्ते समयं चक्रुः कुरुपाण्डवसोमकाः ।
धर्मांश्च स्थापयामासुर्युद्धानां भरतर्षभ ॥

धर्मान् 'पराङ्मुखः त्यक्तशस्त्रः शरणागतः अन्येन संयुक्तश्च न हन्तव्यः' इत्यादीन् । नीटी.

[2]निवृत्ते चैव नो युद्धे प्रीतिश्च स्यात् परस्परम् ।
यथापुरं यथायोगं न च स्याच्छलनं पुनः ॥

धर्मसंस्थापनमेवाऽऽह– यथापरमिति । यथायोगं तुल्ययोर्योगस्यानतिक्रमणम् । यथा येन प्रकारेण अपरम् अनुत्कृष्टम्, अन्याय्यमित्यर्थः, तथा न कस्यचित्तुल्ययोगातिक्रमः स्यादिति भावः । नीटी.

[3]वाचा युद्धे प्रवृत्ते नो वाचैव प्रतियोधनम् ।
निष्क्रान्तः पृतनामध्यान्न हन्तव्यः कथंचन ॥

[4]रथी च रथिना योध्यो गजेन गजधूर्गतः ।
अश्वेनाश्वी पदातिश्च पदातेनैव भारत ॥

गजधूर्गतः गजस्कन्धगतः । नीटी.

[5]यथायोगं यथावीर्यं यथोत्साहं यथावयः ।
समाभाष्य प्रहर्तव्यं न विश्वस्ते न विह्वले ॥

(१) भा. ६।१।२६ ; भामु. ६।१।२६–२७ धर्मांश्च (धर्मान् सं).

(२) भा. ६।१।२७ ; भामु. ६।१।२७–२८ चैव नो (विहिते) प्रीतिश्च स्यात् (स्यात् प्रीतिर्नः) पुरं (परं) छलनं (कस्यचित्).

(३) भा. ६।१।२८ ; भामु. ६।१।२८ युद्धे प्रवृत्ते नो (युद्धप्रवृत्तानां) ष्क्रान्तः (ष्क्रान्ताः) व्यः कथं (व्याः कदा).

(४) भा. ६।१।२९ ; भामु. ६।१।२९ पदा (पादा).

(५) भा. ६।१।३० ; भामु. ६।१।३० वीर्यं (कामं) वयः (बलम्).

[1]परेण सह संयुक्तः प्रमत्तो विमुखस्तथा ।
क्षीणशस्त्रो विवर्मा च न हन्तव्यः कथंचन ॥

[2]न सूतेषु न धुर्येषु न च शस्त्रोपनायिषु ।
न भेरीशङ्खवादेषु प्रहर्तव्यं कथंचन ॥
एवं ते समयं कृत्वा कुरुपाण्डवसोमकाः ।
विस्मयं परमं जग्मुः प्रेक्षमाणाः परस्परम् ॥

[3]क्षत्रियाः क्षत्रधर्मेण वध्यन्ते यदि संयुगे ।
वीरलोकं समासाद्य सुखं प्राप्स्यन्ति केवलम् ॥

[4]इह कीर्तिं परे लोके दीर्घकालं महत् सुखम् ।
प्राप्स्यन्ति पुरुषव्याघ्राः प्राणांस्त्यक्त्वा महाहवे ॥

[5]सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव ।
समानीय महीपालानिदं वचनमब्रवीत् ॥

[6]इदं वः क्षत्रिया द्वारं स्वर्गायापावृतं महत् ।
गच्छध्वं तेन शक्रस्य ब्रह्मणश्च सलोकताम् ॥

[7]एष वः शाश्वतः पन्थाः पूर्वैः पूर्वतरैर्गतः ।
संभावयत चाऽऽत्मानमव्यग्रमनसो युधि ॥

[8]नाभागो हि ययातिश्च मान्धाता नहुषो नृगः ।
संसिद्धाः परमं स्थानं गताः कर्मभिरीदृशैः ॥

(१) भा. ६।१।३१ ; भामु. ६।१।३१ परेण (एकेन) प्रमत्तो (प्रपन्नो) कथं (कदा).

(२) भा. ६।१।३२–३३ ; भामु. ६।१।३२–३३.

(३) भा. ६।३।४५ ; भामु. ६।३।४८ क्षत्रियाः (राजानः) वध्यन्ते यदि (यदि वध्यन्ति).

(४) भा. ६।३।४६ ; भामु. ६।३।४९.

(५) भा. ६।१७।७; भामु. ६।१७।७.

(६) भा. ६।१७।८ ; भामु. ६।१७।८ ब्रह्मणश्च स (ब्रह्मणः सह).

(७) भा. ६।१७।९ ; भामु. ६।१७।९ तरैर्गतः (तरैः कृतः) यत चा (यध्वमा).

(८) भा. ६।१७।१० ; भामु. ६।१७।१० हि (ऽथ).

[1]अधर्मः क्षत्रियस्यैष यद् व्याधिमरणं गृहे ।
यदाजौ निधनं याति सोऽस्य धर्मः सनातनः ॥

अयोनिधनम् अयसा शस्त्रेण मरणम् ।  नीटी.

युद्धे राज्ञा आत्मा सर्वथा रक्षणीयः , स्त्री युद्धे अवध्या

[2]दुर्योधनमिदं वाक्यं भीष्मः शांतनवोऽब्रवीत् ॥

[3]शृणु राजन् मम वचो यत्त्वा वक्ष्यामि कौरव ।
यथा त्वया महाराज वर्तितव्यं परंतप ॥

[4]आत्मा रक्ष्यो रणे तात सर्वावस्थास्वरिंदम ।
धर्मराजेन सङ्ग्रामस्त्वया कार्यः सदाऽनघ ॥

[5]अर्जुनेन यमाभ्यां वा भीमसेनेन वा पुनः ।
राजधर्मं पुरस्कृत्य राजा राजानमृच्छति ॥

[6]अहं तु सोमकान्सर्वान्सपाञ्चालान्समागतान् ।
निहनिष्ये नरव्याघ्र वर्जयित्वा शिखण्डिनम् ॥

[7]तैर्वाऽहं निहतः संख्ये गमिष्ये यमसादनम् ।
तान् वा निहत्य सङ्ग्रामे प्रीतिं दास्यामि वै तव ॥

[8]पूर्वं हि स्त्री समुत्पन्ना शिखण्डी राजवेश्मनि ।
वरदानात् पुमाञ्जातः सैषा वै स्त्री शिखण्डिनी ॥

---

(१) भा. ६।१७।११ ; भामु. ६।१७।११ दाजौ नि ( दयोनि ).

(२) भा. ६।९१।९ ; भामु. ६।९५।९.

(३) भा. ६।९१।१० ; भामु. ६।९५।१० यत्त्वा ( यत्त्वां ).

(४) भा. ६।९१।११ ; भामु. ६।९५।११.

(५) भा. ६।९१।१२ ; भामु. ६।९५।१२ मृच्छ ( मार्छे ).

(६) भा. ६।९४।१४ ; भामु. ६।९८।१९ सपाञ्चालान् ( पञ्चालांश्च ).

(७) भा. ६।९४।१५ ; भामु. ६।९८।२० सङ्ग्रामे ( समरे ) मि वै ( म्यहं ).

(८) भा. ६।९४।१६ ; भामु. ६।९८।२१.

[1]तामहं न हनिष्यामि प्राणत्यागेऽपि भारत ।
याऽसौ प्राङ्निर्मिता धात्रा सैषा वै स्त्री शिखण्डिनी ॥

धर्म्ये युद्धे प्रियाप्रियविवेको न कर्तव्यः

धृतराष्ट्र उवाच –

[2]कथं द्रोणो महेष्वासः पाण्डवश्च धनंजयः ।
समीयतू रणे शूरौ तन्ममाऽऽचक्ष्व संजय ॥

[3]प्रियो हि पाण्डवो नित्यं भारद्वाजस्य धीमतः ।
आचार्यश्च रणे नित्यं प्रियः पार्थस्य संजय ॥

[4]तावुभौ रथिनौ संख्ये दृप्तौ सिंहाविवोत्कटौ ।
कथं समीयतुर्युद्धे भारद्वाजधनंजयौ ॥

संजय उवाच –

[5]न द्रोणः समरे पार्थं जानीते प्रियमात्मनः ।
क्षत्रधर्मं पुरस्कृत्य पार्थो वा गुरुमाहवे ॥
न क्षत्रिया रणे राजन् वर्जयन्ति परस्परम् ।
निर्मर्यादं हि युध्यन्ते पितृभिर्भ्रातृभिः सह ॥

युद्धे वध्यावध्यविवेकः

*[6]निक्षिप्तशस्त्रे पतिते विमुक्तकवचध्वजे ।
द्रवमाणे च भीते च तवास्मीति च वादिनि ॥

[7]स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रके ।
अप्रसूते च दुष्प्रेक्ष्ये न युद्धं रोचते मम ॥

---

* भीष्मस्योक्तिरियं युधिष्ठिरं प्रति ।

(१) भा. ६।९४।१७ ; भामु. ६।९८।२२ तामहं ( तमहं ).

(२) भा. ६।९८।१ ; भामु. ६।१०२।१ उत्तरार्धं ( समीयतू रणे यत्तौ तावुभौ पुरुषर्षभौ ॥ ).

(३) भा. ६।९८।२ ; भामु. ६।१०२।२.

(४) भा. ६।९८।३ ; भामु. ६।१०२।३ दृप्तौ ( हृष्टौ ) युद्धे ( यत्तौ ).

(५) भा. ६।९८।४–५ ; भामु. ६।१०२।४–५.

(६) भा. ६।१०३।७२ ; भामु. ६।१०७।७७–७८.

(७) भा. ६।१०३।७३ ; भामु. ६।१०७।७८–७९, पुत्रके ( पुत्रिणि ) तृतीयचरणे ( अप्रशस्ते नरे चैव ).

[1]इमं च शृणु मे पार्थ संकल्पं पूर्वचिन्तितम् ।
अमङ्गल्यध्वजं दृष्ट्वा न युध्येयं कथंचन ॥
[2]जहि भीष्मं महाबाहो शृणु चेदं वचो मम ।
यथोवाच पुरा शक्रं महाबुद्धिर्बृहस्पतिः ॥
[3]ज्यायांसमपि चेच्छक्र गुणैरपि समन्वितम् ।
आततायिनमामन्त्र्य हन्याद् घातकमागतम् ॥

आततायिनमित्यस्य घातकमिति विशेषणमन्येभ्य आततायिभ्यो व्यवच्छेदायोक्तम् । नीटी.

[4]शाश्वतोऽयं स्थितो धर्मः क्षत्रियाणां धनंजय ।
योद्धव्यं रक्षितव्यं च यष्टव्यं चानसूयुभिः ॥
[5]विचेता न्यपतद् भूमौ सौभद्रः परवीरहा ।
एवं विनिहतो राजन्नेको बहुभिराहवे ॥
[6]द्रोणकर्णमुखैः षड्भिर्धार्तराष्ट्रैर्महारथैः ।
एकोऽयं निहतः शेते नैष धर्मो मतो हि नः ॥

सामान्यतः युद्धं न ब्राह्मणधर्मः, राज्ञा आज्ञापितस्य ब्राह्मणस्य युद्धं धर्मः अपवादरूपः

[7]क्षत्रियाणामभावाय दृष्ट्वा द्रोणमवस्थितम् ।
ऋषयोऽभ्यागमंस्तूर्णं हव्यवाहपुरोगमाः ॥
[8]विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
वसिष्ठः कश्यपोऽत्रिश्च ब्रह्मलोकं निनीषवः ॥

(१) भा. ६।१०३।७४ ; भामु. ६।१०७।७९–८० च शृणु मे पार्थ (मे शृणु राजेन्द्र) कथं (कदा).

(२) भा. ६।१०३।९४ ; भामु. ६।१०७।१०० महाबाहो (स्थिरो भूत्वा).

(३) भा. ६।१०३।९५ ; भामु. ६।१०७।१०१ चेच्छक्र (चेद्वृद्धं) मामन्त्र्य (मायान्तं) मागतम् (मात्मनः).

(४) भा. ६।१०३।९६ ; भामु. ६।१०७।१०२.

(५) भा. ७।४८।१३ ; भामु. ७।४९।१४.

(६) भा. ७।४८।२१ ; भामु. ७।४९।२२.

(७) भा. ७।१६४।८६ ; भामु. ७।१९०।३२ गमं (गता).

(८) भा. ७।१६४।८७ ; भामु. ७।१९०।३३.

[1]सिकताः पृश्नयो गर्गा बालखिल्या मरीचिपाः ।
भृगवोऽङ्गिरसश्चैव सूक्ष्माश्चान्ये महर्षयः ॥
[2]त एनमब्रुवन् सर्वे द्रोणमाहवशोभिनम् ।
अधर्मतः कृतं युद्धं समयो निधनस्य ते ॥
[3]न्यस्याऽऽयुधं रणे द्रोण समेत्यास्मानवस्थितान् ।
नातः क्रूरतरं कर्म पुनः कर्तुं त्वमर्हसि ॥
[4]वेदवेदाङ्गविदुषः सत्यधर्मपरस्य च ।
ब्राह्मणस्य विशेषेण तवैतन्नोपपद्यते ॥
[5]न्यस्याऽऽयुधममोघेषो तिष्ठ वर्त्मनि शाश्वते ।
परिपूर्णश्च कालस्ते वस्तुं लोकेऽद्य मानुषे ॥
[6]ब्रह्मास्त्रेण त्वया दग्धा अनस्त्रज्ञा नरा भुवि ।
यदेतदीदृशं विप्र कृतं कर्म न साधु तत् ॥
न्यस्याऽऽयुधं रणे विप्र द्रोण मा त्वं चिरं कृथाः ।
मा पापिष्ठतरं कर्म करिष्यसि पुनर्द्विज ॥
[7]इति तेषां वचः श्रुत्वा भीमसेनवचश्च तत् ।
धृष्टद्युम्नं च संप्रेक्ष्य रणे स विमनाभवत् ॥
[8]तमब्रवीन्महाराज पुत्रस्तव विशां पते ।
ममाऽऽज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यताम् ।
सेनापत्येन भद्रं ते मम चेदिच्छसि प्रियम् ॥

(१) भा. ७।१६४।८८ ; भामु. ७।१९०।३४ बाल (वाल).

(२) भा. ७।१६४।८९ ; भामु. ७।१९०।३५.

(३) भा. ७।१६४।९० ; भामु. ७।१९०।३६ समेत्या (समीक्षा) कर्तुं त्वम (कर्तुमिहा).

(४) भा. ७।१६४।९१ ; भामु. ७।१९०।३७ परस्य च (रतस्य ते).

(५) भा. ७।१६४।९२ ; भामु. ७।१९०।३८ न्यस्या (लजा).

(६) भामु. ७।१९०।३९–४०.

(७) भा. ७।१६४।९३ ; भामु. ७।१९०।४१.

(८) भा. ९।६४।३८ ; भामु. ९।६५।४०–४१ सेना (सैना).

[1]राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः ।
वर्तता क्षत्रधर्मेण ह्येवं धर्मविदो विदुः ॥

[2]एष मुख्यतमो धर्मः क्षत्रियस्येति नः श्रुतम् ।
यदाजौ निहतः शेते सद्भिः समभिपूजितः ॥

युद्धे वध्यावध्यविवेकः

[3]अयुध्यमानस्य वधस्तथाऽशस्त्रस्य भारत ।
पराङ्मुखस्य द्रवतः शरणं वाऽभिगच्छतः ।
कृताञ्जलेः प्रपन्नस्य न वधः पूज्यते बुधैः ॥

अशत्रोः अशातनीयस्य अवध्यस्य ।  नीटी.

[4]प्रकीर्णकेशे विमुखे ब्राह्मणे च कृताञ्जलौ ।
शरणागते न्यस्तशस्त्रे तथा व्यसनगेऽर्जुन ॥

[5]अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा ।
न शूराः प्रहरन्त्याजौ न राज्ञे पार्थिवास्तथा ।
त्वं च शूरोऽसि कौन्तेय तस्मात् क्षम
मुहूर्तकम् ॥

[6]अभिज्ञो युद्धधर्माणां वेदान्तावभृथाप्लुतः ।
दिव्यास्त्रविदमेयात्मा कार्तवीर्यसमो युधि ॥

[1]यावच्चक्रमिदं भूमेरुद्धरामि धनंजय ।
न मां रथस्थो भूमिष्ठमसज्जं हन्तुमर्हसि ॥

युद्धात्पलायनमधर्मः युद्धे मरणं च स्वर्ग्यम्

[2]ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवाऽऽत्मजः ॥
हर्षयन्निव तान् योधानिदं वचनमब्रवीत् ।
न तं देशं प्रपश्यामि यत्र याता भयार्दिताः ॥
गतानां यत्र वै मोक्षः पाण्डवात्किं गतेन वः ।
अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ॥
अद्य सर्वान्हनिष्यामि ध्रुवो हि विजयो भवेत् ।
विप्रयातांस्तु वो भिन्नान् पाण्डवाः
कृतकिल्बिषान् ॥
अनुसृत्य वधिष्यन्ति श्रेयान्नः समरे वधः ।
सुखं साङ्ग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम् ॥
मृतो दुःखं न जानीते प्रेत्य चाऽऽनन्त्यमश्नुते ।
शृणुध्वं क्षत्रियाः सर्वे यावन्तः स्थ समागताः ॥
यदा शूरं च भीरुं च मारयत्यन्तको यमः ।
को न मूढो न युध्येत मादृशः क्षत्रियव्रतः ॥
द्विषतो भीमसेनस्य क्रुद्धस्य वशमेष्यथ ।
पितामहैराचरितं न धर्मं हातुमर्हथ ॥
न ह्यधर्मोऽस्ति पापीयान् क्षत्रियस्य पलायनात् ।
न युद्धधर्माच्छ्रेयो हि पन्थाः स्वर्गस्य कौरवाः ।
अचिरेण हता लोकान् सद्यो योधाः समश्नुत ॥

[3]सुखः साङ्ग्रामिको मृत्युः क्षत्रधर्मेण
युध्यताम् ।
मृतो दुःखं न जानीते प्रेत्य चाऽऽनन्त्य-
मश्नुते ॥

[4]न युद्धधर्माच्छ्रेयान् वै पन्था राजेन्द्र विद्यते ।
यं समाश्रित्य युध्यन्ते क्षत्रियाः क्षत्रियर्षभ ॥

---

(१) भा. ९।६४।३९ ; भामु. ९।६५।४२ ; राक. १३० नियो (ऽभियो) पू. ; राप्र. ४०५ राज्ञो (राज्ञां) पू.

(२) भा. ८।२७।९२ ; भामु. ८।४०।४३–४४.

(३) भा. ८।४९।२२ ; भामु. ८।६९।२५–२६ शस्त्रस्य भारत (शत्रोश्च मानद) वाऽभि (चापि) तृतीयार्धे (कृताञ्जलेः प्रपन्नस्य प्रमत्तस्य तथैव च । न वधः पूज्यते सद्भिस्तच्च सर्वं गुरौ तव ॥ ).

(४) भा. ८।६६।६२ ; भामु. ८।९०।११–१२ च (ऽथ) तथा व्यसनगे (याचमाने तथा).

(५) भा. ८।६६।६३ ; भामु. ८।९०।१२–१३ द्वितीयतृतीयार्धयोः (न विमुञ्चन्ति शस्त्राणि शूराः साधुव्रते स्थिताः । त्वं च शूरतमो लोके साधुवृत्तश्च पाण्डव ॥).

(६) भामु. ८।९०।१४.

(१) भा. ८।६६।६४ ; भामु. ८।९०।१५ भूमेरु (ग्रस्तमु) धनंजय (महाभुज) ष्ठमसज्जं (ष्ठं विकलं).

(२) भामु. ८।९३।५१–५९.

(३) भामु. ९।३।५४–५५.

(४) भा. ९।३।१०; भामु. ९।४।८.

[1]पुत्रो भ्राता पिता चैव स्वस्रेयो मातुलस्तथा ।
संबन्धिबान्धवाश्चैव योध्या वै क्षत्रजीविना ॥
[2]वधे चैव परो धर्मस्तथाऽधर्मः पलायने ॥
[3]न ध्रुवं सुखमस्तीह कुतो राज्यं कुतो यशः ।
इह कीर्तिर्विधातव्या सा च युद्धेन नान्यथा ॥
[4]गृहे यत् क्षत्रियस्यापि निधनं तद्विगर्हितम् ।
अधर्मः सुमहानेष यच्छय्यामरणं गृहे ॥
[5]अरण्ये यो विमुञ्चेत सङ्ग्रामे वा तनुं नरः ।
क्रतूनाहृत्य महतो महिमानं स गच्छति ॥
[6]कृपणं विलपन्नार्तो जरयाऽभिपरिप्लुतः ।
म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ॥
[7]त्यक्त्वा तु विविधान् भोगान् प्राप्तानां परमां गतिम् ।
अपीदानीं सुयुद्धेन गच्छेयं सत्सलोकताम् ॥
[8]शूराणामार्यवृत्तानां सङ्ग्रामेष्वनिवर्तिनाम् ।
धीमतां सत्यसंधानां सर्वेषां क्रतुयाजिनाम् ॥
[9]शस्त्रावभृथमाप्तानां ध्रुवं वासस्त्रिविष्टपे ।
मुदा नूनं प्रपश्यन्ति शुभ्रा ह्यप्सरसां गणाः ॥
[10]पश्यन्ति नूनं पितरः पूजिताञ्शक्रसंसदि ।
अप्सरोभिः परिवृतान् मोदमानांस्त्रिविष्टपे ॥

(१) भा. ९।३।११ ; भामु. ९।४।९ स्रेयो (स्त्रीयो).
(२) भा. ९।३।१२ ; भामु. ९।४।१०.
(३) भा. ९।४।२९ ; भामु. ९।५।३१ मस्तीह (मस्तीति) राज्यं (राष्ट्रं).
(४) भा. ९।४।३० ; भामु. ९।५।३२.
(५) भा. ९।४।३१ ; भामु. ९।५।३३ मुञ्चे (मुच्ये).
(६) भा. ९।४।३२ ; भामु. ९।५।३४.
(७) भा. ९।४।३३ ; भामु. ९।५।३५ सत्स (यत्स).
(८) भा. ९।४।३४ ; भामु. ९।५।३६.
(९) भा. ९।४।३५ ; भामु. ९।५।३७ माप्ता (पूता) शुभ्रा (युद्धे).
(१०) भा. ९।४।३६ ; भामु. ९।५।३८ ञ्शक्र (ञ्सुर).

युद्धे पतितरिपोः पादेन दलनम् अधर्मः

[1]पुनश्च राज्ञः पतितस्य भूमौ
स तां गदां स्कन्धगतां निरीक्ष्य ।
वामेन पादेन शिरः प्रमृद्य
दुर्योधनं नैकृतिकेत्यवोचत् ॥
[2]दृष्टेन राजन् कुरुपार्थिवस्य
क्षुद्रात्मना भीमसेनेन पादम् ।
दृष्ट्वा कृतं मूर्धनि नाऽभ्यनन्दन्
धर्मात्मानः सोमकानां प्रबर्हाः ॥
[3]तव पुत्रं तथा हत्वा कत्थमानं वृकोदरम् ।
नृत्यमानं च बहुशो धर्मराजोऽब्रवीदिदम् ॥
[4]गतोऽसि वैरस्याऽऽनृण्यं प्रतिज्ञा पूरिता त्वया ।
शुभेनाथाशुभेनैव कर्मणा विरमाधुना ॥
[5]मा शिरोऽस्य पदा मर्दीर्मा धर्मस्तेऽत्यगान्महान् ।
राजा ज्ञातिर्हतश्चायं नैतन्न्याय्यं तवानघ ॥
[6]एकादशचमूनाथं कुरूणामधिपं तथा ।
मा स्प्राक्षीर्भीम पादेन राजानं ज्ञातिमेव च ॥
हतबन्धुर्हतामात्यो भ्रष्टसैन्यो हतो मृधे ।
सर्वाकारेण शोच्योऽयं नावहास्योऽयमीश्वरः ॥
[7]विध्वस्तोऽयं हतामात्यो हतभ्राता हतप्रजः ।
उत्सन्नपिण्डो भ्राता च नैतन्न्याय्यं कृतं त्वया ॥

(१) भा. ९।५८।१२ ; भामु. ९।५९।१२ निरीक्ष्य (प्रगृह्य) केत्य (कं न्य).
(२) भा. ९।५८।१३ ; भामु. ९।५९।१३ पार्थिव (सत्तम).
(३) भा. ९।५८।१४ ; भामु. ९।५९।१४.
(४) भामु. ९।५९।१५.
(५) भा. ९।५८।१५ ; भामु. ९।५९।१६ त्यगान्महान् (तिगो भवेत्).
(६) भामु. ९।५९।१७–१८.
(७) भा. ९।५८।१६–१७ ; भामु. ९।५९।१९–२०.

धार्मिको भीमसेनोऽसावित्याहुस्त्वां पुरा जनाः।
स कस्माद् भीमसेन त्वं राजानमधितिष्ठसि ॥

गदायुद्धे नाभेरधः हननं अधर्म्यम्

धृतराष्ट्र उवाच–
[1]अधर्मेण हतं दृष्ट्वा राजानं माधवोत्तमः।
किमब्रवीत्तदा सूत बलदेवो महाबलः ॥
गदायुद्धविशेषज्ञो गदायुद्धविशारदः।
कृतवान् रौहिणेयो यत्तन्ममाऽऽचक्ष्व संजय ॥

संजय उवाच–
शिरस्यभिहतं दृष्ट्वा भीमसेनेन ते सुतम्।
रामः प्रहरतां श्रेष्ठश्चुक्रोध बलवद्बली ॥
ततो मध्ये नरेन्द्राणामूर्ध्वबाहुर्हलायुधः।
कुर्वन्नार्तस्वरं घोरं धिग्धिग्भीमेत्युवाच ह ॥
[2]अहो धिग्यदधो नाभेः प्रहृतं शुद्धविक्रमे।
नैतद् दृष्टं गदायुद्धे कृतवान् यद् वृकोदरः ॥
[3]अधो नाभ्या न हन्तव्यमिति शास्त्रस्य निश्चयः।
अयं त्वशास्त्रविन्मूढः स्वच्छन्दात् संप्रवर्तते ॥

संजय उवाच–
[4]धर्मच्छलमपि श्रुत्वा केशवात् स विशां पते।
नैव प्रीतमना रामो वचनं प्राह संसदि ॥
हत्वाऽधर्मेण राजानं धर्मात्मानं सुयोधनम्।
जिह्मयोधीति लोकेऽस्मिन् ख्यातिं यास्यति पाण्डवः ॥
दुर्योधनोऽपि धर्मात्मा गतिं यास्यति शाश्वतीम्।
ऋजुयोधी हतो राजा धार्तराष्ट्रो नराधिपः ॥

(१) भा. ९।५९।१–४ ; भामु. ९।६०।१–४.

(२) भा. ९।५९।५ ; भामु. ९।६०।५ शुद्धविक्रमे (धर्मविग्रहे).

(३) भा. ९।५९।६ ; भामु. ९।६०।६.

(४) भा. ९।५९।२२–२५ ; भामु. ९।६०।२६–२९.

युद्धदीक्षां प्रविश्याऽऽजौ रणयज्ञं वितत्य च।
हुत्वाऽऽत्मानममित्राग्नौ प्राप चावभृथं यशः ॥

अवध्याः

[1]गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा।
वृद्धबालजडान्धेषु सुप्तभीतोत्थितेषु च ॥
[2]मत्तोन्मत्तप्रमत्तेषु न शस्त्राण्युपधारयेत्।
इत्येवं गुरुभिः पूर्वमुपदिष्टं नृणां सदा ॥
[3]सोऽहमुत्क्रम्य पन्थानं शास्त्रदृष्टं सनातनम्।
अमार्गेणैवमारभ्य घोरामापदमागतः ॥

युद्धे हताः परमां गतिं प्राप्ता न शोच्याः

[4]न चाप्येतान् हतान् युद्धे राजञ्शोचितुमर्हसि।
प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम् ॥
[5]हतोऽपि लभते स्वर्गं हत्वा च लभते यशः।
उभयं नो बहुगुणं नास्ति निष्फलता रणे ॥

नः अस्माकं क्षत्रियाणाम्। नीटी.

[6]तेषां कामदुघाँल्लोकानिन्द्रः संकल्पयिष्यति।
इन्द्रस्यातिथयो ह्येते भवन्ति पुरुषर्षभ ॥
[7]न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया।
स्वर्गं यान्ति तथा मर्त्या यथा शूरा रणे हताः ॥
[8]शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः।
हूयमानाञ्शरांश्चैव सेहुस्तेजस्विनो मिथः ॥
एवं राजंस्तवाऽऽचक्षे स्वर्ग्यं पन्थानमुत्तमम्।
न युद्धादधिकं किंचित् क्षत्रियस्येह विद्यते ॥

(१) भा. १०।६।२१ ; भामु. १०।६।२१–२२ वृद्धबाल (हीनप्राण).

(२) भा. १०।६।२२ ; भामु. १०।६।२२–२३ ण्युपधारयेत् (णि च पातयेत्).

(३) भा. १०।६।२३ ; भामु. १०।६।२३–२४.

(४) भा. ११।२।६ ; भामु. ११।२।११.

(५) भा. ११।२।९ ; भामु. ११।२।१४.

(६) भा. ११।२।१० ; भामु. ११।२।१५ पुरुष (भरत). (७) भा. ११।२।११ ; भामु. ११।२।१६.

(८) भामु. ११।२।१७–१९.

आचक्षे कथयामि । नीटी.

क्षत्रियास्ते महात्मनः शूराः समितिशोभनाः ।
आशिषः परमाः प्राप्ता न शोच्याः सर्व एव हि ॥

युधिष्ठिर उवाच–

[1]यैर्हुतानि शरीराणि हृष्टैः परमसंयुगे ।
देवराजसमाँल्लोकान् गतास्ते सत्यविक्रमाः ॥

[2]ये त्वहृष्टेन मनसा मर्तव्यमिति भारत ।
युध्यमाना हताः संख्ये ते गन्धर्वैः समागताः ॥

[3]ये तु सङ्ग्रामभूमिष्ठा याचमानाः पराङ्मुखाः ।
शस्त्रेण निधनं प्राप्ता गतास्ते गुह्यकान् प्रति ॥

[4]पीड्यमानाः परैर्ये तु हीयमाना निरायुधाः ।
ह्रीनिषेधा महात्मानः परानभिमुखा रणे ॥

[5]छिद्यमानाः शितैः शस्त्रैः क्षत्रधर्मपरायणाः ।
गतास्ते ब्रह्मसदनं हता वीराः सुवर्चसः ॥

[6]ये तत्र निहता राजन्नन्तरायोधनं प्रति ।
यथाकथंचित्ते राजन् संप्राप्ता उत्तरान् कुरून् ॥

आततायिवधो न दोषः

[7]प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं निहत्याऽऽजौ न तेन ब्रह्महा भवेत् ॥

जिघांसी हन्तुमिच्छावान् इयात् गच्छेत् । नीटी.

(१) भा. ११।२६।१२ ; भासु. ११।२६।१२.

(२) भा. ११।२६।१३ ; भासु. ११।२६।१३ चतुर्थचरणे (गन्धर्वैः सह संगताः).

(३) भा. ११।२६।१४ ; भासु. ११।२६।१४ तु (च).

(४) भा. ११।२६।१५ ; भासु. ११।२६।१५ पीड्य (पात्य) षेधा (षेवा).

(५) भा. ११।२६।१६ ; भासु. ११।२६।१६ चतुर्थचरणे (न मेऽत्रास्ति विचारणा).

(६) भा. ११।२६।१७ ; भासु. ११।२६।१७ तत्र (त्वत्र) ते राजन् संप्राप्ता उ (त्पुरुषास्ते गतास्तू).

(७) भा. १२।३५।१७ ; भासु. १२।३४।१७ निहत्याऽऽजौ (जिघांसीयात्).

[1]अपि चाप्यत्र कौन्तेय मन्त्रो वेदेषु पठ्यते ।
वेदप्रमाणविहितं तं धर्मं प्रब्रवीमि ते ॥

मन्त्रः 'मन्युरकार्षीन्नमो नमः' इत्यादिः 'मन्यवे स्वाहा' (तैआ. १०।६२) इत्यन्तः । नीटी.

[2]अपेतं ब्राह्मणं वृत्ताद्यो हन्यादाततायिनम् ।
न तेन ब्रह्महा स स्यान्मन्युस्तं मन्युमृच्छति ॥

मन्युः क्रोधः तन्मन्युं शत्रोः क्रोधं प्रति ऋच्छति गच्छति । क्रोध एव तं प्रतीपीभूय परशरीरद्वारा हन्तीत्यर्थः । नीटी.

विजयः प्रजापालनपरस्य राज्ञः धर्म्यः

युधिष्ठिर उवाच–

[3]अथ यो विजिगीषेत क्षत्रियः क्षत्रियं युधि ।
कस्तस्य धर्म्यो विजय एतत् पृष्टो ब्रवीहि मे ॥

यस्य स्वाम्याद्याः सप्त प्रकृतयो दृढाः स परमर्हीं लिप्सेतेत्युक्तम् । तत्र यो जिगीषते जेतुमिच्छति तस्य विजये विषये विजयनिमित्तं कोऽनुष्ठेयो धर्म इति पृच्छति– अथेति । नीटी.

भीष्म उवाच–

[4]ससहायोऽसहायो वा राष्ट्रमागम्य भूमिपः ।
ब्रूयादहं वो राजेति रक्षिष्यामि च वः सदा ॥

जिगीषुर्द्विविधः– अनुपस्थितपरिपन्थी उपस्थितपरिपन्थी च । तत्राऽऽद्यस्य धर्ममाह– ससहाय इति । यः अकस्मात् राष्ट्रं परकीयमागत्य 'अहं वः रक्षिष्यामि' इत्यादि ब्रूयात् स आद्यो विजिगीषमाण इत्यर्थः । नीटी.

(१) भा. १२।३५।१८ ; भासु. १२।३४।१८ अपि (इति) तं धर्मं (धर्मं च).

(२) भा. १२।३५।१९ ; भासु. १२।३४।१९ स्तं मन्यु (स्तन्मन्यु).

(३) भा. १२।९६।१ ; भासु. १२।९५।१ धर्म्यो विजय एतत् (विजये धर्मो ह्येतं).

(४) भा. १२।९६।२ ; भासु. १२।९५।२.

[1]मम धर्म्यं बलिं दत्त किं वा मां प्रतिपत्स्यथ ।
ते चेत्तमागतं तत्र वृणुयुः कुशलं भवेत् ॥
[2]ते चेदक्षत्रियाः सन्तो विरुध्येयुः कथंचन ।
सर्वोपायैर्नियन्तव्या विकर्मस्था नराधिप ॥
[3]अशक्तं क्षत्रियं मत्वा शस्त्रं गृह्णात्यथापरः ।
त्राणायाप्यसमर्थं तं मन्यमानमतीव च ॥

त्राणायाप्यसमर्थं परं चातीव मन्यमानं क्षत्रियमशस्त्रं ज्ञात्वा अपरो हीनोऽपि शस्त्रं गृह्णाति । अतः शस्त्रबलेनैव जितान् ग्रामादीनुल्लङ्घ्य तत्तदधिपतिमुखे स्थातव्यम् । जितं राष्ट्रं सामादिना वशीकर्तव्यमिति शेषः(?) ।
नीटी.

धर्म्ययुद्धनीतिः , धर्म्यविजयस्वरूपम् , अधर्म्य-
विजयः पापावहः

युधिष्ठिर उवाच–
[4]अथ यः क्षत्रियो राजा क्षत्रियं प्रत्युपाव्रजेत् ।
कथं स प्रतियोद्धव्यस्तन्मे ब्रूहि पितामह ॥
भीष्म उवाच–
[5]नासंनद्धो नाकवचो योद्धव्यः क्षत्रियो रणे ।
एक एकेन वाच्यश्च विसृजस्व क्षिपामि च ॥
[6]स चेत् संनद्ध आगच्छेत् संनद्धव्यं ततो भवेत् ।
स चेत् ससैन्य आगच्छेत् ससैन्यस्तमथाऽऽह्वयेत् ॥

(१) भा. १२।९६।३ ; भामु. १२।९५।३ धर्म्यं बलिं ( धर्मबलिं ).

(२) भा. १२।९६।४ ; भामु. १२।९५।४ ध्येयुः ( ध्येरन् ).

(३) भा. १२।९६।५ ; भामु. १२।९५।५ अशक्तं ( अशस्त्रं ).

(४) भा. १२।९६।६ ; भामु. १२।९५।६ स प्रतियो ( संप्रति यो ).

(५) भा. १२।९६।७ ; भामु. १२।९५।७ प्रथमचरणे ( नैवासंनद्धकवचो ) जस्व ( जेति ).

(६) भा. १२।९६।८ ; भामु. १२।९५।८.

[1]स चेन्निकृत्या युध्येत निकृत्या तं प्रयोधयेत् ।
अथ चेद्धर्मतो युध्येद्धर्मेणैव निवारयेत् ॥
[2]नाश्वेन रथिनं यायादुदियाद्रथिनं रथी ।
व्यसने न प्रहर्तव्यं न भीताय जिताय च ॥
[3]नेषुर्लिप्तो न कर्णी स्यादसतामेतदायुधम् ।
जयार्थमेव योद्धव्यं न क्रुध्येदजिघांसतः ॥

लिप्तः विषदिग्धः । इषुः महान् बाणः । कर्णी ऋजुः प्रतीपकण्टको बाणः ।
नीटी.

[4]साधूनां तु मिथो भेदात् साधुश्चेद् व्यसनी भवेत् ।
सव्रणो नाभिहन्तव्यो नानपत्यः कथंचन ॥
[5]भग्नशस्त्रो विपन्नाश्वश्छिन्नज्यो हतवाहनः ।
चिकित्स्यः स्यात् स्वविषये प्राप्यो वा स्वगृहान् भवेत् ।
निर्व्रणोऽपि च मोक्तव्य एष धर्मः सनातनः ॥
[6]तस्माद्धर्मेण योद्धव्यं मनुः स्वायंभुवोऽब्रवीत् ।
सत्सु नित्यं सतां धर्मस्तमास्थाय न नाशयेत् ॥
[7]यो वै जयत्यधर्मेण क्षत्रियो वर्धमानकः ।
आत्मानमात्मना हन्ति पापो निकृतिजीवनः ॥

(१) भा. १२।९६।९ ; भामु. १२।९५।९ तं प्रयो ( प्रतियो ).

(२) भा. १२।९६।१० ; भामु. १२।९५।१० हर्त ( वर्त ).

(३) भा. १२।९६।११ ; भामु. १२।९५।११ नेषु ( इषु ) जयार्थ ( यथार्थ ) दजि ( त जि ).

(४) भा. १२।९६।१२ ; भामु. १२।९५।१२ मिथो ( यदा ) सव्रणो ( निष्प्राणो ).

(५) भा. १२।९६।१३ ; भामु. १२।९५।१३–१४ न्नाश्वश्छिन्न ( न्नश्च कृत्त ) गृहान् ( गृहे ) णोऽपि च ( णश्च स ).

(६) भा. १२।९६।१४ ; भामु. १२।९५।१४–१५ व्यं मनुः ( व्यमिति ).

(७) भा. १२।९६।१५ ; भामु. १२।९५।१५–१६ वर्धमानकः ( धर्मसंगरः ).

'कर्म चैतदसाधूनामसाधुं साधुना जयेत् ।
धर्मेण निधनं श्रेयो न जयः पापकर्मणा ॥

एतत् निकृत्या जयरूपम् । असाधूनपि । नीटी.

'नाधर्मश्चरितो राजन् सद्यः फलति गौरिव ।
मूलान्यस्य प्रशाखाश्च दहन् समनुगच्छति ॥

'पापेन कर्मणा वित्तं लब्ध्वा पापः प्रहृष्यति ।
स वर्धमानः स्तेयेन पापः पापे प्रसज्जति ॥

'न धर्मोऽस्तीति मन्वानः शुचीनवहसन्निव ।
अश्रद्दधानभावाच्च विनाशमुपगच्छति ॥

'स बद्धो वारुणैः पाशैरमर्त्य इव मन्यते ।
महादृतिरिवाऽऽध्मातः स्वकृतेन विवर्धते ॥

महादृतिः महान् चर्मकोशः । आध्मातः वायुना पूरित इव अतिपुष्टः । सुकृते सत्कर्मणि । नीटी.

'ततः समूलो ह्रियते नदीकूलादिव द्रुमः ।
अथैनमभिनिन्दन्ति भिन्नं कुम्भमिवाश्मनि ।
तस्माद् धर्मेण विजयं कामं लिप्सेत भूमिपः ॥

भीष्म उवाच–

'नाधर्मेण महीं जेतुं लिप्सेत जगतीपतिः ।
अधर्मविजयं लब्ध्वा कोऽनुमन्येत भूमिपः ॥

अधर्मयुक्तो विजयो ह्यध्रुवोऽस्वर्ग्य एव च ।
सादयत्येष राजानं महीं च भरतर्षभ ॥

'विशीर्णकवचं चैव तवास्मीति च वादिनम् ।
कृताञ्जलिं न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत् ॥

'बलेनावजितो यश्च न तं युध्येत भूमिपः ।
संवत्सरं विप्रणयेत् तस्माज्जातः पुनर्भवेत् ॥

विप्रणयेत् 'दासोऽस्मीति वद' इति तं शिक्षयेत् । ततः संवत्सरादूर्ध्वं स एव अब्रुवन्नपि ततो जातः जेतुः पुत्र एव भवेत् । ततश्च मोक्तव्य इत्यर्थः । नीटी.

'नार्वाक् संवत्सरात् कन्या स्प्रष्टव्या विक्रमाहृता ।
एवमेव धनं सर्वं यच्चान्यत् सहसाऽऽहृतम् ॥

विक्रमाहृता कन्या 'त्वमस्मान् वृणीषे, उतान्यं च ?' इति प्रष्टव्या । अन्यार्थिनी न स्थाप्येति भावः । सहसा निकृत्या आहृतं दासदास्यादिकं वत्सरान्ते प्रत्यर्पणीयम् । तदा स्वीयमेव तस्मै दत्तं भवति । नीटी.

'न तु वन्ध्यं धनं तिष्ठेत् पिबेयुर्ब्राह्मणाः पयः ।
युञ्जीरन् वाऽप्यनडुहः क्षन्तव्यं वा तदा भवेत् ॥

वध्याः चोरादयः, तद्धनं न तिष्ठेत्, अपि तु व्ययितव्यमेव । वध्योऽप्यचोरश्चेत्तदा क्षन्तव्यम् । पूर्ववत् तद्धनं प्रतिदेयमित्यर्थः । नीटी.

'राज्ञा राजैव योद्धव्यस्तथा धर्मो विधीयते ।
नान्यो राजानमभ्यसेदराजन्यः कथंचन ॥

---

(१) भा. १२।९६।१६ ; भामु. १२।९५।१६–१७ मसाधुं (मसाधून्).

(२) भा. १२।९६।१७ ; भामु. १२।९५।१७–१८ न्यस्य (नि च) मनु (मधि).

(३) भा. १२।९६।१८ ; भामु. १२।९५।१८–१९.

(४) भा. १२।९६।१९ ; भामु. १२।९५।१९–२० नभावाच्च (नश्च भवेद्).

(५) भा. १२।९६।२० ; भामु. १२।९५।२०–२१ स बद्धो (संबद्धो) चतुर्थचरणे (सुकृते नैव वर्तते).

(६) भा. १२।९६।२१ ; भामु. १२।९५।२१–२२ कामं (कोशं).

(७) भा. १२।९७।१–२ ; भामु. १२।९६।१–२.

(१) भा. १२।९७।३ ; भामु. १२।९६।३ विहिंस (हि हिंस).

(२) भा. १२।९७।४ ; भामु. १२।९६।४ नाव (न वि).

(३) भा. १२।९७।५ ; भामु. १२।९६।५ स्प्रष्ट (प्रष्ट).

(४) भा. १२।९७।६ ; भामु. १२।९६।६ वन्ध्यं धनं (वध्यधनं) रन् वाऽप्य (रन्नप्य).

(५) भा. १२।९७।७ ; भामु. १२।९६।७ भ्यसे (भ्यसे).

अभ्यस्येत् अभिमुखं शस्त्रं क्षिपेत्। नीटी.

[1]अनीकयोः संहतयोर्यदीयाद् ब्राह्मणोऽन्तरा।
शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत्।
मर्यादां शाश्वतीं भिन्द्याद् ब्राह्मणं योऽभि-
लङ्घयेत्॥

[2]अथ चेल्लङ्घयेदेनां मर्यादां क्षत्रियब्रुवः।
अप्रशस्यस्तदूर्ध्वं स्यादनादेयश्च संसदि॥

क्षत्रियब्रुवः क्षत्रियाधमः। असंख्येयः क्षत्रियेषु न गणनीयः। जातिबाह्यः कर्तव्य इत्यर्थः। नीटी.

[3]या तु धर्मविलोपेन मर्यादाभेदनेन च।
तां वृत्तिं नानुवर्तेत विजिगीषुर्महीपतिः।
धर्मलब्धाद्धि विजयात् को लाभोऽभ्यधिको
भवेत्॥

[4]सर्वविद्यातिरेकाद्वा जयमिच्छेन्महीपतिः।
न मायया न दम्भेन य इच्छेद्भूतिमात्मनः॥

[5]ब्राह्मणार्थे समुत्पन्ने योऽभिनिःसृत्य युध्यते।
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः॥

आत्मानं देहं यूपं यज्ञस्तम्भम् उत्सृज्य उच्छ्रित्य यज्ञः युद्धयज्ञः। नीटी.

[6]अभीतो विकिरञ्शत्रून् प्रतिगृह्णञ्शरांस्तथा।
न तस्मात् त्रिदशाः श्रेयो भुवि पश्यन्ति किंचन॥

(१) भा. १२।९७।८ ; भामु. १२।९६।८–९.

(२) भा. १२।९७।९ ; भामु. १२।९६।९–१० देनां (देव) प्रशस्य (संख्येय).

(३) भा. १२।९७।१० ; भामु. १२।९६।१०–११ या तु (यस्तु) को लाभो (लाभः को).

(४) भा. १२।९७।२३ ; भामु. १२।९६।२४ काद्वा (केण).

(५) १२।९८।१० ; भामु. १२।९७।१० भिनिःसृत्य युध्यते ( रिभिः सृत्य युध्यति ) मुच्छ्रित्य (मुत्सृज्य) ; नीम. ६६ यूपमुच्छ्रित्य (यूथ[ ? ]मुत्सृज्य).

(६) भा. १२।९८।११ ; भामु. १२।९७।११ गृह्णन् (गृह्य) ; नीम. ६६.

[1]तस्य यावन्ति शस्त्राणि त्वचं भिन्दन्ति संयुगे।
तावतः सोऽश्नुते लोकान् सर्वकामदुहो-
ऽक्षयान्॥

[2]न तस्य रुधिरं गात्रादावेधेभ्यः प्रवर्तते।
स ह तेनैव रक्तेन सर्वपापैः प्रमुच्यते॥

पापेन दुःखेन। नीटी.

[3]यानि दुःखानि सहते व्रणानामभितापने।
न ततोऽस्ति तपो भूय इति धर्मविदो विदुः॥

[4]पृष्ठतो भीरवः संख्ये वर्तन्तेऽधमपूरुषाः।
शूराच्छरणमिच्छन्तः पर्जन्यादिव जीवनम्॥

[5]यदि शूरस्तथा क्षेमे प्रतिरक्षेत्तथा भये।
प्रतिरूपं जनाः कुर्युर्न च तद्वर्तते तथा॥

रक्षित्वा प्रतिरूपं युद्धाभिमुखं जनं चेन्न कुर्यात्, किं तर्हि? स्वयं पुरतो भूत्वा तांश्चेत् पृष्ठतः कुर्यात् तर्हि तत्तथा पूर्ववत् पुण्यं वर्तते, नान्यथेत्यर्थः। नीटी.

[6]यदि ते कृतमाज्ञाय नमस्कुर्युः सदैव तम्।
युक्तं न्याय्यं च कुर्युस्ते न च तद्वर्तते तथा॥

(१) भा. १२।९८।१२ ; भामु. १२।९७।१२ यावन्ति शस्त्राणि ( शस्त्राणि यावन्ति ) ; नीम. ६६ तस्य ( यस्य ) त्वचं (तनुं) सर्वकामदुहो ( सर्वान् कामदुघो ).

(२) भा. १२।९८।१३ ; भामु. १२।९७।१३ न तस्य ( यदस्य ) दावेधेभ्यः प्र ( दाहवे संप्र ) स ह (सह) रक्तेन ( पापेन ) ; नीम. ६६ न तस्य ( यदस्य ) दावेधेभ्यः ( दाहवेषु ) स ह तेनैव ( स हतेनैव ).

(३) भा. १२।९८।१४ ; भामु. १२।९७।१४ द्वितीयचरणे ( क्षत्रियो युधि तापितः ) न ततोऽस्ति ( तेन तेन ) ; नीम. ६६ तापने (पातने) ततोऽस्ति तपो (तपोभिस्ततो ).

(४) भा. १२।९८।१५ ; भामु. १२।९७।१५ ऽधम (ऽधर्म ).

(५) भा. १२।९८।१६ ; भामु. १२।९७।१६ क्षेमे (क्षेमं )तथा भये (यथाऽभये) जनाः कुर्युर्न च ( जनं कुर्यान्न चेत् ).

(६) भा. १२।९८।१७ ; भामु. १२।९७।१७.

यदि ते रक्षितारः(? ताः) सन्तः तं नमस्कुर्युः अथ च न्याय्यं युद्धं च परावृत्य कुर्युः तदपि तथा न। नीटी.

[1]पुरुषाणां समानानां दृश्यते महदन्तरम्।
सङ्ग्रामेऽनीकवेलायामुत्कुष्टेऽभिपतत्सु च॥

अनीकवेलायाम् अनीकानां संघट्टकाले अभिपतन्त्येके। उत अपि च, नेत्यन्ये इत्यर्थात्। नीटी.

[2]पतत्यभिमुखः शूरः परान् भीरुः पलायते।
आस्थायास्वर्ग्यमध्वानं सहायान् विषमे त्यजन्॥

तदेवाऽऽह– पततीति। विषमे प्राणसंकटे त्यजेत्, देहमिति शेषः। नीटी.

युद्धे मरणं स्वर्ग्यम्

[3]मा स्म तांस्तादृशांस्तात जनिष्ठाः पुरुषाधमान्।
ये सहायान् रणे हित्वा स्वस्तिमन्तो गृहान् ययुः॥

[4]अस्वस्ति तेभ्यः कुर्वन्ति देवा इन्द्रपुरोगमाः।
त्यागेन यः सहायानां स्वान् प्राणांस्त्रातुमिच्छति॥

तेभ्यः तस्मै। नीटी.

[5]तं हन्युः काष्ठलोष्टैर्वा दहेयुर्वा कटाग्निना।
पशुवन्मारयेयुर्वा क्षत्रिया ये स्युरीदृशाः॥

(१) भा. १२।९८।१८; भामु. १२।९७।१८ पतत्सु च (पतन्त्युत).

(२) भा. १२।९८।१९; भामु. १२।९७।१९ यास्व (य स्व) त्यजन् (त्यजेत्); नीम. ६६ परान् भीरुः (पराङ्भीतः) यास्व (य स्व).

(३) भा. १२।९८।२०; भामु. १२।९७।२०; नीम. ६६ जनि (भरि).

(४) भा. १२।९८।२१; भामु. १२।९७।२१; नीम. ६६ तेभ्यः (तस्मै) स्वान् प्रा (स्वप्रा).

(५) भा. १२।९८।२२; भामु. १२।९७।२२ लोष्टै (लोष्ठै); नीम. ६६ तं हन्युः (संहन्युः) स्युरी (स्त्वनी).

(१) तस्य दण्डमाह– तं हन्युरिति। तृणमये कटे बद्ध्वा दहनं कटाग्निना दाहः। नीटी.

(२) अनीदृशः अभीरवः। शूरा इत्यर्थः। नीम. ६६

[1]अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत्।
विसृजञ्श्लेष्मपित्तानि कृपणं परिदेवयन्॥

[2]अविक्षतेन देहेन प्रलयं योऽधिगच्छति।
क्षत्रियो नास्य तत् कर्म प्रशंसन्ति पुराविदः॥

[3]न गृहे मरणं तात क्षत्रियाणां प्रशस्यते।
शौटीराणामशौटीरमधर्म्यं कृपणं च तत्॥

शौटीराणां शूरत्वाभिमानवताम्। नीटी.

[4]इदं दुःखमहो कष्टं पापीय इति निष्टनन्।
प्रतिध्वस्तमुखः पूतिरमात्यान् बहु शोचयन्॥

निष्टनन् शब्दं कुर्वन्। पूतिः दुर्गन्धिः। अमात्यान् पुत्रान्। नीटी.

[5]अरोगाणां स्पृहयते मुहुर्मृत्युमपीच्छति।
वीरो दृप्तोऽभिमानी च नेदृशं मृत्युमर्हति॥

रणेषु कदनं कृत्वा ज्ञातिभिः परिवारितः।
[6]तीक्ष्णैः शस्त्रैः सुविक्लिष्टः क्षत्रियो मृत्युमर्हति॥

(१) भा. १२।९८।२३; भामु. १२।९७।२३ पित्तानि (मूत्राणि); नीम. ६६.

(२) भा. १२।९८।२४; भामु. १२।९७।२४; नीम. ६६.

(३) भा. १२।९८।२५; भामु. १२।९७।२५ टीरमधर्म्यं (टीर्यमधर्मं); नीम. ६६ शस्य (वर्ते) मधर्म्यं कृ (मधर्मकृ) तत् (यत्).

(४) भा. १२।९८।२६; भामु. १२।९७।२६ दुःखमहो (दुःखं महत्) त्यान् बहु शो (त्याननुशो).

(५) भा. १२।९८।२७; भामु. १२।९७।२७.

(६) भा. १२।९८।२८; भामु. १२।९७।२८ स्त्रैः सुवि (स्त्रैरभि); नीम. ६६ विक्लिष्टः (निर्भिन्नः) मृत्यु (वध).

¹शूरो हि सत्यमन्युभ्यामाविष्टो युध्यते भृशम्।
कृत्यमानानि गात्राणि परैर्नैवावबुध्यते ॥

²स संख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम्।
स्वधर्मं विपुलं प्राप्य शक्रस्यैति सलोकताम् ॥

³सर्वो योधः परं त्यक्तुमाविष्टस्त्यक्तजीवितः।
प्राप्नोतीन्द्रस्य सालोक्यं शूरः पृष्ठमदर्शयन् ॥

⁴यत्र यत्र हतः शूरः शत्रुभिः परिवारितः।
अक्षयाँल्लभते लोकान् यदि दैन्यं न सेवते ॥

युद्धं स्वर्गप्रदो यज्ञः

युधिष्ठिर उवाच–

⁵के लोका युध्यमानानां शूराणामनिवर्तिनाम्।
भवन्ति निधनं प्राप्य तन्मे ब्रूहि पितामह ॥

'अक्षयाँल्लभते लोकान्' (भामु. १२।९७।३२) इत्युक्तम्, तत्प्रश्नपूर्वकं विवृणोति– के इति। नीटी.

भीष्म उवाच–

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
अम्बरीषस्य संवादमिन्द्रस्य च युधिष्ठिर ॥

⁶अम्बरीषो हि नाभागः स्वर्गं गत्वा सुदुर्लभम्।
ददर्श सुरलोकस्थं शक्रेण सचिवं सह ॥

नाभागिः नाभागपुत्रः। शक्रेण सह स्थितं सचिवम्। नीटी.

¹सर्वतेजोमयं दिव्यं विमानवरमास्थितम्।
उपर्युपरि गच्छन्तं स्वं वै सेनापतिं प्रभुम् ॥
स दृष्ट्वोपरि गच्छन्तं सेनापतिमुदारधीः।
ऋद्धिं दृष्ट्वा सुदेवस्य विस्मितः प्राह वासवम् ॥

अम्बरीष उवाच–

²सागरान्तां महीं कृत्स्नामनुशिष्य यथाविधि।
चातुर्वर्ण्ये यथाशास्त्रं प्रवृत्तो धर्मकाम्यया ॥

³ब्रह्मचर्येण घोरेण आचार्यकुलसेवया।
वेदानधीत्य धर्मेण राजशास्त्रं च केवलम् ॥

⁴अतिथीनन्नपानेन पितॄंश्च स्वधया तथा।
ऋषीन् स्वाध्यायदीक्षाभिर्देवान् यज्ञैरनुत्तमैः ॥
क्षत्रधर्मे स्थितो भूत्वा यथाशास्त्रं यथाविधि।
उदीक्षमाणः पृतनां जयामि युधि वासव ॥
देवराज सुदेवोऽयं मम सेनापतिः पुरा।
आसीद्योधः प्रशान्तात्मा सोऽयं कस्मादतीव माम् ॥

⁵नानेन क्रतुभिर्मुख्यैरिष्टं नैव द्विजातयः।
तर्पिता विधिवच्छक्र सोऽयं कस्मादतीव माम् ॥

इन्द्र उवाच–

⁶एतस्य विततस्तात सुदेवस्य बभूव ह।
सङ्ग्रामयज्ञः सुमहान् यश्चान्यो युध्यते नरः ॥

---

(१) भा. १२।९८।२९ ; भामु. १२।९७।२९ सत्य (काम) कृत्य (हन्य) ; नीम. ६६ सत्य (सत्त्व) विष्टो (विद्धो).

(२) भा. १२।९८।३० ; भामु. १२।९७।३० ; नीम. ६६ स्यैति (स्येति).

(३) भा. १२।९८।३१ ; भामु. १२।९७।३१ पूर्वार्धे (सर्वोपायैरणमुखमातिष्ठंस्त्यक्तजीवितः।).

(४) भामु. १२।९७।३२ ; नीम. ६६ यत्र यत्र (यत्र तत्र) सेव (भाष).

(५) भा. १२।९९।१–२ ; भामु. १२।९८।१–२.

(६) भा. १२।९९।३ ; भामु. १२।९८।३ भागः (भागिः).

(१) भा. १२।९९।४–५ ; भामु १२।९८।४–५.

(२) भा. १२।९९।६ (अम्बरीष उवाच ०) ; भामु. १२।९८।६ शिष्य (शास्य).

(३) भा. १२।९९।७ ; भामु. १२।९८।७ द्वितीयचरणे (गुर्वाचारेण सेवया).

(४) भा. १२।९९।८–१० ; भामु. १२।९८।८–१०.

(५) भा. १२।९९।११ ; भामु. १२।९८।११ नानेन (अनेन) ख्यैरिष्टं नैव (ख्यैर्नेष्टं नापि).

(६) भा. १२।९९।१२–१३ ; भामु. १२।९९।१२–१३.

यश्चान्यः अक्षत्रियोऽपि युध्यते नरः तस्याप्ययं च यज्ञोऽस्ति। 'यश्चान्यो विद्यते न वः' इति पाठे यः यस्मादन्यो यज्ञः वः युष्माकं क्षत्रियाणां न विद्यते इत्यर्थः। नीटी.

संनद्धो दीक्षितः सर्वो योधः प्राप्य चमूमुखम्।
युद्धयज्ञाधिकारस्थो भवतीति विनिश्चयः॥

अम्बरीष उवाच–

[1]कानि यज्ञे हवींष्यत्र किमाज्यं का च दक्षिणा।
ऋत्विजश्चात्र के प्रोक्तास्तन्मे ब्रूहि शतक्रतो॥

इन्द्र उवाच–

[2]ऋत्विजः कुञ्जरास्तत्र वाजिनोऽध्वर्यवस्तथा।
हवींषि परमांसानि रुधिरं त्वाज्यमेव च॥

[3]सृगालगृध्रकाकोलाः सदस्यास्तत्र सत्रिणः।
आज्यशेषं पिबन्त्येते हविः प्राश्नन्ति चाध्वरे॥

[4]प्रासतोमरसंघाताः खड्गशक्तिपरश्वधाः।
ज्वलन्तो निशिताः पीताः स्रुचस्तस्याथ सत्रिणः॥

निशिताः शाणघृष्टाः। पीताः क्षारपानीयेन संभाविताः। नीटी.

[5]चापवेगायतस्तीक्ष्णः परकायावदारणः।
ऋजुः सुनिशितः पीतः सायकोऽस्य स्रुवो महान्॥

[6]द्वीपिचर्मावनद्धश्च नागदन्तकृतत्सरुः।
हस्तिहस्तगतः खड्गः स्फ्यो भवेत्तस्य संयुगे॥

(१) भा. १२।९९।१४ ; भामु. १२।९८।१४ ष्यत्र (ष्यस्मिन्).

(२) भा. १२।९९।१५ ; भामु. १२।९८।१५ मेव च (मुच्यते).

(३) भा. १२।९९।१६ ; भामु. १२।९८।१६ सृगा (शृगा) सत्रिणः (पत्रिणः).

(४) भा. १२।९९।१७ ; भामु. १२।९८।१७.

(५) भा. १२।९९।१८ ; भामु. १२।९८।१८ दारणः (भेदनः) कोऽस्य (कश्च).

(६) भा. १२।९९।१९ ; भामु. १२।९८।१९ गतः (धरः) स्फ्यो (स्फिग्).

[1]ज्वलितैर्निशितैः पीतैः प्रासशक्तिपरश्वधैः।
शैक्यायसमयैस्तीक्ष्णैरभिघातो भवेद्वसु॥

शैक्यायसमयैः सर्वलोहमयैः। वसु यत्किंचित् यज्ञियं द्रव्यम्। नीटी.

[2]संख्यासमयविस्तीर्णमभिजातोद्भवं बहु॥

[3]आवेगाद्यत्तु रुधिरं सङ्ग्रामे स्यन्दते भुवि।
साऽस्य पूर्णाहुतिर्होत्रे समृद्धा सर्वकामधुक्॥

[4]छिन्धि भिन्धीति यस्यैतच्छ्रूयते वाहिनीमुखे।
सामानि सामगास्तस्य गायन्ति यमसादने॥

[5]हविर्धानं तु तस्याऽऽहुः परेषां वाहिनीमुखम्।
कुञ्जराणां हयानां च वर्मिणां च समुच्चयः।
अग्निः श्येनचितो नाम तस्य यज्ञे विधीयते॥

हविर्धानं हविषः स्थापनस्थलम्। नीटी.

[6]उत्तिष्ठति कबन्धोऽत्र सहस्रे निहते तु यः।
स यूपस्तस्य शूरस्य खादिरोऽष्टाश्रिरुच्यते॥

[7]इडोपहूतं क्रोशन्ति कुञ्जरा अङ्कुशेरिताः।
व्याघुष्टतलनादेन वषट्कारेण पार्थिव।
उद्गाता तत्र सङ्ग्रामे त्रिसामा दुन्दुभिः स्मृतः॥

(१) भा. १२।९९।२० ; भामु. १२।९८।२० पीतैः प्रासशक्ति (प्रासशक्त्यृष्टिस).

(२) भामु. १२।९८।२१.

(३) भा. १२।९९।२१ ; भामु. १२।९८।२१–२२ द्यत्तु (द्यच्च) स्यन्दते (स्रवते) होत्रे (होमे).

(४) भा. १२।९९।२२ ; भामु. १२।९८।२२–२३ यस्यैतच्छ्रू (यः शब्दः श्रू).

(५) भा. १२।९९।२३ ; भामु. १२।९८।२३–२४ तस्य (स च).

(६) भा. १२।९९।२४ ; भामु. १२।९८।२५ ष्ठति (ष्ठते) ष्टाश्रि (ष्टास्रि).

(७) भा. १२।९९।२५ ; भामु. १२।९८।२६–२७ हूतं (हूताः) ञ्जरा अ (ञ्जरास्त्व) भिः स्मृतः (भिर्नृप).

[1]ब्रह्मस्वे ह्रियमाणे यः प्रियां युद्धे तनुं त्यजेत् ।
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः ॥

[2]भर्तुरर्थे तु यः शूरो विक्रमेद्वाहिनीमुखे ।
भयान्न च निवर्तेत तस्य लोका यथा मम ॥

[3]नीलचन्द्राकृतैः खड्गैर्बाहुभिः परिघोपमैः ।
यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम ॥

[4]यस्तु नावेक्षते कंचित् सहायं विजये स्थितः ।
विगाह्य वाहिनीमध्यं तस्य लोका यथा मम ॥

[5]यस्य तोमरसंघाटा भेरीमण्डूककच्छपा ।
वीरास्थिशर्करा दुर्गा मांसशोणितकर्दमा ॥

शोणितसंघाता शोणितौघमयी । नीटी.

[6]असिचर्मप्लवा सिन्धुः केशशैवलशाद्वला ।
अश्वनागरथैश्चैव संभिन्नैः कृतसंक्रमा ॥

[7]पताकाध्वजवानीरा हतवाहनवाहिनी ।
शोणितोदा सुसंपूर्णा दुस्तरा पारगैर्नरैः ॥

(१) भा. १२।९९।२६ ; भामु. १२।९८।२७–२८ यः प्रियां (तु त्यक्त्वा) तनुं त्यजेत् (प्रियां तनुम्) मुच्छ्रित्य (मुत्सृज्य).

(२) भा. १२।९९।२७ ; भामु. १२।९८।२८–२९ तु (च) भयान्न च (न भयाद्धि) ; नीम. ६३ रर्थे (रर्थं) च नि (विनि).

(३) भा. १२।९९।२८ ; भामु. १२।९८।२९–३० चन्द्राकृतैः (चर्मावृतैः).

(४) भा. १२।९९।२९ ; भामु. १२।९८।३०–३१ नावे (नापे); नीम. ६३ यस्तु (यश्च) पू.

(५) भा. १२।९९।३० ; भामु. १२।९८।३१–३२ तोमरसंघाटा (शोणितसंघाता).

(६) भा. १२।९९।३१ ; भामु. १२।९८।३२–३३ सिन्धुः (घोरा) भिन्नैः (च्छिन्नैः).

(७) भा. १२।९९।३२ ; भामु. १२।९८।३३–३४ वाहन (वारण).

[1]हतनागमहानक्रा परलोकवहाशिवा ।
ऋष्टिखड्गध्वजानूका गृध्रकङ्कवडप्लवा ॥

[2]पुरुषादानुचरिता भीरूणां कश्मलावहा ।
नदी योधमहायज्ञे तदस्यावभृतं स्मृतम् ॥

[3]वेदी यस्य त्वमित्राणां शिरोभिरवकीर्यते ।
अश्वस्कन्धैर्गजस्कन्धैस्तस्य लोका यथा मम ॥

[4]पत्नीशाला कृता यस्य परेषां वाहिनीमुखम् ।
हविर्धानं स्ववाहिन्यस्तदस्याऽऽहुर्मनीषिणः ॥

[5]सदश्चान्तरयोधाग्निराग्नीध्रश्चोत्तरां दिशम् ।
शत्रुसेनाकलत्रस्य सर्वेलोकानदूरतः ॥

[6]यदा तूभयतो व्यूहो भवत्याकाशमग्रतः ।
साऽस्य वेदी तथा यज्ञे नित्यं वेदास्त्रयोऽग्नयः ॥

[7]यस्तु योधः परावृत्तः संत्रस्तो हन्यते परैः ।
अप्रतिष्ठं स नरकं याति नास्त्यत्र संशयः ॥

[8]यस्य शोणितवेगेन नदी स्यात् समभिप्लुता ।
केशमांसास्थिसंकीर्णा स गच्छेत् परमां गतिम् ॥

(१) भा. १२।९९।३३ ; भामु. १२।९८।३४-३५ ध्वजानूका (महानौका) वड (बल).

(२) भा. १२।९९।३४ ; भामु. १२।९८।३५–३६ महायज्ञे (स सङ्ग्रामे).

(३) भा. १२।९९।३५ ; भामु. १२।९८।३६–३७ वेदी (वेदिर्) भिरव (भ्यश्च प्र).

(४) भा. १२।९९।३६ ; भामु. १२।९८।३७–३८ न्यस्त (न्यास्त).

(५) भा. १२।९९।३७ ; भामु. १२।९८।३८–३९ श्चान्तरयोधाग्निरा (स्या दक्षिणा योधा आ).

(६) भा. १२।९९।३८ ; भामु. १२।९८।३९–४० व्यूहो (व्यूहे) वेदी तथा यज्ञे (वेदिस्तदा यज्ञैर्).

(७) भा. १२।९९।३९ ; भामु. १२।९८।४०–४१ तिष्ठं (तिष्ठः).

(८) भा. १२।९९।४० ; भामु. १२।९८।४१–४२ नदी स्यात्समभि (वेदिः स्यात्संपरि) कीर्णा (पूर्णा).

[1]यस्तु सेनापतिं हत्वा तद्यानमधिरोहति।
स विष्णुविक्रमक्रामी बृहस्पतिसमः क्रतुः॥

[2]नायकं वा प्रमाणं वा यो वा स्यात्तत्र पूजितः।
जीवग्राहं निगृह्णाति तस्य लोका यथा मम॥

[3]आहवे निहतं शूरं न शोचेत कदाचन।
अशोच्यो हि हतः शूरः स्वर्गलोके महीयते॥

[4]न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकम्।
हतस्य कर्तुमिच्छन्ति तस्य लोकाञ्शृणुष्व मे॥

[5]वराप्सरःसहस्राणि शूरमायोधने हतम्।
त्वरमाणा हि धावन्ति मम भर्ता भवेदिति॥

[6]एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः।
चत्वारश्चाऽऽश्रमास्तस्य यो युद्धे न पलायते॥

[7]वृद्धं बलं न हन्तव्यं नैव स्त्री न च वै द्विजः।
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत्॥

(१) भा. १२।९९।४१ ; भामु. १२।९८।४२–४३ क्रतुः (प्रभुः).

(२) भा. १२।९९।४२ ; भामु. १२।९८।४३–४४ वा प्रमाणं (तत्कुमारं) निगृ (प्रगृ) ; नीम. ६३ निगृ (प्रगृ) उत्त.

(३) भा. १२।९९।४३ ; भामु. १२।९८।४४–४५ निहतं (तु हतं) कदा (कथं) ; नीम. ६३ शूरं न (शूलेनं).

(४) भा. १२।९९।४४ ; भामु. १२।९८।४५–४६ ; नीम. ६३.

(५) भा. १२।९९।४५ ; भामु. १२।९८।४६–४७ हि धा (ऽभिधा) ; नीम. ६३ णा हि धा (णाः प्रधा).

(६) भा. १२।९९।४६ ; भामु. १२।९८।४७–४८ युद्धे न पलायते (युद्धमनुपालयेत्) ; नीम. ६३.

(७) भा. १२।९९।४७ ; भामु. १२।९८।४८–४९ पूर्वार्धे (वृद्धबालौ न हन्तव्यौ न च स्त्री नैव पृष्ठतः।) ; नीम. ६५ पूर्वार्धे (वृद्धो बालो न हन्तव्यो नैव स्त्री नैव च द्विजः।).

[1]अहं वृत्रं बलं पाकं शतमायं विरोचनम्।
दुरावार्यं च नमुचिं नैकमायं च शम्बरम्॥

[2]विप्रचित्तिं च दैतेयं दनोः पुत्रांश्च सर्वशः।
प्रह्लादं च निहत्याऽऽजौ ततो देवाधिपोऽभवम्॥

भीष्म उवाच–

इत्येतच्छक्रवचनं निशम्य प्रतिगृह्य च।
योधानामात्मनः सिद्धिमम्बरीषोऽभिपन्नवान्॥

भीष्म उवाच–

[3]अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
प्रतर्दनो मैथिलश्च सङ्ग्रामं यत्र चक्रतुः॥

अत्र शूरप्रोत्साहने विषये। मैथिलः जनकः। नीटी.

यज्ञोपवीती सङ्ग्रामे जनको मैथिलो यथा।
योधानुद्धर्षयामास तन्निबोध युधिष्ठिर॥

यज्ञोपवीतीत्यनेन सङ्ग्रामस्य यज्ञत्वात्तत्र प्रायत्येन भाव्यमिति दर्शितम्। नीटी.

जनको मैथिलो राजा महात्मा सर्वतत्त्ववित्।
योधान् स्वान् दर्शयामास स्वर्गं नरकमेव च॥

दर्शयामास योगबलेन। नीटी.

[4]अभीतानामिमे लोका भास्वन्तो हन्त पश्यत।
पूर्णा गन्धर्वकन्याभिः सर्वकामदुहोऽक्षयाः॥

[5]इमे पलायमानानां नरकाः प्रत्युपस्थिताः।
अकीर्तिः शाश्वती चैव पतितव्यमनन्तरम्॥

(१) भा. १२।९९।४८ ; भामु. १२।९८।४९–५० अहं (जम्भं) दुरावार्यं च (दुर्वार्यं चैव).

(२) भा. १२।९९।४९–५० ; भामु. १२।९८।५०–५१.

(३) भा. १२।१००।१–३ ; भामु. १२।९९।१–३.

(४) भा. १२।१००।४ ; भामु. १२।९९।४ ताना (रूणा).

(५) भा. १२।१००।५ ; भामु. १२।९९।५ पति (वति).

[1]तान् दृष्ट्वाऽरीन् विजयतो भूत्वा संत्याग-
बुद्धयः ।
नरकस्याप्रतिष्ठस्य मा भूत वशवर्तिनः ॥

[2]त्यागमूलं हि शूराणां स्वर्गद्वारमनुत्तमम् ।
इत्युक्तास्ते नृपतिना योधाः परपुरंजय ॥

[3]व्यजयन्त रणे शत्रून् हर्षयन्तो जनेश्वरम् ।
तस्मादात्मवता नित्यं स्थातव्यं रणमूर्धनि ॥

[4]गजानां रथिनो मध्ये रथानामनु सादिनः ।
सादिनामन्तरा स्थाप्यं पादातमिह दंशितम् ॥

गजानां मध्ये रथिनः, रथिनां मध्ये सादिनः, सादिनां मध्ये पादातम् । नीटी.

[5]य एवं व्यूहते राजा स नित्यं जयते द्विषः ।
तस्मादेवं विधातव्यं नित्यमेव युधिष्ठिर ॥

[6]सर्वे सुकृतमिच्छन्तः सुयुद्धेनातिमन्यवः ।
क्षोभयेयुरनीकानि सागरं मकरा इव ॥

[7]हर्षयेयुर्विषण्णांश्च व्यवस्थाप्य परस्परम् ।
जितां च भूमिं रक्षेत भग्नान्नात्यनुसारयेत् ॥

नात्यनुसारयेत् नातिद्रावयेत् परावृत्तिभयात् ।
नीटी.

(१) भा. १२।१००।६ ; भाम. १२।९९।६ जयतो (जयत).

(२) भा. १२।१००।७ ; भामु. १२।९९।७.

(३) भा. १२।१००।८ ; भामु. १२।९९।८ व्यज (अज) जने (नरे).

(४) भा. १२।१००।९ ; भामु. १२।९९।९ मन्तरा (मन्तरे) मिह (मपि).

(५) भा. १२।१००।१० ; भामु. १२।९९।१० जयते (जयति).

(६) भा. १२।१००।११ ; भामु. १२।९९।११ सुकृतमिच्छन्तः (स्वर्गतिमिच्छन्ति) इव (यथा).

(७) भा. १२।१००।१२ ; भामु. १२।९९।१२.

[1]पुनरावर्तमानानां निराशानां च जीविते ।
न वेगः सुसहो राजंस्तस्मान्नात्यनुसारयेत् ॥

तदेवाऽऽह– पुनरिति । नीटी.

लोकाधारः लोकालम्बनः शूरः संमानार्हः

[2]न हि प्रहर्तुमिच्छन्ति शूराः प्राद्रवतां भयात् ।
तस्मात् पलायमानानां कुर्यान्नात्यनुसारणम् ॥

[3]चराणामचरा ह्यन्नमदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतामन्नं शूरस्य कातराः ॥

[4]समानपृष्ठोदरपाणिपादाः
पश्चाच्छूरं भीरवोऽनुव्रजन्ति ।
अतो भयार्ताः प्रणिपत्य भूयः
कृत्वाऽञ्जलीनुपतिष्ठन्ति शूरान् ॥

[5]शूरबाहुषु लोकोऽयं लम्बते पुत्रवत् सदा ।
तस्मात् सर्वास्ववस्थासु शूरः संमानमर्हति ॥

[6]न हि शौर्यात्परं किंचित् त्रिषु लोकेषु विद्यते ।
शूरः सर्वं पालयति सर्वं शूरे प्रतिष्ठितम् ॥

(१) भा. १२।१००।१३ ; भामु. १२।९९।१३ न वेगः सु (वेगः सुदुः) ; मेधा. ७।२०० जीविते (जीविनाम्) उत्तरार्धे (न शक्यद[ ? म ]ग्रतः स्थातुं शक्रेणापि धनंजय ॥) व्यासः.

(२) भा. १२।१००।१४ ; भामु. १२।९९।१४ प्राद्रवतां भयात् (प्रद्रवतो भृशम्).

(३) भा. १२।१००।१५ ; भामु. १२।९९।१५ तृतीयचरणे (आपः पिपासतामन्न) ; नीम. ६४ ह्यन्न (अन्न).

(४) भा. १२।१००।१६ ; भामु. १२।९९।१६ पश्चाच्छूरं (पराभवं) ऽनु (वै) ; नीम. ६४.

(५) भा. १२।१००।१७ ; भामु. १२।९९।१७.

(६) भा. १२।१००।१८ ; भामु. १२।९९।१८ ; नीम. ६४.

सत्योपपत्तिसाध्वाचारोपायाः धर्मप्रमाणानि, द्विविधा प्रज्ञा,
सङ्ग्रामे संघातरक्षणं कर्तव्यम्, युद्धं धर्मः

युधिष्ठिर उवाच–

*[1]यथा जयार्थिनः सेनां नयन्ति भरतर्षभ ।
ईषद्धर्मं प्रपीड्यापि तन्मे ब्रूहि पितामह ॥

भीष्म उवाच–

सत्येन हि स्थिता धर्मा उपपत्त्या तथाऽपरे ।
साध्वाचारतया केचित्तथैवौपयिका अपि ।
उपायधर्मान् वक्ष्यामि सिद्धार्थानर्थधर्मयोः ॥

निर्मर्यादा दस्यवस्तु भवन्ति परिपन्थिनः ।
तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम् ।
कार्याणां संप्रसिद्ध्यर्थं तानुपायान्निबोध मे ॥

उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत ।
जानन् वक्रां न सेवेत प्रतिबाधेत चाऽऽगताम् ॥

अमित्रा एव राजानं भेदेनोपचरन्त्युत ।
तां राजा निकृतिं जानन्यथाऽमित्रान् प्रबाधते ॥

यथामुख्यं संनिपात्य वक्तव्याः स्म शपामहे ।
यथा जयार्थं सङ्ग्रामे न जह्याम परस्परम् ॥

इहैव ते निवर्तन्तां ये नः केचन भीरवः ।
न घातयेयुः प्रदरं कुर्वाणास्तुमुले सति ॥

न संनिपाते प्रदरं वधं वा कुर्युरीदृशाः ।
आत्मानं च स्वपक्षं च पलायन् हन्ति संयुगे ।
द्रव्यनाशो वधोऽकीर्तिरयशश्च पलायने ॥

अमनोज्ञासुखा वाचः पुरुषस्य पलायतः ।
प्रतिस्पन्दौष्ठदन्तस्य न्यस्तसर्वायुधस्य च ॥

हित्वा पलायमानस्य सहायान् प्राणसंशये ।
अमित्रैरनुबद्धस्य द्विषतामस्तु नस्तथा ॥

मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः ।
राशिवर्धनमात्रास्ते नैव ते प्रेत्य नो इह ॥

अमित्रा हृष्टमनसः प्रत्युद्यान्ति पलायिनम् ।
जयिनं सुहृदस्तात वन्दनैर्मङ्गलेन च ॥

यस्य स्म व्यसने राजन्ननुमोदन्ति शात्रवः ।
तदसह्यतरं दुःखमहं मन्ये वधादपि ॥

श्रियं जानीत धर्मस्य मूलं सर्वसुखस्य च ।
सा भीरूणां परान् याति शूरस्तामधिगच्छति ॥

ते वयं स्वर्गमिच्छन्तः सङ्ग्रामे त्यक्तजीविताः ।
जयन्तो वध्यमाना वा प्राप्तुमर्हाम सद्गतिम् ॥

एवं संशप्तशपथाः समभित्यक्तजीविताः ।
अमित्रवाहिनीं वीराः संप्रगाहन्त्यभीरवः ॥

[1]आहवेषु च ये शूरास्त्यक्त्वा मरणजं भयम् ।
धर्मेण जयमिच्छन्तो दुर्गाण्यतितरन्ति ते ॥

[2]हतो वा दिवमारोहेद्विजयी क्षितिमावसेत् ।
युद्धे तु संत्यजन् प्राणाञ्शक्रस्यैति सलोकताम् ॥

[3]एष एव परो धर्मो राजर्षीणां युधिष्ठिर ।
समरे वा भवेन्मृत्युर्वने वा विधिपूर्वकम् ॥

[4]अवश्यमेव सङ्ग्रामे क्षत्रियेण विशेषतः ।
कर्तव्यं निधनं लोके शस्त्रेण क्षत्रबन्धुना ॥

युद्धयुक्तिः

[5]गजो गजेन यातव्यस्तुरगेण तुरंगमः ।
रथिना च रथी योज्यः पत्तिना पत्तिरेव च ।
यथायोग्यं तु संयोज्य घ्नन् धर्मेण न हीयते ॥

---

* एतदादीनाम् 'संप्रगाहन्त्यभीरवः' इत्यन्तानां षोडशानां श्लोकानां व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'यात्रा– युद्धसामान्यविचारः' इत्यस्मिन् प्रकरणे ( पृ. २६००–२६०३ ) द्रष्टव्यः ।

(१) भा. १२।१०१।१–५, २९–३९.

(१) भा. १२।१११।८ ; भामु. १२।११०।१० मिच्छन्तो (मिच्छन्ति).

(२) भा. १२।१२९।१२ ; भामु. १२।१३१।१२ द्विजयी (हत्वा वा) तु ( हि ).

(३) भा. १५।८।१२ ; भामु. १५।४।१२.

(४) भा. १५।१६।६ ; भामु. १५।१०।३२–३३ लोके शस्त्रेण ( काले मर्तव्यं ).

(५) नीम. ६५.

## वाल्मीकिरामायणम्

युद्धे राज्ञा आत्मा रक्षणीयः

[1]तथाऽपि तु नयज्ञेन जयमाकाङ्क्षता रणे ।
आत्मा रक्ष्यः प्रयत्नेन युद्धसिद्धिर्हि चञ्चला ॥

युद्धे अवध्याः

[2]अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ।
सङ्ग्रामे च प्रपन्नानां तवास्मीति च वादिनाम् ॥

[3]नायुयुत्सुर्निहन्तव्यो न भीतो न कृताञ्जलिः ।
आरूढोऽपि न योऽश्वं तु यश्च भूमौ निपातितः ॥

युद्धमरणं धर्मः

[4]न प्रमादो ह्ययं राज्ञा हृदि कार्यः कदाचन ।
शत्रोर्हि समरे हिंसा किमिवात्र विधीयते ॥

रथी रणे रक्षणीयः, रथिनः रथसंबन्धीनि कर्तव्यानि

[5]उपदेशो हि सूतानामापत्सु रथिनां वर ।
रक्षितव्यो रथी यस्मात्तस्मादिदमनुष्ठितम् ॥

[6]नास्मिन्नर्थे महाराज त्वं मां प्रियहिते रतम् ।
किंचिल्लघुमिवासत्त्वं दोषतो गन्तुमर्हसि ॥

[1]श्रूयतामभिधास्यामि यन्निमित्तं मया रथः ।
नदीवेग इवाम्भोधेः संयुगाद् विनिवर्तितः ॥

[2]श्रमं तेऽद्यावगच्छामि महता रणकर्मणा ।
न हि ते वीर सौमुख्यं प्रहर्षमुपलक्ष्यते ॥

[3]रथोऽयं शरभिन्नाङ्गः खिन्नाश्च रथवाजिनः ।
दीना घर्मपरिश्रान्ताः कुवर्षेणेव कर्षकाः ॥

[4]देशकालौ च विज्ञेयौ लक्षणैश्चेङ्गितानि च ।
दैन्यं हर्षश्च तेजश्च रथिनश्च बलाबलम् ॥

[5]निमित्तानि च भूयिष्ठं प्रतिकूलानि लक्षये ।
नूनं तेषु निमित्तेषु लक्षयाम्यप्रदक्षिणम् ॥

[6]स्थूलनिम्नानि भूमेश्च समानि विषमाणि च ।
युद्धकालश्च विज्ञेयः परस्यान्तरदर्शिना ॥

[7]अपयानाभियाने च स्थानप्रत्युपसर्पणे ।
सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥

---

(१) वारा. ५।४२।१७ द्वितीयचरणे (विजयं परिरक्षता) आत्मा रक्ष्यः (भवितव्यं) युद्ध (युद्धे) ; वाराकु. ५।४६।१५.

(२) वारा. ५।९३।१५ उत्तरार्धे ; वाराकु. ६।१८।३३ (सकृदेव प्रपन्नाय तवाऽस्मीति च याचते ।) श्लोकार्धौ व्यत्यासपठितौ.

(३) वारा. ५।९३।१६.

(४) वारा. ६।४३।१० (तत्र क्लृप्तमिदं राज्ञा हृदि कार्यं मतं च नः । शत्रौ हि साहसं यस्मात् किमिवात्रापनीयताम् ॥) ; वाराकु. ६।६४।१०.

(५) वारा. ६।८६।१३.

(६) वारा. ६।८६।१४ ; वाराकु. ६।१०६।१३ तृतीयचरणे (कश्चिल्लघुरिवानार्यो)...

(१) वारा. ६।८६।१५ ; वाराकु. ६।१०६।१४ तामभि (तां त्वभि) म्भोधेः संयुगाद् (ऽऽभोगे संयुगे).

(२) वारा. ६।८६।१६ ; वाराकु. ६।१०६।१५ तेऽद्या (तवा) चतुर्थचरणे (प्रहर्षं वोपधारये).

(३) वारा. ६।८६।१७ ; वाराकु. ६।१०६।१६ (रथोद्वहनखिन्नाश्च त इमे रथवाजिनः । दीना घर्मपरिश्रान्ता गावो वर्षहता इव ॥).

(४) वारा. ६।८६।१८ ; वाराकु. ६।१०६।१८ णैश्चे (णानी) हर्षश्च तेजश्च (खेदश्च हर्षश्च).

(५) वारा. ६।८६।१९ ; वाराकु. ६।१०६।१७ द्वितीयचरणे (यानि प्रादुर्भवन्ति नः) तृतीयचरणे (तेषु तेष्वभिपन्नेषु).

(६) वारा. ६।८६।२० ; वाराकु. ६।१०६।१९ (स्थूल (स्थल) दर्शिना (दर्शनम्).

(७) वारा. ६।८६।२१ ; वाराकु. ६।१०६।२० पूर्वार्धे (उपयानापयाने च स्थानं प्रत्यपसर्पणम् ।).

[1]तव विश्रामहेतोश्च तथैव रथवाजिनाम् ।
रौद्रं विजानता चैव क्षणात् कृतमिदं मया ॥
[2]न मयाऽऽत्मेच्छया देव रथोऽयमपवाहितः ।
भर्तृस्नेहपरीतेन मयैतत् त्वत्कृते कृतम् ॥

युद्धमरणं धर्मः

[3]नैवं विनष्टं शोचन्ति क्षत्रधर्मे व्यवस्थिताः ।
बुद्धिमन्तोऽविघाताय निपतन्ति रणाजिरे ॥
नैकान्तं विजयो युद्धे भूतपूर्वः कदाचन ।
परैर्वा हन्यते वीरः परान्वा हन्ति संयुगे ॥
इयं हि पूर्वनिर्दिष्टा गतिः क्षत्रियशाश्वती ।
क्षत्रियो हि हतः संख्ये न शोच्य इति
निश्चयः ॥

## कौटिलीयमर्थशास्त्रम्

शूरस्य युद्धे मरणं यज्ञः

*[4]सङ्ग्रामस्तु निर्दिष्टदेशकालो धर्मिष्ठः ॥

वेदेष्वप्यनुश्रूयते समाप्तदक्षिणानां यज्ञाना-मवभृथेषु– 'सा ते गतिर्या शूराणाम्' इति। अपीह श्लोकौ भवतः–

यान् यज्ञसंघैस्तपसा च विप्राः
स्वर्गैषिणः पात्रचयैश्च यान्ति ।
क्षणेन तानप्यतियान्ति शूराः
प्राणान् सुयुद्धेषु परित्यजन्तः ॥

नवं शरावं सलिलस्य पूर्णं
सुसंस्कृतं दर्भकृतोत्तरीयम् ।
तत्तस्य मा भून्नरकं च गच्छेद्
यो भर्तृपिण्डस्य कृते न युध्येत् ॥

सूतमागधाः शूराणां स्वर्गमस्वर्गं भीरूणां जातिसंघकुलकर्मवृत्तस्तवं च योधानां वर्णयेयुः ॥

## मनुः

शूरस्य युद्धे मरणं यज्ञः

[1]उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च ।
सद्यः संतिष्ठते यज्ञः .... ॥

(१) येन शस्यते हन्यते तच्छस्त्रम् । अतः पाषाण-लगुडादिनाऽपि हतस्य यज्ञसंस्था निष्पद्यते, न आयुधैरेव खड्गादिभिः । आहूयन्ते यत्र इतरेतरं स्पर्धमाना युद्धाय स आहवः सङ्ग्रामः । क्षत्रधर्मः अपराङ्मुखत्वं प्रजार्थं प्रभुप्रयुक्तं च । सद्यः संतिष्ठते समाप्तिमेति यज्ञः ज्योतिष्टोमादिः । तत्पुण्येन युज्यत इति यावत् । अत्र केचित् 'क्षत्रधर्महतस्य' इत्यनेन 'सद्यः' इत्यभिसं-बध्नन्ति । ततश्च यः सङ्ग्रामभूमौ मृतः तस्यैवायं विधिः, न तु योऽन्येद्युः ततोऽन्यत्र गतः । तदेतद्विचार्यम् ।
* मेधा.

(२) सङ्ग्रामे उद्यतैः खड्गादिभिः अपराङ्मुखत्वादि-क्षत्रियधर्मयुक्तस्य हतस्य तत्क्षणादेव यज्ञसमाप्तिः, तत्कालमेव यज्ञफलसंबन्धात् । गोरा.

(३) उद्यतैः शस्त्रैरिति कूटशस्त्रादिघातव्यवच्छेदः । आहवे नृपतिकर्तृके युद्धे क्षत्रधर्मेण अपराङ्मुखत्वादिना हतस्य यज्ञः पितृयज्ञः अस्थिसंचयनदशाहपिण्डादिसहितः सद्यः संतिष्ठते समापनीयः । † मवि.

(४) उद्यतैः शस्त्रैः खड्गादिभिः, न तु लगुड-पाषाणादिभिः । $ ममु.

---

* अस्य ग्रन्थस्य व्याख्यानम् 'यात्रा– युद्धसामान्य-विचारः' इत्यस्मिन्प्रकरणे (पृ.२६१२–२६१३) द्रष्टव्यम् ।

(१) वारा. ६।८६।२२ ; वाराकु. ६।१०६।२१ श्राम (श्रम) तथैव (तथैषां) विजानता चैव क्षणात् (वर्जयता खेदं क्षमं).

(२) वारा. ६।८६।२३ ; वाराकु. ६।१०६।२१–२२ ऽऽत्मेच्छया देव (स्वेच्छया वीर) चतुर्थचरणे (मयेदं यत्कृतं विभो).

(३) वारा. ६।९० इतिसर्गानन्तरं टिप्पण्यां समुद्धृते सर्गे इमे श्लोकाः .

(४) कौ. १०।३.

* मच. मेधागतम् ।
† भाच. मविगतम् ।
$ शेषं गोरागतम् ।
(१) मस्मृ. ५।९८.

(५) युद्धस्य यज्ञत्वसंस्तवः परधर्मत्वप्रतिपादनार्थः ।
नन्द.

युद्धे अपराङ्मुखत्वं क्षत्रियधर्मः, युद्धफलं स्वर्गः

*'समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः ।
न निवर्तेत सङ्ग्रामात्क्षात्रं धर्ममनुस्मरन् ॥
सङ्ग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम् ।
शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम् ॥

'आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥

(१) आहूयन्ते युद्धार्थमितरे यत्र वीराः स आहवः सङ्ग्रामः । मिथः स्पर्धमानाः । अन्योन्यं परस्परं जिघांसन्तः हननेच्छवः । युध्यमानाः प्रहरन्तः । परं शक्त्या परया शक्त्या, यथाबलमित्यर्थः । छान्दसत्वात् 'परया' इत्यस्य स्थाने 'परम्' इति रूपम् । अपराङ्मुखाः युध्यमानाः इति संबन्धः । स्वर्गं यान्ति ।

ननु च राज्यलोभात्प्रवृत्तानां दृष्टस्य फलस्य संभवात् कुतः स्वर्गः ? उच्यते— 'न कूटैरायुधैः' (मस्मृ. ७।९०) इत्यादिना वक्ष्यमाणयुद्धनियमापेक्षः स्वर्गः । न हि तेषां नियमानामन्यत्प्रयोजनमस्ति । अथवा निश्चिते पराजये निराशस्य यत् युद्धावतरणम्, तच्च स्वर्गायैव, त्यक्तराज्यस्यापि शक्तप्रणिपातेन तदनुजीवनसंभवात् । तस्मादर्हस्तत्फलसंभवः । अस्मादेव वचनान्नाऽऽत्मत्यागनिषेधस्य विषयोऽयम् ।

महीक्षितः मण्डलेश्वराः, न पुनस्तदनुजीविनः । तेषां हि स्वाम्यर्थैव प्रवृत्तिः, न स्वार्था । अतश्च कुतस्तेषां फलसंबन्धः ? ऋत्विजामिव दक्षिणापणेन परिक्रीतानाम् । एवमेषामपि भृतिपरिक्रीतानां कुतः स्वर्गादिफलोत्पत्तिः ?

ननु च अविशेषेणैतदुक्तम्— 'उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च । सद्यः संतिष्ठते यज्ञः' (मस्मृ. ५।९८) इति । तथा 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च शूरश्चाभिमुखो हतः ॥' (पस्मृ. ३।३२, भामु. ५।३३।६१) इति । तथा भारते युद्धप्रेक्षिणामपि स्वर्गः संदर्शितः । मन्त्रलिङ्गानि च सन्ति— 'ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः । ये वा सहस्रदक्षिणास्ताँश्चिदेवापि गच्छतात् ॥' (ऋसं. १०।१५४।३) । सहस्रदक्षिणानां यजमानानां शूराणां च रणशिरसि त्यक्तप्राणानां महाफलत्वं दर्शयति— ये युध्यन्ते । न च मरणायैव क्रीयन्ते । नहि संपरिग्रहकालेऽयमुपसंवादोऽस्ति यथा होतोद्गात्रादीनां स्वप्रवचनसमाख्यानियतार्त्विज्यपदार्थानुष्ठानायैव वरणम् । तस्मात् प्रभुकार्योद्देशेन यन्मरणं तदनुक्रान्तफलायैव । न च परप्रयुक्तात्कर्मणोऽन्यस्य फलं नास्ति । अश्वमेधावभृथे हि ब्रह्मघ्नस्य स्नानादयजमानस्यैव शुद्धिः ।

अत्रोच्यते— प्रजार्थे युद्धे प्राणत्यागो धर्मायैव । यदुक्तम् 'उद्यतैराहवे' इति, तदा भृतिपरिक्रीतस्यास्वतन्त्रस्य, यस्य वा 'कुरु प्रयाणं रणे' इत्येव परिकरो बद्धस्तदपेक्षमेतत् यज्ञसंस्थावचनम् । एवंभूतश्चाभिमुखो हत इति ।

अथवा नरकाभाव एव सूर्यमण्डलभेदनं युध्यमानस्य भविष्यति । यत्र विषयान्तरेश्वरेण राज्ञा परस्य राज्ञो विषयो हन्यते, भज्यते, जनो लुप्येत्, तत्र तदर्थं युद्धे प्राणत्यागो धर्मार्थः । अन्धं तमो हि नरके, तदभावात्सति प्राकाश्ये सूर्यमण्डलभेदनवचनम् । सूर्यमण्डलं भिनत्ति उपरिष्टाल्लोकानाप्नोति, नाधः प्रपततीत्यर्थः । भृतिपरिक्रीतस्य प्रभोः सङ्ग्रामे समुपस्थिते तमेव जहतो नरकनिपतनम् । तदर्थं युध्यमानस्य भर्तृपिण्डानृण्यं गतवतो दुष्कृतेनाप्रतिबध्यमानस्य स्वैः सुकृतैर्युक्त एव स्वर्गादिलाभः । अत उक्तम्— 'सद्यः संतिष्ठते यज्ञः' इति । अव्यवधानेन यज्ञफलमविशेषश्रुतौ स्वर्गमवाप्नोतीत्यर्थः । एवं

* श्लोकद्वयस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'यात्रा- उत्थानम्' इत्यस्मिन् प्रकरणे (पृ. २४०१) द्रष्टव्यः ।

(१) मस्मृ. ७।८७-८८.

(२) मस्मृ. ७।८९ ; राक. १३१ ; रार. ४० ; राप्र. ४०५ ; नीम. ६२.

भारतेऽपि भृतिपरिक्रीतानां स्वर्गफलावाप्तिवचनमुपपद्यते। युद्धप्रेक्षिणां तु स्वर्गावाप्तिरर्थवाद एव। अथवा बहुषु जीवनोपायेषु सत्सु यच्छस्त्रेण जीवनं ततो नियमात् स्वर्गः। यत्तु न मरणाय क्रीयन्त इति, शस्त्रभृतां भृतिदाने नान्यद्युद्धात्प्रयोजनमस्ति। विशेषानुपदेशात् 'सर्वकार्योद्यतैः सर्वप्रकारं मदर्थः संपादनीयः' इति परिक्रीयन्ते, तत्र यदा युद्धमुपस्थितं भवति तदा आ शरीरपातात्प्रभोरर्थः कर्तव्यः, तथाऽऽनृण्यं भवति। अनुपस्थिते तु युद्धे यदि भृत्यस्य मरणं भवति तदा सर्वेऽनृणा एव। उद्युक्तो ह्यसौ तत्कार्ये। तादृश एवास्योपसंवादः 'युद्धकाले योद्धव्यं भवति' इति। लिङ्गदर्शनमपि तूपपद्यत एव। अश्वमेधावभृथे तु स्पष्टं वचनं 'तस्मात्समागमे तेषाम्' इति। इह तु युद्धसाध्यमिति विशेषः। * मेधा.

(२) मिथः स्पर्धमाना इति शेषः।

§ राक. १३१.

(३) मिथो जिघांसन्तः, अन्योन्यं युध्यमानाः इति अपौनरुक्त्यम्। मवि.

(४) राजानः मिथः स्पर्धमानाः युद्धेष्वन्योन्यं हन्तुमिच्छन्तः प्रकृष्टया शक्त्या संमुखीभूय युध्यमानाः स्वर्गं गच्छन्ति। यद्यपि युद्धस्य शत्रुजयधनलाभादिरूपं दृष्टमेव फलम्, न स्वर्गः, तथाऽपि युद्धाश्रितापराङ्मुखत्वनियमस्य स्वर्गः फलमिति न दोषः। ममु.

(५) अत्र महीक्षितः उपलक्षणम्। सेनान्यादीनामप्येष एव धर्मः, 'एषोऽनुपस्कृतः प्रोक्तो योधधर्मः सनातनः।' (मस्मृ. ७।९८) इत्युपसंहारात्। इदमदृष्टार्थं प्रसङ्गादुक्तम्। रार. ४१

(६) आहवेषु युद्धेषु। महीक्षितः राजानः स्वर्गं यान्तीति फलसंबन्धमात्रमत्र विधेयम्, अन्येषां स्वधर्मत्वेन प्राप्तेः। मच.

(७) अनिवर्तित्वस्य श्रेयस्करत्वे कारणमाह– आहवेष्विति। यत् यस्मात् स्वर्गं यान्ति तस्माच्छ्रेयस्करम् अनिवर्तित्वमिति। नन्द.

* गोरा. मेधागतम्।

§ राप्र राकवत्।

धर्मयुद्धे निषिद्धानि शस्त्राणि

**[१]न कूटैरायुधैर्हन्याद्युध्यमानो रणे रिपून्।**
**न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः॥**

(१) तानिदानीमदृष्टार्थान्नियमान् दर्शयति– नेति। कूटानि यानि बहिःकाष्ठमयानि अन्तर्निशितशस्त्राणि। कर्णिनः शराः ये शल्यस्य मूले मध्ये वा कर्णाकारैः फलकैः क्रियन्ते। ते हि प्रविष्टा दुरुद्धरा भवन्ति, उद्ध्रियमाणाः प्रहारैरभिन्नमपि शरीरैकदेशं भिन्दन्ति। दिग्धाः विषोपलिप्ताः। अग्निना ज्वलितम् आदीपितं (तेजनं) तेजोमयफलकं येषाम्। एतैर्न योद्धव्यम्। * मेधा.

(२) अग्निज्वलिततेजनैः अग्निधमनोष्णीकृतफलकैः। ‡ मवि.

(३) तत्र अन्याययुद्धं स्वर्गासाधनमिति निषेधति– न कूटैरिति चतुर्भिः। कर्णिभिः कर्णिकारवत्फलकैर्बाणैः। ‡ मच.

धर्मयुद्धे वध्यावध्यविवेकः

**[२]न च हन्यात् स्थलारूढं न क्लीबं न कृताञ्जलिम्।**
**न मुक्तकेशं नाऽऽसीनं न तवास्मीति वादिनम्॥**

(१) रथस्थेन रथारूढ एव हन्तव्यः, स्थलस्थितो न हन्तव्यः। क्लीबः नपुंसकः पौरुषहीनो वा। अन्यत्र दृढ आसीनः उपविष्टः रथपृष्ठे भूमौ वा। तवास्मीति वदति यस्तमपि न हन्यात्। शब्दनियमोऽत्र न विवक्षितः। दीनं वदन्नेवंजातीयकैरपि शब्दैः 'त्वदीयोऽहम्' 'त्वामाश्रितोऽस्मि' इति, न हन्तव्यः। † मेधा.

* गोरा., राक., ममु., राप्र, मेधागतम्।

‡ शेषं मेधागतम्।

† ममु. मेधागतम्।

(१) मस्मृ. ७।९० ; गोरा. कर्णिभिः (कर्णिकैः) ; राक. १३१ ज्वलित (ज्वालित) ; रार. ४० ; राप्र. ४०५ राकवत्.

(२) मस्मृ. ७।९१ ; राक. १३२ केशं नाऽऽ (केशमा) ; रार. ४० ; राप्र. ४०६ राकवत् ; नीम. ६५ राकवत्.

(२) युद्धभूमिं त्यक्त्वा स्थलमारूढम्, नपुंसकम्, बद्धाञ्जलिम्, मुक्तकेशम्, उपविष्टम्, 'त्वदीयोऽहम्' इत्येवंवक्तारं न हन्यात्। * गोरा.

(३) किंच, एतानष्टादश न हन्यात्सतां धर्ममनुसरन्नित्याह– न चेति त्रिभिः। † मच.

(४) अवध्यानाह– न च हन्यादिति। स्थलं तुङ्गप्रदेशम्। नन्द.

**[१]न सुप्तं न विसंनाहं न नग्नं न निरायुधम्।**
**नायुध्यमानं पश्यन्तं न परेण समागतम्॥**

(१) न नग्नम्। 'न भग्नम्' इति वा पाठः। विसंनाहस्य प्रतिषेधात् नग्नस्य प्राप्तिरेव नास्ति। तेन शिरस्त्राणाद्यभावेनैकदेशेन नग्नतया नग्नो द्रष्टव्यः। भग्नस्यापि परावृत्तप्रतिषेधात् संमुखस्थोऽपि 'त्वया सह न युध्येयम्' इति वक्ति, स नानुबन्धनीयोऽवश्यं योद्धव्यमिति। नायुध्यमानं पश्यन्तम्। यः प्रेक्षक एव केवलः स न हन्तव्यः। यस्तु प्रेक्षते युध्यते च, न तत्र प्रतिषेधः। परेण समागतः। अन्येन सह युध्यमानः अन्येन न हन्तव्यः। मेधा.

(२) सुप्तम्, विगतसंनाहम्, अपरिधानानायुधप्रधनप्रेक्षकान्, अन्यैश्च युध्यमानान् न हन्यात्। गोरा.

(३) अयुध्यमानं पश्यन्तमित्येव। समागतं युद्धार्थम्। मवि.

(४) सुप्तम्, मुक्तसंनाहम्, विवस्त्रम्, अनायुधम्, अयुध्यमानं प्रेक्षकम्, अन्येन सह युध्यमानं च न हन्यात्। ममु.

(५) सुप्तं स्वप्नायितं श्रमवशात्। विसंनाहम्– संनाहः कवचादिः, तच्छून्यम्। पश्यन्तं रणोत्सवम्। परेण समागतं परेण सह युद्धासक्तम्। ‡ मच.

* मवि. गोरागतम्।

† शेषं मेधागतम्।

‡ नन्द., भाच. मचगतम्।

(१) मस्मृ. ७।९२; राक. १३२; रार. ४०; राप्र. ४०६; नीम. ६५.

**[२]नाऽऽयुधव्यसनप्राप्तं नाऽऽर्तं नातिपरिक्षतम्।**
**न भीतं न परावृत्तं सतां धर्ममनुस्मरन्॥**

(१) आयुधव्यसनम् आयुधकृच्छ्रम् आयुधभङ्गः कुण्डलिभावः खड्गस्य, ज्याछेदः इत्येवमादिः, तं प्राप्तम्। आर्तः हतपुत्रभ्रात्रादिः। भीतं मुखरागादिना विज्ञाय शस्त्रसंमुखमपि। परावृत्तं प्रत्यावृत्य स्थितम्। एते नियमाः। प्रतिषेधपक्षे प्रत्यवायः। तदा च स्वर्गप्राप्तिवचनमर्थवादः। किं पुनरत्र युक्तम्? पुरुषार्थः प्रतिषेधः 'न कलञ्जं भक्षयेत्' इतिवत्। तथाहि नञो मुख्यार्थवृत्तिता भवति। सतां धर्ममिति शिष्टानामेष आचारः इत्याह। अनुस्मरन्निति (?)। * मेधा.

(२) भग्नायुधम्, हतपुत्रादिकम्, प्रहारोपेतम्, भीतम्, सङ्ग्रामप्रतिनिवृत्तं शिष्टाचारं स्मरन् न हन्यात्। ‡ गोरा.

(३) युद्धव्यसनं दैवकृतं रथभङ्गादिना। 'आयुधव्यसनम्' इति क्वचित् पाठः। तत्र आयुधव्यसनं खड्गादिभङ्गः। आर्तं पुत्रादिशोकार्तम्। अतिपरिक्षतम् अन्येन सह युद्ध्वा। परावृत्तं युद्धात्। मवि.

(४) परिक्षतम् आपादतलमस्तककृतक्षतम्। भीतं वेपमानं भयेन। सतां भीष्मादीनाम्। § मच.

(५) सतां धर्मं कूटयुद्धादिभिरयोधनं स्थलारूढादिना च अनुस्मरन् राजा। न हन्यादित्यनुवर्तते। § नन्द.

**यस्तु भीतः परावृत्तः सङ्ग्रामे हन्यते परैः।**
**भर्तुर्यद्दुष्कृतं किंचित्तत्सर्वं प्रतिपद्यते॥**

* भाच. मेधागतम्।

‡ ममु. गोरागतम्।

§ शेषं मेधागतम्।

(१) मस्मृ. ७।९३; राक. १३२; मवि. नाऽऽयुध (न युद्ध) 'नाऽऽयुध' इत्यपि पाठः; रार. ४० नाऽऽयुध (न युद्ध) परिक्ष (परीक्षि); राप्र. ४०६ नप्राप्तं (नं प्राप्तं); नीम. ६५ उत्त.

(२) मस्मृ. ७।९४; राक. १३५ त्तत्सर्वं (त्सर्वं तत्); रार. ४०; नीम. ६५ तृतीयचरणे (यत्किंचिद्दुष्कृतं भर्तुः).

(१) नैवं मन्तव्यं परावृत्तो यदि हन्यते तदा दुष्कृती, अहतस्तु नेति। किं तर्हि? परावृत्तमात्रनिबन्धनं दोषवचनम्। किंच, न परावृत्तहतेनेयं बुद्धिः कर्तव्या— 'अनुभूतखड्गप्रहारोऽस्म्यनृणः कृतभर्तृकृत्यः' इति। तथाविधाः प्रहारा न कस्मैचिदर्थायेति दोषातिशयदर्शनेन दर्शयति। भर्तृसंबन्धिदुष्कृतमिति, यच्च वचनमुत्तरत्र तदीयसुकृतग्रहणमिति, तदर्थवादः। न ह्यन्येन कृतं शुभमशुभं वाऽन्यस्य संभवति। न च सुकृतस्य नाशः, किंतु महता दुष्कृतेन प्रतिबन्धे चिरकालभाविता सुकृतस्य फलस्योच्यते। मेधा.

(२) यो भीतः पराङ्मुखो भूतः सङ्ग्रामे शत्रुभिर्हन्यतेऽपि यदि, तथाऽपि प्रभोर्यत्किंचित् पापं तत्सर्वं प्राप्नोति। पापं तस्य भवतीत्येतावदत्र विवक्षितम्। अन्यथा कथंचित् अपापे प्रभौ पापाभावप्रसङ्गेन च प्रभोरेव तत्प्रायश्चित्तं तेनासौ दुष्कृतात्प्रमुच्यते। भर्तृग्रहणादमात्यस्यापि परावर्तनादिदोष एव, न प्रकृतस्यैव राज्ञः। गोरा.

(३) भर्तुर्यद् दुष्कृतमिति बहुतरदुष्कृतोत्पादोपलक्षणम्, न तु मुख्यार्थम्, अदुष्कृते भर्तरि तदभावापत्तेः। मवि.

(४) यस्तु योधः भीतः पराङ्मुखः सन् युद्धे शत्रुभिर्हन्यते स पोषणकर्तुः प्रभोर्यद्दुष्कृतं तत्सर्वं प्राप्नोति। शास्त्रप्रमाणके च सुकृतदुष्कृते यथाशास्त्रं संक्रमयोग्ये एव सिध्यतः। अत एवोपजीव्यशास्त्रेण बाधनात् न प्रतिपक्षानुमानोदयोऽपि। एतच्च षष्ठे 'प्रियेषु स्वेषु सुकृतम्' (मस्मृ. ६।७९) इत्यत्राऽऽविष्कृतमस्माभिः। 'पराङ्मुखहतस्य स्यात्पापमेतद्विवक्षितम्। न त्वत्र प्रभुपापं स्यादिति गोविन्दराजकः॥ मेधातिथिस्त्वर्थवादमात्रमेतन्निरूपयन्। मन्ये नैतद्द्वयं युक्तं व्यक्तमन्वर्थवर्जनात्॥'। अन्यदीयपुण्यपापे अन्यत्र संक्रमेते इति शास्त्रप्रामाण्यात् वेदान्तसूत्रकृता बादरायणेन निर्णीतोऽयमर्थ इति यथोक्तमेव रमणीयम्। ममु.

(५) सङ्ग्रामे पराङ्मुखादेर्दोषमाह— यस्त्विति द्वाभ्याम्। परस्थपापं परत्र फलदमिति च न तस्य नातिभारः। मेधातिथिस्त्वाह— 'अर्थवादमात्रम्'। भर्तुः शास्त्रभरणयोग्यस्य वाऽन्यस्य यत्पापं तत् पराङ्मुखघातकानां भवेदिति गोविन्दराजः प्रकरणादिति। परैः शत्रुभिः परावृत्तः पराङ्मुखः यदि घात्यते तदा पोषकस्य भर्तुः यत्पक्षपातितया युध्यति तस्य दुष्कृतं सर्वमाप्नोतीति वस्त्वर्थः। तस्मात् पराङ्मुखेन न भाव्यमिति भावः। * मच.

**[१]यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम्।**
**भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु॥**

(१) यच्चास्य सुकृतं किंचिद्भर्ता तत्सर्वमादत्त इति। अमुत्रार्थमुपार्जितम्। अर्थः अस्य अस्तीति अर्थः। अर्शआदित्वादच्। अमुत्र अमुष्मिंल्लोके यत्प्रयोजनं तदर्जितं तदस्य निष्फलं भवति। अमुत्रार्थोऽस्य इति वा अमुत्रार्थम्। व्यधिकरणो बहुव्रीहिः, गमकत्वात्प्रयोजकत्वाच्च। मेधा.

(२) अस्य च पराङ्मुखहतस्य यत्किंचित् परलोकार्थं सुकृतमर्जितमस्ति तत्सर्वं प्रभोर्भवति। ¶ गोरा.

(३) अस्य च परावृत्तहतस्य, चकारात् परावृत्तमात्रस्य। यदमुत्रार्थे च सुकृतम्, चकारात् इहलोकार्थं च। मवि.

**[२]एषोऽनुपस्कृतः प्रोक्तो योधधर्मः सनातनः।**
**अस्माद्धर्मान्न च्यवेत क्षत्रियो घ्नन् रणे रिपून्॥**

(१) उपसंहारोऽयम्। योधाः योद्धारः, तेषां धर्मः योधधर्मः। अनुपस्कृतः अगर्हितः, अविकृतो वा। अत एवाऽऽह— सनातनः। स्वेच्छया प्रवर्तितो विकृतः स्यात्। न च्यवेत न चलेत् सर्वदाऽनुतिष्ठेत्। क्षत्रियग्रहणं मुख्यस्तस्यात्राधिकार इति दर्शयितुम्, न त्वन्यस्य तत्स्थानापन्नस्य नायं धर्म इति। मेधा.

---

* नन्द. मचगतम्।

¶ ममु. गोरावत्। मच. गोरागतम्।

(१) मस्मृ. ७।९५; राक. १३५ यच्चास्य (यदस्य); मवि. तु (च); रार. ४१ तत्सर्वमा (च तत्समा); राप्र. ४०८ राकवत्; नीम. ६५ तु (च).

(२) मस्मृ. ७।९८; रार. ४१ पू.

(२) एषः अविगर्हितः अनादिपारंपर्यायातः योधधर्मः उक्तः। ततः सङ्ग्रामे शत्रून् हिंसन् क्षत्रियः एतं धर्मं न परित्यजेत्। * गोरा.

(३) अनुपस्कृतः अधुना असंस्कृतः परंपरागतः इदानीमपि तदवस्थ एव वर्तमानः। ¶ मवि.

(४) योधधर्मः कर्तव्याकर्तव्यविचारः। तस्मात् दृष्टलोभादपि न च्यवेत न पराङ्मुखः स्यात्। § मच.

(५) एषः अनुपस्कृतः अकृतप्रयत्नः, स्वभावसिद्धः इत्यर्थः। नन्द.

गुर्वादेरप्याततायिनो वधे न दोषः

**[१]गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥
[२]नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन।
प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति॥**

## याज्ञवल्क्यः

ब्राह्मणेभ्यः युद्धार्जितद्रव्यदानं प्रजाभ्यः अभयदानं च धर्मः

**§[३]नातः परतरो धर्मो नृपाणां यद्रणार्जितम्।
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा॥**

* मभु. मेधागतं गोरागतं च।

¶ भाच. मविवत्।

§ शेषं गोरागतम्।

† अस्य श्लोकद्वयस्य नीमव्याख्यानं 'यात्रा– कूटयुद्धम्' इत्यस्मिन् प्रकरणे 'सुनियतमुपहन्यात् कूटयुद्धेन शत्रून्' इत्यादिश्लोके (कानी. १९।७१) द्रष्टव्यम्। शेषव्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च व्यवहारकाण्डे साहसप्रकरणे (पृ. १६२४–१६२७) द्रष्टव्यः।

§ अस्य श्लोकस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११११५) द्रष्टव्यः।

(१) मस्मृ. ८।३५० ; नीम. ६२.

(२) मस्मृ. ८।३५१ ; नीम. ६२ पू.

(३) यास्मृ. १।३२३.

धर्मयुद्धे मरणं स्वर्ग्यम्

**[१]य आहवेषु वध्यन्ते भूम्यर्थमपराङ्मुखाः।
अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा॥**

(१) इदानीं 'न संशयं प्रपद्येत' (यास्मृ. १।१३२), 'न हिंस्यात्सर्वभूतानि' (बृहास्मृ. ८।१६) इति प्रतिषेधद्वयात् सङ्ग्रामाप्राप्तिप्रसक्तावाह– य इति। आहवः सङ्ग्रामः। भूम्यर्थवचनं दण्डकोशादेरप्युपलक्षणार्थम्। अकूटैरायुधैर्युध्यमाना इति योज्यम्। कूटानि विषदिग्धकर्णिकादीनि। आयुधवचनं सर्वायुधोपलक्षणार्थम्। स्पष्टमन्यत्। विश्व.

(२) रणार्जितं देयमित्युक्तम्, द्रव्यार्जनाय रणे प्रवृत्तस्य विपत्तिरपि संभवतीति न धर्मो नाप्यर्थ इति ततो निवृत्तिरेव श्रेयसीत्यत आह– य इति। ये भूम्याद्यर्थम् आहवेषु प्रवृत्ताः अपराङ्मुखाः अभिमुखाः वध्यन्ते मार्यन्ते ते स्वर्गं यान्ति योगाभ्यासरताः यथा। यदि अकूटैः अविषदिग्धादिभिः, आयुधैः योद्धारो भवन्ति। * मिता.

(३) ननु पाक्षिकानर्थशङ्कया प्रेक्षावतां रणे प्रवृत्तिरनुपपन्नेति विधिरयं न घटते इत्यत्राऽऽह– य इति। ये क्षत्रियाः स्वकीयां भूमिं रक्षितुं परकीयां च जेतुम् अकूटैः आयुधैः युध्यन्ते, न च शत्रून् प्रति पराङ्मुखा भवन्ति, ते शत्रुभिर्हताः योगिवत् स्वर्गं यान्ति स्वर्गं भुक्त्वा मुच्यन्ते इत्यर्थः। एवं च सति नियमेनायमसौ वा लोको जितो भवतीति नास्त्यनर्थशङ्का निवर्तिका। ‡ अप.

(४) रणार्जितदानमुक्तम्, तन्न युक्तम्, 'न संशयं प्रपद्येत' (यास्मृ. १।१३२) इत्यादिवचनैः रणस्या-

* दीक. मितागतम्।

‡ शेषं विश्वगतम्।

(१) यास्मृ. १।३२४ ; विश्व. १।३२० योगि (यागि) ; मिता. ; अप. १।३२२–३२३ वध्य (युध्य); राक. १३२ अपवत् ; दीक. ; वीमि. पराङ्मुखाः (पराजिताः) ; राम. ४०६ अपवत्.

कर्तव्यत्वप्रतिपादनादित्याशङ्कायां शास्त्राननुमतसाहसपरमेवाकर्तव्यत्वप्रतिपादनमित्यभिप्रेत्याऽऽह– य इति। अपराजिताः अपराङ्मुखाः। योगिनः योगाभ्यासरताः इव स्वर्गं यान्ति। योगिनां च स्वर्ग उक्तो भगवद्गीतायाम्– 'प्राप्य पुण्यकृताँल्लोकानुषित्वा शाश्वतीः समाः। शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते॥' (भगी. ६।४१) इति। * वीमि.

'पदानि क्रतुतुल्यानि भग्नेष्वविनिवर्तिनाम्।
राजा सुकृतमादत्ते हतानां विपलायिनाम्॥

(१) भूयश्च सङ्ग्रामविधिप्ररोचनां युद्धाकृतिप्रकारं चाऽऽह– पदानीति। युद्धार्थमेव हि तत्संग्रहात् युक्तमेवैतत्। विश्व.

(२) किंच– पदानीति। स्वबलेषु करितुरगरथपदातिषु भग्नेषु अविनिवर्तिनां परबलाभिमुखयायिनां पदानि क्रतुतुल्यानि अश्वमेधतुल्यानि। विपर्यये दोषमाह –विपलायिनां पराङ्मुखानां हतानां राजा सुकृतम् आदत्ते। † मिता.

(३) तेषां पदानि क्रतुभिः यज्ञैः तुल्यानि। पदे पदे यज्ञफलं लभन्ते इत्यर्थः। * अप.

(४) भग्नेषु पराभूतेषु स्वसैन्येषु अनिवर्तिनाम् अपराङ्मुखानां पदानि युद्धे दीयमानानि प्रत्येकमश्वमेधतुल्यानीत्यर्थः। 'विनिवर्तिनाम्' इति पाठे भग्नसैन्यात् विनिवर्ततामित्यर्थः। राज्ञा युद्धे पलायनं न कर्तव्यमित्यभिप्रेत्य पलायिनां दोषमाह– राजा सुकृतमिति। हतानां युद्धे शस्त्रादिपीडितानाम् अत एव विपलायिनां सुकृतं राजा प्रतिपक्षः आदत्ते। पलायिनां सुकृतं नश्यतीत्यर्थः। वीमि.

धर्मयुद्धे वध्यावध्यविवेकः

'तवाहंवादिनं क्लीबं निर्हेतिं परसंगतम्।
न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम्॥

(१) एवं च सति सर्वथा सङ्ग्रामे हिंसायां प्राप्तायामपवादार्थमाह– तवेति। चशब्दः आयुधादिव्यसनापन्नाद्यर्थः। निर्हेतिः अयुध्यमानः। परसंगतः अन्येन युध्यमानः। स्पष्टमन्यत्। विश्व.

(२) अपि च, तवाहमिति यो वदति तम्, क्लीबं नपुंसकम्, निर्हेतिं निरायुधम्, परसंगतं अन्येन सह युध्यमानम्, विनिवृत्तं युद्धाद्विनिवृत्तम्, युद्धप्रेक्षणकं युद्धदर्शिनम्। न हन्यादिति सर्वत्र संबन्धः। आदिग्रहणात् अश्वसारथ्यादीनां ग्रहणम्। यथाऽऽह गौतमः– 'न दोषो हिंसायामाहवेऽन्यत्र * व्यश्वसारथ्यनायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढोन्मत्तदूतगोब्राह्मणादिभ्यः' (गौध. १०।१६–१७) इति। शङ्खोऽप्याह– 'न पानीयं पिबन्तं न भुञ्जानं नोपानहौ मुञ्चन्तं नावर्माणं सवर्मा न स्त्रियं न करेणुं न वाजिनं न

---

* शेषं मितागतम्।

† दीक. मितागतम्।

(१) यास्मृ. १।३२५; विश्व. १।३२१ द्वितीयचरणे (भग्नेपु विनिवर्तताम्) यिनाम् (यताम्); मिता.; अप. १।३२३–३२४; राक. १३४–१३५ द्वितीयचरणे (भग्नेपु विनिवर्तनात्); दीक.; वीमि. ष्वविनि (ष्वप्यनि) 'षु विनि' इत्यपि पाठः; राप्र. ४०८.

* यद्यपि गौतमधर्मसूत्रपुस्तके 'व्यश्वसारथ्यायुध' इत्येव पाठः समुपलभ्यते, 'विशब्दः त्रिभिः संबध्यते– व्यश्वः, विसारथिः, व्यायुध इति' इति मस्करिभाष्यं तमेव पाठमनुमन्यते, असंभविन आयुधवधस्यानिषेध्यत्वेन व्यायुधवधनिषेधार्थं वेरावश्यकत्वं प्रतीयते च, तथाऽपि मिताक्षरायां पूर्ववाक्येऽश्वसारथ्यादीनां ग्रहणात्, गौतमवचने आयुधशब्दस्थानेऽनायुधशब्दस्य पठितत्वात्, स्वोक्तेऽर्थे प्रमाणत्वेनोद्धृते शङ्खवचनेऽश्वसारथिवधनिषेधात्, महाभारतादावश्वसारथ्यादीनामवध्यत्वोक्तेः, मिताक्षरापुस्तकान्तरे 'अश्वसारथि' इति गौतमवचनपाठस्योपलब्धेश्च 'अश्वसारथि' इत्येव गौतमवचनपाठो मिताक्षरासंमत इति प्रतीयते।

(१) यास्मृ. १।३२६; विश्व. १।३२२ णकादिकम् (कमेव च); मिता.; अप. १।३२४–३२५; दीक.; वीमि.

सारथिनं न सूतं न दूतं न ब्राह्मणं न राजानमराजा हन्यात्' इति। मिता.

(३) क्लीबं भीतम्। * अप.

(४) आदिना 'तृणखादी परप्रेप्सुरलसः शरणागतः।' इत्यादिदेवलोक्ताः ग्राह्याः। * दीक.

(५) राज्ञो युद्धे धर्मान्तरमाह– तवेति। आदिपदेन दन्ततृणग्राहिपरिग्रहः। कः स्वार्थे। चकारो व्यश्वसारथ्यादिपरिग्रहार्थः। *वीमि.

## कात्यायनः

आततायिवधे न दोषः

†[1]आततायिनमायान्तमपि वेदान्तगं रणे।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्॥

## वृद्धहारीतः

युद्धे मरणं स्वर्ग्यम्, धर्मयुद्धे वध्यावध्यविवेकः

[2]प्रजासंरक्षणार्थाय सङ्ग्रामं कारयेन्नृपः।
तस्मिन्मृत्युर्भवेच्छ्रेयो राज्ञः सङ्ग्राममूर्धनि॥
मृतेन लभते स्वर्गं जितेन पृथिवीचयम्।
यशःकीर्तिविवृद्ध्यर्थं धर्मसङ्ग्राममाचरेत्॥
मुक्तशीर्षं मुक्तवस्त्रं त्यक्तहेतिं पलायितम्।
न हन्याद्वन्दिनं राजा युद्धे प्रेक्षणकूजनान्॥
भग्ने स्वसैन्ये सङ्ग्रामे न यस्य विनिवर्तनम्।
पदे पदे समग्रस्य यज्ञस्य फलमश्नुते॥
नातः परतरो धर्मो नृपाणां करशालिनाम्॥

* शेषं मितागतम्।

† अस्य श्लोकस्य नीमव्याख्यानं 'यात्रा– कूटयुद्धम्' इत्यस्मिन् प्रकरणे 'सुनियतमुपहन्यात् कूटयुद्धेन शत्रून्' इति कामन्दकीयश्लोके (कानी. १९।७१) द्रष्टव्यम्।

(१) नीम. ६२.

(२) वृहास्मृ. ७।२२४–२२८.

## व्यासः

युद्धे मरणं स्वर्ग्यम्

'ये हता निशितैः शस्त्रैः क्षत्रधर्मपरायणाः।
ते गता ब्रह्मसदनं न मेऽत्रास्ति विचारणा॥
न यज्ञैर्दक्षिणाभिर्वा न तपोभिर्न विद्यया।
स्वर्गं यान्ति तथा मर्त्या यथा योधा रणे हताः॥
न ह्यधर्मोऽस्ति पापीयान् क्षत्रियस्य पलायनात्।
युद्धाद्धि धर्मः श्रेयान् वै पन्थाः स्वर्गस्य विद्यते॥

आपस्तम्बः– 'ब्राह्मणस्वान्यपजिगीषमाणः प्रत्यानेतुमिच्छन् युध्यमानो हतोऽसौ साक्षायजः (?)' इति। धर्म इत्यर्थः। अत्र व्यासवाक्ये 'योधा रणे हताः।' इति सामान्यतः उपादानात्, आपस्तम्बवाक्येऽपि 'युध्यमानो हतः' इत्युपादानात् स्थानापत्त्या क्षत्रियातिरिक्तस्यापि क्षत्रवृत्त्या जीवतो युद्धमरणमत्यन्तं धर्मसाधनम्, पलायनं सामर्थ्ये सति गोब्राह्मणादीनामसंरक्षणं चात्यन्तमधर्मसाधनमिति द्रष्टव्यम्।

राप्र. ४०७

## देवलः

युद्धमरणं स्वर्ग्यम्, युद्धे वध्यावध्यविवेकः

[1]प्रजार्थं क्षत्रियो युध्येत्स्वान् प्राणान् संपरित्यजेत्।
अश्वमेधफलं कृत्स्नं निसर्गेणाधिगच्छति॥
[2]शस्त्रेण निहतः संख्ये द्विषद्भिरपराङ्मुखः।
शक्रलोकमवाप्नोति स्ववीर्याद्विजितं शुभम्॥
आहवेऽभिमुखे शूरं प्रहितानि द्विषद्गणैः।
भिन्द्युर्यावन्ति शस्त्राणि तावन्तः क्रतवोऽस्य ते॥
[3]क्षतेभ्यः प्रस्रुतं रक्तं क्षितिपांसुषु संस्पृशेत्।
स देवलोके तावन्तं कालं तिष्ठति वै ध्रुवम्॥
[4]तृणखादी परप्रेप्सुरलसः शरणं गतः।

(१) राक. १३४ ; राप्र. ४०७.

(२) राक. १३३ ; राप्र. ४०५–४०६.

(३) राक. १३३ पांसुषु सं (पांसु सुसं) ; राप्र. ४०६.

(४) राक. १३२ षण्ढः (षण्डः) ; दीक १।३२६ णं गतः (णागतः) ; राप्र. ४०७.

**षण्ढः परार्दितो लिङ्गी स्थविरः पतितः शिशुः ।**
**न धर्मयुद्धे हन्तव्या ज्ञेया योधैरनापदि ॥**

**यमः**

रणभूमेः पलायनमधर्मः

**'क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म प्रतिष्ठितम् ।**
**तस्मात्पृष्ठं रणे रक्षेन्मा भवेद् ब्रह्मघातकः ॥**

पृष्ठं रणे रक्षेदित्यनेन पलायननिषेधः ।

राप्र. ४०६

**पराशरः**

युद्धे मरणं स्वर्ग्यम्

**'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।**
**परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥**

(१) नवभिः श्लोकैराहवे हतं प्रशंसति । तत्र प्रथमं परिव्राजकदृष्टान्तेनाऽऽदित्यमण्डलभेदित्वं दर्शयन् अर्थाद्ब्रह्मलोकप्राप्तिं दर्शयति— द्वा इति । योगाभ्यासेनेश्वरमुपासीनः परिव्राजकोऽर्चिरादिमार्गेण ब्रह्मलोकं गच्छन् मार्गमध्ये वाय्वादित्यचन्द्राणां मण्डलानि क्रमेण भित्वा तत्र तेभ्य उत्तरोत्तराधिकेभ्यश्छिद्रेभ्यो निर्गत्य क्रमेण विद्युदादिलोकान् संचरन् ब्रह्मलोकं प्राप्नोति । छिद्रनिर्गमनं वाजसनेयिब्राह्मणे श्रुतम्— 'स वायुमागच्छति । तस्मै स तत्र विजिहीते । यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते । स आदित्यमागच्छति । तस्मै स तत्र विजिहीते । यथा उदुम्ब(? डम्ब)रस्य खं तेन स ऊर्ध्वमाक्रमते । स चन्द्रमसमागच्छति । तस्मै स तत्र विजिहीते । यथा दुन्दुभेः खं तेन स ऊर्ध्वमाक्रमते ॥' (शब्रा. १४।८। १२।१) इति ।

तत्र चिरकालं महता प्रयासेन योगमभ्यस्यता परिव्राजकेन सह समानगतित्वं रणहतस्यायुक्तम्, तस्मादल्पकालप्रयासत्वादित्याशङ्क्य, कालाल्पत्वेऽपि धैर्यातिशयेन प्रयाससाम्यं सूचयितुमभिमुख इत्युक्तम् । पमा.

(२) तत्र परिव्राज इव रणहतस्यापि मोक्ष इति केचिद्व्याचक्षते । युक्तं तु 'तमेव विदित्वाऽतिमृत्युमेति' (श्वेउ. ३।८) इत्यादिभिः श्रुतिभिर्मोक्षं प्रति ज्ञानस्यैव साधनत्वावगमात् रणस्य च ज्ञानसाधनत्वाभावेन ज्ञानानुत्पत्तेर्न मोक्ष इति । यत्तु वचनं न तदसाधारण्येन रणस्य मोक्षफलं ब्रवीति । योगयुक्तश्चेति पदं योगे जाते ज्ञानोत्पत्तेः प्राक् मृतस्य ये लोकास्ते रणमृतस्य भवन्तीत्येतत्परत्वेनाप्युपपन्नं न रणमरणस्य मोक्षसाधनत्वं गमयति । योगस्य तु मुक्त्यहेतुत्वम् 'एतेन योगः प्रत्युक्तः' (ब्रसू. २।१।३) इति सूत्रे निरूपितमुत्तरमीमांसायाम् । यस्तु काशीमरणेन मोक्ष इति, तत्रापि न काशीमरणं साधनम्, किंतु ज्ञानमेव । ज्ञानं च विशिष्टगुरोः शिवस्योपदेशाच्छीघ्रमेव जायते इति । विस्तरस्तु विस्तरभिया नेह प्रतन्यते इति दिक् । नीम. ६४

**'यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः ।**
**अक्षयाँल्लभते लोकान् यदि क्लीबं न भाषते ॥**

तमेव सूचितमर्थं विशदीकरोति— यत्र यत्रेति । लोके शस्त्रधारिणमेकमपि दृष्ट्वा महती प्राणभीतिर्जायते । युद्धकाले तु प्रतिसैन्यगताः सर्वेऽपि शत्रवः शस्त्रधारिणो मारणोद्यता एनं परिवेष्टयन्ति । तदानीमुत्पद्यमानाया भीतेरियत्तैव नास्ति । तादृशीं भीतिं सोढ्वा प्रतिभटाभिमुख्यं गच्छतः शूरस्य धैर्यं योगिधैर्यादप्यधिकम् । न हि योगिनो यमनियमादिषु क्वचित्प्राणभीतिः संभाविता । ततो यथा जागरणे बहुषु वत्सरेषु अनुभवनीयस्य भोगस्य मुहूर्तमात्रवर्तिनि स्वप्ने साकल्यं दृश्यते, तथा चिरकालभावियोगसाम्यं रणे धैर्यवतः किं न स्यात् ? धैर्यातिशयेन साम्यमत्र विवक्षितमिति दर्शयितुं 'यदि क्लीबं न भाषते' इत्युक्तम् । क्लीबं नपुंसकत्वं विकलता, तत्सूचकं भीत्याविष्कारकवाक्यं यदि न भाषेत, तदानीं योगिसाम्यात् अक्षयान् ब्रह्मलोकावान्तरविशेषान् सालोक्यादीन् लभते । पमा.

---

(१) राक. १३०–१३१ ; राप्र. ४०६.

(२) पस्मृ. ३।३२; मेधा. ७।८९ रणे चा (शूरश्चा); नीम. ६४ मुखो (मुखं).

(१) पस्मृ. ३।३३ , ३५–४०.

**यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः ।**
**परित्रातुं यदा गच्छेत्स च क्रतुफलं लभेत् ॥**

'रणे चाभिमुखो हतः' इति दार्ष्टान्तिकेऽभिहितम्, तच्च हतत्वं धैर्यातिशयस्योपलक्षणम्, असत्यपि स्ववधे परत्राणप्रवृत्तस्य धीरस्य यथोक्तफलसद्भावादित्याह– य इति । क्रतुः अत्र अश्वमेधः, ब्रह्मलोकप्राप्तिफलत्वात् । अश्वमेधस्य च तत्फलत्वं वाजसनेयिशाखायां भुज्युब्राह्मणे– 'क्व न्वश्वमेधयाजिनो गच्छन्ति' (शब्रा. १४।६।३।२) इत्यादिप्रश्नप्रतिवचनयोर्विस्पष्टमवगम्यते । पमा.

**यस्य च्छेदक्षतं गात्रं शरमुद्गरयष्टिभिः ।**
**देवकन्यास्तु तं वीरं हरन्ति रमयन्ति च ॥**

यः परित्राणार्थे प्रवृत्तः तस्य प्रवृत्तिमात्रेण क्रतुफलमुक्तम् । प्रवृत्तस्य गात्रच्छेदे सति हतत्वाभावेऽपि फलातिशयोऽस्तीत्याह– यस्येति । गात्रं शरीरम् । छेदक्षतं हस्तपादाद्यवयवच्छेदेनोपद्रुतम् । पमा.

**देवाङ्गनासहस्राणि शूरमायोधने हतम् ।**
**त्वरमाणाः प्रधावन्ति मम भर्ता ममेति च ॥**

परित्राणाय प्रवृत्तस्य गात्रच्छेदे यत्फलं ततोऽप्यतिशयं मरणे दर्शयति– देवाङ्गनेति । पमा.

**यं यज्ञसंघैस्तपसा च विप्राः**
**स्वर्गैषिणो वाऽत्र यथैव यान्ति ।**
**क्षणेन यान्त्येव हि तत्र वीराः**
**प्राणान् सुयुद्धेन परित्यजन्तः ॥**

यद्यपि यज्ञसंघादिकं युद्धमरणं चोभयमप्येकविधस्य फलस्य समानं साधनम्, तथाऽपि युद्धमरणस्यात्यल्पकालसाध्यत्वेन वैकल्यासंभवादुत्तमसाधनत्वमित्याह– यमिति । विप्रशब्देन निष्कामाः विवक्षिताः । तथा च 'स्वर्गैषिणो वा' इति विकल्प उपपद्यते । अत्र पुण्यलोकेषु यं लोकविशेषं यथैव येन प्रकारविशेषेण देवकन्यावरणादिना युक्ताः सन्तो यान्ति, तत्र तेषु पुण्यलोकेषु तमेव लोकविशेषं तेनैव प्रकारेण युद्धहता वीराश्च यान्ति । क्षणेनेत्युक्तं कालाल्पत्वमेतेष्वतिशयः । पमा.

**जितेन लभ्यते लक्ष्मीर्मृतेनापि सुराङ्गना ।**
**क्षणध्वंसिनि कायेऽस्मिन् का चिन्ता मरणे रणे ॥**

ननु कालस्याल्पत्वेऽपि प्राणभीतेर्दुष्परिहरत्वात् पूर्वोक्तं युद्धधैर्यं दुर्लभमित्याशङ्क्य विचारवतः पुरुषस्य तत् सुलभमित्यभिप्रेत्य तं विचारं दर्शयति– जितेनेति । जितेनेति कर्तरि निष्ठा । ततो जयेन लक्ष्मीलाभः, मरणेन सुराङ्गनालाभः । यदि कायजीवनलोभाल्लक्ष्मीदेवाङ्गनालाभौ न पर्यालोच्येते तथाऽपि लाभपरित्यागमात्रं तस्य केवलमवशिष्यते । कायस्तु सर्वथा न चिरं जीवति, तस्य कर्मप्रापितायुष्यवशवर्तित्वेन क्षणप्रध्वंसिस्वभावत्वात् । पमा.

**ललाटदेशे रुधिरं स्रवच्च**
**यस्याऽऽहवे तु प्रविशेच्च वक्त्रम् ।**
**तत्सोमपानेन किलास्य तुल्यं**
**सङ्ग्रामयज्ञे विधिवच्च दृष्टम् ॥**

अत्यन्तनिषिद्धमपि रुधिरपानं यत्र निरतिशयसुकृतत्वेन परिणमते तत्र पुण्यलोकप्राप्तौ को विस्मय इत्याह– ललाटेति । सङ्ग्रामयज्ञप्रतिपादके नीतिशास्त्रादौ पुरोभागे प्रहारो वीरलक्षणत्वेनोपवर्णित इति विवक्षितत्वात् विधिवद् दृष्टमित्युक्तम् । तदेवं नवभिः श्लोकैराशौचविधिस्तावकत्वेन युद्धमरणस्य प्रशंसा कृता । यस्मात् रणहतोऽत्यन्तपुण्यात्मा तस्मात्तन्मृतौ परिव्राजकमरणे इवाधिकाशौचाभाव उपपद्यते । अथवा ते एते नव श्लोकाः प्रकरणात् उत्कृष्टा राजधर्मेषु स्थापनीयाः, युद्धस्य क्षत्रियधर्मत्वात् । यथा दर्शपूर्णमासप्रकरणे श्रूयमाणो रजस्वलाव्रतकलापः प्रकरणादुत्कृष्य क्रत्वर्थपरिहरेण पुरुषार्थतयोपवर्णितस्तद्वत् । पमा.

स्वामिनं त्यक्त्वा पलायनमधर्मः

**'पतितं स्वामिनं युद्धे त्यक्त्वा यान्ति पराङ्मुखाः ।**
**ये तेषां पापबुद्धीनां ब्रह्महत्या पदे पदे ॥**

### बृहत्पराशरः

युद्धमरणं मोक्षसाधनम्, अपराङ्मुखत्वादि स्वर्ग्यम्, युद्धे अवध्याः

**हतः शूरो विपद्येत शत्रुभिर्यत्र कुत्रचित् ।**
**स मुक्तो यतिवत् सद्यः प्रविशेत् परवेधसि ॥**

(१) शक. १३५. (२) बृपसं. ८।३०–३४.

संन्यासी युद्धसंस्थश्च संमुखं शत्रुभिर्नरः।
सूर्यमण्डलभेत्ताराविति प्राहुर्मनीषिणः॥
पराङ्मुखे हते सैन्ये यो युद्धाय निवर्तते।
तत्पदानीष्टितुल्यानि स्युरित्याह पराशरः॥
वदने प्रविशेद्येषां लोहितं शिरसः पतत्।
सोमपानेन ते तुल्या बिन्दवो रुधिरस्य वै॥
संन्यासेन मृता ये वै प्रधने ये तनुत्यजः।
मुक्तिभाजो नरास्ते स्युरिति वेदो निदर्शनम्॥
'न हन्यान्मुक्तकेशं च नाऽऽसीनं न निरायुधम्।
पराङ्मुखं न पतितं न तवास्मीति वादिनम्॥
अन्यानपि निषिद्धांश्च न हन्याद्धर्मविन्नृपः।
हत्वा च नरकं याति भ्रूणहत्यासमैनसा॥
पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्तते।
तत्पदानीष्टितुल्यानि भूम्यर्थं स्वामिनोऽपि वा॥
शिरोहतस्य ये वक्त्रे विशन्ति रक्तबिन्दवः।
सोमपानेन ते तुल्या इति वासिष्ठजोऽब्रवीत्॥
युध्यन्ते भूभृतो ये च भूम्यर्थमेकचेतसः।
*इष्टस्तैर्बहुभिर्योगैरेवं यान्ति त्रिविष्टपम्॥

## आश्वलायनः

धर्मयुद्धे आततायिब्राह्मणवधे न दोषः

'सर्वज्ञमपि संप्राप्तं ब्राह्मणं चाऽऽततायिनम्।
रणे हत्वाऽपि नृपतिर्न भवेद् ब्रह्महा क्वचित्॥

## मत्स्यपुराणम्

युद्धे अनिवर्तित्वं क्षात्रधर्मः

'समोत्तमाधमै राजा $ह्याहूय पालयेत् प्रजाः।
न निवर्तेत सङ्ग्रामात् क्षात्रं व्रतमनुस्मरन्॥
सङ्ग्रामेष्वनिवर्तित्वं प्रजानां परिपालनम्।
शुश्रूषा ब्राह्मणानां च राज्ञां निःश्रेयसं परम्॥

## स्कन्दपुराणम्

धर्मयुद्धे मरणं स्वर्ग्यम्, युद्धात्पलायनम् अधर्मः

'दृष्ट्वा सुरैर्दैत्यवरान् पराजितान्
पलायमानानथ कान्दिशीकान्।
तदैव वृत्रः परमेण मन्युना
महाबलो वाक्यमिदं बभाषे॥

वृत्र उवाच–

हे दैत्या परमार्ताश्च कस्माद्यूयं भयातुराः।
पलायनपराः सर्वे विसृज्य रणमद्भुतम्॥

स्वर्गद्वारं विहायैव क्षत्रियाणां मनस्विनाम्।
पलायध्वे किमर्थं वा सङ्ग्रामाङ्गणमुत्तमम्॥
संगरे मरणं येषां ते यान्ति परमं पदम्।
यत्र तत्र च लिप्सेत सङ्ग्रामे मरणं बुधः॥

त्यजन्ति संगरं ये वै ते यान्ति निरयं ध्रुवम्॥
ये ब्राह्मणार्थे भृत्यार्थे स्वार्थे वै शस्त्रपाणयः।
सङ्ग्रामं ये प्रकुर्वन्ति महापातकिनो नराः॥

शस्त्रघातहता ये वै मृता वा संगरे तथा।
ते यान्ति परमं स्थानं नात्र कार्या विचारणा॥

शस्त्रैर्विच्छिन्नदेहा ये गवार्थे स्वामिकारणात्।
रणे मृताः क्षता ये वै ते यान्ति परमां गतिम्॥

तस्माद्रणेऽपि ये शूराः पापिनो निहताः पुरः।
प्राप्नुवन्ति परं स्थानं दुर्लभं ज्ञानिनामपि॥

अथवा तीर्थगमनं वेदाध्ययनमेव च।
देवतार्चनयज्ञादिश्रेयांसि विविधानि च॥

एकपदेन तान्येव कलां नार्हन्ति षोडशीम्।
सङ्ग्रामे पतितानां च सर्वशास्त्रेष्वयं विधिः॥

तस्माद्युद्धावदानं च कर्तव्यमविशङ्कितैः।
भवद्भिर्नान्यथा कार्यं देव(? वेद)वाक्य-
प्रमाणतः॥

---

* अत्र 'इष्टं तैर्बहुभिर्यागैः' इत्येवं शुद्धिः स्यात्।
$ अत्र 'ह्याहूतः पालयन्' इत्येवं शुद्धिः कल्प्या।
(१) बृपसं. १२।४९–५३.
(२) आश्वस्मृ. ८।१५३–१५४.
(३) मत्स्य. २१५।६०–६१.

(१) स्कन्द. १।१।१७।१४२–१४३, १५१–१६४.

यूयं सर्वे शौरवृत्त्या समेताः
कुलेन शीलेन महानुभावाः ।
पदानि तान्येव पलायमाना
गच्छन्त्यशूरा रणमण्डलाच्च ॥
त एव सर्वे खलु पापलोकान्
गच्छन्ति नूनं वचनात् स्मृतेश्च ॥
ये पापिष्ठास्त्वधर्मस्था ब्रह्मघ्ना गुरुतल्पगाः ।
नरकं यान्ति ते पापं तथैव रणविच्युताः ॥
तस्माद् भवद्भिर्योद्धव्यं स्वामिकार्यभरक्षमैः ॥

## विष्णुधर्मोत्तरपुराणम्

धर्मयुद्धस्य महाफलत्वम्

[1]योधानुत्तेजयेत् सर्वान्नामगोत्रापदानतः ।
भोगप्राप्तिश्च विजये स्वर्गप्राप्तिर्मृतस्य च ॥
जित्वाऽरीन् भोगसंप्राप्तिर्मृतस्य च परा गतिः ।
निष्कृतिः स्वामिपिण्डस्य नास्ति युद्धसमा
गतिः ॥
शूराणां यद्भिनिर्याति रक्तमाबाधतः क्वचित् ।
तेनैव सह पाप्मानं सर्वं त्यजति धार्मिक ॥
तथा बाधचिकित्सायां वेदनासहिते तथा ।
ततो नास्त्यधिकं लोके किंचित्परमदारुणम् ॥
मृतस्य नाग्निसंस्कारो नाऽऽशौचं नोदकक्रिया ।
कर्तुमिच्छन्ति यस्येह सङ्ग्रामादधिकं नु किम् ॥
तपस्विनो दानपरा यज्वानो बहुदक्षिणाः ।
शूराणां गतिमिच्छन्ति दृष्ट्वा भोगा-
ननुत्तमान् ॥
वराप्सरःसहस्राणि शूरमायोधने हतम् ।
अभिद्रवन्ति कामार्ता मम भर्ता भविष्यति ॥
स्वामी सुकृतमादत्ते भग्नानां विनिवर्तताम् ।
ब्रह्महत्याफलं तेषां तथा प्रोक्तं पदे पदे ॥

(१) विध. २।१७७।५१,५७-६५, एषां श्लोकाना-मग्निपुराणीयस्थलादिनिर्देशः 'यात्रा-युद्धसामान्यविचारः' इत्यस्मिन् प्रकरणे (पृ. २६६९-२६७०) द्रष्टव्यः ।

यः सहायान् परित्यज्य स्वस्तिमान् गन्तु-
मिच्छति ।
अस्वस्ति तस्य कुर्वन्ति देवाः शक्रपुरोगमाः ॥
अश्वमेधफलं प्रोक्तं भग्नानामनिवर्तताम् ।
पदे पदे महाभागा(? ग) संमुखानां महा-
त्मनाम् ॥
[1]देवस्त्रियस्तथा लक्ष्मीः पाप्मानमयशस्तथा ।
प्रतीक्षन्ते महाभाग सङ्ग्रामे समुपस्थिते ॥
पराङ्मुखा मया ग्राह्या जीवन्तोऽऽप्यभवा-
मृताः ।
इत्येवमयशस्तस्य पाप्मना सह तिष्ठति ॥
लक्ष्मीः संतिष्ठते तस्य जीवतः कृतकर्मणः ॥
मृतस्य चापि तिष्ठन्ति विमानस्थाः सुरस्त्रियः ।
एवमुद्घोषणं कृत्वा धर्मेणेच्छेज्जयं रणे ॥

अधर्मेण युद्धे विजयः दोषावहः, धर्मयुद्धस्वरूपम्, धर्मयुद्धनियमाः, धर्मयुद्धे वध्यावध्यविवेकः, धर्मयुद्धे मरणं स्वर्ग्यम्

अधर्मविजयो राज्ञो नृपलोके भयावहः ।
अधर्मविजयादर्थैर्यच्छिद्रमुपधीयते ॥
छिद्रादेव परं छिद्रं तस्य स्यान्नात्रसंशयः ।
न कर्णी न तथा दिग्धः शरः स्याद्धर्म-
योधिनाम् ॥
नास्थिशल्यः शरः कार्यो दारुशल्यश्च भार्गव ।
समः समेन योद्धव्यो नापचारो रणे द्विज ॥
संनद्धेन च संनद्धः साश्वश्चाश्वगतेन तु ।
रथी च रथिना राम पदातिश्च पदातिना ॥
कुञ्जरस्थो गजस्थेन योद्धव्यो भृगुनन्दन ।
विमुखो भग्नशस्त्रश्च स्त्रीबालपरिरक्षिता ॥
व्यायुधो भग्नगात्रश्च तथैव शरणागतः ।
परेण युध्यमानश्च युद्धप्रेक्षक एव च ॥
आर्तस्तोयप्रदाता च दण्डपाणिस्तथैव च ।
एते रणे न हन्तव्याः क्षत्रधर्ममभीप्सता ॥

(१) विध. २।१७७।६६-७६.

हंस उवाच–

'वशो जगदिदं प्राहुः शूरबाहुषु लम्बते।
शूराणामथ सर्वेषां शौर्यमेव विशिष्यते॥
ब्राह्मणार्थे गवार्थे वा स्वाम्यर्थे मित्रकारणे।
आहतौ ये प्रपद्यन्ते नाकपृष्ठं व्रजन्ति ते॥
धनापहारे संप्राप्ते संप्राप्ते दारविप्लवे।
(*आत्मनश्च परित्राणे युध्यमानो दिवं व्रजेत्।
क्षत्रविट्छूद्रविप्राणां युद्धमेव परायणम्।)
आत्मनश्च परित्राणे संप्राप्ते देशविप्लवे॥
दारनाशे तु संप्राप्ते दक्षिणानां च संकरे।
विप्रस्तु शस्त्रं गृह्णीयात् संकरे चाप्युपस्थिते॥
वृत्तिं तु कल्पयेद्विप्रः क्षत्रधर्मेण वा न वा।
सङ्ग्रामान्न निवर्तेत तस्य धर्मं हितं तदा॥
एकपुत्रं तृणमुखं तवास्मीति च वादिनम्।
स्त्रीबालरक्षकं भीरुं पलायनपरायणम्॥
व्यायुधं व्यसनस्थं च परेण सह संगतम्।
धुर्यं च धुर्यवाहं च युद्धप्रेक्षकमेव च॥
न हन्तव्या द्विजश्रेष्ठा युद्धधर्मं विजानता।
युद्धं न कुर्याद् यानस्थः पुरुषेण पदातिना॥
समेन युद्धमाकाङ्क्षंस्तथैवाभ्यधिकेन वा।
नरः प्राप्नोति नरकं हीनहा तद्धतोऽपि वा॥
अवर्मयित्वा यो वाहं चाऽऽत्मानं वर्मयेन्नरः।
स शीघ्रं नरकं याति सुकृतेनाऽपि कर्मणा॥
कथितो युद्धधर्मोऽयं फलं चातो निबोधत।
धर्मलाभोऽर्थलाभश्च यशोलाभश्च तस्य वै॥
यः शूरो युध्यते युद्धे विमृद्नन् परवाहिनीम्।
तस्य धर्मार्थकामाश्च यज्ञाश्चैवाऽऽप्तदक्षिणाः॥
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः।
न तत्फलमवाप्नोति सङ्ग्रामे यदवाप्यते॥
असृग्यदाऽस्य गात्रेभ्यो विनिर्याति रणाजिरे।
तेनैव सार्धं निर्याति तस्य पापं शरीरतः॥
सहते च परं क्लेशं प्रहाराणां च रोपणे।
यद्धीरः समवाप्नोति तपो नास्त्यधिकं ततः॥
यस्य युद्धे प्रहारा ये किंतु स्याद्दैवयोगतः।
युध्यमानस्य धर्मज्ञाः सोऽपि नाके महीयते॥
रणे यथाऽधिकवधं कृत्वा फलमुपाश्नुते।
परं ह्यभिमुखं हत्वा तद्यानं योऽधिरोहति॥
विष्णुक्रान्तं स जयति चैवं युध्यन्रणाजिरे।
यस्तु सेनापतिं हत्वा तद्यानमधिरोहति॥
अश्वमेधानवाप्नोति चतुरस्तेन कर्मणा।
यावन्ति तस्य शस्त्राणि भिन्दन्ति त्वचमाहवे॥
तावतो लभते लोकान् सर्वकामदुघाक्षयान्।
यत्र यत्र हतः शूरः शत्रुभिर्विनिपातितः॥
अक्षयाँल्लभते लोकान्निवृत्तिं दीनतां विना।
स्वामी सुकृतमादत्ते हतानां विपलायिनाम्॥
स्वामिनो दुष्कृतं सर्वं तदा च प्रतिपद्यते।
पलायमानः पुरुषस्तथा प्राप्नोति वै द्विजाः॥
पदे पदे दुराचारो गोवधस्य फलं नरः।
जीवँल्लक्ष्मीं समाप्नोति मृतश्च त्रिदिवं नरः॥
यशश्चोभयथा विप्रा नास्ति युद्धे निरर्थता।
परानभिमुखः शूरो यावद् व्रजति वै द्विजाः॥
पदे पदे यज्ञफलमानुपूर्व्यात् समाप्नुयात्।
अभग्नं च परं हन्याद् भग्नं च परिरक्षति॥
पलायन्ते स्थिता यस्मिन् स याति परमां गतिम्।
ऊर्ध्वं तिर्यक् च यश्चार्वाक् प्राणान् संत्यज्य युध्यति॥
हतासुश्च पतेद्युद्धे स स्वर्गान्न निवर्तते।
यस्य युद्धे प्रविष्टस्य देहं चिह्नीकृतं परैः॥
आत्मानं यूपमुत्सृज्य स यज्ञोऽनन्तदक्षिणः।
नाऽऽशौचभाजस्तस्य स्युर्बान्धवा द्विजसत्तमाः॥
श्राद्धं चैवाग्निसंस्कारस्तथैवाप्युदकक्रिया।
मृतस्य नोपयुज्यन्ते सङ्ग्रामेऽभिमुखस्य तु॥

* आदर्शपुस्तके इदमर्धद्वयं कैश्चिद्वयोः प्रक्षिप्तम्।
(१) विध. ३।२६७।१–३६.

क्रियन्ते तस्य धर्मज्ञा आनृण्यार्थं स्वबन्धुभिः।
यस्य चिह्नीकृतं गात्रं शरशक्त्यृष्टितोमरैः॥
देवकन्यास्तु तं वीरं रमयन्ते रमन्ति च।
वराप्सरःसहस्राणि शूरमायोधने हतम्॥
त्वरितास्त्वभिधावन्ति मम भर्ता ममेति च।
हतस्याभिमुखस्याऽऽजौ पतितस्यानिवर्तिनः॥
ह्रियते यत्परैर्द्रव्यं नरमेधफलं तु तत्।
शक्यं त्विह समृद्धैस्तु यष्टुं क्रतुशतैर्नरैः॥
आत्मदेहं तु सङ्ग्रामे त्यक्तुं विप्राः सुदुष्करम्॥

यां यज्ञसंघैस्तपसा च विप्राः
स्वर्गैषिणः सत्त्वचयैः प्रयान्ति।
क्षणेन तामेव गतिं प्रयान्ति
महाहवे स्वां तनुमुत्सृजन्तः॥
सर्वे च वेदाः सह षड्भिरङ्गैः
सांख्यं च योगं च वने च वासः।
एतान् गुणानेक एवातिदेशेत्
सङ्ग्रामधाम्ना स्वतनुं त्यजेद्यः॥

## पद्मपुराणम्

रिपुयाचितयुद्धं धर्मः, युद्धे मरणं स्वर्ग्यम्,
धर्मयुद्धे वध्यावध्यविवेकः

वराह उवाच–

[1]वीराणां त्वं न जानासि सुधर्मं शृणु सांप्रतम्।
युद्धार्थिना हि वीरेण वीरं गत्वा प्रयाचितम्॥
देहि मे योधनं संख्ये युद्धार्थी त्वहमागतः।
परेण याचितं युद्धं न ददाति यदा भटः॥
कामाल्लोभाद्भयाद्वाऽपि मोहाद्वा शृणु वल्लभे।
कुम्भीपाके स नरके वसेद्युगसहस्रकम्॥
क्षत्रियाणां परो धर्मो युद्धं देयं न संशयः।
तद्युद्धं दीयमानेन रङ्गभूमिं गतेन वै॥
जित्वा शत्रुं पुनस्तत्र यशः कीर्तिं प्रभुञ्जते।
नो वा हतोऽपि युद्धेऽस्मिन् युध्यमानः सुनिर्भयः॥

(१) पद्म. २।४३।५१–५८.

वीरलोकमवाप्नोति दिव्याँल्लोकान् प्रभुञ्जते।
यावद्वर्षसहस्राणां विंशत्येका प्रिये शृणु॥
वीरलोके वसेत्तावद्देववीरैर्महीयते।
मनुपुत्रः समायातः स्वयं वीरो न संशयः॥
सङ्ग्रामं याचमानस्तु युद्धं देयं मया ध्रुवम्।
युद्धातिथिः समायातो विष्णुरूपः सनातनः।
सत्कारो युद्धरूपेण कर्तव्यश्च मया शुभे॥
[1]जाने धर्मं महाभागे बहुश्रेयोविदायकम्।
कामाल्लोभाद्भयाद्वाऽपि युध्यमानः प्रणश्यति॥
रणतीर्थं परित्यज्य स स्यात् पापी न संशयः।
निशितं शस्त्रसंव्यूहं दृष्ट्वा हर्षं प्रगच्छति॥
अवगाह्याऽऽशु सिन्धुं स तीर्थपारं प्रगच्छति।
स याति वैष्णवं लोकं पुत्राणां शतमुद्धरेत्॥
*समायान्तं च(? यातश्च) तदहं कथं भग्नो व्रजाम्यहम्।
योधनं शस्त्रसंकीर्णं प्रवीरानन्ददायकम्॥
दृष्ट्वा प्रयाति संहृष्टस्तस्य पुण्यफलं शृणु।
पदे पदे महत् स्नानं भागीरथ्याः प्रजायते॥
रणाद् भग्नो गृहं याति कामाल्लोभात् प्रिये शृणु।
मातृदोषं प्रकाशेत् स क्रियाजातश्च कथ्यते॥
अत्र यज्ञाश्च तीर्थाश्च अत्र देवा महौजसः।
पश्यन्ति कौतुकं कान्ते मुनयः सिद्धचारणाः॥
त्रैलोक्यं वर्तते तत्र यत्र वीरप्रकाशनम्।
समराद् भग्नं प्रपश्यन्ति सर्वे त्रैलोक्यवासिनः॥
शपन्ति निर्घृणं पापं प्रहसन्ति पुनः पुनः।
दुर्गतिं दर्शयेत्तस्य धर्मराजो न संशयः॥
संमुखः समरे युद्धे स्वशिराच्छोणितं पिबेत्।
अश्वमेधफलं भुङ्क्ते इन्द्रलोकं प्रगच्छति॥
यदा जयति सङ्ग्रामे शत्रूञ्शूरो वरानने।
तदा प्रभुञ्जते लक्ष्मीं नानाभोगान्न संशयः॥

* केषुचित्पुस्तकेषु इदमर्धं नास्ति।
(१) पद्म. २।४३।६१–७४.

यदा तत्र त्यजेत् प्राणान् संमुखश्च निराश्रयः।
स गच्छेत् परमं लोकं देवकन्याः प्रभुञ्जते ॥

एवं धर्मं विजानामि कथं भग्नो व्रजाम्यहम्।
अनेन समरे युद्धं करिष्ये नात्र संशयः।
मनोः पुत्रेण धीरेण राज्ञा इक्ष्वाकुणा सह ॥

[1]शत्रुघ्नमादिदेशाथ रामः शस्त्रभृतां वरः।
याहि वाहस्य रक्षार्थं पृष्ठतः स्वेच्छया गतः ॥

ये योद्धारः प्रतिरणगतास्ते त्वया वारणीया
वाहं रक्ष स्वकगुणगणैः संयुतः सन् महोर्व्याम्।
सुप्तान् भ्रष्टान् विगतवसनान् भीतभीतान् प्रणम्रान्
मा हन्यास्तान् सुकृतिकृतिनो ये न शंसन्ति कर्म ॥

विरथान् रथसंस्थस्त्वं ये वदन्ति वयं तव।
ते त्वया न निहन्तव्याः शत्रुघ्न सुकृतैषिणा ॥

यो हन्याद्विमदं मत्तं सुप्तं भग्नभयातुरम्।
तावकोऽहं ब्रुवाणं च स व्रजत्यधमां गतिम् ॥

परस्वे चित्तवृत्तिं त्वं मा कृथाः परदारके।
नीचे रतिं मा विदध्याः सर्वसद्गुणपूरितः ॥

पूर्वं प्रहारं वृद्धानां मा कुर्वीथा ह्यरिंजय।
पूज्यपूजाव्यतिक्रामं मा विधेहि दयान्वितः ॥

## अग्निपुराणम्

धर्मयुद्धनियमाः, युद्धे वध्यावध्यविवेकः

[2]धर्मनिष्ठे जयो राज्ञि योद्धव्याश्च समाः समैः।
गजाद्यैश्च गजाद्याश्च न हन्तव्याः पलायिनः।
न प्रेक्षकाः प्रविष्टाश्च अशस्त्राः पतितादयः ॥

(१) पद्म. ४।१०।५४,५६–६०.

(२) अग्नि. २३६।५७–५८.

## आदित्यपुराणम्

युद्धात् निवर्तनम् अधर्मः, युद्धे मरणं स्वर्ग्यम्, धर्मयुद्धनिमित्तानि

[1]सङ्ग्रामे प्रस्थितं भूपं भृत्यस्त्यजति यः क्षणात्।
स तेन नृपदण्डेन मूढो नरकमृच्छति ॥
जित्वाऽरिं भोगसंप्राप्तिर्मृतस्य च परा गतिः।
निष्कृतिः स्वामिपिण्डस्य नास्ति युद्धसमा गतिः ॥

शूराणां यद्विनिर्याति रक्तमाधावतां क्वचित्।
तेनैव सह पाप्मानं सर्वं त्यजति वै मुने ॥
[2]तथैव विचिकित्सायां वेदनां सहते तु याम्।
ततो नास्त्यधिकं लोके तपः परमदारुणम् ॥
[3]मृतस्य नास्ति संस्कारो नाऽऽशौचं नोदकक्रिया।
कर्तुमिच्छति यस्येह सङ्ग्रामादधिकं हि किम् ॥
वराप्सरःसहस्राणि शूरमायोधने हतम्।
अभिद्रवन्ति कामार्ता मम भर्ता भविष्यति ॥
[4]यः सहायान् परित्यज्य स्वस्थः सन् गन्तुमिच्छति।
असून् हि तस्य कृन्तन्ति देवाः शक्रपुरोगमाः ॥
[5]शूरस्याग्रे यदा विप्र आर्त उत्क्रोशते भृशम्।
न च तं त्रायते पापाच्छूरो नरकभाग्भवेत् ॥
ब्राह्मणानां गवां चैव रक्षार्थं हन्यते यदि।
स शूरो जीवितं हित्वा इन्दुलोकं प्रपद्यते ॥
[6]तोषयित्वा नृपं युद्धे राज्ञां हृत्वाऽग्रतः स्थितम्।
जित्वा न हरति द्रव्यं स नरः स्वर्गमाश्रितः ॥

(१) राक. १३५; राप्र. ४०८.

(२) राक. १३५ धिकं (धिको); राप्र. ४०८ तथैव वि (तथा व्रण).

(३) राक. १३५–१३६; राप्र. ४०८–४०९.

(४) राक. १३६ तृतीयचरणे (अस्थितस्य च कुर्वन्ति); राप्र. ४०९. (५) राक. १३६; राप्र. ४०७–४०८.

(६) राक. १३६ हृत्वा (कृत्वा) स्थितम् (स्थितः); राप्र. ४०९.

[1]मृद्नाति यदि राष्ट्राणि यदा न हरते धनम् ।
यदि वध्येत तत्रैव स नरः स्वर्गमाश्रितः ॥

[2]प्रजार्थे निहता ये च राजानो धर्मतत्पराः ।
अग्निविद्युद्धता ये च सिंहव्याघ्रहताश्च ये ।
प्राप्नुवन्ति च ते सर्वे पुरीमैरावतीमिमाम् ॥

निहताः शस्त्रादिना । अग्निविद्युद्धताः इत्यादावपि प्रजार्थे इत्यनुषज्यते । राप्र. ४०८

## शुक्रनीतिः

धर्मयुद्धनिमित्तानि, युद्धात् अनिवर्तनं धर्मः

[3]स्त्रीविप्राभ्युपपत्तौ च गोविनाशेऽपि ब्राह्मणैः ।
प्राप्ते युद्धे क्वचिन्नैव भवेदपि पराङ्मुखः ॥

स्त्रीणां विप्राणां च अभ्युपपत्तौ अनुग्रहार्थे तथा ब्राह्मणैः सह गोविनाशे गोब्राह्मणविनाशे इत्यर्थः । उपस्थिते इत्यर्थः । प्राप्ते युद्धे आपतिते सङ्ग्रामे क्वचित् कदाचित् पराङ्मुखः नैव भवेत् । शुनीटी.

युद्धमुत्सृज्य यो याति स देवैर्हन्यते भृशम् ॥

यः युद्धम् उत्सृज्य याति पलायते सः देवैः भृशम् अत्यर्थं हन्यते । शुनीटी.

समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः ।
न निवर्तेत सङ्ग्रामात् क्षत्रधर्ममनुस्मरन् ॥

प्रजाः पालयन् राजा समैः समानैः उत्तमैः उत्कृष्टैः वा अधमैः शत्रुभिः आहूतः सन् क्षत्रधर्ममनुस्मरन् सङ्ग्रामात् न निवर्तेत । शुनीटी.

राजानं चावियोद्धारं ब्राह्मणं चाप्रवासिनम् ।
भूमिरेतौ निर्गिलति सर्पो बिलशयानिव ॥

सर्पः बिलशयान् गर्तशयान् इव भूमिः अवियोद्धारं युद्धविमुखं राजानम् अप्रवासिनं ब्राह्मणं च एतौ निर्गिलति नाशयतीत्यर्थः । शुनीटी.

ब्राह्मणस्यापि चाऽऽपत्तौ क्षत्रधर्मेण वर्ततः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंभवम् ॥

आपत्तौ आपदि स्ववृत्त्यनुपपत्तौ इत्यर्थः । क्षत्रधर्मेण क्षत्रियवृत्तिमाश्रित्य इत्यर्थः । वर्ततः जीवतः ब्राह्मणस्यापि जीवितं लोके प्रशस्तम् । हि यतः क्षत्रं ब्रह्मसंभवं ब्रह्मोत्पन्नम् । अतः ब्राह्मणस्य तत्कर्मकरणं न विरुद्धमिति भावः । शुनीटी.

अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् ।
विसृजञ् श्लेष्मपित्तानि कृपणं परिदेवयन् ॥
अविक्षतेन देहेन प्रलयं योऽधिगच्छति ।
क्षत्रियो नास्य तत् कर्म प्रशंसन्ति पुराविदः ॥

शय्यायां मरणं भवेत् इति यत् एषः क्षत्रियस्य अधर्मः । यः क्षत्रियः श्लेष्मपित्तानि श्लेष्माणि पित्तानि च विसृजन् त्यजन् तथा कृपणं परिदेवयन् विलपन् सन् अविक्षतेन देहेन प्रलयं नाशं गच्छति, पुराविदः इतिहासज्ञाः पण्डिताः अस्य क्षत्रियस्य तत् कर्म शय्यामरणरूपं न प्रशंसन्ति । शुनीटी.

न गेहे मरणं शस्तं क्षत्रियाणां विना रणात् ।
शौण्डीराणामशौण्डीरमधर्मं कृपणं हि तत् ॥

रणात् विना गृहे मरणं न शस्तं न प्रशस्तम् । हि यतः शौण्डीराणां गर्वशालिनां क्षत्रियाणां तत् कृपणं दीनम् आचरणम् अशौण्डीरं गर्वक्षयकरम् अधर्मं पापकरं च । शुनीटी.

रणेष्वकदनं कृत्वा ज्ञातिभिः परिवारितः ।
शस्त्रास्त्रैः सुविनिर्भिन्नः क्षत्रियो वधमर्हति ॥

क्षत्रियः ज्ञातिभिः स्वगणैः परिवारितः सन् रणेषु सङ्ग्रामेषु अकदनं शत्रोरदलनं कृत्वा शस्त्रास्त्रैः सुविनिर्भिन्नः सुविक्षतः सन् वधमर्हति । शुनीटी.

आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्-
मुखाः ॥

आहवेषु युद्धेषु मिथः एकान्ते अन्योन्यं परस्परं जिघांसन्तः हन्तुमिच्छन्तः परम् अत्यर्थं शक्त्या युध्यमानाः अपराङ्मुखाः अनिवृत्ताः स्वर्गं यान्ति । शुनीटी.

---

(१) राक. १३६; राप्र. ४०९.
(२) राक. १३६; राप्र. ४०८.
(३) शुनी. ४।७।३००–३३३.

**भर्तुरर्थे च यः शूरो विक्रमेद्वाहिनीमुखे।**
**भयान्न विनिवर्तेत तस्य स्वर्गो ह्यनन्तकः॥**

यः शूरः वीरः भर्तुः स्वामिनः अर्थे निमित्तं वाहिनीमुखे सेनानामग्रे विक्रमेत्, भयात् न निवर्तेत च, तस्य अनन्तकः अक्षयः स्वर्गः। हिशब्दश्चावधारणार्थकः।

शुनीटी.

**आहवे निहतं शूरं न शोचेत कदाचन।**
**निर्मुक्तः सर्वपापेभ्यः पूतो याति सलोकताम्॥**

आहवे युद्धे निहतं शूरं कदाचन न शोचेत। यतः स सर्वपापेभ्यः निर्मुक्तः, रणकर्मणेति भावः, अत एव पूतः सन् सलोकतां पुण्यवतां लोकमित्यर्थः, याति प्राप्नोति।

शुनीटी.

**वराप्सरःसहस्राणि शूरमायोधने हतम्।**
**त्वरमाणाः प्रधावन्ति मम भर्ता भवेदिति॥**

वराणां श्रेष्ठानाम् अप्सरसां सहस्राणि त्वरमाणाः सत्वराः सत्यः आयोधने युद्धे हतं शूरम् 'अयं मम भर्ता भवेत्' इति प्रधावन्ति।

शुनीटी.

**मुनिभिर्दीर्घतपसा प्राप्यते यत् पदं महत्।**
**युद्धाभिमुखनिहतैः शूरैस्तद् द्रागवाप्यते॥**

मुनिभिः दीर्घेण महता तपसा यत् महत् पदं प्राप्यते तत् युद्धाभिमुखनिहतैः युद्धे अभिमुखं यथा तथा निहतैः शूरैः द्राक् झटिति अवाप्यते प्राप्यते।

शुनीटी.

**एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः।**
**चत्वार आश्रमास्तस्य यो युद्धे न पलायते॥**

यः युद्धे न पलायते तत्तत् (? तस्य) एतत् युद्धादपलायनमित्यर्थः, तपः तपश्चरणं पुण्यं सनातनः नित्यः धर्मः। तथा चत्वारः आश्रमाः चातुराश्रम्यजनितधर्मानुष्ठानमित्यर्थः।

शुनीटी.

**न हि शौर्यात् परं किंचित् त्रिषु लोकेषु विद्यते।**
**शूरः सर्वं पालयति शूरे सर्वं प्रतिष्ठितम्॥**

त्रिषु लोकेषु शौर्यात् परं किंचित् न हि विद्यते। यतः शूरः सर्वं जनं पालयति, शूरे च सर्वं प्रतिष्ठितम्।

शुनीटी.

**चराणामचरा अन्नमदंष्ट्रा दंष्ट्रिणामपि।**
**अपाणयः पाणिमतामन्नं शूरस्य कातराः॥**

चराणां गोमनुष्यादीनाम् अचराः व्रीहियवादयः अन्नम्। दंष्ट्रिणां व्याघ्रादीनाम् अदंष्ट्राः गवादयः अन्नम्। पाणिमतां हस्तवताम् अपाणयः पाणिरहिताः अन्नम्। तथा शूरस्य वीरस्य कातराः अन्नम्।

शुनीटी.

**द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ।**
**परिव्राड् योगयुक्तो यो रणे चाभिमुखं हतः॥**

यः योगयुक्तः योगी परिव्राट् चतुर्थाश्रमी यश्च रणे अभिमुखं हतः इमौ द्वौ पुरुषौ लोके जगति सूर्यमण्डलभेदिनौ भवतः। सूर्यलोकादपि उत्कृष्टं लोकं प्राप्नुत इत्यर्थः।

शुनीटी.

अवध्यानां गुरुब्राह्मणादीनां युद्धे वधः न दोषः

**आत्मानं गोपयेच्छक्तो वधेनाप्याततायिनः।**
**सुविद्यब्राह्मणगुरोर्युद्धे श्रुतिनिदर्शनात्॥**

श्रुतिनिदर्शनात् वेदवचनात् शक्तः शक्तिमान् जनः युद्धे आततायिनः वधोद्यतस्य 'आततायी वधोद्यतः' इत्यमरः (३।४४)। सुविद्यस्य ब्राह्मणस्य गुरोरपि वधेन आत्मानं गोपयेत् रक्षेत्। उक्तं च मनुना– 'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्॥' (मस्मृ. ८।३५०) इति। आततायिनश्च उक्ता यथा– 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः॥' (वस्मृ. ३।१९) इति।

शुनीटी.

**आचार्या वै कारुणिकाः प्राज्ञाश्चापापदर्शिनः।**
**नैते महाभये प्राप्ते संप्रष्टव्याः कथंचन॥**

महाभये प्राप्ते उपस्थिते सति कारुणिकाः दयावन्तः अपापदर्शिनः निष्पापाः प्राज्ञाः आचार्याः गुरवः च एते कथंचन न संप्रष्टव्याः। तेषु पृष्टेषु प्रतीकारस्यासंभवादिति भावः।

शुनीटी.

**प्रासादेषु विचित्रेषु गोष्ठीषूपवनेषु च।**
**कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः॥**

विचित्रेषु प्रासादेषु राजभवनेषु गोष्ठीषु सभासु तथा उपवनेषु विनोदनस्थानेषु इति भावः, विचित्राः कथाः

कुर्वाणाः पण्डिताः तत्र तेषु तेषु प्रदेशेषु इत्यर्थः, शोभनाः शोभां प्राप्नुवन्तीत्यर्थः । शुनीटी.

**बह्वन्याश्चर्यरूपाणि कुर्वाणा जनसंसदि ।**
***ईड्यास्त्रे चोपसंधाने पण्डितास्तत्र शोभनाः ॥**

जनसंसदि जनानां सभासु बहूनि आश्चर्यरूपाणि कर्माणीत्यर्थः, कुर्वाणाः अस्त्रे च विषये उपसंधाने अस्त्राणां प्रयोगे इत्यर्थः, पण्डिताः कुशलाः जनाः तत्र तत्र विषये शोभनाः ईड्याः पूज्याश्च । शुनीटी.

**परेषां विवरज्ञाने मनुष्यचरितेषु च ।**
**हस्त्यश्वरथचर्यासु खरोष्ट्राजाविकर्मणि ॥**
**गोधनेषु प्रतोलीषु स्वयंवरमुखेषु च ।**
**अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः ॥**

परेषां शत्रूणां विवरज्ञाने छिद्रावबोधे, मनुष्याणां चरितेषु, हस्तिनाम् अश्वानां रथानां च चर्यासु प्रक्रियासु, खराणां गर्दभानाम् उष्ट्राणाम् अजानाम् अवीनां मेषाणां च कर्मणि, गोधनेषु प्रतोलीषु रथ्यासु स्वयंवरमुखेषु स्वयंवरप्रभृतिषु तथा अन्नसंस्कारदोषेषु रन्धनविषयकदोषेषु ये पण्डिताः निपुणाः ते तत्र तेषु तेषु विषयेषु शोभनाः शोभां प्राप्नुवन्तीत्यर्थः । शुनीटी.

**पण्डितान् पृष्ठतः कृत्वा परेषां गुणवादिनः ।**
**अरेश्चित्तगुणाञ् ज्ञात्वा न सैन्ये भङ्गशङ्कया ।**
**विधीयतां तथा नीतिर्यथा वध्यो भवेत् परः ॥**

परेषां शत्रूणां गुणवादिनः गुणपक्षपातिनः पण्डितान् पृष्ठतः कृत्वा अविगणय्य इत्यर्थः, अरेः शत्रोः चित्त-गुणान् मनोभावान् ज्ञात्वा (न सैन्ये) भङ्गशङ्कया 'रणात् भग्नो मा भूत्' इति शङ्कया अभिप्रायेण तथा नीतिः विधीयतां यथा परः शत्रुः वध्यः भवेत् । शुनीटी.

**आततायित्वमापन्नो ब्राह्मणः शूद्रवत् स्मृतः ।**
**नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन ॥**

आततायित्वम् आततायिभावम् आपन्नः प्राप्तः, वधोद्यत इत्यर्थः, ब्राह्मणः शूद्रवत् स्मृतः । आततायिनः वधे हन्तुः घातकस्य कश्चन दोषः न भवति । शुनीटी.

**उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।**
**निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥**

शस्त्रम् उद्यम्य आयान्तम् आततायिनं भ्रूणं ब्राह्मण-मपि निहत्य भ्रूणहा न स्यात् । अहत्वा तु भ्रूणहा भवेत् । शुनीटी.

**उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ।**
**यो हन्यात् समरे क्रुद्धं युध्यन्तमपलायितम् ।**
**ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः ॥**

यः समरे उद्यतेषुम् उद्यतास्त्रं क्रुद्धं क्षत्रबन्धुवत् क्षत्रियमिव युध्यन्तम् अपलायितं ब्राह्मणं दृष्ट्वा हन्यात् तस्य ब्रह्महत्या न स्यात्, धर्मेषु धर्मशास्त्रेषु इति निश्चयः । शुनीटी.

युद्धात् निवर्तनम् अधर्मः

**अपसरति यो युद्धाज्जीवितार्थी नराधमः ।**
**जीवन्नेव मृतः सोऽपि भुङ्क्ते राष्ट्रकृतं त्वघम् ॥**

यः नराधमः जीवितार्थी सन् युद्धात् अपसरति सः जीवन्नेव मृतः सन् राष्ट्रे राज्ये कृतम् अघं पापं भुङ्क्ते । शुनीटी.

**मित्रं वा स्वामिनं त्यक्त्वा निर्गच्छति रणाच्च यः ।**
**सोऽन्ते नरकमाप्नोति सजीवो निन्द्यतेऽखिलैः ॥**

यः मित्रं वा स्वामिनं त्यक्त्वा रणात् निर्गच्छति पलायते सः अन्ते देहावसाने नरकमाप्नोति, सजीवः जीवन् अखिलैः समस्तैः लोकैः निन्द्यते च । शुनीटी.

**मित्रमापद्गतं दृष्ट्वा सहायं न करोति यः ।**
**अकीर्तिं लभते सोऽत्र मृतो नरकमृच्छति ॥**

यः मित्रम् आपद्गतं विपन्नं दृष्ट्वा सहायं साहाय्यं न करोति, सः अत्र इह लोके अकीर्तिं लभते मृतश्च नरकमाप्नोति । शुनीटी.

---

* 'ईड्यास्त्रे' इत्यत्र 'इज्यास्त्रे' इति पुस्तकान्तरपाठः समीचीनः । 'ईड्य' इत्यत्र सुपो लुक् छान्दस इति टीका-काराभिप्रायः स्यात् ।

**विश्रम्भाच्छरणं प्राप्तं यः संत्यजति दुर्मतिः ।**
**स याति नरके घोरे यावदिन्द्राश्चतुर्दश ॥**

यः दुर्मतिः विश्रम्भात् विश्वासात् शरणं प्राप्तं जनं संत्यजति स यावत् चतुर्दश इन्द्राः । तिष्ठन्तीति शेषः । तावत्कालमित्यर्थः । घोरे नरके याति गच्छति ।

शुनीटी.

निमित्तविशेषे ब्राह्मणस्यापि युद्धं धर्मः

**सुदुर्वृत्तं यदा क्षत्रं नाशयेयुस्तु ब्राह्मणाः ।**
**युद्धं कृत्वाऽपि शस्त्रास्त्रैर्न तदा पापभाजिनः ॥**

यदा तु ब्राह्मणाः शस्त्रास्त्रैः युद्धं कृत्वा सुदुर्वृत्तम् अतिदुराशयं क्षत्रं क्षत्रियं नाशयेयुः तदा ते पापभाजिनः न भवन्तीत्यर्थः ।

शुनीटी.

**हीनं यदा क्षत्रकुलं नीचैर्लोकः प्रपीड्यते ।**
**तदाऽपि ब्राह्मणा युद्धे नाशयेयुस्तु तान् द्रुतम् ॥**

यदा तु हीनं क्षत्रकुलं नीचैः अधमैः *लोकैः प्रपीड्यते अभिभूयते तदाऽपि ब्राह्मणाः युद्धे तान् नीचान् लोकान् द्रुतं शीघ्रं नाशयेयुः ।

शुनीटी.

युद्धनियमाः

**[1]गजो गजेन यातव्यस्तुरगेण तुरंगमः ।**
**रथेन च रथो योज्यः पत्तिना पत्तिरेव च ।**
**एकेनैकश्च शस्त्रेण शस्त्रमस्त्रेण वाऽस्त्रकम् ॥**

गजेन गजारूढेन गजः गजारूढः रिपुः, तथा तुरगेण अश्वारूढेन तुरंगमः अश्वारूढः रिपुः यातव्यः । रथेन रथिना इत्यर्थः, रथः रथी, पत्तिना पदातिना पत्तिः पदातिः रिपुः योज्यः योधनीयः । तथा एकेन वीरेण एकः योज्यः । शस्त्रेण शस्त्रम् अस्त्रेण च अस्त्रम् । निवारणीयमिति शेषः ।

शुनीटी.

युद्धे वध्यावध्यविवेकः

**न च हन्यात् स्थलारूढं न क्लीबं न कृताञ्जलिम् ।**
**न मुक्तकेशमासीनं न तवास्मीति वादिनम् ॥**
**न सुप्तं न विसंनाहं न नग्नं न निरायुधम् ।**
**न युध्यमानं पश्यन्तं युध्यमानं परेण च ॥**
**पिबन्तं न च भुञ्जानमन्यकार्याकुलं न च ।**
**न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥**

सतां साधूनां धर्मं युद्धधर्मम् अनुस्मरन् जनः स्थलारूढं भयेन कमपि देशमाश्रितं न, क्लीबं न, कृताञ्जलिं बद्धाञ्जलिपुटं न, मुक्तकेशं स्खलितकेशबन्धं न, आसीनम् उपविष्टं न, तथा तव अस्मि अहं तवाधीनः भवामि इति वादिनम् ( न ), सुप्तं निद्रितं न, विसंनाहम् अबद्धपरिकरं न, नग्नं न, निरायुधं न आयुधरहितं न, अयुध्यमानं न, पश्यन्तं दर्शकं न, परेण अन्येन सह युध्यन्तं ( ? युध्यमानं ) न, पिबन्तं न, भुञ्जानं न, अन्यकार्येषु आकुलं न, भीतं न, परावृत्तं विमुखं च न हन्यात् ।

शुनीटी.

**वृद्धो बालो न हन्तव्यो नैव स्त्री केवलो नृपः ।**
**यथायोग्यं तु संयोज्य निघ्नन् धर्मो न हीयते ॥**

वृद्धः बालः शिशुश्च न, तथा स्त्री स्त्रीलोकः, तथा केवलः निःसहायः नृपश्च न हन्तव्यः । यथायोग्यं संयोज्य वीरभावेन मिलित्वा निघ्नन् जनः धर्मात् न हीयते ।

शुनीटी.

**धर्मयुद्धे तु कूटे वै न सन्ति नियमा अमी ॥**

धर्मयुद्धे तु, पूर्वोक्तनियमः बोद्धव्य इति शेषः । कूटे कपटमये तु युद्धे अमी नियमाः न सन्ति ।

शुनीटी.

## योगयात्रा

धर्मयुद्धे अवध्याः

**[1]नाऽऽर्ता न भीता न तृणाननाश्च**
**विमुक्तशस्त्राः प्रपलायमानाः ।**
**क्षीणायुधा वाजिगजावतीर्णा**
**ह्येते न वध्या न च पीडनीयाः ॥**

* 'लोकैः' इति तृतीयान्तपाठो निर्मूलः अस्वरसश्च । 'हीनं यदा क्षत्रकुलम्' इति पृथग्वाक्यम् । हीनं लोकरक्षणायासमर्थमित्यर्थः । नीचैरिति कर्तृपदम्, लोक इति कर्मपदम् ।

(१) शुनी. ४।७।३५४-३५९.

(१) योया. १७।५-६.

कुलैकतन्तुः शरणं गतो वा
कृताञ्जलिर्यश्च वदेत्तवास्मि ।
न युद्धधर्मानवगम्य हन्या-
न्न बालकान् स्त्रीपरिरक्षितांश्च ॥

## नीतिवाक्यामृतम्

अवध्यवधे दोषः

**[1]रणेषु भीतमशस्त्रं च हिंसन् ब्रह्महा भवति ॥**

अथ सङ्ग्रामे भीतम् अशस्त्रं च बध्नतः यद्भवति तदाह–रणेष्विति । भवति जायते । कोऽसौ ? पुरुषः । किं कुर्वन् ? हिंसन् घ्नन् । कम् ? भीतं चकितम् । तथा अशस्त्रं भग्नशस्त्रं शस्त्ररहितं वा । ( किंविशिष्टः पुरुषो भवति ? ब्रह्महा । ) तथा च जैमिनिः–' भग्नशस्त्रं तथा त्रस्तं तवास्मीति च वादिनम् । यो हन्याद्वैरिणं संख्ये ब्रह्महत्यां समश्नुते ॥ ' । नीवाटी.

( १ ) नीवा. ३०।७५,९४–९५.

युद्धे मरणं स्वर्ग्यम्

**स्वामिनः पुरःसरणं युद्धेऽश्वमेधसमम् ॥**

अथ स्वामिनो युध्यमानस्य पुरतो युध्यतः सेवकस्य यद्भवति तदाह–स्वामिन इति । स्वामिनः प्रभोः युद्धे सङ्ग्रामे यत् पुरःसरणम् अग्रतो गमनं तत् किंविशिष्टम् ? अश्वमेधसमम् अश्वमेधतुल्यम् । तथा च वसिष्ठः– ' स्वामिनः पुरतः संख्ये हन्यात्मानं च सेवकः । यत्प्रमाणानि यागानि तान्याप्नोति फलानि च ॥ ' । नीवाटी.

युद्धात् निवर्तनं अधर्मः

**युधि स्वामिनं परित्यजतो नास्तीहामुत्र च कुशलम् ॥**

अथ सङ्ग्रामे स्वामिनं त्यजतो यद्भवति तदाह–युधीति । नास्ति न विद्यते । किं तत् ? कुशलं कल्याणम् । कस्य ? सेवकस्य । कुत्र ? अस्मिँल्लोके परत्र च । किं कुर्वतः ? परित्यजतः । कम् ? स्वामिनम् । क ? युद्धे सङ्ग्रामे । तथा च भागुरिः– ' यः स्वामिनं परित्यज्य युद्धे याति पराङ्मुखः । इहाकीर्तिं परां प्राप्य मृतोऽपि नरकं व्रजेत् ॥ ' । नीवाटी.

# यात्रा-कूटयुद्धम्

## महाभारतम्

धर्मयुद्धेन हन्तुमशक्या द्रोणदुर्योधनादयः
अधर्मेण हताः कृष्णोपदेशात्

[1]त्रस्तान् कुन्तीसुतान् दृष्ट्वा द्रोणसायकपीडितान् ।
मतिमाञ्श्रेयसे युक्तः केशवोऽर्जुनमब्रवीत् ॥
[2]नैष युद्धेन सङ्ग्रामे जेतुं शक्यः कथंचन ।
अपि वृत्रहणा युद्धे रथयूथपयूथपः ॥
[3]सधनुर्धन्विनां श्रेष्ठो देवैरपि सवासवैः ।
न्यस्तशस्त्रस्तु सङ्ग्रामे शक्यो हन्तुं भवेन्नृभिः ॥
[4]आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डव ।
यथा वः संयुगे सर्वान्न हन्याद्रुक्मवाहनः ॥
[5]अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
तं हतं संयुगे कश्चिदस्मै शंसतु मानवः ॥
एतन्नारोचयद्राजन् कुन्तीपुत्रो धनंजयः ।
अन्ये त्वरोचयन् सर्वे कृच्छ्रेण तु युधिष्ठिरः ॥
ततो भीमो महाबाहुरनीके स्वे महागजम् ।
जघान गदया राजन्नश्वत्थामानमित्युत ॥
[6]परप्रमथनं घोरं मालवस्येन्द्रवर्मणः ॥

(१) भा. ७।१६४।६६; भामु. ७।१९०।९.

(२) भा. ७।१६४।६७; भामु. ७।१९०।१० युद्धेन (युद्धे न) पू.

(३) भामु. ७।१९०।१०–११.

(४) भा. ७।१६४।६८; भामु. ७।१९०।११–१२ पाण्डव (पाण्डवाः) वः (न).

(५) भा. ७।१६४।६९–७१; भामु. ७।१९०।१२–१५.

(६) भामु. ७।१९०।१५.

[1]भीमसेनस्तु सव्रीडमुपेत्य द्रोणमाहवे ।
अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह ॥
अश्वत्थामेति हि गजः ख्यातो नाम्ना हतोऽभवत् ।
कृत्वा मनसि तं भीमो मिथ्या व्याहृतवांस्तदा ॥
[2]भीमसेनवचः श्रुत्वा द्रोणस्तत्परमप्रियम् ।
मनसा सन्नगात्रोऽभूद्यथा सैकतमम्भसि ॥
[3]शङ्कमानः स तन्मिथ्या वीर्यज्ञः स्वसुतस्य वै ।
हतः स इति च श्रुत्वा नैव धैर्यादकम्पत ॥
स लब्ध्वा चेतनां द्रोणः क्षणेनैव समाश्वसत् ।
अनुचिन्त्याऽऽत्मनः पुत्रमविषह्यमरातिभिः ॥
[4]स दह्यमानो व्यथितः कुन्तीपुत्रं युधिष्ठिरम् ।
अहतं वा हतं वेति पप्रच्छ सुतमात्मनः ॥
[5]स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतम् ।
त्रयाणामपि लोकानामैश्वर्यार्थे कथंचन ॥
[6]तस्मात्तं परिपप्रच्छ नान्यं कंचिद्विशेषतः ।
तस्मिंस्तस्य हि सत्याशा बाल्यात्प्रभृति पाण्डवे ॥
[7]ततो निष्पाण्डवामुर्वीं करिष्यन्तं युधां पतिम् ।
द्रोणं ज्ञात्वा धर्मराजं गोविन्दो व्यथितोऽब्रवीत् ॥

(१) भा. ७।१६४।७२–७३; भामु. ७।१९०।१६–१७.

(२) भा. ७।१६४।७४; भामु. ७।१९०।१८ त्परम (त्परमा).

(३) भा. ७।१६४।७५–७६; भामु. ७।१९०।१९–२०.

(४) भा. ७।१६४।९४; भामु. ७।१९०।४२ स दह्य (संदिह्य).

(५) भा. ७।१६४।९५; भामु. ७।१९०।४३.

(६) भा. ७।१६४।९६; भामु. ७।१९०।४४ विशेषतः (द्विजर्षभः).

(७) भा. ७।१६४।९७–९८; भामु. ७।१९०।४५–४६.

यद्यर्धदिवसं द्रोणो युध्यते मन्युमास्थितः ।
सत्यं ब्रवीमि ते सेना विनाशं समुपैष्यति ॥
[1]स भवांस्त्रातु नो द्रोणात् सत्याज्ज्यायोऽनृतं भवेत् ।
अनृतं जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतैः ॥
[2]तयोः संवदतोरेवं भीमसेनोऽब्रवीदिदम् ।
श्रुत्वैव तं महाराज वधोपायं महात्मनः ॥
[3]गाहमानस्य ते सेनां मालवस्येन्द्रवर्मणः ।
अश्वत्थामेति विख्यातो गजः शक्रगजोपमः ॥
निहतो युधि विक्रम्य ततोऽहं द्रोणमब्रुवम् ।
अश्वत्थामा हतो ब्रह्मन्निवर्तस्वाऽऽहवादिति ॥
नूनं नाश्रद्दधद्वाक्यमेष मे पुरुषर्षभः ।
स त्वं गोविन्दवाक्यानि मानयस्व जयैषिणः ॥
[4]द्रोणाय निहतं शंस राजञ्शारद्वतीसुतम् ।
त्वयोक्तो नैष युध्येत जातु राजन् द्विजर्षभः ।
सत्यवान् हि नृलोकेऽस्मिन् भवान् ख्यातो जनाधिप ॥
[5]तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः ।
भावित्वाच्च महाराज वक्तुं समुपचक्रमे ॥
तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
अव्यक्तमब्रवीद्राजन् हतः कुञ्जर इत्युत ॥
[6]तस्य पूर्वं रथः पृथ्व्याश्चतुरङ्गुल उत्तरः ।
बभूवैवं तु तेनोक्ते तस्य वाहास्पृशन् महीम् ॥

[1]युधिष्ठिरात्तु तद्वाक्यं श्रुत्वा द्रोणो महारथः ।
पुत्रव्यसनसंतप्तो निराशो जीवितेऽभवत् ॥
[2]आगस्कृतमिवाऽऽत्मानं पाण्डवानां महात्मनाम् ।
ऋषिवाक्यं च मन्वानः श्रुत्वा च निहतं सुतम् ॥
[3]विचेताः परमोद्विग्नो धृष्टद्युम्नमवेक्ष्य च ।
योद्धुं नाशक्नुवद्राजन् यथापूर्वमरिंदम ॥ *

संजय उवाच–

[4]समुदीर्णं ततो दृष्ट्वा सङ्ग्रामं कुरुमुख्ययोः ।
अथाब्रवीदर्जुनस्तु वासुदेवं यशस्विनम् ॥
अनयोर्वीरयोर्युद्धे को ज्यायान् भवतो मतः ।
कस्य वा को गुणो भूयानेतद्वद जनार्दन ॥

वासुदेव उवाच–

[5]उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः ।
कृतयत्नतरस्त्वेष धार्तराष्ट्रो वृकोदरात् ॥
[6]भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति ।
अन्यायेन तु युध्यन् वै हन्यादेष सुयोधनम् ॥
[7]मायया निर्जिता देवैरसुरा इति नः श्रुतम् ।
विरोचनश्च शक्रेण मायया निर्जितः सखे ।
मायया चाक्षिपत्तेजो वृत्रस्य बलसूदनः ॥

(१) भा. ७।१६४।९९; भासु. ७।१९०।४७ भवेत् (वचः).

(२) भा. ७।१६४।१००; भासु. ७।१९०।४८ त्वैव तं (त्वैवं तु).

(३) भा. ७।१६४।१०१–१०३ ; भासु. ७।१९०।४९–५२.

(४) भा. ७।१६४।१०४ ; भासु. ७।१९०।५२–५३ नैष (नैव) नृलोके (त्रिलोके).

(५) भा. ७।१६४।१०५–१०६ ; भासु. ७।१९०।५४–५५.

(६) भा. ७।१६४।१०७ ; भासु. ७।१९०।५६ ल उत्तरः (लमुच्छ्रितः) तु (च) वाहा (वाहाः).

* अत्रोपवर्णित एवार्थः कृपेणाश्वत्थामानं प्रति भा. ७।१६५।१०८–११७ इत्यत्रानूदितः ।

(१) भा. ७।१६४।१०८ ; भासु. ७।१९०।५७.

(२) भा. ७।१६४।१०९ ; भासु. ७।१९०।५८ वाक्यं च (वाक्येन).

(३) भा. ७।१६४।११० ; भासु. ७।१९०।५९ दम (दमः).

(४) भा. ९।५७।१–२ ; भासु. ९।५८।१–२.

(५) भा. ९।५७।३ ; भासु. ९।५८।३ कृतयत्नतर (कृती यत्नपर).

(६) भा. ९।५७।४ ; भासु. ९।५८।४ हन्यादेष (हन्यादेव).

(७) भा. ९।५७।५ ; भासु. ९।५८।५–६ चनश्च (चनस्तु) सखे (स वै).

[1]तस्मान्मायामयं भीम आतिष्ठतु पराक्रमम् ॥
[2]प्रतिज्ञातं तु भीमेन द्यूतकाले धनंजय ।
ऊरू भेत्स्यामि ते संख्ये गदयेति सुयोधनम् ॥
[3]सोऽयं प्रतिज्ञां तां चापि पारयित्वाऽरिकर्शनः ।
मायाविनं च राजानं माययैव निकृन्ततु ॥
[4]यद्येष बलमास्थाय न्यायेन प्रहरिष्यति ।
विषमस्थस्ततो राजा भविष्यति युधिष्ठिरः ॥

दुर्योधनदर्शितः विवेकः– धर्म्यम् ऋजुयुद्धम् अधर्म्यं जिह्मयुद्धं चेति, जिह्मयुद्धस्य वासुदेवकृतं समर्थनम्

[5]प्राणान्तकरणीं घोरां वेदनामविचिन्तयन् ।
दुर्योधनो वासुदेवं वाग्भिरुग्राभिरार्दयत् ॥
[6]कंसदासस्य दायाद न ते लज्जाऽस्त्यनेन वै ।
अधर्मेण गदायुद्धे यदहं विनिपातितः ॥
ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्या प्रयच्छता ।
किं न विज्ञातमेतन्मे यदर्जुनमवोचथाः ॥
घातयित्वा महीपालानृजुयुद्धान् सहस्रशः ।
जिह्मैरुपायैर्बहुभिर्न ते लज्जा न ते घृणा ॥
अहन्यहनि शूराणां कुर्वाणः कदनं महत् ।
शिखण्डिनं पुरस्कृत्य घातितस्ते पितामहः ॥
[7]अश्वत्थाम्नः सनामानं हत्वा नागं सुदुर्मते ।
आचार्यो न्यासितः शस्त्रं किं तन्न विदितं मम ॥

(१) भामु. ९।५८।६.

(२) भा. ९।५७।६ ; भामु. ९।५८।७ तु ( च ).

(३) भा. ९।५७।७ ; भामु. ९।५८।८ द्वितीयचरणे ( पालयत्वरिकर्षणः ) च ( तु ).

(४) भा. ९।५७।८; भामु. ९।५८।९.

(५) भा. ९।६०।२६; भामु. ९।६१।२६–२७ करणीं ( करिणीं ) मविचि ( मप्यचि ).

(६) भा. ९।६०।२७–३०; भामु.९।६१।२७–३१.

(७) भा. ९।६०।३१; भामु. ९।६१।३१–३२ मम ( मया ).

[1]स चानेन नृशंसेन धृष्टद्युम्नेन वीर्यवान् ।
पात्यमानस्त्वया दृष्टो न चैनं त्वमवारयः ॥
[2]वधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च ।
घटोत्कचे व्यंसयथाः कस्त्वत्तः पापकृत्तमः ॥
[3]छिन्नबाहुः प्रायगतस्तथा भूरिश्रवा बली ।
त्वया निसृष्टेन हतः शैनेयेन दुरात्मना ॥
[4]कुर्वाणश्चोत्तमं कर्म कर्णः पार्थजिगीषया ।
व्यंसनेनाश्वसेनस्य पन्नगेन्द्रसुतस्य वै ॥
[5]पुनश्च पतिते चक्रे व्यसनार्तः पराजितः ।
पातितः समरे कर्णश्चक्रव्यग्रोऽग्रणीर्नृणाम् ॥
[6]यदि मां चापि कर्णं च भीष्मद्रोणौ च संयुगे ।
ऋजुना प्रतियुध्येथा न ते स्याद्विजयो ध्रुवम् ॥
[7]त्वया पुनरनार्येण जिह्ममार्गेण पार्थिवाः ।
स्वधर्ममनुतिष्ठन्तो वयं चान्ये च घातिताः ॥

वासुदेव उवाच–

[8]हतस्त्वमसि गान्धारे सभ्रातृसुतबान्धवः ।
सगणः ससुहृच्चैव पापमार्गमनुष्ठितः ॥
[9]तवैव दुष्कृतैर्वीरौ भीष्मद्रोणौ निपातितौ ।
कर्णश्च निहतः संख्ये तव शीलानुवर्तकः ॥

(१) भा. ९।६०।३२; भामु. ९।६१।३२–३३.

(२) भा. ९।६०।३३; भामु. ९।६१।३३–३४ यथाः ( यतः ).

(३) भा. ९।६०।३४; भामु.९।६१।३४–३५ बाहुः ( हस्तः ) निसृ ( ऽभिसृ ) दुरा ( महा ).

(४) भा. ९।६०।३५ ; भामु. ९।६१।३५–३६ न्द्रसुतस्य वै ( न्द्रस्य वै पुनः ).

(५) भा. ९।६०।३६ ; भामु. ९।६१।३६–३७.

(६) भा. ९।६०।३७ ; भामु. ९।६१।३७–३८ युगे ( युतौ ).

(७) भा. ९।६०।३८ ; भामु. ९।६१।३८–३९.

(८) भा. ९।६०।३९ ; भामु. ९।६१।३९–४० पापमार्गं ( पापं मार्गं ).

(९) भा. ९।६०।४० ; भामु. ९।६१।४०–४१.

[1]याच्यमानो मया मूढ पित्र्यमंशं न दित्ससि ।
पाण्डवेभ्यः स्वराज्यार्धं लोभाच्छकुनि-
निश्चयात् ॥

[2]विषं ते भीमसेनाय दत्तं सर्वे च पाण्डवाः ।
प्रदीपिता जतुगृहे मात्रा सह सुदुर्मते ॥
[3]सभायां याज्ञसेनी च कृष्टा द्यूते रजस्वला ।
तदैव तावद् दुष्टात्मन् वध्यस्त्वं निरपत्रपः ॥
[4]अनक्षज्ञं च धर्मज्ञं सौबलेनाक्षवेदिना ।
निकृत्या यत्पराजैषीस्तस्मादसि हतो रणे ॥
[5]जयद्रथेन पापेन यत्कृष्णा क्लेशिता वने ।
यातेषु मृगयां तेषु तृणबिन्दोरथाऽऽश्रमे ॥
[6]अभिमन्युश्च यद्बाल एको बहुभिराहवे ।
त्वद्दोषैर्निहतः पाप तस्मादसि हतो रणे ॥
[7]यान्यकार्याणि चास्माकं कृतानीति प्रभाषसे ॥
वैगुण्येन तवात्यर्थं सर्वं हि तदनुष्ठितम् ।
बृहस्पतेरुशनसो नोपदेशः श्रुतस्त्वया ॥
वृद्धा नोपासिताश्चैव हितं वाक्यं न ते श्रुतम् ।
लोभेनातिबलेन त्वं तृष्णया च वशीकृतः ॥
कृतवानस्य कार्याणि विपाकस्तस्य भुज्यताम् ॥

दुर्योधन उवाच–

[8]अधीतं विधिवद्दत्तं भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां को नु स्वन्ततरो मया ॥
यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुपश्यताम् ।
तदिदं निधनं प्राप्तं को नु स्वन्ततरो मया ॥
देवार्हा मानुषा भोगाः प्राप्ता असुलभा नृपैः ।
ऐश्वर्यं चोत्तमं प्राप्तं को नु स्वन्ततरो मया ॥
[1]ससुहृत्सानुबन्धश्च स्वर्गं गन्ताऽहमच्युत ।
यूयं विहतसंकल्पाः शोचन्तो वर्तयिष्यथ ॥

संजय उवाच–

[2]अस्य वाक्यस्य निधने कुरुराजस्य भारत ।
अपतत्सुमहद्वर्षं पुष्पाणां पुण्यगन्धिनाम् ॥
[3]अवादयन्त गन्धर्वा जगुश्चाप्सरसां गणाः ।
सिद्धाश्च मुमुचुर्वाचः साधु साध्विति भारत ॥
[4]ववौ च सुरभिर्वायुः पुण्यगन्धो मृदुः सुखः ।
व्यराजतामलं चैव नभो वैडूर्यसंनिभम् ॥
[5]अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः ।
दुर्योधनस्य पूजां च दृष्ट्वा व्रीडामुपागमन् ॥
[6]हतांश्चाधर्मतः श्रुत्वा शोकार्ताः शुशुचुर्हि ते ।
भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च ॥
[7]तांस्तु चिन्तापरान् दृष्ट्वा पाण्डवान् दीन-
चेतसः ।
प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः ॥

---

(१) भा. ९।६०।४१ ; भामु. ९।६१।४१–४२ मानो ( मानं ) राज्यार्धं ( राज्यं च ).

(२) भा. ९।६०।४२ ; भामु. ९।६१।४२–४३.

(३) भा. ९।६०।४३ ; भामु. ९।६१।४३–४४ त्रपः ( त्रप ).

(४) भा. ९।६०।४४ ; भामु. ९।६१।४४–४५.

(५) भा. ९।६०।४५ ; भामु. ९।६१।४५–४६ यातेषु ( या तेषु ) तेषु ( चैव ) श्रमे ( श्रमम् ).

(६) भा. ९।६०।४६ ; भामु. ९।६१।४६–४७.

(७) भामु. ९।६१।४७–५०.

(८) भा. ९।६०।४७–४९ ; भामु. ९।६१।५०–५३.

(१) भा. ९।६०।५० ; भामु. ९।६१।५३–५४ नुबन्धश्च ( नुगश्चैव ) विहत ( निहत ).

(२) भा. ९।६०।५१ ; भामु. ९।६१।५४–५५ भारत ( धीमतः ).

(३) भा. ९।६०।५२ ; भामु. ९।६१।५५–५६ पूर्वार्धे ( अवादयन्त गन्धर्वा वादित्रं सुमनोहरम् ॥ जगुश्चाप्सरसो राज्ञो यशः संबद्धमेव च । ) भारत ( पार्थिव ).

(४) भा. ९।६०।५३ ; भामु. ९।६१।५७ तृतीयचरणे ( व्यराजंश्च दिशः सर्वा ) वैडू ( वैदू ).

(५) भा. ९।६०।५४ ; भामु. ९।६१।५८ च ( तु ).

(६) भा. ९।६०।५५ ; भामु. ९।६१।५९.

(७) भा. ९।६०।५६ ; भामु. ९।६१।६० निस्व ( निःस्व ).

[1]नैष शक्योऽतिशीघ्रास्त्रस्ते च सर्वे महारथाः ।
ऋजुयुद्धेन विक्रान्ता हन्तुं युष्माभिराहवे ॥

[2]नैष शक्यः कदाचित्तु हन्तुं धर्मेण पार्थिवः ।
ते वा भीष्ममुखाः सर्वे महेष्वासा महारथाः ॥

मयाऽनेकैरुपायैस्तु मायायोगेन चासकृत् ।
हतास्ते सर्व एवाऽऽजौ भवतां हितमिच्छता ॥

यदि नैवंविधं जातु कुर्यां जिह्ममहं रणे ।
कुतो वो विजयो भूयः कुतो राज्यं कुतो धनम् ॥

[3]उपाया विहिता ह्येते मया तस्मान्नराधिपाः ।
अन्यथा पाण्डवेयानां नाभविष्यज्जयः क्वचित् ॥

[4]ते हि सर्वे महात्मानश्चत्वारोऽतिरथा भुवि ।
न शक्या धर्मतो हन्तुं लोकपालैरपि स्वयम् ॥

तथैवायं गदापाणिर्धार्तराष्ट्रो गतक्लमः ।
न शक्यो धर्मतो हन्तुं कालेनापीह दण्डिना ॥

[5]न च वो हृदि कर्तव्यं यदयं घातितो नृपः ।
मिथ्यावध्यास्तथोपायैर्बहवः शत्रवोऽधिकाः ॥

[6]पूर्वैरनुगतो मार्गो देवैरसुरघातिभिः ।
सद्भिश्चानुगतः पन्थाः स सर्वैरनुगम्यते ॥

अश्वत्थामकृतः अधर्म्यः सुप्तानाम् अवध्यानां वधः

[7]क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत ।
नैव स्म स जगामाथ निद्रां सर्प इव श्वसन् ॥

[1]न लेभे स तु निद्रां वै दह्यमानोऽतिमन्युना ।
वीक्षांचक्रे महाबाहुस्तद्वनं घोरदर्शनम् ॥

[2]वीक्षमाणो वनोद्देशं नानासत्त्वैर्निषेवितम् ।
अपश्यत महाबाहुर्न्यग्रोधं वायसायुतम् ॥

[3]तत्र काकसहस्राणि तां निशां पर्यणामयन् ।
सुखं स्वपन्तः कौरव्य पृथक् पृथगपाश्रयाः ॥

पर्यणामयन् परिणीतवन्तः आसन् । नीटी.

[4]सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः ।
सोऽपश्यत् सहसाऽऽयान्तमुलूकं घोरदर्शनम् ॥

[5]महास्वनं महाकायं हर्यक्षं बभ्रुपिङ्गलम् ।
सुदीर्घघोणानखरं सुपर्णमिव वेगिनम् ॥

हर्यक्षं हरिन्मणिनिभलोचनम् । घोणा नासा । नखरः तीक्ष्णनखः । नीटी.

[6]सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः ।
न्यग्रोधस्य ततः शाखां प्रार्थयामास भारत ॥

संनिपत्य तु शाखायां न्यग्रोधस्य विहंगमः ।
सुप्ताञ्जघान सुबहून् वायसान् वायसान्तकः ॥

केषांचिदच्छिनत् पक्षाञ्शिरांसि च चकर्त ह ।
चरणांश्चैव केषांचिद् बभञ्ज चरणायुधः ॥

---

(१) भा. ९।६०।५७ ; भामु. ९।६१।६१.

(२) भामु. ९।६१।६२–६४.

(३) भा. ९।६०।५८.

(४) भा. ९।६०।५९–६० ; भामु. ९।६१।६५–६६.

(५) भा. ९।६०।६१; भामु. ९।६१।६७ नृपः (रिपुः).

(६) भा. ९।६०।६२ ; भामु. ९।६१।६८.

(७) भा. १०।१।३२ ; भामु. १०।१।३३ वशं (शतं).

(१) भा. १०।१।३३ ; भामु. १०।१।३४ नोऽति (नो हि).

(२) भा. १०।१।३४ ; भामु. १०।१।३५ सायुतम् (सैर्युतम्).

(३) भा. १०।१।३५ ; भामु. १०।१।३६ स्वपन्तः (स्वपन्ति) गपा (गुपा).

(४) भा. १०।१।३६ ; भामु. १०।१।३७ विस्र (विश्र).

(५) भा. १०।१।३७ ; भामु. १०।१।३८ गिनम् (गितम्)

(६) भा. १०।१।३८–४० ; भामु. १०।१।३९–४१.

[1]क्षणेनाहन् स बलवान् येऽस्य दृष्टिपथे स्थिताः।
तेषां शरीरावयवैः शरीरैश्च विशां पते।
न्यग्रोधमण्डलं सर्वं संछन्नं सर्वतोऽभवत्॥

[2]तांस्तु हत्वा ततः काकान् कौशिको मुदितो-
ऽभवत्।
प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः॥

[3]तद् दृष्ट्वा सोपधं कर्म कौशिकेन कृतं निशि।
तद्भावकृतसंकल्पो द्रौणिरेको व्यचिन्तयत्॥

सोपधं सकपटम्। तद्भावे कपटभावे। नीटी.

[4]उपदेशः कृतोऽनेन पक्षिणा मम संयुगे।
शत्रूणां क्षपणे युक्तः प्राप्तकालश्च मे मतः॥

'दुर्जनाचरितं मार्गं प्रमाणं कुर्वते खलाः। विश्वस्तान् हिंसितुं द्रौणिरुलूकमकरोद् गुरुम्॥'। नीटी.

[5]नाद्य शक्या मया हन्तुं पाण्डवा जितकाशिनः।
बलवन्तः कृतोत्साहा लब्धलक्षाः प्रहारिणः।
राज्ञः सकाशे तेषां च प्रतिज्ञातो वधो मया॥

[6]पतङ्गाग्निसमां वृत्तिमास्थायाऽऽत्मवि-
नाशिनीम्।
न्यायतो युध्यमानस्य प्राणत्यागो न संशयः।
छद्मना तु भवेत् सिद्धिः शत्रूणां च क्षयो
महान्॥

(१) भा. १०।१।४१; भामु. १०।१।४२–४३ नाहन् स (नाहनद्).

(२) भा. १०।१।४२; भामु. १०।१।४३–४४.

(३) भा. १०।१।४३; भामु. १०।१।४४–४५ तद्भावकृ (तद्भावे कृ) व्यचि (ऽन्वचि).

(४) भा. १०।१।४४; भामु. १०।१।४५–४६ प्राप्त (प्राप्तः).

(५) भा. १०।१।४५; भामु. १०।१।४६–४७ लब्ध (प्राप्त) काशे ते (काशात्ते) च (तु).

(६) भा. १०।१।४६; भामु. १०।१।४८–४९ तु (च).



[1]तत्र संशयितादर्थाद् योऽर्थो निःसंशयो
भवेत्।
तं जना बहु मन्यन्ते येऽर्थशास्त्रविशारदाः॥

[2]यच्चाप्यत्र भवेद्वाच्यं गर्हितं लोकनिन्दितम्।
कर्तव्यं तन्मनुष्येण क्षत्रधर्मेण वर्तता॥

[3]निन्दितानि च सर्वाणि कुत्सितानि पदे पदे।
सोपधानि कृतान्येव पाण्डवैरकृतात्मभिः॥

[4]अस्मिन्नर्थे पुरा गीतौ श्रूयेते धर्मचिन्तकैः।
श्लोकौ न्यायमवेक्षद्भिस्तत्त्वार्थं तत्त्वदर्शिभिः॥

[5]परिश्रान्ते विदीर्णे च भुञ्जाने चापि शत्रुभिः।
प्रस्थाने च प्रवेशे च प्रहर्तव्यं रिपोर्बलम्॥

[6]निद्रार्तमर्धरात्रे च तथा नष्टप्रणायकम्।
भिन्नयोधं बलं यच्च द्विधा युक्तं च यद्भवेत्॥

[7]इत्येवं निश्चयं चक्रे सुप्तानां युधि मारणे।
पाण्डूनां सह पाञ्चालैर्द्रोणपुत्रः प्रतापवान्॥

सुप्तवधः पातकम्

कृप उवाच–

[8]स कल्याणे मतिं कृत्वा नियम्याऽऽत्मानमात्मना।
कुरु मे वचनं तात येन पश्चान्न तप्यसे॥

(१) भा. १०।१।४७; भामु. १०।१।४९–५० तत्र (ततः) येऽर्थ (ये च).

(२) भा. १०।१।४८; भामु. १०।१।५०–५१ द्वाच्यं (द्वाक्यं).

(३) भा. १०।१।४९; भामु. १०।१।५१–५२.

(४) भा. १०।१।५०; भामु. १०।१।५२–५३ गीतौ श्रूयेते (गीताः श्रूयन्ते) श्लोकौ (श्लोका) स्तत्त्वार्थं (स्तत्त्वार्थाः).

(५) भा. १०।१।५१; भामु. १०।१।५३–५४ च (वा) चापि (वाऽपि).

(६) भा. १०।१।५२; भामु. १०।१।५४–५५.

(७) भा. १०।१।५३; भामु. १०।१।५५–५६ युधि (निशि).

(८) भा. १०।५।८; भामु. १०।५।१० मतिं (मनः).

[1]न वधः पूज्यते लोके सुतानामिह धर्मतः।
तथैव न्यस्तशस्त्राणां विमुक्तरथवाजिनाम्॥
[2]ये च ब्रूयुस्तवास्मीति ये च स्युः शरणागताः।
विमुक्तमूर्धजा ये च ये चापि हतवाहनाः॥
[3]अद्य स्वप्स्यन्ति पाञ्चाला विमुक्तकवचा विभो।
विश्वस्ता रजनीं सर्वे प्रेता इव विचेतसः॥
[4]यस्तेषां तदवस्थानां द्रुह्येत पुरुषोऽनृजुः।
व्यक्तं स नरके मज्जेदगाधे विपुलेऽप्लवे॥

अप्लवे इति छेदः। नीटी.

सर्वास्त्रविदुषां लोके श्रेष्ठस्त्वमसि विश्रुतः।
न च ते जातु लोकेऽस्मिन् सुसूक्ष्ममपि किल्बिषम्॥
त्वं पुनः सूर्यसंकाशः श्वोभूत उदिते रवौ।
प्रकाशे सर्वभूतानां विजेता युधि शात्रवान्॥
असंभावितरूपं हि त्वयि कर्म विगर्हितम्।
शुक्ले रक्तमिव न्यस्तं भवेदिति मतिर्मम॥

केनापि योगेन कूटयुद्धकारिणां बान्धवा वध्याः

अश्वत्थामोवाच–

[5]एवमेतद्यथाऽऽत्थ त्वमनुशास्मीह मातुल।
तैस्तु पूर्वमयं सेतुः शतधा विदलीकृतः॥

विदलीकृतः दलितः। नीटी.

[6]प्रत्यक्षं भूमिपालानां भवतां चापि संनिधौ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः॥

दुष्टो दौष्ट्येनैव जेतव्य इत्यर्थः। नीटी.

[1]कर्णश्च पतिते चक्रे रथस्य रथिनां वरः।
उत्तमे व्यसने सन्नो हतो गाण्डीवधन्वना॥
[2]तथा शान्तनवो भीष्मो न्यस्तशस्त्रो निरायुधः।
शिखण्डिनं पुरस्कृत्य हतो गाण्डीवधन्वना॥
भूरिश्रवा महेष्वासस्तथा प्रायगतो रणे।
क्रोशतां भूमिपालानां युयुधानेन पातितः॥
[3]दुर्योधनश्च भीमेन समेत्य गदया मृधे।
पश्यतां भूमिपालानामधर्मेण निपातितः॥

अधर्मेण नामेरधस्तात् प्रहारेण। नीटी.

[4]एकाकी बहुभिस्तत्र परिवार्य महारथैः।
अधर्मेण नरव्याघ्रो भीमसेनेन पातितः॥
[5]विलापो भग्नसक्थस्य यो मे राज्ञः परिश्रुतः।
वार्तिकानां कथयतां स मे मर्माणि कृन्तति॥

वार्तिकाणां वार्ताहराणाम्। नीटी.

[6]एवमधार्मिकाः पापाः पाञ्चाला भिन्नसेतवः।
तानेवं भिन्नमर्यादान् किं भवान्न विगर्हति॥
[7]पितृहन्तॄनहं हत्वा पाञ्चालान्निशि सौप्तिके।
कामं कीटः पतङ्गो वा जन्म प्राप्य भवामि वै॥
त्वरे चाहमनेनाद्य यदिदं मे चिकीर्षितम्।
तस्य मे त्वरमाणस्य कुतो निद्रा कुतः सुखम्॥

---

(१) भा. १०।५।९ ; भामु. १०।५।११ व न्यस्त (वापास्त).

(२) भा. १०।५।१० ; भामु. १०।५।१२.

(३) भा. १०।५।११ ; भामु. १०।५।१३ पाञ्चा (पञ्चा).

(४) भा. १०।५।१२–१५ ; भामु. १०।५।१४–१७.

(५) भा. १०।५।१६ ; भामु. १०।५।१८ पूर्वार्धे (एवमेव यथाऽऽत्थ त्वं मातुलेह न संशयः।).

(६) भा. १०।५।१७ ; भामु. १०।५।१९.

(१) भा. १०।५।१८ ; भामु. १०।५।२० सन्नो (मग्नो).

(२) भा. १०।५।१९–२० ; भामु. १०।५।२१–२२.

(३) भा. १०।५।२१ ; भामु. १०।५।२३ मृधे (रणे).

(४) भा. १०।५।२२ ; भामु. १०।५।२४.

(५) भा. १०।५।२३ ; भामु. १२।५।२५ कानां (काणां).

(६) भा. १०।५।२४ ; भामु. १०।५।२६ एवम (एवं चा) पाञ्चा (पञ्चा).

(७) भा. १०।५।२५–२६ ; भामु. १०।५।२७–२८.

[1]न स जातः पुमाँल्लोके कश्चिन्न च भविष्यति ।
यो मे व्यावर्तयेदेतां वधे तेषां कृतां मतिम् ॥
संजय उवाच–
[2]एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान् ।
एकान्ते योजयित्वाऽश्वान् प्रायादभिमुखः परान् ॥
[3]तदद्भुततमं दृष्ट्वा द्रोणपुत्रो निरायुधः ।
अब्रवीदभिसंतप्तः कृपवाक्यमनुस्मरन् ॥
[4]ब्रुवतामप्रियं पथ्यं सुहृदां न शृणोति यः ।
स शोचत्यापदं प्राप्य यथाऽहमतिवर्त्य तौ ॥

अतिवर्त्य अतिक्रम्य तौ । तयोः कृपकृतवर्मणोर्वाक्यमिति शेषः (? भावः)। नीटी.

[5]शास्त्रदृष्टानवध्यान् यः समतीत्य जिघांसति ।
स पथः प्रच्युतो धर्म्यात् कुपथं प्रतिपद्यते ॥

शास्त्रदृष्टान् अवध्यत्वेन शास्त्रे ज्ञातान्। समतीत्य शास्त्रमुल्लङ्घ्य । नीटी.

## वाल्मीकिरामायणम्

रामकृतस्य वालिवधस्य धर्म्याधर्म्यत्वविचारः

[6]स दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम्।
अब्रवीत् प्रश्रितं वाक्यं करुणं धर्मसंहितम् ॥
[7]कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ।
सानुक्रोशो महोत्साहः समयज्ञो धृतव्रतः ॥

(१) भा. १०।५।२७ ; भासु. १०।५।२९ च (स).

(२) भा. १०।५।२८ ; भासु. १०।५।३०.

(३) भा. १०।६।१८ ; भासु. १०।६।१८–१९ दभि (दति).

(४) भा. १०।६।१९ ; भासु. १०।६।१९–२०.

(५) भा. १०।६।२० ; भासु.१०।६।२०–२१ वध्यान् (विद्वान्) धर्म्यात् (धर्मात्) पथं (पथे) पद्य (हन्य).

(६) वारा. ४।१३।५ ; वाराकु. ४।१७।१४ स (तं) करुणं (परुषं).

(७) वारा. ४।१३।६–७ ; वाराकु.४।१७।१७–१९ चरितव्रतः । + (पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया

रामः करुणवेदी च प्रजानां च हिते रतः ।
इति ते सर्वभूतानि कथयन्ति यशो भुवि ॥
[1]तान् गुणान् संप्रधार्याहमग्र्यं चाभिजनं तव ।
तारया प्रतिषिद्धः सन् सुग्रीवेण समागतः ॥
[2]न मामन्यत्र संरुद्धं प्रसन्नं (? क्तं) वेद्धुमर्हति ।
इति मे बुद्धिरासीत्तु तव धर्मानुशासनात् ॥
[3]न त्वां प्रतिहतात्मानं धर्मबाधमधार्मिकम् ।
जाने राम दुरात्मानं तृणैः कूपमिवाऽऽवृतम् ॥
[4]विषये वा पुरे वाऽपि यदा नापकरोम्यहम् ।
न च त्वां प्रतियुध्यामि निर्हेतु हिंसितस्त्वया ॥
[5]सतां वेषधरं पापं प्रच्छन्नमिव पावकम् ।
नाहं त्वां प्रतिजानामि धर्मतत्त्वसमावृतम् ॥
[6]फलमूलाशनं दान्तं राजानं काननौकसाम् ।
मामिहाप्रतियोद्धारमन्येन च समागतम् ॥
[7]हत्वा बाणेन काकुत्स्थ सर्वथाऽनपराधिनम् ।
किं वक्ष्यसि सतां मध्ये कृत्वा कर्म जुगुप्सितम् ॥

गुणः । यदहं युद्धसंरब्धः शरेणोरसि ताडितः ॥) महो (जितो) द्वितीयतृतीयार्धे व्यत्यासपठिते.

(१) वारा. ४।१३।८ ; वाराकु. ४।१७।२१ षिद्धः सन् (षिद्धोऽपि).

(२) वारा. ४।१३।९ ; वाराकु. ४।१७।२२ (न मामन्येन संरब्धं प्रमत्तं योद्धुमर्हति । इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव ॥).

(३) वारा. ४।१३।१० ; वाराकु. ४।१७।२३ प्रति (विनि) बाध (ध्वज) राम दुरात्मानं (पापसमाचारं).

(४) वारा. ४।१३।११ ; वाराकु. ४।१७।२५ वाऽपि (वा ते) उत्तरार्धे (न च त्वामवजाने च कस्मात्त्वं हंस्यकिल्बिषम् ॥) त्वां प्रति (त्वामभि).

(५) वारा. ४।१३।१२ ; वाराकु. ४।१७।२४ तत्त्वसमावृतम् (च्छद्माभिसंवृतम्).

(६) वारा. ४।१३।१३ ; वाराकु. ४।१७।२६ पूर्वार्धे (फलमूलाशनं नित्यं वानरं वनगोचरम्।) योद्धार (युध्यन्त).

(७) वारा. ४।१३।१४ ; वाराकु. ४।१७।३५ सर्वथा (मामिहा) कृत्वा कर्म (कर्म कृत्वा).

[1]अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥
[2]तदेतत् कारणं पश्य यदर्थं त्वं मया हतः ।
भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥
[3]अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः ।
रुमायां वर्तसे कामात् स्नुषायां पापकर्मकृत् ॥
[4]तद्व्यतीतस्य ते धर्मात् कामवृत्तस्य वानर ।
भ्रातृभार्याविमर्शेऽस्मिन् दण्डोऽयं प्रतिपादितः ॥
[5]न हि धर्मविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥
[6]न हि ते मर्षये पापं क्षत्रियोऽहं कुलोद्भवः ॥
[7]औरसीं भगिनीं वाऽपि भार्यां वाऽप्यनुजस्य यः ।
प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ॥
[8]भूयः शोकसमाक्रान्ता विलापमुपचक्रमे ॥
दुःखेन महता युक्ता भयेन च शुभानना ।
भर्तारमुपगृह्णन्ती तारा शोककुलाऽऽकुला ॥

(१) वारा. ४।१४।३ क्षिप्तस्तदा रामः पश्चाद् (क्षिप्तमना रामस्तथ्यं) ; वाराकु. ४।१८।३.

(२) वारा. ४।१४।१३ तदेतत् (अपरं) तृतीयचरणे (भार्यायां वर्तसे भ्रातुः) ; वाराकु. ४।१८।१८.

(३) वारा. ४।१४।१४ धर (प्रीय) उत्तरार्धे (भार्यायां वर्तसे मोहात् स्नुषायां काममोहितः ॥) ; वाराकु. ४।१८।१९.

(४) वारा. ४।१६।७३ द्वितीयचरणे (व्यतिक्रान्तस्य लौकिकात्) उत्तरार्धे (भ्रातुर्भार्याविमर्शेऽस्मिन् वेदोऽयं विनिपातितः ॥) ; वाराकु. ४।१८।२०.

(५) वारा. ४।१६।७४ न हि (एवं) वृत्तादपेयुषः (वृत्ताव्यपेक्षिणः) उत्तरार्धे (सदृशं मरणं मन्ये तवेदं हरियूथप ॥) ; वाराकु. ४।१८।२१.

(६) वाराकु. ४।१८।२२.

(७) वारा. ४।१६।७५ तृतीयचरणे (स्वैरवृत्तश्चरेत्कामं) उच. ; वाराकु. ४।१८।२३.

(८) वारा. ४।१६।२३-२४.

[1]राजर्षिकुलजातस्य वने वन्येन जीवतः ।
अनुरूपं न रामस्य निर्वैरं वालिनो वधः ॥
प्रहरन्ति महात्मानो न नारीषु न वानरे ।
वालिनो मन्दभाग्यत्वादेतद्रामस्य विस्मृतम् ॥
नात्यर्थं परितप्येऽहं यद्यव्याजहतो भवेत् ।
इमं व्याजहतं दृष्ट्वा मनो मे परितप्यते ॥
अस्थाने वालिनं हत्वा युध्यमानं परेण च ।
न संतप्यति काकुत्स्थः कृत्वा कर्म जुगुप्सितम् ॥

## कौटिलीयमर्थशास्त्रम्

कूटयुद्धप्रकाराः

[2]**बलविशिष्टः कृतोपजापः प्रतिविहितर्तुः स्वभूम्यां प्रकाशयुद्धमुपेयात् , विपर्यये कूटयुद्धम् ॥**

'कूटयुद्धविकल्पाः' इति सूत्रम् । कपटेन पराभिहननं कूटयुद्धम् , तस्य भेदा अभिधीयन्ते इति सूत्रार्थः ।

कूटयुद्धस्य कदा प्रसङ्ग इत्याह— बलविशिष्ट इति । बलेन विशिष्टः शौर्यतः परिमाणेन च परबलादभ्यधिकेन स्वीयबलेन परापेक्षया प्रकृष्टः कृतोपजापः प्रतिविहितर्तुः संपादितयुद्धयोग्यकालः स्वभूम्यां स्वयोग्ये देशे प्रकाशयुद्धम् उपेयात् अङ्गीकुर्यात् । विपर्यये बलविशिष्टत्वादिविरहे कूटयुद्धम् उपेयात् । श्रीमूला.

**बलव्यसनावस्कन्दकालेषु परमभिहन्यात् । अभूमिष्ठं वा स्वभूमिष्ठः । प्रकृतिप्रग्रहो वा स्वभूमिष्ठं दूष्यामित्राटवीबलैर्वा भङ्गं दत्त्वा विभूमिप्राप्तं हन्यात् । संहतानीकं हस्तिभिर्भेदयेत् ॥**

पराभिहननकालविशेषानाह— बलव्यसनावस्कन्दकालेष्विति । बलव्यसनेषु अमानितविमानितत्वादिषु अवस्कन्दकालेषु च दीर्घकान्तारानुदकत्वादिषु परमभिहन्यात् । अभूमिष्ठं वा स्वीयबलाननुगुणभूमिस्थितं वा परं स्वभूमिष्ठः स्वबलानुगुणभूमिस्थितः अभिहन्यात् । प्रकृतिप्रग्रहो वेति । प्रकृतिं परकीयां प्रगृह्णाति उपजापेन स्वायत्ती-

(१) वारा. ४।१६।२७-३०. (२) कौ. १०।३.

करोतीति तथाभूतो वा भवन् स्वभूमिष्ठं परम् अभिहन्यात्। दूष्यामित्राटवीबलैर्वेति। स्वीयानि यानि दूष्यबलानि अमित्रबलानि आटविकबलानि च तैर्विजिगीषोर्युद्धसहायभूतैर्निमित्तैः भङ्गं दत्त्वा तेषु पराजयमाधायेत्यर्थः, विभूमिप्राप्तं स्वजयविश्वासात् स्वाननुगुणभूमिगतं परं हन्यात्। संहतानीकमिति। स्वभूमौ संहत्य स्थितं परबलं हस्तिभिः भेदयेत् भेदयित्वाऽभिहन्यात्।

श्रीमूला.

**पूर्वं भङ्गप्रदानेनानुप्रलीनं भिन्नमभिन्नं प्रतिनिवृत्य हन्यात्। पुरस्तादभिहत्य प्रचलं विमुखं वा पृष्ठतो हस्त्यश्वेनाभिहन्यात्। पृष्ठतोऽभिहत्य प्रचलं विमुखं वा पुरस्तात् सारबलेनाभिहन्यात्॥**

प्रथमं भङ्गप्रदानेन परपराजयेन हेतुना अनुप्रलीनं भिन्नं संघात् विश्लिष्य तत इतः स्थितं परानीकमित्यर्थः, अभिन्नं संहतं विजिगीष्वनीकं कर्तृ प्रतिनिवृत्य प्रत्यावृत्य हन्यात्। इह 'पूर्वभङ्ग' इति समस्तमपि पठ्यते। पुरस्तादित्यादि। प्रचलम् अभिघातसिद्ध्या निवृत्तं विमुखं वा भङ्गपलायितं वा। हस्त्यश्वेन हस्तिभिरश्वैश्च। पृष्ठत इति। पृष्ठानुसारेण अभिहत्य प्रचलं निवर्तमानं विमुखं वा पुरस्तात् सारबलेन शौर्यवता सैन्येन अभिहन्यात्। श्रीमूला.

**ताभ्यां पार्श्वाभिघातौ व्याख्यातौ। यतो वा दूष्यफल्गुबलं ततोऽभिहन्यात्॥**

पुरस्तात्पृष्ठतोभिघातवत् पार्श्वतोभिघातावपि द्रष्टव्यावित्याह– ताभ्यामित्यादि। एकस्मिन् पार्श्वेऽभिहत्य प्रचलमपरस्मिन् पार्श्वेऽभिहन्यादित्यर्थः। यत इति। यत्र दूष्यफल्गुबलं शत्रुदूष्याणां निःसारं बलं ततः तत्र अभिहन्यात्। श्रीमूला.

**पुरस्ताद्विषमायां पृष्ठतोऽभिहन्यात्। पृष्ठतोविषमायां पुरस्तादभिहन्यात्। पार्श्वतोविषमायामितरतोऽभिहन्यात्॥**

भूम्यपेक्षयाऽभिहननमाह– पुरस्ताद्विषमायामित्यादि। इतरतः अविषमेऽन्यस्मिन् पार्श्वे। अत्राविषमासु भूमिष्वभिहननविधिरभिघातोपद्रवारब्धपलायनानां विषमासु पातनं यथा स्यादित्येवमर्थम्। श्रीमूला.

**दूष्यामित्राटवीबलैर्वा पूर्वं योधयित्वा श्रान्तमश्रान्तः परमभिहन्यात्। दूष्यबलेन वा स्वयं भङ्गं दत्त्वा 'जितम्' इति विश्वस्तमविश्वस्तः सत्रापाश्रयोऽभिहन्यात्। सार्थव्रजस्कन्धावारसंवाहविलोपप्रमत्तमप्रमत्तोऽभिहन्यात्। फल्गुबलावच्छन्नः सारबलो वा परवीराननुप्रविश्य हन्यात्। गोग्रहणेन श्वापदवधेन वा परवीरानाकृष्य सत्रच्छन्नोऽभिहन्यात्॥**

दूष्यामित्राटवीबलैर्वेति। तैर्वा स्वकीयैः पूर्वं योधयित्वा श्रान्तं तद्वशात् खिन्नं परम् अश्रान्तः अभिहन्यात्। दूष्यबलेन वेति। अभक्तियोधित्वात् सुकरभङ्गेन स्वीयेन दूष्यसैन्येन स्वयं प्रथमोपस्थापितेन निमित्तेन भङ्गं दत्त्वा तत्पराजयमुत्पाद्य जितमिति विश्वस्तम् 'जयो मे लब्धः' इत्युपजातविश्वासम् अविश्वस्तः सत्रापाश्रयः सत्रम् अनुपदं वक्ष्यमाणमाश्रितः सन् अभिहन्यात्। सार्थेत्यादि। सार्थव्रजस्कन्धावाराणां वणिक्संघगोकुलसेनानिवेशानां संवाहे सम्यग्वहने रक्षणे विलोपे लुण्टने च प्रमत्तम् अप्रमत्तः अभिहन्याद्वा। अन्तःशूरं स्वबलं बहिरशूरपुरुषच्छन्नं कृत्वा तेन शत्रुवीरान् अनुप्रविश्य हन्याद्वेत्याह– फल्गुबलावच्छन्न इत्यादि। गोग्रहणेनेति। परविषये गवां बलादपहरणेन श्वापदवधेन वा व्याघ्रवराहादिवधेन वा परवीरान् तत्प्रतिक्रियोद्यतान् आकृष्य सत्रच्छन्नः वनादिच्छन्नः अभिहन्यात्। श्रीमूला.

**रात्राववस्कन्देन जागरयित्वाऽनिद्राक्लान्तानवसुप्तान् वा दिवा हन्यात्। सपादचर्मकोशैर्वा हस्तिभिः सौप्तिकं दद्यात्। अहःसंनाहपरिश्रान्तानपराह्णेऽभिहन्यात्। शुष्कचर्मवृत्तशर्कराकोशकैर्गोमहिषोष्ट्रयूथैर्वा त्रस्नुभिरकृतहस्त्यश्वं भिन्नमभिन्नः प्रतिनिवृत्तं हन्यात्। प्रतिसूर्यवातं वा सर्वमभिहन्यात्॥**

रात्राविति। तदा अवस्कन्देन सौप्तिकापहारेण तत इत उत्पादितेन जागरयित्वा तद्भयक्षीणनिद्रान् कृत्वा

अनिद्राक्लान्तान् निद्राविरहश्रान्तान् अत एव अवसुप्तान् दिवा अह्नि हन्यात्। सपादचर्मकोशैरिति। पादेषु रक्षार्थं चर्मकोशसहितैः हस्तिभिः सौप्तिकं दद्यात् सुप्तवधं कुर्यात्। अहःसंनाहपरिश्रान्तानिति। दिवा आप्राह्णमध्याह्नयुद्धव्यापारपरिखिन्नान् अपराह्णे अभिहन्यात्। शुष्कचर्मवृत्तशर्कराकोशकैरिति। शुष्कचर्मनिर्मिताः वृत्तशर्कराकोशाः वर्तुलाश्मप्रायमृद्विशेषखण्डगर्भाः कोशाः येषां तैस्तथाभूतैः गोमहिषोष्ट्रयूथैः त्रस्नुभिः कोशध्वनिश्रवणभीरुभिः अकृतहस्त्यश्वं अनवस्थापितहस्त्यश्वम्, भिन्नं तत इतो विक्षिप्तम्, प्रतिनिवृत्तं युद्धव्यावृत्तं परबलम् अभिन्नः सन् हन्याद्वा। प्रतिसूर्यवातं सूर्यप्रतिमुखं चण्डवातप्रतिमुखं च सर्वं सर्वविधं बलम् अभिहन्यात्। श्रीमूला.

**धान्वनवनसंकटपङ्कशैलनिम्नविषमनावो गावः शकटव्यूहो नीहारो रात्रिरिति सत्राणि ॥**

'सत्रं गृह्णीयात्' इति 'सत्रापाश्रयोऽभिहन्यात्' इति च प्रागुक्तम्। कानि तानि सत्राणीत्यपेक्षायामाह—धान्वनेत्यादि। धान्वनम् 'निरुदकस्तम्बमिरिणं वा धान्वनम्' (कौ. २।३) इति लक्षितं मरुदुर्गम्, वनम् 'खञ्जनोदकं स्तम्बगहनं वा वनदुर्गम्' (कौ. २।३) इति लक्षितं वनदुर्गम्, संकटः गुल्मकण्टकलताकण्टकदुष्प्रवेशः प्रदेशः, पङ्कः कर्दमः, शैलः पर्वतः, निम्नं गभीरप्रदेशः, विषमं निम्नोन्नतदेशः, नौः तरीः, इत्येषां द्वन्द्वः। माधवस्तु 'विषमम्' इति पठित्वा द्वन्द्वैकवद्भावमाह, 'नावः' इति च न पठति। गावः गोयूथानि। शकटव्यूहः भोगव्यूहभेदो वक्ष्यमाणः। नीहारः अवश्यायः। रात्रिः तमस्या। इति सत्राणि छन्नसंचारसाधनानि। श्रीमूला.

**पूर्वे च प्रहरणकालाः कूटयुद्धहेतवः ॥**

पूर्वोक्ताः प्रहरणकालाः चकारात् सत्राणि च कूटयुद्धहेतवः। इत्थं कूटयुद्धविकल्पा निरूपिताः। श्रीमूला.

## मनुः

कूटयुद्धविधिः

*[1]उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत्।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥
भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा ॥

## विष्णुधर्मोत्तरपुराणम्

कूटयुद्धप्रकाराः

[2]पापिष्ठो(? ष्ठे) कूटयुद्धे च कर्तव्यमपि चाऽऽहवे।
श्रान्तेन वाऽभिभूतेन अर्धोत्तीर्णबलेन च ॥
दुर्दिने न(? दुर्दिनेन) च युद्धानि कर्तव्यानि महाबल ॥
प्रवृत्ते समरे राम परेषां नामकारणात्।
बाहू प्रगृह्य विक्रोशेद्भग्ना भग्नाः परे त्विति।
प्राप्तं मित्रबलं भूरि नायकोऽत्र निपातितः ॥
सेनानीर्निहतश्चायं सर्वा सेनाऽपि विद्रुता।
एवं चित्रासनं कुर्यात् परेषां भृगुनन्दन ॥
विद्रुतानां तु योधानां सुविघातो विधीयते।
धनुर्वेदविधानेन कल्पना च तथा भवेत् ॥
पा(? धू)पाश्च देया धर्मज्ञ यथैव परमोहनाः।
पताकाभ्युच्छ्रयः कार्यः स्वबले च तथा शुभः ॥
संस्कारश्चैव कर्तव्यो वादित्राणां भयावहः।
एतस्य वर्षे(?) वक्ष्यामि तवोपनिषदि द्विज ॥

## अग्निपुराणम्

कूटयुद्धप्रकाराः

[3]श्रान्ते निद्राभिभूते च अर्धोत्तीर्णे नदीवने।
दुर्दिने कूटयुद्धानि शत्रुनाशार्थमाचरेत् ॥

---

* अस्य श्लोकद्वयस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'यात्रा– युद्धसामान्यविचारः' इत्यस्मिन् प्रकरणे (पृ. २६६७–२६६८) द्रष्टव्यः।

(१) मस्मृ. ७।१९५–१९६.

(२) विध. २।१७७।७७–८३.

(३) अग्नि. २३६।५८–६२.

बाहू प्रगृह्य विक्रोशेद् भग्ना भग्नाः परे इति ।
प्राप्तं मैत्रं बलं भूरि नायकोऽत्र निपातितः ।
सेनानीर्निहतश्चायं भूपतिश्चापि विप्लुतः ॥

विद्रुतानां तु योधानां सुखं घातो विधीयते ।
धूपाश्च देया धर्मज्ञ तथा च परमोहनाः ॥

पताकाश्चैव संभारो वादित्राणां भयावहः ॥

'कन्दरे शैलगहने निम्नगावनसंकटे ।
दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितक्लमम् ॥
व्याधिदुर्भिक्षमरकपीडितं दस्युविद्रुतम् ।
पङ्कपांशुजलस्कन्धं(?न्नं) व्यस्तं पुञ्जीकृतं पथि ॥

प्रसुप्तं भोजनव्यग्रमभूमिष्ठमसुस्थितम् ।
चौराग्निभयवित्रस्तं वृष्टिवातसमाहतम् ॥

इत्यादौ स्वचमूं रक्षेत् परसैन्यं च घातयेत् ।
विशिष्टो देशकालाभ्यां भिन्नविप्रकृतिर्बली ॥

कुर्यात् प्रकाशयुद्धं हि कूटयुद्धं विपर्यये ।
तेष्ववस्कन्दपालेषु परं हन्यात् समाकुलम् ॥

अभूमिष्ठं स्वभूमिष्ठः स्वभूमौ चोपजातयः ।
प्रकृतिप्रग्रहाकृष्टं पाशैर्वनचरादिभिः ॥

हन्यात् प्रवीरपुरुषैर्भङ्गदानापकर्षणैः ।
पुरस्ताद्दर्शनं दत्त्वा तल्लक्षकृतनिश्चयान् ॥

हन्यात् पश्चात् प्रवीरेण बलेनोपेत्य वेगिना ।
पश्चाद्वा संकुलीकृत्य हन्याच्छूरेण पूर्वतः ॥
आभ्यां पार्श्वाभिघाती तु व्याख्यातौ कूटयोधने ।

पुरस्ताद्विषमे देशे पश्चाद्धन्यात्तु वेगवान् ॥

पुरः पश्चात्तु विषम एवमेव तु पार्श्वयोः ।
प्रथमं योधयित्वा तु दूष्यामित्राटवीबलैः ॥

श्रान्तं मन्दं निराक्रन्दं हन्यादश्रान्तवाहनम् ।
दूष्यामित्रबलैर्वाऽपि भङ्गं दत्त्वा प्रयत्नवान् ॥

(१) अग्नि. २४२।१-२३.

जितमित्येव विश्वस्तं हन्यान्मन्त्रव्यपाश्रयः ।
स्कन्धावारपुरग्रामसस्यस्वामिप्रजादिषु ॥
विश्रभ्य(? म्भ )न्तं परानीकमप्रमत्तो विनाशयेत् ।
अथवा गोग्रहाकृष्टं तल्लक्ष्यं मार्गबन्धनात् ॥

अवस्कन्दभयाद्रात्रिप्रजागरकृतश्रमम् ।
दिवा सुप्तं समाहन्यान्निद्राव्याकुलसैनिकम् ॥
निशि विश्रब्धसंसुप्तं नागैर्वा खड्गपाणिभिः ॥

## कामन्दकीयनीतिसारः

प्रकाशयुद्धासंभवे कूटयुद्धम् , कूटयुद्धानुकूलानि देशकालादीनि कूटयुद्धप्रकाराश्च

*'कन्दरे शैलगहने निम्नगावनसंकटे ।
दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितक्लमम् ॥
व्याधिदुर्भिक्षमरणपीडितं दस्युभिर्द्रुतम् ।
पङ्कपांसुजलच्छन्नं व्यस्तं पुञ्जीकृतं पथि ॥
प्रसुप्तं भोजनव्यग्रमभूमिष्ठमसंस्थितम् ।
चोराग्निभयवित्रस्तं वृष्टिवातसमाकुलम् ॥
एवमादिषु जातेषु व्यसनेष्वसमाकुलः ।
स्वसैन्यं साधु संरक्षेत् परसैन्यं च घातयेत् ॥

अथ कूटयुद्धेन शत्रुमारणसमय उक्तो नीतिसारे- 'दीर्घाध्वनि...' । नीम. ६१

'विशिष्टो देशकालाभ्यां भिन्नारिप्रकृतिर्बली ।
कुर्यात् प्रकाशयुद्धं हि कूटयुद्धं विपर्ययः ॥

( १ ) उक्तव्यसनानां हि कूटयुद्धहेतुत्वात् तदनन्तरं कूटयूद्धविकल्पा उच्यन्तेऽष्टादशभिः श्लोकैः- विशिष्ट

* एतेषां चतुर्णां श्लोकानां शेषव्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'यात्रा- युद्धसामान्यविचारः' इत्यस्मिन् प्रकरणे (पृ २६८१) द्रष्टव्यः ।

(१) कानी. १९।५०-५३.

(२) कानी. १९।५४ ; उनिसा. यैयः (यंये) ; नीम. ६१ द्वितीयचरणे (युक्तः प्रकृतिभिर्बलैः) हि (च) यैयः (यंये).

इत्यादि। चतुरङ्गेण हि बलेन व्यायामयुद्धं क्रियते। तच्च द्विविधम्— मुख्यं तावत् प्रकाशयुद्धम्, अप्रकाशयुद्धं कूटमिति। तत्र यदा स्वबलानुकूलदेशकालः कृतपरप्रकृत्युपजापः बलेन चाधिकः शत्रोः, तदा प्रकाशयुद्धम् आभाषितं सङ्ग्रामं कुर्यात्। विपर्ययः विरुद्धदेशकालः अभिन्नारिप्रकृतिः बलहीनश्च कूटयुद्धं प्रच्छन्नयुद्धं कुर्यात्। जम.

(२) कूटयुद्धविकल्पानभिधातुमाह— विशिष्ट इति। विशिष्टो देशकालाभ्याम् उत्कृष्टदेशकालावस्थितः भिन्नारिप्रकृतिः भिन्नाः विश्लेषिताः अरेः यातव्यस्य प्रकृतयः अमात्यादिराज्याङ्गानि येन स तथाभूतः बली उत्कृष्टबलसंपन्नः, विजिगीषुरिति शेषः, प्रकाशयुद्धं कुर्यात्। विपर्यये देशकालवैशिष्ट्याद्यभावे कूटयुद्धम् अप्रकाशयुद्धं कुर्यात्। उनिसा.

(३) कूटयुद्धं नाम विषाक्तशस्त्रादिना घातनं लोके प्रसिद्धम्। नीम. ६१

**[१]तेष्ववस्कन्दकालेषु परं हन्यात् समाकुलम्।**
**अभूमिष्ठं हि भूमिष्ठं तद्भूमौ चोपजापतः॥**

(१) कीदृशं तदित्याह— तेष्वित्यादि। अवस्कन्दकालेषु कन्दराशैलादिप्रयाणादिषु। अभूमिष्ठं स्वभूमिष्ठं परं हन्यादिति संबन्धः। स्वबलयोग्यायां वा भूमौ स्थितं परस्परप्रकृतिषु उपजापात् जातावकाशो हन्यादित्यर्थः। जम.

(२) तेषु अनन्तरोक्तेषु अवस्कन्दकालेषु बलव्यसनकालेषु अभूमिष्ठम् अयोग्यभूमिस्थितं समाकुलं व्याकुलं परं शत्रुं हन्यात् कूटयुद्धेन विनाशयेत्। स्वभूमिष्ठं योग्यभूमिस्थितं परं तद्भूमौ चोपजापतः तस्य यातव्यस्य भूमौ अनुकूलभूमौ उपजापतः प्रकृतिभेदतः हन्यादिति पूर्वेण संबन्धः। 'अभूमिष्ठं स्वभूमिष्ठं तद्भूमौ चोपजापतः' इत्यत्र 'अभूमिष्ठं स भूमिष्ठः स्वभूमौ चोपजायते' इति मुद्रितपुस्तकपाठो न समीचीनः। उनिसा.

(१) कानी. १९।५५; जम. हि भू (स्वभू); उनिसा. हि भू (स्वभू).

**[२]प्रकृतिप्रग्रहाकृष्टं पाशैर्वनचरादिभिः।**
**हन्यात् प्रवीरपुरुषैर्भङ्गदानापकर्षणैः॥**

(१) आकृष्टं पाशैर्वनचरादिभिः भङ्गदानापकर्षणैरिति संबन्धः। आदिशब्दात् दूष्यामित्रोपग्रहः भङ्गदानेन अपकर्षणं येषां तैः दूष्यामित्राटविकबलैः पाशभूतैः स्वभूमितः अपकृष्टं परं विभूमिप्राप्तं प्रवीरपुरुषैर्हन्यात्। जम.

(२) प्रकृतिप्रग्रहाहृष्टं प्रकृतेः राज्याङ्गस्य प्रग्रहेण आक्रमणेन अहृष्टं क्षुब्धम्। स्पशैः गुप्तचरैः। 'स्पशैः' इत्यत्र 'स्पर्शैः' इति मुद्रितपुस्तकपाठो न समीचीनः। अन्यत् प्रतीतम्। उनिसा.

**[३]पुरस्ताद्दर्शनं दत्त्वा तल्लक्षकृतनिश्चयः।**
**हन्यात् पश्चात् प्रवीरेण बलेनोत्पीड्य वेगिना॥**

(१) पुरस्ताद्दर्शनं दत्त्वा येन केनचिद्बलेन तल्लक्षकृतनिश्चयः पौरस्त्यकृतावधानान् परसैनिकान् हन्यात्। पश्चात् अदत्तपृष्ठावधानत्वात्। प्रवीरेण हस्त्यश्वबलेन वेगवता। जम.

(२) पुरस्तात् अग्रतः योद्धुं दर्शनं दत्त्वा स्वल्पैर्दत्त्वा तल्लक्षकृतनिश्चयं येन विजिगीषुबलेन दर्शनं दत्तं तल्लक्षकृतो निश्चयो येन यातःयेन तं प्रवीरेण प्रकृष्टवीरान्वितेन वेगिना वेगवता बलेन सैन्येन पश्चात् पृष्ठतः उत्पात्य आक्रम्य हन्यात् विनाशयेत्। 'पुरस्तात्' इत्यत्र 'पुरस्तु' इति मुद्रितपुस्तकपाठः। 'तल्लक्षकृतनिश्चयम्' इत्यत्र 'तल्लक्षकृतनिश्चयात्' इति 'उत्पात्य' इत्यत्र 'उत्पद्य' इति च मुद्रितपुस्तकपाठो न समीचीनः। 'प्रवीरेण' इत्यत्र 'सवीरेण' इति मुद्रितपुस्तकपाठः। उनिसा.

**[४]पश्चाद्वा संकुलीकृत्य हन्यात् सारेण पूर्वतः।**
**आभ्यां पार्श्वाविघातौ तु व्याख्यातौ कूटयोधने॥**

(१) कानी. १९।५६; उनिसा. हाकृष्टं पाशैः (हाहृष्टं स्पशैः).

(२) कानी. १९।५७; उनिसा. निश्चयः (निश्चयम्) नोत्पीड्य (नोत्पात्य).

(३) कानी. १९।५८; उनिसा. वघातौ (भिघातौ).

(१) पश्चाद् वा संकुलीकृत्य पृष्ठतो व्याकुलीकृत्य येन केनचिद्बलेन हन्यात् पूर्वतः पुरस्तात् दत्तपृष्ठावधानान् । आभ्यां पार्श्वाविघाताविति । वामतो दक्षिणतो वा पार्श्वतः संकुलीकृत्य दक्षिणतो वामतो वा हन्यात् । जम.

(२) वा अथवा पश्चात् पृष्ठतः संकुलीकृत्य समाकुलं कृत्वा । अरिसैन्यमिति शेषः । पूर्वतः अग्रतः सारेण बलेन हन्यात् विनाशयेत् । आभ्यां प्रागुक्तपश्चाद्या- (? पश्चात्पूर्वाभिघा )ताभ्यां कूटयोधने पार्श्वाभिघातौ व्याख्यातौ कथितौ । उनिसा.

**'पुरस्ताद्विषमे देशे पश्चाद्धन्यात्तु वेगवान् ।**
**पुरः पश्चाच्च विषम एवमेव तु पार्श्वयोः ॥**

(१) पुरस्ताद्विषमे देशे परिवर्तनस्तम्भनावकाशायोग्ये । पश्चाच्च विषमे पुरो हन्यादिति संबन्धः । एवमेव तु पार्श्वयोरिति । *वामदक्षिणयोरिति संबन्धः । देशे वामतो दक्षिणतो वा हन्यादित्यर्थः । जम.

(२) पुरस्तात् अग्रतः विषमे दुर्गमे देशे वेगवान् विजिगीषुः पश्चात् हन्यात् । पश्चात् विषमे पुरः अग्रतः हन्यात् । एवमेव तु पार्श्वयोः । वामतो विषमे दक्षिणतो हन्यात्, दक्षिणतो विषमे वामतो हन्यादित्यर्थः । मुद्रितपुस्तके श्लोकस्यास्य शेषार्धस्थाने श्लोकान्तरस्य शेषार्धं मुद्रितम् । शेषार्धं तु 'पुरः पश्चाच्च विषमे एवमेव तु पार्श्वयोः' इति । उनिसा.

**'प्रथमं योधयित्वा च दूष्यामित्राटवीबलैः ।**
**श्रान्तं सन्नं निराक्रन्दं हन्यादश्रान्तवाहनः ॥**

(१) दूष्यामित्राटवीबलैः परकीयकल्पैः । बलं बलेन हन्यात् । (पूर्वतः ?) प्रथममिति । पूर्वं योधयित्वा पश्चात् श्रान्तं सन्नम् । निराक्रन्दं निराशम्, क्षीणबलत्वात् । जम.

(२) प्रथमं पूर्वमेव हृष्टमैत्राटवीबलैः योधयित्वा युद्धं कारयित्वा श्रान्तं प्राप्तश्रमं सन्तं भवन्तं निराक्रन्दं मित्रबलरहितम्, शत्रुमिति शेषः, अश्रान्तवाहनः सन् हन्यात् । श्लोकोऽयं मुद्रितपुस्तके पतितः । उनिसा.

**'दूष्यामित्रबलैर्वाऽपि भङ्गं दत्त्वा प्रयत्नवान् ।**
**जितमित्येव विश्वस्तं हन्यात् सत्रव्यपाश्रयः ॥**

(१) दूष्यामित्रबलैर्वा भङ्गं दत्त्वा पलायनेन अनयोर्जितं मया इति विश्वस्तं परं भग्नानुसारिणं प्राक् सत्रव्यपाश्रयः प्रयत्नवान् अप्रमत्तो हन्यात् । जम.

(२) हृष्टामित्रबलैः कारणभूतैः भङ्गं दत्त्वा प्रयत्नवान्, विजिगीषुरिति शेषः, जितमेवेति विश्वस्तं शत्रुं व्यपाश्रयः वनादिच्छन्नः सन् हन्यात् । अयमपि श्लोकः मुद्रितपुस्तके पतितः । उनिसा.

**'स्कन्धावारपुरग्रामसस्यसार्थव्रजादिषु ।**
**विलोभ्य च परानीकमप्रमत्तो विनाशयेत् ॥**

(१) स्कन्धावारादिषु प्रख्यापितरक्षाशैथिल्येषु विलोपयितुं विलोभ्य उभयवेतनैः, ततो विलोपे अप्रमत्तः परानीकं हन्यात् । जम.

(२) अप्रमत्तः सावधानः विजिगीषुः स्कन्धावारपुरग्रामसस्यसार्थव्रजादिषु विलोभ्य लोभं प्रापय्य परानीकं शत्रुसैन्यं विनाशयेत् । 'स्कन्धावारपुरग्रामसस्यसार्थव्रजादिषु' इत्यत्र 'स्कन्धावारपुरग्राममास्यमानं व्रजादिषु' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**'फल्गुसैन्यप्रतिच्छन्नं कृत्वा वा सारवद्बलम् ।**
**मन्दयत्नं तद्विलोपे हन्यादुत्प्लुत्य सिंहवत् ॥**

---

* 'वामदक्षिणयोर्विषमे देशे इति संबन्धः । वामतो दक्षिणतो वा हन्यादित्यर्थः ।' इत्येवमत्र शुद्धिः कल्प्यते । वामपार्श्वे विषमे देशे दक्षिणपार्श्वतो हन्यात्, दक्षिणपार्श्वे विषमे देशे वामपार्श्वतो हन्यादित्यभिप्रायः ।

(१) कानी. १९।५९ ; नीम. ६१ पू.

(२) कानी. १९।६० ; उनिसा. च दूष्यामित्रा ( वा हृष्टमैत्रा ) सन्नं (सन्तं).

(१) कानी. १९।६१ ; उनिसा. दूष्या ( हृष्टा ) मित्येव ( मेवेति ) सत्रव्य ( शत्रुं व्य ) ; नीम. ६१ उत्तरार्धं (जितमेवेत्यविश्वस्तं हन्याच्छत्रुं व्यपाश्रितः ॥ ) उक्त.

(२) कानी. १९।६२ ; नीम. ६१ भ्य च ( भ्यापि ) उक्त.

(३) कानी. १९।६३ ; उनिसा. उत्तरार्धं ( समासक्तं तद्विलोपे प्रसेदुत्पत्य सिंहवत् ॥ ).

(१) फल्गुसैन्यप्रतिच्छन्नमिति । असारबलेन सारबलमवच्छाद्य तद्विलोपे फल्गुबलाभिघाते अवज्ञया शिथिलयत्नं (समीचीभूतं ?) परं सारबलेन सिंहवदुत्प्लुत्य हन्यादिति । जम.

(२) सारवद्बलं सारयुक्तं स्वसैन्यं कृत्वा फल्गुसैन्यप्रतिच्छन्नम् असारसैन्यवेष्टितं कृत्वा तद्विलोपे फल्गुबलविनाशे समासक्तं व्यापृतम्, अरिसैन्यमिति शेषः, सिंहवत् उत्पत्य आक्रम्य ग्रसेत् विनाशयेत् । विजिगीषुरिति शेषः । 'समासक्तम्' इत्यत्र 'मर्दयन्तम्' इति मुद्रितपुस्तकपाठः । उनिसा.

**'मृगयासंप्रसक्तं वा हन्याच्छत्रुमपाश्रयम् ।**
**अथवा गोग्रहाकृष्ट्या तल्लक्षं मार्गबन्धनात् ॥**

(१) मृगयासंप्रसक्तम् आटविकप्रोत्साहितम् । गोग्रहाकृष्ट्या गोग्रहणेनान्यतः समाकृष्य, गोग्रहणकृतलक्ष्यम्, परम्, मार्गेषूपरुध्य हन्यात् । जम.

(२) विजिगीषुः व्यपाश्रयः वनादिसंलीनः सन् मृगयासंप्रयुक्तं मृगयाव्यापारासक्तम् अथवा गोग्रहाकृष्ट्या आप्रबन्धनात् तल्लक्षं गोगणकृतदृष्टिं शत्रुं हन्यात् । उनिसा.

**'अवस्कन्दभयाद्रात्रौ प्रजागरकृतश्रमम् ।**
**दिवा प्रसुप्तं वा हन्यान्निद्राव्याकुलसैनिकम् ॥**

(१) अवस्कन्दभयादिति रात्रौ सायमेवावस्कन्दं दास्यतीति भयात् प्रजागरकृतश्रमं ततो निद्राव्याकुलसैनिकं दिवासुप्तं हन्यात् । जम.

(२) अवस्कन्दभयात् आक्रमणभयात् रात्रौ प्रजागरकृतश्रमं जागरणेन क्लान्तम् अत एव दिवासुप्तं निद्राव्याकुलं निद्राविह्वलं च सैनिकं हन्यात् । अस्य श्लोकस्य शेषार्धं मुद्रितपुस्तके पतितम् । शेषार्धं तु— 'दिवा प्रसुप्तं वा हन्यान्निद्राव्याकुलसैनिकम्' इति । उनिसा.

**'अहःसंनाहतः श्रान्तमपराह्णे विनाशयेत् ।**
**निशि विस्रम्भसुप्तं वा तत् सौप्तिकविधानवित् ॥**

(१) अहःसंनाहत इति अहनि व्याजकलहेन संनाहपरिश्रान्तम् अपराह्णे मुक्तसंनाहं हन्यात् । सुप्ते भवं मर्दनं सौप्तिकम्, तद्विधानवित् विस्रम्भसुप्तं वा तत् परबलं विनाशयेदिति संबन्धः । जम.

(२) पूर्वाह्ण इति । सौप्तिकविधानवित् वक्ष्यमाणलक्षणसौप्तिकविधानज्ञः । अन्यत् प्रतीतम् । 'पूर्वाह्ण आहतं श्रान्तम्' इत्यत्र 'अहःसंनाहतः श्रान्तम्' इति मुद्रितपुस्तकपाठो न साधुः । उनिसा.

**'सपादकोशावरणैर्नागैः कुर्यात् तु सौप्तिकम् ।**
**कुर्यादुग्रजवोपेतैर्नरैर्वा खड्गपाणिभिः ॥**

(१) किं तत् सौप्तिकमित्याह— सपादकोशावरणैरिति । पादकोशः चर्ममयः कण्टकाद्याबाधकपरिहारार्थम् । आवरणं शस्त्रनिवारणार्थम् । नरैर्वा, यदि हस्तिनो न सन्ति । जम.

(२) सपादकोषावरणैः— पादानां चर्ममयाः कोषाः, आवरणानि संनाहाः, तद्युक्तैः नागैः गजैः, अतिजवोपेतैः अत्यन्तवेगिभिः अश्वैः, वा अथवा खड्गपाणिभिः नरैः सौप्तिकं सुप्तबलविनाशं कुर्यात् । 'नागैः' इत्यत्र 'भागैः' इति मुद्रितपाठस्तु असंगतः । 'अश्वैरतिजवोपेतैः' इत्यत्र 'कोपादुग्रजवोपेतैः' इति मुद्रितपुस्तकपाठः न समीचीनः । उनिसा.

**'प्रतिसूर्यमहावातं हन्यात् संमीलितेक्षणम् ।**
**इत्येवं कूटयुद्धेन हन्याच्छत्रूँल्लघूत्थितः ॥**

(१) प्रतिसूर्यमहावातं प्रतिकूलौ सूर्यमहावातौ यस्य परबलस्य तत् प्रतिघातकृतसंमीलनत्वात् हन्यात् । इत्येव-

---

(१) कानी. १९।६४ ; जम. लक्षं (लक्ष्यं) ; उनिसा. सक्तं (युक्तं) त्रुमपाश्रयम् (त्रुं व्यपाश्रयः) क्षं मार्ग (क्षमाप्र).

(२) कानी. १९।६५ ; नीम. ६१-६२ स्कन्द (स्कर) प्रसुप्तं वा (सुप्तं समा).

(१) कानी. १९।६६ ; उनिसा. अहःसंनाहतः (पूर्वाह्ण आहतं) ; नीम. ६२ प्रथमचरणे (प्रातः संगवसंनद्ध) सुप्तं वा (संसुप्तं).

(२) कानी. १९।६७ ; उनिसा. कुर्यादुग्र (अश्वैरति).

(३) कानी. १९।६८ ; उनिसा. त्रूँल्ल (त्रुं ल) ; नीम. ६२ जस.

मिति उपसंहरति । लघूत्थितो हन्यात् मा भूत् कालातिपत्तिरिति । जम.

( २ ) प्रतिसूर्यमहावातं प्रतिकूलौ सूर्यमहावातौ यस्य तथाभूतम्, अत एव संमीलितेक्षणं मुद्रितनेत्रं शत्रुं लघु शीघ्रम् उत्थितः सन् विजिगीषुः इत्येवं कूटयुद्धेन हन्यात् । 'प्रतिसूर्यमहावातम्' इत्यत्र 'प्रतिसूर्ये महावातम्' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**[1]नीहारतिमिराङ्गारश्वभ्राद्रिवननिम्नगाः ।**
**वदन्ति सत्रमित्यादि सत्रं छद्म प्रकीर्तितम् ॥**

( १ ) 'सत्रव्यपाश्रयः' इत्यादि (कानी. १९।६१) सत्रमुक्तम्, तस्य स्वरूपमाह– नीहारेत्यादि । श्वभ्राणि कन्दराः । सत्रमित्यादीत्यादिशब्दात् धान्वनशैलविषमादयो द्रष्टव्याः । सत्रं छद्म प्रकीर्तितम्, आत्मच्छादनात् । जम.

( २ ) यतः नीहारः धूमिका, तिमिरम् अन्धकारः, गावः गोसमूहः, श्वभ्रं विवरम्, अद्रिः पर्वतः, निम्नगाः नद्यः, एताः शत्रुम् अवन्ति रक्षन्ति । अतः इत्यादि नीहारादिकं सत्त्रं सन्तं विद्यमानं त्रायते छादयति यत् एवंभूतं सद्म आश्रयस्थानं प्रकीर्तितं कथितम् । बुधैरिति शेषः । 'अवन्ति शत्रुमित्यादि सत्त्रं सद्म प्रकीर्तितम्' इत्यत्र 'वदन्ति शत्रुमित्यादि छत्रं सत्त प्रकीर्तितम्' इति मुद्रितपुस्तकपाठो न सम्यक् । उनिसा.

**[2]पुनरावर्तमानस्य निराशस्य तु जीविते ।**
**अनार्यो (? अधार्यो) जायते वेग इति भग्नं न पीडयेत् ॥**

**अल्पागमातिव्ययता क्षयो वृद्धिर्विपर्यये ।**
**समायव्ययता स्थानं कर्मसु ज्ञेयमात्मनः ॥**
**द्वावपि प्रस्तुतौ वध्यप्रमत्तौ व्यवसायवत् ॥**

**[1]साध्वप्रमत्तो व्यवसायवर्ती**
**येन प्रकारेण परं निहन्यात् ।**
**चरैः समावेदिततत्प्रचारः**
**शङ्केत तेनैव ततोऽप्रमत्तः ॥**

(१) यथा विजिगीषुः कूटयुद्धप्रयोगान् परत्र प्रयुङ्क्ते तथा परोऽप्यस्मिन्निति तत्प्रतिविधानार्थमाह– साध्वित्यादि । शोभनम् अप्रमत्तः । व्यवसायवर्ती कृतोत्साहः । चरैः समावेदितः शत्रुप्रचारो यस्मै सः । तेनैव प्रकारेण । ततः परस्मात् शङ्केत । जम.

( २ ) उपसंहरन्नाह– साध्विति । अप्रमत्तः अवहितः व्यवसायवर्ती व्यवसाये स्थितः विजिगीषुः साधु यथा भवति तथा येन प्रकारेण कूटयुद्धादिना परं शत्रुं निहन्यात् विनाशयेत्, अप्रमत्तः विजिगीषुः चरैः प्रणिधिभिः समावेदिततत्प्रचारः सम्यक् विज्ञापितशत्रुप्रचारः सन् तेनैव तेन प्रकारेणैव, कूटयुद्धादिनेति यावत्, ततः यातव्यात् शङ्केत शङ्कां कुर्वीत । 'साध्वप्रमत्तः' इत्यत्र 'साधुप्रवृत्तः' इति मुद्रितपुस्तकपाठः 'येन प्रकारेण' इत्यत्र 'यानप्रकारेण' इति मुद्रितपुस्तकपाठश्च न समीचीनः । उनिसा.

**[2]सुनियतमुपहन्यात् कूटयुद्धेन शत्रून्**
**न हि तिरयति धर्मं छद्मना शत्रुघातः ।**
**अचकितमवसुप्तं पाण्डवानामनीकं**
**निशि सुनिशितशस्त्रो द्रोणसूनुर्जघान ॥**

---

( १ ) कानी. १९।६९ ; उनिसा. (नीहारस्तिमिरं गावश्वभ्राद्रिवननिम्नगाः । अवन्ति शत्रुमित्यादि सत्त्रं सद्म प्रकीर्तितम् ।।) ; नीम. ६२ चतुर्थचरणे (सत्रवत्संप्रकीर्तितः) उत्तरार्धानन्तरम् (अरिनाशो महीपानां नयशास्त्रविशारदः [ ? ]) इत्यधिकम्, पूर्वार्धं नास्ति.

( २ ) कानी. १९।६९ इत्यतोऽनन्तरं सार्धश्लोकद्वयमिदमादर्शपुस्तके कंसचिह्नयोर्मुद्रितम्.

( १ ) कानी. १९।७० ; नीम. ६२ साध्वप्रमत्तो ( साधु प्रमत्तं ).

( २ ) कानी. १९।७१ ; उनिसा. सुनियतमुप ( नियतमुपनि ) घातः ( नाशः ) मवसु ( मिव सु ) ; नीम. ६२ सुनियतमुप ( नियतमिति नि ) युद्धेन शत्रून् ( युद्धेषु शत्रुं ) घातः ( नाशः ) मवसु ( मिव सु ).

(१) ननु निर्दिष्टदेशकालः सङ्ग्रामो धर्मिष्ठः, कूटयुद्धस्याधर्मिष्ठत्वात् कथं शत्रुमनेन हन्यादित्याह— सुनियतमित्यादि। शत्रुः अपकारी, तस्य कूटेन व्यापादनं नाधर्माय। तथा चाऽऽगमः— 'विषेण वा माधव मायया वा शस्त्रेण गोविन्द तथाऽग्निना वा। यैस्तै-रुपायैररविन्दनाभ शत्रोर्वधं वेदविदो वदन्ति॥' इति। पूर्वैराचरितश्चायं मार्ग इत्याह— अचकितमिति। विस्रब्धं सुप्तम्। द्रोणसूनुः अश्वत्थामा। स हि पितृवधामर्षितो विस्रब्धसुप्ते पाण्डवानीके सौप्तिकमकरोदिति। जम.

(२) कूटयुद्धैः शत्रुवधे पापमाशङ्क्याऽऽह— नियतेति। विजिगीषुः नियतं निश्चयेन कूटयुद्धेन शत्रून्, उपनिहन्यात् उपेत्य विनाशयेत्। हि यतः छद्मना छलेन शत्रुनाशः धर्मं न तिरयति आच्छादयति, विनाशयतीति यावत्। तदेव दृष्टान्तेन द्रढयति— अचकितेति। सुनिशितशस्त्रः सुतीक्ष्णायुधः द्रोणसूनुः अश्वत्थामा इव यथा अचकितं निशि सुप्तं निद्रितं पाण्डवानाम् अनीकं सैन्यं जघान विनाशितवान्। 'नियतमुपनिहन्यात् कूटयुद्धेन' इत्यत्र 'नियतमिति निहन्यात् कूटयुद्धेषु' इति, 'तिरयति धर्मं छद्मना' इत्यत्र 'निरयति धर्मच्छद्मना' इति च मुद्रितपुस्तक-पाठो न समीचीनः। उनिसा.

(३) अत्र ब्राह्मणवर्जं हन्यात्। ब्राह्मणं तु स्वस्य वधार्थमायान्तं निवारयेत्। यदा निवारणमपि कर्तु-मशक्तस्तदा हन्यादेव। यथाऽऽह मनुः— 'गुरुं वा बाल-वृद्धौ वा ब्राह्मणं वा बहुश्रुतम्। आततायिनमायान्तं हन्यादेवाविचारयन्॥ नाऽऽततायिवधे दोषो हन्तु-र्भवति कश्चन॥' (मस्मृ. ८।३५०–३५१) इति। कात्यायनोऽपि— 'आततायिनमायान्तमपि वेदान्तगं रणे। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्॥' इति। अतो जिघांसत एव विप्रस्य मारणम्, न सुप्तादेः। अत्र विज्ञानेश्वरः— मनुवाक्ये वाशब्दात् कात्यायनवाक्येऽप्यपिशब्दान्न ब्राह्मणवधे तात्पर्यम्, किंत्वेतादृशो ब्राह्मणोऽपि वध्यः, किमुतान्य इति कैमु-तिकन्यायेनैतादृशान्यवधपरमित्याह। वस्तुतस्तु स्ववधो-द्यतो ब्राह्मणोऽपि वध्य एव, पूर्वोक्तवचनयोः स्वार्थ-त्यागे असाधारणमानाभावात्। गालवस्तु अहनने दोषमाह— 'उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम्। निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत्॥' इति। आत्मघाती भवेदित्यर्थः। बृहस्पतिरपि— 'स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम्। अहत्वा भ्रूणहा स स्यान्न हत्वा भ्रूणहा भवेत्॥' इति। 'सर्वत एवाऽऽत्मानं गोपायेत्' (गौध. ९।३५) इति श्रुतिरपि। अतः स्ववधार्थमागच्छन् ब्राह्मणो वध्यः, परवधार्थे गच्छन् स्वयं न वध्यः इति तात्पर्यम्। एतत्परमेव बार्हस्पत्यम्— 'आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम्। यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत्॥' इति। यत्तु धृष्टद्युम्नस्य द्रोणवधे कुत्सनं कृतम्, न तद्ब्राह्मणवध-निमित्तमेव, किंतु न्यस्तशस्त्रवधनिमित्तम्, तादृशस्य ब्राह्मणस्य वधेऽन्यापेक्षया दोषातिशयात्। नीम. ६२

## शुक्रनीतिः

धर्मयुद्धकूटयुद्धयोर्विकल्पः

**[१]धर्मयुद्धैः कूटयुद्धैर्हन्यादेव रिपुं सदा॥**

धर्मयुद्धैः कूटयुद्धैर्वा सदा रिपुं हन्यादेव। शुनीटी.

**[२]धर्मयुद्धे तु कूटे वै न सन्ति नियमा अमी।**
**न युद्धं कूटसदृशं नाशनं बलवद्रिपोः॥**

धर्मयुद्धे तु। पूर्वोक्तनियमः बोद्धव्यः इति शेषः। कूटे कपटमये तु युद्धे अमी नियमाः न सन्ति। बल-वतः रिपोः शत्रोः कूटयुद्धसदृशं नाशनं नाशोपायः न। अस्तीति शेषः। शुनीटी.

**रामकृष्णेन्द्रादिदेवैः कूटमेवाऽऽदृतं पुरा।**
**कूटेन निहतो वालिर्यवनो नमुचिस्तथा॥**

पुरा पूर्वस्मिन् काले रामेण कृष्णेन इन्द्रादिदेवैश्च कूटमेव आहतम्। यथा कूटेन कपटेन युद्धेन वालिः निहतः। रामेणेति शेषः। यवनः निहतः। कृष्णेनेति शेषः। नमुचिः निहतः। इन्द्रेणेति शेषः। शुनीटी.

(१) शुनी. ४।७।३५०.
(२) शुनी. ४।७।३५९–३६०.

## नीतिवाक्यामृतम्

कूटयुद्धलक्षणम् , तूष्णींदण्डस्वरूपम्

* [1]अन्याभिमुखं प्रयाणकमुपक्रम्यान्योपघातकरणं कूटयुद्धम् ॥

विषविषमपुरुषोपनिषद्वाग्योगोपजापैः परोपघातानुष्ठानं तूष्णींदण्डः ॥

## मानसोल्लासः

धर्मयुद्धशक्त्यभावे प्रयोक्तव्यं त्रिविधदण्डात्मकं कूटयुद्धम्

[2]बलशक्तिविहीनेन नृपेण रिपुघातिना ।
प्रयोज्याः स्युस्त्रयो दण्डा विषघाताभिचारजाः ॥
विषं हालाहलं शृङ्गि कालकूटं भयावहम् ।
वत्सनाभं चतुर्थं तु स्थावरं परिकीर्तितम् ॥
सर्पदंष्ट्रादिसंजातं विषं तज्जङ्गमं विदुः ।
विरुद्धद्रव्यमिलितं कृत्रिमं विषमुच्यते ॥
शात्रवाणां विरक्ता ये कृत्यास्ते पुरुषा वराः ।
तान् विसेद्य प्रदानेन रसं तैस्तु प्रयोजयेत् ।
तडागकूपवापीषु तथा लघुसरःसु च ॥
स्नानोदके तथा तैले पादाभ्यङ्गे सपादुके ।
क्रीडापुष्करिणीमध्ये प्रयुञ्जीत विषं द्विषाम् ॥
कुमारसचिवामात्यमन्त्रिसेनाधिपेषु च ।
महावारणमुख्येषु तुरगेषूत्तमेषु च ॥
एवं विषप्रयोगेण शत्रूणां क्षुद्रघातकम् ।
क्षीणेन क्रियते यत्तु विषदण्डः स उच्यते ॥
शूरश्च दृढभक्तश्च त्यक्तप्राणभयश्च यः ।
वीरश्च समयज्ञश्च वधोपायविचक्षणः ॥
बन्धुपुत्रप्रदत्ताधिगृहीतबहुवेतनः ।
तेन घातं प्रयुञ्जीत प्रमत्तारिवधेच्छया ॥
गीतवाद्यप्रसक्तेषु द्यूतक्रीडारतेषु च ।
मृगव्यासक्तचित्तेषु देवयात्राप्रसङ्गिषु ॥
अङ्कमल्लविनोदेषु तथाऽन्येषूत्सवादिषु ।
अन्तःपुरप्रचारेषु देवपूजापरेषु च ॥
वीरक्रीडाविषण्णेषु भोजनास्थानवर्तिषु ।
व्यग्रेष्वन्येषु कार्येषु कुर्याद्वैरिषु घातनम् ॥
पूर्वोदितगुणैस्तीक्ष्णैः सुभद्रैर्यन्त्रपातनम् ।
मायया क्रियते शत्रोर्घातदण्डः स कीर्तितः ॥
अथर्वविधितत्त्वज्ञैर्ब्राह्मणैर्विजितेन्द्रियैः ।
मन्त्रतन्त्रविधानज्ञैर्दूरादुन्मूलयेद्रिपुम् ॥
अभिचारिकहोमैस्तु मन्त्रैः षट्कर्मसाधकैः ।
यन्त्रलेखनकैरुग्रैरुपांशुजपनादिभिः ॥
मन्त्रतन्त्रसुसिद्धैश्च पटहैः काहलादिभिः ।
पताकाकारकैर्दीपैर्धूपैर्मायूरकूर्चकैः ॥
बाणैर्मन्त्रप्रयुक्तैश्च सिद्धार्थकयुताक्षतैः ।
मोहयेत् स्तम्भयेच्छत्रून् स्थानादुच्चाटयेत्तथा ॥
विद्वेषयेच्च मित्राणि वशे कुर्याच्च विद्विषः ।
संहरेज्जीवितं यत्तु स्यात्स दण्डोऽभिचारकः (? जः) ॥

## अनिर्दिष्टकर्तृकवचनम्

येन केनाप्युपायेन शत्रोर्वधः इष्टः

[1]विषेण वा माधव मायया वा
शस्त्रेण गोविन्द तथाऽग्निना वा ।
यैस्तैरुपायैररविन्दनाभ
शत्रोर्वधं वेदविदो वदन्ति ॥

* अस्य सूत्रद्वयस्य व्याख्यानम् 'यात्रा– युद्धसामान्यविचारः' इत्यस्मिन् प्रकरणे (पृ. २६९९–२७००) द्रष्टव्यम् ।

(१) नीवा. ३०।१०–११.
(२) मासो. २।१२२५–१२४२.

(१) जम. १९।७१ आगमः.

# यात्रा– विजयोत्तरकृत्यानि

## गौतमः

युद्धजितद्रव्यविभागः

**[1]जेता लभेत साङ्ग्रामिकं वित्तम् ॥**

(१) यदि राज्ञा नियुक्तः परं निर्जित्य धनमासादयति, सः तत् साङ्ग्रामिकं धनं लभेत । मभा.

(२) राज्ञा नियुक्तो राजभृत्यादिः सङ्ग्रामे शत्रून् निर्जित्य यद् वित्तं लभते तत् स एव जेता लभेत, न राजा । गौमि.

**[2]वाहनं तु राज्ञः ॥**

(१) अस्य अपवादमाह– वाहनमिति । वाहनं हस्त्यादि । तुशब्दो विशेषवाची । महार्घं यद्रत्नादि तदपि राज्ञ एव, विशेषतो वाहनमिति । ततश्च वाहनविषये स्वल्पमपि द्रष्टव्यम् । मभा.

(२) वाहनं हस्त्यश्वादिकं निर्जित्य लब्धं राज्ञो भवति, न जेतुः । गौमि.

**[3]उद्धारश्चापृथग्जये ॥**

(१) अपृथग्जयः सराजको जयः, तत्र उद्धारः राज्ञः सारद्रव्यम् । वाहनसमुच्चयार्थश्चकारः । मभा.

(२) यदि सर्वे सैनिकाः संभूय जयेयुः, जित्वा च किमपि लभेरन्, तस्मिन् अपृथग्जये राज्ञ उद्धारः विशेषद्रव्यं स्वयं वृतो देयः । गौमि.

(३) * पृथग्जये स्वयमेकाकिनैवार्जिते वित्ते योद्धॄन् यथार्हं यथोचितं पूर्वकृतमानसत्कारादिकमपेक्ष्य सभाजयेत् पूजयेत् । राप्र. ४०९

**[1]अन्यत्तु यथार्हं भाजयेद्राजा ॥**

(१) शौर्याद्यपेक्षया योधेभ्यो दद्यात् । राजग्रहणम्– एवं कुर्वन् अनुरागाद्राजा संपद्यत इति । स्वयमेव विभजनार्थं वा, न परैरिति । मभा.

(२) यत् स्वयं वृतं माणिक्यादि ततोऽन्यत् यथार्हं यस्य यावान् व्यापारो यावद्वा शौर्यं तदनुरूपेण भाजयेत् यथैते तदनुरूपं भजेरंस्तथा कारयेदिति । गौमि.

## विष्णुः

परदेशपरपुरप्राप्तौ तद्राजकुलीनपुत्रकन्याद्यभिषेकादीनि कृत्यानि

**[2]परदेशावाप्तौ तद्देशधर्मान्नोच्छिन्द्यात् ॥**

**[3]राजा परपुरावाप्तौ तु तत्र तत्कुलीनमभिषिञ्चेत् ॥**

**[4]न राजकुलमुच्छिन्द्यात् ॥**

**अन्यत्राकुलीनराजकुलात् ॥**

**[5]आयद्वाराणि नोच्छिन्द्यात् ॥**

(१) गौध. १०।१९ ; राक. १३७ ; मभा. ; गौमि. १०।२० ; राप्र. ४०९.

(२) गौध. १०।२० ; राक. १३७ ; मभा. ; गौमि. १०।२१ ; मनु. ७।९७ तु (च) ; राप्र. ४०९.

(३) गौध. १०।२१ ; राक. १३७ उद्धारश्चा (उद्धारांश्चा) ; मभा. ; गौमि. १०।२२ ; मनु. ७।९७ (उद्धारं च) एतावन्मात्रम् ; राप्र. ४०९ (योद्धॄंश्च पृथग्जये यथार्हं सभाजयेद्राजा) इति उत्तरसूत्रेणैकवाक्यता.

* उत्तरसूत्रेणास्यैकवाक्यत्वादुभयोर्व्याख्यानमिदम् ।

(१) गौध. १०।२२ ; राक. १३७ ; मभा. ; गौमि. १०।२३ ; राप्र. ४०९ पाठभेदः पूर्वसूत्रे द्रष्टव्यः .

(२) विस्मृ. ३।४२.

(३) विस्मृ. ३।४७ ; राक. १३८ रावाप्तौ (रप्राप्तौ) (तु तत्र०) षिञ्चेत् (षिञ्चयेत्) ; रार. ३८ (अरावाप्तौ तद्वंश्यमभिषिञ्चेत् ॥) ; राप्र. ४११ षिञ्चेत् (षेचयेत्) शेषं राकवत् .

(४) विस्मृ. ३।४८–४९; राक. १३८; राप्र. ४११.

(५) विस्मृ. ३।५३ ; राक. १४६ आय (आय) ; राप्र. १२५ राकवत् .

(१) आयद्वाराणि द्रव्योत्पत्तिस्थानानि।
राक. १४६

(२) स्वपुरे परपुरे दुर्गेषु वा आयद्वाराणि पूर्वराजकृतानि तोरणगोपुरादीनि। वै.

(३) आयद्वाराणि द्रव्योत्पत्तिस्थानानि खनिशुल्कप्रभृतीनि। राप्र. १२५

## महाभारतम्

परपुरराष्ट्रप्राप्तौ तद्राजकुलीनपुत्रकन्याद्यभिषेकप्रकृतिरञ्जनाश्वमेधादीनि कृत्यानि

**[1]सोऽयं त्वमिह संक्रान्तो विक्रमेण वसुंधराम्।
निर्जिताश्च महीपाला विक्रमेण त्वयाऽनघ॥
तेषां पुराणि राष्ट्राणि गत्वा राजन् सुहृद्वृतः।
भ्रातॄन् पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय॥**

हतनाथानां स्त्रीणां शोकेन मम दोषोऽनन्त इत्युक्तं तत्राऽऽह– तेषामिति। नीटी.

**बालानपि च गर्भस्थान् सान्त्वानि समुदाचरन्।
रञ्जयन् प्रकृतीः सर्वाः परिपाहि वसुंधराम्॥
कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय।
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यति॥**

कामा आशेरते अस्मिन् कामाशयः, पूर्णकाम इत्यर्थः। नीटी.

**एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत।
यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा॥
*[2]बलेनावजितो यश्च न तं युध्येत भूमिपः।
संवत्सरं विप्रणयेत्तस्माज्जातः पुनर्भवेत्॥
नार्वाक् संवत्सरात् कन्या स्प्रष्टव्या विक्रमाहृता।
एवमेव धनं सर्वं यच्चान्यत् सहसाऽऽहृतम्॥
न तु वन्ध्यं धनं तिष्ठेत् पिबेयुर्ब्राह्मणाः पयः।
युञ्जीरन् वाऽप्यनडुहः क्षन्तव्यं वा तदा भवेत्॥
[1]सहसा नाम्य भूतानि क्षिप्रमेव प्रसादयेत्।
सान्त्वेन भोगदानेन स राज्ञां परमो नयः॥**

अनार्यभूतानि जयादीनि कृत्वा प्रसादयेत्। नीटी.

**[2]भुज्यमाना ह्ययोगेन स्वराष्ट्रादभितापिताः।
अमित्रान् पर्युपासीरन् व्यसनौघप्रतीक्षिणः॥**

अयोगेन असान्त्वेन। नीटी.

**[3]अमित्रोपग्रहं चास्य ते कुर्युः क्षिप्रमापदि।
संदुष्टाः सर्वतो राजन् राजव्यसनकाङ्क्षिणः॥**

अमित्रोपग्रहं तद्वैरिणामानुकूल्यम्। ते बलात् भुज्यमानाः। नीटी.

**[4]नामित्रो विनिकर्तव्यो नातिच्छेद्यः कथंचन।
जीवितं ह्यप्यतिच्छिन्नः संत्यजत्येकदा नरः॥**

विनिकर्तव्यः निकृत्या वञ्चयितव्यः। नीटी.

**[5]अल्पेनापि हि संयुक्तस्तुष्यत्येवापराधिकः।
शुद्धं जीवितमेवापि तादृशो बहु मन्यते॥
[6]यस्य स्फीतो जनपदः संपन्नः प्रियराजकः।
संतुष्टभृत्यसचिवो दृढमूलः स पार्थिवः॥**

---

* एतेषां त्रयाणां श्लोकानां व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'यात्रा– धर्मयुद्धम्' इत्यस्मिन् प्रकरणे (पृ. २७६६) द्रष्टव्यः।

(१) भा. १२।३४।३०–३४, शेषः स्थलादिनिर्देशः 'यात्रा– युद्धधर्म्याधर्म्यत्वविचारः' इत्यस्मिन् प्रकरणे (पृ. २४५०) द्रष्टव्यः.

(२) भा. १२।९७।४–६.

(१) भा. १२।९७।११; भामु. १२।९६।१२ सा नाम्य भू (साऽनार्यभू).

(२) भा. १२।९७।१२; भामु. १२।९६।१३ त्रान् पर्यु (त्रास्तमु).

(३) भा. १२।९७।१३; भामु. १२।९६।१४ दुष्टाः (तुष्टाः).

(४) भा. १२।९७।१४; भामु. १२।९६।१५ चतुर्थचरणे (संत्यजेच्च कदाचन).

(५) भा. १२।९७।१५; भामु. १२।९६।१६ हि (च) वापराधिकः (व नराधिपः).

(६) भा. १२।९७।१६; भामु. १२।९६।१७.

[1]ऋत्विक्पुरोहिताचार्या ये चान्ये श्रुतसंमताः ।
पूजार्हाः पूजिता यस्य स वै लोकजिदुच्यते ॥

[2]एतेनैव च वृत्तेन महीं प्राप सुरोत्तमः ।
अन्वेव चैन्द्रं विजयं व्यजिगीषन्त पार्थिवाः ॥

[3]भूमिवर्जं पुरं राजा जित्वा राजानमाहवे ।
अमृताश्चौषधीः शश्वदाजहार प्रतर्दनः ॥

धान्यान्यपि शत्रोर्हन्तव्यानीति किमु स्वर्णादिकमिति भावः । नीटी.

[4]अग्निहोत्राण्यग्निशेषं हविर्भाजनमेव च ।
आजहार दिवोदासस्ततो विप्रकृतोऽभवत् ॥

अग्निशेषं यज्ञाङ्गभूतं हविः । भोजनं सिद्धान्नम् । एतन्न हर्तव्यमित्यर्थः । विप्रकृतः वञ्चितः । नीटी.

[5]सराजकानि राष्ट्राणि नाभागो दक्षिणां ददौ ।
अन्यत्र श्रोत्रियस्वाच्च तापसस्वाच्च भारत ॥

[6]उच्चावचानि वृत्तानि धर्मज्ञानां युधिष्ठिर ।
आसन् राज्ञां पुराणानां सर्वं तन्मम रोचते ॥

राज्ञा सर्वं हर्तव्यमित्यर्थः । नीटी.

(१) भा. १२।९७।१७ ; भामु. १२।९६।१८ संमताः ( सत्तमाः ) जिदु ( विदु ).

(२) भा. १२।९७।१८ ; भामु. १२।९६।१९ उत्तरार्धे ( अनेन चेन्द्रविषयं विजिगीषन्ति पार्थिवाः ॥ ).

(३) भा. १२।९७।१९ ; भामु. १२।९६।२० पुरं ( धनं ) राजानमा ( राजन् महा ) अमृताश्चौ ( अपि चान्नौ ).

(४) भा. १२।९७।२० ; भामु. १२।९६।२१ ण्यग्निशेषं ( ग्निशेषं च ) भाज ( भोज ).

(५) भा. १२।९७।२१ ; भामु. १२।९६।२२ सस्वाच्च ( सार्थाच्च ).

(६) भा. १२।९७।२२ ; भामु. १२।९६।२३ वृत्तानि ( वित्तानि ).

क्षात्रधर्मः हिंसाप्रधानः पापम्, भूतरक्षणेन दस्युप्राणदानेन प्रजापालनेन च क्षत्रियस्य पापक्षयः

युधिष्ठिर उवाच–

[1]क्षत्रधर्मान्न पापीयान् धर्मोऽस्ति भरतर्षभ ।
अभियाने च युद्धे च राजा हन्ति महाजनम् ॥

महाजनं कटकाश्रितं वैश्यादिजनम् । नीटी.

[2]अथ स कर्मणा येन लोकाञ्जयति पार्थिवः ।
विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥

केन तद्वधप्रायश्चित्तं कृत्वा पुण्यफलमाप्नोतीत्यर्थः । नीटी.

भीष्म उवाच–

[3]निग्रहेण च पापानां साधूनां प्रग्रहेण च ।
यज्ञैर्दानैश्च राजानो भवन्ति शुचयोऽमलाः ॥

उत्तरमाह– निग्रहेणेति । नीटी.

[4]उपरुन्धन्ति राजानो भूतानि विजयार्थिनः ।
त एव विजयं प्राप्य वर्धयन्ति पुनः प्रजाः ॥

उपरुन्धन्ति पीडयन्ति । नीटी.

[5]अपविध्यन्ति पापानि दानयज्ञतपोबलैः ।
अनुग्रहेण भूतानां पुण्यमेषां प्रवर्धते ॥

अपविध्यन्ति दूरीकुर्वन्ति । नीटी.

(१) भा. १२।९८।१ ; भामु. १२।९७।१ ( क्षत्रधर्माद्धि पापीयान्न धर्मोऽस्ति नराधिप । अपयानेन युद्धेन राजा हन्ति महाजनम् ॥ ) ; नीम. ६५.

(२) भा. १२।९८।२ ; भामु. १२।९७।२ येन (केन) ; नीम. ६५ भामुवत्.

(३) भा. १२।९८।३ ; भामु. १२।९७।३ प्रग्र ( संग्र ) ; नीम. ६५ साधूनां प्रग्रहेण (साध्वनुग्रहणेन).

(४) भा. १२।९८।४ ; भामु. १२।९७।४ ; नीम. ६२ विजयार्थिनः (विविधानि च), ६५.

(५) भा. १२।९८।५ ; भामु. १२।९७।५ ग्रहेण ( ग्रहाय ) प्रवर्ध (विवर्ध) ; नीम. ६५ विध्यन्ति (विध्यति) प्रवर्ध (विवर्ध).

**[1]यथैव क्षेत्रनिर्दाता निर्दन् वै क्षेत्रमेकदा।**
**हिनस्ति कक्षं धान्यं च न च धान्यं विनश्यति॥**

निर्याता तृणाद्यपनयेन शोधकः। 'निर्दाता' इति पाठे 'दैप् शोधने' इत्यस्य रूपम्। कक्षं तृणम्।

नीटी.

**[2]एवं शस्त्राणि मुञ्चन्तो घ्नन्ति वध्यानथैकदा।**
**तस्यैषा निष्कृतिः कृत्स्ना भूतानां भावनं पुनः॥**

भावनं वर्धनम्। नीटी.

**[3]यो भूतानि धनज्यानाद्वधात् क्लेशाच्च रक्षति।**
**दस्युभ्यः प्राणदानात् स धनदः सुखदो विराट्॥**
**[4]स सर्वयज्ञैरीजानो राजाऽथाभयदक्षिणैः।**
**अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम्॥**
**[5]तावल्लुण्ठेत्पीडयेच्च शत्रोः प्रकृतयः स्वयम्।**
**वशे जाते पुनस्तासु पितृवद्वृत्तिमाचरेत्॥**

## वाल्मीकिरामायणम्

युद्धमारितशत्रुस्थाने नृपान्तरास्थापनं नरकावहम्

**[6]यो हि शत्रुं समुत्पाट्य पार्थिवस्य पुनः क्षये।**
**न विधत्ते नृपं तत्र नरकं स हि गच्छति॥**

(१) भा. १२।९८।६; भामु. १२।९७।६ पूर्वार्धे (यथैव क्षेत्रनिर्याता निर्यातं क्षेत्रमेव च।) कक्षं धान्यं (धान्यं कक्षं).

(२) भा. १२।९८।७; भामु. १२।९७।७ नथैकदा (ननेकधा); नीम. ६६ नथैकदा (ननेकधा) कृत्स्ना (दृष्टा).

(३) भा. १२।९८।८; भामु. १२।९७।८ धनज्यानाद्व (धनाक्रान्त्या व); नीम. ६६ धनज्यानाद्व (धनाज्जात्या व) स धनदः (च स धर्मः).

(४) भा. १२।९८।९; भामु. १२।९७।९; नीम. ६६ दक्षिणैः (दक्षिणः).

(५) नीम. ६२.

(६) वारा. ७।६५।४२ शत्रुं (वंशं) पुनः क्षये (परिक्षये) नृपं (पुरं) स हि गच्छति (सोऽवगाहते); वाराकु. ७।६२।१८.



## कौटिलीयमर्थशास्त्रम्

विजयोत्तरं स्वधर्मेण वर्णाश्रमपालनेन च पृथिवीभोगः

**[1]जित्वा च पृथिवीं विभक्तवर्णाश्रमां स्वधर्मेण भुञ्जीत॥**

स्वधर्मेण यथायथं वर्णाश्रमयोः विहितेन धर्मेण मन्वाद्युक्तेन। श्रीमूला.

त्रिविधभूमिस्वरूपे जितराष्ट्रे प्रशमनशान्तिधर्म्यचरित्रस्थापनादीनि राजकर्तव्यानि

**[2]द्विविधं विजिगीषोः समुत्थानम्– अटव्यादिकमेकग्रामादिकं च॥**

'लब्धप्रशमनम्' इति सूत्रम्। विजिगीषुणा लब्धस्य परदुर्गादिकस्य प्रशमनं लब्धप्रशमनम्। तच्च दुर्गादिवासिनामपूर्वभूपतिविषयशङ्काद्यपोहनेन स्वात्मनि विस्रम्भजननम्। तदिहोच्यते इति सूत्रार्थः।

द्विविधमित्यादि। समुत्थानम् उद्योगः, तेन तदुपार्जितं लक्ष्यते। अटव्यादिकमिति आदिपदेन खन्यादिकम्, एकग्रामादिकमिति आदिपदेन नगरादिकं च ग्राह्यम्। श्रीमूला.

**त्रिविधश्चास्य लम्भः– नवो भूतपूर्वः पित्र्य इति॥**

लम्भः लाभः, तेन लब्धोऽर्थो लक्ष्यते। नवः अस्वीय एव विजिगीषुणा शत्रुसकाशार्जितः। भूतपूर्वः स्वीय एव शत्रुवशे स्थितस्तं जित्वा प्रत्याहृतः। पित्र्यः स्वपितृसंबन्ध्येवार्थः परहस्तगतः परं जित्वा प्रत्याहृतः।

श्रीमूला.

**नवमवाप्य लम्भं परदोषान् स्वगुणैश्छादयेद्गुणान् गुणद्वैगुण्येन। स्वधर्मकर्मानुग्रहपरिहारदानमानकर्मभिश्च प्रकृतिप्रियहितान्यनुवर्तेत। यथासंभाषितं च कृत्यपक्षमुपग्राहयेत्। भूयश्च कृतप्रयासम्। अविश्वास्यो हि विसंवादकः स्वेषां परेषां च भवति, प्रकृतिविरुद्धा-**

(१) कौ. १३।४. (२) कौ. १३।५.

**चारश्च । तस्मात् समानशीलवेषभाषाचारतामुपगच्छेत् । देशदैवतसमाजोत्सवविहारेषु च भक्तिमनुवर्तेत ॥**

तत्र नवलम्भे विधिमाह– नवमवाप्येत्यादि । छादयेत् विस्मारयेत् । गुणान् परकीयान् । गुणद्वैगुण्येन परगुणातिशायिस्वगुणप्रदर्शनेन । स्वधर्मकर्मानुग्रहपरिहारदानमानकर्मभिरित्यादि । स्वीयैर्धर्मानुष्ठानैः कृष्यादिकर्मसु ऋणदानाद्युपकारैः करमोक्षणैः भूम्यादिदानकर्मभिः पूजनकर्मभिश्च । यथासंभाषितं पूर्वकृतसंविदनुसारेण कृत्यपक्षं परकीयं क्रुद्धादिवर्गं कृतात्मोपकारम् उपग्राहयेत् धनादिदानेन प्रीणयेदित्यर्थः । भूयः बहुतरं कृतप्रयासं कृतपरिश्रमप्रकर्षम् । प्रकृतिविरुद्धाचारः राष्ट्रजनविरुद्धवृत्तवेषादिपरिग्रहः । देशदैवतसमाजोत्सवविहारेषु लब्धे देशे यत् दैवतं जनैराद्रियमाणं समाजः उत्सवो विहारश्च तेषु । श्रीमूला.

**देशग्रामजातिसंघमुख्येषु चाभीक्ष्णं सत्रिणः परस्यापचारं दर्शयेयुः । माहाभाग्यं भक्तिं च तेषु स्वामिनः स्वामिसत्कारं च विद्यमानम् । उचितैश्चैनान् भोगपरिहाररक्षावेक्षणैर्भुञ्जीत । सर्वदेवताश्रमपूजनं च विद्यावाक्यधर्मशूरपुरुषाणां च भूमिद्रव्यदानपरिहारान्कारयेत् । सर्वबन्धनमोक्षणमनुग्रहं दीनानाथव्याधितानां च । चातुर्मास्येष्वर्धमासिकमघातम्, पौर्णमासीषु च चातूरात्रिकम्, राजदेशनक्षत्रेष्वेकरात्रिकम् । योनिबालवधं पुंस्त्वोपघातं च प्रतिषेधयेत् । यच्च कोशदण्डोपघातिकमधर्मिष्ठं वा चरित्रं मन्येत, तदपनीय धर्म्यव्यवहारं स्थापयेत् । चोरप्रकृतीनां म्लेच्छजातीनां च स्थानविपर्यासमनेकस्थं कारयेद् दुर्गराष्ट्रदण्डमुख्यानां च । परोपगृहीतानां च मन्त्रिपुरोहितादीनां परस्य प्रत्यन्तेष्वनेकस्थं वासं कारयेत् । अपकारसमर्थाननु क्षियतो वा भर्तृविनाशमुपांशुदण्डेन प्रशमयेत् । स्वदेशीयान् वा परेण वाऽवरुद्धानपवाहितस्थानेषु स्थापयेत् ॥**

परस्य जितस्य शत्रोः अपचारम् अहितानुष्ठानम् । माहेत्यादि । माहाभाग्यं महाभागत्वम् । तेषु स्वदेशीयेषु ग्रामजातिसंघमुख्येषु । भक्तिं वात्सल्यम् । उचितैरित्यादि । भोगपरिहाररक्षावेक्षणैः— भोगः राजभागः, परिहारः करमोक्षः, रक्षावेक्षणं कण्टकशोधनम्, एतैः भुञ्जीत उपयुञ्जीत । सर्वदेवतेत्यादि । विद्यावाक्यधर्मशूरपुरुषाणाम्— विद्याशूराः पुरुषाः विपश्चितः, वाक्यशूराः वाग्मिनः, धर्मशूराः धार्मिकाः, तेषाम् । सर्वेत्यादि । सर्वबन्धनमोक्षणं सर्वेषां काराबद्धानां बन्धनाद् मोचनम् । चातुर्मास्येषु चतुर्षु चतुर्षु मासेष्वतीतेषु अर्धमासिकमघातं पञ्चदशदिवसव्यापकं प्राणिवधप्रतिषेधम्, पौर्णमासीषु च चातूरात्रिकं रात्रिचतुष्टयव्यापकमघातम्, राजदेशनक्षत्रेषु राजनक्षत्रेषु देशलम्भनक्षत्रेषु च एकरात्रिकम् एकरात्रिव्यापकमघातम् । कारयेदिति वर्तते । योनिबालवधम्— योनयः विजननक्षमाः कुक्कुट्यादयः, बालाः भक्ष्यप्राणितर्णकाः, तेषां वधं पुंस्त्वोपघातं च षण्डीकरणं च प्रतिषेधयेत् । यच्चेत्यादि । धर्म्यव्यवहारं धर्मानपेतचरित्रानुष्ठानम् । चोरप्रकृतीनामित्यादि । स्थानविपर्यासं स्थितिव्यत्ययम् । अनेकस्थम् असंहतम् । परोपगृहीतानां चेत्यादि । प्रत्यन्तेषु विषयान्तेषु । अनेकस्थं भिन्नभिन्नप्रदेशगतम् । अपकारसमर्थानित्यादि । भर्तृविनाशमनु क्षियतः स्वामिविनाशं लक्षीकृत्य वसतः । उपांशुदण्डेन रहोवधेन । स्वदेशीयान् वेत्यादि । अवरुद्धान् कारायां नियन्त्रितान् । अपवाहितस्थानेषु अपवाहितानां स्वस्वाधिकारप्रच्यावितानां परपक्ष्याणामधिकारपदेषु । श्रीमूला.

**यश्च तत्कुलीनः प्रत्यादेयमादातुं शक्तः प्रत्यन्ताटवीस्थो वा प्रबाधितुमभिजातस्तस्मै विगुणां भूमिं प्रयच्छेत्, गुणवत्याश्चतुर्भागं वा कोशदण्डदानमवस्थाप्य यदुपकुर्वाणः पौरजानपदान् कोपयेत् । कुपितैस्तैरेनं घातयेत्, प्रकृतिभिरुपक्रुष्टमपनयेत्, औपघातिके वा देशे निवेशयेदिति ॥**

यदि परस्मादपहृतां भूमिं तद्वंश्यः कश्चित् प्रत्यादातुं शक्त इति शङ्क्येत, विषयान्ताटवीस्थो वा तां बाधितुं

शक्त इति शङ्केत, तस्मै तथाविधाय गुणहीनां भूमिं दद्यात्, अथवा गुणवत्याः भूमेश्चतुर्थांशं दद्यात् कोशदण्डदानमात्मार्थे तावत् बहु व्यवस्थाप्य यावतः साधनाय पौरजानपदान् संपीडयेदित्याह– यश्च तत्कुलीन इत्यादि । यत् कोशदण्डदानम् । उपकुर्वाणः साधयन् स्वस्मै ददानो वा । कोपनफलमाह– कुपितैरित्यादि । एनं कोपयितारम् । प्रकृतिभिरित्यादि । उपक्रुष्टं निन्दितम् । औपघातिके उपघातहेतुभूते । इतिशब्दो नवलम्भविधिसमाप्तौ । श्रीमूला.

**भूतपूर्वे येन दोषेणापवृत्तस्तं प्रकृतिदोषं छादयेत् । येन च गुणेनोपावृत्तस्तं तीव्रीकुर्यादिति ॥**

भूतपूर्वलम्भविषयमाह– भूतपूर्वे इत्यादि । अपवृत्तः स्वहस्तात् प्रच्युतः । छादयेत् लोपयेत् । उपावृत्तः परहस्तात् स्वहस्तं प्रत्यापन्नः । तीव्रीकुर्यात् द्रढयेत् ।

**पित्र्ये पितृदोषाञ्छादयेत् । गुणांश्च प्रकाशयेदिति ॥**

पित्र्यलम्भमधिकृत्याऽऽह– पित्र्ये इत्यादि । पितृदोषान् यैर्दोषैः पितुर्हस्तादपवृत्तस्तान् दोषानित्यर्थः । श्रीमूला.

**चरित्रमकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत् ।**
**प्रवर्तयेन्न चाधर्म्यं कृतं चान्यैर्निवर्तयेत् ॥**

अकृतं अन्याप्रवर्तितम् । श्रीमूला.

## मनुः

जितद्रव्यस्वामित्वविवेकः, जितद्रव्यविभागः, जयोत्तरं पूजादानादीनि कर्तव्यानि, जितदेशीयैः समयकरणम्

**[1]रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून् स्त्रियः ।**
**सर्वद्रव्याणि कुप्यं च यो यज्जयति तस्य तत् ॥**

(१) कुप्यं शयनासने ताम्रभाजनादि । यो यज्जयति तस्य तत् । राज्ञः स्वामित्वात् ग्रहणे प्राप्ते तदपवादार्थमेतत् । सुवर्णरूप्यभूम्यावासकादि राज्ञ एव । एवमर्थं परिगणनम् । आयुधसंवाहनादि राज्ञ एव । धान्यादीनां पृथगुपादानात् धनशब्देन गोमहिष्यादिकमुच्यते । *तथा च हीनाः धनं प्राप्य तद्धनं ममार्धमिति प्रयुञ्जते । † मेधा.

(२) रथाश्वहस्तिध्वजहिरण्यधान्यपशुदास्यात्मकम्, सर्वाणि गुडलवणादीनि, कुप्यं ताम्रलोहादि यो यत्परानवजित्य हरति तस्यैव तद्भवति, न राज्ञः । गोरा.

(३) धनं रत्नादि । सर्वद्रव्याणि वस्त्रादीनि । कुप्यं हेमरूप्यान्यधातुद्रव्यम् । ‡ मवि.

(४) युद्धार्जितं यत् तत्किं कर्तव्यमित्यपेक्षायामाह– रथाश्वमिति । § राप्र. ४०९

**[1]राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः ।**
**राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग्जितम् ॥**

(१) येन यज्जितं तेन तद् ग्रहीतव्यमित्यस्यायं विशेषः उच्यते । स्वयम् उद्धारं राज्ञे दद्युः उत्तमद्रव्यमुद्धृत्य दद्युरित्यर्थः । न सर्वं तैर्ग्रहीतव्यम् । इत्येषा वैदिकी श्रुतिः– 'इन्द्रो वै वृत्रं हत्वा' इत्याद्युपक्रम्य 'स महान् भूत्वा देवता अब्रवीदुद्धारं म उद्धरत' (ऐब्रा. १२।१०) इति । राज्ञा वा, अपृथग्जये स्वयंजये (? संभूयजये) यत्रायं विभागो नास्ति 'अनेनायं ग्रामो जितः, एष च परकीयः सामन्तादिः' सर्वेण सर्वः उत्खातमूलः सकृत्कृतः, तत्र राज्ञा लब्धप्रशमनन्यायेन भृत्याः संविभजनीयाः । ¶ मेधा.

(२) उद्धारं तन्मध्ये यदिष्टं वसु राज्ञस्तदुद्धृत्य दद्युः । (अ)पृथग्जितं यैर्योधैर्मिलित्वा जितं तेभ्यो दद्यात् । ‡ मवि.

---

(१) मस्मृ. ७।९६ ; राक. १३७ ; राप्र. ४०९.

* 'तथा राजधनं चार्धमिति प्रयुञ्जते' इति पुस्तकान्तरपाठः ।

† ममु. मेधागतं गोरागतं च । मच., नन्द. मेधागतम् ।

‡ भाच. मविगतम् ।

§ शेषं मविगतम् ।

¶ गोरा. मेधागतम् ।

(१) मस्मृ. ७।९७ ; गोरा. राज्ञश्च (राज्ञे च) ; राक. १३७ ; राप्र. ४०९.

(३) अत एवाऽऽह— राज्ञ इत्यादि । उद्धारं योद्धारो राज्ञे दद्युः । उद्ध्रियते इत्युद्धारः जितधनादुत्कृष्टधनं सुवर्णरजतकुप्यादि राज्ञे समर्पणीयम् । करितुरगादिवाहनमपि राज्ञे देयम्, 'वाहनं च राज्ञ उद्धारं च' (गौध. १०।२०–२१) इति गोतमवचनात् । राज्ञा च अपृथग्जितं सह जितं सर्वयोधेभ्यः यथापौरुषं संविभजनीयम् । * ममु.

(४) उद्धारं सुवर्णरजतभूम्यादि उत्कृष्टं करितुरगवाहनमपि, *इति गौतमवचनात् । तत् श्रेष्ठमपि अपृथग्जितं सहजितं दातव्यं यथापौरुषं विभजनीयम् । मच.

***'भृत्येभ्यो विभजेदर्थान्नैकः सर्वहरो भवेत् ।**
**नाममात्रेण तुष्येत छत्रेण च महीपतिः ॥**
**'जित्वा संपूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान् ।**
**प्रदद्यात् परिहारांश्च ख्यापयेदभयानि च ॥**

(१) येन केनचित्प्रकारेण जित्वाऽरिं लब्धप्रशमनमिदम् । अतोऽस्मिन् पुरे जनपदे देवब्राह्मणांश्च धार्मिकान् विहितानुष्ठायिनो यथासामर्थ्यात् प्रतिषिद्धवर्जं कामात् स्वातन्त्र्येणारीन् जित्वा साध्यप्रवृत्तादिकं गन्धधूपपुष्पद्रव्यं सविभागास्फोटनादिसंस्कारद्वारेण यथार्हमभ्यर्चयेत् । कुटुम्बिनां परिहारार्थं स्थितिर्यथाप्रवृत्तिविशिष्टकरभारशुल्कप्रदेशानां प्रदानेन तथा तया वा संवत्सरमेको द्वौ वा दद्यात् । उच्चानां च पौरजानपदबलानामातपादिडिण्डिमकगदापातेन ख्यापयेत्— 'तैर्यैः स्वाम्यनुरागादस्थानमपचितं तेषामप्या रक्षान्तं (? तेषां मया क्षान्तम्,) यथास्वंस्वं व्यापारमनुतिष्ठन्तु' इति । मेधा.

(२) परराष्ट्रं जित्वा तत्रत्यान् देवान् धर्मप्रधानान् ब्राह्मणांश्च दानमानादिभिः पूजयेत् । तथा श्रोत्रियादिगतावश्यदानेषु 'मयैतदनुज्ञातम्' इत्येवं परिहारान् दद्यात् । तथा 'स्वामिभक्त्याऽस्माकं यैरपकृतं तेषां मया क्षान्तम्, इदानीमाश्वस्ताः सन्तः स्वव्यापारमनुतिष्ठन्तु' इत्येवमभयानि ख्यापयेत् । गोरा.

(३) (प्रदद्यात् परिहारान्) राजग्राह्यमपि जनानुरागार्थं किंचिदंशं परित्यजेदित्यर्थः । राक. १३८

(४) लब्धप्रशमनमाह— जित्वेति । परिहारान् अग्रहारान् । अभयख्यापनम् 'यैरस्माभिः सह प्राग्युद्धं कृतं तेषामधुनाऽभयम्' इत्यादि । * मवि.

(५) जितद्रव्यैकदेशदानादिनैव चेदं पूजनम् । तदाह याज्ञवल्क्यः— 'नातः परतरो धर्मो नृपाणां यद्रणार्जितम् । विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ॥' (यास्मृ. १।३२३) । तथा 'देवब्राह्मणार्थं मयैतद्दत्तम्' इति तद्देशवासिनां परिहारान् दद्यात् । ‡ ममु.

(६) विजयोत्तरकृत्यमाह— जित्वेति । रार. ३८

(७) देवाद्यर्चनं प्रतिपत्तिकर्म उत्तरजयसूचनार्थं वा । परिहारान् वस्त्रालंकारादीन् । $ मच.

(८) परिहारान् 'न मया लोभाद्याविष्टेनास्य जयः कृतः, किंतु अयमस्मानेवमेवमपकृतवान्, ततोऽस्य मया जयः कृतः' इत्यादीनि स्वनिरपराधताख्यापनानि । यद्वा, परिहारान् 'दानानि लब्धं च सुवर्णादिकं मया ब्राह्मणसात्कृतम्' इत्यादिकांश्च । ‡ राप्र. ४१०

(९) परिहारान् करपरित्यागान् । तत्रत्यानामभयानि डिण्डिमघोषादिना ख्यापयेत् । § नन्द.

---

* राप्र., नन्द. ममुगतम् ।

* अत्रत्यं गौतमवचनं प्रभ्रष्टम् ।

* श्लोकोऽयम् 'विभजेत्' इत्यत्र 'विसृजेत्' इति पाठभेदेन पूर्वोत्तरार्धयोर्विपर्यासेन च भा. ५।३८।२४ इत्यत्रोपलभ्यते । स तु सार्वकालिकवृत्तविषयकत्वादस्मिन् प्रकरणे न संगृहीतः ।

(१) मस्मृ. ७।९७ इति श्लोकादनन्तरं क–ख–पुस्तकयोः प्रक्षिप्तः .

(२) मस्मृ. ७।२०१ ; मेधा. द्वारांश्च (द्वारार्थं) ; राक. १३७ ; रार. ३८ ; पमा. ४०३ ; राप्र. ४०९.

* भाच, मविवत् ।

‡ शेषं गोरागतम् ।

$ शेषं गोरागतं रारगतं च ।

§ शेषं रारगतम् ।

**'सर्वेषां तु विदित्वैषां समासेन चिकीर्षितम् ।**
**स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥**

(१) एवमनुग्रहे क्रियमाणेऽपि यदा पौरजानपदानामन्येषां वा स्वाम्यनुरागादहं वक्तृतैजसभावो बहुमतः स्यादिति मन्येत मदीयस्य दण्डोऽवस्थातुं न शक्नुयात्तदा – सर्वेषामिति । एषां पौरादीनामभिप्रायं संक्षेपेण ज्ञात्वा नैतदेवमिच्छति तत्कुलीनं कर्तुमिच्छत्ययमेव तस्मिन् देशे तद्वंश्यं मृदुमूलं प्रियसुखकलत्रं तेन संहततत्प्रकृतिभिश्च प्रधानादिभिः समयं कुर्यात् 'समकोशदानादि परिमाणं च, भवता मम दैवाकारेण पापेन भवितव्यम्, कार्याकार्ये कालेन स्वयमुपस्थातव्यमुभयतो दण्डेन कोशेन च' इत्यादि । मेघा.

(२) तेषां परकीयानां सर्वेषां संक्षेपतोऽभिलषितं ज्ञात्वा तस्मिन् जितराष्ट्रे जितराजान्वयिनमभिषेचयेत् राज्ये । 'इदं त्वया कार्यमिदं न' इत्येवं तस्य तदमात्यादीनां परिभाषणं च कुर्यात् । $ गोरा.

(३) एषां परराष्ट्रे प्रकृतिभूतानाम् । समासेन समुदायेन । * मवि.

(४) एषां शत्रुनृपामात्यानां सर्वेषामेव । * ममु.

(५) परराज्ये स्ववंश्यान् नाभिषिञ्चेत्, अपि तु तद्वंश्यानित्याह– सर्वेषामिति । सर्वेषाम् अमात्यादीनां चिकीर्षितं स्ववंश्यपक्षपातित्वं तद्राज्यवंश्यपक्षपातित्वं वेति । समयक्रियाम् 'त्वयाऽतः परमिदं कार्यमिदं न' इति नियमनम् । उपजप्यराज्यार्थितद्वंश्यस्थापनेन राज्यान्तरलाभसंभावना दृष्टफलमिति भावः । मच.

**'प्रमाणानि च कुर्वीत तेषां धर्म्यान् यथोदितान् ।**
**रत्नैश्च पूजयेदेनं प्रधानपुरुषैः सह ॥**

(१) यत्प्रकारावस्थास्तेषामुपचिताः पूर्वप्रवृत्ता ब्रह्मदेयामरवृत्तिदेवस्वव्यापारादयस्ताननुजानीयात् प्रमाणानि कुर्यात् । एवं हि अस्मिंस्तेषामनुरागो भवति । ये च तत्र प्रधानाः पुरुषास्तत्र प्रतिज्ञास्वजनबहुत्वादिगुणैस्तैः सह राजानमेनं शस्त्रधनधान्यालंकारवाहनच्छत्रपीठिकादरपट्टबन्धादिभिः पूजयेत् । मेघा.

(२) तेषां परकीयानां ये धर्मादनपेताः देशधर्मतया शास्त्रेणाभ्युपगताः आचाराः तान् प्रमाणीकुर्यात् । एवं (? एनं) चाभिषिक्तं मन्त्र्यादिभिः सह रत्नादिदानेन पूजयेद्यत्नात् । * गोरा.

(३) प्रमाणानीति । यस्मिन्देशे ये धर्माः ते तथैव पालनीयाः । राक. १३८

(४) तेषां धर्मान् देशधर्मान् । प्रमाणानि कुर्वीत न भिन्द्यात् । रत्नैः स्वीयैः । एनं नूतनं नृपम् । तस्य प्रधानपुरुषैः सहेति तानपि पूजयेदित्यर्थः । † मवि.

(५) शास्त्राविरुद्धान् ब्रह्मदेयामरवृत्तिदेवस्वानपहारादीन् धर्मान् मातुलकन्यापरिणयमत्स्यभक्षणादींश्च परराष्ट्राचारान् प्रमाणीकुर्यादित्याह– प्रमाणानीति । यथोदितान् तत्रत्यैर्यथावदुक्तान् । § मच.

(६) तेषां परेषां राज्ञां यथोदितान् यथाकुलक्रमागतान् धर्मान् आचारान् प्रमाणानि कुर्वीत शपथरूपत्वेन कारयेत् । 'यदि त्वमस्मात्समयबन्धाच्च्युतो भवसि तदाऽस्मात्कुलक्रमागताद्धर्माच्च्युतो भविष्यसि' इति शपथान् कारयेदित्यर्थः । अथवा– तेषां पूर्वेषां राज्ञां

---

$ रार., नन्द., राप्र. गोरागतम् । भाच. गोरागतं मविगतं च ।

* शेषं गोरागतम् ।

(१) मस्मृ. ७।२०२ ; राक. १३८ समासेन (सममेव) ; शार. ३८ ; पमा. ४०३ ; राप्र. ४१० राकवत्.

* नन्द., भाच. गोरागतम् । ममु. गोरावत् ।

† भाच. मविगतम् ।

§ शेषं मविगतम् ।

(१) मस्मृ. ७।२०३ ; राक. १३८ धर्म्यान् (धर्मान्) ; मवि. राकवत् ; पमा. ४०३ राकवत्, पू. ; मच. राकवत् ; राप्र. ४१० राकवत् ; नन्द. प्रमाणानि (परिमाणान् ? ) धर्म्यान् (धर्मान्) ; भाच. राकवत् .

यथोदितान् यथाकृतान् धर्मान् प्रजारक्षणप्रकारान् ब्राह्मणामात्यप्रभृतिभ्यो वृत्तिदानानि च प्रमाणानि अविप्लाव्यानि कुर्वीत कारयेत् । राप्र. ४१०–४११

[1]**आदानमप्रियकरं दानं च प्रियकारकम् ।**
**अभीप्सितानामर्थानां काले युक्तं प्रशस्यते ॥**

(१) कस्मात्पुनः प्रकृतिभ्यो रत्नादिदानमुच्यते ? –आदानमिति । आदेयस्याप्रतिपादनं नवस्य राज्ञोऽन्यस्य वा अप्रियकरम् अप्रीतेः कारणं हेतुः । दानं च प्रतिदानं प्रियकारकम् । एतदुभयं बहुशः एवं प्रसिद्धमपि कालयुक्तं कालोपपन्नं क्रियमाणमभिमतानामर्थानां प्रशस्यते सुखावहं भवेत्, अन्यथा च दुःखयतीत्यर्थः । यस्मादपि क्वचित्काले किंचन प्रीतिं जनयति तदाऽपि नाल्पमशोभनं वा प्रीतिमुत्पादयति, तस्मात्कालमपेक्ष्य दानादाने कार्ये इति । मेधा.

(२) कालयुक्तमिति । अप्रियकरमपि कालापेक्षया प्रशस्यते इत्यर्थः । राक. १३८

(३) आदानं बलाद्ग्रहणम् । काले युक्तम् । दानकाले दानं कार्यम् , न सर्वदा, कोशक्षयापत्तेः । बलाद्ग्रहणं तु न कदाचित्कार्यमित्यर्थः । * मवि.

(४) यस्मात्– आदानमिति । यद्यप्यभिलषितानां द्रव्याणां ग्रहणमप्रियकरम्, दानं च प्रियकारकमित्युत्सर्गः, तथाऽपि समयविशेषे दानमादानं च प्रशस्यते । तस्मात्तस्मिन् काले एनं पूजयेत् । † ममु.

(५) यस्माद्ग्राह्यं स कथं सर्वैः पूज्यः ? तत्राऽऽह– आदानमिति । ननु राज्यधनादिलोभेन परराज्यं गृहीतम्, तत्राऽऽह– अभीप्सितानां गजाश्वादीनाम्, काले विलम्बितम् , युक्तं योग्यम् , प्रशस्यते, हार(? दान)मिति (चेत्यन्वयः ?) शेषः । मच.

(६) अभीप्सितानां रणहतराजवंश्यस्य राज्ञः तदमात्यानां चापेक्षितानाम् अर्थानां द्रव्याणाम् आदानं ग्रहणम् अप्रियकरम् अनिष्टकरम् । दानं च प्रियकारकं तेषामिष्टकारकम् । यतः अवश्यापेक्षितगजाश्वादिधनलाभे राजान्तरैरनाक्रमणीयत्वं संभवति । अत एव तत् कालयुक्तं नवीनराज्यलाभकाले युक्तम् , अतः प्रशस्यते । राप्र. ४११

## याज्ञवल्क्यः

विजयोत्तरं विप्रेभ्यो धनदानं प्रजाभ्यः अभयदानं जितपरराष्ट्राचारादिपरिपालनं च

*[1]**नातः परतरो धर्मो नृपाणां यद्रणार्जितम् ।**
**विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाऽभयं सदा ॥**
[2]**य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने ।**
**तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥**

(१) ननु एवं परराष्ट्रेऽपि पीडनादयमेव दोषः । धर्मेतरानभिज्ञ, मैवम् । य इति । इयं तावत् धर्मगतिः, दोषान्तरं त्वत्र नाऽऽशङ्कनीयमेवेत्यभिप्रायः । विश्व.

(२) न्यायतः स्वराष्ट्रपरिपालने राज्ञो यो धर्मस्तं सकलं वक्ष्यमाणन्यायेन परराष्ट्रं वशं नयन् आत्मसात्कुर्वन् आप्नोति, धर्मषड्भागं च । मिता.

(३) स्वराष्ट्रप्रतिपालने यथा धर्मस्तथा परप्रजापीडनेनाधर्म इति तात्पर्यम् , न तु धर्म एवेति । तं धर्मम् । कृत्स्नं समस्तम् । दीक.

(४) ननु परराष्ट्रप्रजापीडनेऽप्यनिष्टापत्त्या कथं विहितं परराज्योपरोधादिकं घटेतेत्यर्थत आह– य इति ।

---

* भाच. मविगतं ममुगतं च ।

† गोरा. नन्द. ममुगतम् ।

(१) मस्मृ. ७।२०४ ; मेधा. आदा (अदा) इति पाठो व्याख्यानतः प्रतिभाति, काले यु (कालयु) ; राक. १३८ काले यु (कालयु) ; राप्र. ४१० राकवत् ; नन्द. राकवत् ; भाच. राकवत् .

* श्लोकस्यास्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च 'राजकर्तव्यानि' इत्यस्मिन् प्रकरणे (पृ. ११९५) द्रष्टव्यः ।

(१) यास्मृ. १।३२३.

(२) यास्मृ. १।३४२ ; विश्व. १।३३८ ; मिता. अप. १।३४०–३४१ ; राक. १२५ नृपतेर्धर्मः (धर्मो नृपतेः) ; दीक. ; वीमि. राकवत् ; राप्र. २५६ : ४०२ राकवत् .

वशं नयन् स्वसात्कुर्वन् । तथा च विहितपरराष्ट्रवशीकरणार्थं तत्प्रजापीडनमपि यागीयपशुहिंसावद्वैधत्वादनिषिद्धमेवेति भावः । वीमि.

(५) स्वराष्ट्रसंरक्षणवत् परराष्ट्रग्रहणे फलमाह- य इति । २५६

युद्धादिना परराष्ट्रग्रहणं राज्ञोऽवश्यकर्तव्यमित्याह- य इति । राप्र. ४०२

**'यस्मिन् देशे य आचारो व्यवहारः कुलस्थितिः ।**
**तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥**

(१) किंतु- यस्मिन्निति । धर्माविरोधेनेति शेषः । आत्मीयत्वादेव पालने प्राप्ते गुणार्थं वचनम् । विश्व.

(२) किंच यदा परदेशो वशमुपागतस्तदा न स्वदेशाचारादिसंकरः कार्यः, किंतु यस्मिन् देशे यः आचारः कुलस्थितिर्व्यवहारो वा यथैव प्रागासीत् तथैवासौ परिपालनीयः, यदि शास्त्रविरुद्धो न भवति । 'यदा वशमुपागतः' इत्यनेन वशोपगमनात्प्रागनियम इति दर्शितम् । यथोक्तम्- 'उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥' (मस्मृ. ७।१९५) इति । मिता.

(३) परराष्ट्रविषये विशेषमाह- किमिति । यस्मिन् परराष्ट्रे यः आचारः होलाकादिः, यश्च व्यवहारः नाणकादिनिबन्धनः, या च कुलस्थितिः 'एतावद्धनं राज्ञेऽनेन कुलेन देयम्' इत्येवमादिरूपा, सः राष्ट्रः वशमुपागतः तथैव तेनैवाऽऽचारादिना युक्तः परिपालनीयः । * अप.

(४) आचारः दाक्षिणात्यानां मातुलकन्यापरिणयनादिः । व्यवहारः करादिग्रहणम् । कुलस्थितिः कुलनियतो धर्मः । दीक.

---

* राप्र. अपगतं मितागतं च ।

(१) यास्मृ. १।३४३ ; विश्व. १।३३९ ; मिता. ; अप. १।३४१-३४२ ल्योऽसौ (ल्यः स) ; शाक. १३९ स्थितिः (स्थितः) ; दीक. ; वीमि. यस्मिन् देशे (किंतु यस्मिन्) ; राप्र. २५७, ४११.

(५) वशीकरणानन्तरं तु तासां प्रजानां पीडनमवैधत्वाद्धेयमेवेत्यभिप्रयन्नेव वशीकृते राष्ट्रे राजकृत्यमाह- किमिति । * वीमि.

## कात्यायनः

जितराष्ट्रपरिपालनं राज्ञः कर्तव्यम्

**'दुष्टस्यापि नरेन्द्रस्य तद्राष्ट्रं न विनाशयेत् ।**
**न प्रजानुमतो यस्मादन्यायेषु प्रवर्तते ॥**

राज्ञः अन्यायप्रवृत्तौ यतः प्रजानामनुमतिर्न इत्यतो राष्ट्रं न पीडयेदिति सिद्धे येषाममात्यादीनामनुमत्या अन्याये प्रवृत्तिस्तान् पीडयेदेवेति ध्येयम् । राप्र. ४११

## वृद्धहारीतः

विजयलब्धाया भूम्याः पालनं वर्धनं दानं च

**'युद्धलक्ष्म्या मही सम्यग्दीयते नृपसत्तमैः ।**
**जित्वा शत्रून्महीं लब्ध्वा यत्नेन परिपालयेत् ।**
**पालितां वर्धयेन्नित्यं वृद्धं(? द्धां) पात्रे विनिक्षिपेत् ॥**

## बृहत्पराशरः

विजयोत्तरं विप्रेभ्यो धनदानं यज्ञः प्रजाभ्यः अभयदानं च कर्तव्यम्, जितः सर्वोऽपि दण्ड्यः

**'एष एव परो धर्मो नृपतेर्यद्रणार्जितम् ।**
**विप्रेभ्यो दीयते वित्तं प्रजाभ्यश्चाऽभयं तथा ॥**
**यदा तु वशतां याति स देशो न्यायतोऽर्जितः ।**
**तद्देशव्यवहारेण यथावत्परिपालयेत् ॥**
**रणार्जितेन वित्तेन राजा कुर्यान्मखान्द्विजान् ।**
**अर्चयेद्विधिवद्राजा साधून् संमानयेदपि ॥**
**मातुलः श्वशुरो बन्धुरन्यो वाऽपि हि यो जितः ।**
**अदण्ड्यः कोऽपि नास्त्येव राजनीतिविदो विदुः ॥**

---

* शेषं मितागतं दीकगतं च ।

(१) शाक. १३९ ; राप्र. ४११.

(२) वृहास्मृ. ७।२२८-२२९.

(३) बृपसं. १२।५४-५८.

सुसहायमतिप्रौढं शूरं प्राज्ञानुरागदम् ।
सोत्साहं विजिगीषुं च मत्वा राजा
नियामयेत् ॥

## बुधः

विजयोत्तरं देवब्राह्मणपूजनम्

[1]गृहीत्वा देवब्राह्मणपूजनम् ॥

## आश्वलायनः

योधेभ्यो द्रव्यदानम्, पराजितानामाश्वासनं चिकित्सनं च

[2]कृतकर्मानुरूपेण योधेभ्यः संप्रशस्य तान् ।
दद्याद् भृतीन् प्रियधनान् पारिबर्होश्च भूपतिः ॥
युद्धे पराजितान् योधान् स्वान् परैस्तु
समाश्वसेत् ।
चिकित्सयेद्यथान्यायं भिषग्भिश्च प्रणीकृतान् ॥
हत्वा जित्वाऽथवा हत्वा स्वपुरं सहसैनिकः ।
शत्रून् गत्वा तु मोहेत (? मोदेत) कामैरिष्टैः
स्वबन्धुभिः ॥
न तत् स्वर्गेषु राज्ञोऽस्ति यच्छत्रोर्विजयात्
सुखम् ।
दुःखं पराजयाच्चापि न तथा निरयेषु च ॥

## विष्णुधर्मोत्तरपुराणम्

जितदेशाचारपरिपालनम्, परदेशीयकुलस्त्रीसंमाननम्,
अङ्गच्छेदादिहिंसावर्जनम्, देवगुरु-
द्विजपित्रादिपूजनम्

[3]राजाऽप्यमित्रदेशे तु देशाचारं न लङ्घयेत् ॥
देवतापूजनं कुर्यान्नोच्छिन्द्याद्दावमत्र तु ।
कुलस्त्रियं च तन्वीं च वृद्धां नैवापमानयेत् ॥
कुलीनमभिनिन्देत्तु न वै नृपतिवंशजम् ।
न कर्णनासाच्छेदांश्च न तथा नेत्रभेदनम् ।
कालविन्मन्त्रिभिषजोर्वाक्यं कुर्यान्महीपतिः ॥

ततः क्रमात् प्राप्य पुरीं स्वकीयां
बलिं तु दद्यादधिकं पुरोक्तम् ।
कुर्यान्महीं यूपसुरालयाङ्कां
स्वर्लोकमिच्छन् पृथिवीं समग्राम् ॥
[1]संप्राप्य विजयं युद्धे कार्यं दैवतपूजनम् ।
पूजयेद् ब्राह्मणांश्चात्र गुरूनपि च पूजयेत् ॥
रत्नानि राजगामीनि चर्म वाहनमायुधम् ।
सर्वमन्यद् भवेत्तस्य यद्येनैव रणे हृतम् ॥
कुलस्त्रियस्तु विज्ञेयास्तथा राम न कस्यचित् ।
स्वदेशे परदेशे वा साध्वीं यत्नान्न दूषयेत् ॥
अन्यथा संकरो घोरो भवतीह क्षयावहः ।
*शक्रः प्राप्य रणे मुक्तः पुत्रस्तस्य प्रकीर्तितः ॥
पुरस्तेनास्य योद्धव्यं तस्य धर्मं विजानता ।
देशे देशे य आचारः पारंपर्यक्रमागतः ॥
स एव परिपाल्यः स्यात् प्राप्य देशं महीक्षिता ।
नृणां प्रदर्शयेद् राजा समरेऽपि हते रिपौ ॥
न मे प्रियं कृतं तेन येनायं समरे हतः ।
किंतु पूजां करोम्यस्य स्वच्छन्दमविजानतः ॥
हतोऽयं मद्धितार्थाय प्रियं यद्यपि नो मम ।
अपुत्राश्च स्त्रियश्चैव नृपतिः परिपालयेत् ॥
ततस्तु स्वपुरं प्राप्य नृपतिः प्रविशेद् गृहम् ।
यात्राविधानविहितं भूयो दैवतपूजनम् ॥
पितॄणां पूजनं चैव तथा कुर्याद्विशेषवत् ।
संविभागं परावाप्तैः कुर्याद् भृत्यजनस्य तु ॥
अवाप्य धर्मेण नृपस्तु पृथ्वी-
मारामयूपादिसुरालयाङ्काम् ।
कृत्वा तथाऽन्यां द्विजसाच्च शक्त्या
लोकं जयत्यस्य नराधिपस्य ॥

---

(१) बुस्मृ. १।५२.
(२) आश्वस्मृ. ८।१२१-१२४.
(३) विध. २।१७५।५७-६०.

* अत्र 'शत्रुं प्राप्य रणे मुक्तं पुत्रवत् परिपालयेत् । पुनस्तेन न योद्धव्यम्' (अग्नि. २३६।६४) इत्यग्निपुराणवचनवत् शुद्धिः स्यात् ।
(१) विध. २।१७७।८४-९४.

## अग्निपुराणम्

जितदेशाचारपालनम्, तद्देश्यानामवमाननं वर्ज्यम्, स्त्रीरक्षणम्, देवपूजनम्, जितशत्रोः तत्कुटुम्बस्य च रक्षणम्, संविभागः

[1]राजा प्राप्य विदेशं तु देशाचारं हि पालयेत्।
देवानां पूजनं कुर्यान्न च्छिन्द्यादायमत्र तु॥
नावमानयेत्तद्देश्यानागत्य स्वपुरं पुनः।
जयं प्राप्यार्चयेद्देवान् दद्याद्दानानि पार्थिवः॥
संप्राप्य विजयं युद्धे देवान् विप्रांश्च संयजेत्॥
रत्नानि राजगामीनि अमात्येन कृते रणे।
तस्य स्त्रियो न कस्यापि रक्ष्यास्ताश्च परस्य च॥
शत्रुं प्राप्य रणे मुक्तं पुत्रवत् परिपालयेत्।
पुनस्तेन न योद्धव्यं देशाचारादि पालयेत्॥
ततश्च स्वगृहं प्राप्य ध्रुवे भे प्रविशेद् गृहम्।
देवादिपूजनं कुर्याद् रक्षेद् योधकुटुम्बकम्॥
संविभागं परावाप्तैः कुर्याद् भृत्यजनस्य च॥

## कामन्दकीयनीतिसारः

जितपरराष्ट्ररञ्जनम्

[2]षाड्गुण्यात्स्वोपलब्धस्य परराष्ट्रस्य रञ्जनम्।
अनुरागप्रतापाभ्यां लब्धप्रशमनं स्मृतम्॥

## शुक्रनीतिः

जितराज्यसंबन्धीनि कर्तव्यानि, जितद्रव्यसंविभागः

[3]जितानां विषये स्थाप्यं धर्माधिकरणं सदा।
भृतिं दद्यान्निर्जितानां तच्चरित्रानुरूपतः॥

जितानां पराजितानां राज्ञां विषये राज्ये सदा धर्माधिकरणं विचारालयः स्थाप्यम्। तेषां भाविदुर्नयदण्डनार्थमिति भावः। तथा निर्जितानां निःशेषेण पराजितानां सर्वस्वच्युतानामित्यर्थः, तच्चरित्रानुरूपतः तेषां व्यवहारानुसारेण भृतिं भरणोपयुक्तां वृत्तिं दद्यात्। शुनीटी.

(१) अग्नि. २३६।२२-२३, ६२-६६.

(२) नन्द. ७।५६ कामन्दकः, कामन्दकीयनीतिसारस्थं मुद्रितपुस्तके नोपलभ्यते.

(३) शुनी. १।३७८.

[1]रूप्यं हेम च कुप्यं च यो यज्जयति तस्य तत्।
दद्यात् कार्यानुरूपं च हृष्टो योधान् प्रहर्षयन्॥

यः पुरुषः रूप्यं रजतं हेम स्वर्णं तथा कुप्यं स्वर्णरौप्यव्यतिरिक्तं यत् द्रव्यं जयति जयेन अर्जयतीत्यर्थः, राजा हृष्टः सन् कार्यानुरूपं यथाकार्यं योधान् सैनिकान् प्रहर्षयन् तत् द्रव्यम्, तस्य अर्जकस्य इत्यर्थः, दद्यात्। शुनीटी.

विजित्य च रिपूनेवं समादद्यात् करं तथा।
राज्यांशं वा सर्वराज्यं नन्दयीत ततः प्रजाः॥

एवंप्रकारेण रिपून् शत्रून् विजित्य, करं राज्यांशं राज्यस्य, विजितस्येति शेषः, अंशम्, कियन्तमिति भावः, वा सर्वं समस्तं राज्यं शत्रुराज्यं समादद्यात् गृह्णीयात्। ततः ग्रहणानन्तरं प्रजाः तत्रत्याः नन्दयीत रञ्जयेत्। 'नन्दयीत' इति आर्षोऽयं प्रयोगः।

शुनीटी.

तूर्यमङ्गलघोषेण स्वकीयं पुरमाविशेत्।
तत्प्रजाः पुत्रवत्सर्वाः पालयीताऽऽत्मसात्कृताः॥

ततः, तूर्यं वाद्यविशेषः, तस्य मङ्गलघोषेण माङ्गलिकध्वनिना स्वकीयं पुरम् आविशेत् प्रविशेत्। तथा आत्मसात्कृताः अधीनीकृताः सर्वाः तस्य शत्रोः प्रजाः पुत्रवत् पालयीत पालयेदित्यर्थः। 'पालयीत' इति आर्षोऽयं प्रयोगः। शुनीटी.

नियोजयेन्मन्त्रिगणमपरं मन्त्रचिन्तने।
देशे काले च पात्रे च ह्यादिमध्यावसानतः॥

मन्त्रिगणम् अपरे अन्यस्मिन् मन्त्रचिन्तने विषये देशे काले पात्रे तथा आदौ मध्ये अवसाने च नियोजयेत्। शुनीटी.

भवेन्मन्त्रफलं कीदृगुपायेन कथं त्विति।
मन्त्र्याद्यधिकृतः कार्यं युवराजाय बोधयेत्॥

मन्त्र्यादिषु सचिवादिषु अधिकृतः जनः युवराजाय मन्त्रफलं कीदृक् केन उपायेन भवेत् तत् कथं वा इति सर्वं कार्यं मन्त्रितविषयं बोधयेत् ज्ञापयेत्।

शुनीटी.

(१) शुनी. ४।७।३७२-३७८.

**पश्चाद्राज्ञे तु तैः साकं युवराजो निवेदयेत् ।**
**राजा संशासयेदादौ युवराजं ततस्तु सः ॥**
**युवराजो मन्त्रिगणान् राजाग्रे तेऽधिकारिणः ।**
**सदसत् कर्म राजानं बोधयेद्धि पुरोहितः ॥**

पश्चात् युवराजः तैः मन्त्र्यादिषु अधिकृतैः पुरुषैः साकं सह राज्ञे निवेदयेत् । मन्त्रितविषयमिति शेषः । राजा आदौ अग्रतः युवराजम् , ततः सः युवराजः मन्त्रिगणान् संशासयेत् सम्यक् उपदिशेत् । ते च अधिकारिणः राजाग्रे राजसमीपे सत् असच्च कर्म । बोधयेयुरिति शेषः । ततः पुरोहितः राजानं बोधयेत् । सर्वमिति शेषः । शुनीटी.

**[1]शत्रुत्यक्तान् सुगुणिनः सुभृत्या पालयेन्नृपः ॥**

शत्रुत्यक्तान् अथ च सुगुणिनः जनान् सुभृत्या सुवेतनेन पालयेत् । शुनीटी.

**परराष्ट्रे हृते दद्यात् भृतिं भिन्नावधिं तथा ।**
**दद्यादर्धां तस्य पुत्रे स्त्रियै पादमितां किल ॥**

परराष्ट्रे शत्रुराज्ये हृते आत्मसात्कृते सति भिन्नावधि राज्यहरणदिवसावधिं भृतिं भरणोपयोगिधनं दद्यात् । तथा तस्य पुत्रे अर्धां स्त्रियै पादमितां चतुर्थभागरूपां भृतिं किल निश्चितं दद्यात् । शुनीटी.

**हृतराज्यस्य पुत्रादौ सद्गुणे पादसंमितम् ।**
**दद्याद्वा तद्राज्यतस्तु द्वात्रिंशांशं प्रकल्पयेत् ॥**

हृतं राज्यं यस्य तस्य शत्रोः सद्गुणे सुगुणशालिनि पुत्रादौ तस्य राज्यतः राज्यस्य पादसंमितं चतुर्थभागमित्यर्थः , दद्यात् । वा एव । वाशब्दः अवधारणार्थः । अगुणशालिनि तु, द्वात्रिंशांशं प्रकल्पयेत् दद्यादित्यर्थः । शुनीटी.

**हृतराज्यस्य निचितं कोशं भोगार्थमाहरेत् ॥**

हृतराज्यस्य शत्रोः निचितं संचितं कोशं धनं स्वस्य भोगार्थम् आहरेत् गृह्णीयात् । शुनीटी.

**कौसीदं वा तद्धनस्य पूर्वोक्तार्धं प्रकल्पयेत् ।**
**तद्धनं द्विगुणं यावच्च तदूर्ध्वं कदाचन ॥**

वा अथवा तद्धनस्य तस्य निचितकोशस्य इत्यर्थः , कौसीदं वृद्धिस्वरूपं पूर्वोक्तम् अर्धं यावत् तत् धनं द्विगुणं भवेत् तावत्कालपर्यन्तं कल्पयेत् । कदाचन तस्मादूर्ध्वं न द्वैगुण्यादधिकं नेत्यर्थः । शुनीटी.

**स्वमहत्त्वद्योतनार्थं हृतराज्यान् प्रधारयेत् ।**
**प्राङ्मानैर्यदि सद्वृत्तान् दुर्वृत्तांस्तु प्रपीडयेत् ॥**

हृतराज्यान् शत्रून् यदि सद्वृत्तान् सदाचारान् स्वस्य माहात्म्यद्योतनार्थं निजमहिमप्रकटनार्थं प्राङ्मानैः पूर्ववत् राजोचितैः मानैः संमानैः धारयेत् स्थापयेत् । दुर्वृत्तांस्तु प्रपीडयेत् । शुनीटी.

## योगयात्रा

जितपुरदेशसंबन्धीनि कर्तव्यानि, ज्योतिःशास्त्रानुसारेण

देशपुरगृहप्रवेशः

**[1]परविषयपुराप्तौ साधुदेवद्विजस्य**
**कुलजनवनिताश्च क्ष्माधिपो नोपरुन्ध्यात् ।**
**जनपरहितयुक्तः पूजयेत् पौरमुख्यान्**
**शुभतिथिकरणर्क्षे हृष्टसैन्यो विशेच्च ॥**

**इति मनुजपतिर्यथोपदेशं**
**भगणविदां प्रकरोति यो वचांसि ।**
**स सकलमण्डलाधिपत्यं**
**व्रजति दिवा च पुरंदरोऽचिरेण ॥**

**अलब्धि( ? ब्ध )लिप्सां( ? प्सा ) प्रथमं नृपस्य**
**लब्धस्य संरक्षणसंप्रवृद्धाम्-( ? द्धिः ) ।**
**सम्यक् प्रवृद्धस्य च लाभकोऽयं-( ? ऽस्य )**
**तीर्थेषु सम्यक् प्रतिपादनानि ॥**

(१) शुनी. ४।७।३९६–४०१.

(१) योया. १७।९–१५.

केन्द्रेषु सौम्यैर्गुरुशुक्रलग्ने
पापेषु केन्द्राष्टमवर्जितेषु ।
ग्राम्ये स्थिरे वा निधने च लग्ने
गृहं विशेच्छीतकरेऽनुकूले ॥

पौष्णे धनिष्ठास्वथ वारुणेषु
स्वायंभुवर्क्षेषु त्रिषूत्तरासु ।
अक्षीणचन्द्रे शुभवासरे च
तिथावरिक्ते च गृहप्रवेशः ॥

धर्मेण पृथ्वीं परिपालयित्वा
जलाशयारामसुरालयाढ्याम् ।
कृत्वा सधूपां चितिभिश्चितां च
जयन्ति लोकानमरेश्वरस्य ॥

स्वविषयमुपगम्य मानवेन्द्रो
बलिमुपयातित(? चित )कानि
बाधिकानि (?) ।
निगदितविधिनैव संप्रदद्यात्
प्रथम( ? मथ )गणासुरभूतदेवता-
भ्यः ॥

## नीतिवाक्यामृतम्

योधसंबन्धीनि कर्तव्यानि

[1]सङ्ग्रामधृतेषु यायिषु सत्कृत्य विसर्गः ॥

(१) निवा. ३०।७६-७७, ९३.

अथ सङ्ग्रामगतेषु( ? धृतेषु ) यायिषु योद्धषु यत्कृत्यं तदाह- सङ्ग्रामेति । सङ्ग्रामधृतेषु यायिषु वस्त्रादिभिः पूजां कृत्वा विसर्गः मोक्षः तथा कार्यः । तथा च भारद्वाजः- 'सङ्ग्रामे वैरिणो ये च यायिनः स्थायिनो वृताः । गृहीता मोचनीयास्ते क्षात्रधर्मेण पूजिताः ॥ ' ।
नीवाटी.

**स्थायिषु संसर्गः सेनापत्यायत्तः ॥**

अथ स्थायिभिः यत्कर्तव्यं तदाह- स्थायिष्विति । स्थायिनां भूपतीनां यायिभिः सह, योऽसौ संसर्गः मेलापकः सः सेनापत्यायत्तः सेनापतिवशेन भवति, नानार्थ-( ? नान्यथा )कार्यः । ' यायिना संसर्गस्तु ( ? सह संसर्गः) स्थायिनः संप्रणश्यति । यदि सेनापतेश्चित्ते रोचते नान्यथैव तु ॥ ' ।
नीवाटी.

**राजा राजकार्येषु मृतानां संततिमपोषयन्नृणभागी स्यात् साधु नोपचर्यते तन्त्रेण ॥**

अथ यो राजा राजकार्यमृतानां संतानं न पोषयति तस्य यद् भवति तदाह- राजेति । यो राजा राजकार्ये मृतानां निर्वाहिणानां (? संततिं ) पुत्रपौत्रादिकं न पोषयति स तेषामृणभागी भवति । तथा तन्त्रेण प्रकृत्या साधु सम्यग्यथा भवति एवं नोपचर्यते न सेव्यते । तथा च वशिष्ठः- ' मृतानां पुरतः संख्ये योऽपत्यानि न पोषयेत् । तेषां स हत्यया तूर्णं गृह्यते नात्र संशयः ॥ ' ।
नीवाटी.

## मनुः

राजोद्वाह्यभार्यालक्षणानि

*[1]तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम् ।
कुले महति संभूतां हृद्यां रूपगुणान्विताम् ॥

## विष्णुधर्मोत्तरपुराणम्

राजमहिषीलक्षणानि, राज्ञा सह राज्ये महिषी अभिषेच्या, पञ्चमहायज्ञादिधर्मेषु सहचारिणी महिषी

पुष्कर उवाच—

[2]राज्ञाऽन्यमहिषी कार्या सर्वलक्षणपूजिता ।
विनीता गुरुभक्ता च ईर्षाक्रोधविवर्जिता ॥
[3]राज्ञः प्रियहितासक्ता चारुवेशा प्रियंवदा ।
भृताभृतजनज्ञा च भृतानामनुवेक्षिणी ॥
[4]अभृतानां जनानां च भृतिकर्मप्रवर्तिनी ।
रागद्वेषवियुक्ता च सपत्नीनां सदैव या ॥
[5]भोजनासनपानेन सर्वेषामनुवेक्षिणी ।
सपत्निपुत्रेष्वपि या पुत्रवत्परिवर्तते ॥
[6]मन्त्रिसांवत्सरामात्यान्या च पूजयते सदा ।
ब्रह्मण्या च दयायुक्ता सर्वभूतानुकम्पिनी ॥
[7]कृताकृतज्ञा राज्ञश्च विदिता मण्डलेष्वपि ।
परराजकलत्रेषु प्रीयमाणा मुदा युता ॥

* अस्य व्याख्यानसंग्रहः शेषस्थलादिनिर्देशश्च राजकर्तव्यप्रकरणे ( पृ. ११०७ ) द्रष्टव्यः ।

(१) मस्मृ. ७।७७.

(२) विध. २।७।१ ; राकौ. २४९ ऽन्य (ऽग्र) पूजि ( लक्षि ) ईर्षा ( ईर्ष्या ).

(३) विध.२।७।२ ; राकौ. २४९ नामनु (नां तत्त्व ).

(४) विध. २।७।३ ; राकौ. २४९ वियु ( विमु ).

(५) विध. २।७।४ ; राकौ. २४९ पानेन ( यानेन ) नुवेक्षिणी ( न्ववेक्षणी ) पत्नि ( पत्नी ).

(६) विध. २।७।५ सांव ( संव ) ; राकौ. २४९ ब्रह्म ( ब्राह्म ) कम्पिनी ( कम्पिका ).

(७) विध. २।७।६ ; राकौ. २५० ज्ञा राज्ञश्च ( स्य राज्ञां च ) पर ( पुर ) दा युता ( दान्विता ).

[1]दूतादिप्रेषणकरी राजद्वारेषु सर्वदा ।
तद्द्वारेण नरेन्द्राणां कार्यज्ञा च विशेषतः ॥
[2]एवंगुणगणोपेता नरेन्द्रेण सहानघा ।
अभिषेच्या भवेद्राज्ये राज्यस्थेन नृपेण वा ॥
[3]एवंविधा यस्य भवेच्च पत्नी
नरेन्द्रचन्द्रस्य महानुभावा ।
वृद्धिं व्रजेत्तस्य नृपस्य राष्ट्रं
सचारकं नात्र विचारणाऽस्ति ॥

अत्र 'एवं गुणगणोपेता ...... नृपेण वा ॥, राज्ञाऽग्रमहिषी कार्या सर्वलक्षणलक्षिता ।' इति विष्णुधर्मोत्तरादिवचनैः राज्ञा सह अग्रमहिषी अभिषेक्तव्या, अथवा अभिषिक्तेन राज्ञा पश्चात् स्वयमभिषेक्तव्या इत्युक्तम् । यद्वा, वृद्धराज्ञा पुत्रस्य यौवराज्याभिषेककरणे तदग्रमहिष्या सह अभिषेकः कार्य इत्याशयेनेति । तत्र किंलक्षणाऽपि( १ णेति ) तल्लक्षणमभिधीयते विष्णुधर्मोत्तरे— 'पुष्कर उवाच— राज्ञाऽग्रमहिषी ····· ॥'।

राकौ. २४९

[4]कुलीनां रूपसंपन्नां सवर्णां च नराधिपः ।
कुर्याद्भार्यां सुशीलां च विनीतां धर्मवत्सलाम् ॥
तया सह सदा राजा गृहस्थाश्रमचोदितम् ।
पञ्चयज्ञविधानं तु कारयेत पुरोहितम् ॥

## अग्निपुराणम्

धर्मलक्षणा महिषी वरणीया

*[5]महिषीं धर्मलक्षणाम् ॥

* 'राजा वृणुयात्' इति पूर्वेण संबन्धः ।

(१) विध. २।७।७ ; राकौ. २५०.

(२) विध. २।७।८ ; राकौ.२४९, २५० नघा (नघ).

(३) विध. २।७।९ ; एवंविधा ( एवं यदा ) ; राकौ. २५० वेच्च ( वेत्तु ) चारणाऽ ( चार्यम ).

(४) विध. ३।३२३।२२–२३. (५) अग्नि. २१८।४.

# राजचिह्नानि राजोपकरणानि च

## विश्वकर्मा

भूषणेषु प्राणिविशेषाणां प्रतिकृतिः वर्ज्या

[1]व्याघ्रव्यालगज(? जाः)सिंहा अश्वोष्ट्रौ
महिषो वृषः ।
भूषणेषु त्यजेदष्टौ यदीच्छेद्दीर्घजीवितम् ॥

[2]वनेचरा जलचराः कृमिकीटपतङ्गकाः ।
न तानाभरणे कुर्याद्यदीच्छेज्जीवितं चिरम् ॥

## विष्णुधर्मोत्तरपुराणम्

राजादीनां चामरदण्डस्वरूपम्

पुष्कर उवाच–

[3]चमरीबालसंभूताः शशाङ्कांशुसमप्रभाः ।
संहताः स्निग्धदीर्घाश्च तथा स्थालि-
निबन्धनाः ॥

दण्डश्च चामरे कार्यो रुक्मरूप्यमयस्तथा ।
प्रवालवैडूर्यमयस्तथैव कनकान्वितः ॥

क्षीरवृक्षस्य वा कार्यो रुक्मरूप्यनिबन्धनः ।
रत्नैः प्रशस्तैश्चित्रो वा काञ्चनस्य प्रशस्यते ॥

चन्दनस्याथ दन्तस्य शार्ङ्गः कार्यो यथा भवेत् ।
अर्धहस्तान्न चाप्यूनो मध्य(? ऽप्यध्य)र्धान्न
तथाऽधिकः ॥

कर्तव्यं चामरं राज्ञा न च भार्गव रञ्जितम् ॥

आपीतवर्णं तु भवेत्प्रशस्तं
सांवत्सरामात्यपुरोहितानाम् ।
नरेन्द्रपत्नीयुवराजसैन्य-
स्या(? पा)लस्य शेषस्य जनस्य कृष्णः ॥

(१) राप्र. ५५ ; नीम. ४ गजसिंहा (गजाः सिंहा) ; राकौ. ३२४ षणेषु (षणे तु) शेषं नीमवत्.

(२) नीम. ४.

(३) विध. २।१२।१–६.

ब्राह्मणराजमहिषीयुवराजसेनापत्यादीनां
छत्रस्य छत्रदण्डस्य च स्वरूपम्

पुष्कर उवाच–

[1]हंसपक्षैर्विरचितं मयूरस्य शुकस्य च ।
पक्षैरथ बलच्छाया(? बलाकायाः)च्छत्रं
राज्ञः प्रशस्यते ॥

मिश्रपक्षं न कर्तव्यं हीनं परिमितं तथा ।
चतुरस्रं तु कर्तव्यं ब्राह्मणस्य भृगूत्तम ॥

वृत्तं राज्ञां प्रशस्तं स्याच्छुक्लवस्त्रविभूषितम् ।
सितं दुकूलसंछन्नं पताकाभिर्विभूषितम् ॥

एतस्मिन्दिग्विभागे तु कार्याश्चन्द्रांशुनिर्मलाः ।
चतस्रस्तस्य धर्मज्ञ पताका रुक्मभूषिताः ॥

दण्डं चामरवत्कार्यं वैणवं च प्रशस्यते ।
त्रिचतुःपञ्चषट्सप्त चा(? प्तका)ष्टपर्वैः
प्रशस्यते ॥

दशद्वादशभिर्वाऽपि शेषैस्तु परिवर्जयेत् ।
छत्रं दण्डोग्रपर्वाणं (?) दण्डः सर्वत्र शस्यते ।

धारयन्ति च दण्डं वै वैणवं गृहमेधिनः ।
राज्ञां प्रशस्तं षड्ढस्तं छत्रदण्डं भृगूत्तम ॥

अथ पञ्चोनहस्तं तु महिषीयुवराजयोः ।
सेनापतिसुराध्यक्षसांवत्सरपुरोहितैः ॥

पञ्चहस्तस्तु कर्तव्यश्छत्रदण्डो भृगूत्तम ।
चतुर्हस्तस्तु कर्तव्यो मया येऽत्र न कीर्तिताः ॥

व्यासो दण्डार्धमानेन सदा छत्रस्य शस्यते ।
छत्रं विभूषयेद्राज्ञां त्वर्धचन्द्रदिवाकरैः ॥

वज्रेन्द्रनीलैः स्फटिकैश्च राम
वैदूर्यमुक्ताफलसत्प्रवालैः ।
विभूषितं रश्मियुतं प्रशस्तं
सदाऽऽतपत्रं तु महीपतीनाम् ॥

(१) विध. २।१३।१–११.

राज्ञः भद्रासनस्वरूपम्

पुष्कर उवाच–

[1]भद्रासनं नरेन्द्रस्य क्षीरवृक्षेण कारयेत्।
उच्छ्रायश्च तथा तस्य अध्यर्धकरसंमितः॥

अध्यर्धः सार्धः। राकौ. १२६

[2]हस्तत्रयं तथा तत्र विस्तारं तु प्रकल्पयेत्।
आयामश्चास्य कर्तव्यो विस्तरेणार्धसंमितः॥

अर्धे संमितं यस्येति बहुव्रीहिः। ततश्च पटस्तत इत्यर्थः। राकौ. १२६

[3]चतुरस्रं तु कर्तव्यं राज्ञो भद्रासनं शुभम्।
नाष्टास्रं न तथा वृत्तं न च दीर्घं भृगूत्तम॥

उक्तपरिमाणान्नातिरिक्तमित्यर्थः। राकौ. १२६

[4]सुवर्णरूप्यताम्रैश्च चित्रं कार्यं विशेषतः।
रत्नैः प्रशस्तैश्च तथा न रत्नप्रतिरूपकैः॥

[5]चत्वारः पुरुषास्तत्र विन्यस्ता भृगुनन्दन।
द्विगुणाश्च तथा सिंहः स्तम्भास्तद्द्विगुणा मताः॥

सिंहाः अष्टौ। स्तम्भाः षोडश। राकौ. १२७

[6]भद्रासनं तत्र भवेन्नृपस्य
तलेन पूर्णं ससुखं परार्ध्यम्।
वैयाघ्रचर्मास्तरणं सुखार्थं
वरासनं तस्य समामनन्ति॥

(१) विध. २।१४।१ र्धकरसमितः (र्धं तु समं भवेत्); राकौ. १२६ (पुष्कर उवाच०).

(२) विध. २।१४।२ पूर्वार्धे (हस्तत्रयं तथा विष्टं विस्तरेण तु कारयेत्।); राकौ. १२६ श्चास्य (स्तस्य).

(३) विध. २।१४।३; राकौ. १२६ तु (च) शुभं (तथा) नाष्टास्रं न (अष्टास्रं च) भृगूत्तम (कदाचन).

(४) विध. २।१४।४ शस्तैश्च (शस्तैर्न); राकौ. १२७ विशेषतः (विशेषवत्).

(५) विध. २।१४।५ हाः स्तम्भास्तद्द्विगुणा मताः (हास्तेभ्यस्तु द्विगुणास्तथा); राकौ. १२७.

(६) विध. २।१४।६; राकौ. १२७ पूर्णं ससुखं परार्ध्यम् (पूर्णस्य सुखं परार्धम्).

राजधार्यरत्नानि

पुष्कर उवाच–

[1]वज्रं मरकतं चैव पद्मरागं च मौक्तिकम्।
इन्द्रनीलं महानीलं वैडूर्यमथ सस्यकम्॥
इ(? च)न्द्रकान्तं सूर्यकान्तं स्फटिकं पुलकं तथा।
कर्केतनं पुष्परागं तथा ज्योतीरसं द्विज॥
स्फटिकं राजवर्तं च तथा राजमयं शुभम्।
सौगन्धिकं तथा सख्यं शङ्खब्रह्ममयं तथा॥
गोमेदं रुधिराक्षं च तथा बल्लातकं द्विज।
धूलीमरकतं चैव तुत्तूकं शेषमेव च॥
पलुं प्रवालकं चैव गिरिवज्रं च भार्गव।
भुजगेशमणिं चैव तथा वज्रमणिं शुभम्॥
टीटिभं च तु तापिच्छं भ्रामरं च तथोत्पलम्।
रत्नान्येतानि धार्याणि सर्वाण्येव महीक्षिता॥
सुवर्णप्रतिबद्धानि जयारोग्यसमृद्धये।
तेषां गुरुत्वं रागश्च स्वच्छत्वं रश्मिमालिता॥
सुजातता मसृणता सुसंस्थानत्वमेव च।
गुणवन्तो(? वत्ता) विनिर्दिष्टा धार्यास्ते गुण-संयुताः॥
खण्डाः सशर्करा ये च निष्प्रभा मलिनास्तथा।
न ते धार्या नरेन्द्राणां जयश्रीजीवितैषिणाम्॥
समस्तरत्नवर्गेऽपि वज्रधारणमिष्यते।
अम्भस्तरति यद्वज्रमभेद्यं विमलं च यत्॥
तथा च शुद्धं षट्कोणं लघु भार्गवनन्दन।
प्रभा च शक्रचापाभा यस्यार्काभिमुखी भवेत्॥
तं वज्रं धारयन् राजा सर्वाञ्जयति शात्रवान्।
शुकपक्षनिभः स्निग्धः कान्तिमान्विमलस्तथा॥
सुवर्णचूर्णसंकाशैः सूक्ष्मैर्बिन्दुभिरन्वितः।
शस्तो मरकतो राम गम्भीरश्चोन्नतस्तथा॥

(१) विध. २।१५।१–२६.

धार्यश्च पृथिवीशानां सर्वोपद्रवनाशनः ।
कुरुविन्दाद्भवेज्जन्म तथा सौगन्धिकाद् द्विज ॥
स्फटिकात्पद्मरागाणां श्रेष्ठास्ते ह्युत्तरोत्तरम् ।
जह(? जतु)रङ्गा भवन्तीह कुरुविन्दभवाश्च ये ॥
कषायरङ्गा निर्दिष्टा ये च सौगन्धिकोद्भवाः ।
स्वच्छाश्च रागवन्तश्च विज्ञेयाः स्फटिकोद्भवाः ॥
मुक्ताफलाः शुक्तिभवा बहवो मत्स्यजास्तथा ।
उत्कृष्टा न तथा तेभ्यो ये तु शङ्खोद्भवा द्विज ॥
तेभ्यः प्रशस्ता विज्ञेया नागकुम्भसमुद्भवाः ।
निष्प्रभास्ते समुद्दिष्टाः श्रेष्ठाः क्रोडि(? ड)भवा द्विज ॥
तेभ्यो वेणुदलाः श्रेष्ठास्तेभ्यो भुजङ्गसंभवाः ।
तेभ्योऽपि भुवि दुष्प्राप्यं मौक्तिकं मेघसंभवम् ॥
धारणात्तस्य नृपतेः सर्वसिद्धिः प्रकीर्तिता ।
मौक्तिकानां तु सर्वेषां वृत्तत्वं गुण उच्यते ॥
सुष्ठुता च सुशुक्लत्वं महत्त्वं च भृगूत्तम ।
इन्द्रनीलस्तु यः क्षीरं राजते भाजने स्थितम् ॥
रञ्जयेत्स्वप्रभावेन तममूल्यं विनिर्दिशेत् ।
नीलरक्तं तु वैडूर्यं सर्वतः श्रेष्ठमुच्यते ॥
सर्वेषामेव रत्नानां धार्यं कर्केतनं स्मृतम् ।
पुष्परागास्तथा राम ये चान्ये कीर्तिता मया ॥
प्रशस्तरत्नैर्भूपानां मुकुटान्यङ्गदानि च ।
हाराणि राम कार्याणि केयूराभरणानि च ॥
अप्रशस्तानि रत्नानि वर्जनीयानि दूरतः ।
सर्वरत्नोत्तमं राजा विवर्णं मलिनं तथा ।
न धारयेत धर्मज्ञः सुशुद्धं धारयेत्सदा ॥
धृतिः प्रशस्ता भृगुवंशचन्द्र
रत्नोत्तमानां सततं नृपाणाम् ।
रत्नांशुदग्धं तु नरस्य देहा-
दनर्थमाशु प्रशमं प्रयाति ॥

## अग्निपुराणम्

राज्ञः चामरदण्डच्छत्रभद्रासनानां स्वरूपम्

अग्निरुवाच–

[1]चामरो रुक्मदण्डोऽग्र्यश्छत्रं राज्ञः प्रशस्यते ।
हंसपक्षैर्विरचितं मयूरस्य शुकस्य च ॥
पक्षैर्वाऽथ बलाकाया न कार्यं मिश्रपक्षकैः ।
चतुरस्रं ब्राह्मणस्य वृत्तं राज्ञश्च शुक्लकम् ॥
त्रिचतुष्पञ्चषट्सप्त अ(? तका)ष्टपर्वैश्च दण्डकः ।
भद्रासनं क्षीरवृक्षैः पञ्चाशदङ्गुलोच्छ्रयैः ॥
विस्तारेण त्रिहस्तं स्यात्सुवर्णाद्यैश्च चित्रितम् ॥

## देवीपुराणम्

राज्ञः भद्रासनलक्षणम्

[2]हैमं च राजतं ताम्रं क्षीरवृक्षमयं च वा ।
भद्रासनं च कर्तव्यं सार्धहस्तसमुच्छ्रितम् ।
सपादहस्तमानं च राज्ञो माण्डलिकान्तरात् ॥

(१) भद्रासनलक्षणं देवीपुराणे– हैमं चेति ।

*राप्र. ५१

(२) पञ्चम्याः उच्छ्रितमित्यत्रान्वयः । अतस्तस्य न्यूनं हस्तमात्रमित्यर्थः । तथा च वराहसंहितायाम्– 'त्रिविधस्तस्योच्छ्रायो हस्तः पादाधिकोऽर्धयुक्तश्च । माण्डलिकानन्तरजित्समस्तराज्यार्थिनां शुभदः ॥' इति ।

राकौ. १२६

राज्ञः पट्टलक्षणम्

[3]सर्वस्नानमलंकारं रोचनाख्यं च पट्टकम् ।
वृद्ध्याऽध्यङ्गुलमङ्गुल्या षट्त्रिंशदङ्गुलावधि ॥

---

* नीम. राप्रवत् ।

(१) अग्नि. २४५।१-४.

(२) राप्र. ५१; नीम. ३ क्षीर (क्षीरि); राकौ. १२६.

(३) राप्र. ५४; नीम. ३ वृद्ध्याऽध्य (वृद्ध्याऽद्य); राकौ. १२४.

'वृत्तं वा चतुरस्रं वा पञ्चकत्रिकगर्भितम्।
वत्सेशपञ्चमत्स्येभगोस्वस्तिकविनायकैः।
श्रीश्रीवृक्षवराहेभस्वामिदेवीशुभान्वितम्॥

(१) पट्टलक्षणं तु देवीपुराणे– सर्वस्नानमिति। अब्ध्यङ्गुलं सप्ताङ्गुलम् अङ्गुल्या एकया सहितमष्टाङ्गुलमित्येकं पट्टलक्षणम्, तदारम्य सप्ताङ्गुलकृतवृध्या चत्वारि लक्षणानि, एवं पञ्चविधः। तस्य दैर्घ्यार्धेन मध्यदेशविस्तारः, तदर्धेन प्रान्तद्वयविस्तारः। स एवं वृत्तः कोणरहितश्चतुरस्रो वा। वत्सेशः श्रीवत्सधारी विष्णुः। इभः हस्ती महामात्राधिष्ठितः। गौः स्त्रीगवी। केवल एव हस्ती वृषभश्च निषिद्धो विश्वकर्मणा– 'व्याघ्रव्यालगजसिंहा अश्वोष्ट्रौ महिषो वृषः। भूषणेषु त्यजेदष्टौ यदीच्छेद्दीर्घजीवितम्॥' इति। श्रीवृक्षः बिल्वः। इभः गणेशः। स्वामी कार्तिकेयः। वराहसंहितायामपि दैर्घ्यादिमानं भङ्ग्यन्तरेणोक्तं मध्यविस्तारमुक्त्वा– 'सर्वे द्विगुणायामा मध्यादर्धेन तदर्धविस्ताराः। सर्वे विशुद्धकाञ्चनविनिर्मिताः श्रेयसो वृद्ध्यै। पञ्चशिखो भूमिपतेस्त्रिशिखो युवराजमहिष्योः। एकशिखः सैन्यपतेः प्रसादपट्टो विना शिखया॥' इति। राप्र. ५४–५५

(२) * अद्यङ्गुलं सप्ताङ्गुलम्। पञ्चत्रिकं पञ्चत्रयम्। वत्सः श्रीवत्सः। ईशः शिवः। इभगौः वृषदेहं गजमुखम्। वराहेभोऽप्येवम्, केवलयोर्गजवृषयोर्विश्वकर्मणा निषेधात्। ‡ नीम. ४

(३) अब्ध्यङ्गुलमित्यस्य मध्यमणिन्यायेनान्वयः। † राकौ. ३२४

---

* द्वयोरप्यादर्शपुस्तकयोर्मूले व्याख्याने च मुद्रितः पाठोऽयमशुद्धो व्याख्यानविरुद्धश्च। समानार्थकत्वादक्षरसाम्याच्च 'अब्ध्यङ्गुलम्' 'अद्यङ्गुलम्' इत्येतौ शुद्धपाठौ संभवतः। तयोः कतरो मयूखाभिप्रेत इति न निर्णीयते।

‡ शेषं राप्रगतम्।

† शेषं राप्रवत्।

(१) राप्र. ५४; नीम. ४; राकौ. ३२४ गर्भि (निर्मि).

## *युक्तिकल्पतरुः

राज्ञः अष्टविधानि सिंहासनानि

अथाऽऽसनयुक्तिः॥

अत्र (? तत्र) सिंहासनयुक्तिरुच्यते–

'विशेषश्चाथ सामान्यमासनं द्विविधं मतम्।
सिंहासनं विशेषाख्यं सामान्यं खट्टजादिकम्।
राज्ञो वरतमं नाम श्रीसिंहासनमुच्यते॥

शुभे मुहूर्ते शुभमासयोगे
सुवारवेलातिथिचन्द्रयोगे।
काले निरुत्पातनिरीतिभावे
सिंहासनावस्थविधिं वदन्ति॥

स्थिरराशिस्थिते भानौ चन्द्रे च स्थिरभोदिते।
आसनारम्भमिच्छन्ति गृहारम्भोऽपि येषु च॥

एतेन गृहारम्भसिंहासनयोरारम्भः। तत्र क्रमः–

बाणवेदाग्निपक्षाणि सोपानादियुगैः (? नानि युग-) क्रमात्।
चत्वारिंशत्तथा त्रिंशद्विंशतिः षोडशैव च॥
सिंहान्वितानि ज्ञेयानि चरणानि युगे क्रमात्।
पद्मः शङ्खो गजो हंसः सिंहो भृङ्गो मृगो हयः॥
अष्टौ सिंहासनानीति नीतिशास्त्रविदो विदुः।
आदित्यादिदशाजानां भूपतीनां यथाक्रमम्॥
राज्ञः स्वहस्तैरष्टाभिरायामपरिणाहयोः।
राजपात्रमिदं नाम सोपानं पुरुषोन्नतम्॥
तदर्धमानं तन्मध्ये राजासनमुदाहृतम्।
अर्धोन्नतमिदं रम्यं प्रोक्तं कलिमहीभुजाम्॥
दिगष्टद्वर्यङ्घ्रिकोणः स्याद् ब्रह्मादीनां यथाक्रमम्॥

---

* अत्र अशुद्धिशोधनं शुद्धिसूचनं च क्वचित् शब्दकल्पद्रुम– वाचस्पत्यकोशावनुसृत्य क्वचिच्च स्वोत्प्रेक्षया कृतमिति, कंसचिह्नान्तर्गताः श्लोकाः शब्दकल्पद्रुमस्था इति च ज्ञेयम्।

(१) युक. ५०–८४।३४७–६४६.

अथाष्टानां लक्षणानि–

गम्भारीकाष्ठघटितः पद्ममालोपचित्रितः ।
पद्मरागविचित्राङ्गः शुद्धकाञ्चनसंस्कृतः ॥
चरणाग्रे पञ्चकोषात्(? कोषाः) पद्मराग-
विचित्रिताः ।
दिक्ष्वष्टौ पुत्रिका राजद्वादशाङ्गुलिसंमिताः ॥
राजासनचतस्रस्तु एवं द्वादशपुत्रिकाः ।
रत्नैश्च नवभिः कार्यं निर्माणं चान्तराऽन्तरा ॥
रक्तवस्त्रावृतं ह्येतत् पद्मसिंहासनं मतम् ।
अत्रोषित्वा नरपतिः प्रतापमतिविन्दति ॥
भद्रश्रीकाष्ठघटितः शङ्खमालोपशोभितः ।
शुद्धस्फटिकचित्राङ्गः शुद्धरौप्योपशोभितः ॥
चरणाग्रे शङ्खनाभिः पुत्रिकाः सप्तविंशतिः ।
स्थाने स्थाने विधातव्याः शुद्धस्फटिक-
संस्कृताः ॥
शुक्लपट्टावृतं ह्येतत् शङ्खसिंहासनं मतम् ।
पनसेनोपघटितो गजमालोपशोभितः ॥
विद्रुमैरपि वैदूर्यैः काञ्चनेनापि शोभितः ।
चरणाग्रे गजशिरः पुच्छादेकैकपुत्रिका ॥
माणिक्यरचिता रक्तवस्त्रादिकं विभूषणम् ।
गजसिंहासनं नाम साम्राज्यफलदायकम् ॥
शालकाष्ठेन घटितो हंसमालोपशोभितः ।
पुष्परागैः काञ्चनेन कुरुविन्दैश्च चित्रितः ॥
चरणाग्रे हंसरूपं पुत्रिकास्त्वेकविंशतिः ।
गोमेदकोपघटिताः पीतवस्त्रविभूषणम् ॥
हंससिंहासनं नाम सर्वानिष्टविनाशनम् ।
चन्दनेनोपघटितः सिंहमालोपशोभितः ॥
शुद्धहीरकचित्राङ्गः शुद्धकाञ्चननिर्मितः ।
चरणानां सिंहलेखः पुत्रिकाश्चैकविंशतिः ॥
मुक्ताशुक्तिभिरन्यैश्च निर्मलैरेव भूषणम् ।
शुद्धशुण्डावृतं ह्येतत् सिंहसिंहासनं मतम् ॥
अत्रोषित्वा नरपतिः कृत्स्नां साधयति क्षितिम् ।
भृङ्गमालोपसहितं शुद्धचम्पककल्पितम् ॥
शुद्धैर्मरकतैर्युक्तं पादाग्रे पद्मकोषिकाः ।
द्वाविंशतिः पुत्रिकास्तु नीलवस्त्रादिभूषणम् ॥
भृङ्गसिंहासनं नाम शत्रुक्षयजयप्रदम् ।
निम्बकाष्ठेन घटना भृङ्गमालोपशोभितम् ॥
इन्द्रनीलैर्महानीलैः काञ्चनेनापि चित्रितम् ।
चरणाग्रे मृगशिरश्चत्वारिंशच्च पुत्रिकाः ॥
नीलवस्त्रादियुक्तं च मृगसिंहासनं मतम् ।
लक्ष्मीविजयसंपत्तिनैरुज्यप्रदमुत्तमम् ॥
केशरेणोपघटितं हयमालोपशोभितम् ।
समस्तवस्त्रैर्भूषा च पुत्रिकाः पञ्चसप्ततिः ॥
चरणाग्रे हयशिरश्चित्रवस्त्रादिभूषणम् ।
हयसिंहासनं नाम लक्ष्मीविजयवर्धनम् ॥
इत्येतत्कथितं सारं महासिंहासनाष्टकम् ।
यथा भोजेन लिखितं यथा चान्यैश्च पण्डितैः ॥
एतस्यातिक्रमं दम्भाद्यः कुर्यात्पृथिवीपतिः ।
अचिरादेव कुरुते तस्य मृत्युरि(? र)तिक्रमम् ॥
परासनस्थो यो राजा यो राजा च निरासनः ।
स परैर्हन्यते सिंहैरिव मत्तगजाधिपः ॥
स्वलग्नमित्रासनमध्यसंस्थिति-
र्न दुष्यतीति प्रवदन्ति तज्ज्ञाः ॥

अष्टविधाः खट्टिकाः, राज्ञः श्रीसर्वमङ्गला खट्टिका

अथ सामान्यासनोद्देशः ॥

ब्रह्मक्षत्रियवैश्यानां चतुःषट्स्वस्व(?)-
कोणिकाः ।
खट्टिकाः सुखसंभूताः शुक्लरक्तासिताम्बराः ॥

इति खट्टिकोद्देशः ॥

अष्टाभिः काष्ठखण्डैश्च खट्टेति प्रतिचक्षते ॥

अथैषां लक्षणानि–

तिष्ठेद्यदालम्ब्य खट्टा तज्ज्ञेयं चरणाह्वयम् ।
शिरस्थं व्युपधानं स्यादधस्थं स्यान्निरूपकम् ॥
आलिङ्गने उभे पार्श्वे प्राह भोजमहीपतिः ।
आलिङ्गने चतुर्हस्ते व्युपधाननिरूपके ।
तदर्धेन तदर्धेन चत्वारश्चरणा इति ॥

सर्वषोडशिका खट्वा सर्वत्राभयदायिका ॥
आलिङ्गने सार्धवेदे व्युपधाननिरूपके ।
सार्धद्वये च चरणा हस्तैकपरिसंमिताः ॥
सर्वाष्टादशका खट्वा सर्वकामफलप्रदा ॥
आलिङ्गने पञ्चहस्ते व्युपधाननिरूपके ।
तदर्धेन तदर्धेन चत्वारश्चरणा इति ।
सर्वविंशतिका खट्वा धनधान्यजयप्रदा ॥
आलिङ्गने पञ्चहस्ते व्युपधाननिरूपके ।
त्रिहस्तसंमिते पादा हस्तैकपरिसंमिताः ॥
सर्वविंशतिका खट्वा एवमप्युपजायते ।
(आलिङ्गने सार्धपञ्चे व्युपधाननिरूपके ।
तदर्धेन तदर्धेन चत्वारश्चरणा इति ।
सर्वद्वाविंशिका खट्वा सर्वसंपत्प्रदायिनी ॥)
आलिङ्गने षड्ढस्ते च व्युपधाननिरूपके ॥
त्रिहस्तसंमिते पादा(? सार्धा)श्चत्वारश्चरणा इति ।
चतुर्विंशतिका खट्वा सर्वरोगक्षयंकरी ॥
(आलिङ्गने सप्तहस्ते व्युपधाननिरूपके ।
त्रिहस्ते सार्धहस्ताश्च चत्वारश्चरणा इति ।
सर्वषड्विंशिका खट्वा सर्वसौभाग्यकारिका ॥
आलिङ्गने सार्धसप्ते व्युपधाननिरूपके ।
सार्धत्रिहस्ते सार्धाश्च चत्वारश्चरणा इति ।
सर्वाष्टाविंशिका खट्वा सर्वभोगप्रदायिका ॥)
आलिङ्गने चाष्टहस्ते व्युपधाननिरूपके ।
चतुर्हस्ते सार्धहस्ताश्चत्वारश्चरणा इति ॥
सर्वत्रिंशतिका खट्वा सर्वकामार्थदायिनी ।
एवमष्टविधाः खट्वा समासेनोपदर्शिताः ॥
आदित्यादिदशाजानां नृणां संपत्तिदायिकाः ।
कार्याः शिल्पिभिरेतासु विविधाकृतिकल्पनाः ।
सर्वषोडशिका खट्वा सर्वेषामेव युज्यते ॥
अष्टौ खण्डानि यस्याः स्युश्चतुर्हस्तयुतानि च ।
श्रीसर्वमङ्गला नाम खट्वैषा पृथिवीपतेः ॥
इयं यदा सच्छदना तदा सर्वजयाभिधा ॥

षोडश मञ्चाः, राज्ञः प्रासादसंज्ञा मञ्चाश्चत्वारः

यात्रासिद्धिः सर्वसिद्धिर्विजया चाष्टमङ्गला ॥
एकैकहस्तवृद्ध्या तु भवेन्मञ्चमतः परम् ।
जयोऽथ मङ्गलः श्रेयांश्चित्रकान्तः परो महान् ॥
एकैकहस्तवृद्ध्या तु मञ्चानामिति लक्षणम् ॥
(सा तुङ्गा ह्यतितुङ्गा च शिखरी विषयेक्षणा ।
एकैकहस्तवृद्ध्या तु टङ्क इत्यभिधीयते ॥)
यात्रासिद्धिं समारभ्य येऽमी षोडश कीर्तिताः ।
आदित्यादिदशाजानामाद्यन्तैकद्वयं क्रमात् ॥
दूरदर्शी दीर्घदर्शी दुर्लङ्घ्योऽथ दुरासदः ।
यथोत्तरं दशगुणाः पादैकपरिणाहिनः ॥
प्रासादसंज्ञकाः कार्या राज्ञा सुखमभीप्सता ।
चत्वार एते सर्वेषां भूपतीनां सुखावहाः ॥

खट्वानामष्टकम्

श्रीभोजमते च—

सर्वत्रिंशतिकां यावदारभ्याभयषोडशीम् ।
खट्वानामिति नामानि अष्टौ हस्तद्वयाधिको-(? येऽधिके) ॥

तद्यथा—

मङ्गला विजया पुष्टिः क्षमा तुष्टिः सुखासनम् ।
प्रचण्डा सर्वतोभद्रा खट्वानामष्टकं विदुः ॥

आसां पूर्ववद्विभागः ॥

पराशरसंहितायां तु—

अष्टाभिः काष्ठखण्डैस्तु योऽक्ष(? ङ्ग)पिण्डो विजायते ।
स चेत्समो भवेत्खट्वा प्रणाश्या स्यादतोऽन्यथा ॥
समे सर्वार्थसंपत्तिर्विषमे विपदास्पदम् ।
तस्मात्खट्वाङ्गपिण्डो यः समः कार्यः स सूरिभिः ॥

इदं तु सामान्यं सर्वसंमतं च ॥
काष्ठनियमस्तु पूर्ववदेव ॥

त्रिविधः पीठः, राजपीठलक्षणम्

अथ पीठोद्देशः ॥

धातुपाषाणकाष्ठैश्च पीठस्त्रिविध उच्यते ।
धातवश्च शिलाश्चैव काष्ठानि विविधानि च ।
तदत्र संप्रवक्ष्यामि यथैषामुपयुज्यते ॥

अथ मानम्–

हस्तद्वयं तु दैर्घ्येण तदर्धे(? र्धं) परिणाहतः ।
तदर्धेनोन्नतः पीठः सुख इत्यभिधीयते ॥
हस्तद्वयद्वयाधिक्यात्पञ्च पीठा भवन्ति हि ।
सुखो जयः शुभः सिद्धिः संपच्चेति यथाक्रमम् ॥
धनभोगसुखैश्वर्यवाञ्छितार्थप्रदायकः ।
सम( ? मे )दीर्घसुखावाप्तिर्विषमे विषमापदः ॥
आयामपरिणाहाभ्यां हस्तद्वयमितो हि यः ।
( अर्धहस्तोन्नतः पीठो जारको नाम विश्रुतः ॥
दैर्घ्योन्नतिपरीणाहैश्चतुर्हस्तमितो हि यः । )
राजपीठ इति ज्ञेयः सकलार्थप्रसाधकः ।
अत्राभिषेकमिच्छन्ति क्षितिपस्य पुराविदः ॥
दैर्घ्योन्नतिपरीणाहैः षड्ढस्त(स्तं)मितो हि यः ।
राज्ञां चित्तप्रसादार्थं केलिपीठाभिधानकः ॥
दैर्घ्योन्नतिपरीणाहैरष्टहस्तमितो हि यः ।
अङ्गपीठो ह्ययं नाम्ना जनानां च सुखप्रदः ॥
कानको राजपीठः स्याज्जयो वा राजतः सुखः ।
राज्ञामेवोपयोक्तव्यो लघवश्चोत्तरोत्तरम् ॥
राजपीठे चिरायुः स्याज्जये सर्वां महीं जयेत् ॥
जारको जारयेच्छत्रून् सुखे सुखमवाप्नुयात् ।
राजतः कीर्तिजननो धनवृद्धिकरः परः ॥
ताम्रः प्रतापजननो विपक्षक्षयकारकः ।
लौहस्तूच्चाटने सर्वः सर्वकर्मसु युज्यते ।
त्रपुसीसकरङ्गाद्याः शत्रुक्षयफलप्रदाः ॥

इति धातुपीठाः ॥

अथ शिलापीठाः ॥

राजपीठो वज्रपाणे(? मणे)रेव नान्यस्य दृश्यते ।
पद्मरागो दिनेशस्य चन्द्रकान्तो विधोरपि ॥
राहोर्मारकतः पीठः शनेर्नीलसमुद्भवः ।
गोमेदकस्तु सौम्यस्य स्फाटिकस्तु बृहस्पतेः ॥
शुक्रस्य वैदूर्यभवः प्रावालो मङ्गलस्य हि ॥

इत्थं पुराणवार्ता ॥

यो यस्य हि दशाजातः पीठस्तस्य हि तन्मयः ।
स्फाटिकस्तु महीन्द्राणां सर्वेषामेव युज्यते ॥
अभिषेके च यात्रायामुत्सवे जयकर्मणि ।
अयस्कान्तोपघटितः सङ्ग्रामे पीठ इष्यते ॥
गरुडोद्गाररचिते वर्षासु नृपतिर्वसेत् ।
शुद्धरत्नमयं पीठं भजते घनगर्जिते ॥
सामान्यप्रास्तरः पीठो विलासाय महीभुजाम् ।
एषां मानं गुणाश्चापि विज्ञेया धातुपीठवत् ॥

अथ काष्ठपीठाः ॥

तद्यथा– मानं तु पूर्ववदेव ॥

संपत्तिसुखवृद्ध्यर्थं गाम्भारीजनितो जयः ।
जारको रोगनाशाय सुखः शत्रुविनाशनः ॥
सिद्धिः सर्वार्थसंसिद्ध्यै विजयाय च
वैरिणाम् ।
शुभः स्यादभिषेके च संपद्वैरिनिवारणः ॥
पानसो राजकः पीठः सुखसंपत्तिकारकः ।
जयः स्यादभिषेके च शुभः शत्रुविनाशनः ॥
सुखो रोगविनाशाय सिद्धिः सर्वार्थदायिका ।
संपदुच्चाटनविधौ विज्ञेयं पीठलक्षणम् ॥
चान्दनस्तु सुखः पीठो अभिषेके महीभुजाम् ॥
जयः स्याद्रोगनाशाय शुभः सौख्यं प्रयच्छति ।
जारको ग्रहतुष्ट्यर्थमन्ये तु रतिदुष्कराः( ? ) ।
यत्नतो निर्मितास्ते तु साम्राज्यफलदायकाः ॥
कालेयको जारकोऽपि भूभुजामभिषेचने ।
पीठानगरुकादीनामन्ये चन्दनवद्विदुः ॥
बाकुलस्तु शुभः पीठो भूभुजामभिषेचने ।
जयो रोगविनाशाय सुखसंपत्तिकारकः ॥
सिद्धिः सिद्धिप्रदा संपत् सङ्ग्रामे विजयप्रदः ।
जारको जरणाय स्यादिति भोजस्य संमतम् ।

एवं सुगन्धिकुसुमाः ससारा ये च पादपाः ।
बाकुलेन समः कार्य एवं पीठस्य निर्णयः ॥
ये शुष्ककाष्ठा वृक्षास्तु मृदवो लघवोऽथवा ।
गाम्भारीसदृशः पीठस्तेषां कार्यस्तथा गुणः ॥
फलिनश्च ससाराश्च रक्तसाराश्च ये नगाः ।
तेषां पानसवत्पीठस्तथैव गुणमावहेत् ॥

अथ निषेधः—

विज्ञेयो निन्दितः पीठो लोहोत्थः सर्वधातुजे ।
शिलोत्थः शार्करो वर्ज्यः कर्करश्च विशेषतः ।
काष्ठजेषु च पीठेषु नासारा नातिसारिणः ॥

तथाहि—

आम्रजम्बुकदम्बानामासनं वंशनाशनम् ॥

भोजस्त्वाह—

गुरुः पीठो गौरवाय लघुर्लाघवकारकः ॥

पराशरस्तु—

नाग्रन्थिर्नातिग्रन्थिश्च नागुरुर्नासमाकृतिः ।
पीठः स्यात्सुखसंपत्त्यै नातिदीर्घो न वामनः ॥
ये चान्ये पीठसदृशा दृश्याः शिल्पिविनिर्मिताः ।
गुणान् दोषांश्च मानं च तेषां पीठवदादिशेत् ॥
विचार्य तेन विधिना यः शुद्धं पीठमाचरेत् ।
तस्य लक्ष्मीः स्वयं वेश्म कदाचिन्न विमुञ्चति ॥
अज्ञानादथवा मोहाद्योऽन्यथा पीठमाचरेत् ।
एतानि तस्य नश्यन्ति लक्ष्मीरायुः कुलं बलम् ॥

इति पीठोद्देशः ॥

खट्टायां यो गुणो दोषो मानं च परिकीर्तितम् ।
तेनैव खट्टा काष्ठोत्थं तथैव गुणमावहेत् ॥
अनेनैव विधानेन कार्यं बहुविधासनम् ।
विना नौकासमं कार्यं सर्वत्रैवाऽऽसनं गुरु ॥

### राजच्छत्रलक्षणम्

अथ छत्रयुक्तिः —

विशेषश्चाथ सामान्यं छत्रस्य द्विविधा भिदा ।
राज्ञश्छत्रं विशेषाख्यं सामान्यं चान्यदुच्यते ॥

तत्र विशेषच्छत्रोद्देशः ॥

सदण्डं चाथ निर्दण्डं तज्ज्ञेयं द्विविधं पुनः ।
सदण्डं तत्र विज्ञेयं सारणाकुञ्चनात्मकम् ॥
दण्डः कन्दः शलाकाश्च रज्जुर्वस्त्रं च कीलकम् ।
षड्भिरेतैः सुसंदिष्टैश्छत्रमित्यभिधीयते ॥

### राज्ञः दण्डचामरच्छत्रादीनां लक्षणानि

दिगष्टषट्चतुर्हस्तदीर्घो दण्डो युगक्रमात् ।
षड्बाणवेदनयनवितस्त्या कन्द उच्यते ॥
शतान्यशीतिः षष्टिश्च चत्वारिंशद्युगक्रमात् ।
शलाकाः षट्पञ्चवेदत्रिहस्तैः संमिताः क्रमात् ॥
नवभिस्तन्तुभिः सूत्रं सूत्रैस्तु नवभिर्गुणः ।
गुणैस्तु नवभिः पाशो रश्मिस्तैर्नवभिर्भवेत् ॥
नवाष्टसप्तषट्संख्यै रश्मिभी रज्जवः क्रमात् ॥
वस्त्रं शलाकाद्विगुणमायामेन प्रतिष्ठितम् ।
भानुदिग्ग्रहवसुभिरङ्गुलीभिस्तु कीलकः ।
षण्णां यन्मानमुदितं तद्राज्ञामेव भूतये ॥
पादोनं युवराजस्य अन्येषां तु तदर्धतः ।
एतेन राज्ञो दण्डोऽभूद्युवराजस्य तत्पुनः (?) ॥

अन्येषां तदेव (?) ॥

विशुद्धकाष्ठस्य तु दण्डकन्दौ
तथा शलाका अपि शुद्धवंशजाः ।
रज्जुश्च रक्ता वसनं च रक्तं
छत्रं प्रसादं नृपतेर्वदन्ति ॥

प्रसादमिति प्रसादार्हम् ॥

नीलो दण्डश्च वस्त्रं च शिरः कुम्भस्तु कानकः ।
सौवर्णं युवराजस्य प्रतापं नाम विश्रुतम् ॥
चान्दनौ दण्डकन्दौ चेत्सुशुक्ले रज्जुवाससी ।
छत्रं मनोहरं राज्ञां स्वर्णकुम्भोपशोभितम् ॥
कानकौ दण्डकन्दौ तु शलाका अपि कानकाः ।
शुक्लानि रज्जुवासांसि स्वर्णकुम्भस्तथोपरि ।
इदं कनकदण्डाख्यं छत्रं सर्वार्थसाधकम् ॥
दण्डकन्दशलाकाश्च शुद्धस्वर्णेन निर्मिताः ।
कीलकं स्वर्णघटितमशुक्ले रज्जुवाससी ।
कुम्भादिरथ हंसादिश्चामरादिर्यथाक्रमम् ॥

कुम्भादावथ हंसादौ नवरत्नानि रक्षयेत् ।
द्वात्रिंशन्मौक्तिकीमाला द्वात्रिंशत्तत्र दापयेत् ॥
सर्वोपरि ब्रह्मजातिं विशुद्धं हीरकं न्यसेत् ।
दण्डान्ते कुरुविन्दांश्च पद्मरागांश्च विन्यसेत् ॥
स्वामिहस्तैकमानेन चामरः सित इष्यते ।
इत्ययं नवदण्डाख्यश्छत्रराजो महीभुजाम् ॥
अभिषेके विवाहे च ग्रहाणां प्रीतिवर्धनः ।
पताका नवदण्डाग्रे राज्ञोऽष्टाङ्गुलिसंमिताः ॥

अथ कुम्भादिः ॥

कलशो दर्पणश्चन्द्रः पद्मकोषो यथाक्रमम् ।
ब्रह्मक्षत्रियविट्शूद्रजातीनां नवदण्डके ॥
हंसश्चासः शुकः केकी व्याघ्रः सिंहो गजो हयः।
आदित्यादिदशाजानामेते स्युर्नवदण्डगाः ॥
चामरश्चासपक्षाणि चित्रवस्त्राणि च क्रमात् ।
जाङ्गलादिमहीन्द्राणां भवन्ति नवदण्डके ॥
शुक्लरक्तपीतनीलं वस्त्र( ? स्त्रं )मण्डपसंस्थितम्।
शुक्लवर्णवस्त्रं सर्वेषामुपरि प्रणिधीयते ॥
शुक्ला रक्ताः पीतनीलाः पताकाश्चापि रज्जवः ।
चामराणां वर्णभेद एवमेव प्रकाशितः ।
नानावर्णस्तु सर्वेषां सर्वत्रैवोपयुज्यते ॥
अकबद्धाभिधो विप्रश्चटबद्धस्तु क्षत्रियः ।
तपबद्धस्तु वैश्यः स्याद्यशबद्धस्तु शूद्रकः ॥
अन्यानि यानि च्छत्राणि विविधाकृतिमन्ति च ।
तानि चित्तप्रमोदार्थं कार्याणि त्रितयं त्विदम्॥
नवदण्डोऽभिषेके च वारे कनकदण्डयोः(?) ।
मनोहरं प्रयाणेषु च्छत्रं भोजस्य सन्म-
(? संम )तम् ॥
मनोहरं श्रीकनकदण्डं च नवदण्डकम् ।
छत्रं च त्रिविधं ज्ञेयं त्रिविधानां महीभुजाम् ॥
मण्डलेशश्च राजा च चक्रवर्ती च यो नृपः ।
आनूपो जाङ्गलो देशः साधारणगतिस्त्रिधा ।
देशत्रयाधीश्वराणां छत्रत्रयमिदं क्रमात् ॥

दण्डनियमस्तु अन्यत्र—

चम्पकः पनसः शालः श्रीफलश्चन्दनस्तथा ।
बकुलश्चाथ निम्बश्च वज्रवारणमित्यपि ॥
आदित्यादिदशाजानां दण्डकाष्ठाष्टकं विदुः ।
चान्दनश्छत्रदण्डस्तु सर्वेषामेव युज्यते ।
विशुद्धकोणधारं हि तद्वत्रं वज्र-
धा( ? वा )रणम् ॥

इति सदण्डलक्षणम् ॥

अथ निर्दण्डलक्षणम् ॥

निर्दण्डं दण्डरहितं समाकुञ्चनवर्जितम् ।
मणीनामथ वस्त्राणां निर्णयस्तु सदण्डवत् ॥
मुख्यं जघन्यं द्विविधं तत्र मुख्यमिहाऽऽयतम् ।
जघन्यं वलयाकारं तयोर्मानं यथा लघु ॥
दीर्घस्य मानं निर्दिष्टं भानुदिङ्नवमुष्टिभिः ।
वलयस्य हि निर्दिष्टं तावतीभिर्वितस्तिभिः ॥
इति प्रोक्तो विशेषस्य विशेषो भोजभूभुजा-
(म् ? ) ।
इत्थं विचार्य यो राजा राजच्छत्रं समाचरेत् ।
स चिरं पाति वसुधां धनसंपत्तिऋद्धिमान् ॥
अज्ञानादथवा मोहाद्योऽन्यथा छत्रमाचरेत् ।
सोऽचिरान्मृत्युमाप्नोति भयं रोगं कुलक्षयम् ॥
विधानशून्यं छत्रं तु मस्तकोपरि भूपतिः ।
यो धत्ते तस्य दुर्बुद्धेर्लक्ष्मीकुलबलक्षयः ॥

इति विशेषच्छत्रोद्देशः ॥

कुञ्चनाद्दण्डच्छत्रस्य छत्रं सामान्यमुच्यते ।
निर्दण्डं च सदण्डं च छत्रं तु द्विविधं विदुः ॥
आयामपरिणाहाभ्यां नवमुष्टिमितं हि तत् ।
इदं हि सर्वतोभद्रं सर्वेषामुपयुज्यते ॥
एकैकमुष्टिवृद्ध्या तु यावद्विंशातिमुष्टिकम् ।
मेषादिलग्नजातानां नृणां छत्रमिदं क्रमात् ॥

अथ सदण्डम् ॥

आयामपरिणाहेन हस्तद्वयमिदं हि यत् ।
स चतुर्हस्तदण्डाढ्यो दण्डछत्रीति( ? )
गद्यते ॥

सर्वेषां सुखसंपत्त्यै सर्वत्रैवोपयुज्यते ।
एकैकवृद्ध्या मुष्टिस्तु छत्रे दण्डे वितस्तयः ॥
ब्रह्मक्षत्रियविट्शूद्रजातीनां क्रमतो विदुः ॥

क्रमनियमस्तु तथैव ॥

शलाकावस्त्रदण्डादिवर्णः पूर्ववदिष्यते ॥

भोजोऽपि–

लघुता दीर्घता चैव दण्डसूत्री(?) गुणग्रहः ।
इत्थं विचार्य यः कुर्यान्मानवश्छत्रमात्मनः ॥
स लक्ष्मीं विजयं कीर्तिं प्रतापं चाभिविन्दति ॥
यो मोहादथवा दम्भात्कुरुते छत्रमन्यथा ।
स विषीदति भोजस्य वाक्यमेतदसंशयम् ॥

राज्ञो ध्वजः

तत्र ध्वजयुक्तिः ॥

सेनाचिह्नं क्षितीशानां दण्डो ध्वज इति स्मृतः ।
सपताको निष्पताकः स ज्ञेयो द्विविधो बुधैः ॥
सपताकध्वजस्याग्रे यदा हस्तं परिन्यसेत् ।
जयहस्तो ध्वजो नाम नैनं सामान्यमर्हति ॥
वंशोऽथ बाकुलः शालः पालाशश्चम्पकस्तथा ।
नैपो नैम्बोऽथवा दण्डस्तथा वैराजवारणः ॥
अवर्णादिकसंज्ञानां वर्णरूपः प्रकाशितः ।
सर्वेषां चैव वंशस्तु दण्डः संपत्तिकारकः ॥

अकचटतपयशाः ॥

पताकासार्धदैर्घ्येण दण्डस्तु पृथिवीभुजाम् ।
प्रतापाय पताकास्तु अष्टावेव प्रकाशिताः ॥
पंचहस्तायता हस्तपरिणाहा जयाभिधाः ।
जया च विजया भीमा चपला वैजयन्तिका ॥
दीर्घा विलासा लोला च ज्ञेया हस्तैकवृद्धितः ।
परिणाहे पादवृद्धिरथ वर्णस्य निर्णयः ॥
रक्तः श्वेतोऽरुणः पीतो चित्रो नीलोऽथ कर्बुरः ।
कृष्णश्चेति पताकानां वर्णरूपः प्रकाशितः ।
अवर्णादिकसंज्ञानामष्टानामष्टकत्रयम् ॥
कलसो दर्पणश्चन्द्रः पद्मकोषो यथाक्रमम् ।
ब्रह्मक्षत्रियविट्शूद्रजातीनां संप्रकाशितः ॥

गजादियुक्ता सा प्रोक्ता जयन्ती सर्वमङ्गला ।
गजः सिंहो हयो द्वीपी चतुर्णां पृथिवीभुजाम् ॥
हंसादियुक्ता विज्ञेया राज्ञां सैवाष्टमङ्गला ।
हंसः केकी शुकश्चासो ब्रह्मादीनां यथाक्रमम् ॥
चामरादिसमायुक्ता सा ज्ञेया सर्वबुद्धिदा ।
चामरश्चासपक्षाणि चित्रवस्त्रं तथा सितम् ॥
चतुर्णां वेदनयनपक्षेन्दुगणितक्रमात् ।
तदग्रे यदि विन्यस्तं पताकाद्वितयं भवेत् ॥
इयं हि सर्वतोभद्रा पताका चक्रवर्तिनः ।
तद्वर्णः पूर्ववज्ज्ञेयः प्रमाणं विधिबोधितम् ॥
कानकं राजतं ताम्रं नानाधातुमयं क्रमात् ।
कुम्भादिकं प्रशंसन्ति पताकाग्रे महीभुजाम् ॥
अत्रापि रत्नविन्यासो विधेयो राजतक्रमः (? तः क्रमः) ।
चतुर्भिर्मकराद्यैर्युक्ता चेत्सर्वसिद्धिदा ॥
तदा श्रेयस्करी नाम सा पताका विजायते ।
मकरोऽथ गजः सिंहो व्याघ्रो वाजी मृगः शुकः ॥
शुचिश्चेति समुद्दिष्टमादित्यादिदशाभुवाम् ।
इति प्रोक्तः पताकानां निर्णयः पृथिवीभुजाम् ॥
अन्येषामतिसंक्षेपात्पताकालक्षणं शृणु ।
गभ(? वित )स्तिरथ हस्तश्च तथा हस्तद्वयं क्रमात् ॥
यथोत्तरं द्विगुणितं पत्तौ दशगुणैः क्रमात् ।
एवं सहस्राधिपतेः पताका तौर्यहस्तिकी ॥
पताकासार्धदैर्घ्येण दण्डमानं प्रकीर्तितम् ।
वर्णादिकं तु यत् किंचित्तत्सर्वं पूर्ववन्मतम् ॥
दीर्घता लघुता चेति सपताकध्वजे गुणाः ।
अङ्कुशादिकमन्यच्च ध्वजाग्रे युक्तितो न्यसेत् ॥
संक्षेपेणेति निर्दिष्टं पताकाविधिलक्षणम् ।
एवं विमृश्य मतिमान् यः पताकां समाचरेत् ॥

स प्राप्नोति श्रियं कीर्तिं कुलवीर्यबलोन्नतिम्।
पताकां पृथिवीपालो योऽज्ञानादन्यथा चरेत्।
स विषीदति सङ्ग्रामे मन्ददन्त इव द्विपः॥

अथ निष्पताकध्वजः॥

पूर्ववद्दण्डनियमस्तत्र दैर्घ्ये विशेषणम्।
दण्डः पक्षाणि पद्मं च कुम्भश्च विहगो मणिः॥
निष्पताको ध्वजो राज्ञां षड्भिरेतैः सुसज्जितैः।
जयः कपालो विजयः क्षेत्रस्तत्र शिव-
क्रमात् (?)॥
राज्ञः पुरुषमानेन दण्डमानं प्रकीर्तितम्।
ऊर्ध्वाधःक्रमयोगेन तद्दण्डादिकमुच्यते॥
केकी चासो मत्स्यरङ्गस्त्रिविधानां
महीभुजाम्।
ध्वजाग्रेषु विधेयानि पक्षाणि श्रियमिच्छताम्।
पद्मं कुम्भश्च विहगो माला चैव यथाक्रमम्॥
उपर्युपरितो देयं निष्पताके महीभुजाम्।
अष्टषोडशद्वात्रिंशच्चतुःषष्टिदलाम्बुजम्॥
वृत्ताष्टदिग्दलैश्चाऽऽढयः कुम्भः संपत्तिकारकः।
हंसश्चासः शुकः केकी पक्षिणश्च यथाक्रमम्॥
वज्रं च पद्मरागं च नीलं वैदूर्यमेव च।
ब्रह्मक्षत्रियविट्शूद्रजातीनां स्याद्यथाक्रमम्॥
कनकं रजतं युग्मं द्विविधानां महीभुजाम्।
निष्पताकध्वजाब्जादिनिर्माणे योग इष्यते॥
पताका यदि हस्तैका सर्वाग्रे योग्यवर्णिनी।
अयं ध्वजो विशालाख्यो विज्ञेयश्चक्रवर्तिनः॥
तत्रैव चामरे योग्ये विज्ञेयाः सर्वसंपदः।
इति राज्ञां समुद्दिष्टमन्येषां ध्वज उच्यते॥
नोर्ध्वं विंशतिहस्तेभ्यो न चार्वाग्दशहस्ततः।
हस्तहस्तैकसंवृद्धया ध्वजो दशविधो मतः॥
सहस्राधिपमारभ्य यावत्स्यादयुताधिपः॥
न सहस्राधिपान्न्यूनो ध्वजधारणमर्हति।
अपि कोटिपतेर्ज्ञेयो ध्वजो विंशतिहस्तकः॥
अत्रापि वर्णवस्त्रादिनिर्णयः पूर्ववन्मतः।
स्थिरता चित्रता चेति निष्पताकध्वजे गुणौ॥

यदेतदुभयं चिह्नमुभयोः संप्रकाशितम्।
तत्प्रमाण( ? प्रधान )ध्वजे ज्ञेयमप्रधाने न
निर्णयः॥

निष्पताकध्वजोद्देशः प्रोक्तोऽयं भोजभूभुजा।
एतद्विमृश्य मतिमाश्चिरं सुखमवाप्नुयात्॥

यो दम्भादथवाऽज्ञानाद्विलङ्घयति मानवः।
स विषीदति नश्येत तस्य कीर्तिः कुलं बलम्॥

इति ध्वजयुक्तिः॥

### राज्ञः नव उपकरणानि

अथोपकरणयुक्तिः॥

छत्रध्वजसिंहासनयानादिभ्यो यदन्यत्स्यात्।
राज्याङ्गं तदुपकरणं तस्माल्लोके विशेषास्तु॥

तस्योपकरणस्य गणना—

चामरश्चाथ भृङ्गारश्चषकं च प्रसाधनीम्।
वितानश्चाथ शय्या च व्यजनं दर्पणाम्बरम्।
एतन्नवकमुद्दिष्टं राजोपकरणाख्यया॥

तत्र चामरोद्देशः॥

हस्तद्वयोन्नतः शुभ्रः सुवर्णवलिभूषितः।
हीरेणालङ्कृतो राज्ञां भव्यनामा सुखप्रदः॥
वलेश्चामरदैर्घ्याद्वा आयामत्वं प्रकाशितम्।
भव्यो भद्रो जयः शीलः सुखः सिद्धिश्चलः
स्थिरः।
वितस्त्येकैकसंवृद्धया दिनेशादिदशाभुवाम्॥
सौवर्णं राजतं युग्मं त्रैदशानां महीभुजाम्।
योजयेदिति निश्चित्य वलिकल्पनकर्मणि॥

स्थलजं जाङ्गलो राजा आनूपो जलजं वहेत्।
हीरश्च पद्मरागश्च वैदूर्यं नील एव च॥
मणिर्वलिषु योक्तव्यो ब्रह्मादीनां यथाक्रमम्।
शुक्लो रक्तोऽथ पीतश्च नानावर्णो यथा-
क्रमम्॥
ब्रह्मक्षत्रियविट्शूद्रजातीनां च महीभुजाम्।
चामरं राजकेशस्य न सामान्यस्य भूपतेः॥

न भज्यमानतो न्यूनं चामरं गुणमावहेत् ॥

अथ चामरपरीक्षा–

स्थलजं जलजं चेति चामरं द्विविधं विदुः ॥
मेरौ हिमालये विन्ध्ये कैलासे मलये तथा ।
उदयेऽस्तगिरौ चैव गन्धमादनपर्वते ॥
एवमेतेषु शैलेषु याश्चमर्यो भवन्ति हि ।
तासां बालस्य जायेत चामरेत्यभिधा भुवि ॥

आपीताः कनकाद्रिजा हिमगिरेः शुभ्रायता विन्ध्यजाः
कैलासादसिताः सिता मलयजाः शुक्लास्तथा पिङ्गलाः ।
आरक्ता उदयोद्भवाश्चमरजा आनीलशुक्लत्विषः
कृष्णाः केचन गन्धमादनभवाः पाण्डुत्विषश्चामराः ॥

अन्येषु प्रायशः कृष्णाश्चामराः संभवन्ति हि ।
ब्रह्मक्षत्रियविट्शूद्रजातयस्ताश्चतुर्विधाः ॥
चमर्यः पर्वतोद्भूता यथापूर्वं गुणावहाः ।
दीर्घवालाः सुलघवः स्निग्धाङ्गाश्चापि कोमलाः ॥
विरलास्तनुपर्वाणश्चमर्यो ब्रह्मजातयः ।
विना संस्कारमप्यासां चामरं विमलं भवेत् ॥
दीर्घवालाः सुगुरवः कर्कशांशा भृशं घनाः ।
तीक्ष्णाग्रास्तनुपर्वाणश्चमर्यः क्षत्रजातयः ॥
विना संस्कारमप्यासां चमरं विमलं भवेत् ।
दीर्घवालाः सुगुरवः कर्कशांशा भृशं घनाः ॥
विज्ञेयाः स्थूलपर्वाणश्चमर्यो वैश्यजातयः ।
संस्कारे चाप्यसंस्कारे न स्वभावं त्यजेदिदम् ॥
खर्ववालाः सुलघवः कोमलाङ्गा भृशं घनाः ।
विज्ञेयाः स्थूलपर्वाणश्चमर्यो वैश्यजातयः ॥
संस्कारेण भवेच्छत्रं( ? त्वच्छं )भवेन्मलिनमन्यथा ।
खर्ववालाः सुगुरवो विमलाः कर्कशास्तथा ॥
चमर्यस्तनुपर्वाणो विज्ञेयाः शूद्रजातयः ।
संस्कारेणापि मलिनमासां चामरमिष्यते ॥
दीर्घता लघुता चैव स्वच्छता घनता तथा ।
गुणाश्चत्वार इत्येते चामराणां प्रकीर्तिताः ॥
खर्वता गुरुता चैव वैवर्ण्यं मलिनाङ्गता ।
दोषाश्चत्वार इत्येते चामराणां प्रकीर्तिताः ॥
दीर्घे दीर्घायुराप्नोति लघौ भीतिविनाशनम् ।
स्वच्छे स्याद्धनकीर्तिश्च घने स्युः स्थिरसंपदः ॥
खर्वे खर्वायुरुद्दिष्टं गुरुर्गुरुभयप्रदः ।
विरले रोगशोकौ च मलिनं मृत्युमादिशेत् ॥

इति स्थलजम् ॥

अथ जलजम् ॥

लवणेक्षुसुरासर्पिस्तोयो( ? य )दधिपयोब्धिषु ।
यथोत्तरं गुणवहाश्चमर्यः सप्त सप्तसु ॥
पुच्छानि तासां कृत्तानि जन्तुभिर्मकरादिभिः ।
कदाचिदुपलभ्येत ( ? भ्यन्ते ) तत्तीरे पुण्यशालिभिः ॥
लवणाब्धिसमुद्भूतं पीतं गुरु घनस्त(? नं त)था ।
वह्नौ क्षिप्तश्च वालश्चेत्किंचिच्चटचटायते ॥
इक्षुसिन्धूद्भवं ताम्रं चामरं विमलं लघु ।
मक्षिका मशकाश्चैव तस्मिन् व्यजति चामरे ॥
सुराब्धिजातं कलुषं कर्बुरं गुरु कर्कशम् ।
तद्गन्धेनैव माद्यन्ति अपि वृक्षा मतङ्गजाः ॥
सर्पिः सिन्धूद्भवं स्निग्धं श्वेतापीतं घनं लघु ।
वायुरोगाः प्रशाम्यन्ति तस्य वीजनवायुना ॥
जलसिन्धूद्भवं पाण्डु दीर्घं लघु घनं महत् ।
त्रिदशस्यैव तल्लक्ष्मीस्तस्य वीजनवायुना ॥
दधिसिन्धूद्भवं श्वेतं वामलं लघुसंहतम् ।
अस्य वातेन नश्येत्तु तृष्णा मूर्च्छा मदो भ्रमः ॥
नारिष्टं नेतयस्तस्य यस्येदं चामरं गृहे ।
क्षीराब्धिसंभवं श्वेतं दीर्घं लघु घनं महत् ॥
अस्य चामरराजस्य विज्ञेयो गुणविस्तरः ।
नाल्पेन तपसा लभ्यो देवानामपि जायते ॥

ह्रियतेऽभ्यन्तरे सिन्धोर्नागैः संपत्तिलोलुपैः ।
एषां पूर्ववदुन्नेयं जातिदोषगुणादिकम् ॥
स्थलजे जलजे चैव भाव्यमेतद्विशेषणम् ।
स्थलजं सुखदह्यं हि दाहे मिषमिषायते ॥
जलजं वह्निदुर्दह्यं महान्तं धूममुद्गिरेत् ।
चामराणां समुद्दिष्टमित्येवं लक्षणद्वयम् ।
एवं विमृश्य यो धत्ते स राजा सुखमश्नुते ॥
जलजं चामरं राजा यो धत्ते जाङ्गलेश्वरः ।
तस्याचिरात्कुलं वीर्यं लक्ष्मीरायुश्च नश्यति ॥
अनूपाधीश्वरो राजा यो वहेत्स्थलजं तथा ।
तस्यैतानि विनश्यन्ति लक्ष्मीरायुर्यशो बलम् ॥
नालं वर्णद्वयेऽप्येषां विधेयं शिल्पिना क्रमात् (?) ।
संस्कारो वालुकायन्त्रे मसूरसलिलादिभिः ॥
एषां कृत्रिमदण्डत्वं प्रतिभाति यदा क्वचित् ।
तदोष्णसलिलक्काथात्कृत्रिमत्वं विपद्यते ॥

अथ भृङ्गारोद्देशः ॥

राज्ञोऽभिषेकपात्रं यद् भृङ्गार इति तन्मतम् ।
तदष्टधा तस्य मानमाकृतिश्चापि चाष्टधा ॥
सौवर्णं राजतं भौमं ताम्रं स्फाटिकमेव च ।
चान्दनं लोहजं शार्ङ्गमेतदष्टविधं मतम् ॥
भानुदिङ्नवसप्ताष्टरुद्रलोकसुरोन्मिताः ।
अष्टावष्टौ समाख्याता आयामपरिणाहयोः ॥
द्विचतुर्बाणवेदाब्धिबाणसप्ताष्टवृत्तिता (?) ।
यथाक्रमं समुद्दिष्टमादित्यादिदशाभुवाम् ॥
पद्मरागस्तथा वज्रं वैदूर्यं मौक्तिकं तथा ।
नीलं मरकतं चैव मुक्ता च सप्त कीर्तिताः ॥
भृङ्गारसप्तके न्यास्या न भौमो मणिमर्हति ।
कानकं मृन्मयं वाऽपि सर्वेषामुपयुज्यते ॥
कानकं तु क्षितीशानां मृन्मयं सार्वयोगिकम् ।
शङ्खपद्मेन्दुकह्लारं प्रत्यङ्गं विन्यसेत्क्रमात् ॥
चतुर्विधानां भूपानां चान्द्रः सर्वत्र शस्यते ।
श्वेतं रक्तं तथा पीतं कृष्णं चन्दनमुच्यते ॥
एतेषां सलिलैः सेकश्चतुर्णां स्यान्महीभुजाम् ।
मल्ली पद्मं च नीलं च तथा कृष्णापराजिता ।
एषां पुष्पाणि केशेषु चतुर्जातिमहीभुजाम् ॥
हीरकं पद्मरागश्च वैदूर्यं नीलमेव च ।
चत्वारो मणयो घेयाश्चतुर्णां सेचनाम्भसि ॥
इत्थं निश्चित्य यः कुर्यान्नृपतिः सेकमात्मनः ।
स चिरायुर्भवेद्भोगी इतोऽन्यस्त्वन्यथाऽऽचरन् ॥

अथ चषकोद्देशः ॥

यत्पानपात्रं भूपानां तज्ज्ञेयं चषकं बुधैः ।
कानकं राजतं चैव स्फाटिकं काचमेव च ॥
वृत्तं स्वराष्टदिक्कोणं चतुर्णां पृथिवीभुजाम् ।
इत्यन्यसंमतं तेषां निर्णयः पाठसंमतः(?) ।
स्वमुष्टिसंमितं रत्नैश्चतुर्वर्णैः समन्वितम् ॥
मौक्तिकं वाऽथ फालं वा सर्वेषामेव युज्यते ।
काष्ठजं धातुजं शैलं जाङ्गलादिमहीभुजाम् ॥
यदन्यत्तोयपानादिपात्रं पृथ्वीभुजां भवेत् ।
एवं तत्रापि नियम इति भोजस्य निश्चयः ॥

अथ प्रसाधनी ॥

प्रसाधनी दिङ्नवनागसप्त-
संख्याभिरुक्ताऽङ्गुलिभिः क्रमेण ।
चतुर्विधानां पृथिवीपतीनां
संपत्तिसौभाग्ययशःसमृद्धिदा ॥
काष्ठजा धातुजा चैव शृङ्गजा च यथाक्रमम् ।
जाङ्गलानूपसामान्यदेशजानां महीभुजाम् ॥
छत्रदण्डवदुन्नेयः काष्ठजाया विनिश्चयः ।
कनकं राजतं ताम्रं पित्तलं सीसकं तथा ॥
लोहं सर्वं च सर्वार्थमादित्यादिदशाभुवाम् (?) ।
राज्ञामेवोपयुज्येत कालकीर्तिप्रसाधनी ॥
मृगाणां महिषाणां च शृङ्गजाता प्रसाधनी ।
गजदन्तसमुद्भूता राज्ञामेवोपयुज्यते ॥

अत्रापि रत्नविन्यासो ज्ञेयश्चामरदण्डवत् ।
गुरुता लघुता चैव तथा घनशलाकता ।
मनोहरत्वमुदितं प्रसाधन्या गुणग्रहः ॥

अथ वितानलक्षणम् ॥

वितानोऽष्टविधः प्रोक्तस्तेषां लक्षणमुच्यते ।
आयामपरिणाहाभ्यामष्टहस्तमितो हि सः (? यः) ॥

वितानो मङ्गलो नाम मङ्गलाय महीभुजाम् ।
आयामो दशहस्तेन परिणाहेऽष्टहस्तकः ॥

वितानो विजयो नाम भर्तुः सर्वार्थसाधकः ।
आयामे द्वादशभुजः प्रसरे दशहस्तकः ।
वितानें अपि ... ... यथाक्रमम् ।*
सामान्यामात्यभूपालचक्रवर्तिषु योजयेत् ।
शुक्लवर्णा च सर्वेषां सर्वत्रैवोपयुज्यते ॥
विशीर्णता कोमलता उच्चता समता तथा ।
स्वच्छता चेति कथितं शय्यानां गुणपञ्चकम् ॥
इत्थं विमृश्य स्वपिति शय्यायां यो महीपतिः ।
स चिरं सुखमाप्नोति दुःखं तु विपरीतकम् (? तः) ॥

वितानतुल्यो व्यजनस्य वर्णः
प्रमाणमेवापरमत्र गद्यते ।
हीने भवेदेष वितस्तिसंमितो
भवेच्चतुर्णां व्यजनं शुभाय ॥

पक्षवस्त्रशलाकोत्थं त्रिविधानां भवेदिति ।
दर्पणः स्वर्णरजतत्रपुलौहसमुद्भवः ॥
वितस्तिसंमितो भव्यो रसाढ्यः सुखवर्धनः ।
भव्यः सुखो जयः क्षेमश्चतुरङ्गुलिवर्धनात् ॥
चतुर्विधानां भूपानां चतुरङ्गप्रसाधनः ।
आयामपरिणाहाभ्यां चतुरङ्गुलिसंमितः ॥
सर्वेषामुपयुज्येत विजयो नाम दर्पणः ।
पौरुषं पौरुषार्धं च तदर्धं च यथाक्रमम् ॥

* अतः परं वितानविषयकः शय्याविषयकश्च ग्रन्थभाग-स्त्रुटितः ।

चक्रवर्त्यन्यभूदेवसामान्यानां प्रदर्शिताः ।
ऊर्ध्वविस्तृतमानं तु(? दोर्मानं) पौरुषं मान-मुच्यते ॥

अष्टलोहसमुद्भूतः सर्वेषामुपयुज्यते ।
य उक्तो दर्पणः सर्वस्त्रैविध्यं नो(? ध्येनो)प-युज्यते ॥

दैवात्कालविशेषाद्वा दैवमानुषराक्षसाः ।
दैवे सुमानोद्भवनं सुखादिकमिहेष्यते ॥

मानुषे सहसंमानं(? नः) सुखादिरुपलभ्यते ।
दैवे सर्वार्थसंसिद्धिर्मानुषे सुखसंपदः ॥

राक्षसे विपदः सर्वास्त्रयाणां हि गुणत्रयम् ।
देवाराधनतो दैवं विलासे मानुषं मतम् ॥

सङ्ग्रामे राक्षसं पश्येदिति भोजस्य संमतम् ।
वस्त्रं चतुर्विधं प्रोक्तं श्वेतं रक्तं तथैव च ॥

पीतं कृष्णमिति ब्रह्मक्षत्रविट्शूद्रजन्मनाम् ।
श्वेतं वाऽप्यथवा चित्रं सर्वेषां तु प्रशस्यते ॥

भोजस्तु जाङ्गलादीनां त्रिविधं वस्त्रमुक्तवान् ।
कौषेयमथ कार्पासं वार्क्षं सुखसमृद्धये ॥

वेतना (?) गुरुता चैव कौषेयस्य गुणग्रहः ।
लघुता गुरुता चैव वार्क्षस्य गुणसंग्रहः ॥

लोमजं वसनं भव्यं सर्वेषामुपपद्यते ।
अशीतता चालघुता लोमजस्य गुणग्रहः ॥

अथैषां निर्णयः—

कृमिकोषसमुद्भूतं कौषेयमिति गद्यते ।
ब्रह्मक्षत्रियविट्शूद्राः कृमयस्तु चतुर्विधाः ।
सूक्ष्मासूक्ष्मौ मृदुस्थूलौ तन्तवस्तु यथाक्रमम् ॥

ये जन्तवो दक्षिणपूर्वसिन्धु-
कच्छे वने वा प्रसवन्ति सूक्ष्माः ।
शुक्लातिशुक्लं प्रसवन्ति तन्तुं
ते ब्राह्मणाः पुण्यतमाः प्रदिष्टाः ॥ *

* अतः परं क्षत्रियकृमिविषयकं वचनं नोपलभ्यते ।

ये जन्तवः पश्चिमसिन्धुकच्छे
वनेऽथवाऽनूपमहीप्रदेशे ।
आपीतशुक्लं प्रसवन्ति तन्तुं
तेऽमी विशः पुण्यतमाः प्रदिष्टाः ॥
ये जन्तवः सर्वसमुद्रकच्छे
वनेऽथ साधारणभूप्रदेशे ।
नानाऽऽकृतिं ते प्रसवन्ति तन्तुं
गुरुं गरिष्ठाकृतयो हि शूद्राः ॥

ब्रह्मक्षत्रियविट्शूद्रसंज्ञकानि यथाक्रमम् ।
वस्त्राणि तेभ्यो जायन्ते यथापूर्वं शिवानि च ॥
एकजातिभवं वस्त्रमुत्तमं संप्रचक्षते ।
द्विजातिसंभवं मध्यं त्रैजातमधमं विदुः ॥
चतुर्जातं हि कौषेयं कदाचिदपि नाऽऽचरेत् ।
चत्वारि तेषां नश्यन्ति आयुः कीर्तिः कुलं बलम् ॥
नानावर्णाकृतिं त्वेषां शिल्पिनः कथयन्ति हि ।
बहुकार्पाससूत्रोक्तं(? त्रोतं) कार्पासमिति गद्यते ॥
रूपसौक्ष्म्यादिभेदेन तस्यानेकविधो(? धा) भवेत् ।
तत्सर्वं सर्वयोग्यं हि सर्वेषामिति संमतम् ॥
वृक्षत्वक्संभवं वार्क्षं तज्ज्ञेयं द्विविधं पुनः ।
जाङ्गलानूपसामान्यो देशो यो हि त्रिधोदितः ॥
तत्र पुण्यप्रदेशे तु ये पुण्या अपि पादपाः ।
तस्य त्वक्संभवं वस्त्रं त्रिविधानां महीभुजाम् ॥
ते वृक्षवृक्षजात्यादिभेदा ज्ञेयाश्चतुर्विधाः ।
छलनी(? छल्ली) चतुर्विधा तेषां तनुः स्थूला मृदुः खरा ॥
चतुर्विधानां भूपानां क्रमतः संप्रकाशिताः ।
अत्रापि नानाकृतिता ज्ञेयाः शिल्पिविनिर्मिताः ॥
जन्तुलोमोद्भवं वस्त्रं लोमजं नाम कीर्त्यते ।
मृगादयस्तु ते ब्रह्मक्षत्रविट्शूद्रसंज्ञकाः ॥

सूक्ष्मरोमा सुखस्पर्शः कोमलाङ्गस्तु यो भवेत् ।
ब्रह्मजातिरयं जन्तुरस्य वस्त्रं गुणोत्तरम् ॥
स्थूलरोमा मृदुस्पर्शः क्षत्रियः सोऽपि निर्भयः । *
सूक्ष्मरोमा खरस्पर्शः शूद्रसंज्ञः सुखच्छिदः ॥
यथापूर्वं गुणयुताश्चिरसंस्थानसंस्थिताः ।
ब्राह्मणो मलये मेरौ हिमाद्रावपि जायते ॥
क्षत्रियः पश्चिमे देशे वैश्यः पूर्वदिशि स्थितः ।
शूद्रः सर्वत्र जायेत प्रायशो वा युगक्रमात् ॥
एकजातिभवं भद्रं द्वैजातं सुखसंपदे ।
त्रिचतुर्जातिसंभूतं लोमजं न सुखावहम् ॥
इत्थं निश्चित्य यो वस्त्रं परिधातुर्महीपतेः (? धत्ते महीपतिः) ।
तस्याऽऽयुश्च कुलं वीर्यं वैपरीत्यमतोऽन्यथा ॥

अथालंकारयुक्तिः ॥

तद्धारणदिनमुच्यते—

रेवत्यश्विधनिष्ठासु हस्तादिष्वपि पञ्चसु ।
गुरुशुक्रबुधस्याह्नि वस्त्रालंकारधारणम् ॥
अनिष्टेष्वपि निर्दिष्टं वस्त्रालङ्कारधारणम् ।
उद्वाहे राजसंमाने ब्राह्मणानां च संमते ॥
शिरस्त्रं मुकुटं हारः कुण्डलं चाङ्गदं तथा ।
कङ्कणं बालकं चैव मेखलाऽष्टाविति क्रमात् ॥
प्रधानभूषणान्येषु यथासंख्यानि निश्चयः ।
पद्मरागश्च वज्रं च विजयो गोविदस्तथा ॥
मुक्ता वैदूर्यनीलं च तथा मरकतं क्रमात् ।
आदित्यादिदशाजानां सर्वसंपत्तिदायकाः ॥
सुवर्णेनापि घटना सर्वेषामुपयुज्यते ।
प्रधानभूषणेष्वेवमप्रधाने न निर्णयः ॥
प्रधानभूषणं प्रायः शिरसो ह्यभिधीयते ।
तस्य प्रधानभूतत्वादित्याह भृगुनन्दनः ॥

---

* अतः परं विड्जन्तुविषयकं वचनमत्र नोपलभ्यते ।

सुखदा मणयः शुद्धा दुःखदा दोषशालिनः ॥
इत्यलंकारधृतिनियमः ॥

राज्ञः चतुष्पदद्विपदनिष्पदयानलक्षणानि

अथ चतुष्पदयानोद्देशः ॥

[1]ये ब्रह्मजात्यादिविभेदतोऽमी
मया निरुक्ता इह वाजिमुख्याः ।
दिशाऽनया सर्वचतुष्पदानां
भेदो विधेयो विदुषाऽऽदरेण ॥
यथा यथाऽश्वादिकपोषणेन
यानेन वा दोषगुणौ भवेताम् ।
तथा तथैवान्यचतुष्पदानां
प्रकीर्तितौ दोषगुणौ बुधेन ॥
वरमयानमपोषणमेव वा
वरमिवान्यशरीरमपोषणम् ।
न खलु दोषयुतं चतुष्पदं
स्पृशति पश्यति शोभनचेतनः ॥
सुराबिन्दुर्दूषयति पयोघटशतं यथा ।
तथा सर्वं दूषयति दोषदुष्टश्चतुष्पदः ॥

अथ द्विपदयानोद्देशः ॥

मानुषैः पक्षिभिर्वाऽपि तथाऽन्यैर्द्विपदैरपि ।
यानं स्याद् द्विपदं नाम तस्य भेदो ह्यनेकधा ॥
हंसैर्मयूरैः कङ्कालैरन्यैर्वाऽपि विशेषतः ।
सामान्यं च विशेषश्च तस्य भेदो द्विधा भवेत् ॥

तत्र सामान्यं यथा—

यानं यद् द्विपदाभ्यां सत्तद्दोलादिकमुच्यते ।
चतुर्भिर्युक्तिसंयुक्तैर्दण्डधातुगुणाम्बरैः ।
दोलेति कथ्यते तेषां नियमोऽयं प्रदर्श्यते ॥

तत्र समयः—

उपेन्द्रमूलाहिशिवाग्निवर्ज
शस्तेन्दुताराततिथियोगलग्ने ।
विष्टिक्षमापुत्रयमाहवर्जे
दोलादिकारोहणमाद्यमिष्टम् ॥

दण्डकाष्ठस्य नियमे नियमश्छत्रदण्डवत् ।
कनकं रजतं ताम्रं लौहं धातुचतुष्टयम् ॥
चतुर्विधानामुद्दिष्टं ब्रह्मादीनां यथाक्रमम् ।
सुराणामसुराणां च चातुर्वर्ण्यमुदाहृतम् ॥
त्रिहस्तसंमितो( ? ता ) मध्ये तदर्धं पार्श्वयो-
र्द्वयोः ।
विजया नाम दोलेयं विजयाय महीक्षिताम् ॥
विजया मङ्गला क्रूरा शिवा क्लेशा शुभा
क्रमात् ।
वितस्त्येकैकसंवृद्धया दोलाः षट् स्युः
सुखाप्रदाः ॥
कुम्भश्च पद्मकोषश्च शङ्खः पर्वत एव च ।
चतुर्विधानां दोलासु कल्याणाय चतुष्टयम् ॥
हंसः केकी शुको भृङ्गश्चतुष्टयमिदं क्रमात् ।
कुम्भाद्यग्रे निधातव्यं चतुर्विधमहीक्षिताम् ।
अत्रापि वर्त्मविन्यासो( ? ) विज्ञेयो नवदण्ड-
वत् ॥

भोजस्तु—

गजः प्रस्थानदोलायां रणदोलासु केशरी ।
मृगो भ्रमणदोलायां क्रीडादोलासु षट्पदः ॥
भुजङ्गमः शत्रुराज्ये वृषभो दानकर्मणि ।
दोलोपरि परिन्यस्यो बहुभिर्मुनिशासनम् ॥
यद्वक्रदण्डं यानं स्यात्तत्पर्यङ्कमिति स्मृतम् ।
त्रिहस्तसंमितो यानस्तदर्धपरिणाहवान् ॥
पर्यङ्कः क्षेमनामाऽयं भर्तुः सर्वार्थसाधकः ।
क्षेमो मृत्युर्जयो दुःखश्चत्वारस्ते यथाक्रमम् ॥
वितस्त्येकैकसंवृद्धया यथा चाणुर्न सङ्गिनः
( ? ) ।
मणिधातुगुणादीनां नियमः पूर्ववन्मतः ॥
विशेषमथ वक्ष्यामि पर्यङ्कस्य यथाक्रमम् ।
शुक्तिश्च गजदन्तश्च मृगशृङ्गं तथैव च ॥
अनूपादिकजातानां पर्यङ्केषु न्यसेत्क्रमात् ।
पद्मशङ्खगजाश्वालिहंसकोकशुकान् क्रमात् ॥

---

(१) युक. २१५–२२९।१८१३–१९३१.

आदित्यादिदशाजानां मणिरूपेण विन्यसेत् ।
महीन्द्राणां विशेषेण सिंहमा( ? वा )नेव शस्यते ॥

निर्माणे शुक्तिदण्डाश्च राज्यभोगसुखप्रदाः ।
तदेवावक्रदण्डं तु खट्वायानमिति स्मृतम् ॥
अस्यापि पूर्ववन्मानमणिधात्वादिनिर्णयः ।
विशेषश्चरणोच्छ्रायः परिणाहार्धसंमितः ।
तदेव चेन्निश्चरणं पीठयानमिति स्मृतम् ॥
तस्य भेदो द्विधा दण्डवक्रावक्रप्र( ? त्व )भेदतः ।
मानादिकं पूर्वतुल्यं विशेषाच्चतुरस्रता ॥
एवमन्यानि मिश्राणि यानानि विविधानि च ।
सामान्याख्यानि जानीयाच्छिल्पिभिर्निर्मितानि वै ॥

मनोहरत्वं लघुता दृढतेति गुणत्रयम् ।
प्रोक्तं द्विपदयानानां सहजं भोजभूभुजा ॥

अथ विशेषद्विपदयानकथनम् ॥

राज्ञो यद् द्विपदं यानं विशेषाख्यमलं(?) विदुः ॥

तद्यथा—

चतुर्भिरुह्यते यत्तु चतुर्दोलं तदुच्यते ॥

भोजस्तु—

चतुर्भिर्वाहकैर्दण्डैः षड्भिः कुम्भैः सुसंस्थितैः ।
स्तम्भैरष्टाभिरुदितं चतुर्दोलमनुत्तमम् ॥
तद्भेदा जयकल्याणवीरसिंहा यथाक्रमम् ।
चतुर्विधानां भूपानां चतुर्दोलाः प्रकाशिताः ॥
त्रिहस्तसंमितायामो द्विहस्तपरिणाहवान् ।
हस्तद्वयोन्नतः प्रोक्तश्चतुर्दोलो जयाख्यया ॥
चतुर्हस्तायतो यस्तु सार्धद्वन्द्वस्तदन्यथा ।
चतुर्दोलः समाख्यातः कल्याणस्तावदुन्नतः ॥
पञ्चहस्तायतो यस्तु त्रिहस्तपरिणाहवान् ।
तावदेवोन्नतो वीरश्चतुर्दोल उदाहृतः ॥
आयामपरिणाहाभ्यां चतुर्हस्तमितो हि यः ।
चतुर्दोलो ह्ययं सिंहस्तदर्धेनोन्नतः शुभः ॥

सर्वोऽथ द्विविधः प्रोक्तः सच्छदिश्चापि निश्छदिः ।
आद्यः समरवर्षासु परः केलिघनात्यये ॥
सर्वेषामेव काष्ठानां दण्डः स्याद्वज्रवारणः ।
चन्दनेनैव घटना सर्वेषामुपयुज्यते ॥
लोमजं सर्ववस्त्रेषु कनकं सर्वधातुषु ।
कुम्भश्च पद्मकोषश्च गिरिश्चेति यथाक्रमम् ॥
त्रैदेशानां महीन्द्राणां चतुर्दोलेषु विन्यसेत् ।
दर्पणं चार्धचन्द्रश्च हंसः केकी शुको गजः ।
अश्वः सिंहश्च तस्याग्रे आदित्यादिदशो-त्तरान् ( ? ) ॥

मणिनियमस्तु दण्डवत् ॥

रक्तः शुक्लश्च पीतश्च कृष्णश्चित्रस्तथाऽरुणः ।
नीलः कपिल इत्युक्तः पताकानां तु संग्रहः ।
चतुर्दोलः सपताकः शुभयानमिति स्मृतः ॥
मुक्तास्तबकैर्दशभिर्युक्तः स्याद्राजकेशानाम् ।
चामरदण्डैर्दशभिर्दिग्जयिनां चतुर्दोलः ॥
चासपक्षस्य पुच्छं चेत् सर्वोपरि परिन्यसेत् ।
यात्रासिद्धिरयं नाम्ना चतुर्दोलो महीभुजाम् ॥

अथ निश्छदिः ॥

स्तम्भच्छादरहितो निश्छदिरुक्तश्चतुर्दोलः ॥

मानं पूर्ववत् ॥

स पुनर्द्विविधः प्रोक्तः सध्वजश्चाथ निर्ध्वजः ।
ध्वजान् षडत्र न्यस्यन्ति षड्वर्गविजयैषिणः ॥
तेषां मानं तु चत्वारः स्वामिहस्तैकसंमिताः ।
कोणेषु पश्चादग्रे च हस्तद्वयमितौ ध्वजौ ॥
सुवर्णं रजतं युग्मं त्रिविधानां महीभुजाम् ।
मणिचामरकुम्भानां खड्गादीनां विनिश्चयः ॥
चतुर्दोलध्वजे राज्ञां विज्ञेयो नवदण्डवत् ।
निर्ध्वजे च चतुर्दोले मानमन्यतमं शृणु ॥
आयामपरिणाहाभ्यां चतुर्हस्तमितो हि यः ।
विजयो नाम विज्ञातश्चतुर्दोलो महीभुजाम् ॥
विजयो मङ्गलो भव्यो वितस्त्यैकैकवृद्धितः ।
त्रिविधानां महीन्द्राणां यानत्रयमुदाहृतम् ॥

अष्टाभिरुह्यते यस्तु अष्टदोलमुशन्ति तम् ।
सोपानद्वितयं चात्र विज्ञेयं शिल्पिनिर्मितम् ॥

भोजस्तु–

अष्टाभिर्वाहकैर्दण्डैः षड्भिस्तु दशभिर्घटैः ।
स्तम्भैस्तु दशभिर्ज्ञेयमष्टदोलं महीभुजाम् ॥
तद्भेदा जयकल्याणवीरसिंहा यथाक्रमम् ।
चतुर्विधानां भूपानामष्टदोलाः प्रकाशिताः ॥
षड्भिर्हस्तैर्मितायामः परिणाहश्चतुर्भुजः ।
चतुर्हस्तोन्नतो राज्ञामष्टदोलं जयं विदुः ॥
आयामपरिणाहाभ्यां पञ्चहस्तमितो हि यः ।
कल्याणाख्योऽष्टदोलोऽयं चतुर्हस्तमितोन्नतिः॥
सप्तहस्तायतः कार्ये प्रवरे(? र्यः प्रसरे) पञ्चहस्तकः ।
पञ्चहस्तोन्नतो वीरश्चाष्टदोलो महीभुजाम् ॥
आयामपरिणाहाभ्यामष्टहस्तमितो हि यः ।
सिंहनामाऽष्टदोलोऽयं विज्ञेयः षड्भुजोन्नतः ॥
सर्वोऽथ द्विविधः प्रोक्तः सच्छदिश्चापि निश्छदिः ।
काष्ठवस्त्रघटादीनां मणीनां चामरस्य च ॥
चतुर्दोलवदुन्नेयो नियमोऽन्योऽपि सूरिभिः ।
पूर्ववन्निश्छदेर्मानं ध्वजमानमिहोच्यते ॥
दशध्वजास्तेषु चाष्टौ स्वामिहस्तद्वयोन्नताः ।
पश्चादग्रे ध्वजौ राज्ञश्चतुर्हस्तमितौ मतौ ॥
मणिचामरपक्षाणां निर्णयो निष्पताकवत् ।
निर्ध्वजश्चाष्टदोलो यः शिबिकेति स गद्यते ।
मणिकुम्भमुखादीनां नियमो नवदण्डवत् ॥

इत्यष्टदोलकथनम् ॥

एवं द्वादशषोडशविंशतिदोलादिकाः कार्याः ।
मानं सार्धद्विगुणितं सार्धत्रिगुणितं युक्तमेतेषाम् ।
विंशतिदोलात्परतो भोजमते सम्भवेद्यानम् ।
यानं बहनुयोज्यं बहुगुणमेतज्जगाद वै व्यासः ॥

भविष्योत्तरेऽपि–

यदुक्तं द्विपदं यानं तेन मानेन यो नृपः ।
स्वयानं कुरुते दिव्यं स चिरं सुखमश्नुते ॥
स्वयोगयुक्तयानस्थो भोगमाप्नोति मानवः ।
परयौगिकयानस्थः क्लेशमाप्नोति पुष्कलम् ॥
यो दम्भादथवाऽज्ञानाद्यानं प्रकुरुतेऽन्यथा ।
तस्यैतानि विनश्यन्ति आयुर्विद्या यशो धनम् ॥
प्रधानं यानमाश्रित्य नियमोऽयं समाश्रितः ।
नाप्रधाने निर्णयोऽस्ति तल्लिङ्गं तु मनोज्ञता ॥

इति यानयुक्तौ द्विपदयानोद्देशः ॥

अथ निष्पदयानोद्देशः ॥

नौकाद्यं निष्पदं यानं तस्य लक्षणमुच्यते ।
अश्वादिकं तु यद्यानं स्थले सर्वं प्रतिष्ठितम् ।
जले नौकैव यानं स्यादतस्तां यत्नतो वदेत् ॥

अथ कालः–

सुवारवेलातिथिचन्द्रयोगे
चरे विलग्ने मकरादिषट्के ।
ऋक्षेऽन्त्यसप्तव्यतिरेकतोऽन्ये
वदन्ति नौकाघटनादिकर्म ॥
अश्विखरांशुसुधानिधिपूर्वा-
मित्रधनाच्युतभे शुभलग्ने ।
तारकयोगतिथीन्दुविशुद्धौ
नौगमनं शुभदं शुभवारे ॥
वृक्षायुर्वेदगदिता वृक्षजातिश्चतुर्विधा ।
समासेनैव गदितं तेषां काष्ठं चतुर्विधम् ॥

तद्यथा–

लघु यत्कोमलं काष्ठं सुघटं ब्रह्मजाति तत् ।
दृढाङ्गं लघु यत्काष्ठमघटं क्षत्रजाति तत् ॥
कोमलं गुरु यत्काष्ठं वैश्यजाति तदुच्यते ।
दृढाङ्गं गुरु यत्काष्ठं शूद्रजाति तदुच्यते ।
लक्षणद्वययोगेन द्विजातिः काष्ठसंग्रहः ॥
क्षत्रियकाष्ठैर्घटिता
भोजमते सुखसंपदं नौका ।
अन्ये लघुभिः सुदृढै-
र्विदधति जलदुष्पदे नौकाम् ॥

विभिन्नजातिद्वयकाष्ठजाता
न श्रेयसे नापि सुखाय नौका ।
नैषा चिरं तिष्ठति पच्यते च
विभिद्यते वारिणि मज्जते च ॥
न सिन्धुगा ह्यर्हति लौहबन्धं
तल्लौहकान्तैर्ह्रियते हि लौहम् ।
विपद्यते तेन जलेषु नौका
गुणेन बन्धं निजगाद भोजः ॥

अथ लक्षणानि ॥

सामान्यं च विशेषश्च नौकाया लक्षणद्वयम् ॥

तत्र सामान्यम्–

राजहस्तमितायामा तत्पादपरिणाहिनी ।
तावदेवोन्नता नौका क्षुद्रेति गदिता बुधैः ॥
अतः सार्धमितायामा तदर्धपरिणाहिनी ।
त्रिभागेणोत्थिता नौका मध्यमेति प्रचक्षते ॥
क्षुद्राऽथ मध्यमा भीमा चपला पटलाऽभया ।
दीर्घा पत्रपुटा चैव गर्भरा मन्थरा तथा ॥
नौकादशकमित्युक्तं राजहस्तैरनुक्रमम् ।
एकैकवृद्धैः सार्धैश्च विजानीयाद् द्वयं द्वयम् ॥
उन्नतिश्च प्रवीणा च( ? तिः परिणाहश्च )
हस्तादर्धांशसंमिता ।
अत्र भीमाऽभया चैव गर्भरा चाशुभप्रदा ॥
मन्थरापरतो यास्तु तासामेवाम्बुधौ गतिः ।
तासां गुणस्तु संक्षेपाद् दृढता च प्रकीर्णता ॥

अथ विशेषः–

लोहताम्रादिपत्रेण कान्तलोहेन वा तथा ।
दीर्घा चैवोन्नता चेति विशेषे द्विविधा भिदा ॥

तत्र दीर्घा यथा–

राजहस्तद्वयायामा अष्टांशपरिणाहिनी ।
नौकेयं दीर्घिका नाम दशाङ्गेनोन्नताऽपि च ॥
दीर्घिका तरणिर्लोला गत्वरा गामिनी तरिः ।
जङ्घाला प्लाविनी चैव धारिणी वेगिनी तथा ।
राजहस्तैकैकवृद्ध्या नौकानामानि वै दश ॥
उन्नतिः परिणाहश्च दशाष्टांशमितौ क्रमात् ॥
अत्र लोला गामिनी च प्लाविनी दुःखदा भवेत् ।
लोलाया मानमारभ्य यावद्भवति गत्वरा ॥
लोलायाः फलमाधत्ते एवं सर्वासु निर्णयः ।
वेगिन्याः परतो या तु सा शिवायोत्तरा यथा ॥

भोजोऽपि–

नौकादीर्घे यथेच्छं स्यात्तत्रैतानि विवर्जयेत् ।
हस्तसंख्या परित्याज्या वसुवेदग्रहोत्तरे ॥
षष्ट्युत्तरमिता नौका कुलं हन्ति बलं धनम् ।
नवतेरुत्तरे याऽपि या चत्वारिंशतेः परा ॥
एतेन चत्वारिंशत्षष्टिनवतिसंख्या तत्परतो-
ऽपि यावदपरदशकं तावदेव तत्फलमिति ॥

इति दीर्घा ॥

अथोन्नता ॥

राजहस्तद्वयमिता तावत्प्रसरणोन्नता ।
इयमूर्ध्वाभिधा नौका क्षेमाय पृथिवीभुजाम् ॥
ऊर्ध्वाऽनूर्ध्वा स्वर्णमुखी गर्भिणी मन्थरा तथा ।
राजहस्तैकैकवृद्ध्या नाम पञ्चत्रयं( ? नाम-
पञ्चतयं ) भवेत् ॥
अत्रानूर्ध्वा गर्भिणी च निन्दितं नामयुग्मकम् ।
मन्थरायाः परा यास्तु ताः शुभाय यथोद्भवम् ॥

भोजोऽपि–

बाणाग्न्युत्तरतो मानं नौकानामशुभं वहेत् ।
पञ्चाशदूर्ध्वादुल्लासं धननाशं त्रयो( ? ततो )-
ऽर्धतः ॥

इत्युन्नता ॥

धात्वादीनामतो वक्ष्ये निर्णयं तरिसंश्रयम् ।
कनकं रजतं ताम्रं त्रितयं वा यथाक्रमम् ॥
ब्रह्मादिभिः परिन्यस्य नौकाचित्रणकर्मणि ।
चतुःशृङ्गा त्रिशृङ्गाभा द्विशृङ्गा चैकशृङ्गिणी ॥
सितरक्तापीतनीलवर्णान् दद्याद्यथाक्रमम् ।
केसरी महिषो नागो द्विरदो व्याघ्र एव च ॥

पक्षी भेको मनुष्यश्च एतेषां वदनाष्टकम् ।
नावां मुखे परिन्यस्य(? स्येद्) आदित्यादि-
दशाभुवाम् ॥
कलसो दर्पणश्चन्द्रस्तैर्दशानां महीभुजाम् ।
हंसः केकी शुकः सिंहो गजोऽहिर्व्याघ्र-
षट्पदौ ॥
आदित्यादिदशाजातनौकोपरि परिन्यसेत् ।
चतुस्त्रित्वे(? द्वे)कविमिता चतुर्वर्णा
यथाक्रमम् ॥
आच्छादनं चतुष्पाते कमला नाम कथ्यते ।
तत्संख्याशतपादे मे तदर्धार्धमिवापरात् ॥
शुक्लरक्तोऽथ चित्रश्च पीतः कृष्णस्त्रिभिस्त्रिभिः ।
अवश्वासिकसंज्ञानां वस्त्रवर्णाष्टकं विदुः ॥
नौकासु मणिविन्यासो विज्ञेयो नवदण्डवत् ॥
मुक्तास्तवकैर्युक्ता नौका स्यात्सर्वतोभद्रा ।
तत्संख्या चेदथ रसवेदद्वयसंमिता क्रमशः ॥
कनकादीनां माला जयमालेति गद्यते सद्भिः ।
ब्रह्मक्षत्रे द्वितये एकैके वैश्यशूद्रयोनी ॥
निर्गृहं सगृहं वाऽथ तत्सर्वं द्विविधं भवेत् ॥
निर्गृहं पूर्वमुद्दिष्टं सगृहाणि यथा शृणु ।
सगृहा त्रिविधा प्रोक्ता सर्वमध्याग्रमन्दिरा ॥
सर्वतो मन्दिरं यत्र सा ज्ञेया सर्वमन्दिरा ।
राज्ञां कोशाश्वनारीणां यानमत्र प्रशस्यते ॥
मध्यतो मन्दिरं यत्र सा ज्ञेया मध्यमन्दिरा ।
राज्ञां विलासयात्रादि वर्षासु च प्रशस्यते ॥
अग्रतो मन्दिरं यत्र सा ज्ञेया त्वग्रमन्दिरा ।
चिरप्रवासयात्रायां रणे काले घनात्यये ॥
मन्दिरमानं नौकाप्रसरत एवार्धभागतो
न्यूनम् ॥

भोजस्तु—

दीर्घवृत्तवसुषड्दिवाकरा-
नेकदिङ्नवमिता यथाक्रमम् ।
राजपञ्चभुजसंमितोन्नति-
र्मन्दिरे तरिगते महीभुजाम् ।
भास्करादिकदशाभुवां पुन-
र्धातुनिर्णयनमत्र पूर्ववत् ॥

पताकाकलसादीनां निर्णयो नवदण्डवत् ॥
काष्ठजं धातुजं चेति मन्दिरं द्विविधं भवेत् ।
काष्ठजं सुखसंपत्त्यै विलासे धातुजं मतम् ॥
अत्र शय्यासनादीनां मन्थरोल्लोचयोरपि ।
अन्येषां चैव मुनिभिर्निर्णयः पूर्ववन्मतः ॥
दिङ्मात्रमिदमुद्दिष्टं नौकालक्षणमग्रजम् ।
प्रधानेष्वेव नियमो अप्रधाने न निर्णयः ॥
लघुता दृढता चैव गामिताऽच्छिद्रता तथा ।
समतेति गुणोद्देशो नौकानां संप्रकाशितः ॥
एवं विचिन्त्य यो राजा नौकायानं करोति च ।
स चिरं सुखमाप्नोति विजयं समरे श्रियम् ॥
योऽज्ञानादन्यथा यानं नौकानां कुरुते नृपः ।
तस्यैतानि विनश्यन्ति यशो वीर्यं बलं धनम् ॥

———०———

# राज्ञो धार्मिककृत्यानि

## *राज्ञो विविधानि कर्माणि

### ¶ आथर्वणपरिशिष्टम्

राज्ञः उपकरणानां स्वस्त्ययनम्

[1]अथ पुरोहितकर्माणि । राज्ञः प्रातरुत्थितस्य कृतस्वस्त्ययनस्य । अथ पुरोहितः स्नातानुलिप्तः शुचिः शुक्लवासाः सोष्णीषः 'सविता प्रसवानाम्' इति व्याख्यातम् । 'इममिन्द्र वर्धय' इत्युक्तम् । 'परिधत्त' इति द्वाभ्यां राज्ञो वस्त्रमभिमन्त्र्य प्रयच्छेत् । 'यदाबध्नन्' इत्यलंकारान् । 'सिंहे व्याघ्रे' इति सिंहासनम् । 'यस्ते गन्धः' इति गन्धान् । 'एहि जीवं त्रायमाणम्' इत्यक्षिणी अङ्क्ते । 'वातरंहाः' इत्यश्वम् । 'हस्तिवर्चसम्' इति हस्तिनम् । 'यत्ते माता यत्ते पिता' इति नरयानम् । 'खड्गं चाभिमन्त्रयामि' इति खड्गम् ।

'खड्गं चाभिमन्त्रयामि यः शत्रून्मर्दयिष्यति ।
मर्दिताः शत्रवोऽनेन वशमायान्तु ते सदा ॥' इति ॥

पर्यङ्कमासनं खड्गं ध्वजं छत्रं सचामरम् ।
रथमश्वगजं श्रेष्ठं धनुर्वर्म शरेषुधिम् ॥
आञ्जनं गन्धमाल्यानि वस्त्राण्याभरणानि च ।
सर्वाञ्छान्त्युदकेनैतानभ्युक्षेच्चाभिमन्त्रयेत् ॥

दूर्वादीन्मूर्ध्नि निक्षिप्य स्वस्त्ययनैरभिमन्त्रयेत् । 'अभयं द्यावापृथिवी' इत्यभिमन्त्रितो ब्राह्मणान् प्रणिपत्य प्राक् । 'युष्मत्प्रसादाच्छान्तिमधिगच्छामि' इति । 'तथाऽस्तु' इत्युक्तो निर्गच्छेदिति । एवं कृतस्वस्त्ययनो यदेवावलोकयति तत्सिध्यति ।

तदपि श्लोकाः—

असुरैः पीडयमानस्तु पुरा शक्रो जगत्प्रभुः ।
कारयामास विधिवत्पुरोधस्त्वे बृहस्पतिम् ॥

स वृतो भयभीतेन शमनार्थं बुभूषता ।
मङ्गलानि ससर्जाष्टावभयार्थं शतक्रतोः ॥

प्रोक्तानि मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
भूमिः सिद्धार्थकाः सर्पिः शमी व्रीहियवौ तथा ॥

एतानि सततं पुण्यानि संपश्यन्नर्चयन्नपि ।
न प्राप्नोत्यापदं राजा श्रियं प्राप्नोत्यनुत्तमाम् ॥

प्रतिदिनं कर्तव्यानि सुवर्णधेनुतिलभूम्यन्नदानानि

अथ राजकर्माणि । विश्वावसौ मुहूर्ते स्नातोऽभिषेकमन्त्रैरभिमन्त्रितोऽनुलेपनैरनुलिप्तः पूर्वोक्तेन विधिना वस्त्रालंकारादिभिः सुवर्णनिष्कं कृष्णलं वा वामहस्तेन संगृह्य 'यद् दुःकृतं यच्छबलं सर्वं पाप्मानं दहतु' इत्यनेन मन्त्रेण सुवर्णं शरीरे निघृष्य दक्षिणेन हस्तेन विप्राय दद्यात् । धेनुं चारोगाम् । अपरिमितगुणान् तिलान् सौवर्णमये ताम्रमये वा पात्रे स्थापयित्वा 'यदज्ञानात्' इत्यभिमन्त्र्य विप्राय दद्यात् ॥

---

* अग्रिमेष्ववान्तरप्रकरणेषु यानि राज्ञो धार्मिककृत्यानि संगृहीतानि तदतिरिक्तानि सर्वाणि धार्मिककृत्यानि प्रथमेऽस्मिन्प्रकरणे संगृहीतानि ।

¶ आथर्वणपरिशिष्टपुस्तकमस्माभिरचिरादेवोपलब्धम् । राजनीतिप्रकाशेन क्वचित्परिशिष्टमुद्धृतम् । तच्च क्वचिदशुद्धतरम् । तस्याशुद्धांशभूताः पाठभेदा अस्माभिरत्र न निर्दिष्टाः, शुद्धा एव तु निर्दिष्टाः । क्वचित् परिशिष्टपुस्तकपाठात् प्रकाशपाठः साधीयान् । तत्र प्रकाशपाठं स्वीकृत्य परिशिष्टपुस्तकपाठो निर्दिष्टः ।

(१) आप. ४।१–६.

'यदज्ञानात्तथा ज्ञानाद्यन्मया शबलं कृतम्।
तत्सर्वं तिलदानेन दह्यतामिति हि प्रभो ॥'
भूमिश्च सस्यसंपन्ना ब्राह्मणे वेदपारगे।
यथाशक्ति प्रदेया हि बृहस्पतिवचो यथा ॥
स भुक्त्वा विविधान्भोगान्सप्तसागरमेखलाम्।
पृथिवीं प्राप्य मोदेत चन्द्रवत्पृथिवीपतिः ॥
अन्नं तु विविधं नित्यं प्रदद्यात्तु द्विजातये।
तूर्यघोषेण संयुक्तः कृतस्वस्त्ययनस्तथा ॥
गृहदेवांस्तु संपूज्य कार्यश्चाप्युत्सवो गृहे।
छत्रादीनि च यानानि पूजयेद्विधिवत्स्वयम् ॥
पुष्पैश्च विविधैः शुभ्रैः फलैश्चाप्यर्चयेद् बुधः।
तस्मात्सर्वाणि सततं दानानि तु महीपतिः।
दत्त्वा श्रद्धान्वितो विप्रैर्वृतो भुञ्जीत वाग्यतः ॥

पिष्टमय्याः रात्रिप्रतिमायाः पूजनं स्तोत्रपाठश्च

अथ पिष्टमयीं रात्रिं चतुर्भिर्दीपकैः सह।
अर्चितां गन्धमाल्येन स्थापयेत्तस्य चाग्रतः ॥
नमस्कृत्वा ततो रात्रिमर्चयित्वा यथाविधि।
धूपेन चान्नपानेन स्तोत्रेण च समर्चयेत् ॥
'पाहि मां सततं देवि सराष्ट्रं ससुहृज्जनम्।
उषसे न प्रयच्छस्व शांतिं च कृणु मे सदा।
ये त्वां प्रपद्यन्ते देवि न तेषां विद्यते भयम् ॥
रात्रिं प्रपद्ये जननीं सर्वभूतनिवेशनीम्।
भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम् ॥
संवेशनीं संयमनीं ग्रहनक्षत्रमालिनीम्।
प्रपन्नोऽहं शिवां रात्रिं भद्रे पारमशीमहि ॥
यां सदा सर्वभूतानि स्थावराणि चराणि च।
सायं प्रातर्नमस्यन्ति सा मां रात्र्यभिरक्षतु ॥'
इति ॥

पैठीनसिनोक्तं नैशमभयं कर्म

* 'आ रात्रि पार्थिवम्, इषिरा योषा, त्रायमाणे'( ? ) इत्यरात्र्याणि। 'ममोभा(?), मह्यमापः' इति सूक्ताभ्यामान्वालभ्य जपेत्। 'यो नः स्वः' इति पञ्चभिः सर्षपाञ्जुहुयात्। 'योऽस्मिन् यस्त्वा मातुः' इति दीपेन नृपस्योपरि त्रिष्परिहृत्य परिष्कृते प्रयच्छेत्। 'अभयम्' इत्यृचा चतस्रः शर्कराः प्रदक्षिणं प्रतिदिशं क्षिपेत्। 'एह्यश्मानमातिष्ठ' इति पञ्चमीमधिष्ठापयेत्। 'न तं यक्ष्मा, ऐतु देवः' इति गुग्गुलुकुष्ठधूपं दद्यात्। 'यस्ते गन्धः, त्र्यायुषम्' इति भूतिं प्रयच्छेत्। 'दूष्या दूषिरसि' इति प्रतिसरमाबध्य 'अग्निर्मा पातु वसुभिः पुरस्तात्' इति शर्करान् प्रदक्षिणं प्रतिदिशं क्षिपेत्। बहिर्निःसृत्योत्तरेण गत्वा बाह्येनोपनिष्क्रम्य सुहृदे कुर्याच्छूद्रघते कुर्यात्। नैशमभयं कर्म मौसलीपुत्रः पैठीनसिः ॥

* अस्य वाक्यद्वयस्य स्थाने सायणभाष्ये "आ रात्रि पार्थिवम्, इषिरा योषा' इति सूक्ताभ्यामन्वारभ्य जपेत्" इति पाठः।

पिष्टमय्या रात्र्याः पूजनं राज्ञो रक्षाविधानं च

अथातो रात्रिसूक्तानां विधिमनुक्रमिष्यामः। शुचिः शुक्लवासाः पुरोहितः पार्थिवस्य पश्चिमां संध्यामुपास्य दर्भैः पवित्रपाणी राजानमभिगम्य पिष्टमयीं रात्रिं कृत्वाऽन्नपानधूपदीपैरर्चयित्वा माल्यैश्च प्रज्वलितैश्चतुर्भिर्दीपकैरर्चयित्वा 'आ रात्रि पार्थिवम्, इषिरा योषा' इति सूक्तद्वयेन रात्रिमुपस्थाय 'त्रायमाणे विश्वजिते, अह्ने च त्वा' इति राजानं प्रदक्षिणं त्रिः कृत्वा राजवेश्मनि द्वारे विसर्जयित्वा 'न तं यक्ष्मा, ऐतु देवः' इति गुग्गुलुकुष्ठधूपं दद्यात्। 'यस्ते गन्धः' इति भूमिमभिमन्त्र्य 'त्र्यायुषम्' इति राज्ञे रक्षां कृत्वा 'असपत्नम्' इति शर्करामभिमन्त्र्याङ्गुष्ठात्प्रदक्षिणं प्रतिदिशं क्षिपेत्। 'शान्ता द्यौः' इति जपित्वा राजानं वासगृहं नयेत्। भूतिना रक्षां कृत्वा निष्क्रम्यैवमेवमहरहः कुर्यात् ॥

राज्ञा शान्त्यादिकर्मकुशलः आथर्वणिकः पुरोहितो वरणीयः नित्यं पूजनीयश्च, तेन शान्त्यादि-कर्माणि नित्यं कारयितव्यानि

[1]यस्य राज्ञो जनपदे अथर्वा शान्तिपारगः ।
निवसत्यपि तद्राष्ट्रं वर्धते निरुपद्रवम् ॥
यस्य राज्ञो जनपदे स नास्ति विविधैर्भयैः ।
पीडयते तस्य तद्राष्ट्रं पङ्के गौरिव मज्जति ॥
तस्माद्राजा विशेषेण अथर्वाणं जितेन्द्रियम् ।
दानसंमानसत्कारैर्नित्यं समभिपूजयेत् ॥
नित्यं च कारयेच्छान्तिं ग्रहऋक्षाणि पूजयेत् ।
भूमिदोहान् प्रकुर्वीत देवतायतनेषु च ॥
चतुष्पथेषु गोष्ठेषु तीर्थेष्वप्सु च कारयेत् ।
गोतर्पणं च विधिवत्सर्वदोषविनाशनम् ॥
[2]य एवं कारयेद्राजा सर्वकालं जितेन्द्रियः ।
अनन्तं सुखमाप्नोति कृत्स्नां भुङ्क्ते वसुंधराम् ॥

अहरहः कर्तव्यं पिष्टराव्याः पूजनं राज्ञो रक्षाविधानं च

[3]अथातः पिष्टराव्याः कल्पं व्याख्यास्यामः । अहतवासाः पुरस्तात्तल्पस्य गोमयेन स्थण्डिलमुपलिप्याहतवस्त्रेण सिंहासनमवच्छाद्य 'यां देवाः प्रतिनन्दन्ति' इति रात्रिमावाहयेत् । 'संवत्सरस्य प्रतिमाम्' इति पिष्टमयीं प्रतिकृतिं कृत्वोदङ्मुखीमुपवेशयेत् ॥

छत्रं हिरण्मयं दद्यादासनं च हिरण्मयम् ।
दद्याच्छुभ्राणि वासांसि शुभ्रं चैवानुलेपनम् ॥
शुभ्रमन्नं तथा दद्यात्प्रभूतांश्चैव मोदकान् ।
धूपं च विविधं नित्यं प्रदीपांश्च प्रकल्पयेत् ॥

'आ मा पुष्टे च पोषे च' इत्येताभिरुपस्थाय रक्षोघ्नैर्मन्त्रैः सर्षपानभिमन्त्र्य 'आवतस्ते' इति जपन्समन्तात्तल्पस्यावकीर्य 'अयं प्रतिसरः' इति प्रतिसरमाबध्य शर्करान्प्रतिदिशं क्षिपेत् । धूपशेषं राज्ञे दद्यात् । अभयप्रदं कर्म ॥

पश्चात्सर्वेषु कोणेषु द्विमुखीमेकमुखीं वा । सर्वतोविजयां रक्षामेकां वा तेषु चतुर्मुखीम् ॥

एकमुखीं वा सर्वत्राप्रतिरथजप इत्येके सर्वत्र शर्कराक्षेपश्चेति ॥

गृहीत्वा पिष्टरात्रिं तु वेश्मद्वारे विसर्जयेत् ॥

'वनस्पतिरसो मध्ये' इति गुग्गुलुकुष्ठधूपं दद्यात् । 'यस्ते गन्धः' इति भूतिमभिमन्त्र्य 'त्र्यायुषम्' इति राज्ञे रक्षां कृत्वा 'असपत्नम्' इति शर्करानभिमन्त्र्याङ्गुष्ठादभिप्रदक्षिणं प्रतिदिशं क्षिपेत् । 'शान्ता द्यौः' इति जपित्वा राजानं वासगृहं नयेत् । भूतिना रक्षां कृत्वा निष्क्रम्यैवमेवमहरहः कुर्यादिति ॥

राज्ञा प्रतिदिनं प्रातः करणीयं स्वस्त्ययन-होमपूर्वकं घृतावेक्षणम्

[1]अथ घृतावेक्षणं वक्ष्यामः । प्रातः प्रातः शङ्खदुन्दुभिनादेन ब्रह्मघोषेण वा प्रबोधितो राजा शयनगृहादुत्थायापराजितां दिशमभिनिष्क्रम्योपाध्यायं प्रतीक्षेत ॥

आथर्वणपरिशिष्टे तु घृतावेक्षणस्य कश्चित्प्रकारविशेषोऽप्युक्तः । स यथा– अथ घृतेति । राप्र. १५७

[2]अथ पुरोहितः स्नातानुलिप्तः शुचिः शुक्लवासाः कृतमङ्गलविरचितोष्णीषी शान्तिगृहं प्रविश्य देवानां नमस्कारं कृत्वा स्वस्तिवाचनमनुज्ञाप्य विनीतवदुपविशेत् ॥

---

(१) आप. ४।६, ६९।६, ७.

(२) आप. ४।६ : ६९।७ प्रथमचरणे (एवं तु ख्यापयन्राजा).

(३) आप. ६।१–२.

(१) आप. ८।१ ; राप्र. १५७ प्रातः प्रातः (प्रातः) प्रबोधितो (प्रतिबोधेत) यापरा (य राजाऽपरा) म्योपाध्यायं प्रतीक्षेत (म्य जयेत्).

(२) आप. ८।१ ; राप्र. १५७ स्नाता (स्नातोऽ) कृत...... ज्ञाप्य (घृतमङ्गलसहितः सोष्णीषी शान्तिगृहं प्रविश्य तेन स्वस्तिवाचनादनुज्ञातो).

[1]'यमस्य लोकाद्, यथा कलाम्, यो न जीवोऽसि' इति स्वस्त्ययनं कृत्वोल्लिख्याभ्युक्ष्य परिस्तीर्य शन्तातीयेन तिलान् घृताक्ताञ्जुहुयात्। तान् हुत्वा सौवर्णं राजतमौदुम्बरं वा पात्रं घृतपूर्णं सहिरण्यं 'घृतस्य जूतिः, सहस्रशृङ्गः, यमस्य लोकाद्, उरु विष्णो वि क्रमस्व' इत्यभिमन्त्र्य 'आज्यं तेजः' इति तदालभते ॥

[2]'आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम्।
आज्येन देवास्तृप्यन्ति आज्ये लोकाः प्रतिष्ठिताः ॥

[3]भौमान्तरिक्षदिव्यं वा यन्मे किल्बिषमागतम्।
सर्वं तदाज्यसंस्पर्शात्प्रणाशमुपगच्छतु ॥' इति ॥

[4]'तस्मिन् घृतपात्रस्थमात्मानं पश्येत् ॥

राजेति शेषः। राप्र. १५७

[5]'दध्ना शिरो हृदयमन्वालभ्य जपेत्– 'उच्चा पतन्तम्' इति द्वाभ्याम् ॥

'सूर्यस्याऽऽवृतम्' इति प्रदक्षिणमावृत्य शेषं कारयेदिति ॥

अत्र श्लोकाः–

अयं घृतावेक्षणस्य प्रोक्तो विधिरथर्वणा।
उपास्यो नित्यकालं तु राज्ञा विजयकाङ्क्षिणा ॥

एतत्समाहरेत्सर्वं प्रयतस्तु समाहितः।
राजा विजयते राष्ट्रं नश्यन्ते तस्य शत्रवः ॥

(१) आप. ८।१ ; राप्र. १५७ क्ताञ्जुहुयात्। तान् (क्तान्) लभते (लभेत्).

(२) आप. ८।१ ; राप्र. १५७.

(३) आप. ८।१ यन्मे किल्बिष (यत्ते कल्मष) ; राप्र. १५७ वा (च).

(४) आप. ८।१ स्थमात्मानं (स्थं हि सर्वमात्मानं च) ; राप्र. १५७.

(५) आप. ८।१–२ ; राप्र. १५७.

[1]'द्विजोत्तमाय कपिलां राजा दद्यात्तु गां शुभाम्।
आशीर्वादं ततस्तेन श्रुत्वा तन्मुखनिःसृतम् ॥

[2]गुरुणा वाचितो यस्माद्दीर्घमायुरवाप्नुयात्।
पुत्रान् पौत्रांश्च मैत्रांश्च लभते नात्र संशयः ॥

[3]आयुष्यमथ वर्चस्यं सौभाग्यं शत्रुतापनम्।
दुःस्वप्ननाशनं पुण्यं घृतस्यावेक्षणं स्मृतम् ॥ इति ॥

उदगयने शुक्लपक्षे पुण्ये नक्षत्रे ग्रहणकाले वा राज्ञा कर्तव्यः सर्वपापनाशहिरण्यगर्भसालोक्यादिफलः हिरण्यगर्भविधिः, तत्र अग्निमन्थनम्, हिरण्यमालाबन्धनम्, हिरण्मयपात्रे हिरण्यकलशैः पञ्चगव्येन जलेन च स्नापनम्, होमः, अनुशासनम् इत्याद्यङ्गकलापः

[4]अथ हिरण्यगर्भविधिमनुक्रमिष्यामः सर्वपापनोदनम्। उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे श्रद्धाप्रेरितौ ग्रहणकाले वर्त्विग्यजमानौ क्लृप्तकेशश्मश्रुरोमनखौ स्याताम्। अथ ऋत्विक् प्रागस्तंगमनादश्वत्थादरणी आधाय 'अग्ने जायस्व' इति द्वाभ्यां मथ्यमानमनुमन्त्रयते। तृतीयया जातं चतुर्थ्योपसमादधाति। शुचौ देशे परिधाप्य यथोक्तमञ्जनाभ्यञ्जनानुलेपनं कारयित्वा 'अग्नेः प्रजातं परि यद्धिरण्यम्, यदाबध्नन्' इति हिरण्यस्रजमाग्रथ्य 'रक्षन्तु त्वा' इति रक्षां कृत्वा दर्भानास्तीर्याधःशायिनौ स्याताम्। श्वोभूतेऽभिजिन्मुहूर्ते हिरण्मयं मण्डलाकृति नाभिमात्रं पात्रमाधाय सापिधानं स्रुक्स्रुवाज्यस्थाल्युदपात्रालंकारांश्च परिसमुह्य पर्युक्ष्य परिस्तीर्य बर्हिरुदपात्रमुपसाद्य परिचरणेनाऽऽज्यं परिचर्य नित्यान् पुरस्ताद्धोमान् हुत्वाऽऽज्यभागौ चाथ

(१) आप. ८।२ ; राप्र. १५७ पू.

(२) आप. ८।२ ; राप्र. १५८ वाचि (याचि) पू.

(३) आप. ८।२ ; राप्र. १५८ शत्रुताप (शत्रुनाश).

(४) आप. १३।१–५.

जुहोति– 'हिरण्यगर्भाय स्वाहा, अग्नये स्वाहा, ब्रह्मणे स्वाहा, प्रजापतये स्वाहा' इति। हुत्वा तैरेव नमस्कारं कारयित्वा तैरेवोपस्थाय स्रुक्स्रुवाज्यस्थाल्युदपात्रालंकारांश्चेति । हिरण्मये राजानं हिरण्यवतीभिः स्नापयित्वा हिरण्यकलशैस्तस्मिन्पञ्चगव्यमप आसिच्य हिरण्यगर्भसूक्तेनांहोमुचेन शान्तातीयेन पञ्चभिश्च नामभिः संपातानानीय तथैव सदस्यानसदस्यानृत्विजोऽनुज्ञापयेत्– 'राजा हिरण्यगर्भत्वमभीप्सत्यस्मिन् भवन्तोऽनुमन्यन्ताम्' इति। तैरनुष्ठितः– 'उदेहि वाजिन्' इति द्वाभ्यां प्रवेशयेत् । 'त्रयस्त्रिंशद्देवताः' इत्यभिसंधाय तमनुशास्ति– 'वाचं नियम्य प्रतिसंहृत्य चेन्द्रियाणि विषयेभ्यो मनसा भगवन्तं हिरण्मयं हिरण्यगर्भं परमेष्ठिनं ध्यायस्व' इति । तथेति तत्प्रतिपद्यते। स सप्तदश मात्रान्तरमस्ति। सप्तदशो वै प्रजापतिः। 'प्रजापतेरावृतः' इति विज्ञापयेत् । तथैव सदस्यानसदस्याननुज्ञाप्योत्थापयेत् । उत्थितं हिरण्ययेन( ? ण्मयेन ) चक्रेणाभिन्युञ्जयेत् । 'मा ते प्राणः' इत्युद्धरेत् । उद्धृतं हिरण्यनाम्नो प्रविमुच्य 'यस्त्वा मृत्युः' इत्यपास्येत्। 'संपश्यमानाः' इत्यवेक्षितो ब्राह्मणान् प्रणिपत्य नमस्कार्य 'नमो हिरण्यगर्भाय' इति। अथ ह वै 'हिरण्यगर्भस्य' इति प्रियतमाय तत उक्तम्। ब्राह्मणा ब्रूयुः– 'उत्तिष्ठ हिरण्यगर्भानुगृहीतोऽसि' इति। अप्रतिरथेन हुत्वा संस्थापयेत् । 'अप्सु ते राजन् वरुण' इति वरुणमभिष्टूय स्नात्वा पवित्रैः प्रत्येत्याऽऽदित्यमुपतिष्ठन्ते( ? ते ) –

'हिरण्यं तव यद्गर्भो हिरण्यस्यापि गर्भजः ।
हिरण्यगर्भस्तस्मात्त्वं पाहि मां महतो महान्॥'
इति ॥

'सूर्यस्याऽऽवृतम्' इति प्रदक्षिणमावृत्य 'गृहानैमि' इति गृहान् प्रतिपद्य 'त्वमग्ने प्रमतिः' इत्यग्निमुपस्थाप्याथोत्सृजेत् । अथ द्विजेभ्यो दक्षिणां दशसहस्राणि दद्यात्। ग्रामवरं च। स्रुक्स्रुवाज्यस्थाल्युदपात्रालंकारांश्चेत्यन्यत्सर्वं सदस्येभ्यः । यावद्वा तुष्येरंस्तावद्वा देयम्। राजा दद्यात् । यथाकामं ब्राह्मणानन्नेन परिचरेत् ॥
तत्र श्लोकाः–

वेदानां पारगा यस्य चतुर्णां ब्रह्मवित्तमाः ।
तुष्टा यस्याऽऽशिषो ब्रूयुस्तस्य यज्ञफलं भवेत् ॥
ब्राह्मणानां प्रसादेन सूर्यो दिवि विराजति ।
इन्द्रोऽप्येषां प्रसादेन देवानतिविराजति ॥
हिरण्यदानस्य फलममृतत्वमिति श्रुतिः ।
श्रूयते ह्यस्य दाता यः सोऽमृतत्वं समश्नुते ॥
राजेक्ष्वाकुप्रभृतयः पुरा राजर्षयोऽमलाः ।
दत्त्वा हिरण्यं विप्रेभ्यो ज्योतिर्भूत्वा दिवि स्थिताः ॥
य एवं संस्कृतो राजा विधिना ब्रह्मवादिना ।
प्रजानामिह साम्राज्यं ज्यैष्ठ्यं श्रैष्ठ्यं च गच्छति ॥
अमुष्मिन् ब्रह्मणा सार्धमानन्दमनुभूय वै ।
ज्योतिर्मयं सत्यलोकं न चैवाऽऽवर्तते पुनर्न चैवाऽऽवर्तते पुनः ॥ इति ॥

आश्विनशुक्लनवम्यां कर्तव्यं वाहनानामभयं कर्म

[1]अथ नवम्यामपराह्णे वाहनानि स्नापयित्वाऽहतवासा ब्रह्मा द्वादशहस्तमितां वेदिं कृत्वा। तन्त्रमित्युक्तम्। शान्तिकृत्यादूषणेन वाहनं त्रिः प्रोक्ष्य परीयात् ॥

तन्त्रमित्युक्तां शान्तिम् 'तन्त्रभूतां महाशान्तिं प्रवक्ष्यामः' इत्यादिनोक्ताम्। दूषणेन 'दूष्या दूषिरसि' इति सूक्तेन । राप्र. १७०

[2]'निःसालाम्' इति सूक्तं जपन् प्रत्येत्याभिषिञ्चेदेनम्। अश्वमलंकृतं शबलकण्ठं कृत्वोपस्थाप्य

(१) आप. १७।२ ; राप्र. १६९ मित्युक्तम्। शान्तिकृत्या (मित्युक्तां शान्तिं कृत्वा).

(२) आप. १७।२ ; राप्र. १६९–१७०.

दध्यात् । एवमेव मैश्रधान्यान्युदपात्राण्यन्तरासु दिक्षु । तत्रैव देवता यजेताग्निं वायुं वरुणमश्विनाविति । पयसि स्थालीपाकं श्रपयित्वा 'समास्त्वाऽग्ने, त्वं नो अग्ने, मा नो विदन्' अभयैरपराजितैरायुष्यैः स्वस्त्ययनैरप्रतिरथेनेति च हुत्वा संस्थाप्य 'अग्नेरदोऽसि' इत्यहतवासोभिः प्रच्छाद्य रसैः कुम्भानौदुम्बरान् पूरयित्वा प्रतिदिशमवस्थाप्य 'ममाग्ने वर्चः, अभयं द्यावापृथिवी, उदुत्तमं वरुण, अश्विना ब्रह्मणा यातम्' इति जुहुयात् । 'पौर्णमासी प्रथमा' इति च जुहुयात् । दुन्दुभिमाहन्यादित्युक्तम् । 'उप श्वासय पृथिवीम्' इति तत्रैवानुमन्त्रणं च । सर्वाणि च वादित्राणि वाहनानि च ॥

निःसालाम् 'निःसालां धृष्णुं धिषणम्' इति सूक्तम् । राप्र. १७०

[१]'जनस्यान्प्रहर्षय' * पञ्चमीं प्रतिष्ठापयेत् ॥

'न तं यक्ष्माः, पैतु देवः' इति गुग्गुलुकुष्ठधूपं दद्यात् । 'यस्ते गन्धः, त्र्यायुषम्' इति भूतिं प्रयच्छेत् । 'दूष्या दूषिरसि' इति प्रतिसरमाबध्य 'ये पुरस्तात्' इति प्रतिदिशं क्षिपेत् । बहिर्निःसृत्योत्तरेण गत्वा बाह्येनोपनिष्क्रम्य सुहृदे कुर्याच्छूद्रःगते कुर्याद्वाहनानामभयं कर्म ॥

प्रतिसरं हस्ते तन्तुमयं कङ्कणम् । राप्र. १७०

राज्ञः जन्मदिने प्रतिवत्सरं रक्षासूत्रबन्धनविधिः

[२]अथ वर्षशतं प्रवर्धमानो राजानमभिवर्धयिष्यन् संवत्सरे जन्मदिने कुर्यात् । तन्त्रमित्युक्तम् । 'पुनन्तु मा, वायोः पूतः, वैश्वानरो रश्मिभिः' इति पवित्रैः पुण्याहादीनि च मङ्गलैर्यजमानं च संप्रोक्ष्य 'यदाबध्नन्' इति पुष्पाद्यलंकारमावर्जयित्वा माहेन्द्रं चरुं श्रपयेत् । लोकपालेभ्यश्च द्वितीयं चरुं श्रपयेत् ॥

[१]'महाँ इन्द्रो य ओजसा' इति सूक्तेन तृतीयायां ह्यग्नौ हुत्वा 'इन्द्राय स्वाहा' इत्यादि लोकपालांश्चेष्ट्वा राजानमन्वालभ्याऽऽदिवज्जुहुयात्– 'अर्वाञ्चमिन्द्रम्, इन्द्रः सुत्रामा, इममिन्द्र वर्धय क्षत्रियं मे, शतं जीवन्तः शरदः' इति । 'रक्षन्तु त्वाऽग्नयः' इति चतसृभी रक्षां कृत्वा रोचनयाऽलंकुर्यात् ॥ त्रिगुणेन सूत्रेण बद्ध्वा 'मनायै तन्तुम्' इति सूक्तेन रक्षासूत्रे संपातं च कृत्वा 'धाता ते ग्रन्थिम्' (?) इति बध्नाति ॥ उत्तरतन्त्रम् । हिरण्यं दक्षिणा ॥

आश्विनादिमासानां नवरात्रविजयादशम्यादितिथिविशेषेषु रेवत्यश्विन्यादिनक्षत्रेषु च राज्ञा कर्तव्यानि कर्माणि

[२]महानवम्यां हस्त्यश्वदीक्षा । प्रतिपत्प्रभृति नवरात्रं शस्त्रसस्वसंपातः । तृतीयायां हस्त्यश्वानां कर्म । सप्तम्यां हस्त्यश्वानां दर्शनम् । अष्टम्याम् 'अथ पिष्टमयीम्' इत्यादि । नवम्यां दुर्गापूजनम् । 'अथ नवम्याम्' इत्यादि नवम्याम् । अथापराजितदशम्यां पूर्वाह्णे विजयमुहूर्ते उक्तं प्रास्थानिकम् । एतानि खलु प्राग्द्वाराणीत्यादि । 'स्वस्तिदा, ये ते पन्थानः' इत्यादि नक्षत्रहोमश्च ॥

---

* अत्र कियांश्चित् ग्रन्थ उच्छिन्न इति भाति । अस्मिन्नेव प्रकरणे पूर्वं संगृहीतं आप ४।४ इति खण्डमत्रानुसंधेयम् ।

(१) आप. १७।२ ; राप्र. १७० स्यान्प्रह (स्यासान्प्रह) रमाबध्य 'ये पुरस्तात्' (रं बद्ध्वा 'वातैः पुरस्तात्').

(२) आप. १८ (२)।१ कारमावर्ज (कारं वर्ज) ; राप्र. १७२.

(१) आप. १८(२)।१ ; राप्र. १७२ (सूक्तेन तृतीयायां ०) सूत्रे संपा (सूत्रं संपा) उत्तरत (उत्तरं त).

(२) आप. १८(२)।२ हस्त्यश्वानां कर्म (हस्त्यश्ववाह्यग्राम्याश्वानां कर्म) ; राप्र. १७२–१७३.

[1]अथ श्रवणे नक्षत्रे 'अथ राज्ञामिन्द्रमहस्य' इति व्याख्यातः ॥

अथ पौर्णमास्यामपराह्णे पौर्णमासिकं कर्म ॥

अथापामार्गत्रयोदश्यां श्वेते मुहूर्ते स्नानं कृत्वाऽपामार्गं त्रिः परिभ्रामयेद्राज्ञ उपरि मन्त्रेण। 'ईशानां त्वा भेषजानाम्' इति त्रिभिः सूक्तैः 'प्रतीचीनफलः' इति सूक्तेन वा पुनः स्नानम्। तत आरात्रिकम् 'परि धत्त' इति द्वाभ्यामिति समानम् ॥

[2]अथ दीपोत्सवं प्रतिपदि। हस्त्यश्वादिदीक्षादि समानम्। अभ्यातानान्तं कृत्वा 'येऽस्याम्, प्राची दिक्' इति 'मा नो देवाः, यस्ते सर्पः' इत्येतैः सूक्तैः तृणानि युगतर्क्ष्मना संपातवन्ति गणं च प्रातितमितधानाशने हस्त्यश्वादि युगपत्तन्त्रं समानम्। धेनुर्दक्षिणा ॥

[3]अथाक्षय्यनवम्यां रात्रौ हस्त्यश्वादीनामनीकानां रथस्य परहोमश्च ॥

अथ विष्णुद्वादश्यां पुरोहितः पश्चिमां संध्यामुपास्य गृहीतदर्भो यत्र राजानमभिगम्य पौष्टिकहोमश्च रात्रौ नीराजनं कृत्वा हस्त्यश्वेभ्यश्च ॥

अथ कार्तिक्यां पौर्णमास्यां रैवत्यामाश्वयुज्यां वृषोत्सर्गः ॥

[4]अथाऽऽग्रयणीपौर्णमास्यां तन्त्रं कृत्वा 'अपादग्ने' इति द्वाभ्यां रसं संपात्याभिमन्त्र्य राजानं प्राशयेत्। धेनुर्दक्षिणा ॥

[5]अथ पौष्यां पौर्णमास्यामुक्तः पुष्याभिषेकः ॥

(१) आप. १८(२)।३–५ ; राप्र. १७३.

(२) आप. १८(२)।६ दीक्षादि स (दीक्षास); राप्र. १७३ मितधाना (मिमधाना).

(३) आप. १८(२)।७–९ ; राप्र. १७३.

(४) आप. १८(२)।१० ; राप्र. १७३ ग्रयणी (ग्रहायणी) (धेनुर्दक्षिणा ०).

(५) आप. १८(२)।११ ; राप्र. १७३.

[1]अथ फाल्गुन्यां पौर्णमास्यां रात्रौ होलाका। महानवम्यामुक्तप्रज्वलनं नीराजनं वा ॥

[2]अथ ग्रीष्मप्रतिपदि 'आयुष्यम्' इति स्नानं कृत्वाऽपां सूक्तैराप्लुत्य प्रदक्षिणमावृत्याप उपस्पृशेदित्युक्तम् ॥

अथ चैत्र्यां पौर्णमास्यां तेजोव्रतं त्रिरात्रमश्नातीत्युक्तम् ॥

[3]अथ मदनत्रयोदश्यां वैशाख्यां पौर्णमास्यां च मध्याह्ने गर्ते वा वाप्यां पुष्करिण्यां घटे वा सर्वगन्धान् प्रक्षिप्य प्राकृतन्त्रमभ्यातानान्तं कृत्वा 'सिंहे व्याघ्रे, यशो हविः, प्रातरग्निम्, गिरावरगराटेषु, दिवस्पृथिव्याः' इत्येतैः सूक्तैरुदकं संपात्याभिमन्त्र्य राजानं स्नापयेत्। प्रविश्य संप्रोक्ष्येति च तन्त्रं संस्थापयेत्। धेनुर्दक्षिणा ॥

[4]अथ श्रावण्यां पौर्णमास्यां विजये मुहूर्ते 'रक्षन्तु त्वाऽग्नयः' इति चतसृभी रक्षाबन्धनं कृत्वा नीराजनं च बाह्येनोपनिष्क्रम्येति पैठीनसिः ॥

[5]अथाऽऽदित्यदिन आदित्यमण्डको व्याख्यातः ॥

अथ जन्मनक्षत्रे जन्मनक्षत्रयागहोमो व्याख्यातः ॥

[6]अथ राजकर्माणि प्रतिनक्षत्रं कर्तव्यानीत्यायुधानि खड्गप्रभृतीनि बिभृयादिति। कृत्तिका-

(१) आप. १८(२)।१२ ; राप्र. १७३ होलाका (होलिका).

(२) आप. १८(२)।१३–१४ ; राप्र. १७३.

(३) आप. १८(२)।१५ ; राप्र. १७३–१७४ मास्यां च (मास्यां) गर्ते वा (गर्ते) संप्रोक्ष्येति (प्रोक्षति).

(४) आप. १८(२)।१६ ; राप्र. १७४ जये मु (जयमु) (चतसृभी०).

(५) आप. १८(२)।१७–१८ ; राप्र. १७४.

(६) आप. १८(२)।१९ रोहिण्यौ व्याख्याते (कृत्तिकारोहिणीव्याख्याता) ; राप्र. १७४ इन्द्रमहो (इन्द्रो).

रोहिण्यादीनि व्याख्यातानि । इन्द्रोत्सव इन्द्रमहोत्सवो व्याख्यातः । प्रतिदिनं ग्रहयागः । प्रतिदिनं नक्षत्रयागः । प्रतिदिनं दशगणी महाशान्तिः । प्रतिस्थानं कृत्तिकारोहिण्यौ व्याख्याते, नक्षत्रस्नानानि नक्षत्रदक्षिणाश्च ॥

[1]राजकर्म सांवत्सरीयं हस्त्यश्वादिदीक्षा समाप्ता ॥

दीर्घायुरर्थं कृत्स्नभूमिभोगार्थं च राज्ञा कर्तव्यो ब्रह्मयागः

[2]भार्गवं प्रणिपत्याथ भगवाञ्छौनकोऽवदत् ।
ब्रह्मयागविधिं कृत्स्नं विस्तरेण वदस्व मे ॥

परिपृष्टः स तेनाथ अथर्वा जयतां वरः ।
विधिं कृत्स्नं प्रतिष्ठाय आख्यातुमुपचक्रमे ॥

सर्वेषामेव यागानां परमोऽयमुदाहृतः ।
ब्रह्मयागं प्रयत्नेन शृण्वेतं तद्यथाक्रमम् ॥

हृद्ये मनोहरे शुभ्रे सर्वाबाधाविवर्जिते ।
श्लेष्मान्तकाक्षगृध्रादिपरित्यक्ते समे शुभे ॥

मण्डपं कारयेत्तत्र यथोक्तविधिना गुरुः ।
पताकातोरणैर्युक्तं द्वारैश्चापि पृथग्विधैः ॥

अभ्युक्ष्य शान्तितोयेन पञ्चगव्येन वा सकृत् ।
गोमयेन प्रलिप्याऽऽदौ पूजयेद्वर्णकैः पृथक् ॥

पुष्पैश्च विविधैः शुभ्रैः फलैश्चाप्यर्चयेद् बुधः ।
ततो बलिं हरेद्रात्रौ चतुर्दिक्षु विधानवित् ॥

प्रदीपान् घृतपूर्णांश्च प्रदद्याद्विविधांस्तथा ।
ततो मण्डपमध्ये तु वर्तयेद्दिव्यमण्डलम् ।
चतुरश्रं चतुर्द्वारं वृत्ताकारमथापि वा ॥

सितचूर्णेन तन्मध्ये लिखेत्पद्मं सुशोभनम् ।
बहिश्च वर्णकैः शुभ्रैर्नाना शोभां प्रकल्पयेत् ॥

मध्ये पद्मं तु संस्थाप्य ब्रह्माणं परमेश्वरम् ।
ब्रह्मजज्ञानसूक्तेन यथोक्तमुपकल्पयेत् ॥

तथेमा आप इत्याद्यैर्यथावदधिवासयेत् ।
रोचनाचन्दनाद्यैश्च पुष्पैर्धूपैश्च पूजयेत् ॥

घृतप्रदीपमाल्यैश्च वस्त्रैर्भक्ष्यैश्च शोभनैः ।
सितचन्दनकर्पूरं दद्याद्वाऽपि हि गुग्गुलम् ॥

प्रदक्षिणं ततः कृत्वा नमेत्सर्वाङ्गकैर्नरः ।
दक्षिणे पश्चिमे वाऽपि भागे वेदिः प्रशस्यते ॥

कृत्वाऽऽज्यभागपर्यन्तं ततः शान्त्युदकं पुनः ।
ब्रह्मजज्ञानसूक्तेन कुर्याच्चैवात्र पूजनम् ।
तथैव रौद्रमन्त्रैश्च अभिषेकाय कल्पयेत् ॥

हुत्वाऽभ्यातानमन्त्रांश्च ततो रुद्रगणेन च ।
नीलरुद्रैश्चरुं विद्वान् विधिना श्रपयेद् बुधः ॥

होमयेत्कुत्ससूक्तेन उच्छुष्मैश्च यथाविधि ।
जपेन्मन्त्रांस्तथाऽऽयुष्यान् मङ्गल्यांश्चापि यत्नतः ॥

हुत्वा च चातनं तत्र मातृनामगणेन च ।
स्नापयेत्पञ्चगव्येन तथा शान्त्युदकेन च ॥

फलस्नानं च कुर्वीत युक्तो मङ्गलवादिभिः ।
बन्दिभिर्वेदविद्भिश्च स्त्रीसङ्गीतैर्मनोरमैः ॥

चारुचामरहस्ताभिश्चित्रदण्डैः सदर्पणैः ।
स्नापयेद् ब्रह्मसूक्तेन रौद्रेणापि तथाऽर्चयेत् ॥

ततः प्रदक्षिणं कृत्वा जानुभ्यां धरणीं गतः ।
आशास्येष्टफलं तत्र युक्तो मङ्गलपाठकैः ॥

तूर्यघोषेण संयुक्तः कृतस्वस्त्ययनस्तथा ।
कुर्याद्दुन्दुभिनादं तु शङ्खभेरिप्रपूरितम् ॥

कुर्यादुत्तरतन्त्रं च सदस्यान् वाचयेत्ततः ।
भोजयेच्छक्तितस्तत्र ब्राह्मणान् वेदपारगान् ॥

दीनानाथान्धकृपणान् भक्ष्यभोज्यैरनेकधा ।
अन्नपानविहीनांश्च विशेषेण प्रपूजयेत् ॥

दत्त्वा च दक्षिणां शक्त्या दद्याद्गणबलिं निशि ।
गृहदेवास्तु संपूज्याः कार्यश्चाप्युत्सवो गृहे ॥

योगिनो भोजयेत्पश्चाद् गृहेषु गृहमेधिनः ।
अच्छेद्यास्तरवः कार्याः प्राणिहिंसां च वर्जयेत् ॥

बन्धनस्थाश्च मोक्तव्या बद्धाः क्रोधाच्च शत्रवः ।
अभयं घोषयेद्देशे गुरुं च परिपूजयेत् ॥

---

(१) आप. १८(२)।२० ; राप्र. १७४ (समाप्ता०).
(२) आप. १९(२)।१–५.

अभयं सर्वतो दत्त्वा इष्टे च परमेश्वरे ।
दीर्घमायुरवाप्नोति कृत्स्ना भुङ्क्ते वसुंधराम् ॥
ब्रह्मयागविधिः कृत्स्नो भक्तानां तु मयोदितः ।
अथर्वणा सुरेन्द्राय प्रणताय शुभेच्छया ॥

कृताभिषेकः कृतयाग एष
कृताह्निकः कृतरक्षः सुरेशः ।
अथर्वणोऽनुग्रहमाशु लब्ध्वा
त्रिविष्टपं विरराजासपत्नम् ॥ इति ॥

## विष्णुधर्मोत्तरपुराणम्

यात्रायां परदेशे प्रस्थितस्य राज्ञः पूजादीनि कर्माणि

**राम उवाच–**

[1]कथं हि चतुरो मासान् कार्यं केशवपूजनम् ।
पार्थिवेन सुरश्रेष्ठ तन्ममाऽऽचक्ष्व पृच्छतः ॥

अथ युद्धार्थं प्रस्थितस्य राज्ञः परदेशे चातुर्मास्ये प्राप्ते किं कर्तव्यमित्यपेक्षायामुच्यते– कथमित्यादि ।

राप्र. ४१३

**पुष्कर उवाच–**

[2]उद्युक्तेन सदा भाव्यं राज्ञा भृगुकुलोद्वह ।
आषाढशुक्लपक्षान्ते राजा स्थानमुपाश्रयेत् ॥

* आषाढशुक्लपक्षः अन्ते यत्र क्रियायाम् । आषाढशुक्लपक्षपर्यन्तं राज्ञा उद्युक्तेन परराष्ट्रग्रहणोद्योगवता भाव्यमित्यर्थः । तदनन्तरं स्थानं चातुर्मास्यावस्थानयोग्यं स्थलम् उपाश्रयेत् । अत एव तस्य स्थानस्याग्रे योग्यताकथनम् 'अधृष्यम्' इत्यादिना कृतम् ।

राप्र. ४१३–४१४

[1]अधृष्यं परराष्ट्राणां प्रभूतयवसेन्धनम् ।
तोयोपेतं विपङ्कं च प्रावृट्कालाहतं तथा ॥

'तमोपेतम्' इत्यनेन सतमसां दर्यादीनां निषेधः । 'प्रावृट्कालाहतम्' इत्यनेन निम्नप्रदेशनिषेधः, तत्र प्रावृट्काले जलागमने दूष्यादीनामनवस्थानेऽवस्थातुमशक्यत्वात् ।

राप्र. ४१४

[2]यत्रस्थश्च स्वविषयं सर्वं शक्नोति रक्षितुम् ।
तत्रस्थश्चतुरो मासान् गजाश्वान् पोषयेन्नृपः ॥
स्नेहपानैर्बहुविधैः प्रतिपानैश्च भार्गव ॥

प्रतिपानैः स्नेहातिपानकृतरोगादिनिवृत्त्यर्थं कृतैः रूक्षीकरणकषायपानैः । अथवा स्नेहपानप्रतिपानशब्दाभ्यां पूर्वोत्तरबस्ती गृह्येते । ते च वैद्यकशास्त्रे प्रसिद्धे ।

राप्र. ४१४

[3]आषाढशुक्लपक्षान्ते दशम्यूर्ध्वं नराधिपः ॥
उत्सवं तु महत् कुर्याद्देवस्य चार्चने रतः ।
अर्चायां वा पटे वाऽपि कृतं देवमथार्चयेत् ॥

अर्चायां प्रतिमायाम् । राप्र. ४१४

[4]देवभोगमयं विष्णुं श्रीसहायमरिंदमम् ।
बलिभिर्विविधाभिस्तु पुष्पैर्धूपैः सुगन्धिभिः ॥
[5]उत्सवं तु महत् कुर्यात् ततः पञ्चदिनं नृपः ।
ततः प्रभृति नित्यं स्याद्वासुदेवस्य पूजनम् ॥

---

* अत्रान्यपदार्थरूपा क्रिया विशेषतो नोक्ता । उत्तरवाक्यात्तु परराष्ट्रग्रहणरूपा सेति निर्णीयते । वस्तुतोऽत्र पक्षस्य पूर्वोत्तरार्धरूपौ आद्यन्तौ भागौ कल्पयित्वा 'आषाढशुक्लपक्षस्य अन्ते उत्तरार्धे स्थानमुपाश्रयेत्' इत्येवार्थो युक्तः प्रतिभाति, सरलत्वात्, अस्यैव पदस्याग्रिमे प्रयोगेऽस्यैवार्थस्य सुवचत्वाच्च । न हि प्रकाशकृत्कल्पितोऽर्थोऽग्रिमे प्रयोगे युज्यते । पक्षान्तेऽपि अष्टम्यादिदशम्यन्तास्तिथयोऽत्र विवक्ष्यन्ते, एकादशीतः पञ्चदिनोत्सवस्यानुष्ठेयत्वात् ।

(१) विध. २।१५३।१ ; राप्र. ४१३.

(२) विध. २।१५३।२ ; राप्र. ४१३ पक्षान्ते (पक्षान्तं).

(१) विध. २।१५३।३ काला (काल) ; राप्र. ४१४ तोयो (तमो).

(२) विध. २।१५३।४–५ गजाश्वान् (अजाश्व) ; राप्र. ४१४ यत्रस्थश्च स्व (यत्रोष्य च स्वं).

(३) विध. २।१५३।५–६ ; राप्र. ४१४ तु म (सुम) देवस्य चा (देवानाम).

(४) विध. २।१५३।७ ; राप्र. ४१४.

(५) विध. २।१५३।८ ; राप्र. ४१४ तु म (सुम) पूज (चार्च).

[1]सात्त्वतैर्भार्गवश्रेष्ठ सांवत्सरपुरोहितैः ।
गीतनृत्यैस्तथा देवं विशेषेणात्र पूजयेत् ॥

अस्मिन्नेव तथा काले कोटिहोमं समाचरेत् ।
कार्तिक्यां तत्समाप्तिस्तु यथा भवति भार्गव ॥

शुक्लपक्षत्रिभागेऽन्त्ये कार्तिकस्य ततो नृपः ।
उत्सवं सुमहत् कुर्याद्देवदेवार्चनं तथा ॥

[2]वैकुण्ठं पूजयेद्देवमर्चायामथवा पटे ।
महादानं ततो दद्यात् प्रेङ्खां दद्यात्तथैव च ॥

प्रेङ्खा दोला । 'दोला प्रेङ्खादिका स्त्रियाम्' इत्यमरः । दोलायात्रां कुर्यादित्यर्थः । राप्र. ४१५

[3]मल्लानामथ झल्लानां नटानां नर्तकैः सह ।
यात्राविधानं सकलं तथा कुर्यान्महीपतिः ॥

'मल्लाना ... सह' । दद्यादिति शेषः ।

राप्र. ४१५

[4]एतत् कृत्वा ततो यात्रा देया भवति पार्थिवैः ।
शरत्काले गतातङ्कैः पुष्टाश्वरथकुञ्जरैः ॥

[5]एवं च राज्ञा चतुरो हि मासान्
पूज्यो भवेद्देववरो हि हर्ता ।
संत्यक्तचिह्नं मधुसूदनं च
संपूज्य यात्राऽभिमतप्रदा स्यात् ॥

(१) विध. २।१५३।९–११ ; राप्र. ४१४–४१५.

(२) विध. २।१५३।१२ प्रेङ्खां (प्रेक्ष्यां) ; राप्र. ४१५.

(३) विध. २।१५३।१३ ; राप्र. ४१५ झल्लानां नटानां (वेश्यानां बन्दिनां) तथा (तदा).

(४) विध. २।१५३।१४ ; राप्र. ४१५ देया (कार्या).

(५) विध. २।१५३।१५ ; राप्र. ४१५ च रा (हि रा) रो हि (रोऽपि) हि हर्ता (ऽरिहन्ता) चिह्नं (निद्रं).

## अग्निपुराणम्

जन्मनक्षत्रे प्रतिमासमगस्त्योदये चातुर्मास्ये च राज्ञः कर्तव्यानि

पुष्कर उवाच–

[1]कर्म सांवत्सरं राज्ञां जन्मर्क्षे पूजयेच्च तम् ।
मासि मासि च संक्रान्तौ सूर्यसोमादिदेवताः ॥
अगस्त्यस्योदयेऽगस्त्यं चातुर्मास्ये हरिं यजेत् ।
शयनोत्थापने पञ्चदिनं कुर्यात्समुत्सवम् ॥

## देवीपुराणम्

स्वातिनक्षत्रयुक्तामाश्विनशुक्लप्रतिपदमारभ्य नवमीं यावत् साश्वैर्नरैः कर्तव्या अश्वपूजा

[2]आश्वयुक्शुक्लप्रतिपत्स्वातियोगे शुभे दिने ।
पूर्वमुच्चैःश्रवा नाम प्रथमं श्रियमाहरत् ॥

अथ अश्ववद्भिर्नृपैः आश्विनशुक्लप्रतिपदमारभ्य महानवमीं यावत् अश्वशान्त्यर्थं लोहाभिसारिकं कर्म कार्यम् । यथोक्तं देवीपुराणे– आश्वयुगिति । राप्र. ४४४

तस्मात्साश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया सदा ।
पूजनीयाश्च तुरगा नवमीं यावदेव हि ॥
शान्तिः स्वस्त्ययनं कार्यं तदा तेषां दिने दिने ।
धान्यं भल्लातकं कुष्ठं वचासिद्धार्थकांस्तथा ।
पञ्चवर्णेन सूत्रेण ग्रन्थिं तेषां तु बन्धयेत् ॥
वायव्यैर्वारुणैः सौरैः शाक्रैर्मन्त्रैः सवैष्णवैः ।
वैश्वदेवैस्तथा मन्त्रैर्होमः कार्यो दिने दिने ॥
तुरगा रक्षणीयास्तु पुरुषैः शस्त्रपाणिभिः ।
नैव ताड्याः क्वचित्तत्र न च वाह्याः कथंचन ॥

## कालिकापुराणम्

आश्विनादिमासानां तिथिनक्षत्रविशेषेषु दुर्गाश्रीविष्णुशक्रादिदेवतानां राज्ञा कर्तव्यानि पूजादीनि कर्माणि

[3]सांवत्सरेषु कृत्येषु विशिष्यैतान् समाचरेत् ।
अवश्यं पार्थिवो राजन् तान्विशेषाच्छृणुष्व मे ॥

(१) अग्नि. २६८।१–२. (२) राप्र. ४४४.

(३) कालिका. ८८।८–१५.

शरत्काले महाष्टम्यां दुर्गायाः परिपूजनम् ।
नीराजनं दशम्यां तु कुर्याद्वै बलवृद्धये ॥

पौषे मासि तृतीयायां कुर्यात् पुष्याभिषेचनम् ।
पूजयित्वा श्रियं देवीं श्रीपञ्चम्यां नृपश्चरेत् ॥

श्रीयज्ञं धनधान्यस्य वृद्धये नृपसत्तम ।
ज्येष्ठे दशहरायां तु विष्णोरिष्टिं तथा चरेत् ॥
रवौ हरिस्थे द्वादश्यां शक्रपूजां तथा चरेत् ।
विशिष्यैतांस्तु नृपतिः कुर्याद्यज्ञान् बहुव्ययैः ॥
एभिः कृतैर्बलं राज्यं कोषश्चापि विवर्धते ।
अकृतेष्वेषु यज्ञेषु दुर्भिक्षं मरणं तथा ॥

जायन्ते चेतयः सर्वा विशिष्यैतांस्ततश्चरेत् ।
शरत्काले महाष्टम्यां दुर्गायाः पूजने विधिः ॥
पुरा प्रोक्तस्तु विधिना तेन कार्यं तु पूजनम् ॥

और्व उवाच–

[1]ज्येष्ठे दशहरायां तु विष्णोरिष्टिं नृप शृणु ।
येन वा विधिना कुर्यादिष्टिं विष्णोर्नृपः सदा ॥
प्रत्यब्दं पार्थिवः कुर्यात् प्रतिमां काञ्चनीं हरेः ।
अन्यतेजोमयीं वाऽपि दारवीं वा शिलामयीम् ॥
तां प्रतिष्ठाप्य विधिना मानोन्मानैस्तु शिल्पिभिः ।
प्रतिष्ठां विधिवत्तस्याः कुर्याद्विप्रैः पुरोहितैः ॥

तां संस्थाप्य सुरागारे स्वयं वा यत्नतः कृते ।
वासुदेवस्य बीजेन पूर्वोक्तविधिना तथा ॥
सर्वोपचारैर्भक्त्या तु वासुदेवं प्रपूजयेत् ।
पूजान्ते संस्कृते वह्नौ कुण्डमध्ये स्थितो द्विजः ॥
आज्यैः सहस्रं जुहुयादाहुतीनां हरेः प्रियम् ।
संपूज्य वासुदेवं तु होमं कृत्वा ततो द्विजः ॥
नृपस्यानुमते तां तु प्रतिमां मण्डलं नयेत् ।
प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना ॥
प्राणप्रतिष्ठां कुर्वीत तस्यां देवस्य वै हरेः ।
कृतायां तु प्रतिष्ठायां प्राणानां नृपसत्तम ॥

विष्णुप्राणास्तां प्रतिमामायान्ति नियतं स्वयम् ।
प्राणेष्वथाऽऽगतेष्वस्यां देवत्वं नियतं भवेत् ॥
अकृतायां प्रतिष्ठायां प्राणानां प्रतिमासु च ।
यथा पूर्वं तथा भावः स्वर्णादीनां न विष्णुता ॥
अन्येषामपि देवानां प्रतिमास्वपि पार्थिव ।
प्राणप्रतिष्ठा कर्तव्या तस्या देवत्वसिद्धये ॥
सुवर्णं तु सुवर्णं स्याच्छिला दारु तथा शिला ।
अन्यच्च स्वस्वरूपं स्यात् प्राणस्थानमृते सदा ॥
वासुदेवस्य बीजेन तद्विष्णोरित्यनेन च ।
तथैवाऽङ्गाङ्गिमन्त्राभ्यां प्रतिष्ठामाचरेद्धरेः ॥
तथैव हृदयेऽङ्गुष्ठं दत्त्वा शश्वच्च मन्त्रवित् ।
एभिर्मन्त्रैः प्रतिष्ठाप्य हृदयेऽपि समाचरेत् ॥
अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च ।
असौ देवत्वसंख्यायै स्वाहेति यजुरुच्चरन् ॥
अङ्गमन्त्रैरङ्गिमन्त्रैर्वैदिकैरित्यनेन च ।
प्राणप्रतिष्ठां सर्वत्र प्रतिमासु समाचरेत् ॥
प्रतिमापूजने कुर्यादात्मन्यपि च मन्त्रवित् ।
प्राणप्रतिष्ठां प्रथमं पूजाभागविशुद्धये ॥
अस्मिन् प्राणप्रतिष्ठां तु प्रतिमापूजनादृते ।
न कश्चित्तु बुधः कुर्यात्कृत्वा मृत्युमवाप्नुयात् ॥
विष्णोरिष्टिमिमां कृत्वा दशम्यां पार्थिवोत्तमः ।
तस्यामेव तु पूर्णायां प्रतिमां स्थापयेत्ततः ॥
एवं दशहरायां तु कृत्वेष्टिं पार्थिवो हरेः ।
सर्वान् कामानवाप्नोति निर्विघ्नोऽपि स जायते ॥
श्रीपञ्चम्यां श्रियं देवीं कुन्दैः संपूजयेत् सदा ।
वासवं गजराजस्थमुपहारैस्तथोत्तमैः ॥
लक्ष्म्यास्तन्त्रं महामन्त्रं वासवस्य पुरोदितम् ।
अत्रापि पूजने ग्राह्यं मण्डलादि यथाक्रमम् ॥
एवं कृते पूजने तु श्रीपञ्चम्यां विशेषतः ।
श्रीयुतो नृपतिर्भूयान्न श्रीहानिमवाप्नुयात् ॥
सदाचारविशेषोऽयं कथितस्तव पार्थिव ।
निषेधे तु विशेषांश्च शृणु येन श्रियेध्यते ॥
असंपूज्य तथा विष्णुं शिवमग्निं पुरंदरम् ।
अदत्त्वा च तथा दानं न भुञ्जीत नृपः क्वचित् ॥

---

(१) कालिका. ९१।१–२५.

# देवयात्राविधिः

## ब्रह्मपुराणम्

मासविशेषे तिथिविशेषे च देवताविशेषाणां प्रीत्यर्थं कर्तव्या यात्राः

[1]वैशाखादिषु मासेषु षट्सु देवगृहेषु च।
यात्रोत्सवः सदा कार्यः प्रतिसंवत्सरेष्वपि ॥

अथ तिथिविशेषे मासविशेषे च विहिता ब्रह्मपुराणोक्ता देवयात्रा– वैशाखादिष्विति । राप्र. ४१६

कार्या च ब्रह्मणे यात्रा प्रतिपद्यपि सर्वदा ।
द्वितीयायां च देवेभ्यो विद्यारम्भे महोत्सवे ॥
भागीरथ्यै तृतीयायां कर्तव्या च सुशोभना।
विनायकाय नागेभ्यश्चतुर्थ्यामथ कारयेत् ॥

'चतुर्थ्यामथ' इत्यथशब्देन पञ्चमी उपादीयते । राक. १७८

स्कन्दाय षष्ठ्यां सप्तम्यां सूर्येभ्यश्च यथाक्रमम्।
पुरंदराय चाष्टम्यां रुद्राय सगणाय च ॥
[2]दुर्गाद्याभ्यश्च मातृभ्यो नवम्यामथ सर्वदा।
भूम्यै दशम्यां कर्तव्या सर्वोपकरणान्विता ॥
[3]एकादश्यां समासेन विधात्रे विश्वकर्मणे।
द्वादश्यां विष्णवे कार्या सायुधाय महात्मने ॥
त्रयोदश्यां तु कामाय चतुर्दश्यां कपर्दिने।
पौर्णमास्यां तु देवेभ्यस्तथा चन्द्रमसे तथा ॥
[4]अमावास्यायां( ? स्यां तु ) पर्वान्ते पितृभ्यश्चात्र कुत्रचित्।
चतुर्दश्यां चतुर्थ्यां वा पितृराजे यमे तथा ॥

[1]द्वादश्यां पौर्णमास्यां वा नागेभ्यः पञ्चमेऽहनि ।
नारायणाय सर्वासु कार्या तिथिषु सर्वदा ॥

सासाह्निकयात्रामहोत्सवविधिः

यात्रां च कर्तुकामेन प्रारम्भे तु दिने दिने ।
विनायकाय पूजा च कर्तव्या मोदकोत्करैः ॥
द्वितीयेऽहनि कर्तव्या ग्रहशान्तिर्यथाक्रमम् ।
गन्धर्वेभ्यस्तथा पूजा चतुर्थेऽहनि शास्त्रवित् ॥
पञ्चमे स्थाननागाय पयसा पायसेन च।
षष्ठे देयं ब्राह्मणेभ्यो भोजनं च सदक्षिणम् ॥
स्नपनं सप्तमे कार्यं देशं कृत्वा सुरक्षितम्।
सुधावदातं कर्तव्यं चित्रितं देवतागृहम् ॥
रङ्गस्थानं तु देवेभ्यो विहितं कारयेत्तथा ।
स्रग्वस्त्रमाल्यहेमाद्यैः प्रधानं देवमर्चयेत् ॥
ततोऽर्चास्नपनं कार्यं कल्पशाखाक्रमेण च ।
पुण्याहगीतनृत्याद्यैर्होमैर्बल्युपहारकैः ॥
[2]ततोऽर्चास्नपनस्यान्ते पौरैर्नृत्यपुरःसरम् ।
आनेतव्यं च महता विभवेनोदकं शुभम् ॥
[3]नित्यं संनिहितात्तीर्थाद्यथाप्राप्तैर्घटैर्नवैः ।
देशकालानुसारेण गजाश्ववृषमानवैः ॥
[4]तेनोदकेन प्रतिमा स्नाप्या भूमौ च शास्त्रवत्।
नदभूमिश्च कर्तव्या सर्वदोषविवर्जिता ॥
[5]प्राप्ते तु यात्रादिवसे कूटागारं तु कारयेत्।
पुष्पैर्माल्यैस्तथा वस्त्रैः पताकाभिश्च शोभितम् ॥
घण्टासहस्रनिनदं सर्वशोभासमन्वितम् ।
आरोप्या प्रतिमा तत्र सुसूक्ष्मा च सुशोभना ॥

(१) राक. १७८ ; राप्र. ४१६.
(२) राक. १७८ ; राप्र. ४१६ द्याभ्यश्च (भ्यश्चैव).
(३) राक. १७८ ; राप्र. ४१६.
(४) राक. १७९ ; राप्र. ४१७ स्यायां (स्यां तु).

(१) राक. १७९ ; राप्र. ४१७.
(२) राक. १७९ ; राप्र. ४१७ नृत्य (वृंद्य) सरम् (सरैः).
(३) राक. १७९ ; राप्र. ४१७.
(४) राक. १८० ; राप्र. ४१७ वत् (वित्) नद (नट).
(५) राक. १८० ; राप्र. ४१७–४१८.

कूटागारं च वोढव्यं गजैरश्वैर्नरैर्वृषैः ।
देशकालानुसारेण वस्त्रमाल्याद्यलंकृतैः ॥
[1]सबलेनानुगन्तव्यं राज्ञा देवस्य पृष्ठतः ।
सुदूरे चानुगन्तव्यं तत्प्रयुक्तैश्च मन्त्रिभिः ॥
[2]यस्य यस्य समीपे तु स देवो याति पूजितः।
तेनाऽऽतिथ्यं च कर्तव्यं तस्मै धूपादिभिः सदा ॥
[3]क्ष्वेडितोत्कृष्टशब्दैश्च जयवाद्यस्वनेन च ।
यथागमं च कर्तव्यं नगरे च प्रदक्षिणम् ॥
[4]ततो देवगृहं तां तु संपूज्य प्रतिमां नयेत् ।
महान्तमुत्सवं कुर्वन् गीतनृत्यसमाकुलम् ॥
[5]तस्यां राज्ञा ततो देया दीपाः शतसहस्रशः ।
रङ्गभूमौ दिदृक्षूणां प्रकाशार्थं महात्मनः ॥
[6]तैस्तैः सुभाषितैः श्लोकैर्हर्षयित्वा जनांस्तथा ।
सर्वेषामनुकम्पार्थं धर्मचक्रं प्रवर्तयेत् ॥
रङ्गोपजीविनां पश्येत् तृतीयेऽहनि कौशलम् ।
यथाशक्ति धनं तेभ्यो दद्याद्दम्भं च वर्जयेत् ॥

(१) राक. १८० व्यं राज्ञा (यो राजा) व्यं त (व्यस्त) ; राप्र. ४१८.
(२) राक. १८० ; राप्र. ४१८ सदा (तथा).
(३) राक. १८० ; राप्र. ४१८.
(४) राक. १८० ; राप्र. ४१८ तां तु (प्राप्य) नृत्य (नृत्त).
(५) राक. १८० ; राप्र. ४१८ राज्ञा (रात्रौ).
(६) राक. १८०-१८१ ; राप्र. ४१८.

प्रेक्षाकाले प्रधानास्ते पूजितव्याः क्रमेण तु ।
संमानपूर्वं विधिवत्ताम्बूलकुसुमादिभिः ॥
[1]यात्रावसाने भूतानि पूजनीयानि सर्वदा ।
पूजोपचारैर्बलिभिस्ततो नक्तंचरानपि ॥
[2]अदृष्टविग्रहानेवं दिदृक्षूणां महोत्सवम् ।
संध्यायां परया भक्त्या त्यक्त्वा संदेहमात्मनः ॥
[3]सर्वमस्तीति विज्ञाय चेतसा निर्मलेन च ।
एकान्ते देवताः पूज्या वैशाखे मासि पूर्ववत् ॥
[4]गृहे गृहस्थैः संपूज्याः स्त्रियश्च गृहदेवताः ।
आचारान् पालयेदेतान् यस्तु राजा समाहितः ॥
[5]स पुत्रपौत्रसंयुक्तो दीर्घायुर्धनवान् भवेत् ।
सर्वत्र जयमाप्नोति याति स्वर्गं च शाश्वतम् ॥
[6]यदेतद्वैष्णवं वाक्यं देशेऽस्मिल्लँङ्घ्यते जनैः ।
तदा सस्यानि नश्यन्ति घोरैरुदकविप्लवैः ॥
अतिवृष्टिरनावृष्टिर्दुर्भिक्षं च तथा मृतिः ।
दम्भाभिमानलोभांस्तु तस्मात्त्यक्त्वा प्रयत्नतः ॥
यदुक्तं विष्णुना वाक्यं तत्कुर्यात्कृतनिश्चयः ॥

(१) राक. १८१ ; राप्र. ४१८ स्ततो (स्तथा).
(२) राक. १८१ ; राप्र. ४१८ नेवं (नेव).
(३) राक. १८१ एकान्ते (एकान्त) ; राप्र. ४१८.
(४) राक. १८१ ; राप्र. ४१९.
(५) राक. १८१ ; राप्र. ४१९ स्वर्गं (स्वर्गे).
(६) राक. १८१ ; राप्र. ४१९.

## स्कन्दपुराणम्

### कौमुदीमहोत्सवः

[1]प्रातः प्रभृति राजा च आज्ञापयति कौमुदीम् ।
देवरात्रिं च देवस्य रुद्रस्यासुरनाशिनीम् ॥
सुसंमृष्टोपलिप्ताभी रथ्याभिः क्रियतां पुरम् ।
वासोभिः संहतैः सर्वे भवन्तु पुरवासिनः ॥
स्रग्विणश्च शिरःस्नाताः सदास्पत्या यथाक्रमम् ।
गायन्तु गायनाश्चैव नृत्यन्तु नटनर्तकाः ॥
[2]उच्छ्रीयन्तां पताकाश्च गृहे वीथ्यापणेषु च ।
गृहाणि चोपलिप्तानि नित्यमेव भवन्तु वः ॥
[3]पुष्पप्रकरजुष्टानि धूपैर्नानाविधैरपि ।
स्रग्दामवन्ति सर्वाणि वनमालाकुलानि च ॥
[4]ब्राह्मणाश्चैव भोज्यन्तां क्रियन्तां बलयस्तथा ।
ब्रह्मघोषश्च सर्वत्र पुण्याहोदीरणानि च ॥
[5]दीपा रात्रौ च सर्वत्र राजमार्गे गृहेषु च ।
अनन्तराः क्रियन्तां वै प्रचुरस्नेहवर्तयः ॥
[6]तरुणाः सह योषिद्भिः समन्तात् पर्यटन्तु च ।
रममाणा हसन्तश्च गायन्तो नृत्यसेविनः ॥
[7]भाण्डवाद्यानि वाद्यन्तां नृत्यन्तां दिव्ययोषितः ।
महादेवस्य पूजां च गन्धपुष्पादिकां शुभाम् ॥

(१) राक. १८२ ; राप्र. ४१९.
(२) राक. १८२ ; राप्र. ४१९ गृहे (गृह).
(३) राक. १८२ ; राप्र. ४१९ जुष्टानि (तुष्टानि).
(४) राप्र. ४१९.
(५) राक. १८२ ; राप्र. ४२० प्रचुर (प्रचुरं).
(६) राक. १८२ ; राप्र. ४२० नृत्य (नृत्त).
(७) राक. १८२–१८३ ; राप्र. ४२० दिकां (दिकीं).

[1]उपहारांश्च विविधान् शयनानि महान्ति च ।
बलयः पुष्कलाश्चैव भक्ष्यभोज्यैरलंकृताः ।
दीपांश्च विविधाकारान् पानानि कृशरांस्तथा ॥
[2]फलानि च विचित्राणि मांसं पक्वं तथाऽऽमकम् ।
सुवर्णमणिचित्राणि ईश्वराय प्रयच्छत ॥
वध्यन्तां पशवश्चात्र भोज्यन्तां च द्विजोत्तमाः ।
यो न कुर्यादिदं सर्वं पुरवासी नरः क्वचित् ॥
पातयेत्तस्य शारीरं दण्डं राजा महायशाः ।
राजाऽपि संयतः शान्तः शुचिः प्रयतमानसः ॥
[3]दिवसे दिवसे रुद्रं स्नापयीत प्रयत्नवान् ।
पञ्चगव्येन शुद्धेन तैलेन च सुगन्धिना ॥
[4]क्षीरेण सर्पिषा दध्ना रसैश्च बहुभिः शुभैः ।
पुष्पैः फलैश्च बीजैश्च रत्नैश्चाद्भिः समन्वितैः ॥
भस्मना गन्धयुक्तेन उदकेन सुगन्धिना ।
एकैकशः स्वयं राजा घटानां दशभिः शतैः ॥
दिवसे दिवसे व्यास त्र्यम्बकं सोऽभिषेचयेत् ।
गन्धैः पुष्पैश्च धूपैश्च जाप्यैर्बलिभिरेव च ॥
[5]पूजयित्वा ततो राजा विप्रानन्यांश्च भोजयेत् ।
सत्कृत्वा पशुभिर्मध्यैर्वस्त्रैर्मणिभिरेव च ॥
[6]बलिवस्त्रान्नदानैश्च स्तूयमानो गृहान् व्रजेत् ॥

(१) राक. १८३ द्वितीयार्धं नास्ति ; राप्र. ४२०.
(२) राक. १८३ ; राप्र. ४२०.
(३) राक. १८३ ; राप्र. ४२० यीत (येत).
(४) राक. १८३ ; राप्र. ४२०.
(५) राक. १८३ सत्क (स कृ) ; राप्र. ४२०.
(६) राक. १८३ ; राप्र. ४२१ दानैश्च (दानेन).

# इन्द्रध्वजोच्छ्रायविधिः

## कौशिकगृह्यसूत्रम्

भाद्रपदे आश्विने वा शुक्लाष्टम्यामिन्द्रध्वजस्य प्रवेशः, श्रवणेनोत्थापनम्, उपवासहोमादिविधिः, राज्ञो भृत्यानां दीक्षितत्वं ब्रह्मचर्यं च

[१]अथ राज्ञामिन्द्रमहस्योपचारकल्पं व्याख्यास्यामः ॥

प्रोष्ठपदे शुक्लपक्ष अ(? आ)श्वयुजे वाऽष्टम्यां प्रवेशः ॥

श्रवणेनोत्थापनम् ॥

संभृतेषु संभारेषु ब्रह्मा राजा चोभौ स्नातावहतवसनौ सुरभिणौ व्रतवन्तौ कर्मण्यावुपवसतः ॥

श्वोभूते शंनोदेव्याः पादैरर्धर्चाभ्यामृचा षट्कृत्वोदकमाचामतः ॥

'अर्वाञ्चमिन्द्रम्, त्रातारम्, इन्द्रः सुत्रामा' इत्याज्यं हुत्वा ॥

अथेन्द्रमुत्थापयन्ति– 'आ त्वाऽहार्षम्, ध्रुवा द्यौः, विशस्त्वा सर्वा वाञ्छन्तु' इति ॥

सर्वतोऽप्रमत्ता धारयेरन् ॥

अद्भुतं हि विमानोत्थितमुपतिष्ठन्ते ॥

'अभिभूर्यज्ञः' इत्येतैस्त्रिभिः सूक्तैरन्वारब्धे राजनि पूर्णहोमं जुहुयात् ॥

अथ पशूनामुपाचारम् ॥

इन्द्रदेवताः स्युः ॥

ये राज्ञो भृत्याः स्युः सर्वे दीक्षिता ब्रह्मचारिणः स्युः ॥

इन्द्रं चोपसद्य यजेरंस्त्रिरात्रं पञ्चरात्रं वा ॥

त्रिरयनमहामुपतिष्ठन्ते हविषा च यजन्ते ॥

आवृतः 'इन्द्रमहम्' इति ॥

'इन्द्र क्षत्रम्' इति हविषो हुत्वा ब्राह्मणान् परिचरेयुः ॥

न संस्थितहोमाञ्जुहुयादित्याहुराचार्याः ॥

इन्द्रस्यावभृथादिन्द्रमवभृथाय व्रजन्ति ॥

अपां सूक्तैराप्लुत्य प्रदक्षिणमावृत्याप उपस्पृश्यानवेक्षमाणाः प्रत्युदाव्रजन्ति ॥

ब्राह्मणान् भक्तेनोपेप्सन्ति ॥

श्वः श्वोऽस्य राष्ट्रं ज्यायो भवत्येकोऽस्यां पृथिव्यां राजा भवति न पुरा जरसः प्रमीयते य एवं वेद यश्चैवं विद्वानिन्द्रमहेण चरति ॥

(१) कौसू. १४०।१–२२.

## आथर्वणपरिशिष्टम्

भाद्रपदशुक्लपक्षे इन्द्रमहोत्सवः, उपवासहोमादिविधिः, भृत्यानां दीक्षा ब्रह्मचर्यं च

[१]अथ राज्ञामिन्द्रमहोत्सवस्योपचारकल्पं व्याख्यास्यामः । प्रौष्ठपदे शुक्लपक्षे संभृतेषु संभारेषु ब्रह्मा राजा चोभौ स्नातावहतवसनौ सुरभिसुजातानुलेपनौ कर्मण्यौ व्रतवन्तावुपवसतः । व्रतवन्तौ श्वोभूते शंनोदेव्याः पादैरर्धर्चाभ्यामृचा षट्कृत्वोदकं परि वाचमाचान्तो(?) बर्हिरुपकल्पयित्वा राजानमन्वालभ्य जुहुयात् । 'अर्वाञ्चमिन्द्रम्, त्रातारमिन्द्रम्, इन्द्रः सुत्रामा, इममिन्द्र वर्धय क्षत्रियं मे, हन्ताय(?), वृषेन्द्रस्य, इन्द्रो जयाति' इति च हुत्वा राष्ट्रसंवर्गैश्च । अथेन्द्रमुत्थापयन्ति– 'आ त्वाऽहार्षमन्तः, ध्रुवा द्यौः, विशस्त्वा सर्वा वाञ्छन्तु' इति । सर्वतोऽप्रमत्ता धारयेरन् ।

(१) आप. १९(१)।१–३.

अद्‌भुतं हि सवनानयेत्(?) समुत्थितं भवति। यदि प्राच्यामग्निभयम्। यदि दक्षिणस्यां यमभयम्। यदि प्रतीच्यां वरुणभयम्। यद्युदीच्यां क्षुद्भयम्। यदन्तर्देशेभ्यो भयतो विद्यात् 'अग्निर्मा पातु, अग्निं ते वसुमन्त(? वन्त)मृच्छन्तु' इति यथास्वलिङ्गं द्वाभ्यां द्वाभ्यां प्रदक्षिणं प्रतिशिणं प्रतिदिशमुपस्थापयेत्। गृध्रश्चेदस्मिन्निपतति मृत्योर्भयं भवति। यद्वा कृष्णशकुनिरन्तरिक्षेण पततीति जयेत् 'यस्त्वा गृध्रः कपोतः' इत्यन्ततो जपेत्। सर्वत्रानाज्ञातेषु त्रिरात्रं घृतकम्बलम्॥

शिरोभङ्गे तु राजानं मध्यभङ्गे तु मन्त्रिणम्।
आदिभङ्गे जनपदं मूलभङ्गे तु नागरान्॥

इन्द्राटको यदा भिद्याद्राजकोशो विलुप्यते।
रज्जुच्छेदे परिजाते नृपतिस्तु विनश्यति॥

सावित्र्याऽभिमन्त्रितं कृत्वा प्रदक्षिणमावर्तयेद्राजानम्। 'अभिभूर्यज्ञः' इत्येतैस्त्रिभिः सूक्तैरन्वारब्धे राजनि पूर्णहोमं जुहुयात्॥

अथ पशूनामुपाचारम्। इन्द्रदेवताः स्युर्ये राज्ञो भृत्याः स्युः सर्वे दीक्षिता ब्रह्मचारिणः स्युः। इन्द्रं चोपसद्य यजेरन् त्रिरात्रं सप्तरात्रं वा। त्रिरयनमहामुपतिष्ठन्ते हविषा च यजन्ते। आवृतः 'इन्द्रमहम्' इति 'इन्द्र क्षत्रम्' इति हविषो हुत्वा ब्राह्मणान् स्वस्ति वाचयेन्द्रमवभृथाय व्रजन्ति। अपां सूक्तैराप्लुत्य प्रदक्षिणमावृत्याय उपस्पृश्यानपे(? वे)क्षमाणाः प्रत्येत्य ब्राह्मणान्भक्त्या यदीप्सितं वरप्रदानैः परितोषयेत्। अथ हैषमितिकमिति। श्वः श्वोऽस्य राष्ट्रं ज्यायो भवत्येकोऽस्यां पृथिव्यां राजा भवति न पुरा जरसः प्रमीयते य एवं वेद यश्चैवं विद्वानिन्द्रमहेण चरतीति ब्राह्मणम्॥

## महाभारतम्

उपरिचरवसोः कथाः – धर्मिष्ठाय राज्ञे उपरिचरवसवे स्वराज्ये धर्मपालनकारिणे विमानं माला इन्द्रध्वजनाम्नी यष्टिश्च इन्द्रेण दत्ता

वैशंपायन उवाच–

[1]राजोपरिचरो नाम धर्मनित्यो महीपतिः।
बभूव मृगयां गन्तुं स कदाचिद् धृतव्रतः॥

रञ्जकत्वाद्राजा। महीपतिः पृथ्वीपालकः। नीटी.

[2]स चेदिविषयं रम्यं वसुः पौरवनन्दनः।
इन्द्रोपदेशाज्जग्राह ग्रहणीयं महीपतिः॥

वसुः उपरिचरः। नीटी.

[3]तमाश्रमे न्यस्तशस्त्रं निवसन्तं तपोरतिम्।
देवः साक्षात्स्वयं वज्री समुपायान्महीपतिम्॥

[4]इन्द्रत्वमर्हो राजाऽयं तपसेत्यनुचिन्त्य वै।
तं सान्त्वेन नृपं साक्षात्तपसः संन्यवर्तयत्॥

साक्षात् प्रत्यक्षीभूय। नीटी.

इन्द्र उवाच–

[5]न संकीर्येत धर्मोऽयं पृथिव्यां पृथिवीपते।
तं पाहि धर्मो हि धृतः कृत्स्नं धारयते जगत्॥

न संकीर्येत, निर्नायकत्वात्। नीटी.

---

(१) भा. १।५७।१ ; भामु. १।६३।१ स कदाचित् (सदा किल).

(२) भा. १।५७।२ ; भामु. १।६३।२ ग्रह (रम).

(३) भा. १।५७।३ ; भामु. १।६३।३ रतिम् (निधिम्) उत्तरार्धे (देवाः शक्रपुरोगा वै राजानमुपतस्थिरे॥).

(४) भा. १।५७।४; भामु. १।६३।४ वर्तयत् (वर्तयन्).

(५) भा. १।५७।५ ; भामु. १।६३।५ इन्द्र उवाच (देवा ऊचुः) तृतीयचरणे (त्वया हि धर्मो विधृतः).

[1]लोक्यं धर्मं पालय त्वं नित्ययुक्तः समाहितः।
धर्मयुक्तस्ततो लोकान् पुण्यानाप्स्यसि शाश्वतान् ॥
[2]दिविष्ठस्य भुविष्ठस्त्वं सखा भूत्वा मम प्रियः।
ऊधः पृथिव्या यो देशस्तमावस नराधिप ॥
[3]पशव्यश्चैव पुण्यश्च सुस्थिरो धनधान्यवान्।
स्वारक्ष्यश्चैव सौम्यश्च भोग्यैर्भूमिगुणैर्युतः ॥

पशव्यः पशुभ्यो हितः। स्वारक्ष्यः स्वः स्वर्गः तत्तुल्यः अत एव रक्ष्यः। नीटी.

[4]अत्यन्यानेष देशो हि धनरत्नादिभिर्युतः।
वसुपूर्णा च वसुधा वस चेदिषु चेदिप ॥
[5]धर्मशीला जनपदाः सुसंतोषाश्च साधवः।
न च मिथ्याप्रलापोऽत्र स्वैरेष्वपि कुतोऽन्यथा ॥
[6]न च पित्रा विभज्यन्ते नरा गुरुहिते रताः।
युञ्जते धुरि नो गाश्च कृशाः संधुक्षयन्ति च ॥

गाः बलीवर्दान् देशोऽकृष्टपच्य इति हलधुरि न युञ्जते। नाऽपि शकटधुरि। पृष्ठवाहैरेव तत्कार्यसिद्धेरिति भावः। कृशान् दीनानाथादीन् संधुक्षयन्ति पुष्टान् कुर्वन्ति। यद्वा, वृषभान् कृशान् न धुरि युञ्जते, प्रत्युत संधुक्षयन्तीति। अन्ये तु—गाः स्त्रीगवीः, तासामप्यान्ध्रादिदुर्देशेषु धुरि योजनं दृष्टं तदिह नास्तीत्याहुः। नीटी.

(१) भा. १।५७।६ ; भामु. १।६३।६ श्लोकात्पूर्वम् 'इन्द्र उवाच' इत्यधिकम्, लोक्यं (लोके) नाप्स्यसि (न्पश्यसि).

(२) भा. १।५७।७ ; भामु. १।६३।७ भूत्वा (भूतो) ऊधः पृथिव्याः (रम्यः पृथिव्यां).

(३) भा. १।५७।८ ; भामु. १।६३।८ सुस्थिरो (प्रभूत).

(४) भा. १।५७।९ ; भामु. १।६३।९ अत्यन्या (अर्थवा).

(५) भा. १।५७।१० ; भामु. १।६३।१०.

(६) भा. १।५७।११ ; भामु. १।६३।११ नरा (पुत्रा) कृशाः (कृशान्).



[1]सर्वे वर्णाः स्वधर्मस्थाः सदा चेदिषु मानद।
न तेऽस्त्यविदितं किंचित् त्रिषु लोकेषु यद्भवेत् ॥

न त इति। आत्मज्ञानात्सर्वज्ञो भविष्यसीत्यर्थः। नीटी.

[2]देवोपभोग्यं दिव्यं च आकाशे स्फाटिकं महत्।
आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते ॥

उपपत्स्यते उपस्थास्यते। नीटी.

[3]त्वमेकः सर्वमर्त्येषु विमानवरमास्थितः।
चरिष्यस्युपरिस्थो वै देवो विग्रहवानिव ॥
[4]ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम्।
धारयिष्यति सङ्ग्रामे या त्वां शस्त्रैरविक्षतम् ॥

वैजयन्तीं विजयहेतुम्। अविक्षतमेव धारयिष्यति पालयिष्यति, न तु विक्षतम्। अनया शस्त्रमेव त्वां न बाधिष्यते इति भावः। नीटी.

लक्षणं चैतदेवेह भविता ते नराधिप।
इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत् ॥

लक्षणं चिह्नम्। नीटी.

वैशम्पायन उवाच—
[5]यष्टिं च वैणवीं तस्मै ददौ वृत्रनिषूदनः।
इष्टप्रदानमुद्दिश्य शिष्टानां परिपालिनीम् ॥

इष्टप्रदानं प्रीतिदानम् उद्दिश्य यष्टिं ददौ। नीटी.

शक्रोत्सवः पूजनपूर्वकं यष्टेः उच्छ्रयश्च

[6]तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा।
प्रवेशं कारयामास गते संवत्सरे तदा ॥

(१) भा. १।५७।१२ ; भामु. १।६३।१२.

(२) भा. १।५७।१३ ; भामु. १।६३।१३ देवो (दैवो) च आ (त्वामा).

(३) भा. १।५७।१४ ; भामु. १।६३।१४ वै (हि).

(४) भा. १।५७।१५–१६ ; भामु. १।६३।१५–१६.

(५) भा. १।५७।१७ ; भामु. १।६३।१७ (वैशंपायन उवाच०) परि (प्रति).

(६) भा. १।५७।१८ ; भामु. १।६३।१८.

शक्रस्य पूजार्थं मानार्थम् । तस्याः यष्टेः । गते संवत्सरे संवत्सरान्ते । नीटी.

**'ततः प्रभृति चाद्यापि यष्ट्याः क्षितिपसत्तमैः ।**
**प्रवेशः क्रियते राजन्यथा तेन प्रवर्तितः ॥**

यष्टिप्रवेशोऽद्यापि महाराष्ट्रादिषु दृश्यते । नीटी.

**'अपरेद्युस्तथा चास्याः क्रियते उच्छ्रयो नृपैः ।**
**अलंकृतायाः पिटकैर्गन्धैर्माल्यैश्च भूषणैः ॥**
**माल्यदामपरिक्षिप्ता विधिवत्क्रियतेऽपि च ॥**

अपरेद्युः प्रतिपदि द्वितीयसंवत्सरादौ । अत्युच्छ्रयः ऊर्ध्वं स्थापनम् । पिटकैः मञ्जूषारूपैर्वस्त्रमयैः कोशैः । यद्वा काञ्च्यामिव पिटकाः स्वर्णादिमया वेष्टकाः 'पेट्यः' इति भाषायां प्रसिद्धा ग्राह्याः । 'पिटकः पेटकः पेटा मञ्जूषाऽथ विहङ्गिका' इत्यमरः । नीटी.

**'भगवान् पूज्यते चात्र हास्यरूपेण शंकरः ।**
**स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः ॥**

हंसरूपेण युक्तो हंसरूपी । तस्यैव बुद्धिस्थस्य रूपस्य विशेषणं स्वयमेव गृहीतेनेति । 'हंसरूपेण वासवः' इति पाठे स्पष्टोऽर्थः । नीटी.

**'एतां पूजां महेन्द्रस्तु दृष्ट्वा देव कृतां शुभाम् ।**
**वसुना राजमुख्येन प्रीतिमानब्रवीद्विभुः ॥**

'देवः कृताम्' इति पाठः । विसर्गाभावे तु देवेति जनमेजयसंबोधनम् । नीटी.

**'ये पूजयिष्यन्ति नरा राजानश्च महं मम ।**
**कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः ॥**

(१) भा. १।५७।१९ ; भासु. १।६३।१९ यष्ट्याः (यष्टेः).

(२) भा. १।५७।२० ; भासु. १।६३।२०–२१ श्चा चास्याः (तस्तस्याः) उच्छ्र (ऽत्युच्छ्र) र्गन्धैर्मा (र्गन्धमा).

(३) भा. १।५७।२१ ; भासु. १।६३।२१–२२ हास्य (हंस) शंकरः (चेश्वरः).

(४) भा. १।५७।२२ ; भासु. १।६३।२२–२३ एतां (स तां) देव (देवः) द्विभुः (त्प्रभुः).

(५) भा. १।५७।२३–२५ ; भासु. १।६३।२३–२६.

महम् उत्सवम् । 'मह उद्धव उत्सवः' इत्यमरः । नीटी.

**तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति ।**
**तथा स्फीतो जनपदो मुदितश्च भविष्यति ॥**
**एवं महात्मना तेन महेन्द्रेण नराधिप ।**
**वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः ॥**
**'उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः ।**
**भूमिदानादिभिर्दानैर्यथा पूता भवन्ति वै ।**
**वरदानमहायज्ञैस्तथा शक्रोत्सवेन ते ॥**

वरदानं च महायज्ञाश्च तैः । नीटी.

**'संपूजितो मघवता वसुश्चेदिपतिस्तदा ।**
**पालयामास धर्मेण चेदिस्थः पृथिवीमिमाम् ।**
**इन्द्रप्रीत्या भूमिपतिश्चकारेन्द्रमहं वसुः ॥**

## विष्णुधर्मोत्तरपुराणम्

देवेभ्यो विष्णुना इन्द्रध्वजदानम्, शक्रध्वजमहोत्सवविधिः

**राम उवाच–**

**'शक्रसंपूजनं कार्यं कथं राज्ञा सुरोत्तम ।**
**सम्यग्भाद्रपदे मासि तन्ममाऽऽचक्ष्व पृच्छतः ॥**

**पुष्कर उवाच–**

**असुरैस्तु सुरा भग्नाः पुरा युद्धे भृगूत्तम ।**
**ब्रह्माणं शरणं जग्मुः सर्वभूतहिते रतम् ॥**
**'ते तमूचुः सुराः सर्वे निर्जिता दानवैर्वयम् ।**
**तानुवाच ततो ब्रह्मा क्षीरोदे मधुसूदनम् ॥**
**'गच्छध्वं सहिताः सर्वे स वः श्रेयः करिष्यति ।**
**एवमुक्ताः सुराः सर्वे क्षीरोदे केशवं ययुः ॥**

(१) भा. १।५७।२६ ; भासु. १।६३।२६–२७ दाना (रत्ना) यथा पूता (स्तथा पूज्या) वै (ते) ते (च).

(२) भा. १।५७।२७ ; भासु. १।६३।२८–२९ दिपतिस्तदा (दीश्वरो नृपः) भूमि (चेदि).

(३) विध. २।१५४।१–२ ; राप्र. ४२५–४२६.

(४) विध. २।१५४।३ तमूचुः (तु मूढाः) वयम् (वधम्) ; राप्र. ४२६.

(५) विध. २।१५४।४ मुक्ताः (मुक्त्वा) ; राप्र. ४२६.

[1]ददृशुश्च तदा देवं वासुदेवं जगद्गुरुम् ।
अमृताध्मातमेघाभं शङ्खचक्रगदाधरम् ॥
तुष्टुवुश्च महाभागं त्रिदशास्तं पुनः पुनः ।
सर्वेषामीश्वरं देवं भुवनस्यैककारणम् ॥

देवा ऊचुः–

नमस्ते पुण्डरीकाक्ष शरणागतवत्सल ।
देवारिबलदर्पघ्न त्रिदशेन्द्रसुखप्रद ॥
चामीकराभवसन तार्क्ष्यप्रवरकेतन ।
शेषपर्यङ्कशयन लक्ष्मीहृदयवल्लभ ॥
[2]सुरासुरशिरोरत्ननिघृष्टचरणाम्बुज ।
उन्निद्रचारुकमलविराजितकराम्बुज ॥
[3]स चैकदैव भग्नानामस्माकमसुरैर्भवान् ।
गतिस्तेन स संप्राप्ता दैत्यभग्नास्त्वदन्तिकम् ॥
[4]प्रसीद देवदेवेश जहि तानसुराधमान् ।
येऽस्माकं देवदेवेश पीडयन्ति सदैव तु ॥

श्रीभगवानुवाच–

[5]ध्वजमेतं प्रदास्यामि भवतामरिनाशनम् ।
दृष्टमात्रेण येनेह विद्रविष्यन्ति दानवाः ॥

पुष्कर उवाच–

[6]एवमुक्त्वा ध्वजं तेषां ददौ विष्णुरनुत्तमम् ।
सौवर्णमुच्छ्रितं दिव्यं शक्रध्वजमिति श्रुतम् ॥
[7]तमादाय सुराः सर्वे प्रययुर्दानवालयम् ।
देवानुपगताञ्छ्रुत्वा दानवा निर्ययुस्ततः ॥

(१) विध. २।१५४।५–८ ; राप्र. ४२६.

(२) विध. २।१५४।९ ; राप्र. ४२६ घृष्ट (घृष्ट).

(३) विध. २।१५४।१० ; राप्र. ४२६ स चैकदैव (सदैव देव).

(४) विध. २।१५४।११ ; राप्र. ४२६.

(५) विध. २।१५४।१२ ; राप्र. ४२६.

(६) विध. २।१५४।१३ ; राप्र. ४२६–४२७ एवमु (एतदु) मुच्छ्रि (मुत्थि).

(७) विध. २।१५४।१४ ; राप्र. ४२७.

[1]सुसंनद्धबलाः सर्वे प्रगृहीतायुधास्तथा ।
दृष्ट्वा देवबलं ते च शक्रकेतुविराजितम् ॥
[2]तत्तेजसा महाभाग मूर्च्छीभूताः क्षणेन तु ।
मूर्च्छितास्तु ततो दैत्यास्त्रिदशैर्विनिपातिताः ॥
[3]केचिद्भग्ना दिशो जग्मुः समुद्रं विविशुस्ततः ।
ततो लब्धजयः शक्रः पूजयामास तं ध्वजम् ॥
पूजयित्वा नृपतये वसवे प्रददौ तदा ।
गर्गोक्तेन विधानेन तं च पूजितवान् वसुः ॥
[4]तेनास्य तुष्टो मघवानिदं वचनमब्रवीत् ॥

इन्द्र उवाच–

[5]येऽप्यन्ये भूमिपाः श्रेष्ठाः शक्रध्वजमहोत्सवम् ॥
[6]अद्य प्रभृति धर्मज्ञ करिष्यन्ति समाहिताः ।
तेषां तु विविधा वृद्धिर्भविष्यति सदा द्विज ॥
[7]दुर्भिक्षं मरको व्याधिः परचक्रभयं तथा ।
सर्वाण्येतानि नश्यन्ति कृते शक्रध्वजोत्सवे ॥

पुष्कर उवाच–

[8]ततः प्रभृति राजानो राम शक्रमहोत्सवम् ।
कुर्वन्ति गर्गकथितं सर्वामयविनाशनम् ॥
[9]धन्यं यशस्यं रिपुनाशकारि
कीर्तिप्रदं धर्मफलप्रदं च ।
कार्यं नरेन्द्रैर्विजयाय यत्ना-
च्छक्रोत्सवं तत् कथयामि तुभ्यम् ॥

(१) विध. २।१५४।१५ ; राप्र. ४२७ स्तथा (स्ततः) देवबलं ते च (ते च बलं तेषां) केतु (केतुं).

(२) विध. २।१५४।१६ ; राप्र. ४२७ मूर्च्छी (मूढी) मूर्च्छितास्तु (मूढीभूताः).

(३) विध. २।१५४।१७–१८ ; राप्र. ४२७.

(४) विध. २।१५४।१९ ; राप्र. ४२७ मघ (भग).

(५) विध. २।१५४।२० ; राप्र. ४२७.

(६) विध. २।१५४।२१ ; राप्र. ४२७ मरको (मरणं).

(७) विध. २।१५४।२२ मय (भय) ; राप्र. ४२७.

(८) विध. २।१५४।२३ ; राप्र. ४२७ नाशकारि (नाशनं च).

पुष्कर उवाच–

[1]शिबिरात् पूर्वदिग्भागे भूमिभागे तथा शुभे ।
प्रागुदक्प्रवणे कुर्याच्छक्रार्थं भवनं शुभम् ॥
[2]वासोभिः शयनैः शुद्धैर्नानारागैस्तथैव च ।
ततः शक्रध्वजस्थानं मध्ये संस्थाप्य यत्नतः ॥
[3]मघवन्तं पटे कुर्यात् तस्य भागे तु दक्षिणे ॥
[4]वामभागे पटे कुर्याच्छचीं देवीं तथैव च ।
प्रोष्ठपादसिते पक्षे प्रतिपत्प्रभृति क्रमात् ॥
[5]तयोस्तु पूजा कर्तव्या सततं वसुधाधिपैः ।
वनप्रवेशविधिना शक्रयष्टिं ततो नृपः ॥
[6]आनयेद्घोरथेनाथ वाद्यवैः पुरुषैरथ ।
अर्जुनस्याजकर्णस्य प्रियकस्य वचस्य च ॥
[7]सुरदारुणश्च तथा तथैवोदुम्बरस्य च ।
चन्दनस्याथवा राम पद्मकस्याथवा यदि ॥
[8]अलाभे सर्वकाष्ठानां यष्टिं कुर्वीत वैणवीम् ।
सुवर्णनद्धां धर्मज्ञ तां च सम्यक्प्रवेशयेत् ॥
[9]प्रोष्ठपादसिते पक्षे अष्टम्यां रिपुसूदन ।
क्रमप्रमाणा विज्ञेया शक्रयष्टिस्ततो नृप ॥
[10]चतुर्भिरङ्गुलैर्हीना साऽग्रे भवति शर्मदा ।
अष्टाभिश्च तथा मूले छित्त्वा तोये यथा क्षिपेत् ॥

(१) विध. २।१५५।१ कुर्याच्छ ( देशे श ) ; राप्र. ४२७–४२८.

(२) विध. २।१५५।२ ; राप्र. ४२८ स्थाप्य (प्राप्य).

(३) विध. २।१५५।३ पटे ( पटं ) ; राप्र. ४२८.

(४) विध. २।१५५।४ ; राप्र. ४२८.

(५) विध. २।१५५।५ नृपः ( नृप ) ; राप्र. ४२८.

(६) विध. २।१५५।६ ; राप्र. ४२८ वाद्यवैः (वाऽऽनयेत् ) रथ (रयम् ) वचस्य (धवस्य).

(७) विध. २।१५५।७ ; राप्र. ४२८ प्रथमचरणे (सुरदारुतरोश्चैव).

(८) विध. २।१५५।८ ; राप्र. ४२८ काष्ठानां (वृक्षाणां) धर्मज्ञ (सर्वज्ञ).

(९) विध. २।१५५।९ ; राप्र. ४२८.

(१०) विध. २।१५५।१० ; राप्र. ४२८ भिश्च (ङ्गुलं) यथा ( ऽथ तां ).

[1]यायादुद्धृत्य नगरं सम्यगेव प्रवर्तते ।
तस्याः प्रवेशे नगरं पताकाध्वजमालि च ॥
[2]सिक्तराजपथं कुर्यात् तथाऽलंकृतबालकम् ।
नटनर्तकसंकीर्णं तथा पूजितदैवतम् ॥
[3]संपूजितगृहं राम तथा पूजितवानयम् ।
पौरैरनुगतो राजा सुवेषैः फलपाणिभिः ॥
[4]अष्टम्यां वाद्यघोषेण तां तु यष्टिं प्रवेशयेत् ।
प्राक्शिरस्कां ततः कुर्याद्वस्त्रैः संछादितां शुभैः ॥
[5]पूजितां पूजयेत्तां तु यावत्स्याद् द्वादशीदिनम् ।
एकादश्यां सोपवासो नृपः कुर्यात् प्रजागरम् ॥
[6]सांवत्सरेण सहितो मन्त्रिणा सपुरोधसा ।
रात्रौ जागरणं कार्यं नागरेण जनेन तु ॥
[7]स्थाने स्थाने महाभाग देया प्रेक्ष्या तथा मधु ।
पूजयेन्नृत्यगीतेन रात्रौ शक्रं नराधिपः ॥
द्वादश्यां तु शिरःस्नानो नृपतिः प्रयतस्ततः ।
यन्त्रेणोत्थापनं कुर्याच्छक्रकेतोः समाहितः ॥
[8]सुयन्त्रितं तु तं कुर्याद् गृहस्तम्भचतुष्टयम् ।
पूजयेत्तन्महाभाग गन्धमाल्यान्नसंपदा ॥
[9]नित्यं च पटयोः पूजां यष्टिपूजां च कारयेत् ।
बलिभिस्तु विचित्राभिस्तथा ब्राह्मणपूजनैः ॥

(१) विध. २।१५५।११ ; राप्र. ४२८.

(२) विध. २।१५५।१२ ; राप्र. ४२८ बालकम् (नागरम् ).

(३) विध. २।१५५।१३ ; राप्र. ४२८.

(४) विध. २।१५५।१४ प्राक्शिरस्कां (प्राक्छिरास्तां); राप्र. ४२८–४२९.

(५) विध. २।१५५।१५ स्याद् (सा) दिनम् (फलम् ) ; राप्र. ४२९ प्रजा ( सना ).

(६) विध. २।१५५।१६ ; राप्र. ४२९ सपुरो ( च पुरो ).

(७) विध. २।१५५।१७–१८ ; राप्र. ४२९.

(८) विध. २।१५५।१९ ; राप्र. ४२९ गृह ( गृहं ) भाग (भागं).

(९) विध. २।१५५।२० ; राप्र. ४२९.

[1]नित्यं च जुहुयान्मन्त्रैः पुरोधाः शाक्रवैष्णवैः ।
नित्यं नृत्येन गीतेन तथा शक्रं च पूजयेत् ॥
[2]द्वादश्यां पूजयेद्राजा ब्राह्मणान् धनसंचयैः ।
विशेषेण च धर्मज्ञ सांवत्सरपुरोहितौ ॥
[3]उत्थाने च प्रवेशे च शक्रं स्तूयान्नराधिपः ।
वक्ष्यमाणेन मन्त्रेण कालवित्सपुरोहितः ॥
[4]पूजयेदुत्थितं केतुं भूषणैर्विविधैरपि ।
छत्रेण च तथा वस्त्रैर्माल्यदामैस्तथैव च ॥
[5]एवं संपूजयेद्राम तदा दिनचतुष्टयम् ।
पञ्चमे दिवसे प्राप्ते शक्रकेतुं विसर्जयेत् ॥
[6]पूजयित्वा महाभाग बलेन चतुरङ्गिणा ।
नीत्वा करीन्द्रैस्त्रितयं ततो नद्यां प्रवाहयेत् ॥
[7]वाद्यघोषेण महता संगीतं तत्र कीर्तितम् ।
पौरा जानपदास्तत्र क्रीडां कुर्युस्तदाऽम्भसि ।
उत्सवं च तथा कार्यं जलतीरगतैर्महत् ॥
[8]एतद्विधानं नृपतिस्तु कृत्वा
प्राप्नोति वृद्धिं धनवाहनानाम् ।
नाशं तथा शत्रुगणस्य राम
महत्प्रसादं त्रिदशाधिनाथात् ॥

(१) विध. २।१५५।२१ न्मन्त्रैः (न्मन्त्रान्) वैष्णवैः (वैष्णवान्); राप्र. ४२९ नृत्येन गीतेन (गीतेन नृत्येन).
(२) विध. २।१५५।२२ ; राप्र. ४२९.
(३) विध. २।१५५।२३ ; शक्रं स्तूया (शक्रभूया); राप्र. ४२९ कालवित्सपु (कुशलश्च पु).
(४) विध. २।१५५।२४ ; राप्र. ४२९ दुत्थितं (दुच्छ्रितं).
(५) विध. २।१५५।२५ ; राप्र. ४२९ तदा (तथा).
(६) विध. २।१५५।२६ ; राप्र. ४२९.
(७) विध. २।१५५।२७ ; राप्र. ४३० द्वितीयचरणे (संगीतिस्तत्र कीर्तिता) तथा (तदा).
(८) विध. २।१५५।२८ नाथात् (नाथम्); राप्र. ४३०.

इन्द्रध्वजभङ्गादौ दुष्फलानि शान्तिकर्म च

पुष्कर उवाच–
[1]इन्द्रध्वजशिरो भज्येत् पतेदिन्द्रध्वजो यदि ।
भज्यते शक्रयष्टिर्वा नृपतेर्नियतं वधः ॥
इन्द्रध्वजभङ्गे फलाफलं विष्णुधर्मोत्तर एवोक्तम्– ' पुष्कर उवाच–इन्द्रध्वजशिरो ...... ॥ ' ।
राप्र. ४३३.
[2]यन्त्रभङ्गे तथा ज्ञेयं रज्जुच्छेदे तथैव च ।
मातृकायास्तथा भङ्गे परचक्रभयं द्विज ॥
[3]दिव्यान्तरिक्षभौमाः स्युरुत्पातास्तत्र वै यथा ।
तेषां तीव्रतमं ज्ञेयं फलमत्यन्तदारुणम् ॥
निलीयते चेत् क्रव्यादः शक्रयष्टौ यदा द्विज ।
राजा वा म्रियते तत्र स वा देशो विनश्यति ॥
[4]इन्द्रध्वजोपकरणं यत्किंचिद् द्विजसत्तम ।
विनश्यति तदा ज्ञेया पीडा नगरवासिनाम् ॥
[5]इन्द्रध्वजनिमित्ते तु प्रायश्चित्तमिदं स्मृतम् ।
इन्द्रयागं पुनः कुर्यात् सौवर्णेनेन्द्रकेतुना ॥
[6]राज्यं दत्त्वा च गुरवे बन्धनानि प्रमोचयेत् ।
सप्ताहं पूजयित्वा च ध्वजं दद्याद् द्विजातिषु ॥
[7]शान्तिरैन्द्री भवेत् कार्या यष्टव्यश्च पुरंदरः ।
महाभोज्यानि कार्याणि ब्राह्मणानां दिने दिने ॥
गावश्च देया द्विजपुंगवेभ्यो
हिरण्यवासोरजतैः समेताः ।
एवं कृते शान्तिमुपैति पापं
वृद्धिस्तथा स्यान्मनुजाधिपस्य ॥

(१) विध. २।१५६।१ ; राप्र. ४३३.
(२) विध. २।१५६।२ चक्र (चक्रे) ; राप्र. ४३३.
(३) विध. २।१५६।३–४ ; राप्र. ४३३.
(४) विध. २।१५६।५ ; राप्र. ४३३ ति तदा (त्यस्य वि).
(५) विध. २।१५६।६ ध्वज (वाजि) ; राप्र. ४३३.
(६) विध. २।१५६।७ ; राप्र. ४३३ बन्धनानि प्र (धनेन प्रति).
(७) विध. २।१५६।८–९ ; राप्र. ४३३.

शक्रध्वजोच्छ्रायसमये राज्ञा पठनीया
मन्त्राः, इन्द्रस्तवः

राम उवाच–

[1]शक्रोच्छ्राये तु यान् मन्त्रान् सोपवासो नृपः पठेत्।
तानहं श्रोतुमिच्छामि सर्वधर्मभृतां वर ॥

पुष्कर उवाच–

[2]शृणु मन्त्रानिमान् सम्यक् सर्वकिल्बिषनाशनान्।
प्राप्ते शक्रध्वजोच्छ्राये यः पठेत् प्रयतो नृपः ॥

शक्रध्वजोच्छ्रायकाले राज्ञा शक्रस्याऽऽशीर्वादरूपाः केचिन्मन्त्रा विष्णुधर्मोत्तरोक्ताः पठनीयाः। ते च– " पुष्कर उवाच–'शृणु मन्त्रानिमान् ...... ॥ "। राप्र. ४३०

[3]वर्धस्वेन्द्र जितामित्र वृत्रहन् पाकशासन।
देव देव महाभाग त्वं हि वर्धिष्णुतां गतः ॥

[4]त्वं प्रभुः शाश्वतश्चैव सर्वभूतहिते रतः।
अनन्ततेजा विरजा यशोविजयवर्धनः।
अप्रभुस्त्वं प्रभुर्नित्यमुत्तिष्ठ सुरपूजित ॥

[5]ब्रह्मा स्वयंभूर्भगवान् सर्वलोकपितामहः।
रुद्रः पिनाकभृद् दृप्तः शतभृद्देवसंस्तुतः ॥

[6]योगस्य नेता कर्ता च तथा विष्णुरुरुक्रमः।
तेजस्ते वर्धयन्त्वेते नित्यमेव महाबलाः ॥

[1]अनादिनिधनो देवो ब्रह्मगोपः सनातनः।
अग्निस्तेजोमयो भागो रुद्रात्मा पार्वतीसुतः ॥

[2]कार्तिकेयः शक्तिधरः षड्वक्त्रश्च गदाधरः।
स ते वरेण्यो वरदस्तेजो वर्धयतां विभुः ॥

[3]देवसेनापतिः स्कन्दः सुरप्रवरपूजितः।
आदित्या वसवो रुद्राः साध्या देवास्तथाऽश्विनौ ॥

[4]भृगुरङ्गिरसश्चैव विश्वेदेवा मरुद्गणाः।
लोकपालास्त्रयश्चैव चन्द्रः सूर्योऽनलोऽनिलः ॥

[5]देवाश्च ऋषयश्चैव यक्षगन्धर्वराक्षसाः।
समुद्रा गिरयश्चैव नद्यो भूतानि यानि च ॥

[6]तेजस्तपांसि सत्यं च लक्ष्मीः श्रीः कीर्तिरेव च।
प्रवर्धयन्तु ते तेजो जय शक्र शचीपते ॥

इति आशीर्वादरूपान् मन्त्रान् पठित्वा इन्द्रप्रार्थनां कुर्यात्। प्रार्थनारूपाश्च मन्त्रास्तत्रैव पठिताः–'तव चापि .... ॥'। राप्र. ४३१

[7]तव चापि जयान्नित्यं त्विह संपद्यते शुभम्।
प्रसीद राज्ञां विप्राणां प्रजानामपि सर्वशः ॥

[8]तव प्रसादात् पृथिवी नित्यं सस्यवती भवेत्।
शिवं भवतु निर्विघ्नं शाम्यन्तामीतयो भृशम् ॥

---

(१) विध. २।१५७।१.

(२) विध. २।१५७।२ ; राप्र. ४३० किल्बि (कल्म) यः (यान्).

(३) विध. २।१५७।३ वर्धस्वेन्द्र जि (वरस्विन्द्र जि) ; राप्र. ४३०.

(४) विध. २।१५७।४ तेजा विरजा (तेजो विरजो) ; राप्र. ४३०.

(५) विध. २।१५७।५ शतभृद्देव (चतसद्दय) ; राप्र. ४३०.

(६) विध. २।१५७।६ ; राप्र. ४३०.

(१) विध. २।१५७।७ ब्रह्मगोपः (ब्रह्मा स्रष्टा) अग्ने (अग्नि) ; राप्र. ४३०.

(२) विध. २।१५७।८ स ते (शतं) ; राप्र. ४३० क्त्रश्च ग (क्त्रोऽसिग) विभुः (विभो).

(३) विध. २।१५७।९ देवसे (देवः से) ; राप्र. ४३०.

(४) विध. २।१५७।१० ; राप्र. ४३१ (मरुद्गणा लोकपालाश्चन्द्रः सूर्योऽनिलोऽनलः ॥) एतावदेव.

(५) विध. २।१५७।११ ; राप्र. ४३१.

(६) विध. २।१५७।१२ यन्तु ते तेजो (यतु तत्तेजो) ; राप्र. ४३१.

(७) विध. २।१५७।१३ ; राप्र. ४३१ त्यं त्विह (त्समिह).

(८) विध. २।१५७।१४ ; राप्र. ४३१ शम्य (शाम्य).

[1]नमस्ते देवदेवेश नमस्ते बलसूदन ।
नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते ॥
[2]सर्वेषामेव लोकानां त्वमेका परमा गतिः ।
त्वमेव परमः प्राणः सर्वस्यास्य जगत्पते ॥
[3]पाशो ह्यसि पथः स्रष्टुं त्वमनल्पं पुरंदर ।
[4]त्वमेव मेघस्त्वं वायुस्त्वमग्निर्वैद्युतोऽम्बरे ॥
त्वमेव धनविक्षेता त्वामेवाऽऽहुः पुनर्धनम् ।
त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः ॥
[5]स्रष्टा त्वमेव लोकानां संहर्ता चापराजितः ।
त्वं ज्योतिः सर्वलोकानां त्वमादित्यो विभावसुः ॥
त्वं महद्भूतमाश्चर्यं त्वं राजा त्वं सुरोत्तमः ।
त्वं विष्णुस्त्वं सहस्राक्षस्त्वं देवस्त्वं परायणम् ॥
[6]त्वमेव चामृतं देव त्वं मोक्षः परमार्चितः ।
त्वं मुहूर्तो निमेषस्त्वं लवस्त्वं च पुनः क्षणः ॥
[7]शुक्लस्त्वं बहुलश्चैव कला काष्ठा त्रुटिस्तथा ।
संवत्सरर्तवो मासा रजन्यश्च दिनानि च ॥
[8]त्वमुत्तमा सगिरिवरा वसुंधरा
सभास्करं वितिमिरमम्बरं तथा ।
महोदधिः सतिमिङ्गिलस्तथा
महोर्मिमान् बहुमकरो झषाकुलः ॥

(१) विध. २।१५७।१५ ; राप्र. ४३१.

(२) विध. २।१५७।१६ ; राप्र. ४३१ त्वमेका (त्वमेकः) मः प्राणः सर्वस्याऽस्य (मं त्राणं सर्वस्यासि).

(३) विध. २।१५७।१७ ; राप्र. ४३१ नल्पं (नल्पान्).

(४) विध. २।१५७।१८ पूर्वार्धे (त्वमत्र मेघाविक्षिप्ता त्वं मे बाहुः प्रतर्दनम् । ) ; राप्र. ४३१.

(५) विध. २।१५७।१९–२० ; राप्र. ४३१–४३२.

(६) विध. २।१५७।२१ देव त्वं (देवस्त्वं) निमेषस्त्वं (स्थितिस्त्वं च) ; राप्र. ४३२ च (वै).

(७) विध. २।१५७।२२ ; राप्र. ४३२.

(८) विध. २।१५७।२३ वरा (चरा) वितिमि (तिमि) महो (सहो) मान् (वान्) ; राप्र. ४३२ भास्कर (भास्वरं) बहु (उरु).

[1]महायशास्त्वमिह सदा च पूज्यसे
महर्षिभिर्मुदितमना महाद्युते ।
अभिष्टुतः पिबसि च सोममध्वरे
वषट्कृतान्यपि च हवींषि भूतये ॥

[2]त्वं विप्रैः सततमिहेज्यसे फलार्थं
त्वं देवैरतुलबलौघ गीयसे त्वम् ।
त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा
वेदाङ्गान्यधिगमयन्ति सर्ववेदैः ॥

[3]वज्रस्य भर्ता भुवनस्य गोप्ता
वृत्रस्य हर्ता नमुचेर्निहन्ता ।
कृष्णे वसानो वसने महात्मा
सत्यानृते यो विविनक्ति लोके ॥

[4]यं वाजिनं गर्भमपां सुराणां
वैश्वानरं वाहनमभ्युपैति ।
नमः सदाऽस्मै त्रिदिवेश्वराय
लोकत्रयेशाय पुरंदराय ॥

[5]अजोऽव्ययः शाश्वत एकरूपो
विष्णुर्वराहः पुरुषः पुराणः ।
त्वमन्तकः सर्वहरः कृशानुः
सहस्रशीर्षा शतमन्युरीड्यः ॥

(१) विध. २।१५७।२४ महाय (महद्य) महाद्युते (महर्षिभिः) वषट्कृता (हुता) ; राप्र. ४३२ च पूज्यते (प्रपूज्यसे) अभिष्टुतः (महर्षिभिः).

(२) विध. २।१५७।२५ त्वं देवैरतुल (भेदार्थेष्वष्टसु) ; राप्र. ४३२.

(३) विध. २।१५७।२६.

(४) विध. २।१५७।२७ ; राप्र. ४३२ प्रथमचरणे (वज्रस्य भर्ता भुवनस्य गोप्ता) त्रिदिवे (त्रिदशे).

(५) विध. २।११५७।२८ सहस्र (सहर्ष) ; राप्र. ४३२ रीड्यः (रीश).

[1]कविं सप्तजिह्वं त्रातारमिन्द्रं
सवितारं सुरेशम्।
हृदयाभिशक्रं वृत्रहणं सुषेण-
मस्माकं वीरा उत्तरे भवन्तु ॥

[2]त्रातारमिन्द्रेन्द्रियकारणात्मञ्
जगत्प्रधानं च हिरण्यगर्भम्।
लोकेश्वरं देववरं वरेण्यं
चाऽऽनन्दरूपं प्रणतोऽस्मि नित्यम्॥

[3]इमं स्तवं देववरस्य कीर्तयेन्
महात्मनस्त्रिदशपतेः सुसंयतः।
अवाप्य कामान् मनसोऽभिरामान्
स्वर्लोकमायाति च देहभेदे ॥

## भविष्यपुराणम्

देवासुरयुद्धे दैवैः इन्द्रध्वजयष्टिः प्रतिष्ठापिता, इन्द्रेण देवाय वसवे ध्वजयष्टिर्दत्ता स्थापिता च देवेन वसुना

श्रीकृष्ण उवाच–

[4]पुरा देवासुरे युद्धे ब्रह्माद्यैरमरैर्नृप।
विजयार्थं महेन्द्रस्य ध्वजयष्टिः प्रतिष्ठिता ॥

मेरोरुपरि संस्थाप्य सिद्धविद्याधरोरगैः।
सा देवी ह्यर्चिता नित्यं भूषणैर्भूषिता स्वकैः ॥

स्वच्छत्रघण्टापिटकैः किङ्किणीबद्धबुद्बुदैः।
तां दृष्ट्वा दानवा नष्टा भयादेव रणे हताः।
गता रसातलं दैत्या देवाश्चापि दिवि स्थिताः ॥

ततः प्रभृति तां दिव्यामिन्द्रयष्टिं यजन्ति ते।
देवाः सर्वे गणाः सर्वे हृष्टास्तुष्टा युधिष्ठिर ॥

अतः स्वर्गं गतो राजा भूरिपुण्यवशाद्वसुः।
इन्द्रलोके महाभागो वसुदेवैः(? दैवैः)
सुपूजितः ॥

तस्मै दत्ता महेन्द्रेण वसु(? सो)यष्टिः
प्रगृह्यताम्।
पूजयित्वा महाभाग सर्वदैत्यापनुत्तये ॥

अवतार्य वर्षासमये सर्वैर्नृपतिभिः सह।
मह्यां संपूजयामास चक्रे चेन्द्रमहं वसुः ॥

महेन मघवा प्रीतो ददौ पुण्यं वसोर्वरम् ॥

येषु देशेषु मनुजा भक्तिभावपुरःसराः।
पूजयिष्यन्ति वर्षान्ते मया दत्तं महाध्वजम् ॥

तेषु देशेषु मुदिताः प्रजा रोगविवर्जिताः।
प्रभूतान्ना धर्मयुक्ता वृषमेधा महोत्सवाः ॥

भविष्यन्ति सुवेषाश्च सुभाषाश्च सुभूषणाः ॥

श्रुत्वैतद्वचनं राजा वसुर्वसुमतां वरः।
विशेषेण ततश्चक्रे वर्षे वर्षे महोत्सवम् ॥

नवसु सप्तसु वा दिनेषु कर्तव्ये इन्द्रध्वजमहोत्सवे ध्वजयष्टेः विचित्रवस्त्रालङ्करणं त्रयोदशविधपिटिकालङ्करणं ध्वजरज्जुबन्धनं हवनं द्विजपूजा गीतं नाट्यं दानं संमाननं प्रजागरः इत्यादीनि कर्तव्यानि कर्माणि

श्रवणे स्थापयेद्यष्टिं स्नानवस्त्रैः प्रपूजिताम्।
दैर्घ्येण विंशतिकरां सारदारुमयीं शुभाम् ॥

इन्द्रस्थाने पुरोद्दिष्टे इन्द्रमातृकसंज्ञके।
तस्मिन् यष्टिं नृपो भोक्ता स्वयं यत्नेन योजयेत् ॥

वस्त्रैर्विचित्रैः संवीतां पिटिकालंकृतां तथा।
पिटिकानां महाराज क्रमं च कथयामि ते ॥

प्रथमं लोकपालाख्यं चतुरस्रं सकर्णिकम्।
यमेन्द्रधनदैर्युक्तं वरुणेन समन्ततः ॥

वृत्तं खण्डास्त्रकं रम्यं द्वितीयं रक्तचूर्णितम्।
तृतीयं श्वेतकं चित्रमष्टास्रं पिटकं शुभम् ॥

---

(१) विध. २।१५७।२९ ; राप्र. ४३२.

(२) विध. २।१५७।३० ; राप्र. ४३२ ण्यं चाऽऽ (ण्यमा).

(३) विध. २।१५७।३१ ; राप्र. ४३२–४३३.

(४) भविष्य. ४।१३९।१–४३.

चतुर्थमिन्द्रगोपालवृत्तं मातृसमावृतम् ।
पञ्चमं चाष्टकोणं तु शुक्लं धातुविचित्रितम् ॥
कृष्णकर्णिकया षष्ठं वृत्तं बुद्बुदशोभितम् ।
सप्तमं चाष्टकोणं तु शुक्लं विद्याधरैर्युतम् ॥
अष्टमं पिटकं वृत्तं वरत्रासूत्रवेष्टितम् ।
नवग्रहयुतं दीप्तं नवमं च सचण्डिकम् ॥
ब्रह्मविष्णवीशसहितं दशमं शिवसंस्थितम् ।
कृष्णमेकादशं वृत्तं यमयुक्तं युधिष्ठिर ॥
छात्रं द्वादशमं शुक्लं ध्वजदीर्घं त्रयोदशम् ।
सकुशं पुष्पस्रग्दामघण्टाचामरचर्चितम् ॥
बन्धयित्वा चन्द्रपादै रज्जुभिः स्थूणिकां नरैः ।
शनैरुत्थापयेत्पार्थ हुत्वा वैश्वानरं द्विजान् ॥
दक्षिणाभिश्च संपूज्य गुडपायसपूपकैः ।
कुर्यान्महोत्सवं राजा दिनानि नव सप्त वा ॥
प्रेक्षणीयैर्महादानैर्नटैर्गीतैः कथानकैः ।
चक्रदोलाधरोत्सर्गैः कर्कटैर्मल्लयोधनैः ॥
वेश्याङ्गनानरैर्हृष्टैर्द्यूतक्रीडामहोत्सवैः ।
कर्पूरवस्त्रदानैश्च संमानैश्च परस्परम् ॥

ध्वजरक्षणकर्तव्यता

रात्रौ प्रजागरः कार्यो रक्षणाय प्रयत्नतः ।
काकोलूककपोतानां येन पातो न विद्यते ॥
काकाद्भवति दुर्भिक्षं कौशिकान्म्रियते नृपः ।
कपोताच्च प्रजानाशस्ततो रक्षेत्सदोद्यतः ॥
शैथिल्याद्रिरिभिः शक्रः प्रमादान्नीयते यदि ।
तस्मिन्देशे समुत्थानमिन्द्रकेतोर्न कारयेत् ॥
यावत्तु नीयते स्थानादन्यस्मादैन्द्रतो ध्वजः ॥
इन्द्रध्वजसमुत्थानं प्रमादान्न कृतं यदि ।
ततो द्वादशमे वर्षे कर्तव्यं नान्तरे पुनः ॥

ध्वजविषयकाणि विघ्नानि, विघ्ननाशार्थं कर्तव्यं शान्तिकं पौष्टिकं च कर्म

कथंचिद्यदि विघ्नः स्याद्विपाकं मे निबोध वै ।
छत्रभङ्गे छत्रभङ्गो ध्वजे राष्ट्रं विनश्यति ॥
मस्तके मन्त्रविच्छेदो मुखे मुख्यबलक्षयः ।
बाहुदण्डे वदेत्पीडां जठरे जाठरं भयम् ॥
वरत्रायां मित्रनाशः स्थूणिकासु पदातयः ।
क्षयं गच्छन्ति राजेन्द्र तस्माद्यत्नात्पुरंदरम् ॥
उत्थाप्य पूजयेद्भक्त्या दिवारात्रमतन्द्रितः ।
प्रमादात्पतिते भग्ने गते चेन्द्रध्वजे द्विधा ॥
सौवर्णं रौप्यकं कृत्वा पूर्णमुत्थापयेद् ध्वजम् ।
शान्तिकं पौष्टिकं कृत्वा द्विजेभ्योऽन्नं प्रदापयेत् ॥
त्रपुसैः कर्कटीभिश्च नालिकेरैः कपित्थकैः ।
बीजपूरैः सनारङ्गैर्भक्ष्यान्नैर्विविधैस्तथा ॥
नैवेद्यादिभिरभ्यर्च्य मन्त्रेणानेन तोषयेत् ।
वज्रहस्त सुरारिघ्न बहुनेत्र पुरंदर ।
क्षेमार्थं सर्वलोकस्य पूजेयं प्रतिगृह्यताम् ॥
श्रवणाद्भरणीं यावत्पूजां कृत्वा विधानतः ।
रात्रौ विसर्जयेच्छक्रं मन्त्रेणानेन पाण्डव ॥
सार्धं सुरासुरगणैः पुरंदर शतक्रतो ।
उपहारं गृहीत्वैनं महेन्द्रध्वज गम्यताम् ॥
एवं यः कुरुते यात्रामिन्द्रकेतोर्युधिष्ठिर ।
पर्जन्यः कामवर्षी स्यात्तस्मिन्राष्ट्रे न संशयः ॥
ईतयो न प्रवर्तन्ते तस्मान्मृत्युकृतं भयम् ।
विजित्य शत्रून्समरे वशे कृत्वा महीतलम् ।
भुक्त्वा राज्यं चिरं कालमिन्द्रलोके महीयते ॥
राष्ट्रे पुरे च नगरे सुरराजकेतो-
र्यत्रोत्सवो नृपजनैः क्रियते समेत्य ।
दुष्टोपसर्गजनितं परचक्रजं वा
तस्मिन्भयं भवति पार्थ न किंचिदेव ॥

## अग्निपुराणम्

शिविरे शक्रध्वजपूजाविधिः

[1]प्रोष्ठपादे सिते पक्षे प्रतिपत्प्रभृति क्रमात् ।
शिबिरात्पूर्वदिग्भागे शक्रार्थं भवनं चरेत् ॥
तत्र शक्रध्वजं स्थाप्य शचीं शक्रं च पूजयेत् ।
अष्टम्यां वाद्यघोषेण तां तु यष्टिं प्रवेशयेत् ॥

(१) अग्नि० २६८।३–१३

एकादश्यां सोपवासो द्वादश्यां केतुमुत्थितम् ।
यजेद्वस्त्रादिसंवीतं घटस्थं सुरपं शचीम् ॥
वर्धस्वेन्द्र जितामित्र वृत्रहन्पाकशासन ।
देवदेव महाभाग त्वं हि भूमिष्ठतां गतः ॥
त्वं प्रभुः शाश्वतश्चैव सर्वभूतहिते रतः ।
अनन्ततेजा वैराजो यशोजयविवर्धनः ॥
तेजस्ते वर्धयन्त्वेते देवाः शक्रः सुवृष्टिकृत् ।
ब्रह्मविष्णुमहेशाश्च कार्तिकेयो विनायकः ॥
आदित्या वसवो रुद्राः साध्याश्च भृगवो दिशः ।
मरुद्गणा लोकपाला ग्रहा यक्षाद्रिनिम्नगाः ॥
समुद्राः श्रीर्मही गौरी चण्डिका च सरस्वती ।
प्रवर्तयन्तु ते तेजो जय शक्र शचीपते ॥
तव चापि जयान्नित्यं मम संपद्यतां शुभम् ।
प्रसीद राज्ञां विप्राणां प्रजानामपि सर्वशः ॥
भवत्प्रसादात्पृथिवी नित्यं सस्यवती भवेत् ।
शिवं भवतु निर्विघ्नं शाम्यन्तामीतयो भृशम् ॥
मन्त्रेणेन्द्रं समभ्यर्च्य जितभूः स्वर्गमाप्नुयात् ॥

## देवीपुराणम्

ध्वजयष्टिवृक्षाः, यष्टिपरिमाणम्, वृक्षपूजनम्, वृक्षच्छेदनम्, यष्ट्यानयनम्, यष्ट्या अलङ्करणम्, यष्टिलक्षणानि,

समुच्छ्रायकर्म

[1]शुभे ऋक्षे च करणे मुहूर्ते शुभमङ्गले ।
दैवज्ञः सूत्रधारश्च वनं गच्छेत्सहायवान् ॥
[2]देवीप्रतिष्ठाविधिना यात्रायां यः प्रचोदितः ।
गत्वाऽन्विष्य शुभं वृक्षं प्रियङ्गुं धवमर्जुनम् ॥
[3]उदुम्बं गजकर्णं च पञ्चैतान् शोभनान् हरेत् ।
ध्वजार्थे वर्जयेद्वत्स देवतोद्यानजान् द्रुमान् ॥
उदुम्बम् उदुम्बरम् । राप्र. ४२१

(१) राक. १८४ ; राप्र. ४२१ ऋक्षे च ( ऋक्षेऽथ ).
(२) राक. १८४ यङ्गुं ( यङ्गु ) ; राप्र. ४२१.
(३) राक. १८४ ; राप्र. ४२१ म्बं गज ( म्बगज ).

[1]कन्यामध्योत्तमा यष्टीः करमानेन कल्पयेत् ।
एकादशकरा वत्स नवपञ्चकराऽपरा ॥
कन्या कनीयसी । राप्र. ४२१
अनिबद्धां कृमिचितां तथा पक्षिनिकेतनाम् ।
वल्मीकपित्र्यवनजां सुशुष्कां च सकोटराम् ॥
अनिबद्धां लतादिभिरवेष्टिताम् । पित्र्यवनजां श्मशानोत्पन्नाम् । राप्र. ४२१
[2]कुब्जां च घटसंसिक्तां तथा स्त्रीनामगर्हिताम् ।
विद्युद्वज्रहतां चैव दग्धां च परिवर्जयेत् ॥
[3]अलाभे चम्पकं चाऽऽम्रं शालशाकमयं तथा ।
कर्तव्यं शक्रचिह्नार्थे न चान्यवृक्षजं क्वचित् ॥
[4]शुभभूमिभवं ग्राह्यं शुभतोयं शुभावहम् ।
ततः संपूजयेद् वृक्षं प्राङ्मुखोदङ्मुखोऽपि वा ॥
शुभतोयं शुभतोयोत्पन्नम् । राप्र. ४२१
[5]नमो वृक्षपते वृक्ष त्वामर्चयति पार्थिवः ।
ध्वजार्थं तत्त्वतो नात्र अन्यथा उपगम्यताम् ॥
[6]रात्रौ देयो बलिः श्वभ्रे दिक्षु वृक्षे तथैव च ।
वासं वने महावृक्ष कृत्वा ह्यन्यत्र गम्यताम् ॥
[7]ध्वजार्थे देवराजस्य रक्षन्ति तव चात्र च ।
पूजयित्वा ततो वृक्षं बलिं सौमं तु दापयेत् ॥
[8]प्रभाते छेदयेद् वृक्षं शुभस्वप्नादिदर्शनैः ।
उदङ्मुखः प्राङ्मुखो वा मध्वक्तेनाथ पर्शुना ॥

(१) राक. १८४ ; राप्र. ४२१.
(२) राक. १८४ कुब्जां ( कुञ्जां ) ; राप्र. ४२१.
(३) राक. १८४–१८५ न्यवृ (न्यद्वृ) ; राप्र. ४२१ चम्पकं चाम्रं ( चन्दनं चाऽऽम्र ).
(४) राक. १८५ ; राप्र. ४२१–४२२.
(५) राक. १८५ ; राप्र. ४२२ तत्त्वतो नात्र अन्यथा ( अन्यथा नेदं तत्त्वया ).
(६) राक. १८५ ; राप्र. ४२२.
(७) राक. १८५ ; राप्र. ४२२ द्वितीयचरणे ( रक्षितं त्वां नयाम्यहम् ) सौमं तु ( भूम्यां प्र ).
(८) राक. १८५ ; राप्र. ४२२.

पूर्वोत्तरं पतञ् शस्तो निःशब्दो निर्व्रणः शुभः ।
अलग्नः पादपेऽन्यस्मिन्नन्यथा तु परित्यजेत् ॥
अष्टाङ्गुलं त्यजेन्मूलमग्रं तत्र जले क्षिपेत् ।
तथा तं चाऽऽनयेद्वत्स शकटेन वृषैरथ ॥
युवभिर्बलसंपन्नैः प्रयत्नात्पुरतः पुरम् ।
नीयमाना यदा यष्टिः समा वा चतुरस्रिका ॥
वृत्ता वा भङ्गमादत्ते राजपुत्रपुरोहितौ ।
आराभङ्गे बलं भिन्द्यान्नेम्या भङ्गे क्षयस्तथा ॥

(राजपुत्रपुरोहितौ) पीड्येते इति शेषः । राप्र. ४२२

[1]रथस्य त्वक्षभङ्गे तु शान्तिं तत्र तु कारयेत् ।
इन्द्रं यच्छेति मन्त्रेण जातवेदोमयेन वा ॥
[2]तथा नीत्वा शुभे लग्ने पुरे तामुपवेशयेत् ।
द्वारे शोभां पुरे रथ्यागृहेष्वपि च कारयेत् ॥
[3]पटुभिः पटहानादैर्वेश्यासंघस्य मङ्गलैः ।
द्विजानां वेदशब्दैश्च तां नयेद्यत्र चोच्छ्र्येत् ॥
[4]तत्रस्थां चित्रकर्मारनिर्मितैस्तां तु वेष्टयेत् ।
वस्त्रैस्तदैव कृत्तौतैः शुभैः सूक्ष्मैर्यथाक्रमम् ॥
[5]नन्दोपनन्दसंज्ञाश्च कुमार्यः प्रथमांशके ।
देव्यो जयाविजयाख्याः षोडशांशेऽव्यवस्थिताः ॥

प्रथमांशके प्रथमभागे । राप्र. ४२३

[6]अम्बिकां शत्रुजयित्रीं नत्वाऽथ ध्वजदैवतम् ।
ध्वजस्य परिमाणे ताः संपाद्यैव विनिर्दिशेत् ॥

(१) राक. १८५ शान्तिं (शान्तिः); राप्र. ४२२.

(२) राक. १८६ ; राप्र. ४२२ गृहे (हट्टे).

(३) राक. १८६ ; राप्र. ४२२ पटहा (पटहनि).

(४) राक. १८६ ; राप्र. ४२२–४२३ कृत्तौतैः (कृत्तोनैः).

(५) राक. १८६ ; राप्र. ४२३ जयाविज (जाया-विजा).

(६) राक. १८६ चैव (चेव); राप्र. ४२३ जयित्रीं (जरित्रीं.)

[1]षोडशांशविहीनानि कुर्याच्छेषाणि बुद्धिमान् ।
वाससां चित्रवर्णानां स्वयंभूः प्रथमामदात् ॥
सुभक्तां चतुरस्रां च विश्वकर्मा द्वितीयकम् ।
अष्टास्त्रिं च स्वयं शक्रो नीलरक्तामदात्पुरा ॥
[2]कृष्णं यमेन दत्तं च वरुणेन महांशुकम् ।
मञ्जिष्ठं(? ष्ठं) जलजाकारं वायुर्देवोऽपि षष्ठकम् ॥
[3]नीलवर्णं च तत्प्रादात्स्कन्दो बहुविचित्रितम् ।
वृत्तं तु दहनः प्रादात्स्ववर्णं तच्च अष्टमम् ॥
[4]वैडूर्यसदृशं चेन्द्रो ग्रैवेयं पुनरप्यदात् ।
चक्राङ्काकृतिवत्सूर्यो विश्वेदेवास्तु पद्मकम् ॥
[5]नीलं नीलोत्पलाभासमृषयोऽपि च तं ददुः ।
शुक्रेण गुरुणा न्यस्तं विशालं तच्च मूर्धनि ॥
[6]ग्रहैरपि विचित्राणि तानि दत्तानि मातृभिः ।
यद्यद्येनैव दत्तं तु केतोस्तत्तस्य भूषणम् ॥
[7]तद्वं तद्विजानीयाद्यन्त्रादिभिरथोच्छ्र्येत् ।
कर्षन्ती प्रवरां भूमिं यष्टी राष्ट्रं निहन्ति च ॥
[8]बालानां तलशब्देन देशघातं विनिर्दिशेत् ।
नृपघातकरी शीर्णा सर्वेशान्ता शुभावहा ॥
[9]शम्भुसूर्ययमेन्द्रेन्दुधनदानां च वारुणैः ।
वह्नेर्नागस्य मन्त्रैश्च होतव्या दधि चाक्षताः ॥

(१) राक. १८६ ; राप्र. ४२३.

(२) राक. १८६–१८७ वोऽपि षष्ठकम् (वायसुकरम्); राप्र. ४२३ मञ्जि (माञ्जि).

(३) राक. १८७ स्कन्दो बहु (छन्दोवहि); राप्र. ४२३ त्ववर्णं (त्सुवर्णं).

(४) राक. १८७ ; राप्र. ४२३.

(५) राक. १८७ ; राप्र. ४२३ तं ददुः (तद्दुः).

(६) राक. १८७ ग्रहै (गृहै); राप्र. ४२३.

(७) राक. १८७ ; राप्र. ४२३.

(८) राक. १८७ शीर्णा (कीर्णा); राप्र. ४२३.

(९) राक. १८७ न्द्रेन्दु (न्द्रेन्द्र); राप्र. ४२३–४२४.

[1]शुक्रं स्कन्दं गुरुं रुद्रमप्सरोभिः प्रपाठयेत् ।
हुत्वा च विधिवद्वह्निज्वालां लक्षे च बुद्धिमान् ॥

[2]सुतेजाः सुमनोदीप्ता महती रविसप्रभा ।
रक्ताशोकसमाकारा रथभेरीस्वना शुभा ॥

[3]शङ्खदुन्दुभिमेघानां नादाः शस्तास्तु पावके ।
कदलीष्विक्षुदण्डेषु पताकाश्च समुच्छ्रयेत् ॥

[4]अन्याश्च विविधाः शोभाः शक्रकेतौ समुच्छ्रयेत् ।
प्रौष्ठपद्यामथाष्टम्यां शुक्लायां शोभने दिने ॥

[5]आश्विने चाथ शुक्लायां श्रवणे वाऽथ उच्छ्रयेत् ।
घोषैश्च नटवृन्दैश्च पटभेरीनिनादितम् ॥

अत्रापि शुक्लायामष्टम्यामिति द्रष्टव्यम् ।

राप्र. ४२४

[6]वितानध्वजशोभाढ्यं पताकाभिः समुज्ज्वलम् ।
विष्ण्वीशशक्रमन्त्रेण सिंहरक्षःकृतेन च ॥

[7]दृढमातृकरन्ध्रस्थं शुभतोरणमार्गणम् ।
अवलम्बितमुत्तानमभग्नपिटकं समम् ॥

[8]न द्रुतं च समुत्थाप्यः केतुर्वासवजो विभो ।
उच्छ्रितं रक्षयेत्प्राज्ञः काकोलूककपोतयोः ॥

[1]न तत्र लयनं दद्यादन्येषामपि पक्षिणाम् ।
मन्त्रेण चोच्छ्रयं कुर्यादिन्द्रकेतोर्यथाविधि ॥

[2]यथा सुसंस्कृतं पूज्य सुखयन्त्रसुयन्त्रितम् ।
रात्रौ जागरणं कुर्यादिन्द्रमन्त्रानुकीर्तनैः ॥

[3]पुरोहितः सदैवज्ञः शुभशान्तिरतः सदा ॥

ध्वजतदङ्गानां पातादिदोषे कर्तव्यानि

केतुपातो नृपं हन्यात्पताका महिषीवधम् ॥

[4]पीटको युवराजस्य सदैवमनुकल्पयेत् ।
राष्ट्रं तोरणपातेन ध्वज अन्नक्षयो भवेत् ॥

[5]पतिते शक्रदण्डे च नृपमन्यं समादिशेत् ।
कृमिजालसमुत्थाने शलभात्तस्कराद्भयम् ॥

[6]सुसमे संस्थिते शान्तिर्नृपस्य नगरस्य च ।
तिष्ठत्येवोत्थितो यावत्तावद्युगसमाः समाः ॥

[7]निरता यजने केतो रज्जीरन्निन्द्रकन्यकाः ।
पतिते तु तथा कार्या पूजोत्थाने तु यादृशी ॥
रात्रौ शुभं कृत्यतमं नादृष्टं काकपोतकैः ।
नृपतिः सह राष्ट्रीयैर्यश्चैवं कारयेत्क्रतुम् ॥
नगरे वा पुरे खेटे यद्येवं कुरुते नृपः ।
पौरंदरं नगरद्वारे वृषसिंहसमुच्छ्रितम् ॥

[8]केतुं समस्तघोराणां नाशनं जयदं मतम् ।
एवं पूर्वं हरिः केतुं प्राप्तवान् वृषवाहनात् ॥

---

(१) राक. १८७ ; राप्र. ४२४ द्वह्निज्वालां (द्वह्निं ज्वाला).

(२) राक. १८८ तेजाः सु (तेजःसु) ; राप्र. ४२४.

(३) राक. १८८ ; राप्र. ४२४.

(४) राक. १८८ दिने (च ते) ; राप्र. ४२४.

(५) राक. १८८ ; राप्र. ४२४ णे वाऽथ (णेनाथ) पट (पट्ट).

(६) राक. १८८ ढ्यं पता (ढ्यपता) ; राप्र. ४२४.

(७) राक. १८८ ; राप्र. ४२४ पिट (पीठ).

(८) राक. १८८ ; राप्र. ४२४.

(१) राक. १८८ ; राप्र. ४२४ लयनं (लङ्घनं) मन्त्रेण (यन्त्रेण).

(२) राक. १८९ यन्त्रसु (यन्त्रं सु) ; राप्र. ४२४ पूज्य (पूज्यं) कीर्तनैः (कीर्तनम्).

(३) राक. १८९ ; राप्र. ४२४.

(४) राक. १८९ ; राप्र. ४२४–४२५ पीट (पीठ) द्वितीयचरणे (सचिवमनुकम्पनम्).

(५) राक. १८९ ; राप्र. ४२५.

(६) राक. १८९ ; राप्र. ४२५ वोत्थि (वोच्छ्रि).

(७) राक. १८९ ; राप्र. ४२५.

(८) राक. १८९ ; राप्र. ४२५ एवं (एनं).

[1]ततो ब्रह्माऽथ तेनैव ब्रह्मणः शक्रमागतः ।
तेन सोमस्य तद्दत्तं ततो दक्षं समागतः ॥
[2]तदाप्रभृति कुर्वन्ति नृपा अद्यापि चोच्छ्रयम् ।
एवं यः कारयेद्राजा केतुं विजयकारकम् ॥
तस्य पृथ्वी धनोपेता सद्वीपा वशगा भवेत् ॥

## कालिकापुराणम्

ध्वजयष्टिकृते प्रशस्ता वर्जनीयाश्च वृक्षाः, प्रशस्त-वृक्षपूजनम्, वृक्षच्छेदनम्, यष्टिपरिमाणतार-तम्यम्, यष्ट्यधिवासनम्, शक्रादिपूजनम्, ध्वजोत्थापनम्, होमः, शक्रविसर्जनम्, केतुविसर्जनम्

और्व उवाच–
[3]अथातः शृणु राजेन्द्र शक्रोत्थानं ध्वजोत्सवम् ।
यत् कृत्वा नृपतिर्याति न कदाचित् पराभवम् ॥
रवौ हरिस्थे द्वादश्यां श्रवणेन बिडौजसम् ।
आराधयेन्नृपः सम्यक् सर्वविघ्नोपशान्तये ॥
राजोपरिचरो नाम वसुनामापरस्तु यः ।
नृपस्तेनायमतुलो यज्ञः प्रावर्तितः पुरा ॥
प्रावृट्काले च तमसि द्वादश्यामसितेतरे ।
पुरोहितो बहुविधैर्वाद्यैस्तूर्यैः समन्वितः ॥
प्रथमं शक्रकेत्वर्थं वृक्षमामन्त्र्य वर्धयेत् ।
सांवत्सरो वा(? व)र्धकिश्च कृतमङ्गलकौतुकः ॥
उद्याने देवतागारे श्मशाने मार्गमध्यतः ।
ये जातास्तरवस्तांस्तु वर्जयेद्वासवध्वजे ॥
बहुवल्लीयुतं शुष्कं बहुकण्टकसंयुतम् ।
कुब्जं वृक्षादनीयुक्तं लताछन्नं तरुं त्यजेत् ॥
पक्षिवाससमाकीर्णं कोटरैर्बहुभिर्युतम् ।
पवनानलविध्वस्तं तरुं यत्नेन वर्जयेत् ॥
नारीसंज्ञाश्च ये वृक्षा अतिह्रस्वा अतिकृशाः ।
तान् सदा वर्जयेद्धीरः सर्वदा शक्रपूजने ॥
अर्जुनोऽप्यश्वकर्णश्च प्रियको धव एव च ।
औदुम्बरश्च पञ्चैते केत्वर्थे ह्युत्तमाः स्मृताः ॥
अन्ये च देवदार्वाद्याः शालाद्यास्तरवस्तथा ।
प्रशस्तास्तु परिग्राह्या नाप्रशस्ताः कदाचन ॥
धृत्वा वृक्षं ततो रात्रौ स्पृष्ट्वा मन्त्रमिमं पठेत् ।
यानि वृक्षेषु भूतानि तेभ्यः स्वस्ति नमोऽस्तु वः ॥
उपहारं गृहीत्वेमं क्रियतां वासवध्वजम् ।
पार्थिवस्त्वां वरयते स्वस्ति तेऽस्तु नगोत्तम ॥
ध्वजार्थं देवराजस्य पूजेयं प्रतिगृह्यताम् ।
ततोऽपरेऽह्नि तं छित्वा मूलमष्टाङ्गुलं पुनः ॥
जले क्षिपेत्तथाऽग्रस्य च्छित्वैव चतुरङ्गुलम् ।
ततो नीत्वा पुरद्वारं केतुं निर्माय तत्र वै ॥
शुक्लाष्टम्यां भाद्रपदे केतुं वेदीं प्रवेशयेत् ।
द्वाविंशद्धस्तमानस्तु अधमः केतुरुच्यते ॥
द्वात्रिंशत्तु ततो ज्यायान् द्वाचत्वारिंशदेव च ।
ततोऽधिकः समाख्यातो द्वापञ्चाशत्तथोत्तमः ॥
कुमार्यः पञ्च कर्तव्याः शक्रस्य नृपसत्तम ।
शालमय्यस्तु ताः सर्वा अपराः शक्रमातृकाः ॥
केतोः पादप्रमाणेन कार्याः शक्रकुमारिकाः ।
मातृकार्धप्रमाणं तु यन्त्रिहस्तद्वयं तथा ॥
एवं कृत्वा कुमारीश्च मातृकाः केतुमेव च ।
एकादश्यां सिते पक्षे यष्टिं तामधिवासयेत् ॥
अधिवास्य ततो यष्टिं गन्धद्वारादिमन्त्रकैः ।
द्वादश्यां मण्डलं कृत्वा वासवं विस्तृतात्मकम् ॥
अच्युतं पूजयित्वा तु शक्रं पश्चात् प्रपूजयेत् ।
शक्रस्य प्रतिमां कुर्यात् काञ्चनीं दारवीं च वा ॥
अन्यतैजससंभूतां सर्वाभावे तु मृन्मयीम् ।
तां मण्डलस्य मध्ये तु पूजयित्वा विशेषतः ॥
ततः शुभे मुहूर्ते तु केतुमुत्थापयेन्नृपः ।
वज्रहस्त सुरारिघ्न बहुनेत्र पुरंदर ॥

---

(१) राक. १८९ ; राप्र. ४२५ ब्रह्मणः (ब्रह्मणा) दक्षं (दक्षे).
(२) राक. १८९–१९० ; राप्र. ४२५.
(३) कालिका. ९०।१–५८.

क्षेमार्थं सर्वलोकानां पूजेयं प्रतिगृह्यताम् ॥

एह्येहि सर्वामरसिद्धसंघै-
रभिष्टुतो वज्रधरामरेश ।
समुत्थितस्त्वं श्रवणाद्यपादे
गृहाण पूजां भगवन्नमस्ते ॥

एवमुत्तरतन्त्रोक्तैर्दहनप्लवनादिभिः ।
इति मन्त्रेण तन्त्रेण नानानैवेद्यवेदनैः ।
अपूपैः पायसैः पानैर्गुडैर्धानाभिरेव च ॥
भक्ष्यैर्भोज्यैश्च विविधैः पूजयेच्छ्रीविवृद्धये ।
घटेषु दश दिक्पालान् ग्रहांश्च परिपूजयेत् ॥
साध्यादीन् सकलान् देवान् मातृः सर्वा अनुक्रमात् ।
ततः शुभे मुहूर्ते तु ज्ञानी वर्धकिसंयुतः ॥
केतूत्थापनभूमिं तु यज्ञवेद्यास्तु पश्चिमे ।
विप्रैः पुरोहितैः सार्धं गच्छेद्राजा सुमङ्गलैः ॥
रज्जुभिः पञ्चभिर्बद्धं यन्त्रश्लिष्टं समातृकम् ।
कुमारीभिस्तु संयुक्तं दिक्पालानां च पट्टकैः ॥
बृहद्भिरतिकान्तैश्च नानाद्रव्यैः सुपूरितैः ।
यथावर्णैर्यथादेशो योजितैर्वस्त्रवेष्टितैः ॥
युक्तं तं किङ्किणीजालैर्बृहद्घण्टौघचामरैः ।
भूषितं मुकुरैरुच्चैर्माल्यैर्बहुविधैस्तथा ॥
बहुपुष्पैः सुगन्धैश्च भूषितं रत्नमालया ।
चित्रमाल्याम्बरैश्चैव चतुर्भिरपि तोरणैः ॥
उत्थापयेन्महाकेतुं राजकीयः शनैः शनैः ।
तमुत्थाय महाकेतुं पूजितं मण्डलान्तरे ॥
प्रतिमां तां नयेन्मूलं केतोः शक्रं विचिन्तयन् ।
यजेत् तं पूर्ववत्तत्र शचीं मातलिमेव च ॥
जयन्तं तनयं तस्य वज्रमैरावतं तथा ।
ग्रहांश्चाप्यथ दिक्पालान् सर्वांश्च गणदेवताः ॥
अपूपाद्यैः पूजयेत्तु बलिभिः पायसादिभिः ।
पूजितानां च देवानां शश्वद्धोमं समाचरेत् ॥
होमान्ते तु बलिं दद्याद्वासवाय महात्मने ।
तिलं घृतं चाक्षतं च पुष्पं दूर्वां तथैव च ॥
एतैस्तु जुहुयाद्देवान् स्वैः स्वैर्मन्त्रैर्नरोत्तम ।
ततो होमावसाने तु भोजयेद् ब्राह्मणानपि ॥
एवं संपूजयेन्नित्यं सप्तरात्रं दिने दिने ।
ब्राह्मणैः सहितो राजा वेदवेदाङ्गपारगैः ॥
सर्वत्र शक्रपूजासु यज्ञेषु परिकीर्तितः ।
त्रातारमिति मन्त्रोऽयं वासवस्य प्रियः परः ॥
एवं कृत्वा दिवाभागे शक्रोत्थापनमादितः ।
श्रवणर्क्षयुतायां तु द्वादश्यां पार्थिवः स्वयम् ॥
अन्तपादे भरण्यां तु निशि शक्रं विसर्जयेत् ।
सुप्तेषु सर्वलोकेषु यथा राजा न पश्यति ॥
षण्मासान्मृत्युमाप्नोति राजा दृष्ट्वा विसर्जनम् ।
शक्रस्य नृपशार्दूल तस्मान्नेक्षेत तं नृपः ॥
विसर्जनस्य मन्त्रोऽयं पुराविद्भिरुदीरितः ।
सार्धं सुरासुरगणैः पुरंदर शतक्रतो ॥
उपहारं गृहीत्वेमं महेन्द्रध्वज गम्यताम् ।
सूतके तु समुत्पन्ने वारे भौमस्य वा शनेः ॥
भूमिकम्पादिकोत्पाते वासवं न विसर्जयेत् ।
उत्पाते सप्तरात्रं तु तथोपप्लवदर्शने ॥
व्यतीत्य शनिभौमौ च ह्यन्यर्क्षेऽपि विसर्जयेत् ।
सूतके त्वथ संप्राप्ते व्यतीते सूतके पुनः ॥
यस्मिन् तस्मिन् दिने चैव सूतकान्ते विसर्जयेत् ।
तथा केतुं नृपो रक्षेत् पतन्ति शाकुना यथा ॥
न केतौ नृपशार्दूल यावन्नहि विसर्जनम् ।
शनैः शनैः पातयेत्तु यथोत्थापनमादितः ॥
कृतं तथाऽन्यथा भग्ने केतौ मृत्युमवाप्नुयात् ।
विसृष्टं शक्रकेतुं तु सालंकारं तथा निशि ॥
क्षिपेदनेन मन्त्रेण त्वगाधे सलिले नृप ।
तिष्ठ केतो महाभाग यावत् संवत्सरं जले ॥

भवाय सर्वलोकानामन्तरायविनाशक ।
उत्थापयेत्तूर्यरवैः सर्वलोकस्य वै पुरः ॥
रहो विसर्जयेत् केतुं विशेषोऽयं प्रपूजने ।
एवं यः कुरुते पूजां वासवस्य महात्मनः ॥
स चिरं पृथिवीं भुक्त्वा वासवं लोक-
माप्नुयात् ।
न तस्य राज्ये दुर्भिक्षं नाऽऽधयो व्याधयः
क्वचित् ॥

स्थास्यन्ति मृत्युर्नाकाले जनानां तत्र जायते ।
तत्तुल्यः कोऽपि नान्योऽस्ति प्रियः शक्रस्य
पार्थिवः ।
तस्य पूजा सर्वपूजा केशवाद्याश्च तत्रगाः ॥
सकलकलुषहारि व्याधिदुर्भिक्षनाशं
सकलभवनिवेशं सर्वसौभाग्यकारि ।
सुरपतिगृहगाभिर्वाऽर्चनं शक्रकेतोः
प्रतिशरदमनेकैः पूजयेच्छ्रीविवृद्धयै ॥

——०——

# * नीराजनविधिः

## आथर्वणपरिशिष्टम्

प्रतिनिशं कर्तव्यं राज्ञ आरात्रिकम्

[1]न सुष्वाप पुरा शक्रो दानवानां पुरोधसा ।
प्रयुक्तैरौषधैर्योगैर्मन्त्राणां जपहोमतः ॥
प्रणिपत्य बृहस्पतिमथर्वाणं पुरंदरः ।
दानवैः परिभूतोऽहं त्राहि मामित्युवाच ह ॥
ततोऽसावेवमुक्तस्तु प्रभूतबलवर्धनम् ।
आरोग्यदं भूतिकरं क्षुद्रोपद्रवनाशनम् ॥
आरात्रिकं हि कर्तव्यं तस्य त्रातुमिदं तदा ।
कृत्वा पिष्टमयं दीपं सुवर्तिस्नेहसंयुतम् ॥
अतिनिहः प्रान्यानिति द्वाभ्यामेनं प्रदीपयेत् ।
पात्रे सपुष्पे संस्थाप्य सर्षपांश्च सहाक्षतैः ॥
प्रियङ्गु शतपुष्पां च दूर्वां चैव शतावरीम् ।
सपापहारिणीं भूतिं तत्रैव च बलिं न्यसेत् ॥
अप्सरोभिः परिवृतो गुरुर्गत्वा पुरंदरम् ।
प्रासादस्त्वं सुमनसमासने प्रमुखं स्थितम् ॥
प्रेतो यन्त्वेकशतं च दीपं समभिमन्त्रयेत् ।
त्रिः परिभ्रामयेद्राज्ञो मन्त्रिणाऽथ सुमङ्गलम् ॥
शाम्यन्त्यस्य ततो रोगा ग्रहा विघ्नविनायकाः ।
स्वस्त्यस्तु नृपराष्ट्राय स्वस्ति गोब्राह्मणाय च ॥
ततस्तु शङ्खध्वनिना दीपं गृहीत्वा
स तोयधारां प्रयतोऽपि निर्हरेत् ।
पुरोहितो ज्योतिषिकोऽपि वा स्वयं
हितैषिणी धात्र्यथवोपकारिता ॥
आचाम्याथ ह राजानमाचम्याऽऽदौ पुरोहितः ।
ब्राह्मणाय यथाशक्ति रुक्मं प्रातः प्रदापयेत् ॥
मूलकर्मादिकं तस्य पञ्चगुह्यककारितम् ।
भयं राज्ञो न भवति तेजो वीर्यं च वर्धते ॥
एवं विधानमखिलं विहितं यथाव-
देतत्समस्तशुभदं गदितं नृपाणाम् ।
नैवाऽऽपदः समुपयान्ति नृपं कदाचि-
दारात्रिकं प्रतिनिशं क्रियते तु यस्य ॥

आश्विनशुक्लतृतीयायां रक्षाबन्धनपूर्वकं हस्त्यश्वानां नीराजनम्, पौर्णमास्याममावास्यायां वा नक्षत्रविशेषयुक्तायां होमपूर्वकं हस्त्यश्वानां नीराजनम्

[1]अथ प्रतिसंवत्सरं राजकर्माणि क्रमेण वक्ष्यामः ॥

[2]अथाऽऽश्वयुजे मासे शुक्लपक्षस्य तृतीयेऽहनि हरिद्रायवानाम् 'रक्षन्तु त्वाऽग्नयः' इति चतसृभी रक्षां बद्ध्वा हस्त्यश्वानां नीराजनं कुर्यात् ॥

[3]अश्वोऽसि क्षिप्रजन्माऽसि...... ।
प्रदद्यात्स विशुद्धात्मा सप्तद्वीपां वसुंधराम् ॥

[4]हस्तेन युक्ते चन्द्रमसि पौर्णमास्याममावास्यायां वा पुण्ये नक्षत्रे शुचौ देशे । तन्त्रमित्युक्तम् । प्रायमिध्ममुपसमाधायान्वारभ्याथ जुहुयात् । 'सवित्रे स्वाहा, पतङ्गाय स्वाहा, पावकाय स्वाहा, सहस्ररश्मये स्वाहा, मार्तण्डाय स्वाहा, विष्णवे स्वाहा, प्रजापतये स्वाहा, परमेष्ठिने स्वाहा' इति हुत्वा कनकानां बद्ध्वा हस्त्यश्वानां पूर्ववन्नीराजनं कुर्यात् ॥

---

* नीराजनं नाम आरात्रिकाद्यपरपर्यायं कर्पूरघृतादिदीपभ्रामणम्, यत् भाषायाम् 'ओवाळणे, आरती' इति प्रसिद्धम् ।

(१) आप. ७।१.

(१) आप. १७।१ ; राप्र. १६९ राजक (राज्ञः क).

(२) आप. १७।१ रक्षां + (अश्वानां) ; राप्र. १६९ (नीराजनं कुर्यात्०).

(३) आप. १७।१ ; राप्र. १६९ द्वितीयतृतीयचरणौ न स्तः.

(४) आप. १७।१ ; राप्र. १६९ (पूर्ववन्०).

आश्विनपौर्णमास्यां हस्तिनीराजनम्

[1]अथाऽऽश्वयुजे मासे पौर्णमास्यामपराह्णे हस्तिनीराजनं कुर्यात् । प्रागुदक्प्रवणे देशे यत्र वा मनो रमते, 'गिरयस्ते पर्वताः' इत्येतया हस्तशतमर्धं वा मण्डलं परिगृह्य 'याभिर्यज्ञम्' इति संप्रोक्षेत् ॥

तत्र श्लोकाः–

[2]दशहस्तसमुत्सेधं पञ्चहस्तं तु विस्तृतम् ।
शान्तवृक्षमयं कुर्यात्तोरणं पुष्टिवर्धनम् ॥

[3]शुक्लैः शुक्लाम्बरध्वजैर्माल्यैश्च परिभूषितम् ।
कारयेद्बिले शुभ्रे रसैश्च परिपूरिते ॥

[4]रसैस्त्वामभिषिञ्चामि भूमे मह्यं शिवा भव ।
असपत्ना सपत्नघ्नी मम यज्ञविवर्धनी ॥
इमौ स्तम्भौ घृतान्वक्तावुभौ मा यशसाऽवतात् ।
यो मा कश्चाभिदासति तमिमौ स्तम्भौ
निर्दहताम् ॥ इति ॥

'उच्छ्रयस्व, इमा या ब्रह्मणस्पते' इत्येताभ्यां सुवर्णमालापताकैः स्तम्भौ संयोज्य तस्याधस्ताच्चतुर्हस्तां वेदिं कृत्वा दर्भपवित्रपाणिर्बलिं पुष्पाणि च दत्त्वा मधुलाजामिश्रैः स्वस्तिकसंयावकदधिकृसरापूपकापायसघृतविविधपानभक्षफलैरग्निं परिस्तीर्य 'आपो अस्मान् मातरः सूदयन्तु' इति चतुरौदुम्बरान् कुम्भान् ह्रदोदकेन पूरयित्वा प्रतिदिशमवस्थाप्य दध्यात् । रौद्राग्नेयवायव्यवारुणा मन्त्राः । रक्षोघ्नं कृत्यादूषणं यशस्यवर्चस्यानि च हुत्वौषधीः समादाय द्विहस्तं मण्डलमित्युक्तम् ॥

तत्र श्लोकाः (? कौ)–

[1]बृहत्कण्टारिकण्टकालघुकण्टारिकाः स्मृताः ।
सुवर्णपुष्पी श्वेतगिरि कर्णिका हयुदिसत्रा ॥

[2]सिंही व्याघ्री च हरिणी ह्यमृता चापराजिता ।
पृश्निपर्णी च दूर्वा च पद्ममुत्पलमालिनी ॥

[3]तामनुमन्त्रयते । वैणवं कटकमवस्थाप्याऽऽदध्यात् । द्वैपवैयाघ्रानडुच्चर्म परिस्तीर्य ततो या स्यादधिदेवता तस्यै बलिं दत्त्वा पिण्डानि च दद्यात् । हस्तिनमाचामयेत् ॥

[4]यस्यां दिशि स रिपुर्भवति तां दिशं गत्वा हस्तिनमानयेद्धिरण्येन रजतेन वज्रमणिमुक्तादिभिः शङ्खेन चन्दनेन भद्रदारुणा कुष्ठेन नलदेन रोचनेनाञ्जनेन मनःशिलया पद्मकुमुदोत्पलैः । 'ममाग्ने वर्चः' इति सूक्तं दक्षिणोत्तरमुखं प्रतिजपेत् । शेषेण गात्राण्यभ्यञ्जयेत् ॥

तत्र श्लोकः–

[5]हस्तिनां रक्षणे दण्डः कर्तव्यो वैणवो नवः ।
षोडशारत्निमात्रस्तु चारुपर्वमनोरमः ॥

[6]तेन वारणान् वारयेत् । दन्ताग्रेषु तृणानि कृत्वा 'यथा हव्यं वहसि' ग्रसति । 'सुजातं जातवेदसम्' इत्यग्निं प्रज्वालयेत् । 'सुजातं जातवेदसम्' इति वाचयेत् । 'यथा हव्यम्' इति नीराजयित्वा 'निधिं बिभ्रती' इति शालां प्रवेशयेत् । अनपेक्षमाणाः स्वानि स्थानानि व्रजन्ति दीर्घायुषो बलवन्तश्च भवन्ति । गोसहस्रं कर्त्रे दक्षिणा ग्रामवरं च ॥

---

(१) आप. १८(१)।१ ; राप्र. १७० पौर्ण (पूर्ण) हस्तिनी (हस्तिने नी).

(२) आप. १८(१)।१ ; राप्र. १७० शान्त (शान्ति).

(३) आप. १८(१)।१ दविले (त बिले) ; राप्र. १७०.

(४) आप. १८(१)।१ ; राप्र. १७०–१७१.

(१) आप. १८(१)।१ ; राप्र. १७१ सत्रा (सत्त्वा).

(२) आप. १८(१)।१ ; राप्र. १७१.

(३) आप. १८(१)।२ ; राप्र. १७१.

(४) आप. १८(१)।३ ; राप्र. १७१ स रिपुर्भ (रिपुर्न भ).

(५) आप. १८(१)।३ ; राप्र. १७१ पर्वम (पर्वा म).

(६) आप. १८(१)।३ ; राप्र. १७२.

'निधिं बिभ्रती बहुधा गुहा वसु' इति सूक्तं पठित्वा शालां प्रवेशयेत्। राप्र. १७२

## कौटिलीयमर्थशास्त्रम्

नीराजनाकालः

'नीराजनामाश्वयुजे कारयेन्नवमेऽहनि।
यात्रादाववसाने वा व्याधौ वा शान्तिके रतः॥

नीराजनाम् आरात्रिकाम् आश्वयुजे मासि कारयेत् नवमेऽहनि नवम्याम्, यात्रादौ अवसाने वा उद्योगस्याऽऽरम्भे समाप्तौ च, व्याधौ वा अश्वमारके च, शान्तिके रतः शान्तिप्रयोजनके कर्मण्यासक्तः। श्रीमूला.

'तिस्रो नीराजनाः कार्याश्चातुर्मास्यृतुसंधिषु॥

तिस्रो नीराजनाः बलवृद्धिदुरितशान्तिप्रयोजनाः आरात्रिकाः कार्याः। कदा कदा? चातुर्मास्यृतुसंधिषु– चातुर्मास्यः चतुर्षु मासेषु भवाः पौर्णमास्यः, तासु ऋतुसंधिषु पूर्वापरऋतुसंधिस्थासु अर्थात् कार्तिकीफाल्गुन्याषाढीषु। श्रीमूला.

## विष्णुधर्मोत्तरपुराणम्

हस्त्यश्वानां नीराजनाख्यं शान्तिकर्म, तद्यथा– हस्त्यश्वानां तोरणत्रितयसहितस्य आश्रयस्य निर्मितिः, देवानामष्टदिव्यमहागजानां च पूजा, हवनम्, गजाश्वस्नापनम्, गजाश्वानामलंकृतानामन्नपिण्डेन भोजनपूर्वकं राजगजं पुरस्कृत्य निष्क्रामणम्, स्वगृहनयनम्, हस्त्यश्वानां पूजनम्, राज्ञः आरोहणम्, आश्रयरक्षणं च

राम उवाच–

'नीराजनविधिं त्वत्तः श्रोतुमिच्छामि सत्तम।
कथं कार्या नरेन्द्रस्य शान्तिर्नीराजने प्रभो॥

(१) कौ. २।३०.

(२) कौ. २।३२.

(३) विध. २।१५९।१–४ ; राप्र. ४३४.

पुष्कर उवाच–

पूर्वोत्तरे तु दिग्भागे नगरात् सुमनोहरे।
विस्तीर्णं कारयेद्राजा सुमनोहरमाश्रयम्॥
कटैर्गुप्तं कुशास्तीर्णं पताकाध्वजशोभितम्।
तोरणत्रितयं तत्र प्राङ्मुखं कारयेच्छुभम्॥
कार्यं षोडशहस्तं तु तोरणं तु समुच्छ्रितम्।
वैपुल्यं दशहस्तं तु तत्र कार्यं भृगूत्तम॥
'तोरणाद्दक्षिणे भागे तत्र कार्यं समाश्रयम्।
देवतार्चा भवेद्यत्र तथाऽग्निहवनक्रिया॥
'अष्टहस्तायतोत्सेधमुल्मुकानां तु वामतः।
कार्यं भवति शुष्काणां कूटं भृगुकुलोद्वह॥
'पञ्चरङ्गकसूत्रेण शतग्रन्थिं मनोरमाम्।
मध्यमे तोरणे कुर्याच्छतपाशीं तु मध्यगाम्॥
छादयित्वा कुशैस्तां तु मृदा संछादयेत् पुनः।
तस्याश्च लङ्घनं वर्ज्यं प्रयत्नात् सर्वजन्तुभिः॥
न लङ्घिता सा यावत्स्यात्प्रथमं राजहस्तिना।
चित्रां त्यक्त्वा यदा स्वातिं सविता प्रतिपद्यते॥
ततः प्रभृति कर्तव्या यावत् स्वातौ रविः स्थितः।
आश्रमे प्रत्यहं देवाः पूजनीया द्विजोत्तम॥

देवाः हरिहरादिप्रतिमाः। राप्र. ४३४

ब्रह्मा विष्णुश्च शंभुश्च शक्रश्चैवानलानिलौ।
विनायकः कुमारश्च वरुणो धनदो यमः॥

तानेव दर्शयति– ब्रह्मेत्यादिना। राप्र. ४३४

विश्वान् देवान् महाभाग उच्चैःश्रवसमेव च।
अष्टौ महागजाः पूज्यास्तेषां नामानि मे शृणु॥
'कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः।
सुप्रतीकाञ्जनौ नील एतेऽष्टौ देवयोनयः॥

(१) विध. २।१५९।५ ; राप्र. ४३४ कार्यं समाश्रयम् (कार्यमथाऽऽश्रमम्) तार्चा (ता च).

(२) विध. २।१५९।६ ; राप्र. ४३४ द्वह (द्भव).

(३) विध. २।१५९।७–१२ ; राप्र. ४३४–४३५.

(४) विध. २।१५९।१३ ; राप्र. ४३५ काञ्जनौ (कोऽञ्जनो).

[1]पूजा कार्या ग्रहर्क्षाणां तथैव च पुरोधसा ।
ततस्तु जुहुयाद्वह्नौ पुरोधाः सुसमाहितः ॥
[2]यथाभिमतदेवानां मन्त्रैस्तल्लिङ्गसंज्ञकैः ।
तथा च मन्त्रहीनानां प्रणवेन महाभुज ॥

प्रणवेन प्रणवाद्येन नाममन्त्रेण । राप्र. ४३५

[3]समिधः क्षीरवृक्षाणां तथा सिद्धार्थकानि च ।
घृतं तिलांश्च धर्मज्ञ तथा चैवाक्षतानि च ॥
हुत्वा च कलशान्कुर्यात्सोदकान्गन्धसंयुतान् ।
पूजितान् माल्यगन्धैश्च वनस्पतिविभूषितान् ॥
[4]पञ्चरङ्गकसूत्रेण कुर्याद्वस्त्रगतांस्तथा ।
भल्लातशालिसिद्धार्था वचाकुष्ठप्रियङ्गवः ॥
[5]तोरणात् पश्चिमे भागे कलशैः पूर्वकल्पितैः ।
ततः संस्नापनीयाः स्युर्मन्त्रपूतैर्गजोत्तमाः ॥
[6]तुरगाश्च महाभाग चालंकृत्य ततस्तु तान् ।
ततोऽभिषेकनागस्य तथा तत्तुरगस्य च ॥
[7]अन्नपिण्डं ततो देयमभिमन्त्र्य पुरोधसा ।
तस्याभिनन्दने राज्ञो विजयः परिकीर्तितः ॥
[8]त्यागे च तस्य विज्ञेयं महद्भयमुपस्थितम् ।
निष्कामयेत्तोरणैस्तु ततो हि प्रथमं गजान् ॥
तत्रापि प्रथमं राम अभिषिच्य गजोत्तमम् ।
तस्याऽऽदौ शतपार्शीं तु नरः पञ्चनखोऽपि वा ॥

(१) विध. २।१५९।१४; राप्र. ४३५ ततस्तु (ततश्च).

(२) विध. २।१५९।१५ ज्ञकैः (ज्ञकम्); राप्र. ४३५.

(३) विध. २।१५९।१६–१७; राप्र. ४३५.

(४) विध. २।१५९।१८; राप्र. ४३५ र्था वचाकुष्ठ (र्थंवचाकुष्ट).

(५) विध. २।१५९।१९ जोत्तमाः (जोत्तमैः); राप्र. ४३५.

(६) विध. २।१५९।२० गाश्च (गांश्च); राप्र. ४३५ चालं (अलं).

(७) विध. २।१५९।२१–२२; राप्र. ४३५.

(८) विध. २।१५९।२३; राप्र. ४३५ षिच्य ग (षिक्तग).

[1]अथ ह्यन्यो लङ्घयेत्तां राज्ञो मरणमादिशेत् ।
दुर्भिक्षं तत्र विज्ञेयं गोखरोष्ट्रैश्च लङ्घने ॥

जघन्यो नरः शूद्रचाण्डालादिः । जघन्यः पञ्चनखः श्वादिः । राप्र. ४३६

[2]लङ्घयेद्वामपादेन यदि तां नृपकुञ्जरः ।
राज्ञीपुरोहितामात्यराजपुत्राहितं भवेत् ॥
[3]राज्ञस्तु मरणं ब्रूयादाक्रमेत्तां यदाऽपरः ।
राज्ञोऽपि जयमाचष्टे लङ्घयन् दक्षिणेन ताम् ॥
[4]राजहस्तिनि निष्क्रान्ते सा त्वपास्या तदा भवेत् ।
निष्कामेयुस्ततः सर्वे प्राङ्मुखास्तोरणैर्गजाः ॥
[5]ततोऽश्वाः सुमहाभाग ततस्तु नरसत्तमाः ।
ततश्छत्रं ध्वजं चैव राजलिङ्गानि यानि च ॥
[6]आश्रमे तानि संस्थाप्य पूजयेदायुधानि च ।
पञ्चरङ्गकसूत्रेण यास्ताः प्रतिसराः कृताः ॥
*[7]दूष्या दूष्येतिमन्त्रेण निबध्नीयात्पुरोहितः ।
सर्वेषां नृपनागानां तुरगाणां च भार्गव ॥

* 'दूष्या दूषिरसि' (असं. २।११।१) इति मन्त्रानुपूर्वी । अतो वृत्तभङ्गं कृत्वा 'दूष्यादूषिरिति मन्त्रेण' इति पठितुं युक्तम् । रेफं त्यक्त्वा इकारपर्यन्तस्यैवानुकरणमिति कल्पनायां तु 'दूष्या दूषीति' इति भाव्यम् ।

(१) विध. २।१५९।२४; राप्र. ४३६ प्रथमचरणे (जघन्यो लङ्घयेत्तां तु) गोखरोष्ट्रैश्च (खरोष्ट्रैश्चैव).

(२) विध. २।१५९।२५ राज्ञीपु (राजा पु) पुत्रा (पुत्र); राप्र. ४३६.

(३) विध. २।१५९।२६ क्रमेत्तां (क्रमेत्तं); राप्र. ४३६.

(४) विध. २।१५९।२७; राप्र. ४३६.

(५) विध. २।१५९।२८ ऽश्वाः (ऽस्त्राः) सत्तमाः (सत्तम); राप्र. ४३६.

(६) विध. २।१५९।२९; राप्र. ४३६.

(७) विध. २।१५९।३० दूष्या दू (दूष्याद् दू); राप्र. ४३६.

[1]स्वगृहेषु ततो नेयाः कुञ्जरास्तुरगैः सह।
स्वातिस्थः सविता यावत् तावच्छायासु संस्थितान्॥
[2]पूजयेत् सततं राम नाऽऽक्रोशेन्न च ताडयेत्।
राजचिह्नानि सर्वाणि पूजयेदाश्रमे सदा॥
[3]पूजयेद्वरुणं नित्यं तथाऽप्सु विधिवद् द्विज।
भूतेज्या च तथा कार्या रात्रौ बलिभिरुत्तमैः॥
[4]आश्रमं रक्षणीयं स्यात् पुरुषैः शस्त्रपाणिभिः।
वसेतामाश्रमे नित्यं सांवत्सरपुरोहितौ॥
अश्ववैद्यप्रधानश्च तथा नागभिषग्वरः।
दीक्षितैस्तैस्तथा भाव्यं ब्रह्मचारिभिरेव च॥
[5]स्वातिं त्यक्त्वा यदा सूर्यो विशाखां प्रतिपद्यते।
अलंकुर्याद्दिने तस्मिन् वाहनं च विशेषतः॥
[6]पूजिता राजलिङ्गाश्च कर्तव्या नरहस्तगाः।
हस्तिनं तुरगं छत्रं खड्गं चापं च दुन्दुभिम्॥
ध्वजं पताकां धर्मज्ञ कालज्ञस्त्वभिमन्त्रयेत्।
अभिमन्त्र्य ततः सर्वान् कुर्यात् कुञ्जरधूर्गतान्॥
कुञ्जरोपरिगौ स्यातां सांवत्सरपुरोहितौ।
अश्ववैद्यप्रधानश्च तथा नागभिषग्वरः॥
[7]ततोऽभिमन्त्रितं राजा समारुह्य तुरंगमम्।
निष्क्रम्य तोरणे नागमभिमन्त्र्य समारुहेत्॥
[8]तोरणेन विनिष्क्रम्य कुर्यात् सुरविसर्जनम्।
बलिं विसृज्य विधिवद्राजा कुञ्जरधूर्गतः॥
रत्नैरलंकृतः सर्वैर्वीज्यमानश्च चामरैः।
उल्मुकानां च निचयमादीपितमनन्तरम्॥
राजा प्रदक्षिणं कुर्यात् त्रीन् वारान् सुसमाहितः॥
चतुरङ्गबलोपेतः सर्वसैन्यसमन्वितः।
क्ष्वेडाकिलकिलाशब्दैः सर्ववादित्रनिःस्वनैः॥
वल्गितैश्च पदातीनां हृष्टानां मनुजोत्तम।
एवं कृत्वा गृहं गच्छेद्राजा सैन्यपुरःसरः॥
जनं संपूज्य च गृहात् सर्वमेव विसर्जयेत्।
शान्तिर्नीराजनाख्येयं कर्तव्या वसुधाधिपैः।
क्षेम्या वृद्धिकरी राम नरकुञ्जरवाजिनाम्॥

धन्या यशस्या रिपुनाशनी च
सुखावहा शान्तिरनुत्तमा च।
कार्या नृपै राष्ट्रविवृद्धिहेतोः
सर्वप्रयत्नेन भृगुप्रवीर॥

## अग्निपुराणम्

नीराजनविधिः यथा— वाहनमन्दिरगमनम्, देवाष्टगजपूजा, हवनम्, गजानां स्नापनपिण्डदानादीनि, निष्क्रामणम्, राजलिङ्गपूजा, वाहनारोहणम्, गृहप्रत्यागमनं च

[1]नीराजनविधिं वक्ष्ये ऐशान्यां मन्दिरं चरेत्॥
तोरणत्रितयं तत्र गृहे देवान्यजेत्सदा।
चित्रां त्यक्त्वा यदा स्वातिं सविता प्रतिपद्यते॥
ततः प्रभृति कर्तव्यं यावत्स्वातौ रविः स्थितः।
ब्रह्मा विष्णुश्च शंभुश्च शक्रश्चैवानलानिलौ॥
विनायकः कुमारश्च वरुणो धनदो यमः।
विश्वेदेवा वैश्रवणो गजाश्चाष्टौ च तान्यजेत्॥
कुमुदैरावणौ पद्मः पुष्पदन्तश्च वामनः।
सुप्रतीकोऽञ्जनो नीलः पूजा कार्या गृहादिके॥
पुरोधा जुहुयादाज्यं समित्सिद्धार्थकं तिलाः।
कुम्भा अष्टौ पूजिताश्च तैः स्नाप्याश्वगजोत्तमाः॥

(१) विध. २।१५९।३१; राप्र. ४३६.
(२) विध. २।१५९।३२; राप्र. ४३६ न्न च (न्नैव).
(३) विध. २।१५९।३३; राप्र. ४३६ तथाऽप्सु विधिवद् (यथावद्विधिना).
(४) विध. २।१५९।३४–३५; राप्र. ४३६–४३७.
(५) विध. २।१५९।३६ नं च (नांश्च); राप्र. ४३७.
(६) विध. २।१५९।३७–३९; राप्र. ४३७.
(७) विध. २।१५९।४०; राप्र. ४३७ रणे ना (रणैर्ना) मन्त्र्य स (मन्त्रित).
(८) विध. २।१५९।४१–४७; राप्र. ४३७–४३८.

(१) अग्नि. २६८।१६–३१.

अधः स्वात्यां ददेत्पिण्डांस्ततो हि प्रथमं गजान्।
निष्क्रामयेत्तोरणैस्तु गोपुरादि न लङ्घयेत्॥
निष्क्रामेयुस्ततः सर्वे राजलिङ्गं गृहे यजेत्।
वारुणे वरुणं प्राच्यं रात्रौ भूतबलिं ददेत्॥
विशाखायां गते सूर्ये आश्रमे निवसेन्नृपः।
अलंकुर्याद्दिने तस्मिन्वाहनं तु विशेषतः॥
पूजिता राजलिङ्गाश्च कर्तव्या नरहस्तगाः।
हस्तिनं तुरगं छत्रं खड्गं चापं च दुन्दुभिम्॥
ध्वजं पताकां धर्मज्ञ कालज्ञस्त्वभिमन्त्रयेत्।
अभिमन्त्र्य ततः सर्वान्कुर्यात्कुञ्जरधूर्गतान्॥
कुञ्जरोपरिगौ स्यातां सांवत्सरपुरोहितौ।
मन्त्रितांश्च समारुह्य तोरणेन विनिर्गमेत्॥
निष्क्रम्य नागमारुह्य तोरणेनाथ निर्गमेत्।
बलिं विभज्य विधिवद्राजा कुञ्जरधूर्गतः॥
उल्मुकानां तु निचयमादीपितदिगन्तरम्।
राजा प्रदक्षिणं कुर्यात् त्रीन्वारान्सुसमाहितः॥
चतुरङ्गबलोपेतः सर्वसैन्येन नादयन्।
एवं कृत्वा गृहं गच्छेद्विसर्जितजनस्ततः।
शान्तिर्नीराजनाख्येयं वृद्धये रिपुमर्दनी॥

## कालिकापुराणम्

चतुरङ्गबलस्य नीराजनविधिः, यथा– यज्ञमण्डपविधानम्, अश्वपूजनम्, तोरणकरणम्, नवग्रहविश्वेदेवानां विष्णुप्रमुखानां पूजनम्, सप्ताहहोमः, अष्टकलशपूजा, यज्ञभूमौ राज्ञः सप्ताहवासः, गजाश्वपूजा, यज्ञभूमौ सूर्यपूजा, गजाश्वनयनं भक्तपिण्डदानं च, राजपुत्राणां वाहनदर्शनम्, राज्ञः अश्वारोहणम्, बलनीराजनं च

*[1]विधिं नीराजनस्य त्वं शृणु पार्थिवसत्तम॥
कृतेन येन चाश्वनां गजानामपि चैधनम्।
आश्विने शुक्लपक्षे तु तृतीया स्वातियोगिनी॥
ऐशान्यां स्वपुरस्यैव गृह्णीयात् स्थानमुत्तमम्।
नीराजनं ततः कुर्यात् संप्राप्ते दिवसेऽष्टमे॥
नीराजनस्य कालस्तु पूर्वमुक्तो मया तव।
विधानमात्रं शृणु मे कृतकृत्यो भविष्यसि॥
एकं हयं महासत्त्वं सुमनोहरमेव च॥
पूजयेत् सप्तदिवसान् गन्धपुष्पांशुकादिभिः।
तृतीयादौ पूजयित्वा नयेत्तं यज्ञमण्डपम्॥
चेष्टां निरूपयंस्तस्य जानीयात्तु शुभाशुभम्।
परराष्ट्रावमर्दः स्यादश्वो यदि पलायते॥
म्रियते राजपुत्रस्तु यदि चाश्रूणि मुञ्चति।
नीयमानो न गच्छेत्तु महिषीमरणं ततः॥
तथैव मुखनासाक्षिशब्दं कुर्याद्धयो यदि।
यत्काष्ठाभिमुखः कुर्यात्तत्काष्ठायां जयेद्रिपून्॥
उत्क्षिप्य दक्षिणाग्रं तु पदमश्वो भवेत्पुरः।
तदा यदि समस्तांश्च नृपतिर्विजयेद्रिपून्॥
प्रातर्नीराजनं कुर्याद्दशम्यां नृपसत्तम।
तदप्राप्तौ च द्वादश्यां तस्यामेव समाचरेत्॥
कार्तिके पञ्चदश्यां वा तत्राभावे तु पार्थिव।
ऐशान्यां स्वपुरस्योच्चैर्हस्तमानेन षोडश॥
दशहस्तं तु विपुलं कुर्याद्वै तत्र तोरणम्।
द्वात्रिंशद्धस्तमात्रं तु हस्तषोडशविस्तृतम्॥
यज्ञार्थं मण्डपं कुर्यान्मध्ये वेदिं विनिर्दिशेत्।
वेद्याश्चोत्तरतश्चाश्ववेदिं कुर्यादनुत्तमाम्॥
यत्र संस्थाप्य चाश्वश्च पूजितव्यः पुरोहितैः।
सर्जोदुम्बरशाखानामर्जुनस्याथवा नृप॥
मत्स्यशङ्खाङ्कितैश्चक्रैर्ध्वजैश्चाप्यभिभूषयेत्।
तोरणं कनकै रत्नैस्तथा नानाविधैः फलैः॥
भल्लातकं शालिकुष्ठं सिद्धार्थं सैन्धवस्य तु।
कण्ठदेशे निबध्नीयात् पुष्टिशान्त्यर्थमेव च॥
वैष्णवं मण्डलं कृत्वा दिक्पालांश्च नवग्रहान्।
विश्वेदेवांस्तु मन्त्रेण विष्णुमुख्यान् प्रपूजयेत्॥

---

* शब्दकल्पद्रुमे 'नीराजना' शब्दे समुद्धृतकालिकापुराणपाठमनुसृत्य अत्र क्वचित् अशुद्धिसंशोधनादि कृतम्।

(१) कालिका. ८८।१५-७६.

आज्यैस्तिलैश्च पुष्पैश्च मिश्रीकृत्य पुरोहितः ।
रवेस्तु वरुणस्यैव प्रजेशस्य तथैव च ॥
पुरुहूतस्य विष्णोश्च होमं सप्ताहमाचरेत् ।
एकैकस्य सहस्रं वा अष्टोत्तरशतं च वा ॥
कुर्यात्तु प्रत्यहं होमं चतुर्वर्गस्य सिद्धये ।
समिधश्चापि होतव्याः पालाशाः खादिरास्तथा ॥
औदुम्बर्यश्च काश्मर्या आश्वत्थाश्च पुरोधसा ।
सौवर्णान् राजतान् वाऽपि मार्तिकान् वा यथेच्छया ॥
कुर्यात्तु कलशानष्टौ फलपल्लवयोजितान् ।
क्षिपेत्तेषु घटेष्वेव समङ्गहरितालकम् ॥
चन्दनं च तथा कुष्ठं प्रियङ्गुं च मनःशिलाम् ।
अञ्जनं च हरिद्रां च श्वेतां दन्तीं तथैव च ॥
भल्लातकं पूर्णकोशं सहदेवीं शतावरीम् ।
वचां सनागकुसुमां सोमराजीं स्वगुप्तिकाम् ॥
तुत्थं च करवीरं च तुलसीदलमेव च ।
एतानि निःक्षिपेन्मध्ये कलशानां पुरोहितः ॥
कनकैरम्बुजैर्यज्ञदारुभिः स्रुक्स्रुवौ तथा ।
कर्तव्यौ शान्तिकामेन नीराजनविधौ नृप ॥
एवं सप्ताहपर्यन्तं पूजाभिर्हवनैस्तथा ।
पूर्वोक्तान् पूजयित्वा तु नृपः सप्ताहमाचरेत् ॥
यावन्नीराजनं कुर्यात्तावद्राजा वसेद् गृहे ।
रात्रौ न यज्ञभूमौ तु निवसेच्छान्तिमिच्छुकः ॥
नाऽऽरोहयेत्तुरंगं तं गजं वा तत्र पार्थिवः ।
यावत्सप्ताहपर्यन्तं यानेनान्येन वै व्रजेत् ॥
भक्ष्यैर्नानाविधैश्चैव मधुपायसयावकैः ।
मोदकैर्वा बलिं कुर्याद्व्यञ्जनसंभवैः ॥
पूर्वोक्तानां तु देवानां सप्ताहं यावदुत्तमम् ।
सप्तमेऽह्नि तु रेमन्तं पूजयेत्तोरणान्तरे ॥
सूर्यपुत्रं महाबाहुं द्विभुजं कवचोज्ज्वलम् ।
ज्वलन्तं शुक्लवस्त्रेण केशानुद्ग्रथ्य वाससा ॥
कशां वामकरे बिभ्रद्दक्षिणं तु करं पुनः ।
सखड्गं न्यस्य वल्गायां सितसैन्धवसंस्थितम् ॥

एवंविधं तु रेमन्तं प्रतिमायां घटेऽपि वा ।
सूर्यपूजाविधानेन पूजयेत्तोरणान्तरे ॥
पूजयित्वा तु रेमन्तं द्विरदं तुरगं तथा ।
अहताम्बरसंवीतं स्रक्चन्दनसमन्वितम् ॥
सुवर्णविद्धनिस्त्रिंशं विचित्रं कवचादिभिः ।
युक्तं तु होमकुण्डस्य ऐशान्यामश्ववेदिकाम् ॥
पूर्वं कृतां नयेदश्वगजपादः पृथक्पृथक् ।
नीयमाने गजे वाऽश्वे पूर्वोक्तं तु निमित्तकम् ॥
यत्नाद्वीक्षेत नृपतिः फलं चैवावधारयेत् ।
होमकुण्डस्योत्तरस्यां वैयाघ्रे चर्मणि स्थितः ॥
दैवविदा चाश्वविदा सहितो वीक्ष्य सैन्धवम् ।
नीताय तुरगायाऽऽशु भक्तपिण्डीं सुगन्धिनीम् ॥
दद्यात्पुरोहितस्तत्र संमन्त्र्य शान्तिमन्त्रकैः ।
तत्क्षणाद्यदि जिघ्रेत्तदश्नीयाद्वा हयः स च ॥
तदा स्यात्सर्वकल्याणं विपरीतमतोऽन्यथा ।
शाखामौदुम्बरीमाम्रीं सकुशां च घटोदके ॥
आप्लाव्याऽऽप्लाव्य तुरगान् गजान् भूपं च सैनिकान् ।
रथांश्च संस्पृशेन्मन्त्रैः शान्तिकैः पौष्टिकैस्तथा ॥
सेचयेत् सहितैर्विप्रैश्चतुरङ्गं पुरोहितः ।
दिक्पालानां ग्रहाणां च मन्त्रैश्च वैष्णवैस्तथा ॥
बहुधा चाभिषिच्याथ ततः सौवर्णदर्पणम् ।
वीक्षयित्वा नृपं ऋत्विक् ततो मन्त्रिणमेव च ॥
राजपुत्रं तथाऽमात्यानन्यानपि च सैनिकान् ।
कम्पयन् द्विजशार्दूलः सर्वानेव तु दर्शयेत् ॥
चतुरङ्गबलस्यापि कृत्वैवं शान्तिपौष्टिके ॥
मृण्मयं शात्रवं कृत्वा चाऽऽभिचारिकमन्त्रकैः ।
हृदि शूलेन विद्ध्वा तं शिरः खड्गेन छेदयेत् ॥
आचार्यः कविकां पश्चाद्दिशि मन्त्र्य हयाय वै ।
ऐन्द्रैः प्राभाकरैर्मन्त्रैर्दद्याद्वक्त्रे स्वयं पुनः ॥
तमनेन तु मन्त्रेण समारुह्य नृपस्तदा ।
गच्छेदुत्तरपूर्वां तु दिशं सर्वैर्बलैः पुनः ॥

ऋत्विक्पुरोहिताचार्याः सर्वे एव नृपं तथा ।
अनुगच्छेयुरन्यानि निमित्तानि विलोकितुम् ॥
वादित्रघोषैस्तुमुलैरातपत्रैर्वृतस्तथा ।
गच्छेन्नीराजने राजा दारयन्निव मेदिनीम् ॥
मणिविद्रुममुक्तादिस्वर्णरत्नैरलंकृतः ।
क्रोशमात्रं ततो गत्वा पूर्वद्वारेण पार्थिवः ॥
स्वपुरं प्रविशेद्विप्रैर्यज्ञं याश्वात् पुरोहितः ।
तत्र गत्वा दक्षिणां तु हिरण्यं गां तथा तिलम् ॥
दत्त्वा पश्चाद् द्विजेभ्यस्तु दद्याद्दानानि शक्तितः ।
एवं नीराजनं कृत्वा बलानां च महीक्षितः ॥
प्रेत्येह सुस्थिरां लक्ष्मीं नृपतिः प्राप्नुयात्तथा ।
त्वमश्वामृतसंजात सागरोद्भव सैन्धव ॥
येन सत्येन वहसे शक्रं तेनेह मां वह ।
येन सत्येन रेमन्तं येन सत्येन भास्करम् ॥
वहसे तेन सत्येन विजयाय वहस्व माम् ।
आभ्यां तु भूप मन्त्राभ्यामश्वारोहणमाचरेत् ॥
आरुह्याग्रे महिष्यास्तु शुद्धान्ते लम्बयेत्ततः ।
महिषी च ततो भूपं पर्यङ्कोपरि संस्थितम् ॥
दूर्वाक्षतैः ससिद्धार्थैः स्त्रीभिः सह तमर्चयेत् ।
कृते तु भूमिग्रहणे तृतीयायां निराजने ॥
सूतकं यदि जायेत तन्न दुष्यति केवलम् ।
सूतकी मृतकी वाऽपि पार्थिवस्तु यथा तथा ।
बलनीराजनं कुर्यात्तन्मात्रं च विशेषतः ॥
सद्यःशौचं भवेद्राज्ञो व्यवहारविलोकने ।
तथाऽधिवासने यज्ञे परराष्ट्रविमर्दने ॥
अयं ते कथितो राजन्नीराजनक्रमो मया ॥

### युक्तिकल्पतरुः

नौकानां चतुरङ्गबलस्य राज्ञः सपरिवारस्य
शस्त्रध्वजादीनां च नीराजनम्

**अथ तत्र नीराजनाविधिः—**

[1]वर्षान्तेऽभ्युदिते शुक्रे चन्द्रे पूर्णे शुभक्षणे ।
अश्वनीराजनं कुर्याद्यथोक्तमृषिसत्तमैः ॥
उदीचीं प्रस्थिते भानौ संक्रान्त्यां वा शुभे दिने ।
गजनीराजनं कुर्यान्महीपालो जिगीषिवान् ॥
वृश्चिकस्थे रवौ कुर्याद् पत्तिनीराजनाविधिम् ।
नौकानीराजनं कुर्याद् दक्षिणाशां प्रतिष्ठिते ॥
अन्येषां चैव यानानां विजयादशमीतिथिम् ।
ध्वजादीनां च सर्वेषां शक्रोत्थाने नीराजनम् ॥
छत्रस्य नवदण्डस्य तथा सिंहासनस्य च ।
गृहस्य नगरस्यापि महाविषुवसंक्रमे ॥
आत्मनो युवराजस्य महिष्या मन्त्रिणां तथा ।
स्वजन्मदिवसे राजा कुर्यान्नीराजनाविधिम् ।
अभिषेकदिनं प्रोक्तमेषां जन्मदिनं मया ॥

तद्यथा—

अश्वानां भास्करो देवो रेवन्तमिति संज्ञया ।
गजानां देवता शक्रः पत्तीनां कालिका मता ॥
नौकानां वरुणो देवो यानानां तु जयन्तकः ।
अस्त्राणां देवता रामो यमः खड्गस्य पूज्यते ॥
ध्वजानां हनुमान् पूज्यो बृहस्पतिरिति क्रमात् ।
तान् पूजयित्वा विधिवदेतान्नीराजयेन्नृपः ॥
द्वादशमहिषैः पुष्टैश्चामरघण्टास्वनादिभूषाढ्यैः ।
छागलैर्महिषद्विगुणैश्छागलद्विगुणैर्वृषैश्च पुष्टाङ्गैः ॥
वृषभद्विगुणैः पुरुषैस्तद्द्विगुणैश्चारुदीपिकाभिः- (? मिश्र) ।
भव्यं वा(जि)सहस्रं शुभदिने नीराजयेद् राजा ॥
द्वादशवाहे रुचिरैः साङ्गोपाङ्गैरतोऽर्धतश्चोष्ट्रैः ।
तस्यार्धतो व्याघ्रैर्गजशतनीराजनं संभवति ॥
छागलशतं वृषभशतं शतं च मेषाणाम् ।
तुरगा दश हृष्टाङ्गा व्याघ्राः पञ्च द्विपश्चैकः ॥
भल्लूका हि कुक्कुराश्चैकैकाः पत्तिलक्षणस्य ।
नौकाशतकं साङ्गं नवदशकं काञ्चनादिभिर्घटितम् ॥

---

(१) युक. १७८–१८१।८९–१२१.

बहुशतमपि जन्तूनां नौका नीराजने राज्ञाम् ।
यद्वा द्विपदं यानं सर्वेषामिष्यते तुरगैः ।
स्वदशावत्सरवसितैर्योग्याङ्गैर्योग्यवर्णैश्च ॥
अष्टाभिर्धातुभिः कुर्यादस्त्रनीराजनाविधिम् ॥
गजाश्वनरनौकाभिर्द्विगुणाभिर्यथोत्तरम् ॥
रत्नैर्नानाविधैरस्त्रैर्धातुभिर्वसनैस्तथा ।
सिंहासनैश्च योग्यैश्च कुर्यान्नीराजनाविधिम् ॥
गृहनीराजनाऽप्येवं नरस्याथ निगद्यते ।
श्वभिः खरैः शृगालैश्च व्याघ्रैरुष्ट्रैस्तथोद्धतैः ।
पुरं नीराजयेद्राजा चिरसंपत्तिहेतवे ॥
श्वा दशाश्वस्तदर्धेन नरश्चैव तदर्धतः ।
व्याघ्रादीनां तथैवैकं रत्नं नानाविधं तथा ॥
अस्त्राणि धातवश्चैव वस्त्राणि च फलानि च ।
वनजाः स्थलजाश्चैव जलजाश्चैव जन्तवः ॥
नवग्रहाश्च सूर्याद्याः शैलाः सप्त घटास्तथा ।
योग्यधातुसमुद्भूता नौकाखण्डत्रयं तथा ॥
एकैकं द्विपदं यानं खट्वा शय्याऽऽसनं तथा ।
निजदेहमितं स्वर्णं रजतं ताम्रमेव वा ॥
आत्मनीराजने दद्याद्यदिच्छेच्चिरसंस्थितिम् ।
अस्त्रैर्नानाविधैः कुर्याद्युवराजनिराजनम् ॥
अलंकारैश्च विविधैर्देवीनीराजनं मतम् ।
मन्त्रिनीराजनं राजा हयेनैव समाचरेत् ॥
अमात्यानां सैनिकानां विप्राणां धनिनां तथा ।
वस्त्रैर्नीराजनं कुर्यादिति भोजस्य संमतम् ॥
नीराजनाया वस्तूनि न पश्येन्न पुनः स्पृशेत् ।
सप्तकृत्वः परिभ्राम्य कुर्यान्नीराजनाविधिम् ॥
न्यसेद्वा परराष्ट्रेषु गहने वा जलेऽपि वा ।
दैवज्ञवैद्यदीनेभ्यः प्रयच्छेद्वा यथायथम् ॥
इति संक्षेपतः प्रोक्तो मया नीराजनाविधिः ।
अनेन विधिना राजा सुचिरं सुखमश्नुते ॥

तथाहि गर्गः—

नीराजना महीन्द्राणां निहन्ति विपदोऽखिलाः ।
सैव संनहनं राज्ञां कञ्चुकेनेव संयतः ॥
नीराजनावन्दितानां न भयं विद्यते क्वचित् ।
नीराजनाविहीनानां नश्येयुः सर्वसंपदः ॥

तथाच वात्स्यः—

ये भूमिपालाः प्रतिवत्सरान्ते
कुर्वन्ति नीराजनकर्म सम्यक् ।
तेषां न लक्ष्मीः क्षयतामुपैति
साम्राज्यलक्ष्मीः करगैव तेषाम् ॥

एवं नीराजनं कृत्वा राजा प्रस्थानमाचरेत् ॥

# देवीपूजाविधिः

## विष्णुधर्मोत्तरपुराणम्

आश्विने मासे शुक्लपक्षे अष्टम्यामायुधादीनां पूजा नवम्यां च भद्रकाल्याः पूजा यात्रा च

राम उवाच–

[1]विधिना पूजयेत् केन भद्रकालीं नराधिपः ।
नवम्यामाश्विने मासि शुक्लपक्षे नरोत्तम ॥

आश्विनशुक्लनवम्यां राज्ञो भद्रकालीपूजा अभिहिता विष्णुधर्मोत्तरे–'राम उवाच–विधिना पूजयेत्... ॥'।
राप्र. ४३८

पुष्कर उवाच–

[2]पूर्वोत्तरे तु दिग्भागे शिबिरात् सुमनोहरे ।
भद्रकालीगृहं कुर्याच्चित्रवस्त्रैरलंकृतम् ॥
[3]भद्रकालीं पटे कृत्वा तत्र संपूजयेद् द्विज ।
आश्विने शुक्लपक्षे तु अष्टम्यां प्रयतस्ततः ॥
[4]तत्रैवाऽऽयुधवर्माद्यं छत्रं केतुं च पूजयेत् ।
राजलिङ्गानि सर्वाणि तथाऽस्त्राणि च पूजयेत् ॥
[5]पुष्पैर्गन्धैः फलैर्भक्ष्यैर्भोज्यैश्च सुमनोहरैः ।
बहुभिश्च विचित्राभिः प्रेक्षादानैस्तथैव च ॥
[6]रात्रौ जागरणं कुर्यात्तत्रैव वसुधाधिपः ।
एवं संपूजयेद्देवीं वरदां भक्तवत्सलाम् ॥
[7]कात्यायनीं कामगमां वररूपां वरप्रदाम् ।
पूजितां सर्वकामैश्च सा युङ्क्ते वसुधाधिपम् ॥

(१) विध. २।१५८।१ ; राप्र. ४३८.

(२) विध. २।१५८।२ ; राप्र. ४३८ वस्त्रैरलं (वस्त्रैः स्वलं).

(३) विध. २।१५८।३ ; राप्र. ४३८ पक्षे तु अष्ट (पक्षस्य नव).

(४) विध. २।१५८।४ ; राप्र. ४३८ तत्रैवाऽऽयुध (तत्र खड्गं च) ऽस्त्राणि च (शस्त्राणि).

(५) विध. २।१५८।५ ; राप्र. ४३८ भक्ष्यै (भक्षै).

(६) विध. २।१५८।६ ; राप्र. ४३८ पू.

(७) विध. २।१५८।७.

[1]एवं हि संपूज्य जगत्प्रधानं
यात्रा तु देया वसुधाधिपेन ।
प्राप्नोति सिद्धिं परमां महीशो
जनस्तथाऽन्योऽपि हि वित्तशक्त्या ॥

## अग्निपुराणम्

आश्विने मासे शुक्लपक्षे अष्टम्यां भद्रकाल्याः आयुधादिराजलिङ्गानां च पूजा नवम्यां च भद्रकाल्याः पूजा

[2]भद्रकालीं पटे लिख्य पूजयेदाश्विने जये ॥
शुक्लपक्षे तथाऽष्टम्यामायुधं कार्मुकं ध्वजम् ।
छत्रं च राजलिङ्गानि शस्त्राद्यं कुसुमादिभिः ॥
जाग्रन्निशि बलिं दद्याद् द्वितीयेऽह्नि पुनर्यजेत् ।
भद्रकालि महाकालि दुर्गे दुर्गार्तिहारिणि ॥
त्रैलोक्यविजये चण्डि मम शान्तौ जये भव ॥

## भविष्यपुराणम्

आश्विनमासे शुक्लपक्षे अष्टम्यां महानवम्यां च दुर्गोत्सवः सर्वेषु युगेषु देवदानवमानवैः विशेषतो राजभिः कार्यः, तस्मिन् महिषादिप्राणिनां हननम्, लोहाभिसारिकाख्यं कर्म, छत्राश्वध्वजहस्तिपताकाखड्गवर्म-दुन्दुभिचापशङ्खचामरछुरिकाकनकदण्ड-सिंहासनमन्त्रैः छत्राश्वादीनां पूजनम्, दुर्गामूर्तिपूजनम्, दुर्गामूर्तेः राष्ट्रे भ्रामणम्, सामिषभूतबलि-दानम्

श्रीकृष्ण उवाच–

[3]पुण्या महानवम्यस्ति तिथीनां प्रवरा तिथिः ।
साऽनुष्ठेया सुरैः सर्वैः प्रजापालैर्विशेषतः ॥

(१) विध. २।१५८।८ ; महीशो (महेशो) ; राप्र. ४३८.

(२) अग्नि. २६८।१३–१६.

(३) भविष्य. ४।१३८।१–१२.

भवानुत्थापयेत्पार्थ संवत्सरसुखाय वै ।
भूतप्रेतपिशाचानां प्रीत्यर्थं चोत्सवाय वा ॥

युधिष्ठिर उवाच–

कस्मात्कालात्प्रवृत्तेयं नवमी महशब्दयुक् ।
किमादावुपपन्नोऽस्ति भगवन्नवमीविधिः ॥
यशोदागर्भसंभूतेरुत यात्रा प्रवर्तते ।
उताहो पूर्वमेवाऽऽसीत्कृतत्रेतायुगादिषु ॥
यदस्यां प्राणिनः केचिद्धन्यन्ते घातयन्ति च ।
हतानां प्राणिनां तेषां का गतिः पारलौकिकी ॥
स्वयं घ्नतां घातयतामनुमोदयतां तथा ।
एतन्मे संशयं पूर्वं वक्तुमर्हसि केशव ॥

श्रीकृष्ण उवाच–

पार्थ या परमा शक्तिरनन्ता लोकविश्रुता ।
आद्या सर्वगता शुद्धा भावगम्या मनोहरा ॥
आद्याऽष्टमी कला काली द्वितीया सर्वमङ्गला ।
माया कात्यायनी दुर्गा चामुण्डा शंकरप्रिया ॥
ध्यायन्ति यां योगरतां सा देवी परमेश्वरी ।
रूपभेदैर्नामभेदैर्भवानी पूज्यते शिवा ॥
अष्टम्यां तु नवम्यां तु देवदानवराक्षसैः ।
गन्धर्वैरुरगैर्यक्षैः पूज्यते किंनरैर्नरैः ॥
अन्येष्वपि युगेष्वादौ सृष्टेः पूर्वं प्रदर्शिता ।
पूज्यतेयं पुरा देवी तेभ्यः पूर्वतरैः शुभैः ॥
आश्वयुक्छुक्लपक्षे च याऽष्टमी मूलसंयुता ।
सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा ॥
[1]कन्यागते सवितरि शुक्लपक्षेऽष्टमी तु या ।
मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥
[2]अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।
पूजयित्वाऽऽश्विने मासि विशोको जयति द्विषः ॥
संतर्जयन्ती हुंकारैः खड्गादिभिरहर्निशम् ।
नवम्यां पूजिता देवी ददाति नवमं फलम् ॥

(१) भविष्य. ४।१३८।१३ ; राप्र. ४४४.
(२) भविष्य. ४।१३८।१४–१५.

[1]सा पुण्या सा पवित्रा च सा धर्मसुखदायिनी ।
तस्मात्सदा पूजनीया चामुण्डा मुण्डमालिनी ॥
[2]तस्यां ये ह्युपयुज्यन्ते प्राणिनो महिषादयः ।
सर्वे ते स्वर्गतिं यान्ति घ्नतां पापं न विद्यते ॥
[3]न तथा बलिदानेन पुष्पधूपविलेपनैः ।
यथा संतुष्यते लोके महिषैर्विन्ध्यवासिनी ॥

बलिदानं च मांसमाषसहितौदनेन क्रियमाणम् ।
राप्र. ४४५

[4]उद्दिश्य दुर्गां हन्यन्ते विधानाद्येऽत्र जन्तवः ।
स्वर्गं ते यान्ति कौन्तेय घातयन्तोऽपि भक्तितः ॥
भवानीप्राङ्गणे प्राणा येषां याता युधिष्ठिर ।
तेषां स्वर्गे ध्रुवं वासो वरास्तेऽप्सरसां प्रियाः ॥
मन्वन्तरेषु सर्वेषु कल्पेषु कुरुनन्दन ।
तेषु सर्वेषु चैवाऽऽसीन्नवमीयं पुराऽर्चिता ॥
प्रसिद्धाऽनादिनिधना वर्षे वर्षे युधिष्ठिर ।
भूयो भूयोऽवतारैश्च भवानी पूज्यते सुरैः ॥
अवतीर्णा भुवि सदा नित्यं दैत्यनिबर्हिणी ।
स्वर्गपातालमर्त्येषु करोति स्थितिपालनम् ॥
पुनश्चैषा महादेवी यशोदागर्भसंभवा ।
कंसासुरस्योत्तमाङ्गे पादं दत्त्वा गतायुषः ॥
ततः प्रभृति लोकेषु यशोदानन्ददायिनीम् ।
विन्ध्याचले स्थापयित्वा पुनः पूजा प्रवर्तिता ॥
पूर्वप्रवृद्धोऽपि पुनर्भगिन्या महिमा कृतः ।
भुवि सर्वोपकाराय सर्वोपद्रवशान्तये ॥

(१) भविष्य. ४।१३८।१६ ; राप्र. ४४४ तस्मात् (तस्यां)।
(२) भविष्य. ४।१३८।१७ ये ह्युप (यद्युप) ; राप्र. ४४४ न विद्यते ॥ + (यावन्न चालयेद् गात्रं पशुस्तावन्न हन्यते । ).
(३) भविष्य. ४।१३८।१८ ; राप्र. ४४४–४४५ लोके (मेषैः).
(४) भविष्य. ४।१३८।१९–२६.

[1]एवं विन्ध्योपवासिन्या नवरात्रोपवासिना ।
एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन वा ॥

[2]पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।
गृहे गृहे भक्तिपरैर्ग्रामे ग्रामे वने वने ॥

[3]स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ।
वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ॥

[4]स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु ।
जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् ॥

[5]लोहाभिहारिकं कर्म कारयेद्यावदष्टमि ।
प्रागुदक्प्रवणे देशे पताकाभिरलंकृते ॥

लोहाभिसारिकविधानं च तत्रैवोक्तम्– प्रागुदगिति । राप्र. ४४५

[6]मण्डपं कारयेद्दिव्यं नवसप्तकरं वरम् ।
आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम् ॥

नवसप्तकरं षोडशहस्तप्रमाणमित्यर्थः । राप्र. ४४५

[7]मेखलात्रयसंयुक्तं योन्याऽश्वत्थदलाभया ।
राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च ॥

[1]आनीय मण्डपे तानि सर्वाण्येवाधिवासयेत् ।
ततस्तु ब्राह्मणः स्नातः शुक्लाम्बरधरः शुचिः ॥

[2]ओंकारपूर्वकैर्मन्त्रैस्तल्लिङ्गैर्जुहुयाद् घृतम् ।
लोहनामाऽभवत्पूर्वं दानवस्तु महाबलः ॥

[3]स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः ।
तदङ्गसंभवं लोहं यत्सर्वं दृश्यते क्षितौ ॥

[4]शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् ।
हुतशेषं तुरंगाणां गजानामुपहारयेत् ॥

[5]लोहाभिहारिकं कर्म तेनैतदृषिभिः स्मृतम् ।
धृतपल्ययनानश्वान् गजांश्च समलंकृतान् ॥

[6]भ्रामयेन्नगरे नित्यं नन्दिघोषपुरःसरम् ।
प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः ॥

[7]पूजयेद्राजचिह्नानि फलमाल्यानुलेपनैः ।
हुतशेषं प्रदातव्यमौपनायनिके द्विजे ॥

[8]तस्याभिहरणाद्राज्ञो विजयः समुदाहृतः ।
पूजामन्त्रान् प्रवक्ष्यामि पुराणोक्तानहं तव ॥
यैः पूजिताः प्रयच्छन्ति कीर्तिमायुर्यशो बलम् ॥

---

(१) भविष्य. ४।१३८।२७ वासिना (वासिनः) भक्तेन (रात्रेण) ; राप्र. ४४५ विन्ध्योपवासिन्या (च विन्ध्यवासिन्यां) वा (च).

(२) भविष्य. ४।१३८।२८ प्रथमचरणे ( यजनैर्याजनैर्देवाः) ; राप्र. ४४५ पू.

(३) भविष्य. ४।१३८।२९ युक्तै (चित्रै) ; राप्र. ४४५.

(४) भविष्य. ४।१३८।३० ; राप्र. ४४५.

(५) भविष्य. ४।१३८।३१ कृते (कृतम्) ; राप्र. ४४५ हारि (सारि) दष्टमि (दष्टमी).

(६) भविष्य. ४।१३८।३२ ; राप्र. ४४५.

(७) भविष्य. ४।१३८।३३ ; राप्र. ४४५ ऽश्वत्थद (स्वच्छन्द).

(१) भविष्य. ४।१३८।३४ ; राप्र. ४४५ ण्येवाधि (स्त्राण्यधि).

(२) भविष्य. ४।१३८।३५ ; राप्र. ४४५ वस्तु महा (वः सुमहा).

(३) भविष्य. ४।१३८।३६ ; राप्र. ४४५ यत्सर्वं (सर्वं यद्).

(४) भविष्य. ४।१३८।३७ ; राप्र. ४४५–४४६ गजाना (राजान).

(५) भविष्य. ४।१३८।३८ उत्तरार्धे (बद्धप्रतिशरव्यं च गजाश्वसमलंकृतम् ॥ ) ; राप्र. ४४६ हारि (सारि).

(६) भविष्य. ४।१३८।३९ ; राप्र. ४४६ पुरःसरम् (पुरस्कृतम् ).

(७) भविष्य. ४।१३८।४० ; राप्र. ४४६ माल्यानु (माल्यवि) पू.

(८) भविष्य. ४।१३८।४१–४२ ; राप्र. ४४६.

*यथाऽम्बुदश्छादयति शिवायेमां वसुंधराम् ।
तथाऽऽच्छादय राजानं विजयारोग्यवृद्धये ॥
इति छत्रमन्त्रः ॥
गन्धर्वे कुलजातस्त्वं मा भूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥
प्रभावाच्च हुताशस्य वर्धस्व त्वं तुरंगम ॥
तेजसा चैव सूर्यस्य मुनीनां तपसा यथा ॥
रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ।
स्मर त्वं राजपुत्रोऽसि कौस्तुभं च मणिं स्मर ॥
यां गतिं ब्रह्महा गच्छेत् पितृहा मातृहा तथा ।
भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥
सूर्याचन्द्रमसौ वायुः पावकश्च न यत्र वै ।
व्रजेच्च तां गतिं क्षिप्रं तच्च पापं भवेत्किल ॥
विकृतिं यदि गच्छेस्त्वं युद्धेऽध्वनि तुरंगम ।
रिपून् विजित्य समरे सह भर्त्रा सुखी भव ॥
इत्यश्वमन्त्रः ॥
शक्रकेतो महावीर्य सुपर्णस्त्वय्युपस्थितः ।
पतत्रिराड् वैनतेयस्तथा नारायणध्वजः ॥
काश्यपेयोऽमृतो ज्ञेयो नागारिर्विष्णुवाहनः ।
अप्रमेयो दुराधर्षो देवशत्रुनिषूदनः ॥
गुरुत्मान् मारुतगतिस्त्वयि संनिहितः स्थितः ।
शस्त्रवर्मायुधान् योधान् रक्षास्मांश्च रिपून् दह ॥
इति ध्वजमन्त्रः ॥
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥
एतेषां पुत्रपौत्राश्च बलान्यष्टौ समाश्रिताः ।
भद्रो मन्द्रो मृगश्चैव गजः संकीर्ण एव च ।
वने वने प्रसूतास्ते करियोनिं महागजाः ॥
पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ।
भर्तारं रक्ष नागेन्द्र समयं प्रतिपालयन् ॥
अवापुहि जयं युद्धे गमने स्वस्ति नो व्रज ।
श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्याज्जवोऽनिलात् ।
स्थैर्यं मेरोर्जयं रुद्राद्यशो देवात्पुरंदरात् ॥
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ।
अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतः सदा ॥
इति हस्तिमन्त्रः ॥
हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः ।
नागकिंनरगन्धर्वयक्षभूतगणा ग्रहाः ॥
प्रमथाश्च सहाऽऽदित्यैर्भूतेशो मातृभिः सह ।
शक्रसेनापतिः स्कन्दो वरुणश्चाऽऽश्रितास्त्वयि ॥
प्रदहन्तु रिपून् सर्वान् राजा विजयमृच्छतु ।
यानि प्रयुक्तान्यरिभिर्दूषणानि समन्ततः ॥
पतानि परशत्रूणां हतानि तव तेजसा ।
कालनेमिवधे युद्धे युद्धे त्रिपुरघातने ॥
हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा ।
शोभिताऽसि तथैवाद्य शोभमानास्तु(?) भूपतेः ॥
नीलां श्वेतामिमां दृष्ट्वा नश्यन्त्वद्य नृपारयः ।
व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ॥
सद्यः स्वस्था भवन्ति स्म त्वद्वातेनापमार्जिताः ॥
पूतना रेवती नाम्ना कालरात्रीति या स्मृता ।
दहन्त्वाशु रिपून् सर्वान् पताके त्वामुपागताः ॥
इति पताकामन्त्रः ॥
असिश्च रिपुहा खड्गस्तीक्ष्णकर्मा दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मधारस्तथैव च ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥
हिरण्यं च शरीरं ते धाता देवो जनार्दनः ।
पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥
इति खड्गमन्त्रः ॥
शर्मप्रदस्त्वं समरे वर्म सर्वायसो ह्यसि ।
रक्ष मां रक्षणीयोऽहं तव वर्मन्नमोऽस्तु ते ॥
इति वर्ममन्त्रः ॥

---

* एतदादयश्चापमन्त्रान्ताः श्लोका विष्णुधर्मोत्तरेऽपि ( २। १६०।१-२२) सन्ति । ते 'यात्रा– दैवतकर्माणि' इत्यस्मिन् प्रकरणे ( पृ. २५३७–२५३९ ) द्रष्टव्याः ।

(१) भविष्य. ४।१३८।४२–११५.

दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः ।
भव भूमिपसैन्यानां तथा विजयवर्धनः ॥
यथा जीमूतघोषेण हृष्यन्ति वरवारणाः ।
तथाऽस्तु तव शब्देन हर्षोऽस्माकं मुदावहः ॥
यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते ।
तथा च तव शब्देन त्रस्यन्त्वस्मद्द्विषो रणे ॥

इति दुन्दुभिमन्त्रः ॥

सर्वायुध महामात्र सर्वदेवारिसूदन ।
चाप मां सर्वदा रक्ष साकं सायकसत्तमैः ॥

इति चापमन्त्रः ॥

पुण्यस्त्वं शङ्ख पुष्पाणां मङ्गलानां च मङ्गलम् ।
विष्णुना विधृतो नित्यं मनःशान्तिप्रदो भव ॥

इति शङ्खमन्त्रः ॥

शशाङ्ककरसंकाश हिमडिण्डीरपाण्डुर ।
प्रोत्सारयाऽऽशु दुरितं चामरामरवल्लभ ॥

इति चामरमन्त्रः ॥

सर्वायुधानां प्रथमा निर्मिताऽसि पिनाकिना ।
शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिपरिग्रहम् ॥
चण्डिकायाः प्रदत्ताऽसि सर्वदुष्टनिबर्हिणि ।
तथा विस्तारिता चासि देवानां प्रतिपादिता ॥
सर्वसत्त्वाङ्गभूताऽसि सर्वाशुभनिवारिणि ।
छुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते ॥

इति च्छूरिकामन्त्रः ॥

प्रोत्सारणाय दुष्टानां साधुसंग्रहणाय च ।
ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये ॥
यशो देहि सुखं देहि जयदो भव भूपतेः ।
ताडयाऽऽशु रिपून्सर्वान् हेमदण्ड नमोऽस्तु ते ॥

इति कनकदण्डमन्त्रः ॥

विजयो जयदो जेता रिपुघाती प्रियंकरः ।
दुःखहा धर्मदः शान्तः सर्वारिष्टविनाशनः ॥
एतेऽष्टौ संनिधौ यस्मात्तव सिंहा महाबलाः ।
तेन सिंहासनेति त्वं विप्रैर्वेदेषु गीयसे ॥
त्वयि स्थितः शिवः साक्षात्त्वयि शक्रः सुरेश्वरः ।
त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः ॥
नमस्ते सर्वतोभद्र भद्रदो भव भूपतेः ।
त्रैलोक्यजयसर्वस्व सिंहासन नमोऽस्तु ते ॥

इति सिंहासनमन्त्रः ॥

लोहाभिहारिकं कर्म कृत्वेदं मन्त्रपूर्वकम् ।
फलनैवेद्यकुसुमैर्धूपदीपविलेपनैः ॥
अष्टम्यां धावनं कृत्वा पूर्वाह्णे स्नानमाचरेत् ॥

दुर्गां काञ्चनमूर्तिं रौप्यां वा पैत्तलीं वार्क्षीं चैत्रीं ताम्रीं वा विभवतः कृत्वा दारुविचित्रतोरणविन्यस्तां शोभने स्थाने पुरतो विन्यस्तदृष्टां विचित्रगृहमध्यगां स्नातां कुङ्कुमचन्दनगन्धैश्चतुःसमैश्चीरपट्टैश्चर्चितगात्रां देवीं कुसुमैरभ्यर्च्य तां बहुभिः पुष्यमाणकीर्तिस्(?)तैर्द्विजनैर्जनितपरितोषैर्दिवाऽन्वितो नरेन्द्रः स्वयं प्रयच्छेत् पुरोहितैः सार्धं बिल्वपत्रेणार्चनेन मन्त्रेणानेन भगवत्यै—

'जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥
अमृतोद्भवः श्रीवृक्षो महादेवीप्रियः सदा ।
बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ॥'
दुर्गा संपूजनीया च तद्दिनाद् द्रोणपुष्पया ।
सा चाभीष्टा सुरेशान्यास्तथा रूढव्रणायुतः ॥
ततः खड्गं नमस्कृत्य शत्रूणां मानमर्दनम् ।
इच्छेत् स्वविजयं राज्यं सुभिक्षं चाऽऽत्मनो नृप ॥
पुनः पुनः प्रणम्याथ ध्यायेच्च हृदये शिवाम् ।
महिषघ्नीं बहुभुजां कुमारीं सिंहवाहिनीम् ॥
दानवांस्तर्जयन्तीं च खड्गोद्धतकरां शुभाम् ।
घण्टाक्षस्रग्धरां दुर्गां रणारम्भे व्यवस्थिताम् ॥
ततो जयजयाकारैः स्तवं कुर्यादिमं ततः ॥

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥
कुङ्कुमेन समालब्धे चन्दनेन विलेपिते ।
बिल्वपत्रकृतामाले दुर्गेऽहं शरणं गतः ॥
कृत्वैवमर्चा कौरव्य अष्टम्यां जागरं निशि ।
नटनर्तनगीतैश्च कारयेत्तु महोत्सवम् ॥
एवं हृष्टैर्निशां नीत्वा प्रभाते चारुणोदये ।
पातयेन्महिषान्मेषानग्रतो नतकन्धरान् ॥
शतं चापि शतार्धं वा तदर्धं वा यथेच्छया ।
सुरासवभृतैः कुम्भैस्तर्पयेत् परमेश्वरीम् ॥
कापालिकेभ्यस्तद्देयं दासीदासजनैस्तथा ।
विभज्य सर्वं कौन्तेय सुहृत्संबन्धिबन्धुषु ॥
ततोऽपराह्णसमये नवम्यां स्यन्दने स्थिताम् ।
भवानीं भ्रामयेद्राष्ट्रे स्वयं राजा ससैन्यवान् ॥
सहस्रैः पुरुषैर्वाऽपि रथयुक्तैः सुशिक्षितैः ।
शनैः शनैरधिकया दीप्त्या प्रज्वलदीपकैः ॥
आकृष्टखड्गैर्वीरैश्च धातुरक्तैर्गजैस्तथा ।
नदद्भिः शङ्खपटहैर्नृत्यद्भिर्वारयौवतैः ।
अलंकृताभिर्नारीभिर्बालकैः सुविभूषितैः ॥
भूतेभ्यस्तु बलिं दद्यान्मन्त्रेणानेन सामिषम् ।
सरक्तं सजलं सान्नं गन्धपुष्पाक्षतैर्युतम् ॥
त्रींस्त्रीन् वारांस्त्रिशूलेन दिग्विदिक्षु क्षिपेद्बलिम् ।
'बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा ॥
मरुतोऽथाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः ।
असुरा यातुधानाश्च मातरश्च पिशाचकाः ॥
शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः ।
जृम्भकाः सिद्धगन्धर्वा व्याला विद्याधरा धराः ॥
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ।
जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः ॥
सविघ्नं मम पापं ते शाम्यन्तु परिपन्थिनः ।
सौम्या भवन्तु तृप्ताश्च भूताः प्रेताः सुखावहाः ॥'
इत्येवं भ्रामयेद्राष्ट्रे दुर्गां देवीं रथे स्थिताम् ।
नरयानेन वा पार्थ ततोऽविघ्नं समापयेत् ॥

अथोत्पन्नेषु विघ्नेषु भूतशान्तिं समाचरेत् ।
येन विघ्ना न जायन्ते यात्रा संपूर्णतां व्रजेत् ॥
एवं ये कुर्वते यात्रां राजानोऽन्येऽपि मानवाः ।
महानवम्यां नन्दायां पुत्रका हृष्टमानसाः ॥
ते सर्वे पापनिर्मुक्ता यान्ति भागवतीं पुरीम् ॥
न तेषां शावको नाग्निर्न चौरा न विनायकाः ।
विघ्नं कुर्वन्ति राजेन्द्र येषां तुष्टा महेश्वरी ॥
नीरुजः सुखिनो भोगभोक्तारो भयवर्जिताः ।
भवन्ति भक्ताः पुरुषा भगवत्याः किमुच्यते ॥
इत्येष ते समाख्यातो दुर्गादेव्या महोत्सवः ।
पठतां शृण्वतां चैव सर्वाशुभविनाशनः ॥

शूलाग्रभिन्नमहिषासुरपृष्ठविष्टा-
मुत्खातखड्गरुचिराङ्गदबाहुदण्डाम् ।
अभ्यर्च्य पञ्चवदनानुगतां नवम्यां
दुर्गां सुदुर्गगहनानि तरन्ति मर्त्याः ॥

## देवीपुराणम्

### खड्गादिषु लिखितदेवीपूजनम्

[1]नामभेदेन सा भिन्ना अभिन्ना परमार्थतः ।
शिवा नारायणी गौरी चर्चिका विमला उमा ॥
सा वन्द्या पूजनीया च सततं तत्प्रभावितैः ।
विजयार्थं नृपैः खड्गे छुरिकापादुके पटे ॥
चामुण्डां चित्ररूपां च लिखितां चाथ पुस्तके ॥
ध्वजे वा कारयेच्छत्रे स नृपो विजयेद्रिपून् ॥

राज्ञां खड्गादिषु देवीपूजनमावश्यकं सर्वदा कर्तव्यत्वेनोक्तम्– नामभेदेनेत्यादि । राप्र. १४४

### प्रतिसंवत्सरं विशेषतः कन्यास्थिते रवौ महानवम्यां महिषासुरमर्दिन्या देव्याः पूजोत्सवः

ब्रह्मोवाच–
[2]हते घोरे महावीरे सुरासुरभयंकरे ।
देव्या उपासका देवाः प्रभूता राक्षसास्तथा ॥

---

(१) राक. १७६ ; राप्र. १४४.
(२) राक. १९१ ; राप्र. ४३९.

अथ आश्विनशुक्लनवम्यां देवीपूजा अभिधीयते– हत इत्यादि । * राक. १९१

[1]आगता घातितं दृष्ट्वा महिषं तं सुदुर्जयम् ।
ब्रह्मविष्णुमहेशाना इन्द्रचन्द्रयमानिलाः ॥
[2]आदित्या वसवो रुद्रा ग्रहा नागाः सगुह्यकाः ।
समेत्य सर्वे देवास्ते देवीं भक्त्याऽथ तुष्टुवुः ॥
[3]वरं च सर्वलोकानां प्रददौ भयनाशिनी ।
बलिं ददुश्च भूतानां महिषाजामिषेण तु ॥
पुरेषु शङ्खभेर्यश्च शतशोऽथ सहस्रशः ।
कृता दुन्दुभिनादाश्च पटुशब्दाः समर्दलाः ॥
[4]पताकाध्वजयन्त्रादिघण्टाचामरशोभितम् ।
तद्दिनं कारयांचक्रुर्देवीभक्ताः सुरोत्तमाः ॥
[5]एवं तस्मिन् दिने वत्स भूतप्रेतसमाकुले ।
कृताऽथ सर्वदेवैश्च महापूजाऽथ शाश्वती ॥
[6]आश्विने मासि मेघान्ते महिषारिनिबर्हिणीम् ।
देवीं संपूजयित्वा ये अर्धरात्रेऽष्टमीमुखे ॥
[7]घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः ।
बलिं च ये प्रयच्छन्ति सर्वभूतविनाशकम् ॥
[8]तेषां तु तुष्यते देवी यावत्कल्पं तु शांकरम् ।
क्रीडन्ति विविधैर्भोगैर्देवलोके सुदुर्लभे ॥
नाऽऽधयो व्याधयस्तेषां न च शत्रुभयं भवेत् ।
न च देवग्रहा दैत्या न सुरा न च पन्नगाः ।
पीडयन्ति सुराध्यक्ष देवीपादसमाश्रितान् ॥

* राप्र. राकगतम् ।

(१) राक. १९१ ; राप्र. ४३९ महे (यमे).

(२) राक. १९१ ; राप्र. ४३९ गाः सगु (गाश्च गु) ऽथ (च).

(३) राक. १९१ ; राप्र. ४३९.

(४) राक. १९१ उत्तरार्धे (तद्दिनं कारयेच्छक देवीभक्तः सुरोत्तम ॥) ; राप्र. ४३९.

(५) राक. १९१ ; राप्र. ४३९ कुले (कुलम्).

(६) राक. १९२ ; राप्र. ४३९.

(७) राक. १९२ ; राप्र. ४३९ शकम् (यकी).

(८) राक. १९२ ; राप्र. ४३९–४४०.

यावद् भूर्वायुराकाशं जलं वह्निः शशी ग्रहाः ।
तावच्च चण्डिका पूज्या भविष्यति सदा भुवि ॥
प्रावृट्काले विशेषेण आश्विने चाऽष्टमीषु च ।
महाशब्दो नवम्यां च लोके ख्यातिं गमिष्यति ॥
[1]एतत्ते देवराजेन्द्र स्वर्गवासफलप्रदम् ।
परापरविभागं तु क्रियायोगेन कीर्तितम् ॥

इन्द्र उवाच –

[2]आश्विनस्य सिते पक्षे नवम्यां प्रतिवत्सरम् ।
श्रोतुमिच्छाम्यहं तात उपवासव्रतादिकम् ॥

ब्रह्मोवाच –

शृणु शक्र प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
महासिद्धिप्रदं धन्यं सर्वशत्रुनिबर्हणम् ॥
[3]सर्वलोकोपकारार्थं विशेषादपि वृत्तिषु ।
कर्तव्यं ब्राह्मणाद्यैस्तु क्षत्रियैर्लोकपालकैः ॥
[4]गोधनार्थं तथा वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ।
सौभाग्यार्थं तथा स्त्रीभिरन्यैश्च धनकाङ्क्षिभिः ॥
महाव्रतं महापुण्यं शंकराद्यैरनुष्ठितम् ।
कर्तव्यं देवराजेन्द्र देवीभक्तिसमन्वितैः ॥
[5]कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् ।
अयाचिताश्युपवासी नक्ताशी त्वथ वाग्वदः ॥
[6]प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ।
जपहोमसमायुक्तः कन्यकां भोजयेत्सदा ॥

(१) राक. १९२ ; राप्र. ४४० एतत्ते देवरा (एतत्तदेव रा).

(२) राक. १९२ ; राप्र. ४४०.

(३) राक. १९२ दपि (त्पथि) ; राप्र. ४४०.

(४) राक. १९३ ; राप्र. ४४०.

(५) राक. १९३ ; राप्र. ४४० तृतीयचरणे (अपाचिताश्यथैकाशी).

(६) राक. १९३ ; राप्र. ४४० न्यकां (न्यका).

[1]अष्टम्यां नवगेहानि दारुजानि शुभानि च ।
एकं वा वित्तभावेन कारयेत्सुरसत्तम ॥
[2]तस्मिन् देवी प्रकर्तव्या हैमी वा राजताऽपि वा ।
वृक्षाद्वा लक्षणोपेता खड्गे शूलेऽथ पूजयेत् ॥
[3]सर्वोपहारसंपन्ना वस्त्ररत्नफलादिभिः ।
कारयेद्रथदोलादि बलिपूजां च दैविकीम् ॥
[4]पुष्पादिद्रोणबिल्वादिजातीपुंनागचम्पकैः ।
विचित्रां रचयेत्पूजामष्टम्यां समुपासयेत् ॥
[5]दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः सुभावितः ।
तदर्धयामिनीशेषे विजयार्थं नृपः पशुम् ॥
[6]पञ्चाब्दं लक्षणोपेतं गन्धधूपसुगन्धितम् ।
विधिवत्कालि कालीति जप्त्वा खड्गेन घातयेत् ॥
[7]तदुत्थं रुधिरं मांसं गृहीत्वा पूजनादिषु ।
नैर्ऋतेभ्यः प्रदातव्यं महाकौशिकमन्त्रितम् ॥
[8]तस्याग्रतो नृपः स्नायाच्छत्रुं कृत्वाऽथ पिष्टजम् ।
खड्गेन घातयित्वा तु दद्यात्स्कन्दविशाखयोः ॥
[9]*ततो देवीं स्नापयेत् प्राज्ञः क्षीरसर्पिर्जलादिभिः ।
कुङ्कुमागुरुकर्पूरचन्दनैश्चार्च्य धूपयेत् ॥

* मुद्रितकल्पतरुपुस्तकस्य त्रिषु हस्तलिखितादर्शेषु द्वयोरयमेव पाठः, एकस्मिन् 'स्नपेत्' इति विशेषः । कल्पतरुपुस्तके तु 'देवीं च स्नापयेत्' इति पाठः संपादकमहोदयेन स्वयं कल्पयित्वा मुद्रितः । एतत्सर्वं तदीयटिप्पण्यां स्पष्टम् ।

(१) राक. १९३ ; राप्र. ४४०.

(२) राक. १९३ ; राप्र. ४४१ वृक्षाद्वा ल (मूर्धाक्षिल).

(३) राक. १९३ ; राप्र. ४४१ पन्ना व (पन्नव).

(४) राक. १९३ ; राप्र. ४४१ ल्वादि (ल्वाढ्य) सयेत् (वसेत्).

(५) राक. १९३ ; राप्र. ४४१ सुभावि (शुभान्वि).

(६) राक. १९३ ; राप्र. ४४१.

(७) राक. १९४ ; राप्र. ४४१ शिक (शिकि).

(८) राक. १९४ द्वितीयचरणे (च्छत्रं कृत्वा तु पूजितम्) ; राप्र. ४४१.

(९) राक. १९४ ; राप्र. ४४१.

देयानि पुष्परत्नानि वासांसि त्वहतानि च ।
नैवेद्यं सुप्रभूतं तु देयं देव्याः सुभावितैः ॥
[1]देवीभक्ताश्च पूज्यन्ते कन्यकाप्रमदादयः ।
द्विजान् दीनान्धपाषण्डानन्नपानेन तर्पयेत् ॥
[2]नन्दाभक्ता नरा ये तु महाव्रतधराश्च ये ।
पूजयेत्तान् विशेषेण यस्मात्तद्रूपमम्बिका ॥
[3]मातॄणां चैव देवीनां पूजा कार्या सदा निशि ।
ध्वजच्छत्रपताकादि उच्छ्रयेदम्बिकागृहे ॥
[4]रथयात्राबलिक्षेमं स्फुटवाद्यरवाकुलम् ।
कारयेत्तुष्यते येन देवी पशुनिपातनैः ॥
अश्वमेधमवाप्नोति भक्तितः सुरसत्तम ।
महानवम्यां पूजेयं सर्वकामप्रदायिका ॥
[5]सर्वेषु वत्स वर्णेषु तव भक्त्या प्रकीर्तिता ।
कृत्वाऽऽप्नोति यशोराज्यपुत्रायुर्धनसंपदः ॥

कार्तिकारम्भे कर्तव्या देव्याः पूजा

ब्रह्मोवाच—

[6]क्षीराशी कार्तिकारम्भे देवीभक्तिरतो नरः ।
शाकयावकएकाशी प्रातःस्नायी शिवानतः ॥

अथ चिह्नेषु देवीपूजाविधिः । तत्र देवीपुराणे—'ब्रह्मोवाच— क्षीराशी....' । राप्र. ४४२

[7]पूजयेत्तिलहोमं तु दधिक्षीरघृतादिभिः ।
कुर्याद्देव्यास्तु मन्त्रेण शृणु पुण्यफलं हरे ॥

(१) राक. १९४ ; राप्र. ४४१ पाष (पाख) पाने (दाने).

(२) राक. १९४ उत्तरार्धं (पूजयित्वा विशेषेण तस्मात्तद्रूपमाविकम् ॥) ; राप्र. ४४१.

(३) राक. १९४ ; राप्र. ४४१ सदा (तदा).

(४) राक. १९४ ; राप्र. ४४१–४४२.

(५) राक. १९५ ; राप्र. ४४२ शोराज्य (शो राज्यं).

(६) राक. १९६ ; राप्र. ४४२ देवी (देव्या) नतः (रतः).

(७) राक. १९६ ; राप्र. ४४२.

महापातकसंयुक्तो युक्तो वाऽप्युपपातकैः ।
मुच्यते नाऽत्र संदेहो यस्मात्सर्वगता शिवा ॥
[1]अन्यो वा भावनायुक्तस्त्वनेन विधिना शिवाम् ।
स्वयं वा अन्यतो वाऽपि पूजयेत्पूजयेत वा ॥
[2]न तस्य भवति व्याधिर्न च शत्रुकृतं भयम् ।
नोत्पातग्रहदौस्थ्यं वा न च राष्ट्रं विनश्यति ॥
[3]सदा स्वभावसंपन्ना ऋतवः शुभदा घनाः ।
निष्पत्तिः सर्वसस्यानां तस्करा न भवन्ति च ॥
[4]प्रभूतपयसो गावो ब्राह्मणाश्च क्रियापराः ।
स्त्रियः पतिव्रताः सर्वा नृपा निर्वृतिकारिणः ॥
[5]फलपुष्पवती धात्री सस्यानि रसवन्ति च ।
भवेयुर्नात्र संदेहश्चर्चिकाविधिपूजनात् ॥
[6] 'जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु वः ॥'
[7]अनेनैव तु मन्त्रेण जपं होमं तु कारयेत् ।
प्रातस्तु संस्तुता वत्स महिषघ्नी सुपूजिता ॥
[8]अघं नाशयते क्षिप्रं यथा सूर्योदये तमः ।
सिंहारूढा ध्वजे यस्य नृपस्य रिपुहा उमा ॥

(१) राक. १९६ ; राप्र. ४४२ येत (यीत).

(२) राक. १९६ ; राप्र. ४४२ र्न च (र्न वा).

(३) राक. १९६ ; राप्र. ४४२.

(४) राक. १९७ ; राप्र. ४४२ नृपा नि (रूपनि).

(५) राक. १९७ ; राप्र. ४४२–४४३ श्चर्चिका (श्चाम्बिका).

(६) राक. १९७ ; राप्र. ४४३ वः (ते).

(७) राक. १९७ ; राप्र. ४४३ जपं होमं (जपहोमं) सुपू (प्रपू).

(८) राक. १९७ ; राप्र. ४४३.

द्वारस्था पूज्यते वत्स न तस्य रिपुजं भयम् ।
कपिसंस्था महामाया सर्वशत्रुविनाशिनी ॥
[1]वृषे यथेप्सितं दद्यात् कलभे श्रियमुत्तमाम् ।
हंसे विद्यार्थकामं तु बर्हिणेऽभीष्टपुत्रदा ॥
[2]गरुत्मति महामाया सर्वरोगविनाशिनी ।
महिषस्था महामारीं शमयेद् ध्वजसंस्थिता ॥
[3]करिगा सर्वकार्येषु नृपैः कार्या त्रिशूलिनी ।
पद्मस्था चर्चिका रौप्या धर्मकामार्थमोक्षदा ॥
[4]प्रेतस्था सर्वभयदा नित्यं पशुनिपातनैः ।
पूजिता देवराजेन्द्र नीलोत्पलकरा वरा ॥
[5]भवेत्तु सिद्धिकामस्य चिह्नाग्रे संव्यवस्थिता ।
गन्धपुष्पार्चितां कृत्वा वस्त्रहेमसुचर्चिताम् ॥

चिह्नानि राज्ञो ध्वजपताकादीनि, तेषामग्रे ।

राप्र. ४४३

फलशालियवैः शूकवर्धमानैर्विभूषिताम् ।
शोभनामुच्छ्रयेदग्रे पताकां वा मनोरमाम् ॥
चामरं कलशं शङ्खं सातपत्रं वितानकम् ।
भवेत्तु सिद्धिकामस्य नृपस्य फलदायकम् ॥
[6] 'नमो विश्वेश्वरि दुर्गे चामुण्डे मुण्डहारिणि ।
ध्वजं समुच्छ्रयिष्यामि वसोर्धारासुखावहम् ॥'

(१) राक. १९७ कलभे (कलशे) त्तमाम् (त्तमम्); राप्र. ४४३ कामं तु (कामांस्तु).

(२) राक. १९७ मारीं (मारी) ; राप्र. ४४३.

(३) राक. १९७ ; राप्र. ४४३.

(४) राक. १९७ ; राप्र. ४४३ भयदा (भयहा).

(५) राक. १९७–१९८ ; राप्र. ४४३.

(६) राक. १९८ ; राप्र. ४४३–४४४ मुण्ड (चण्ड) धारा (धारां) वहम् (वहाम्).

# गवोत्सर्गविधिः

## आथर्वणपरिशिष्टम्

[1]अथ वृषोत्सर्गः । कार्तिक्यां पौर्णमास्यां रैवत्यामाश्वयुज्यां वा गवां गोष्ठे पौर्णमासतन्त्रमाज्यभागान्तं कृत्वा रुद्ररौद्राभ्यामाज्यं जुहुयात् । 'पूषा गा अन्वेतु नः' इति चतसृभिः पौष्णस्य जुहुयात् । 'पूषा गा अन्वेतु नः पूषा रक्षतु सर्वतः । पूषा वाजं सनोतु नः ॥ पूषन्ननु प्र गा इहि यजमानस्य सुन्वतः । अस्माकं स्तुवतामुत ॥ पूषन् तव व्रते वरं परि पूषा पुरस्तात् ॥' इति । 'इन्द्रस्य कुक्षिः, साहस्रस्त्वेषः' इत्यृषभं संपातवन्तं कृत्वा 'य इन्द्र इव देवेषु' इत्यृषभस्य दक्षिणे कर्णे जपेत् । 'लोहितेन स्वधितिना' इति वत्सतरीमनुमन्त्रयते । 'अयं प्रजानां जनिता प्रजापतिर्गवां गोष्ठ इह मध्यतो वसः । वत्सतरीष्वपसदने गवामधि तिष्ठ पशून् भुवनस्य गोपाः ॥' इति मण्डलानि भ्रामयति । 'रेतोधायै त्वाऽतिसृजामि वयोधायै त्वाऽतिसृजामि यूथत्वायै त्वाऽतिसृजामि गणत्वायै त्वाऽतिसृजामि सहस्रपोषायै त्वाऽतिसृजाम्यपरिमितपोषायै त्वाऽतिसृजामि' इति पर्युक्ष्यैकरूपं द्विरूपं बहुरूपं वा यो वा यूथं छादयति यूथेन तेजस्विनाऽलंकृतेनालंकृतमपराजितां दिशं निष्क्रामयेयुः सह वत्सतरीभिः । तन्त्रं संस्थापयेयुः । अथ ब्रह्मणे गां पयस्विनीं दद्यात् । पायसेन ब्राह्मणान् भोजयित्वोत्सृज्य सर्वान् कामानाप्नोत्यक्षयांश्च लोकानाप्नोतीति ॥

(१) आप. १८(३)।१.

## देवीपुराणम्

कार्तिकामावास्यायां राज्ञा कर्तव्यो गवोत्सर्गः

[1]कृष्णपक्षे त्वमावास्या कार्तिकस्य ततः परे ।
योऽहि कुर्याद्गवोत्सर्गमश्वमेधफलं लभेत् ॥
सुवर्णदाने गोदाने भूमिदाने च यत्फलम् ।
तत्फलं कोटिगुणितं गवोत्सर्गेण लभ्यते ॥
तस्मान्मनोरमे स्थाने शाद्वले गर्तवर्जिते ।
शर्कराश्मरहिते शङ्खभेरीनिनादिते ॥
स्तम्भद्वयं समारोप्य पूर्वपश्चिमसंस्थितम् ।
तत्र दर्भमयी कार्या शरवंशभवाऽथवा ॥
मध्ये कम्बलसंयुक्ता दीर्घरज्जुः सुशोभना ।
उभयोः पार्श्वयोर्विप्रा वेदध्वनिसमन्विताः ।
एवं विधानतः कृत्वा उत्सर्गं कारयेत्ततः ॥
प्रथमं गच्छते होता यजमानसमन्वितः ।
ब्रह्मक्षत्रविशः शूद्रास्तथा गावः प्रजाः पुनः ॥
तथाऽन्ये वर्णबाह्यास्तु चण्डालपरिवर्जिताः ।
गच्छन्ति मुदिता हृष्टा हास्यतोषसमन्विताः ॥
[2]यस्त्वेवं कुरुते राजा पुरे ग्रामेऽथ पत्तने ।
नश्यन्ति चेतयः सर्वाः प्रजानां नन्दनं चिरम् ॥
[3]नाकाले म्रियते राजा पुत्रपौत्रैश्च वर्धते ।
देवा भवन्ति सुप्रीतास्तथा वै मातरस्तथा ।
गोलोकं च लभेद्वत्स सर्वान् कामानवाप्नुयात् ॥

ईतयः प्रसिद्धाः । यथा– 'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥' । * राक. २००

* राप्र. राकवत् ।

(१) राक. १९९ ; राप्र. ४४६–४४७.

(२) राक. २०० नन्दनं (नन्दने) ; राप्र. ४४७.

(३) राक. २०० ; राप्र. ४४७.

# वसोर्धाराविधिः

## देवीपुराणम्

आश्विनादिमासतिथिविशेषेषु चन्द्रसूर्योपरागयोः
तीर्थविशेषेषु व्रतबन्धादिशुभकर्मसु
च राज्ञा कर्तव्यं वसोर्धाराकर्म

विद्याधर उवाच–

[1]यथा सा सर्वगा देवी सर्वेषां च फलप्रदा ।
तथाऽहं श्रोतुमिच्छामि वसोर्धारां सविस्तराम् ॥

अगस्त्य उवाच–

ब्रह्मणा या समाख्याता देवराजस्य पृच्छतः ।
विधिश्च पापहा श्रोतुः शृणुष्वावहितो मम ॥
[2]वसोर्धारास्थिता देवी सर्वकामप्रदायिका ।
तथा ते कथयिष्यामि शृणु पुण्यविवृद्धये ॥
[3]सर्वेषामेव देवानां कथितेयं मयोत्तमा ।
विशेषेण तु वह्निस्था आयुरारोग्यदा मता ॥
[4]विजयं भूमिलाभं च मानवानां प्रियं तथा ।
विद्यासौभाग्यपुत्रादि कुण्डस्था संप्रयच्छति ॥
तस्मान्नृपेण भूत्यर्थं वसोर्धाराश्रिता शिवा ।
पूजनीया यथाशक्त्या सर्वकामफलप्रदा ॥
[5]रुद्रादित्या ग्रहा विष्णुर्ब्रह्मा यक्षाः सकिंनराः ।
हुताशनमुखाः सर्वे दृष्टादृष्टफलप्रदाः ॥
[6]गोदानं भूमिदानं च रत्नसर्पिस्तिलादि च ।
दानानि च महान्त्याहुस्तेषां धारा विशिष्यते ॥

(१) राप्र. ४४७.

(२) राक. २०१ सर्वत्र भविष्यपुराणे ; राप्र. ४४७.

(३) राक. २०१ ; राप्र. ४४७–४४८ कथितेयं (उक्ता देवी).

(४) राक. २०१ ; राप्र. ४४८.

(५) राक. २०१ ब्रह्मा (वयं) ; राप्र. ४४८.

(६) राक. २०१ ; राप्र. ४४८.

[1]विप्राणां कोटिकोटीनां भोजयित्वा तु यत्फलम् ।
लभते तदवाप्नोति धारां दत्त्वा हुताशने ॥
[2]व्यतीपाते न संदेहः स च सूक्ष्मः प्रकीर्तितः ।
अयनं विषुवच्चैव दिनच्छिद्रं तथैव च ।
दुष्प्रापं दानहोमानां धारायां लभते नृप ॥
[3]तस्मान्नृपेण वृद्ध्यर्थं दृष्टादृष्टजिगीषुणा ।
वसोर्धारा प्रकर्तव्या सर्वकामसुखावहा ॥
[4]समां वा अर्धमर्धं वा ऋतुमासार्धवासरम् ।
कृत्वा विभवरूपेण शाश्वतं लभ्यते फलम् ॥

समाम् अब्दम् । राप्र. ४४८

[5]एकाहमपि यो देवीं कल्पयित्वा हुताशने ।
पातयेत्सर्पिषो धारां स लभेदीप्सितं फलम् ॥
देवीमातृसमीपस्थं शिवविष्णुसमीपगम् ।
भानोः प्रजापतेर्वाऽपि वसोर्धारागृहं भवेत् ॥
चिरंतनेषु सर्वेषु स्वयं वा संस्कृतेषु च ।
पर्वतेषु च दिव्येषु नदीनां संगमेषु च ॥
[6]गुहासु च विचित्रासु गृहगर्भेषु भूमिषु ।
दत्त्वा समीहितान् कामान् विधिना लभते नृप ॥
[7]अथ सामान्यतो गेहं समसूत्रं जलोन्मुखम् ।
वास्तुसंशुद्धविन्यासमेकादशकरं परम् ॥

(१) राक. २०१–२०२ उत्तरार्धे (सद्वृत्तरतिना शान्ते एकेनापि च तद् भवेत् ॥ ) ; राप्र. ४४८.

(२) राक. २०२ ; राप्र. ४४८ लभते (लभ्यते).

(३) राक. २०२ ; राप्र. ४४८.

(४) राक. २०२ समां (समं) ; राप्र. ४४८ लभ्यते (लभते).

(५) राक. २०२ ; राप्र. ४४८.

(६) राक. २०२ ; राप्र. ४४९ समी (सम).

(७) राक. २०२ ; राप्र. ४४९.

[1]त्रीणि पञ्चाथवा सप्त दश वा नव कारयेत् ।
विंशकं यावदेकोनत्रिंशदूर्ध्वं न कारयेत् ॥
[2]एकेष्टं शैलदार्वं वा सालिन्दं सहतोरणम् ।
पञ्च सप्ताऽथ नव वा गवाक्षकविभूषितम् ॥
[3]सर्वतोभद्रविन्यस्तं क्रमवृद्ध्या विवर्धितम् ।
ऊर्ध्वं वै धूमनिष्काशं सप्रकाशं विशेषतः ।
सदेवसंग्रहं कार्यमथवा दैवतैः समम् ॥

सदेवसंग्रहं प्राचीनस्थापितदेवप्रतिमम् । देवतागमं तत्कालानीतदेवप्रतिमम् । राप्र. ४४९

[4]तस्य मध्ये भवेत्कुण्डं हस्तादिशुभलक्षणम् ।
चतुष्कमथवा वृत्तं पङ्कजाकृति वाऽथवा ।
पृथिवीजयदं शाक्रं वृत्तं कामफलप्रदम् ॥

(१) शाक्रं चतुरस्रम् । राक. २०३

(२) अथवा इत्यनेन योनिकुण्डमुच्यते । अत एव 'योन्यां कामफलप्रदम्' इत्यनेन अग्रे तत्फलमुक्तम् । राप्र. ४४९

[5]पङ्कजे जयमारोग्यं योगदानफलप्रदम् ।
शेषाः कार्यविभागेन कुण्डाः कार्या विजानता ॥
[6]सामान्यं सर्वहोमेषु शाक्रकुण्डं वरोत्तमम् ।
विस्तारखाततुल्यं तु त्रिमेखलसमन्वितम् ॥
[7]चतुस्त्रीन्द्वौ च वा कुर्यादङ्गुलान्कुण्डमानतः ।
द्विगुणं द्विगुणे कुण्डे होमसारेण कारयेत् ॥

होमसारेण होमानुसारेण । राप्र. ४५०

[1]एवं संसादयेद्विप्र ततः पात्रं सशृङ्खलम् ।
हैमं वा राजतं वाऽपि ताम्रं वा लक्षणान्वितम् ॥
[2]चतुर्भिः कटकैर्युक्तमयःशृङ्खलसंग्रहम् ।
तस्य मध्ये भवेद्रन्ध्रं कर्षार्धस्य शलाकया ॥
[3]हेमोत्थया प्रमाणेन चतुरङ्गुलमानया ।
घृतनिष्क्रमणार्थाय कार्यं सम्यग्विपश्चिता ॥
[4]पलैर्दशभिरर्धोनैर्नाडयेका तु यथा व्रजेत् ।
पञ्चभिस्तु शतैर्होमः सप्तत्याऽथ षडग्रया ॥
[5]यथा पूर्णा व्रजेद्वत्स तथा कुर्यान्न चाऽन्यथा ।
हस्तमात्रं भवेद्धैमं शृङ्खलं भुजगाकृति ॥
[6]रन्ध्रे सूत्रनिबद्धं च अवलम्ब्य अधस्ततः ।
मणिं वा पङ्कजं यत्र साश्वत्थं कारयेत्तले ॥
[7]एवं कार्यानुरूपेण द्विगुणं त्रिगुणं च वा ।
कुर्यात्पात्रं घृतं चैव प्रतिष्ठा देव चोदिता ॥
[8]उद्देशं किंचिदत्रापि कथयामि नृपोत्तम ।
समायनमृतुर्मासपक्षाहोरात्रपूर्ववत् ॥
[9]लग्नादि शोधयेद्वत्स सर्वकामप्रदं यदा ।
क्षणिकेषु च कार्येषु भक्तियुक्तः क्षणे शुभे ॥

---

(१) राक. २०३ यावदेकोनत्रिंश (वा यदेकोनं विंश) ; राप्र. ४४९.

(२) राक. २०३ ; राप्र. ४४९ तृतीयचरणे (पञ्चसप्तनवास्यं वा).

(३) राक. २०३ ; राप्र. ४४९ विन्यस्तं (विन्यासं) वै (च) दैवतैः समम् (देवतागमम्).

(४) राक. २०३ ; राप्र. ४४९.

(५) राक. २०३ कार्यविभागेन (कार्या विधानेन) ; राप्र. ४४९ योगदान (योन्यां काम).

(६) राक. २०३ विस्तारखात (विस्तारं चात्र) ; राप्र. ४४९ वरोत्तमम् (नरोत्तम).

(७) राक. २०३ होम (होमानु) ; राप्र. ४४९ चतुस्त्रीन् द्वौ (चतुस्त्रि द्वे) गुणं (गुणान्).

(१) राक. २०३–२०४ ; राप्र. ४५० साद (साध) द्विप्र (द्विप्रः).

(२) राक. २०४ कर्षार्धस्य (कार्यं वत्स) ; राप्र. ४५०.

(३) राक. २०४ ; राप्र. ४५०.

(४) राक. २०४ नाडयेका (नाडयेकां) ऽथ (च) ग्रया (ग्रयोः) ; राप्र. ४५०.

(५) राक. २०४ ; राप्र. ४५०.

(६) राक. २०४ ; राप्र. ४५० स्ततः (स्ततम्) यत्र साश्वत्थं (पात्रमाबद्धं).

(७) राक. २०४ कार्यानु (कार्यास्तु) चतुर्थचरणे (प्रतिष्ठादेवचोदितम्) ; राप्र. ४५०.

(८) राक. २०४ ; राप्र. ४५०.

(९) राक. २०४ दि शोध (द्यप्रसाध) प्रदं (प्रदा) ; राप्र. ४५०.

[1]क्षणं देवी च द्रष्टव्या यथा सर्वगता शिवा ।
तत्र भूता ग्रहा नागास्त्रिविधाऽपि शिवा गुणाः ॥
[2]नित्यनैमित्तिके होमे मन्त्रयोगेन दापयेत् ।
यो यस्य भक्तिमासक्तस्तस्य कुर्यात्सुसंनिधिम् ॥
[3]सग्रहांल्लोकपालांश्च मातरो भुजगाञ्छिवान् ।
कल्पयेत्सर्वहोमेषु देवी एतेषु संस्थिता ॥
[4]स्थूलरूपा तु तैस्तुष्टैस्तुष्टा देवी महाफला ।
कालादिबलिगन्धादि प्रतिष्ठावच्च कारयेत् ॥
[5]यथासंपत्तिसंपन्नः सर्वकालं प्रदापयेत् ।
तदा मातृग्रहान् भूतांल्लोकपालान्निवेशयेत् ॥
[6]हैमान्राजतताम्रान्वा स्वनिवेशोपलक्षितान् ।
स्वर्णपुष्पबलिगन्धदक्षिणादि यथाक्रमम् ॥
[7]मातॄणां लोकपालानां ग्रहाणां च यथाविधि ।
हृदयेन प्रदेयं च मूलमन्त्रैः पुरातनैः ॥
[8]अथवा सर्वसामान्यां वैदिकीमपि कारयेत् ।
अथर्वविधिना वत्स पूर्वोक्तां वा यथा पुरा ॥
[9]प्रभूतमन्नं नैवेद्यैर्भूरिदक्षिणसंयुतैः ।
कुर्यान्महाप्रयत्नेन नान्यथा तु कदाचन ॥
[10]छेदे भयं विजानीयात् तदर्थं तत्र कारयेत् ।
महाव्याहृतिहोमेन पात्रमत्र निवेशयेत् ॥

(१) राक. २०४ तत्र भू (तत्त्वभू) ; राप्र. ४५०.
(२) राक. २०४–२०५ ; राप्र. ४५० नित्यनै (नित्ये नै). (३) राक. २०५ ; राप्र. ४५०.
(४) राक. २०५ तैस्तुष्टैस्तु (सा सर्वा तु) दि प्रतिष्ठावच्च (दिप्रतिष्ठां वत्स) ; राप्र. ४५१.
(५) राक. २०५ ; राप्र. ४५१.
(६) राक. २०५ हैमान् रा (हेमरा) तृतीयचरणे (वर्णपुष्पबलिं गन्धं) ; राप्र. ४५१.
(७) राक. २०५ ; राप्र. ४५१.
(८) राक. २०५ न्यां वैदिकीमपि (न्यान् वैदिकानपि). वत्स पूर्वोक्तां (मन्त्रान् पूर्वोक्तान्) ; राप्र. ४५१.
(९) राक. २०५ ; राप्र. ४५१ तु (च).
(१०) राक. २०५ पात्रमत्र (यत्र तत्र) ; राप्र. ४५१.

[1]मूलमन्त्रेण देव्यास्तु शृङ्खलं हृदयेन तु ।
घृतं शिरसो मन्त्रेण शिखया वाऽनुतापयेत् ॥
[2]कवचेन तथा वह्निं रक्षयित्वा प्रदापयेत् ।
अस्त्रेण नेत्रमन्त्रेण सर्वं सर्वत्र निक्षिपेत् ॥
लोकपालान् ग्रहान्नागान्द्वादशार्धेन पूजयेत् ।
शिवाद्यान् सनकाद्यांश्च देवाद्यानपि पूजयेत् ॥
[3]नित्येषु च महाप्राज्ञ निमित्तेषु विशेषतः ।
पञ्चकानि च सप्तानि नवकानि क्रियादिकैः ॥
[4]अग्नेर्वर्णश्च गन्धश्च शब्दश्चाऽऽकृतयस्तथा ।
विकाराश्च तदा वत्स बोद्धव्याः सिद्ध्य-सिद्धिदाः ॥
तदन्ते वत्स सत्कार्या सर्वकामप्रदायिका ।
येन सांनिध्यमायाति सर्वहोमेषु मङ्गला ॥
[5]'सहस्रार्चिर्महातेजो नमस्ते बहुरूपिणे ।
नमस्ते नीलकण्ठाय पीतवासाय पावक ॥
[6]स्रुवमेखलहस्ताय ब्रह्माण्डं दहते नमः ।
सर्वाशिने सर्वगतपावकाय नमो नमः ॥
[7]दुर्गाय उग्ररूपाय स्त्रीलिङ्गाय स्वतेजसे ।
वसुअश्विनिरूपाय सर्वाहाराय वै नमः ॥
[8]त्वं रुद्र घोरकर्माऽसि घोरहा परमेश्वर ।
विष्णुस्त्वं जगतां पालो ब्रह्मा सृष्टिकरः स्मृतः ॥
त्वं च सर्वात्मको देव लोकपालतनुस्थितः ।
इन्द्राय वह्नये देव यमाय पिशिताशिने ॥
वरुणानिलसोमाय ईशदेवाय वै नमः ।
सूर्याय चन्द्ररूपाय भूसुताय बुधाय च ॥

(१) राक. २०५ ; राप्र. ४५१ वाऽनु (चानु).
(२) राक. २०५–२०६ ; राप्र. ४५१.
(३) राक. २०६ निमित्तेषु वि (नैमित्तिकवि) ; राप्र. ४५१ पू. (४) राक. २०६ ; राप्र. ४५१.
(५) राक. २०६ ; राप्र. ४५२ तेजो (तेजा).
(६) राक. २०६ ण्डं दहते (ण्डदहने) गतपा (गते पा) ; राप्र. ४५२.
(७) राक. २०६ ; राप्र. ४५२ दुर्गाय (उग्राय).
(८) राक. २०६ ; राप्र. ४५२.

[1]'बृहस्पतये शुक्राय सौरये राहुकेतवे।
सर्वग्रहस्वरूपाय व्यालमातङ्गरूपिणे ॥
[2]'वृष्टिसृष्टिस्थितिभूतिकर्त्रे च वरदाय च।
नमस्ते स्कन्दमातस्ते स्कन्दपित्रे नमो नमः ॥
[3]'कुण्डे वा मण्डले वाऽपि स्थण्डिले वाऽथवा विभो।
महानसे वा त्वां देव हुत्वा चेष्टं लभेन्नरः॥'
[4]'घृतं क्षीरं रसं धान्यं तिलान् व्रीहीन् कुशान् यवान्।
भावादभावतो वाऽपि सततं होमयेत्तु यः ॥
एवं वित्तविहीनोऽपि नरो विगतकिल्बिषः।
किं पुनर्नित्यहोमे तु वसोर्धारा हुताशने ॥
सर्वमङ्गलमन्त्रेण आहुतिं संप्रदापयेत्।
लोकपालग्रहाणां तु ओंकारेण नमोन्तकैः ॥
[5]'स्वैः स्वैर्मन्त्रैरशेषाणां होमः कार्यो नृपोत्तम।
अन्नं चित्रं विशुद्धं च संस्कृतं घृतपायसैः॥
[6]'होमयेद्विधिवद्विप्रो बलिं वाऽपि प्रदापयेत्।
सितवस्त्रधरो भूपः सबलः सहवाहनः ॥
[7]'पूजयेच्छत्ररत्नादीन् मातरं पितरं द्विजान्।
आचार्यान् बान्धवांल्लोकान् सर्वाश्रमरतांश्च ये ॥
नटनर्तकवेश्याश्च कन्यका विधवास्त्रियः।
दीनान्धकृपणांश्चैव अन्नदानेन पूजयेत् ॥
एवं निवेशनं कृत्वा नित्यं जप्यं शतं शतम्।
प्रातर्मध्याह्नसंध्यायां तत्र शान्तिः प्रकीर्तिता ॥
भवते नृपराष्ट्रस्य पूर्वोक्तफलदायकम् ॥

ब्रह्मोवाच—

तप्तहाटकवर्णाभः सूर्यसिन्दूरकान्तिभृत्।
शङ्खकुन्देन्दुपद्माभो घृतक्षीरनिभः शुभः॥

एवं वसोर्धारानिवेशनं विधाय तत्र धूमस्य वर्णभेदेन फलाफलं तत्रैवोक्तम्— ब्रह्मोवाच— तप्तेति।

राप्र ४५३

[1]'जपाभोऽशोकपुष्पाभो लाक्षाजलजसंनिभः।
शुभदः सर्वकार्याणां विपरीतो ह्यसिद्धिदः ॥
[2]'मेघदुन्दुभिशङ्खानां वेणुवीणास्वनः शुभः।
वृषेभशिखिकाकानां कोकिलस्य न पूजितः ॥
[3]'कुङ्कुमागुरुकर्पूरमदरोचनगन्धवान्।
मांस्येलाकुष्टतगरसितगन्धी च पूजितः॥

मदः मृगमदः। राप्र. ४५३

[4]'हंसच्छत्रेभगोकुम्भपद्माकृतिकरः शुभः।
सिंहबर्हिणशैलानां चामराकृतिरिष्टदः॥
[5]'सधूमोऽमृतगन्धी च शुकषट्चरणोपमः।
छिन्नज्वालोऽथवा रोदी नेष्टः सर्वेषु पावकः॥
[6]'सुसंहतशिखः शस्त ऊर्ध्वं प्रज्वलितोऽपि वा।
लेलिहानः शुभः कुण्डे दीप्तिमान् वरदोऽनलः॥
[7]'एवंविधः सदैवाथ यज्ञे वैश्वानरो हितः।
यात्रायां शक्रकेतौ च सर्वकार्येषु सिद्धिदः ॥
न्यूना या वहते धारा मानात्सर्पिर्न सा शुभा।
नाधिका शस्यते विप्र दुर्भिक्षकलिकारिका ॥

---

(१) राक. २०६–२०७ सौरये राहु (सौरराहोश्च) ग्रहस्व (गग्रह) मातङ्ग (मातर); राप्र. ४५२.

(२) राक. २०७ वृष्टिसृष्टिस्थितिभूति (वृष्टिः सृष्टिः स्थितिः [भूतिः]); राप्र. ४५२.

(३) राक. २०७; राप्र. ४५२ वाऽथवा (वाऽथ तां) त्वां देव (भ्राष्ट्रे वा) चेष्टं (इष्टं).

(४) राक. २०७; राप्र. ४५२.

(५) राक. २०७; राप्र. ४५२–४५३ रशे (स्तु शे).

(६) राक. २०७; राप्र. ४५३ वाऽपि (चापि).

(७) राक, २०७–२०८; राप्र. ४५३.

(१) राक. २०८; राप्र. ४५३ भोऽशोक (भः शङ्ख).

(२) राक. २०८ लस्य न पू (लस्वनपू); राप्र. ४५३.

(३) राक. २०८; राप्र. ४५३ गन्धी च (गन्धिश्च).

(४) राक. २०८; राप्र. ४५३ कृतिकरः (करकृतिः).

(५) राक. २०८; राप्र ४५३–४५४ शुकषट् (शुकास्य).

(६) राक. २०९; राप्र. ४५४ तोऽपि (तोऽथ) कुण्डे दी (कुन्ददी). (७) राक. २०९; राप्र. ४५४.

त्रुट्यते वहमाना या शाम्यते वा हुताशनः ।
साऽपि चाऽन्यं नृपं त्विच्छेद्या च धारा पतेद्बहिः ॥
[1]ऋजुनादा महारूपा मनोज्ञा प्रियकारिका ।
सुवर्णा हेमवर्णा च धारा राज्यविवृद्धये ॥
[2]संतता पतते या च तनोतीव च पावकम् ।
तनोति सनृपं राष्ट्रं वसोर्धारा न संशयः ॥
[3]सुगन्धि स्वस्थं विमलं कृमिकीटविवर्जितम् ।
शस्यते वसुधारायां सर्पिर्गव्यं च पूजितम् ॥
[4]अभावाद्द्रव्यमाज्यं वा होतव्यं च सुशोभनम् ।
घृतक्षौद्रपयोधारा सर्वपीडानिवारिणी ॥
[5]गुडूचीशकलैर्होमः सहकारदलैः शुभः ।
अश्वत्थमालतीदूर्वा आयुरारोग्यपुत्रदाः ॥
[6]सौभाग्यं च श्रियं देवी प्रयच्छत्यविचारणा ।
आर्क्याद्या वा शुभा वत्स सफलाः सर्वकामिकाः ॥
[7]होतव्याः सर्वकालं तु सातत्यात्समिधो नृप ।
सर्वकालं घृतं प्रोक्तं निमित्ते च निमित्ततः ॥
[8]विशुद्धसर्पिषो यानि तानि चाऽत्र विचारयेत् ।
ज्वालावशं शुभं गन्धं सर्वहोमेषु लक्षयेत् ॥

(१) राक. २०९ ऋजुनादा (वज्रा नदी) प्रिय (क्रिय); राप्र. २५४.

(२) राक. २०९; राप्र. ४५४ सनृपं राष्ट्रं (नृप राष्ट्रं सा).

(३) राक. २०९ प्रथमचरणे (सुगन्धिस्वस्थविमल); राप्र. ४५४.

(४) राक. २०९ द्रव्य (द्रन्ध); राप्र. ४५४.

(५) राक. २०९ डूची (डूचि); राप्र. ४५४.

(६) राक. २०९ आर्क्याद्या (आच्छाद्य); राप्र. ४५४ चारणा (चारणात्).

(७) राक. २०९–२१०; राप्र. ४५४.

(८) राक. २१०; राप्र. ४५४ शुद्धस (शुद्धे स) वशं (वच).

[1]संयतैः संयताहारैः सर्वशास्त्रार्थपारगैः ।
जपहोमरतैर्भूप धारा देया तु तद्विधैः ॥
[2]पाषण्डविकलांल्लुब्धान् धर्मपितान् बहिष्कृतान् ।
सर्वकालप्रवादांश्च न वदेन्नावलोकयेत् ॥
[3]मृत्युंजयं तथा मन्त्रं चतुर्थ्यन्तं जपेत्तदा ।
भाग्यवान्नित्यहोमे तु अन्यथा विफलं भवेत् ॥
[4]सामान्या या भवेद्धारा तत्र जप्यं शतं शतम् ।
प्रातर्मध्याह्नसंध्यासु सर्वकामसमृद्धये ॥
[5]वसुर्द्रव्यं घृतं वाऽऽज्यममृतं हविष्कामिकम् ।
तत्र धारा सदा देया वसोर्धारा हि सा मता ॥
[6]वसुनाऽपत्यकामेन दक्षेण च महात्मना ।
मया च विष्णुना शक्र रुद्रेण च सहोमया ॥
आत्मानं च स्वरूपेण धारायां तु प्रपातितम् ।
देवी सांनिध्यमायाता सर्वकामप्रदायिका ॥
तस्मात् त्वमपि राजेन्द्र वसोर्धारां प्रदापय ।
नातः परतरं पुण्यं विद्यते नृपसत्तम ॥
वसोर्धाराप्रदानस्य एकाहमपि यद्भवेत् ।
नृपेण पुष्टिकामेन परराज्यजिगीषुणा ॥
देया धारा सदा वत्स रिपुनाशाय विद्धि ताम् ।
विच्छेदो नित्यहोमस्य न कार्यस्तु कदाचन ।
महादोषमवाप्नोति यः कुर्याद्विमुखान् सुरान् ॥
[7]द्रव्याभावे घृताभावे नृपतस्करजे भये ।
यदि नो वहते धारा तदा छिद्रं न विद्यते ।
होमं कृत्वा क्षमापेत देवदेवीं नृपोत्तम ॥

(१) राक. २१०; राप्र. ४५५.

(२) राक. २१०; राप्र. ४५५ पाषण्ड (पाखण्डि).

(३) राक. २१०; राप्र. ४५५ यं तथा म (यमहाम) सदा (तथा).

(४) राक. २१०; राप्र. ४५५.

(५) राक. २१०; राप्र. ४५५ वसुर्द्र (वसुद्र).

(६) राक. २१०–२११; राप्र. ४५५.

(७) राक. २११; राप्र. ४५५ द्वितीयचरणे (नृपतस्करजं भयम्) देवदेवीं (देवं देवीं).

[1]पुनः प्राप्ते भवेद्वत्स प्रतिष्ठा विधिचोदिता ।
महत्याश्विनमासे तु अष्टमीनवमीषु च ॥
[2]कार्तिक्यां माघचैत्रे तु चित्रायां रोहिणीषु च ।
वैशाख्यां तु प्रदातव्या ज्यैष्ठ्यां ज्येष्ठस्य सत्तम ॥
[3]आषाढे द्वादशी चोक्ता अष्टमी पूर्णिमा नभे ।
नभस्ये रोहिणी वत्स चतुर्थ्यां भौमवासरे ॥
[4]संक्रान्तिषु च सर्वासु गुरुसौरभवासु च ।
चन्द्रसूर्योपरागेषु प्रतिष्ठायज्ञकर्मणि ॥
पुत्रोत्सवे प्रदातव्या जन्मपुष्पा( ? पुष्या )-
भिषेचने ।
मार्गे व्रतनिबन्धे तु सुघोरे केतुदर्शने ।
ग्रहकृत्योपशमने धारा देया शुभावहा ॥
जन्मदिनाभिषेके पुष्पा( ? पुष्या )भिषेके च ।
राप्र. ४५६
[5]एवं यो वाहयेद्धारां शास्त्रदृष्टेन कर्मणा ।
तस्य भूः सिध्यते सर्वा सनगा सहसागरा ॥
[6]अश्वमेधसमं पुण्यं दिनहोमात्प्रजायते ।
वाजपेयशतं रात्रावग्निष्टोमशतं तथा ॥
[7]आधयो व्याधयस्तस्य न भवन्ति कदाचन ।
आयुरारोग्यमैश्वर्यं तदन्ते च सुखी भवेत् ॥
[8]हिमवद्धेमकूटे च विन्ध्ये माहेन्द्रपर्वते ।
वैदिशे तु जयन्ते वा महासेने च भूभृति ॥
गोपगिरौ महापुण्ये चित्रकूटेऽथ यामुने ।
कालञ्जरेऽथवा काश्यां प्रयागे देवपर्वते ॥
उज्जयिन्यां च यो धारां दापयेद्वा महेश्वरि ।
एतेषु पुण्यदेशेषु विषुवायनसंक्रमे ॥
पुष्करे नैमिषे वत्स देया पञ्चमुखेक्षिते ।
गिरौ धाराप्रदानेन ग्रहपीडा न जायते ॥
बहुवक्रगते देहे वत्सरं न भयं भवेत् ।
जन्मतारर्क्षपीडायां दत्ता धारा व्यपोहति ॥
जम्बूमार्गे सदा पूजा धारापाते विशिष्यते ।
सर्वकामानवाप्नोति नर्मदायां महामुने ।
धारादानेन गङ्गायां कालिन्द्यां वा महाह्रदे ॥
दत्त्वा विधानविहितं न भयं जायते क्वचित् ।
शनिसूर्यकृतां पीडां गुरुभौमीं व्यपोहति ॥
यथापूजाविधानेन प्रतिसंवत्सरे स्थिता ।
पीडां निवारयेद्वत्स संवत्सरग्रहोद्भवाम् ॥
मन्त्रं जपेत् संकथितं न भयं विद्यते क्वचित् ।
एकान्ते दुष्टरहिते पापजन्तुविवर्जिते ॥
धाराहोमश्च कर्तव्यो यथोक्तः श्रियमिच्छता ।
जिह्वायां पातयेद्धारां न द्रुतां न विलम्बिताम् ॥
सावधानेन मनसा मृत्युंजयनिपातिता ।
मन्त्रयोगाद्भवेत्सिद्धिर्दृष्टादृष्टप्रसाधिका ॥
ग्रहोद्भवां हरेत्पीडां त्रिविधामपि दुःस्थिताम् ।
ग्रहाश्च त्रिविधाः प्रोक्तास्तेषां मन्त्रा
विधानतः ॥
अंशजा मूलमन्त्राश्च पीठपादगतास्तथा ।
होमकाले प्रयोक्तव्याः पूजाकाले तथैव च ॥
एवं सिद्धिमवाप्नोति इह स्वर्गापवर्गिकाम् ।
तावत्काले क्रियायोगाद्धारायां लभते मुने ॥
धारादानं प्रकर्तव्यं यत्र कुत्र घटादिभिः ।
तैर्मन्त्रैर्नित्यहोमे च पूर्वं च कथितो विधिः ॥

( १ ) राक. २११ ; राप्र. ४५५–४५६.
( २ ) राक. २११ ज्यैष्ठ्यां (ज्येष्ठा) ; राप्र. ४५६.
( ३ ) राक. २११ ; राप्र. ४५६ चोक्ता (प्रोक्ता).
( ४ ) राक. २११ ; राप्र. ४५६.
( ५ ) राक. २११ ; राप्र. ४५६ नगा (नागा).
( ६ ) राक. २११–२१२ ; राप्र. ४५६.
( ७ ) राक. २१२ ; राप्र. ४५६ सुखी (शिवो).
( ८ ) राप्र. ४५६–४५७.

# शत्रुनाशनकर्माणि

## आथर्वणपरिशिष्टम्

### घृतकम्बलाख्यं कर्म

[1]ब्रह्मणे ब्रह्मवेदाय नमस्कृत्वा स्वयंभुवे ।
घृतकम्बलं प्रवक्ष्यामि ब्रह्मणो निगदो यथा ॥
बृहस्पतिर्महेन्द्राय चकार घृतकम्बलम् ॥

अथेन्द्रो ह वा असुरैः पराजितश्चिन्तामापेदे । तं सविताऽब्रवीत् प्रायश्चित्तं कुरुष्वाप्रतिरुद्धो भविष्यसीति । तमिन्द्रोऽब्रवीत्– भगवंस्त्वमेवाप्रतिरुद्धः प्रायश्चित्तं कुर्विति । स प्रायश्चित्तमकरोत् । पुण्ये नक्षत्रे बार्हस्पत्ये मुहूर्तेऽभिजित्यौदुम्बरं कुम्भं द्रोणेन साढकेन पूरयित्वा तस्मिन्नेव वासःप्रभृतय ओषधयो दर्भप्रभृतयश्च बिल्वगौरसर्षपाश्चेत्येतान् संभारान् संभृत्य घृतकुम्भं बर्हिष्याधायैतैर्गणैराज्यं जुहुयात् । 'प्र पतेतः' इत्येकेनाङ्गादङ्गाच्छमलमवलिख्य सपत्नं भ्रातृव्यं हृदये मर्मणि वाऽसिनाऽऽविध्य गोमयेन काषायेण वाऽऽच्छाद्य शान्तेरप्रतिघातकं कर्म ॥

[2]ततो ज्येष्ठं घृतकम्बलं ब्रह्मणः पुत्रमकरोत् । तस्य ह वा एतस्य घृतकम्बलस्य सावित्रीगणशरीरस्य शन्तातीयः शिरः, त्रिषप्तीयो मुखम्, रुद्ररौद्रौ चक्षुषी, घृतलिङ्ग आस्यम्, नैर्ऋतो जिह्वा, दन्तोष्ठावभयापराजितौ, कृत्यादूषणचातनौ श्रोत्रे, शर्मवर्मस्वस्त्ययनौ बाहू, मातृनामवास्तोष्पत्यौ पादौ, पायुश्च भैषज्यम्, न्यायः प्राणापानाविति मीमांसन्त इति ॥

[3]एष ह वै ज्येष्ठो घृतकम्बलो ब्रह्मणः पुत्रोऽपराजितगणेनेष्ट्वेन्द्रोऽसुरानजयत् । मृत्युमलक्ष्मीमरातिं दुःस्वप्नदुर्भूतान्यजयत् । यथा चैवं विद्वान् घृतकम्बलं कुरुते सर्वकामानाप्नोति सर्वव्याधिरहितो भवति ब्रह्मलोकमवाप्नोतीति ब्राह्मणम् ॥

(१) आप. ३३।१. (२) आप. ३३।१ ; राप्र. ४६३.
(३) आप. ३३।१ ; राप्र. ४६३ मृत्यु (राज्य) दुःस्वप्न (दुष्टस्वप्न).

[1]यदा सर्वमिदं व्याप्तमसुरैर्नाविशेषितम् ।
स्थातुं देवाः पराभूतास्तेऽथर्वाणमुपागताः ॥
[2]कर्माधिकं कुरुष्व त्वं यद्भृग्वङ्गिरसोर्मतम् ।
असुराणां वधार्थायेत्युक्तः कर्ताऽथ सोऽभवत् ॥
[3]परचक्रोपसृष्टस्य राज्ञो विजयमिच्छतः ।
प्रतिरुद्धस्य वा भूयः श्रीकामस्येच्छतः श्रियम् ॥
[4]प्रादुर्भावेऽद्भुतानां च ग्रहाणां विग्रहे तथा ।
शङ्कमानोऽभिचाराद्वा कारयेद् घृतकम्बलम् ॥
[5]घृतमात्रा तु विज्ञेया मागधप्रस्थसंमिता ।
शतानि पञ्च द्रोणानां पलैकशतमेव वा ॥
[6]सर्वपापप्रणाशाय सर्वकामार्थसिद्धये ।
सर्वरोगक्षयार्थाय प्रयोज्यो घृतकम्बलः ॥
[7]घृतप्रमाणं वक्ष्यामि माषकं पञ्चकृष्णलम् ।
माषकाणि चतुःषष्टिः पलमेकं विधीयते ॥
द्वात्रिंशत्पलकं प्रस्थं मागधैः परिकीर्तितम् ।
आढकं तु चतुःप्रस्थं चतुर्भिर्द्रोणमाढकैः ॥
द्रोणप्रमाणं विज्ञेयं ब्रह्मणा निर्मितं पुरा ।
द्वादशाभ्यधिकैर्नित्यं पलानां पञ्चभिः शतैः ॥*

* अतः परम् 'घृतमात्रा तु विज्ञेया' इत्यादिः पूर्वपठितः श्लोकः चतुर्थचरणे 'पलानां वा शतोत्तरे' इति पठित्वा परिशिष्टे पुनरुक्तः । राजनीतिप्रकाशे नास्ति ।

(१) आप. ३३।२ ; राप्र. ४६३.
(२) आप. ३३।२ ; राप्र. ४६३ कर्माधे (कर्म स्व).
(३) आप. ३३।२ ; राप्र. ४६३ सृष्टस्य (राष्ट्रस्य).
(४) आप. ३३।२ ; राप्र. ४६४ च (तु).
(५) आप. ३३।२ ; राप्र. ४६४ वा (च).
(६) आप. ३३।३.
(७) आप. ३३।३ ; राप्र. ४६४.

'घृतं द्रोणशतं वाऽथ षष्टिद्रोणावरं तथा ।
यथाशक्ति प्रयुञ्जीत घृतं कृत्वा तु भागशः ॥
'चतुर्भागोऽभिषेकाय चतुर्भागस्तु हूयते ।
भागो देयः सदस्येभ्यः कर्ता भागेन युज्यते ॥
'पुष्ये प्रयोगं कुर्वीत प्राजापत्येऽथ मारुते ।
वैष्णवे पूषदैवत्ये उत्तरेष्वथवा त्रिषु ॥
ततकृच्छ्रावसाने वा सर्वकृच्छ्रस्य चान्ततः ।
यस्मिन् वा स्नातका ब्रूयुस्तत्र कुर्याद्विचक्षणः ॥
पाकयज्ञविधानेन कृत्वोपक्रमणं बुधः ।
निशाकाले बहिर्ग्रामे कुर्यादग्निनिवेशनम् ॥
यजेत निर्ऋतिं तत्र कृष्णवासाश्चतुष्पथे ।
यथोक्तं नैर्ऋतैर्मन्त्रैर्हविर्भिश्च यथाक्रमम् ॥
तृतीयेन तु सूक्तेन निवेद्य बलिमन्ततः ।
यथाव्यावर्तने चैव यदुक्तं तत्समाचरेत् ॥
ततः स्नातः शुक्लवासाः प्राश्य शान्त्युदकं शुचिः ।
पर्युक्ष्योपसमाधाय घृतसंस्कार इष्यते ॥
पूर्वं महाव्याहृतिभिः सावित्र्या तदनन्तरम् ।
शान्तिश्च ब्रह्मजज्ञानं ब्रह्म भ्राजदितीति च ॥
'अग्ने गोभिः, अग्नेऽभ्यावर्तिन्, अग्ने जातवेदः, सह रय्या, पुनरूर्जा' इति ॥
अग्निमीळे पुरोहितमग्न आ याहि वीतये ।
बृहस्पतिर्न इत्येका बृहस्पते युवं तथा ॥
एतैराज्यं च जुहुयात्संपातानानयेद् घृते ।
कृत्यादूषणमन्त्रैश्च कुर्याच्छान्त्युदके विधिम् ॥
संपातानानयेत्तत्र चातनैर्मातृनामभिः ।
वास्तोष्पत्यैर्वास्तोष्पतावानयेत्समदूषणम् ॥
निधाय हविरासाद्य घृतकुम्भं सुसंस्कृतम् ।
घृतभागौ तु यावन्यौ पूर्वेणाग्नेर्निधापयेत् ॥

(१) आप. ३३।३ पूर्वार्धे (घृतद्रोणशतेनोक्त एको द्रोणवरस्तथा ।) त्वा तु (त्वाऽथ); राप्र. ४६४.
(२) आप. ३३।३; राप्र. ३६४.
(३) आप. ३३।४-६.

दर्भादींस्तु वासादींश्च संभारान् गौरसर्षपान् ।
बिल्वं च कुम्भे निधायापरेणाग्नेर्निधापयेत् ॥
सावित्रः शन्तातीयश्च कृत्यादूषण एव च ।
अभयापराजितायुष्या वर्चस्यश्च ततः परः ॥
संसृष्तीयः सुपर्णीयः स्वस्त्ययनः शर्म वर्म च ।
चातनो मातृनामानि भैषज्यं न्याय एव च ॥
घृतलिङ्गौ(? ङ्गः) तथा रौद्रौ संपातानानयेद् घृते ।
गणान्तेषु यथाशक्ति ब्राह्मणान् स्वस्ति वाचयेत् ॥
योऽस्मिन्नक्षीभ्यां ते सहस्राक्षं ब्रह्मजज्ञानम् ।
ब्रह्म भ्राजदुदगादिदमापस्तथाऽऽपश्च ॥
एतैर्मन्त्रैरभिषिञ्चेद् घृतेन प्राङ्मुखः स्थितः ।
प्रावृतं कम्बलेनैवमभिषिञ्चेदुदङ्मुखः ॥
'आविकं कम्बलं पूर्णं वासोर्थमुपकल्पितम् ।
प्रावृत्य स्नापयेदेनमित्युवाच बृहस्पतिः ॥
'अभिषिञ्चेत्सर्वमन्त्रैरायुष्यैरभयैस्तथा ।
मृण्मयश्चात्र भवति द्वेष्यस्य च पराकृतिः ॥
तस्योपरिष्टादभिषिच्य कुर्यान्मात्रात-लेखनीम् ।
अङ्गादङ्गादथान्येन प्रपतेति चतसृभिः ॥
भ्रातृव्यहमिति वैश्वानरो यन्त्यवसानेन ।
द्यावादिना पर्यायेण समलंकृतमुल्लिखेत् ॥
द्विषन्तं मे परावह्नि द्विषन्तं निर्दहन्तु मे ।
भ्रातृव्य तानिति द्वाभ्यां पर्यायाश्च त्रयः पराः ॥
अन्वालभ्य तु कर्तारमुपविष्ट उदङ्मुखः ।
स्वप्नतक्माघ्ननयनैः सौभाग्यैर्वर्मभिस्तथा ॥
रुद्ररौद्रपरैर्मन्त्रैराज्यहोमो विधीयते ।
स्राक्त्यं वा यदि वाऽऽश्वत्थमौदुम्बरमथापि वा ॥
शङ्खं च मणिमाबध्य प्रतिसरैरभिमन्त्रयेत् ।
अन्वारभ्याभिषेकं तु रौद्राभ्यां जुहुयात्ततः ॥

(१) राप्र. ४६४.
(२) आप. ३३।६-७.

यत्ते वास इति परिधानं यथोक्तं परि-
धापयेत् ।
रोचना गुग्गुलु घृतमभ्यञ्जनमथाञ्जनम् ॥
तत एतैरलंकृत्य ईक्षयेताऽऽदर्शे मुखम् ।
दश गा दक्षिणां दद्याद् वृषभं घृतमेव च ॥
ब्राह्मणान् स्वस्ति वाच्याथ प्राङ्मुखः
संविशेत्ततः ।
रक्षोहणमित्यनुवाकं जपेत्कर्ताऽथ ऋत्विजः ॥
शर्म वर्मैतदुक्तं स्नातस्य रक्षोभ्योऽभयंकर-
मिति ॥

[1]न राक्षसा न गन्धर्वा न पिशाचा न चासुराः ।
क्रूराः पुरुषमर्मज्ञा न हिंसन्ति घृतार्चितम् ॥ *
[2]सिद्धाभिषेको नैशश्च घृतकम्बलमेव च ।
लक्षः पुष्याभिषेकश्च प्रधानावभृतस्तथा ॥
महाशान्तित्रयस्त्रिंशत्तत्र षट्प्रस्तरैः सह ।
नियतान्येवदछाया(?) कर्तव्या भूतिमिच्छता ॥

## विष्णुधर्मोत्तरपुराणम्

राज्ञा कृत्तिकासु कर्तव्यानि अग्न्यादि-
देवतापूजनहोमादीनि

राम उवाच–
[3]कर्माणि श्रोतुमिच्छामि काम्यानि गृहिणामहम् ।
त्वत्तः समस्तधर्मज्ञ यादोगणनृपात्मज ॥
पुष्कर उवाच–
[4]कृतोपवासो याम्यर्क्षे सोपवासस्य भार्गव ।
पुरोधाः स्नपनं कुर्यात् कृत्तिकासु यथाविधि ॥
अथ शत्रुनाशनं कृत्तिकास्नानमुच्यते– पुष्कर उवाच
– कृतोपवास इति । राप्र. ४५८

अकालमूलैः कलशैर्मृन्मयैरथ काञ्चनैः ।
उज्ज्वलैर्लक्षणैः पूर्णैस्तथा तीर्थोदकैः शुभैः ॥
अग्निमन्थशिरीषाणां न्यग्रोधाश्वत्थयोरपि ।
पत्रपूर्णैस्तथा युक्तैस्तिलैः कृष्णैर्द्विजोत्तम ॥
[1]वह्निं कुमारं शशिनं रुद्रं वरुणमेव च ।
पूजयेत् कृत्तिकाश्चैव गन्धमाल्यान्नसंपदा ॥
[2]पीतरक्तैस्तथा वर्णैर्घृतदीपैस्तथैव च ।
दध्ना गव्येन लाजाभिरग्निमन्थेन चाप्यथ ॥
[3]कृसरोल्लोपिकाभिश्च अपूपैश्च पृथग्विधैः ।
देवतानां यथोक्तानां प्रिथङ्गुं जुहुयात्ततः ॥
[4]चन्दनं च मयूराणां लोमानि मनुजोत्तम ।
अग्निमन्थगृहाद्भूमं कृत्वा रुक्माङ्गदं मणिम् ॥
[5]धारयेद्दक्षिणां दद्याच्छक्त्या कनकमेव च ।
श्वेतवासास्ततः पश्चात्पूजयेन्मधुसूदनम् ।
कर्मैतत् सततं कृत्वा वह्न्याधानमथाऽऽप्नुयात् ॥
[6]कर्मैतदुक्तं रिपुनाशकारि
सर्वाग्निकर्मप्रसमृद्धिदं च ।
धन्यं यशस्यं च तथैव काम्यं
नित्यं कृतं धर्मविदां वरिष्ठ ॥

वासुदेवपूजाहोमादीनि कर्माणि

राम उवाच–
[7]अग्न्याधानमथाऽऽप्नोति शत्रुनाशमथापि वा ।
स्वेच्छया कर्मणा केन सदा यादोनृपात्मज ॥

---

* अत्र चतुर्थचरणस्य द्विरुक्तिं कृत्वा परिशिष्टं समापितं राजनीतिप्रकाशे ।

(१) आप. ३३।७ ; राप्र. ४६४ मर्म ( धर्म ).
(२) आप. ३३।७.
(३) विध. २।९६।१.
(४) विध. २।९६।२–४ ; राप्र. ४५८.

(१) विध. २।९६।५ रुद्रं ( खड्गं ) ; राप्र. ४५८.
(२) विध. २।९६।६ ; राप्र. ४५८. दीपै ( धूपै ).
(३) विध. २।९६।७ ; राप्र. ४५८.
(४) विध. २।९६।८; राप्र. ४५८ चन्दनं च ( गर्दभाश्व ).
(५) विध. २।९६।९ ; राप्र. ४५८ सततं ( सर्वतः ).
(६) विध. २।९६।१० ; राप्र. ४५८ विदां ( भृतां ).
(७) विध. २।९७।१ ; राप्र. ४५९ धानमथा ( धेयमवा ).

अथ अपरं शत्रुनाशनं कर्म विष्णुधर्मोत्तरे– राम उवाच– अग्न्याधेयमिति । राप्र. ४५९

[1]शत्रुनाशकरं कर्म कथयस्व ततः परम् ।
तदहं श्रोतुमिच्छामि तत्र श्रद्धा सदा मम ॥

पुष्कर उवाच–

[2]कृतोपवासो याम्यर्क्षे कृत्तिकासु सदैव तु ।
पूजयेद् वासुदेवं तु कुङ्कुमेन सुगन्धिना ॥
रक्तैश्च कुसुमैर्द्दद्यैर्धूपं दद्याच्च गुग्गुलम् ।
घृतेन दीपं दद्याच्च रक्तवर्णं तथैव च ॥
[3]निवेदनीयं देवाय तथा सर्वं निवेदयेत् ।
होतव्यं सुसमिद्धेऽग्नौ तथैवात्र शुभं हविः ।
आयुधानि च देयानि ब्राह्मणेभ्यश्च दक्षिणा ॥

[4]कर्मैतदुक्तं रिपुनाशकारि
कार्यं सदा शत्रुगणप्रमाथि ।
कृत्वैतदग्र्यं रिपुनाशमाशु
प्राप्नोति राजा न हि संशयोऽत्र ॥

घृतकम्बलशान्तिः

परशुराम उवाच–

[5]शान्तिमाचक्ष्व मां देव घृतकम्बलसंज्ञिताम् ।
कार्या या पार्थिवेन्द्राणां विजयाय पुरोधसा ॥

अथ शत्रुनाशिनी घृतकम्बलशान्तिः । तत्र विष्णुधर्मोत्तरे– राम उवाच– शान्तिमाचक्ष्वेति । राप्र. ४५९

(१) विध. २।९७।२ ; राप्र. ४५९ ततः प (तथाऽप).

(२) विध. २।९७।३–४ ; राप्र. ४५९.

(३) विध. २।९७।५ ; राप्र. ४५९ द्वितीयार्धे (होतव्याश्च समिद्धेऽग्नौ तथैवासुरसर्षपाः ।) च दे (प्रदे) भ्यश्च (भ्यस्तु).

(४) विध. २।९७।६ कार्यं (धार्यं) राजा (मर्त्यो) ; राप्र. ४५९.

(५) विध. २।१६१।१ ; राप्र. ४५९ परशुराम उवाच (राम उवाच).

पुष्कर उवाच–

[1]पूर्वोत्तरे तु दिग्भागे नगरात् सुमनोहरे ।
प्रागुदक्प्रवणे देशे शान्त्यागारं तु कारयेत् ॥
[2]शुभमत्यन्तविस्तीर्णं नानावस्त्रविभूषितम् ।
पुनर्वसुगते चन्द्रे तत्र यायान्नराधिपः ॥
[3]पुरस्कृत्य महाभाग सांवत्सरपुरोहितौ ।
आभिषेचनिका मन्त्रा ये मयाऽभिहिताः पुरा ॥

ते च मन्त्राः राज्याभिषेकप्रकरणे पठिताः । राप्र. ४६०

[4]देवादयस्तु तेषां वै स्थानं तत्र प्रकल्पयेत् ।
गन्धमण्डलकैर्मुख्यैर्यथास्थानं पुरोहितः ॥
[5]आवाहनं ततः कुर्यात् स्नातस्तत्र सुखोषितः ।
देवादीनां तु सर्वेषां ब्राह्मणैः सहितो द्विज ॥
[6]आवाहितानां सर्वेषां गन्धमाल्यान्नसंपदा ।
दैववित् पूजनं कुर्यात् तथा नृपपुरोहितौ ॥
[7]एवं संपूजनं कृत्वा सोपवासास्तु ते त्रयः ।
स्वप्युश्च तां निशां तत्र सर्वे एव समाहिताः ॥
[8]ततो नैर्ऋतकं कर्म प्रदिशेत् तु पुरोहितः ।
कृत्वा त्रिभागशेषायां रात्रौ कुर्यात्तु शान्तिकम् ॥

नैर्ऋतकं कर्म बलिदानादि । राप्र. ४६०

(१) विध. २।१६१।२ ; राप्र. ४६० शान्त्या (शान्त्य).

(२) विध. २।१६१।३ शुभ (तं त) सुगते (सौ गते) ; राप्र. ४६०.

(३) विध. २।१६१।४ आभि (अभि) ; राप्र. ४६०.

(४) विध. २।१६१।५ ; राप्र. ४६०.

(५) विध. २।१६१।६ द्वितीयचरणे (स्नातास्तत्र च येऽपि ते) हितो (हिता) ; राप्र. ४६०.

(६) विध. २।१६१।७ दैववित् (देववत्) ; राप्र. ४६०.

(७) विध. २।१६१।८ ; राप्र. ४६०.

(८) विध. २।१६१।९ दिशेत् (देशे) ; राप्र. ४६०.

[1]हुत्वा दशगुणं तत्र स्नापयेत्तं नराधिपम् ।
पूर्वमेव तथा स्नातं सिद्धार्थोत्सादितं तथा ।
पूर्णेन घृतकुम्भेन मन्त्रेणानेन कालवित् ॥
[2]'आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम् ।
आज्यं सुराणामाहारमाज्ये लोकः प्रतिष्ठितः ॥
[3]भौमान्तरिक्षदिव्यं वा यत्ते किल्बिषमागतम् ।
सर्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छतु ॥'
[4]ततो विरूक्षितं स्नातं स्नानवेद्यां नराधिपम् ।
गच्छेतां तु पुरस्कृत्य सांवत्सरपुरोहितौ ।
स्नानवेदी तु कर्तव्या लाजाकुसुममण्डिता ॥
[5]चतुर्भिः पूर्णकुम्भैस्तु विदिक्षु ह्युपशोभिता ।
चत्वारि तस्याश्चर्माणि प्राग्ग्रीवाणि समास्तरेत् ॥
वृषस्य द्वीपिनश्चैव सिंहशार्दूलयोस्तथा ।
भद्रासनं न्यसेद्राम तेषामुपरि चर्मणाम् ॥
[6]स्वासीनं नृपतिं तत्र वस्त्रैराच्छादयेन्नवैः ।
कार्पासिकैः ततः पश्चादाविकैः कृमिजैस्ततः ॥
[7]ततस्तु सर्पिषः कुम्भैः पूर्णैस्तमभिषेचयेत् ।
कुम्भाष्टकं तु कर्तव्यमष्टाविंशतिरेव वा ॥
अथवाऽष्टशतं राम वृद्धिरेषा गुणोत्तरा ।
ततोऽपनीय वस्त्राणि तस्यां वेद्यां पुरोहितः ॥

(१) विध. २।१६१।१०-११ प्रथमचरणे (श्रुत्वा दशगुणानत्र) स्नातं (स्नानं) दितं (धितं); राप्र. ४६०.

(२) विध. २।१६१।११-१२ पाप (तेजो); राप्र. ४६० लोकः (लोकाः) ष्ठितः (ष्ठिताः).

(३) विध. २।१६१।१२-१३ पूर्वार्धे (तेनान्तरिक्षं दिव्यं वा धत्ते कल्मषनाशनम् ।); राप्र. ४६०.

(४) विध. २।१६१।१३-१४ गच्छेतां (गच्छेत्तं); राप्र. ४६१ तु कर्त (प्रकर्त).

(५) विध. २।१६१।१५-१६; राप्र. ४६१.

(६) विध. २।१६१।१७ न्नवैः (न्नृपैः); राप्र. ४६१.

(७) विध. २।१६१।१८-१९; राप्र. ४६१.

[1]शूलेन मृन्मयं भिन्द्याच्छत्रुं क्रोधसमन्वितः ।
राक्षस्तु कलशं दद्यात् स्वयं सांवत्सरस्ततः ॥
[2]अभिषेचनमन्त्रेण स्वर्चितं कल्पितं दृढम् ।
ज्योतिष्मतीं त्रायमाणामभयामपराजिताम् ॥
[3]जीवां विश्वेश्वरीं पाठां समङ्गामभयां तथा ।
सहां च सहदेवां च पूर्णकोशां शतावरीम् ॥
[4]अरिष्टिकां शिवां भद्रां कलशं तत्र विन्यसेत् ।
ब्राह्मीं क्षेमामजां चैव सर्वबीजानि काञ्चनम् ॥
मङ्गल्याश्च यथालाभं सर्वौषध्यो रसस्तथा ।
रत्नानि सर्वगन्धाश्च बिल्वं च सविकङ्कतम् ॥
[5]एवं स्नातो घृते दृष्ट्वा वदनं दर्पणं तथा ।
मङ्गलालभनं कृत्वा धौतवासाः समाहितः ॥
[6]अभ्यर्चनं ततः कुर्याद्देवादीनां पृथक्पृथक् ।
तेषामेव ततो वह्नौ चतुर्थ्यन्तैस्तु नामभिः ॥
[7]ओंकारपूतं जुहुयाद् घृतं बहु पुरोहितः ।
आयुधाभ्यर्चनं कार्यं वाहनाभ्यर्चनं ततः ॥
[8]राजचिह्नार्चनं कृत्वा ह्यलंकृत्य स्वकां तनुम् ।
अनुलेपनमादद्याद् गन्धद्वारेति मन्त्रतः ॥

(१) विध. २।१६१।२० दद्यात् (दत्त्वा); राप्र. ४६१.

(२) विध. २।१६१।२१; राप्र. ४६१.

(३) विध. २।१६१।२२; राप्र. ४६१ भयां (भयं) देवां (देवीं).

(४) विध. २।१६१।२३-२४; राप्र. ४६१.

(५) विध. २।१६१।२५ दर्प (तर्प); राप्र. ४६१-४६२ लभ (लम्भ).

(६) विध. २।१६१।२६.

(७) विध. २।१६१।२७; राप्र. ४६२ ततः (तथा) उत्त.

(८) विध. २।१६१।२८; राप्र. ४६२ मन्त्रतः (मन्त्रितम्).

[1]शुभं वसनमादद्याच्छ्रीसूक्तेनाभिमन्त्रितम्।
श्रियं धातर्मयि धेहि मन्त्रः सुमनसां भवेत्॥
[2]रायस्पोषेति च तथा मन्त्रोऽलंकरणे स्मृतः।
ततोऽनुलिप्तः सुरभिः स्रग्वी रुचिरभूषणः॥
[3]केशवाभ्यर्चनं कृत्वा वह्निस्थानं ततो व्रजेत्।
वह्नेरुत्तरदिग्भागे तथा प्रागुक्तचर्मणाम्॥
[4]सिंहासनं न्यसेत् पृष्ठे भव्यास्तरणसंयुतम्।
ततस्तु राम चर्माणि प्राग्ग्रीवाणि तु विन्यसेत्॥
[5]वृषस्य वृषदंशस्य करिणः पृषतस्य च।
तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परम्॥
[6]ध्रुवा द्यौरिति मन्त्रेण नृपं तत्रोपवेशयेत्।
दर्भपाणिस्ततो राजा तथैव च पुरोहितः॥
[7]तयोर्हस्तगतावग्रे दर्भौ संग्रन्थयेद् द्विजः।
ततः पुरोधा जुहुयाद् ब्राह्मैर्मन्त्रैर्घृतं शुचिः॥
[8]रौद्रवैष्णववायव्यशाक्रसौम्यैः सवारुणैः।
बार्हस्पत्यैस्ततः कुर्यात्तन्त्रमुत्तरसंज्ञकम्॥
[9]दैवज्ञः प्रयतः कुर्याद्देवतानां विसर्जनम्।
यान्तु देवगणाः सर्वे सानुगाः सपरिच्छदाः।
आदाय पार्थिवात् पूजां पुनरागमनाय च॥

(१) विध. २।१६१।२९ धेहि (देहि) ; राप्र. ४६२ वसन (चन्दन). (२) विध. २।१६१।३० ; राप्र. ४६२.

(३) विध. २।१६१।३१ चतुर्थचरणे (ततः प्रागुक्त-कर्मणाम्) ; राप्र. ४६२.

(४) विध. २।१६१।३२ ; राप्र. ४६२ द्वितीयचरणे (पराध्यास्तरणैर्युतम्).

(५) विध. २।१६१।३३ करिणः (करेश्च) ; राप्र. ४६२.

(६) विध. २।१६१।३४ ; राप्र. ४६२.

(७) विध. २।१६१।३५ ग्रन्थ (ग्रथ) ; राप्र. ४६२ मैन्त्रैर्घृतं (मैधुघृतं).

(८) विध. २।१६१।३६ ; राप्र. ४६२ ज्ञकम् (ज्ञितम्).

(९) विध. २।१६१।३७–३८ पुन (नग) ; राप्र. ४६२.

[1]ततस्तु पूजयेद्राजा सांवत्सरपुरोहितौ।
धनेन ब्राह्मणानां च ततो दद्याच्च दक्षिणाम्॥
[2]मङ्गलालभनं कृत्वा खड्गपाणिर्गृहान् व्रजेत्।
शान्तिघोषेण महता राजा कुञ्जरगस्ततः॥

[3]शान्तिर्मया तेऽभिहिता नृवीर
धन्या यशस्या रिपुनाशनी च।
सुखावहा राष्ट्रविवृद्धिकर्त्री
कार्या नृपैर्धर्मविवृद्धिदा च॥

## भविष्यपुराणम्

### कार्तिकेयपूजा

[4]राज्ञां पूज्यः सदा प्रोक्तः कार्तिकेयो महीपते।
कार्तिकेयादृते राज्ञां नान्यं पूज्यं प्रचक्षते॥
सङ्ग्रामे गच्छमानो यः पूजयेत्कृत्तिकासुतम्।
स शत्रूञ्जयते वीरो यथेन्द्रो दानवान् रणे॥
[5]तस्मात् सर्वप्रयत्नेन पूजयेच्छंकरात्मजम्।
पूजयानस्तु तं भक्त्या चम्पकैर्विविधैर्नृप।
मुच्यते सर्वपापेभ्यः सद्यो गच्छेच्छिवालयम्॥

कार्तिकेयपूजाऽपि सर्वदा कर्तव्यत्वेन विशेषतश्च रणे प्रस्थितस्य राज्ञः आवश्यकत्वेनोक्ता भविष्यपुराणे— राज्ञामिति। 'नान्यं पूज्यम्' इत्यनेन कार्तिकेयपूजाविधानस्याऽऽवश्यकत्वम्, न तु अन्यदेवतापूजानिषेधः, उदाहृतदेवीपुराणवचनेन देवीपूजायाः कूर्मपुराणादौ शिवविष्णवादिदेवतापूजाया अपि राजकर्तृकत्वेन विशिष्याभिधानात्। राप्र. १४५

(१) विध. २।१६१।३८–३९ ; राप्र. ४६३ ततस्तु (ततश्च) दद्याच्च (दद्यात्तु).

(२) विध. २।१६१।३९ हान् व्र (हादन्र) ; राप्र. ४६३ लभ (लम्भ).

(३) विध. २।१६१।४० ; राप्र. ४६३.

(४) राक. १७६ ; राप्र. १४५.

(५) राक. १७६ पूजया (पूज्यमा) सद्यो (स वै) ; राप्र. १४५.

## कौशिकगृह्यसूत्रम्

दुःस्वप्नदर्शनशान्तिः

'[1]'परोऽपेहि, यो न जीवः' इति स्वप्नं दृष्ट्वा मुखं विमार्ष्टि ॥

अथ स्वप्नाध्याये पठिते उग्रे स्वप्नदर्शने शान्तिरुच्यते। स्वप्नाध्यायपठितदुःस्वप्नं च रुद्रभाष्यकारमतेन ग्रहीतव्यम्। 'पक्वमांसे प्रेतदर्शने परिष्वङ्गमर्कटे दृष्ट्वा तैलाभ्यङ्गे नग्नपुरुषदर्शने नग्नस्त्रीदर्शने कालसूत्रे' इत्यादिस्वप्नाध्यायपठिता अनेकशः। इति दुःस्वप्नदर्शने शान्तिरुच्यते। स्वप्नं कुत्सितं दृष्ट्वा मुखं प्रक्षालयति। दाकेटी.

अतिघोरं दृष्ट्वा मैश्रधान्यं पुरोडाशमन्याशायां वा निदधाति ॥

'पर्यावर्ते' इति पर्यावर्तते ॥

'यत्स्वप्ने' इत्यशित्वा वीक्षते ॥

'विद्मा ते स्वप्न' इति सर्वेषामप्ययः ॥

अथ पुनर्घोरदुःस्वप्ननाशनकर्म उच्यते। 'विद्मा ते स्वप्न' इत्येकेन पर्यायेण दुःस्वप्नं दृष्ट्वा मुखं विमार्ष्टि। पार्श्वेन द्वितीयेन भूयते। अन्नं स्वप्ने दृष्ट्वा निरीक्षते। मैश्रधान्यं पुरोडाशं जुहोति। दाकेटी.

सर्वाद्भुतसामान्या शान्तिः

* '[2]अथ यत्रैतदनाज्ञातमद्भुतं दृश्यते तत्र जुहुयात् ॥

'यदज्ञातमनाम्नातमर्थस्य कर्मणो मिथः।
अग्ने त्वं नस्तस्मात्पाहि स हि वेत्थ यथातथम् ॥ अग्नये स्वाहा ॥'

'वायो, सूर्य, चन्द्र' इति च ॥

'पुरुषसंमितोऽर्थः कर्मार्थः पुरुषसंमितः।
वायुर्मा तस्मात्पातु स हि वेत्थ यथायथम् ॥
वायवे स्वाहा ॥'

'अग्निर्मा, सूर्यो मा, चन्द्रो मा' इति च ॥

अथ सर्वाद्भुतेषु शान्तिरुच्यते। भार्गव्याणि, गार्ग्याणि, बार्हस्पत्याद्भुतानि, महाद्भुतानि, औशनसाद्भुतानि। यत् ग्रन्थे न पठ्यते तत्सर्वमनाज्ञातमित्युच्यते, यदपि परिशिष्टेषु पठ्यते। इतिहासपुराणज्योतिःशास्त्रे अश्ववैद्यके नरवैद्यकेषु पठितेषु अद्भुतेषु सर्वाद्भुतेषु एषा शान्तिः, अथवा महाशान्तिरमृता घृतकम्बलः कोटिहोमः। 'सर्वाद्भुतेषु कौशिकापठितेषु एषा शान्तिः महाशान्तिर्वा विकल्पात्' इति भाष्यकारः। दाकेटी.

## * आथर्वणपरिशिष्टम्

उल्का–परिवेष–दिग्दाह–विद्युद्–भूमिकम्प–निर्घात–महोत्पातभेदसंख्या, उल्कादिषु महाशान्तेः कर्तव्यता

'[1]उल्काभेदास्तथा पञ्च परिवेषा नव स्मृताः।
दिग्दाहोऽष्टविधः प्रोक्तो विद्युदष्टविधा तथा ॥
चत्वारो भूमिकम्पाश्च निर्घातोऽष्टविधस्तथा।
विंशती द्वे च विज्ञेया भेदा ह्युल्कादिषु स्मृताः ॥

---

* कौशिकसूत्रे अद्भुतविशेषनिमित्तिकाश्चित्वारिंशत्संख्याकाः शान्तिविशेषा उक्ताः। ते विस्तरभियाऽत्र न संगृहीताः।

(१) कौसू. ४६।९–१३. (२) कौसू. ११९।१–५.

* आथर्वणपरिशिष्टग्रन्थे अष्टादशसु परिशिष्टेषु भूयसा विस्तरेण स्वप्नोत्पाताद्भुताद्यनिष्टसूचकवर्णनं संक्षेपेण शान्तिविधानं च कृतम्। तानि सर्वाणि परिशिष्टानि सामान्यतो विशेषतश्च राजसंबन्धात् यद्यप्यस्मिन् प्रकरणे संग्रहीतुमर्हन्ति, तथाऽपि परिशिष्टपुस्तकस्याचिरादेवोपलब्धत्वात् कालापर्याप्तेश्च तत्रत्यः कश्चिदेव भागोऽत्र संगृहीतः।

(१) आप. ६८।५.

महोत्पाताश्च बहवः शान्तियोगेषु कीर्तिताः ।
तेषु सर्वेषु विधिवच्छान्तिकामो नराधिपः ॥
अथर्वाणं च वृणुयात्सर्वशास्त्रविदं नृपः ।
स वृतो भयभीतेन शमनार्थं महात्मना ॥
प्रजानामभयं सम्यग्दापयेत्पृथिवीपतिः ।
अनन्तरं गवां पूजा ब्राह्मणानां विशेषतः ॥
देवतायतने सद्यो दोहान्भूमौ प्रकारयेत् ।
सततं चानुलिप्यस्तु पुष्पैर्धूपैर्यथोदितैः ॥
प्रदीपैर्विविधैः शुभ्रैः सर्वदिक्षु प्रकल्पितैः ।
तथा बल्युपहारैश्च पायसापूपसंयुतैः ॥
हृद्यैर्बहुविधैर्भक्ष्यैः सर्वदिक्षु प्रकल्पितैः ।
तस्मिन्नेवान्तरे शान्ते गोष्ठे वा जलसंनिधौ ॥
निर्गत्य नगराद्वाऽपि शुचौ देशे समाहितः ।
वृणुयाच्छान्तितत्त्वज्ञानुत्पातविहिताञ्छुभान् ॥
षोडशाष्टौ वृतास्ते च पुरश्चरणशोधिताः ।
अङ्गानि कुर्युरन्ये च शतसंख्या द्विजोत्तमाः ॥
उदयास्ते सुखासीना जपं कुर्युरतन्द्रिताः ।
ते सदस्या इति प्रोक्ता वाचने यज्ञकर्मणि ॥
तेषां वरिष्ठः शान्तिज्ञ उपद्रष्टा मनोहरः ।
सर्वकर्मसु वेत्ता य आनयेत्सोऽप्यथाऽऽदरात् ॥
भूमिं संशोध्य विधिवत्कृत्वा तत्र च मण्डपम् ।
विधिवत्कल्पयेद्वेदिं यज्ञपात्राणि च स्वयम् ॥
एवं यथोक्तविधिना अग्निमन्थनपूर्वकाम् ।
महाशान्तिं प्रयुञ्जीत सर्वोपद्रवनाशिनीम् ॥
अन्नैर्वस्त्रैश्च विविधैः संयुक्तां बहुदक्षिणाम् ।
कारयित्वा महाशान्तिं वरं गां च निवेदयेत् ॥
गृहमाभरणं छत्रमनडुद्वाजिनं तथा ।
कुञ्जरं वा तथा दत्त्वा घण्टाभरणभूषितम् ॥
महत्सुखमवाप्नोति कार्यसिद्धिं च विन्दति
कार्यसिद्धिं च विन्दति ॥

अमृतायां महाशान्तौ ब्राह्मणयोग्यता, अधिकारसिद्ध्यर्थं कर्तुर्ब्राह्मणानां च व्रतादीनि, ग्रहयागदिग्यागनक्षत्रयागपूर्वकं शान्तिकरणम्, भौमान्तरिक्षदिव्याद्भुतेषु होमादिविधिविशेषाः, कोटिहोमे हविर्द्रव्यभेदफलानि

[1]संपूज्य विधिवत्प्राज्ञं विद्वांसो मुनयः पुरा ।
अपृच्छन्भृगुमव्यग्रं सर्वसत्त्वहिते रतम् ॥
लोकत्रयनिविष्टानामुत्पातानामनेकधा ।
भिन्नानां शमनं नोक्तं वद त्वसंशयं मुने ॥
प्रत्युवाच भृगुर्विप्राञ्छृणुताऽऽहितमानसाः ।
उत्पातशमनत्रित्वं कथ्यमानमसंशयम् ॥
तत्र विप्रान् प्रवक्ष्यामि दुरिष्टशमनक्षमान् ।
अथर्वाङ्गिरसो वेदे विधिज्ञान् सर्वकर्मणाम् ॥
अहिंसासत्यदाक्षिण्यशौचश्रद्धासमन्विताः ।
श्रुतिस्मृतिसदाचाराः कुलशीलवयोन्विताः ॥
तेषामेकः प्रधानत्वे यः शान्तो द्विजसत्तमः ।
भृग्वङ्गिरोविदत्यर्थं शुचिः स्यात्साधुसंमतः ॥
ब्रह्माणं तं नृपः कुर्याद्धोतारं सर्ववेदिनम् ।
एवमुक्ते भृगुं विप्राः प्रोचुर्विगतकल्मषम् ॥
होतारो भूमिभर्तॄणां महाशान्तेः प्रकीर्तिताः ।
ननु क्षीणे नृपे विद्वान् स्वधर्मप्रच्युतेऽपि वा ॥
तत्र शान्तौ प्रयुक्तायां कस्य शान्तिफलं भवेत् ।
नृपोऽप्यधार्मिकः कुर्याद्ब्रह्मणस्तर्पणं पुरा ॥
ततः कृता महाशान्ती राजानं पाति सर्वतः ।
सव्रतः पावनं गच्छेद् द्विजानां पावनाय वै ॥
द्वादशाहं व्रतं तत्र पयोमूलफलाशनैः ॥
त्रीणि त्र्यहाणि कुर्वीत पयोमूलफलैः शुभैः ।
अनश्नंश्च त्र्यहं धीरः सपुरश्चरणो भवेत् ॥
तथैकोनं शतं नृणां शुश्रूषूणामकल्मषम् ।
अनुक्तवच्च त्र्यहं तत्कर्मणः करणे क्षमम् ॥
कृच्छ्रं चापि हितं कृत्वा कुर्युः कर्म समाहिताः ।
शुद्धात्मानो जपैर्होमैर्वैदिकैर्वीतमत्सराः ॥

---
(१) आप. ७०(१)।१–४.

ततः परं पुरोधःसु दिव्यं तन्त्रमवाप्नुयात् ।
ग्रहातिथ्यं च संरभ्य दिशां यागं च सर्वतः ॥
नक्षत्रेषु च सर्वेषु यागं कृत्वा विधानतः ।
ततोऽमृतामहाशान्त्या स्थापयेत्पद्मसंभवम् ॥
सावित्र्या लक्षहोमं तु भौमे तिष्ठेद्विशारदः ।
कुर्युर्देयं च दानानां विप्रेभ्यो यस्य यत्प्रियम् ॥
गोभूमिकाञ्चनाश्वानां रत्नानां धान्यवाससाम् ।
रथानां वारणानां च दानं काममतः परम् ॥
तुष्येयुर्येन वा विप्राः संभवो यस्य यस्य हि ।
तत्तत्सर्वमुपादेयमेष दानविधिः स्मृतः ॥
दद्याच्च गुरवे ग्रामं धेनुं वासोयुगं तथा ।
अलंकारैश्च संपूज्य प्रीणयेत्प्रीतमानसः ॥
अनेन विधिना भौममद्भुतं शमयेद् गुरुः ।
एष एव विधिर्ज्ञेयो वियत्येऽप्यद्भुताश्रये ॥
विशेषोऽयं तु सावित्र्या दशलक्षांस्तु होमयेत् ।
होमसमाहितमनाः कुर्याच्च घृतकम्बलम् ॥
धेनूनां द्वादशं देयं शतनिष्कसमन्वितम् ।
गुरवे दीयमानं तच्छमयत्यम्बराद्भुतम् ॥
दिव्याद्भुतेषु कर्तव्यः कोटिहोमः समन्वितैः ।
गोसहस्रं च दातव्यं गुरवे दक्षिणाविधिः ॥
एष प्रोक्तो विधिः सम्यग्दिव्यानिष्टविपत्करे ।
सुभिक्षक्षेमसंपत्त्या प्रजानां पुष्टिवर्धनः ॥
कोटिहोमेषु सर्वेषु द्रव्यभेदाश्रयं फलम् ।
शान्तिपुष्ट्यभिचारार्थं तन्मे निगदतः शृणु ॥
सौम्यवृक्षाश्रयाः कार्याः समिधः शान्तिमिच्छता ।
अर्ककाश्मर्यनिम्बानां समिद्भिः शत्रुशातनम् ॥
दुर्नामकण्टकम्बूनां समिद्भिश्च विशेषतः ।
भग्नस्फुटितवृक्षाणां फलं शत्रुनिवर्हणम् ॥
बिल्वपद्मोत्पलानां तु शुचिदेशप्ररोहिणाम् ।
सर्वदा सर्वकामांस्तु होमैः प्राप्नोति मानवः ॥
तिलव्रीहियवादीनां दध्नो मधुघृतस्य च ।
पयोगोधूमशालीनां होता शान्तिं समारभेत् ॥



सर्वेषां हविषां चैव घृतं शान्तिकरं स्मृतम् ।
सर्वद्रव्ये घृतं तस्माद्धोमे प्रक्षेपमर्हति ॥

नानाविधाद्भुतानुक्रमणम्, तत्र अमृताया महाशान्तेः कर्तव्यता, निमित्ते सत्येव शान्तिः कार्या, निमित्ताभावे शान्तिकरणे निमित्तोत्पत्तिः

[1]अथ महाद्भुतानि व्याख्यास्यामः । क्षिप्रविपाकीन्यमोघानि घोराणि ग्रहोपहतमुल्काभिहतं ग्रस्तं निरस्तमुपधूपितं वा यदा स्याज्जन्मनक्षत्रं कर्मनक्षत्रमभिषेचनीयजनपदनक्षत्रम् । एतेषु क्षिप्रमेव महाशान्तिममृतां कारयेद्राजाऽष्टमे च चन्द्रमसः स्थाने वज्रे च देवोपसृष्टे स्कम्भे वा । अथवा नानावर्णे बहुरूपे शृङ्गिणि चाऽऽदित्ये कीलवति चाद्भुतान्युल्काभिहते कबन्ध एव निःश्वसति हसति भ्रमति हासे भासे नादे शब्दे वासने च वैश्वानरेऽप्रज्वलितेऽन्तरिक्षे भस्मास्थ्यश्माङ्गारा वीथी चेन्द्रधनुषि रात्रौ वीध्र एव तु ॥

चन्द्रार्कौ यस्य राष्ट्रे परिविष्येयातां तान्विपक्षान्परलोकसंस्थाञ्जनपदांस्तथैव काककपोतकङ्कगृध्रयक्षराक्षसपिशाचश्वापदेषु नक्तं वदत्स्वभिवदत्सु गायत्सु रायत्सु वा चक्रध्वजवेश्मावसथप्रासादाग्रे वापीकूप उदपाने चोद्गिरति नदति विद्योतति वा रथयन्त्रवारणप्रवहणवादित्रादिषूल्कादयोऽङ्गारा धूमोऽर्चिर्वा प्रादुर्भावे लिङ्गं विलिङ्गे राज्ञः काकोलूककृकलासश्येननिपतिते राजच्छत्रे भग्ने ध्वजे चक्रस्य राज्ञो दण्डे राज्ञश्च दन्ते हस्तिन्यां च मत्तायां ग्रामे च प्रसूतायाम् । राजरथश्च राजाधिरूढो भग्नाक्षः सप्तरात्राद्राज्ञो हन्ति पुरोहितममात्यं सेनापतिं जायां हस्तिनं महिषीं कुमारं राजानमेव वा । ऋध्नुयाद्य एवं वेद । द्वादशं शतं गवां धेनूनां कंसवसनं हिरण्यं निष्कोऽश्व एताश्च दक्षिणाः ॥

(१) आप. ७२।१–६.

नानुत्पन्नेषु दैवेषु राज्ञां शान्तिर्विधीयते ।
अस्थानेषु कृता शान्तिर्निमित्तायोपपद्यते ॥
तस्मात्स्थानं समुद्दिश्य कारयेच्छान्तिमात्मनः ॥

सर्पसमितौ वायुसंभ्रम उदकप्रादुर्भावगमनेषु धनुःसंध्योल्कापरिवेषविद्युद्दण्डाशनिपरिघपरिधिनिर्घाते रजोवर्षमुपलवर्षं दधिमधुघृतक्षीरवर्षं मज्जारुधिरवर्षं वर्षति हीनगभस्ती द्वे मार्गे वीथ्यौ वित्तक्षये सोमस्य क्षयेऽपूर्णपूर्णे क्षयस्यावभासाः सद्योऽपररात्राद्दिग्दाहोपधूपनम् । ग्रहवैषम्यमारोहणमाक्रमणं गन्धर्वनगरं मारुतप्रकोपस्तिथिकरणमुहूर्तनक्षत्रग्रहादीनां सोमवियोगः । प्रतिस्रोतोगामिन्यो नद्यः प्रासादतोरणध्वजेषु वायससमवाया वृकशकटारोहणं वृषदंशातिमार्जनमुलूकप्रतिगर्जनं श्येनगृध्रादीनां ध्वजाभिलपनम् । विकृताश्च मानुषामानुषप्रभवाः स्त्रीबालवृद्धप्रलापाः प्रदीतेन्द्रयष्टिपादभग्नेऽद्रव्येष्वेकवृक्षे द्विच्छाये प्रतिच्छाये परिवृत्तम् । अत ऊर्ध्वं छायोऽकस्माच्चैत्यवृक्षस्तम्भपतने विरोहत्स्वविरोहेष्वच्छिन्नपर्णप्रपाताच्छुष्कशाखिनो द्रुमा धूमरजउदकप्रादुर्भावगमनेषु वनस्पतिषु बहुशस्त्रभङ्ग इन्द्रकीलगोपुराट्टालकध्वजादीनां भङ्ग उचितानां व्युच्छेदनेऽनुचितानां प्रवर्धने दृढभङ्गेषु शुष्कविरोहे गृहे वल्मीके शयनदेशे दर्भस्तम्बोत्पत्तौ मित्रविरोधेऽमित्रप्रीतौ च देवतार्चयो रथच्छेदने यत्र राजा प्रसादमुखः पौरेषु च भृत्यादिषु भवति ॥

भवन्ति चात्र श्लोकाः—

यदा तु प्रतिपत्सोमो विकृत्या विकृतो भवेत् ।
अनुद्विग्नो विलूनो वा राज्ञो मरणमादिशेत् ॥

आयुधाकाररूपाणि श्वेतवर्णाकृतीनि च ।
पञ्चवर्णानि चाभ्राणि तथा दण्डनिभानि च ॥

यदा चन्द्रार्कयोर्मध्ये कृष्णं भवति मण्डलम् ।
स शङ्कुरिति विज्ञेयो ग्रहः परमदारुणः ॥

तत्र राज्ञो वधं विद्यात्सर्वभूतभयावहम् ।
तत्र कुर्यान्महाशान्तिममृतां विश्वभेषजीम् ॥
इति ॥

अद्‌भुतविशेषेषु अनाज्ञातप्रायश्चित्तम्, तदकरणे महाद्‌भुतप्रादुर्भावः, दिव्याद्‌भुतानुक्रमणं तत्र शान्तिविशेषश्च, अत्यद्‌भुतेषु भाग्ययाः महाशान्तेः कर्तव्यता

अथ यस्मिन्नेव जनपदे गोब्राह्मणसूतसांवत्सरवैद्यानां परिव्राजकचारणवानप्रस्थब्रह्मचारिणां वाऽपि संकरः प्रवर्तते तदद्भुतं विद्यात् । कर्मसंकरं यज्ञसंकरं व्यवहारसंकरं च यत्र च धर्मोऽधर्मेण पीड्यते तदद्भुतं विद्यात् । तेषामज्ञातप्रायश्चित्तम् ‘यदज्ञातमनाम्नातम्’ इति मध्ये जुहुयात्पुरुषसूक्तं च । तेष्वकृतप्रायश्चित्तेषु महाद्भुतानि प्रादुर्भवन्ति । दिव्यानीत्याचक्षते देवगृहेष्वथ हसन्ति गायन्ति रुदन्ति क्रोशन्ति प्रस्विद्यन्ति प्रधूमायन्ति प्रज्वलन्ति प्रकम्पन्त्युन्मीलयन्ति निमीलयन्ति लोहितं स्रवन्ति परिवर्तयन्ति वा । तेषां प्रादुर्भावगमनेष्वन्यराजागमनं वा विद्यादुदग्रं वाङ्गेगमवृष्टिशस्त्रभयं बुभुक्षामारं जानपदममात्यानां राज्ञो विनाशम् । तेषु सर्वेषु भृग्वङ्गिरोविदमित्युक्तम् । स चतुष्पथ ईशानां प्रपद्येत(?)। ‘ॐ प्रपद्ये भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये जनः प्रपद्ये’ इति प्रपद्येत । कपिलानामष्टशतस्य क्षीरेण पायसं श्रपयित्वा कपिलास्वलभ्यमानासु दोग्ध्रीणां शतस्य क्षीरेण पायसं श्रपयित्वा प्राञ्चमिध्ममुपसमाधाय परिस्तीर्य बर्हीं रौद्रेण गणेन शान्ता जुहुयात् । सर्पिर्जुहुयात् पायसं जुहुयाच्छुक्लाः सुमनस उपहरेद् ब्राह्मणान्भक्तेनोपेप्सन्ति । ता एव गा दद्याद्राज्यं वा परिमितकालं तस्य परितुष्ट्यै गोसहस्रं कर्त्रे दद्याद् ग्रामवरं च ॥

अथ यत्रैतत्—

शयने वाऽथ वस्त्रे वा जायते यध्दुताशनः।
एतदत्यद्भुतं नाम सर्वक्षयकरं नृणाम्॥
अत्र ब्राह्मीं महाशान्तिं कारयेद्बहुदक्षिणाम्।
बह्वन्नां बहुसंभारामनूचानसुदक्षिणाम्।
राज्यकामोऽर्थकामो वा पूजयेत्तु बृहस्पतिम्॥

सृजन्ति देवा दिव्याद्भुतानि
प्रागुपसर्गात्प्रतिबोधनार्थम्।
कार्याणि विघ्नानि तथा जनानां
कर्माकुले वर्णसमाकुले च॥
दैव्योपसृष्टेन बलेन कार्ये
कार्या च शान्तिः प्रणिपत्य देवान्।
ततोपसर्गाद्विघ्नात्प्रमुच्यते
दिवि चेदनिष्टं न पुनः स कुर्यात्॥

पृथिव्यामन्तरिक्षे च दिवि चाप्युपलक्षयेत्।
चेष्टितं सर्वभूतानां रुतं च मृगपक्षिणाम्॥

ग्रामे कुले वा यदि वाऽपि देशे
राजन्यमात्येषु तथा द्विजेषु।
भावः पशूनां विकृतो विरूप-
स्तदद्भुतं तस्य देशस्य विद्यात्॥
अमात्यभेदो विविधैकशीर्ष
एकद्विशीर्षे भवति द्विराज्यम्।
अपादहस्ते म्रियते ह्यमात्यो
जाते कबन्धे नृपतिर्विनश्येत्॥
यदाऽधिकाङ्गो यदि वाऽङ्गहीनो
भवेत्पशूनां विकृतो विरूपः।
स्त्रीणां तथैव विकृतो विरूप-
स्तदद्भुतं तस्य देशस्य विद्यात्॥

अनास्यं वाऽप्यनोष्ठं वा जायते चेद्विदूलकम्।
अरूपमसरूपं वा जायते चेद्विदूलकम्॥
अधरादीन्न( ? रहीनम )चक्षुर्वा जायते चे-
द्विदूलकम्।
एतदत्यद्भुतं नाम राष्ट्रे राज्यक्षयंकरम्॥

तमद्भिः स्नातं सुरभिं सुगन्धि
गतासुमग्नौ जुहुयाद् घृताक्तम्।
गणेन रौद्रेण घृतं च हुत्वा
तथा महात्मा शिवमस्य कुर्यात्॥

## आथर्वणिकशान्तिकल्पः

अशुभनिमित्तेषु उत्पातादिषु कर्तव्या महाशान्तिः

'शाकभक्षः पयोभक्षः फलभक्षोऽपि वा पुनः।
भूत्वा द्वादशरात्रं तु महाशान्तिं प्रयोजयेत्॥
बिल्वाहारः फलाहारः पयसा वाऽपि वर्तयेत्।
सप्तरात्रं घृताशो वा महाशान्तिं प्रयोजयेत्॥
सप्तरात्रमतोऽन्येन वर्तयित्वा यथाविधि।
महाशान्तिं प्रयुञ्जानः पयसा वर्तयेत् सकृत्॥

यथाविधीति कृच्छ्रप्रकरणगतधर्मप्राप्त्यर्थम्। तदनन्तरमपि शान्तेः पूर्वं विनायकस्नपनं ग्रहयागो नक्षत्रयागो नैर्ऋतयागश्चेति कर्माणि कार्याणि। 'कुर्यान्नक्षत्रसंयोगादनुकूलं यदा भवेत्। तदा कर्म प्रयुञ्जीत अथ पूज्य विनायकम्॥' इति विनायकपूजनस्य 'महाशान्तिं प्रयुञ्जानस्तर्पयित्वा ग्रहान् बुधः।' इति ग्रहयागस्य च तत्रत्याभ्यामेव वचोभ्यां महाशान्त्यारम्भे अवश्यं कार्यत्वं प्रतीयते। ईशानयागादीनां तत्रत्यप्रकरणपाठादेव महाशान्त्यङ्गत्वप्रतीतिः। यद्यपि दिग्यागोऽपि प्रकरणे पठितः तथाऽपि नासावङ्गम्, 'अथातोऽद्भुतशान्तौ दिशो यजते' इति अद्भुताख्योत्पातनिमित्तके महाशान्तिप्रयोगे एव तस्यावेष्टिबहिःप्रयोगे बार्हस्पत्यादिमध्यनिधानस्येवाङ्गत्वप्रतीतेः, प्राचीनप्रयोगकर्तृभिस्तदनुसरणाच्च।

राकौ. २३९–२४०

कुर्यान्नक्षत्रसंयोगादनुकूलं यदा भवेत्।
तदा कर्म प्रयुञ्जीत अथ पूज्य विनायकम्॥
महाशान्तिं प्रयुञ्जानस्तर्पयित्वा ग्रहान् बुधः॥
अथातोऽद्भुतशान्तौ दिशो यजते॥

(६) राकौ. २३९–२४०.

## महाभारतम्

राज्ञः अशुभनिमित्तानि उत्पाताश्च

वैशंपायन उवाच–

[1]ततो युद्धाय संनद्धं चेदिराजं युधिष्ठिरः ।
दृष्ट्वा मतिमतां श्रेष्ठो नारदं समुवाच ह ॥

युधिष्ठिर उवाच–

अन्तरिक्षे च भूमौ च न तेऽस्त्यविदितं क्वचित् ।
यानि राजविनाशाय भौमानि च खगानि च ॥
निमित्तानीह जायन्ते उत्पाताश्च पृथग्विधाः ।
एतदिच्छामि कार्त्स्न्येन श्रोतुं त्वत्तो महामुने ॥

वैशंपायन उवाच–

इत्येवं मतिमान्विप्रः कुरुराजस्य धीमतः ।
पृच्छतः सर्वमव्यग्रमाचचक्षे महायशाः ॥

नारद उवाच–

पराक्रमं च मार्गं च संनिपातं समुच्छ्रयम् ।
आरोहणं कुरुश्रेष्ठ अन्योन्यं प्रति सर्पणम् ॥
रश्मीनां व्यतिसंसर्गं व्यायामं वृत्तिपीडनम् ।
दर्शनादर्शनं चैव अदृश्यानां च दर्शनम् ॥
हानिं वृद्धिं च ह्रासं च वर्णस्थानं बलाबलम् ।
सर्वमेतत्परीक्षेत ग्रहाणां ग्रहकोविदः ॥
भौमाः पूर्वं प्रवर्तन्ते खेचराश्च ततः परम् ।
उत्पद्यन्ते च लोकेऽस्मिन्नुत्पाता देवनिर्मिताः ॥
यदा तु सर्वभूतानां छाया न परिवर्तते ।
अपरेण गते सूर्ये तत्पराभवलक्षणम् ॥
अच्छाये विमलच्छाया प्रतिच्छायेव लक्ष्यते ।
यत्र चैत्यकवृक्षाणां तत्र विद्यान्महद्भयम् ॥
शीर्णपर्णप्रवालाश्च शुष्कपर्णाश्च चैत्यकाः ।
अपभ्रष्टप्रवालाश्च तत्राभावं विनिर्दिशेत् ॥
स्निग्धपत्रप्रवालाश्च दृश्यन्ते यत्र चैत्यकाः ।
ईहमानाश्च दृष्टाश्च भावस्तत्र न संशयः ॥
पुष्पे पुष्पं प्रजायेत फले वा फलमाश्रितम् ।
राजा वा राजमात्रो वा मरणायोपपद्यते ॥
प्रावृट्छरदि हेमन्ते वसन्ते वाऽपि सर्वशः ।
अकालजं पुष्पफलं राष्ट्रक्षोभं विनिर्दिशेत् ॥
नदीनां स्रोतसोऽकाले द्योतयन्ति महाभयम् ॥
वनस्पतिः पूज्यमानः पूजितोऽपूजितोऽपि वा ।
यदा भज्येत वातेन भिद्यते नमतेऽपि वा ।
अग्निवायुभयं विद्याच्छ्रेष्ठो वाऽत्र विनश्यति ॥
दिशः सर्वाश्च दीप्यन्ते जायन्ते राजविभ्रमाः ॥
छिद्यमानो यदा वृक्षो विनदेच्चापि पातितः ।
सह राष्ट्रं च नदति न तं वृक्षं प्रपातयेत् ॥
अथैनं छेदयेत्कश्चित्प्रतिक्रुद्धो वनस्पतिम् ।
छेत्ता भेत्ता पतिश्चैव क्षिप्रमेव विनश्यति ॥
देवतानां च पतनं मण्डपानां च घुष्टनम् ।
अचलानां प्रकम्पश्च तत्पराभवलक्षणम् ॥
निशि चेन्द्रधनुर्दृष्टं ततोऽपि च महद्भयम् ।
तद्द्रष्टुरेव भीतिः स्यान्नान्येषां भरतर्षभ ।
रात्राविन्द्रधनुर्दृष्ट्वा तद्राष्ट्रं परिवर्जयेत् ॥
देवता यत्र नृत्यन्ति नदन्ति च हसन्ति च ।
उन्मीलन्ति निमीलन्ति राष्ट्रक्षोभं विनिर्दिशेत् ॥
शिला यत्र प्रसिञ्चन्ति स्नेहांश्चोदकसंभवान् ।
अन्यद्वा विकृतं किंचित्तद्भयस्य निदर्शनम् ॥
म्रियते वा महामात्रो राजा सपरिवारकः ।
पुरस्य वा भवेद्व्याधी राष्ट्रे देशे च विभ्रमः ॥
देवतानां यदावासे राज्ञां वा यत्र वेश्मनि ।
भाण्डागारायुधागारे निविशेत यदा मधु ॥
सर्वं तद्दाहयेत्स्थानं हन्यमानं बलीयसा ।
आगन्तुकं भयं तत्र भवेदित्येव निर्दिशेत् ॥
पादपश्चैव यो यत्र रक्तं स्रवति शोणितम् ।
दन्ताग्रात्कुञ्जरो वाऽपि शृङ्गाग्राद् वृषभस्तथा ॥
पादपाद्राष्ट्रविभ्रंशः कुञ्जराद्राजविभ्रमः ।
गोब्राह्मणविनाशः स्याद्वृषभस्येति निर्दिशेत् ॥

---

(१) भा. २। परि. १।२८.

छत्रं नरपतेर्यस्य निपतेत्पृथिवीतले ।
स सराष्ट्रो नरपतिः क्षिप्रमेव विनश्यति ॥
देवागारेषु वा यत्र राज्ञो वा यत्र वेश्मनि ।
विकृतं यदि दृश्येत नागावासेषु वा पुनः ॥
तस्य देशस्य पीडा स्याद्राज्ञो जनपदस्य वा ।
अनावृष्टिभयं घोरं दुर्भिक्षमिति निर्दिशेत् ॥
बाहुभङ्गे तु देवानां ग्रहस्थानां भयं भवेत् ।
भग्ने प्रहरणे विद्यात्सेनापतिविनाशनम् ॥
आगन्तुका च प्रतिमा स्थानं यत्र न विन्दति ।
अभ्यन्तरेण षण्मासाद्राजा त्यजति तत्पुरम् ॥
प्रदीर्यते मही यत्र विनदत्यपि पात्यते ।
म्रियते तत्र राजा च तच्च राष्ट्रं विनश्यति ॥
एणीपदान्वा सर्पान्वा डुण्डुभानथ दीप्यकान् ।
मण्डूको ग्रसते यत्र तत्र राजा विनश्यति ॥
अभिन्नं वाऽप्यपक्कं वा यत्रान्नमुपचीयते ।
जीर्यन्ते वा म्रियन्ते वा तदन्नं नोपभुज्यते ॥
उदपाने च यत्राऽऽपो विवर्धन्ते युधिष्ठिर ।
स्थावरेषु प्रवर्तन्ते निर्गच्छेच्च पुनस्ततः ॥
अपादं वा त्रिपादं वा द्विशीर्षं वा चतुर्भुजम् ।
स्त्रियो यत्र प्रसूयन्ते ब्रूयात्तत्र पराभवम् ॥
हस्तिनी महिषी गौर्वा खरोष्ट्रमथ सूकरम् ।
ईदृशानि प्रजायन्ते विद्यात्तत्र पराभवम् ॥
अजैडकाः स्त्रियो गावोऽवयश्चान्येऽपि योनयः ।
विकृतानि प्रजायन्ते तत्र तत्र पराभवः ॥
नदी यत्र प्रतिस्रोतमावहेत्कलुषोदकम् ।
दिशश्च न प्रकाशन्ते तत्पराभवलक्षणम् ॥

नारद उवाच—

एतानि तु निमित्तानि यानि चान्यानि भारत ।
केशवादेव जायन्ते भौमानि च खगानि च ॥
चन्द्रादित्यौ ग्रहाश्चैव नक्षत्राणि च भारत ।
वायुरग्निस्तथैवाऽऽपः पृथिवी च जनार्दनात् ॥
यस्य देशस्य हानिं वा वृद्धिं वा कर्तुमिच्छति ।
तस्मिन्देशे निमित्तानि तानि तानि करोत्ययम् ॥

योऽसौ चेदिपतेस्तात विनाशः समुपस्थितः ।
निवेदयति गोविन्दः स्वैरुपायैर्न संशयः ॥
इयं प्रचलिता भूमिरशिवं वान्ति मारुताः ।
राहुश्चाप्यपतत्सोममपर्वणि विशां पते ॥
सनिर्घाताः पतन्त्युल्कास्तमः संजायते भृशम् ।
चेदिराजविनाशाय हरिरेष विजृम्भते ॥

वैशंपायन उवाच—

एवमुक्त्वा तु भगवान्नारदो विरराम ह ॥
ताभ्यां पुरुषसिंहाभ्यां तस्मिन्युद्ध उपस्थिते ।
ददृशुर्भूमिपालास्ते घोरानौत्पातिकान् बहून् ॥
तत्र तैर्दृश्यमानानां दिक्षु सर्वासु भारत ।
अश्रूयन्त तदा राजञ्शिवानामशिवा गिरः ॥
ररास च मही कृत्स्ना सवृक्षपुरपर्वता ।
अपर्वणि च मध्याह्ने सूर्यं स्वर्भानुरग्रसत् ॥
ध्वजाग्रे चेदिराजस्य सर्वरत्नपरिष्कृते ।
अपतत्खाच्च्युतो गृध्रस्तीक्ष्णतुण्डः परंतप ॥
आरण्यैः सह संहृष्टा ग्राम्याश्च मृगपक्षिणः ।
चुक्रुशुर्भैरवं तत्र तस्मिन्युद्ध उपस्थिते ॥
एवमादीनि घोराणि भौमानि च खगानि च ।
औत्पातिकान्यदृश्यन्त संक्रुद्धे शार्ङ्गधन्विनि ॥

## वाल्मीकिरामायणम्

राज-राज्यनाशसूचकानि दुर्निमित्तानि

[१]रात्र्यन्ते च तथा राम स्वप्नान् पश्यामि दारुणान् ॥
[२]सनिर्घाता महोल्काश्च पतन्ति खरनिःस्वनाः ।
उपसृष्टं च मे राम नक्षत्रं दारुणैर्ग्रहैः ॥

---

(१) वारा. २।६।१५ ; वाराकु. २।४।१७ (अपि चाद्याशुभान् राम स्वप्ने पश्यामि दारुणान् ॥ ).

(२) वारा. २।६।१६ ; वाराकु. २।४।१७–१८ पूर्वार्धे (सनिर्घाता दिवोल्का च पततीह महास्वना । ) उपसृष्टं (अवष्टब्धं).

[1]आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ।
प्रायशो हि निमित्तानामीदृशानां समुद्भवे ॥

[2]राजा वा मृत्युमाप्नोति राज्यं वा नैव ऋच्छति ॥

## मत्स्यपुराणम्

महोत्पातेषु कर्तव्या शान्तिः

मनुरुवाच–

[3]दिव्यान्तरिक्षभौमेषु या शान्तिरभिधीयते ।
तामहं श्रोतुमिच्छामि महोत्पातेषु केशव ॥

मत्स्य उवाच–

[4]अथातः संप्रवक्ष्यामि त्रिविधामद्भुतादिषु ।
विशेषेण तु भौमेषु शान्तिः कार्या तथा भवेत् ॥

[5]अभया चान्तरिक्षेषु सौम्या दिव्येषु पार्थिव ।
विजिगीषुः परं राजन्भूतिकामस्तु यो भवेत् ॥

[1]विजिगीषुः परानेवमभियुक्तस्तथा परैः ।
तथाऽभिचारशङ्कायां शत्रूणामभिनाशने ॥

[2]भये महति संप्राप्ते अभया शान्तिरिष्यते ।
राजयक्ष्माभिभूतस्य क्षतक्षीणस्य चाप्यथ ॥

[3]सौम्या प्रशस्यते शान्तिर्यज्ञकामस्य चाप्यथ ।
भूकम्पे च समुत्पन्ने प्राप्ते चान्नक्षये तथा ॥

[4]अतिवृष्ट्यामनावृष्ट्यां शलभानां भयेषु च ।
प्रमत्तेषु च चौरेषु वैष्णवी शान्तिरिष्यते ॥

[5]पशूनां मारणे प्राप्ते नराणामपि दारुणे ।
भूतेषु दृश्यमानेषु रौद्री शान्तिस्तथेष्यते ॥

[6]वेदनाशे समुत्पन्ने जने जाते च नास्तिके ।
अपूज्यपूजने जाते ब्राह्मी शान्तिस्तथेष्यते ॥

[7]भविष्यत्यभिषेके च परचक्रभयेऽपि च ।
स्वराष्ट्रभेदेऽरिवधे रौद्री शान्तिः प्रशस्यते ॥

[8]त्र्यहातिरिक्ते पवने भक्ष्ये सर्वैविगर्हिते ।
वैकृते वातजे व्याधौ वायवी शान्तिरिष्यते ॥

---

(१) वारा. २।६।१७ ; वाराकु. २।४।१८–१९ प्रायशो (प्रायेण).

(२) वारा. २।६।१८ ; वाराकु. २।४।१९ (राजा हि मृत्युमाप्नोति घोरां वाऽऽपदमृच्छति ॥ ).

(३) मत्स्य. २२८।१ ; विध. २।१३३।१–२ (राम उवाच । का का शान्तिर्भवेत् का वा कस्मिन् कस्मिंस्तथाऽद्भुते । एतन्मे संशयं छिन्धि देवारिबलसूदन ॥ पुष्कर उवाच । सर्वोत्पातप्रशमनी ह्यमृता चाभया स्मृता । सौम्या चैव महाशान्तिः सर्वकर्मफलप्रदा ॥ ) ; राकौ. २३९ (का का शान्तिर्भवेत् का वा कस्मिन् कस्मिंस्तथाऽद्भुता । ) विष्णुधर्मोत्तरे.

(४) मत्स्य. २२८।२ ; विध. २।१३३।३ तथा (ऽमृता) उक्त.

(५) मत्स्य. २२८।३ ; विध. २।१३३।३–४ पार्थिव (भार्गव) उत्तरार्धे (विजिगीषुः परान् राजा भूमिकामश्च योजयेत् । आरोग्यधनकामश्च सौम्यां तां कारयेत् सदा ॥).

(१) मत्स्य. २२८।४ ; विध. २।१३३।५ मभिनाशने (मपि शासने).

(२) मत्स्य. २२८।५ ; विध. २।१३३।६ संप्राप्ते अभया (च प्राप्ते त्वभया).

(३) मत्स्य. २२८।६ ; विध. २।१३३।७ चाप्यथ (चैव हि) भूकम्पे च (भूमिकम्पे).

(४) मत्स्य. २२८।७ ; विध. २।१३३।८ भानां (माखु) मत्ते (पन्ने).

(५) मत्स्य. २२८।८ ; विध. २।१३३।९ मार (मर).

(६) मत्स्य. २२८।९.

(७) मत्स्य. २२८।१० ; विध. २।१३३।१० भयेऽपि (भयेषु) रौद्री शान्तिः (शान्तिरैन्द्री) ; राकौ. २३९ रौद्री शान्तिः (शान्तिरैन्द्री ) विष्णुधर्मोत्तरे.

(८) मत्स्य. २२८।११ ; विध. २।१३३।११ द्वितीयचरणे (रूक्षे सर्वदिगुत्थिते).

[1]अनावृष्टिभये जाते प्राप्ते विकृतिवर्षणे ।
जलाशयविकारेषु वारुणी शान्तिरिष्यते ॥
[2]अभिशापभये प्राप्ते भार्गवी च तथैव च ।
जाते प्रसववैकृत्ये प्राजापत्या महाभुज ॥
[3]उपस्कराणां वैकृत्ये त्वाष्ट्री पार्थिवनन्दन ।
बालानां शान्तिकामस्य कौमारी च तथा नृप ॥
[4]कुर्याच्छान्तिमथाऽऽग्नेयीं संप्राप्ते वह्निवैकृते ।
आज्ञाभङ्गे तु संजाते तथा भृत्यादिसंक्षये ॥
[5]अश्वानां शान्तिकामस्य तद्विकारे समुत्थिते ।
अश्वानां कामयानस्य गान्धर्वी शान्तिरिष्यते ॥
[6]गजानां शान्तिकामस्य तद्विकारे समुत्थिते ।
गजानां कामयानस्य शान्तिराङ्गिरसी भवेत् ॥
[7]पिशाचादिभये जाते शान्तिर्वै नैर्ऋती स्मृता ।
अपमृत्युभये जाते दुःस्वप्ने च तथा स्थिते ॥
[8]याम्यां तु कारयेच्छान्तिं प्राप्ते तु मारके तथा ।
धननाशे समुत्पन्ने कौबेरी शान्तिरिष्यते ॥

(१) मत्स्य. २२८।१२ ; विध. २।१३३।१२ प्राप्ते विकृति (जाते विकृत) कारेषु (कारे च).

(२) मत्स्य. २२८।१३ ; विध. २।१३३।१३ तथैव च (तथा द्विज).

(३) मत्स्य. २२८।१४ ; विध. २।१३३।१४ पार्थिव (भार्गव) नृप (शुभा).

(४) मत्स्य. २२८।१५ ; विध. २।१३३।१५–१६ प्रथमचरणे (आग्नेयीं कारयेच्छान्तिं) वैकृते । + (कार्या मारुद्गणी शान्तिर्दुर्बलेन महीक्षिता ।) तु संजाते तथा (तथा जाते जाते).

(५) मत्स्य. २२८।१६ ; विध. २।१३३।१६–१७ समुत्थिते (तथोत्थिते) तृतीयचरणे (गजान् कामयमानस्य).

(६) मत्स्य. २२८।१७ ; विध. २।१३३।१७–१८ समुत्थिते (तथोत्थिते) तृतीयचरणे (गजान् कामयमानस्य).

(७) मत्स्य. २२८।१८ ; विध. २।१३३।१८–१९ चादि (चाधि) स्मृता (मता) स्थिते (द्विज).

(८) मत्स्य. २२८।१९ ; विध. २।१३३।१९–२० याम्यां (काम्यां) मार (मर).

[1]वृक्षाणां च तथाऽर्थानां वैकृते समुपस्थिते ।
भूतिकामस्तथा शान्तिं पार्थिवीं प्रतियोजयेत् ॥
[2]प्रथमे दिनयामे च रात्रौ वा मनुजोत्तम ।
हस्ते स्वातौ च चित्रायामादित्ये चाऽऽश्विने तथा ॥
[3]अर्यम्णि सौम्यजातेषु वायव्यां त्वद्भुतेषु च ।
द्वितीये दिनयामे तु रात्रौ च रविनन्दन ॥
[4]पुष्याग्नेयविशाखासु पित्र्यासु भरणीषु च ।
उत्पातेषु तथा भाग आग्नेयीं तेषु कारयेत् ॥
[5]तृतीये दिनयामे च रात्रौ च रविनन्दन ।
रोहिण्यां वैष्णवे ब्राह्मे वासवे वैश्वदेवते ॥
[6]ज्येष्ठायां च तथा मैत्रे ये भवन्त्यद्भुताः क्वचित् ।
ऐन्द्री तेषु प्रयोक्तव्या शान्ती रविकुलोद्वह ॥
[7]चतुर्थे दिनयामे च रात्रौ वा रविनन्दन ।
सार्पे पौष्णे तथाऽऽर्द्रायामहिर्बुध्न्ये च दारुणे ॥
[8]मूले वरुणदैवत्ये ये भवन्त्यद्भुतास्तथा ।
वारुणी तेषु कर्तव्या महाशान्तिर्महीक्षिता ॥

(१) मत्स्य. २२८।२० ; विध. २।१३३।२०–२१ ऽर्थानां (ऽर्चानां) भूति (भूमि) प्रति (संप्र).

(२) मत्स्य. २२८।२१ ; विध. २।१३३।२१–२२ वा (च).

(३) मत्स्य. २२८।२२ ; विध. २।१३३।२२–२३ अर्यम्णि (अर्यम्णे) तु (च) रवि (भृगु).

(४) मत्स्य. २२८।२३ ; विध. २।१३३।२३–२४ उत्तरार्धे (उत्पातेषु तथा भाग्ये त्वाग्नेयी शान्तिरिष्यते ॥ ).

(५) मत्स्य. २२८।२४ ; विध. २।१३३।२४–२५ तीये (तीय) रवि (भृगु) वैश्व (विश्व) ; राकौ. २४९ च (तु) शेषं विधवत् । विष्णुधर्मोत्तरे.

(६) मत्स्य. २२८।२५ ; विध. २।१३३।२५–२६ चतुर्थचरणे (शान्तिर्भृगुकुलोद्भव) ; राकौ २४० शान्ती रवि (शान्तिर्भृगु) विष्णुधर्मोत्तरे.

(७) मत्स्य. २२८।२६ ; विध. २।१३३। २६–२७ च रात्रौ वा रवि (वा रात्रौ च भृगु) यामहि (यां त्वाहि).

(८) मत्स्य. २२८।२७ ; विध. २।१३३।२७–२८.

[1]मित्रमण्डलवेलासु ये भवन्त्यद्भुताः क्वचित् ।
तत्र शान्तिद्वयं कार्यं निमित्तेषु च नान्यथा ।
निर्निमित्तकृता शान्तिर्निमित्तेनोपयुज्यते ॥

[2]बाणप्रहारा न भवन्ति यद्वद्
राजन् नृणां संनहनैर्युतानाम् ।
दैवोपघाता न भवन्ति तद्वद्
धर्मात्मनां शान्तिपरायणानाम् ॥

अशुभनिमित्तानि उत्पाताश्च, तेषु कर्तव्यं गर्गोक्तं शान्तिकर्म

मनुरुवाच–
[3]अद्भुतानां फलं देव शमनं च तथा वद ।
त्वं हि वेत्सि विशालाक्ष ज्ञेयं सर्वमशेषतः ॥

मत्स्य उवाच–
[4]अत्र ते वर्णयिष्यामि यदुवाच महातपाः ।
अत्रये वृद्धगर्गस्तु सर्वधर्मभृतां वरः ॥

[5]सरस्वत्याः सुखासीनं गर्गं स्रोतसि पार्थिव ।
पप्रच्छासौ महातेजा अत्रिर्मुनिजनप्रियम् ॥

अत्रिरुवाच–
[6]नश्यतां पूर्वरूपाणि जनानां कथयस्व मे ।
नगराणां तथा राज्ञां त्वं हि सर्वं वदस्व माम् ॥

गर्ग उवाच–
[1]पुरुषापचारान्नियतमपरज्यन्ति देवताः ।
ततोऽपरागाद्देवानामुपसर्गः प्रवर्तते ॥

[2]दिव्यान्तरिक्षभौमं च त्रिविधं संप्रकीर्तितम् ।
ग्रहर्क्षवैकृतं दिव्यमान्तरिक्षं निबोध मे ॥

[3]उल्कापातो दिशां दाहः परिवेषस्तथैव च ।
गन्धर्वनगरं चैव वृष्टिश्च विकृता तु या ॥

[4]एवमादीनि लोकेऽस्मिन्नान्तरिक्षं विनिर्दिशेत् ।
चरस्थिरभवो भौमो भूकम्पश्चापि भूमिजः ॥

[5]जलाशयानां वैकृत्यं भौमं तदपि कीर्तितम् ।
भौमे त्वल्पफलं ज्ञेयं चिरेण च विपच्यते ॥

[6]अभ्रजं मध्यफलदं मध्यकालफलप्रदम् ।
अद्भुते तु समुत्पन्ने यदि वृष्टिः शिवा भवेत् ॥

[7]सप्ताहाभ्यन्तरे ज्ञेयमद्भुतं निष्फलं भवेत् ।
अद्भुतस्य विपाकश्च विना शान्त्या न दृश्यते ॥

---

(१) मत्स्य. २२८।२८ ; विध. २।१३३।२८–२९ मित्र (भिन्न) पत्र (तेषु) त्तेषु च (त्ते सति) षष्ठचरणे (निमित्तायोपजायते).

(२) मत्स्य. २२८।२९ ; विध. २।१३३।३० राजन् नृणां (नृणां रणे).

(३) मत्स्य. २२९।१ ; विध. २।१३४।१ मनुरुवाच (राम उवाच).

(४) मत्स्य. २२९।२ ; विध. २।१३४।२ मत्स्य उवाच (पुष्कर उवाच) अत्रये (अत्र यो).

(५) मत्स्य. २२९।३ ; विध. २।१३४।३ स्वत्याः (स्वत्यां) पार्थिव (भार्गव) च्छासौ म (च्छात्रिर्म) अत्रिर्मु (गर्गं मु).

(६) मत्स्य. २२९।४ ; विध. २।१३४।४ सर्वं वदस्व माम् (सर्वविदुच्यसे).

(१) मत्स्य. २२९।५ ; विध. २।१३४।५.

(२) मत्स्य. २२९।६ ; विध. २।१३४।६ च (तत्) संप्र (परि) र्क्षवै (र्क्षं वै).

(३) मत्स्य. २२९।७ ; विध. २।१३४।७ ष्टिश्च (ष्टिस्तु) तु (च).

(४) मत्स्य. २२९।८ ; विध. २।१३४।८ न्नान्तरिक्षं (न्नाभसानि) उत्तरार्धे (चरस्थिरभयं भूमौ भूकलामपि भूमिजम् ॥).

(५) मत्स्य. २२९।९ ; विध. २।१३४।९ भौमं (भूमौ) उत्तरार्धे (भौमं याम्यफलं ज्ञेयं चिरेण भुवि पश्यते ॥).

(६) मत्स्य. २२९।१० ; विध. २।१३४।१०–११ अभ्रजं (नाभसं) प्रदम् । + दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च ॥).

(७) मत्स्य. २२९।११ ; विध. २।१३४।११–१२ भवेत् (हि तत्) श्च विना शान्त्या न (श्चेद्विना शान्तेर्न).

[1]त्रिभिर्वर्षैस्तथा ज्ञेयं सुमहद्भयकारकम् ।
राज्ञः शरीरे लोके च पुरद्वारे पुरोहिते ॥
[2]पाकमायाति पुत्रेषु तथा वै कोशवाहने ।
ऋतुस्वभावाद्राजेन्द्र भवन्त्यद्भुतसंज्ञिताः ॥
[3]शुभावहास्ते विज्ञेयास्तांश्च मे गदतः शृणु ।
वज्राशनिमहीकम्पसंध्यानिर्घातनिःस्वनाः ॥
[4]परिवेषरजोधूमरक्तार्कास्तमयोदयाः ।
द्रुमोद्भेदकरस्नेहो बहुशः सफलोद्गमः ॥
[5]गोपक्षिमधुवृद्धिश्च शुभानि मधुमाधवे ।
ऋक्षोल्कापातकलुषं कपिलार्केन्दुमण्डलम् ॥
[6]कृष्णश्वेतं तथा पीतं धूसरध्वान्तलोहितम् ।
रक्तपुष्पारुणं सांध्यं नभः क्षुब्धार्णवोपमम् ॥
[7]सरितां चाम्बुसंशोषं दृष्ट्वा ग्रीष्मे शुभं वदेत् ।
शक्रायुधपरीवेषं विद्युदुल्काधिरोहणम् ॥
[8]कम्पोद्वर्तनवैकृत्यं ह्रसनं दारणं क्षितेः ।
नद्युदपानसरसां विधूनतरणप्लवाः ॥

(१) मत्स्य. २२९।१२ ; विध. २।१३४।१२–१३.

(२) मत्स्य. २२९।१३ ; विध. २।१३४।१३–१४ उत्तरार्धे ( दत्तस्वभावजा ये च भवन्त्यद्भुतसंज्ञकाः ॥ ).

(३) मत्स्य. २२९।१४ ; विध. २।१३४।१४–१५.

(४) मत्स्य. २२९।१५ ; विध. २।१३४।१५–१६ ( परिवेषं रजोधूमं रक्तार्कास्तमनोदये । द्रुमेभ्यो वरयश्चेह बहुपुष्पफलापगाः ॥ ).

(५) मत्स्य. २२९।१६ ; विध. २।१३४।१६–१७ पक्षि ( पक्ष ) ऋक्षो ( तारो ) र्केन्दु ( र्क तु ).

(६) मत्स्य. २२९।१७ ; विध. २।१३४।१७–१८ पूर्वार्धे ( अनग्निज्वलनास्फोटधूमरेण्वनिलावहम् । ) पुष्पा ( पद्मा ).

(७) मत्स्य. २२९।१८ ; विध. २।१३४।१८–१९ उत्तरार्धे ( शक्रायुधं परीवेशं विद्युच्छुष्कविरोहणम् ॥ ).

(८) मत्स्य. २२९।१९ ; विध. २।१३४।१९–२० द्वर्तन ( द्वेलन ) ह्रस ( त्रस ) दार ( दारु ) नद्यु ( नद्यो ) विधून ( वृद्ध्यश्च ).

[1]शृङ्गिणां च वराहाणां वर्षासु शुभमिष्यते ।
शीतानिलतुषारत्वं नर्दनं मृगपक्षिणाम् ॥
[2]रक्षोभूतपिशाचानां दर्शनं वागमानुषी ।
दिशो धूमान्धकाराश्च सनभोवनपर्वताः ॥
[3]उच्चैः सूर्योदयास्तौ च हेमन्ते शोभनाः स्मृताः ।
दिव्यस्त्रीरूपगन्धर्वविमानाद्भुतदर्शनम् ॥
[4]ग्रहनक्षत्रताराणां दर्शनं वागमानुषी ।
गीतवादित्रनिर्घोषो वनपर्वतसानुषु ॥
[5]सस्यवृद्धी रसोत्पत्तिः शरत्काले शुभाः स्मृताः ।
हिमपातानिलोत्पातविरूपाद्भुतदर्शनम् ॥
[6]कृष्णाञ्जनाभमाकाशं तारोल्कापातपिञ्जरम् ।
चित्रगर्भोद्भवः स्त्रीषु गोजाश्वमृगपक्षिषु ।
पत्राङ्कुरलतानां च विकाराः शिशिरे शुभाः ॥
[7]ऋतुस्वभावेन विनाऽद्भुतस्य जातस्य दृष्टस्य तु शीघ्रमेव ।
यथागमं शान्तिरनन्तरं तु कार्या यथोक्ता वसुधाधिपेन ॥

(१) मत्स्य. २२९।२० ; विध. २।१३४।२०,२३ ( शीर्णता चाहि गेहानां वर्षासु च भविष्यति । शीतालुलत्तुषारत्वं नन्दनं गृहपक्षिणाम् ॥ ).

(२) मत्स्य. २२९।२१ ; विध. २।१३४।२३–२४ भूतपिशाचानां ( यक्षादिसत्त्वानां ) काराश्च सनभोवन ( कारश्च शरभो धन ).

(३) मत्स्य. २२९।२२ ; विध. २।१३४।२४,२१ रूप ( भूत ).

(४) मत्स्य. २२९।२३ ; विध. २।१३४।२१–२२ वागमानुषी ( च दिवाकरे ).

(५) मत्स्य. २२९।२४ ; विध. २।१३४।२२,२५ सस्य ( रस ) त्पातवि ( त्पातौ वि ).

(६) मत्स्य. २२९।२५ ; विध. २।१३४।२५–२६ द्भवः ( द्भवं ).

(७) मत्स्य. २२९।२६ ; विध. २।१३४।२७ यथागमं ( कृत्वा शमं ).

गर्ग उवाच–

[1]देवतार्चाः प्रनृत्यन्ति वेपन्ते प्रज्वलन्ति च ।
वमन्त्यग्निं तथा धूमं स्नेहं रक्तं तथा वसाम् ॥
[2]आरटन्ति रुदन्त्येताः प्रस्विद्यन्ति हसन्ति च ।
उत्तिष्ठन्ति निषीदन्ति प्रधावन्ति धमन्ति च ॥
[3]भुञ्जते विक्षिपन्ते वा कोशप्रहरणध्वजान् ।
अवाङ्मुखा वा तिष्ठन्ति स्थानात्स्थानं भ्रमन्ति च ॥
[4]वमन्त्यग्निं तथा धूमं स्नेहं रक्तं तथा वसाम् ।
एवमाद्या हि दृश्यन्ते विकाराः सहसोत्थिताः ।
लिङ्गायतनविप्रेषु तत्र वासं न रोचयेत् ॥
[5]राज्ञो वा व्यसनं तत्र स च देशो विनश्यति ।
देवयात्रासु चोत्पातान् दृष्ट्वा देशभयं वदेत् ॥
[6]पितामहस्य हर्म्येषु तत्र वासं न रोचयेत् ।
पशूनां रुद्रजं ज्ञेयं नृपाणां लोकपालजम् ॥
[7]ज्ञेयं सेनापतीनां तु यत्स्यात् स्कन्दविशाखजम् ।
लोकानां विष्णुवस्विन्द्रविश्वकर्मसमुद्भवम् ॥
[8]विनायकोद्भवं ज्ञेयं गणानां ये तु नायकाः ।
देवप्रेष्यान्नृपप्रेष्या देवस्त्रीभिर्नृपस्त्रियः ॥

(१) मत्स्य. २३०।१ ; विध. २।१३५।१ पू.

(२) मत्स्य. २३०।२ ; विध. २।१३५।१–२ रुदन्त्येताः (च रोदन्ति) धमन्ति (वसन्ति).

(३) मत्स्य. २३०।३ ; विध. २।१३५।२–३ कोशप्रहरण (गात्रप्रहरणा) मुखा वा ति (मुखावति).

(४) मत्स्य. २३०।४ ; विध. २।१३५।३–४ स्नेहं रक्तं (स्नेहरक्ते) माद्या हि (मादीनि) विप्रेषु (चित्रेषु).

(५) मत्स्य. २३०।५ ; विध. २।१३५।५ स च देशो (सर्वदिशो) यात्रासु चोत्पातान् (यात्रां स चोत्पातां).

(६) मत्स्य. २३०।६ ; विध. २।१३५।६–७ पूर्वार्धे (पितामहर्षिधर्मेषु यन्निमित्तं द्विजेषु तत् । गुरुशुक्राग्निजातानि यानि तानि पुरोहिते । ).

(७) मत्स्य. २३०।७ ; विध. २।१३५।७–८ विशाखजम् (विनायकम्) वस्विन्द्र (वाय्विन्द्र).

(८) मत्स्य. २३०।८ ; विध. २।१३५।८–९ उत्तरार्धे (देवप्रेष्यनृपप्रेष्यदेवस्त्रीषु नृपस्त्रियः ॥).

[1]वासुदेवोद्भवं ज्ञेयं ग्रहाणामेव नान्यथा ।
देवतानां विकारेषु श्रुतिवेत्ता पुरोहितः ॥
[2]देवतार्चां तु गत्वा वै स्नानमाच्छाद्य भूषयेत् ।
पूजयेच्च महाभाग गन्धमाल्यान्नसंपदा ॥
[3]मधुपर्केण विधिवदुपतिष्ठेदनन्तरम् ।
तल्लिङ्गेन च मन्त्रेण स्थालीपाकं यथाविधि ।
पुरोधा जुहुयाद्वह्नौ सप्तरात्रमतन्द्रितः ॥

[4]विप्राश्च पूज्या मधुरान्नपानैः
सदक्षिणं सप्तदिनं नरेन्द्र ।
प्राप्तेऽष्टमेऽह्नि क्षितिगोप्रदानैः
सकाञ्चनैः शान्तिमुपैति पापम् ॥

गर्ग उवाच–

[5]अनग्निर्दीप्यते यत्र राष्ट्रे यस्य निरिन्धनः ।
न दीप्यते चेन्धनवांस्तद्राष्ट्रं पीड्यते नृपैः ॥
[6]प्रज्वलेदप्सु मासं वा तदर्धं वाऽपि किंचन ।
प्राकारं तोरणं द्वारं नृपवेश्म सुरालयम् ॥
[7]एतानि यत्र दीप्यन्ते तत्र राज्ञो भयं भवेत् ।
विद्युता वा प्रदह्यन्ते तदाऽपि नृपतेर्भयम् ॥

(१) मत्स्य. २३०।९ ; विध. २।१३५।९–१० पूर्वार्धे (वास्तुदेवेषु विज्ञेयं गृहिणामेव नान्यथा । ) तानां वि (तार्चावि).

(२) मत्स्य. २३०।१० ; विध. २।१३५।१०–११ तु (ततो) वै स्नान (स्नाता).

(३) मत्स्य. २३०।११ ; विध. २।१३५।११–१२.

(४) मत्स्य. २३०।१२ ; विध. २।१३५।१३ क्षिणं (क्षिणैः) नरे (द्विजे).

(५) मत्स्य. २३१।१ ; विध. २।१३६।१ यस्य निरिन्धनः (भृशसमन्वितः) उत्तरार्धे (न दीप्यते चेन्धनं वा सराष्ट्रः पीड्यते नृपः ॥).

(६) मत्स्य. २३१।२ ; विध. २।१३६।२ पूर्वार्धे (प्रजलादम्बुनाशं च तथाऽऽर्द्रं वाति किंचन ।).

(७) मत्स्य. २३१।३ ; विध. २।१३६।३ दीप्य (दह्य) राज्ञो भ (राजभ) तदा (तथा).

[1]अनैशानि तमांसि स्युर्विना पांशुरजांसि च ।
धूमश्चानग्निजो यत्र तत्र विद्यान्महाभयम् ॥
[2]तडित्त्वनभ्रे गगने भयं स्यादृक्षवर्जिते ।
दिवा सतारे गगने तथैव भयमादिशेत् ॥
[3]ग्रहनक्षत्रवैकृत्ये ताराविषमदर्शने ।
पुरवाहनयानेषु चतुष्पान्मृगपक्षिषु ॥
[4]आयुधेषु च दीप्तेषु धूमायत्सु तथैव च ।
निर्गमत्सु च कोशाच्च सङ्ग्रामस्तुमुलो भवेत् ॥
[5]विनाऽग्निं विस्फुलिङ्गाश्च दृश्यन्ते यत्र कुत्रचित् ॥
स्वभावाच्चापि पूर्यन्ते धनूंषि विकृतानि च ॥
[6]विकाराश्चाऽऽयुधानां स्युस्तत्र सङ्ग्राममादिशेत् ।
त्रिरात्रोपोषितश्चात्र पुरोधाः सुसमाहितः ॥
[7]समिद्भिः क्षीरवृक्षाणां सर्षपैश्च घृतेन च ।
होमं कुर्यादग्निमन्त्रैर्ब्राह्मणांश्चैव भोजयेत् ॥
[8]दद्यात्सुवर्णं च तथा द्विजेभ्यो
गाश्चैव वस्त्राणि तथा भुवं च ।
एवं कृते पापमुपैति नाशं
यदग्निवैकृत्यभवं द्विजेन्द्र ॥

(१) मत्स्य. २३१।४ ; विध. २।१३६।४ नैशा (नैश्या) विना पांशु (दिशः पांशु) न्महाभ (न्महद्भ).

(२) मत्स्य. २३१।५ ; विध. २।१३६।५ तडित्त्व (रात्राव).

(३) मत्स्य. २३१।६ ; विध. २।१३६।६ विषम (विकृत).

(४) मत्स्य. २३१।७ ; विध. २।१३६।७ तृतीयचरणे (निर्यत्सु कोशाच्च तथा).

(५) मत्स्य. २३१।८ ; विध. २।१३६।८ कुत्र (कर्हि).

(६) मत्स्य. २३१।९ स्युस्तत्र (स्यात्तत्र) ; विध. २।१३६।९ तश्चात्र (तस्तत्र).

(७) मत्स्य. २३१।१० ; विध. २।१३६।१० उत्तरार्धे (अग्निलिङ्गैश्च जुहुयाद्दहिं श्वेताम्बरः शुचिः ॥).

(८) मत्स्य. २३१।११ ; विध. २।१३६।११ यदग्नि (दृष्टि).

गर्ग उवाच—

[1]पुरेषु येषु दृश्यन्ते पादपा देवचोदिताः ।
रुदन्तो वा हसन्तो वा स्रवन्तो वा रसान् बहून् ॥
[2]अरोगा वा विना वातं शाखां मुञ्चन्त्यथ द्रुमाः ।
फलं पुष्पं तथाऽकाले दर्शयन्ति त्रिहायनाः ॥
[3]पूर्ववत्स्वं दर्शयन्ति फलं पुष्पं तथाऽन्तरे ।
क्षीरं स्नेहं तथा रक्तं मधु तोयं स्रवन्ति च ॥
[4]शुष्यन्त्यरोगाः सहसा शुष्का रोहन्ति वा पुनः ।
उत्तिष्ठन्तीह पतिताः पतन्ति च तथोत्थिताः ॥
[5]तत्र वक्ष्यामि ते ब्रह्मन् विपाकं फलमेव च ।
रोदने व्याधिमभ्येति हसने देशविभ्रमम् ॥
[6]शाखाप्रपतनं कुर्यात् सङ्ग्रामे योधपातनम् ।
बालानां मरणं कुर्युरकाले पुष्पिता द्रुमाः ॥
[7]स्वराष्ट्रभेदं कुरुते फलपुष्पमथान्तरे ।
क्षयः सर्वत्र गोक्षीरे स्नेहे दुर्भिक्षलक्षणम् ॥

(१) मत्स्य. २३२।१ ; विध. २।१३७।१ देव (दैव) स्रवन्तो (सुवन्तो) रसान् बहून् (बहून् रसान् ).

(२) मत्स्य. २३२।२ ; विध. २।१३७।२ पूर्वार्धे (पुरोगवा विना वासं शाखां मुञ्चन्त्यसंश्रमात् ।) फलं पु (फलपु) ऽकाले (बाला).

(३) मत्स्य. २३२।३ ; विध. २।१३७।३ पूर्वार्धे (सर्वावस्थां दर्शयन्ति फलपुष्पमथाभवम् ।) तथा (सुरां).

(४) मत्स्य. २३२।४ ; विध. २।१३७।४.

(५) मत्स्य. २३२।५ ; विध. २।१३७।५ पाकं (पाके) मभ्येति (माख्याति) भ्रमम् (प्लवम्).

(६) मत्स्य. २३२।६ ; विध. २।१३७।६ तनं (तने) उत्तरार्धे (बालानां मरणे कुर्याद् बालानां फल० पुष्पता ॥).

(७) मत्स्य. २३२।७ ; विध. २।१३७।७ मथान्तरे (सनातनम्) तृतीयचरणे (क्षयं सर्वत्रगे क्षीरे).

[1]वाहनापचयं मद्ये रक्ते सङ्ग्राममादिशेत् ।
मधुस्रावे भवेद्व्याधिर्जलस्रावे न वर्षति ॥
[2]अरोगशोषणं ज्ञेयं ब्रह्मन् दुर्भिक्षलक्षणम् ।
शुष्केषु संप्ररोहस्तु वीर्यमन्नं च हीयते ॥
[3]उत्थाने पतितानां च भयं भेदकरं भवेत् ।
स्थानात्स्थानं तु गमने देशभङ्गस्तथा भवेत् ॥
[4]ज्वलत्स्वपि च वृक्षेषु रुदत्स्वपि धनक्षयम् ।
एतत्पूजितवृक्षेषु सर्वं राज्ञो विपद्यते ॥
[5]पुष्पे फले वा विकृते राज्ञो मृत्युं तथा-
ऽऽदिशेत् ।
अन्येषु चैव वृक्षेषु वृक्षोत्पातेष्वतन्द्रितः ॥
[6]आच्छादयित्वा तं वृक्षं गन्धमाल्यैर्विभूषयेत् ।
वृक्षोपरि तथा छत्रं कुर्यात् पापप्रशान्तये ॥
[7]शिवमभ्यर्चयेद्देवं पशुं चास्मै निवेदयेत् ।
रुद्रेभ्य इति वृक्षेषु हुत्वा रुद्रं जपेत्ततः ॥
[8]मध्वाज्ययुक्तेन तु पायसेन
संपूज्य विप्रांश्च भुवं च दद्यात् ।
गीतेन नृत्येन तथाऽर्चयेत्तु
देवं हरं पापविनाशहेतोः ॥

गर्ग उवाच–

[1]अतिवृष्टिरनावृष्टिर्दुर्भिक्षादि भयं मतम् ।
अनृतौ तु दिवाऽनन्ता वृष्टिर्ज्ञेया भयानका ॥
[2]अनभ्रे वैकृता चैव विज्ञेया राजमृत्यवे ।
शीतोष्णानां विपर्यासे नृपाणां रिपुजं भयम् ॥
[3]शोणितं वर्षते यत्र तत्र शस्त्रभयं भवेत् ।
अङ्गारपांशुवर्षेषु नगरं तद्विनश्यति ॥
[4]मज्जास्थिस्नेहमांसानां जनमारभयं भवेत् ।
फलं पुष्पं तथा धान्यं परेणातिभयाय तु ॥
[5]पांशुजन्तूपलानां च वर्षतो रोगजं भयम् ।
छिद्रे वाऽन्नप्रवर्षेण सस्यानां भीतिवर्धनम् ॥
[6]विरजस्के रवौ व्यभ्रे यदा छाया न दृश्यते ।
दृश्यते तु प्रतीपा वा तत्र देशभयं भवेत् ॥
[7]निरभ्रे वाऽथ रात्रौ वा श्वेतं याम्योत्तरेण तु ।
इन्द्रायुधं तथा दृष्ट्वा उल्कापातं तथैव च ॥
[8]दिग्दाहपरिवेषौ च गन्धर्वनगरं तथा ।
परचक्रभयं ब्रूयाद्देशोपद्रवमेव च ॥

---

(१) मत्स्य. २३२।८ ; विध. २।१३७।८ मद्ये (मध्ये) स्रावे न (स्रावेण).

(२) मत्स्य. २३२।९ ; विध. २।१३७।९ षणं (षणात्) रोहस्तु (रोहत्सु).

(३) मत्स्य. २३२।१० ; विध. २।१३७।१० उत्तरार्धे (स्थानात्स्थानात्तुरंगाणां देशभङ्गं तथाऽऽदिशेत् ।।).

(४) मत्स्य. २३२।११ ; विध. २।१३७।११ ज्वल (जल्प) पद्य (पच्य).

(५) मत्स्य. २३२।१२ ; विध. २।१३७।१२ तथा (तदा) चैव वृक्षेषु (चैवं युक्तेषु).

(६) मत्स्य. २३२।१३ ; विध. २।१३७।१३ पाप (ताप).

(७) मत्स्य. २३४।१४ ; विध. २।१३७।१४ उत्तरार्धे (मूलेभ्य इति षण्मावान् हुत्वा रुद्रां जपेत्तथा ।। ).

(८) मत्स्य. २३२।१५ ; विध. २।१३७।१५ चयेत्तु (चयेत) हरं (भवं).

(१) मत्स्य. २३३।१ ; विध. २।१३८।१ क्षादि भयं (क्षायोभयं) उत्तरार्धे (अनृते भदिने रिक्ता वृष्टिर्ज्ञेया भयावहा ।।).

(२) मत्स्य. २३३।२ ; विध. २।१३८।२ वैकृ (विकृ) ष्णानां वि (ष्णतावि) नृपाणां ( जन्तूनां ).

(३) मत्स्य. २३३।३ ; विध. २।१३८।३ पांशुवर्षेषु (पांसुवर्षेण).

(४) मत्स्य. २३३।४ ; विध. २।१३८।४ फलं पुष्पं (फलपुष्पे) परेणातिभ (हिरण्यादि भ).

(५) मत्स्य. २३३।५ ; विध. २।१३८।५ च वर्षतो (तु वर्षणे) उत्तरार्धे (छिद्राणां तु प्रवर्षे च सस्यानामीतिवर्धनम् ।। ).

(६) मत्स्य. २३३।६ ; विध. २।१३८।६.

(७) मत्स्य. २३३।७ ; विध. २।१३८।७ वाऽथ (चाऽथ) तथा (तदा) पातं त (पातांस्त).

(८) मत्स्य. २३३।८ ; विध. २।१३८।८ च (वा).

[१]सूर्येन्दुपर्जन्यसमीरणानां
यागस्तु कार्यो विधिवद् द्विजेन्द्र ।
धनानि गौः काञ्चनदक्षिणा च
देया द्विजानामघनाशहेतोः ॥

गर्ग उवाच--

[२]नगरादपसर्पन्ते समीपमुपयान्ति च ।
नद्यो ह्रदप्रस्रवाणि विरसाश्च भवन्ति च ॥
[३]विवर्णं कलुषं तप्तं फेनवज्जन्तुसंकुलम् ।
स्नेहं क्षीरं सुरां रक्तं वहन्ते वाऽऽकुलोदकाः ॥
[४]षण्मासाभ्यन्तरे तत्र परचक्रभयं भवेत् ।
जलाशया नदन्ते वा प्रज्वलन्ति कथंचन ॥
[५]विमुञ्चन्ति तथा ब्रह्मञ्ज्वालाधूमरजांसि च ।
अखाते वा जलोत्पत्तिः ससत्त्वा वा जलाशयाः ॥
[६]संगीतशब्दाः श्रूयन्ते जनमारभयं भवेत् ।
दिव्यमम्भः पयः सर्पिर्मधु चात्रावसेचनम् ॥

(१) मत्स्य. २३३।९ ; विध. २।१३८।९ उत्तरार्धे (धान्यान्नगोकाञ्चनदक्षिणाश्च देया द्विजानां भयनाशहेतोः ॥).

(२) मत्स्य. २३४।१ ; विध. २।१३९।१–२ सर्पन्ते (सर्पन्ति) यान्ति च (यान्ति वा) यान्ति च। + (अशोष्या अपि शुष्यन्ति समीपं प्रवहन्ति वा।) प्रस्रवाणि विरसा (प्रस्रवणा विसरा).

(३) मत्स्य. २३४।२ ; विध. २।१३९।२–३ स्नेहं क्षीरं (क्षीरं स्नेहं).

(४) मत्स्य. २३४।३ ; विध. २।१३९।३–४ भ्यन्तरे (भ्यन्तरं) चतुर्थचरणे (प्रजल्पन्ति क्वथन्ति वा).

(५) मत्स्य. २३४।४ ससत्त्वा (सुसत्त्वा) ; विध. २।१३९।४–५ पूर्वार्धे (विमुञ्चतेऽथवा ब्रह्मञ्ज्वालान् धूमरजांसि च।).

(६) मत्स्य. २३४।५ मम्भः पयः (मम्भोमयं) मधु चात्रा (मधुतैला) ; विध. २।१३९।५–७ श्रूयन्ते (दृश्यन्ते) भवेत् (वदेत्) भवेत्। + (जलाशयानां वैकृत्ये संयतस्तु जलाशये। स्थालीपाकेन पशुना वरुणं पूजयेद् द्विज ॥).

[१]जप्तव्या वारुणा मन्त्रास्तैश्च होमो जले भवेत् ॥
[२]मध्वाज्ययुक्तं परमान्नमत्र
देयं द्विजानां द्विजभोजनार्थम् ।
गावश्च देयाः सितवस्त्रयुक्ता-
स्तथोदकुम्भाः सलिलाघशान्त्यै ॥

गर्ग उवाच--

[३]अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मसंप्रसवास्तथा ॥
[४]अमानुषा ह्यतुण्डाश्च संजातव्यसनास्तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥
[५]पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥
[६]विवासयेत्तान्नृपतिः स्वराष्ट्रात्
स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः ।
*किमिच्छकैर्ब्राह्मणतर्पणैश्च
लोके ततः शान्तिमुपैति पापम् ॥

* किमिच्छकः व्रतविशेषः, यस्मिन् किल 'किमिच्छसि' इति प्रश्नपूर्वकमर्थिने इष्टं वस्तु प्रदीयते ।

(१) मत्स्य. २३४।६ ; विध. २।१३९।७.

(२) मत्स्य. २३४।७ ; विध. २।१३९।८ नार्थम् (नार्थं) सितवस्त्र (द्विज वस्त्र) सलिलाघ (सकलाङ्ग).

(३) मत्स्य. २३५।१ ; विध. २।१४०।१ पूर्वार्धे (कालप्रसवना नार्यः कालातीताः प्रजास्तथा।) संप्रसवा (प्रसविका).

(४) मत्स्य. २३५।२ ; विध. २।१४०।२ ह्यतुण्डा (अरुण्डा).

(५) मत्स्य. २३५।३ ; विध. २।१४०।३ तथैव च (तथा चैव) कुलस्य च (कुलस्यापि).

(६) मत्स्य. २३५।४ ; विध. २।१४०।४ स्त्रियश्च (प्रियं च) तर्पणैश्च लोके (तर्पणं च कार्यं).

गर्ग उवाच—

[1]यान्ति यानान्ययुक्तानि युक्तान्यपि न यान्ति च।
चोद्यमानानि तत्र स्यान्महद्भयमुपस्थितम्॥

[2]वाद्यमाना न वाद्यन्ते वाद्यन्ते चाप्यनाहताः।
अचलाश्च चलन्त्येव न चलन्ति चलानि च॥

[3]आकाशे तूर्यनादाश्च गीतगन्धर्वनिःस्वनाः।
काष्ठदर्वीकुठारादि विकारं कुरुते यदि॥

[4]गावो लाङ्गूलसंघैश्च स्त्रियः स्त्री च विघातयेत्।
उपस्कारादिविकृतौ घोरं शस्त्रभयं भवेत्॥

[5]वायोस्तु पूजां द्विज सक्तुभिश्च
कृत्वा नियुक्तांश्च जपेच्च मन्त्रान्।
दद्यात्प्रभूतं परमान्नमत्र
सदक्षिणं तेन शमोऽस्य भूयात्॥

गर्ग उवाच—

[6]प्रविशन्ति यदा ग्राममारण्या मृगपक्षिणः।
अरण्यं यान्ति वा ग्राम्याः स्थलं यान्ति जलोद्भवाः॥

(१) मत्स्य. २३६।१ ; विध. २।१४२।१ द्वितीयचरणे (युक्तानि न हि यान्ति चेत्) तत्र (तस्य) द्भय (द्दुःख).

(२) मत्स्य. २३६।२ ; विध. २।१४२।२ चलानि च (चलास्तथा).

(३) मत्स्य. २३६।३ ; विध. २।१४२।३ उत्तरार्धे (काष्ठं दार्वीविकारादि कुठारं कुरुते यदि॥).

(४) मत्स्य. २३६।४ ; विध. २।१४२।४ (गवां लाङ्गूलसङ्गश्चेत् स्त्रियं तु यदि पातयेत्। उपरागा दिव्यकृता घोरं शस्त्रभयं वदेत्॥).

(५) मत्स्य. २३६।५ ; विध. २।१४२।५ नियुक्तांश्च (तदुक्तांस्तु) सदक्षिणं (प्रदक्षिणां).

(६) मत्स्य. २३७।१ ; विध. २।१४३।१ मार (मर).

[1]स्थलजाश्च जलं यान्ति घोरं वाशन्ति निर्भयाः।
राजद्वारे पुरद्वारे शिवा चाप्यशिवप्रदा॥

[2]दिवा रात्रिंचरा वाऽपि रात्रावपि दिवाचराः।
ग्राम्यास्त्यजन्ति ग्रामं च शून्यतां तस्य निर्दिशेत्॥

[3]दीप्ता वाशन्ति संध्यासु मण्डलानि च कुर्वते।
वाशन्ति विस्वरं यत्र तदाऽप्येतत्फलं लभेत्॥

[4]प्रदोषे कुक्कुटो वाशेद्धेमन्ते वाऽपि कोकिलः।
अर्कोदयेऽर्काभिमुखी शिवा रौति भयं वदेत्॥

[5]गृहं कपोतः प्रविशेत् क्रव्यादो मूर्ध्नि लीयते।
मधु वा मक्षिकाः कुर्युर्मृत्युर्गृहपतेर्भवेत्॥

[6]प्राकारद्वारगेहेषु तोरणापणवीथिषु।
केतुच्छत्रायुधाद्येषु क्रव्यादं प्रपतेद्यदि॥

[7]जायन्ते वाऽथ वल्मीका मधु वा स्यन्दते यदि।
स देशो नाशमायाति राजा वा म्रियते तथा॥

(१) मत्स्य. २३७।२ ; विध. २।१४३।२ स्थलजाश्च जलं (जलं वा स्थलजा) शिवा चा (शिवाश्चा) प्रदा (प्रदाः).

(२) मत्स्य. २३७।३ ; विध. २।१४३।३ रात्रावपि (रात्रौ वाऽपि) च (वा).

(३) मत्स्य. २३७।४ ; विध. २।१४३।४ वाशन्ति वि (वाशन्ते वि) लभेत् (वदेत्).

(४) मत्स्य. २३७।५ ; विध. २।१४३।५ उत्तरार्धे (अर्कोदयेऽर्काभिमुखः श्वा वा नृपभयं भवेत्॥).

(५) मत्स्य. २३७।६ ; विध. २।१४३।६ उत्तरार्धे (मधु वा मक्षिका कुर्यान्मृत्युं गृहपतेर्वदेत्॥ ).

(६) मत्स्य. २३७।७ ; विध. २।१४३।७ क्रव्यादं प्र (क्रव्यात्संनि).

(७) मत्स्य. २३७।८ ; विध. २।१४३।८ जायन्ते (जायते) वल्मीका (वल्मीको) स्यन्दते (दृश्यते) वा म्रियते तथा (च म्रियतेऽथवा).

[1]मूषकाञ्छलभान्दृष्ट्वा प्रभूतं क्षुद्भयं भवेत् ।
काष्ठोल्मुकास्थिशृङ्गाढ्याः श्वानो मर्कटवेदनाः ॥
[2]दुर्भिक्षवेदना ज्ञेया काका धान्यमुखा यदि ।
जनानभिभवन्तीह निर्भया रणवेदिनः ॥
[3]काको मैथुनसक्तश्च श्वेतस्तु यदि दृश्यते ।
राजा वा म्रियते तत्र स च देशो विनश्यति ॥
[4]उलूको वाशते यत्र नृपद्वारे तथा गृहे ।
ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च ॥
[5]मृगपक्षिविकारेषु कुर्याद्धोमं सदक्षिणम् ।
देवाः कपोत इति वा जप्तव्याः पञ्चभिर्द्विजैः ॥
[6]गावश्च देया विधिवद् द्विजेभ्यः
सकाञ्चना वस्त्रयुगोत्तरीयाः ।
एवं कृते शान्तिमुपैति पापं
मृगैर्द्विजैर्वा विनिवेदितं यत् ॥

गर्ग उवाच—

[7]प्रासादतोरणाट्टालद्वारप्राकारवेश्मनाम् ।
निर्निमित्तं तु पतनं दृढानां राजमृत्यवे ॥

[1]रजसा वाऽथ धूमेन दिशो यत्र समाकुलाः ।
आदित्यचन्द्रताराश्च विवर्णा भयवृद्धये ॥

राक्षसा यत्र दृश्यन्ते ब्राह्मणाश्च विधर्मिणः ।
ऋतवश्च विपर्यस्ता अपूज्यः पूज्यते जनैः ॥

[2]नक्षत्राणि वियोगीनि तन्महद्भयलक्षणम् ।
केतूदयोपरागौ च च्छिद्रं वा शशिसूर्ययोः ॥

[3]ग्रहर्क्षविकृतिर्यत्र तत्रापि भयमादिशेत् ।
स्त्रियश्च कलहायन्ते बाला निघ्नन्ति बालकान् ॥

[4]क्रियाणामुचितानां च विच्छित्तिर्यत्र जायते ।
हूयमानस्तु यत्राग्निर्दीप्यते न च शान्तिषु ॥

[5]पिपीलिकाश्च क्रव्यादा यान्ति चोत्तरतस्तथा ।
पूर्णकुम्भाः स्रवन्ते च हविर्वा विप्रलुप्यते ॥

[6]मङ्गल्याश्च गिरो यत्र न श्रूयन्ते समन्ततः ।
क्षवथुर्बाधते वाऽथ प्रहसन्ति नदन्ति च ॥

[7]न च देवेषु वर्तन्ते यथावद् ब्राह्मणेषु च ।
मन्दघोषाणि वाद्यानि वाद्यन्ते विस्वराणि च ॥

---

(१) मत्स्य. २३७।९ ; विध. २।१४३।९ भूतं (भूतान्) शृङ्गाढ्याः (शृङ्गाद्याः) वेदनाः (कैर्जिताः) वेदनाः ॥ + (सशानं निर्गता ग्रामाद् ग्रामश्रेष्ठविनाशनाः । एकाण्डता तु काकानां यदि चैवाप्यनण्डता ॥ निम्नेषु च निवेशश्च देशनाशकरः स्मृतः । अपसव्यं भ्रमन्तश्च मण्डले रणवेदिनः ॥).

(२) मत्स्य. २३७।१० ; विध. २।१४३।१२ वेदना ज्ञेया (वेदिनो ज्ञेयाः) मुखा (मुषो) भवन्तीह (भवन्तश्च).

(३) मत्स्य. २३७।११ ; विध. २।१४३।१३ श्वेतस्तु (श्वेतश्च) स च (स वा).

(४) मत्स्य. २३७।१२ ; विध. २।१४३।१४ नृपद्वारे (विपतेद्वा).

(५) मत्स्य. २३७।१३ कपोत (कपोता) ; विध. २।१४३।१५ द्धोमं सदक्षिणम् (द्धोमान् सदक्षिणान्) वा (च).

(६) मत्स्य. २३७।१४ ; विध. २।१४३।१६ जेभ्यः (जानां).

(७) मत्स्य. २३८।१ ; विध. २।१४४।१ निर्नि (अनि).

(१) मत्स्य. २३८।२–३ ; विध. २।१४४।२–३.

(२) मत्स्य. २३८।४ ; विध. २।१४४।४ च्छिद्रं वा (च्छिद्रता).

(३) मत्स्य. २३८।५; विध. २।१४४।५ बालकान् ॥ + (शीलाचारविहीनाश्च मद्यमांसानृतप्रियाः । तथा पाषाण-[ ? पाषण्ड ]भूयिष्ठास्त्रयीमार्गच्युता द्विजाः ॥ यत्र देशे विजायन्ते तत्र विद्यादुपद्रवम् । उच्चितैर्नाभिपूज्यन्ते यूपान्न-बलिभिः सदा ॥).

(४) मत्स्य. २३८।६ ; विध. २।१४४।८ उत्तरार्धे (अग्निर्यत्र न दीप्येत हूयमानासु शान्तिषु ॥ ).

(५) मत्स्य. २३८।७ ; विध. २।१४४।९ चोत्तर (चातुर).

(६) मत्स्य. २३८।८ ; विध. २।१४४।१० बाधते वाऽथ (धावति चा[ ? तीवा]थ) नदन्ति (रुदन्ति).

(७) मत्स्य. २३८।९ ; विध. २।१४४।११ उत्तरार्धे (मर्मदोषाणि चोच्यन्ते वाद्यन्ते विसुराणि च ॥ ).

[1]गुरुमित्रद्विषो यत्र शत्रुपूजारता नराः ।
ब्राह्मणान्सुहृदो मान्याञ्जनो यत्रावमन्यते ॥
[2]शान्तिमङ्गलहोमेषु नास्तिक्यं यत्र जायते ।
राजा वा म्रियते तत्र स देशो वा विनश्यति ॥
[3]राज्ञो विनाशे संप्राप्ते निमित्तानि निबोध मे ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥
[4]ब्राह्मणस्वानि चाऽऽदत्ते ब्राह्मणांश्च जिघांसति ।
न च स्मरति कृत्येषु याचितश्च प्रकुप्यति ॥
[5]रमते निन्दया तेषां प्रशंसां नाभिनन्दति ।
अपूर्वं तु करं लोभात्तथा पातयते जने ॥
[6]एतेष्वभ्यर्चयेच्छक्रं सपत्नीकं द्विजोत्तम ।
भोज्यानि चैव कार्याणि सुराणां बलयस्तथा ।
सन्तो विप्राश्च पूज्याः स्युस्तेभ्यो दानं च दीयताम् ॥
[7]गावश्च देया द्विजपुंगवेभ्यो
भुवस्तथा काञ्चनमम्बराणि ।
होमश्च कार्योऽमरपूजनं च
एवं कृते पापमुपैति शान्तिम् ॥

(१) मत्स्य. २३८।१० ; विध. २।१४४।१२ द्विषो (द्रुहो) नराः (जनाः) मान्या (ऽमात्या).

(२) मत्स्य. २३८।११ ; विध. २।१४४।१३ देशो वा (वा देशो).

(३) मत्स्य. २३८।१२ ; विध. २।१४४।१४.

(४) मत्स्य. २३८।१३ ; विध. २।१४४।१५ प्रथमचरणे (ब्राह्मणैर्निन्द्यते चापि) न च (न तान्) श्च प्रकुप्यति (श्चाभिभूयते).

(५) मत्स्य. २३८।१४ ; विध. २।१४४।१६ निन्दया तेषां (निर्दयश्चैषां).

(६) मत्स्य. २३८।१५ ; विध. २।१४४।१७ तृतीयार्धं नास्ति.

(७) मत्स्य. २३८।१६; विध. २।१४४।१८ भुवस्त (भुवं त) राणि (रं च) कार्योऽमर (कार्यः सुर) पापमुपैति शान्तिम् (शान्तिमुपैति पापम्).

ग्रहयज्ञः

मनुरुवाच—
[1]ग्रहयज्ञः कथं कार्यो लक्षहोमः कथं नृपैः ।
कोटिहोमोऽपि वा देव सर्वपापप्रणाशनः ॥
क्रियते विधिना येन यद् दृष्टं शान्तिचिन्तकैः ।
तत्सर्वं विस्तरादेव कथयस्व जनार्दन ॥

मत्स्य उवाच—
इदानीं कथयिष्यामि प्रसङ्गादेव ते नृप ।
राज्ञा धर्मप्रसक्तेन प्रजानां च हितेप्सुना ॥
ग्रहयज्ञः सदा कार्यो लक्षहोमसमन्वितः ।
नदीनां संगमे चैव सुराणामग्रतस्तथा ॥
सुषमे भूमिभागे च दैवज्ञाधिष्ठितो नृपः ॥

## विष्णुधर्मोत्तरपुराणम्

उत्पातोत्पत्तौ कर्तव्यो लक्षहोमः कोटिहोमो वा

[2]सर्वोत्पातसमुत्पत्तौ ब्राह्मणैरनुपूजितैः ॥
पञ्चभिर्दशभिर्वाऽपि लक्षहोमं* समाचरेत् ।
असंकीर्णैस्तथा हारैर्नृपतिस्तत्प्रशान्तये ॥
नास्ति लोके स उत्पातो यो ह्यनेन न शाम्यति ।
मङ्गलं परमं नास्ति यत्तस्मादतिरिच्यते ॥
कोटिहोमं* तु यो राजा कारयेत्पूर्ववद् द्विजैः ।
न तस्य शत्रवः संख्ये जातु तिष्ठन्ति कर्हिचित् ॥
न तस्य मरणं देशे न व्याधिर्जायते तथा ।
अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ॥
राक्षसाश्च प्रशाम्यन्ति सर्वास्तत्र तथेतयः ।
रसवन्ति च तोयानि सस्यानि स्वादुवन्ति च ॥
जायन्ते तस्य देशे तु धर्मिष्ठश्च जनो भवेत् ॥
[3]वैष्णवी च तथा चैन्द्री ब्राह्मी रौद्री तथैव च ।
वायव्या वारुणी चैव कौबेरी भार्गवी तथा ॥

* गायत्रीमन्त्रेण यवादिद्रव्यैश्चेति पूर्वतोऽनुवृत्तम् ।

(१) मत्स्य. २३९।१–५.

(२) विध. १।१६५।४५–५१.

(३) विध. २।१२७।५–७.

प्राजापत्या तथा त्वाष्ट्री कौमारी वह्निदेवता।
मारुद्गणी च गान्धारी शान्तिर्वै रुदती तथा ॥
शान्तिराङ्गिरसी याम्या पार्थिवी च भृगूत्तम।
एतास्तु शान्तयः प्रोक्ताः सर्वकर्महिताः सदा॥
[1]संभारा ये यथा यत्र यानि द्रव्याणि यो विधिः॥
शाखां प्रति तथा तत्र तत्प्रमाणमिति स्थितिः।
यः स्वसूत्रमतिक्रम्य परसूत्रेण वर्तते ॥
अप्रमाणमृषिं कृत्वा सोऽप्यधर्मेण युज्यते ।
तस्मात् सर्वप्रयत्नेन स्वसूत्रं न विलङ्घयेत् ॥
[2]प्राक्तन्त्रोत्तरतन्त्रे द्वे स्वशाखाप्रत्ययाद् द्विज ।
सर्वकर्मसु कर्तव्ये मध्ये कर्म विधीयते ॥
आथर्वणोऽयं कथितो विधिस्ते
संक्षेपतो भार्गववंशमुख्य ॥

वैष्णवाद्यष्टादशाथर्वणशान्तीनां प्रयोगप्रापणे विधिः विष्णुधर्मोत्तरे – संभारा इति । अत्राष्टादशाथर्वणशान्तिप्रकरणेऽपि 'सर्वकर्मसु' इति निर्देश उक्तः शान्तिप्रयोगान्तर्गते ये अग्निस्थापनादिपूर्वोत्तरतन्त्रे यथा स्वशाखानुसारेण कर्तव्ये तथा तदङ्गभूतग्रहयागादावपीति प्रापणार्थः । आद्यन्तयोः शाखाग्रहणेन च मध्ये सूत्रग्रहणस्य स्वशाखीयपरिशिष्टाङ्गलक्षणत्वप्रतीतेः स्वशाखीयसूत्रपरिशिष्टादिनाऽपि केनापि ग्रन्थेन ग्रहयज्ञादिविधौ सति शान्त्यङ्गग्रहयज्ञाद्यपि तथैवानुष्ठेयम् । अत एव स्वसूत्रानुसारिपूर्वोत्तराङ्गमध्ये प्रधानमात्रमेवाथर्ववेदेन विधीयते, न तु पूर्वोत्तराङ्गानामन्यथाभाव इति ज्ञापयितुम् 'मध्ये कर्म विधीयते' इत्युक्तम् । अतश्च शान्तिप्रयोगमध्येऽग्निस्थापनादिषु केषांचिदाथर्वणविध्यादरः, परेषां तु ग्रहयागादौ नित्यवत् समादरः प्रत्यक्षवचनविरोधात् विद्वद्भिरनादरणीय इति सिद्धम् ।

राकौ. २४०–२४१

(१) विध. २।१२७।४७–४९ ; राकौ. २४०–२४१.
(२) विध. २।१२७।५० ; राकौ. २४१ प्रत्यया (श्रयणा).

गर्ग उवाच–

[1]वडवा हस्तिनी गौर्वा यदि युग्मं प्रसूयते ।
विजातं विकृतं वाऽपि षड्भिर्मासैर्म्रियेत वै ॥
वियोनिषु च गच्छन्तो मैथुनं देशनाशनाः ।
अन्यत्र वेसरोत्पत्तेर्नृणां चाजातिमैथुनम् ॥
सर्पमूषकमार्जारमत्स्यश्वानो विवर्जिताः ।
ज्ञेया दुर्भिक्ष्यकर्तारः स्वजातिपिशिताशिनः ॥
अकालजं मदं घोरं चतुष्पान्मृगपक्षिणाम् ।
अन्यजातिवदेतच्च धैन्वं श्वानं विशेषतः ॥
अमानुषा मानुषवज्जल्पन्ति प्राणिनो यदि ।
विकृता वा प्रसूयन्ति परचक्रागमं वदेत् ॥
त्यागो विवासनं दानं तेषां कार्यं विजानता ।
तर्पयेद् ब्राह्मणांश्चात्र जपहोमांश्च कारयेत् ॥
मृदङ्गवाद्यैः पटहैः सगीतैः
पूजा च कार्या त्रिदिवौकसां वै ।
धातुस्तथेज्या विधिना च कार्या
देयं तथाऽन्नं बहुशो द्विजेभ्यः ॥

## ब्रह्मपुराणम्

अथर्ववेदविहिताः प्रतिसंवत्सरं कार्या होमाः नित्यनैमित्तिककाम्यकर्माणि महाशान्तिश्च

[2]द्वौ लक्षहोमौ कुर्वीत तथा संवत्सरं प्रति ।
एकं च कोटिहोमं च यत्नात्सर्वाभयप्रदम् ॥
[3]अथर्ववेदविधिना समन्त्री सपुरोहितः ।
नित्यान्याहार्यकाम्यानि तथा नैमित्तिकानि च ॥
[4]ग्रहणे सूर्यशशिनोर्भूकम्पोत्पातदर्शने ।
तत्क्षणे च महाशान्तिः कर्तव्याऽनिष्टनाशिनी ॥

(१) विध. २।१४१।१–७.
(२) राक. १६६ ; राप्र. १३८.
(३) राक. १६६ ; राप्र. १३८ विधिना (विहितं).
(४) राक. १६६ ; राप्र. १३८.

# *राजाभिषेकः

## बौधायनगृह्यशेषसूत्रम्

ब्राह्मणभोजनपुरोहितवरणपूर्वकसंभाराहरणस्थापने अष्टसहस्रहोमः श्रीदेव्या आराधनं मकुट-प्रक्षालनं प्रतिसरबन्धनं च राज्ञो राज-वाहनस्य चाभिषेकः

[1]अथातो राजाभिषेकं व्याख्यास्यामः ॥

[2]पूर्वपक्षस्य पञ्चम्यां त्रयोदश्यां तिष्ये श्रोणायां वा यानि चान्यानि शुभानि नक्षत्राणि तेषु पूर्वेद्युरेव युग्मान् ब्राह्मणान् भोजयेत् ॥

[3]आशिषो वाचयित्वा योनिगोत्रश्रुतवृत्तसंपन्नं ब्राह्मणं पुरोहितं वृणीत– 'आकूत्यै त्वा कामाय त्वा' इति ॥

[4]पुरोहितो जपति– 'आकूतिमस्यावसे। काममस्य समृद्ध्यै। इन्द्रस्य युञ्जते धियः।' इति ॥

[5]स्वयं जपति– 'आकूतिं देवीं मनसः पुरोदधे यज्ञस्य माता सुहवा मे अस्तु। यदिच्छामि मनसा सकामो विदेयमेनद्धृदये निविष्टम् ॥' इति ॥

[1]अथास्तमित आदित्ये पद्माकृतिं मण्डलं कृत्वोपकल्पयते– व्रीहिभिर्यवैस्तिलमाषैः पञ्चगव्यैः सामुद्राश्चापो नद्याश्चौदुम्बरं भद्रासनं व्याघ्रचर्म हेमकलशैर्गोशृङ्गैश्च संभृत्य सह सादयति, 'यत्सह सर्वाणि मानुषाणि' इत्येतस्माद् ब्राह्मणात् ॥

[2]उत्तरपूर्वे देशेऽगारस्य पाकयज्ञविधानेन व्रीहिभिर्यवैस्तिलमाषैर्व्याहृतिभिर्महाव्याहृतिभिः सावित्र्या च त्रियम्बकेनाष्टसहस्रं जुहोति ॥

[3]अथ दक्षिणार्धे श्रीसूक्तविधानेन श्रीदेवीमाराध्य मकुटं प्रक्षालयति ॥

[4]गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम्।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि।
शुक्रमसीत्याज्यं देवस्यत्वेति कुशोदकम् ॥
इति ॥

---

* राजनीतिकाण्डस्य प्रथमभागे राजसूयप्रकरणे यो राजाभिषेको भूयोभिर्ब्राह्मणग्रन्थैर्विहितः संगृहीतः स राजसूयाङ्गभूतः, अयं तु राजत्वसंपादकः स्वतन्त्रः। तथाऽपि ऐतरेयब्राह्मणे प्रसङ्गसंगत्या विहितः स्वतन्त्रोऽपि राजाभिषेकोऽस्माभिर्वैदिकत्वात्तत्रैव संगृहीतः। स च राजनीतिकाण्डस्य २२७–२३९ पृष्ठेषु द्रष्टव्यः।

(१) बौगृशे. १।२३।१ ; बाल. १।३०८ पृ. ६१७.

(२) बौगृशे. १।२३।२ ; बाल. १।३०८ पृ. ६१७ चान्यानि शुभानि न (वाऽन्यानि शुभन).

(३) बौगृशे. १।२३।३ ; बाल. १।३०८ पृ. ६१७ कामाय त्वा + (समृधे त्वा).

(४) बौगृशे. १।२३।४ ; बाल. १।३०८ पृ. ६१७.

(५) बौगृशे. १।२३।५ ; बाल. १।३०८ पृ. ६१७ (पुरोदधे... मेनद्धृदये ०).

(१) बौगृशे. १।२३।६ ; बाल. १।३०८ पृ. ६१८ मण्डलं (मण्डपं) व्रीहिभिर्यं (व्रीहिय) नद्या (नाद्या) शैर्गो (शं गो).

(२) बौगृशे. १।२३।७ ; बाल. १।३०८ पृ. ६१७ पूर्वे दे (पूर्वदे) (ऽगारस्य ०) व्याहृतिभिर्महा... जुहोति व्याहृतीभिर्महाव्याहृतीभिः सावित्र्या च त्र्यम्बकेनाष्टसहस्रं जुहुयात्).

(३) बौगृशे. १।२३।८ ; बाल. १।३०८ पृ. ६१७ दक्षिणार्धे (दक्षिणार्धपूर्वार्धैः) मकुटं (मुकुटं).

(४) बौगृशे. १।२३।९ ; बाल. १।३०८ पृ. ६१७ गृह्य (ऽऽपाद्य) (वै०).

[1]मकुटं प्रक्षाल्य प्रतिसरं बध्नाति– 'प्र तत्ते अद्य शिपिविष्ट' इति ॥

[2]राजानं राजवाहनं चाग्रेऽभिषिञ्चेत् ॥

अथैतां रात्रिमुपविशेत् संविशेद्वा ॥

[3]अथोदित आदित्ये भद्रासनं निधाय तस्मिन् व्याघ्रचर्माऽऽस्तीर्य तस्मिन् प्राङ्मुख उपविश्य हेमकलशानादाय 'आपो हि ष्ठा मयोभुवः' इति तिसृभिः 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिर्गृह्णाति ॥

[4]'अव ते हेडः, उदुत्तमम्' इति द्वाभ्याम् 'आपो भद्राः, आदित्पश्यामि' इति चाभिषिच्याब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिरन्यैश्च पवित्रमन्त्रैरथ शृङ्गोदकैश्चाभिषिञ्चति ॥

[5]'अपां यो द्रवणे रसस्तमहमस्मा आमुष्यायणाय तेजसे श्रियै यशसे ब्रह्मवर्चसायान्नाद्यायाभिषिञ्चामि' इति संमृष्टे समुत्क्रोशन्तीति समानमा मुखस्य विमार्जनात् ॥

[6]एतस्मिन् काले राजवाहनं चाभिषिञ्चेत् ॥

स्नापयित्वा ब्राह्मणेभ्यो निष्कसहस्रं दासीशतं ददाति ॥

[1]स्वस्त्ययनं वाचयित्वा मकुटं वा पट्टं वा करोति– 'अग्ने यशस्विन् यशसेममर्पय' इति ॥

[2]अथ दुन्दुभिशब्दं करोति– 'दुन्दुभीन् समाघ्नन्ति' इति ब्राह्मणम् ॥

[3]प्रदक्षिणीकृत्य स्वराष्ट्रमनुपालयतीत्याह भगवान् बोधायनः ॥

## काठकगृह्यसूत्रम्

राजाभिषेकस्य निषिद्धः कालः

[4]राजाऽभिषेकं काम्यं च न कुर्याद् भानुलङ्घिते ॥

भानुलङ्घिते असंक्रान्तमासे । राप्र. ३५

[5]मलमासे विवर्जयेत् ॥

राज्ञोऽभिषेकः प्रथमश्चूडाकरणमेखलाः ।
अन्नप्राशनमारम्भो गृहाणां च प्रवेशनम् ॥

## कौशिकगृह्यसूत्रम्

शान्त्युदकम्, माण्डलिकसामन्तयुवराजसेनापत्यादीनामभिषेकः

[6]'भूतो भूतेषु' इति राजानमभिषेक्ष्यन् महानदे शान्त्युदकं करोत्यादिष्टानाम् ॥

अथ लघु अभिषेककर्मोच्यते । माण्डलिकस्य सामन्तस्य युवराजस्य सेनापतेरन्यस्य कस्यचिदभिषेकः । शान्त्युदकं करोति महानद्या उदकेन च पुष्कराणामुदकं

---

(१) बौगृशे. १।२३।१० ; बाल. १।३०८ पृ. ६१७ मकुटं (मुकुटं) शिपिविष्ट + (नाम).

(२) बौगृशे. १।२३।११–१२ ; बाल. १।३०८ पृ. ६१७ चाग्रेऽभिषिञ्चेत् ... संविशेद्वा ॥ (चाग्रमहिषीं चैतां रात्रिमुपविशेदल्पं संविशेद्वा ॥).

(३) बौगृशे. १।२३।१३ ; बाल. १।३०८ पृ. ६१७ तिसृभिः ...गृह्णाति (गृह्णा) ग्रन्थस्त्रुटित इति प्रतीयते.

(४) बौगृशे. १।२३।१४ ; बाल. १।३०८ पृ. ६१७ हेडः (हेडम्) षिच्या (षिञ्चत्य) पवित्रमन्त्रैरथ शृङ्गोदकै (पवित्रैरथ शृङ्गगोशृङ्गै)

(५) बौगृशे. १।२३।१५ ; बाल. १।३०८ पृ. ६१७ संमृष्टे (समुन्मृष्टे).

(६) बौगृशे. १।२३।१६–१७ ; बाल. १।३०८ पृ. ६१७ राज ...निष्क (राजा वाहनं महिषीं च स्नापयित्वा ब्राह्मणेभ्यो ग्रामनिष्क).

(१) बौगृशे. १।२३।१८ ; बाल. १।३०८ पृ. ६१७ मकुटं वा पट्टं वा (मुकुटं वा किरीटं वा पटं वाऽपा) (यशसेममर्पय०).

(२) बौगृशे. १।२३।१९ ; बाल. १।३०८ पृ. ६१७ दुन्दुभीन् (शताभिषेके दुन्दुभीन्).

(३) बौगृशे. १।२३।२० ; बाल. १।३०८ पृ. ६१७ बोधा (बौधा).

(४) राप्र. ३२.

(५) राप्र. ३२ क्रमेण काठकगृह्ये.

(६) कौसू. १७।१–३४.

देववृष्ट्युदकं दिव्यमुदकं च (?)। उदकानां विकल्पः समुच्चयो वा। दाकेटी.

**स्थालीपाकं श्रपयित्वा दक्षिणतः परिगृह्याया दर्भेषु तिष्ठन्तमभिषिञ्चति ॥**

दक्षिणतः वेद्याः। दाकेटी.

**तल्पार्षभं चर्माऽऽरोहयति ॥**

खट्वायामार्षभं चर्म आस्तीर्य तत्र राजानमारोहयति। दाकेटी.

**उदपात्रं समासिञ्चेते ॥**

उदपात्रमुभावप्यासिञ्चति(?तः)। दाकेटी.

**विपरिदधाने ॥**

**'सहैव नौ सुकृतं सह दुष्कृतम्' इति ब्रह्मा ब्रूयात् ॥**

राजा ब्रूते(?)। दाकेटी.

**'यो दुष्कृतं करवत्तस्य दुष्कृतं सुकृतं नौ सह' इति ॥**

ब्रह्मा ब्रूयात(?)। दाकेटी.

**आशयति ॥**

**अश्वमारोह्यापराजितां प्रतिपादयति ॥**

**सहस्रं ग्रामवरो दक्षिणा ॥**

अभिषेकादनन्तरं घृतावेक्षणमारात्रिकं राजकर्माणि पितृ(?पिष्ट)राग्यादीनि कर्माणि प्रत्यहं कर्तव्यानि। दाकेटी.

सार्वभौमस्य महाभिषेकः

**विपरिधानान्तमेकराजेन व्याख्यातम् ॥**

महाभिषेकविधिं वक्ष्यामः। स सार्वभौमस्य भवति। दाकेटी.

**तल्पे दर्भेष्वभिषिञ्चति ॥**

**वर्षीयसि वैयाघ्रं चर्माऽऽरोहयति ॥**

**चत्वारो राजपुत्रास्तात्पाः पृथक् पादेषु शयनं परामृश्य सभां प्रापयन्ति ॥**

**दासः पादौ प्रक्षालयति ॥**

**महाशूद्र उपसिञ्चति ॥**

राजकीयो महाशूद्रः प्रक्षालनं ददाति। दाकेटी.

**कृतसंपन्नानक्षानात्तृतीयं विचिनोति ॥**

राजा द्यूतक्रीडां करोति। दाकेटी.

**वैश्यः सर्वस्वजैन(?)मुपतिष्ठते— 'उत्सृजाऽऽयुष्मन्' इति ॥**

वैश्यः राजानमुपतिष्ठते 'उत्सृजन्नायुष्मन्' इति मन्त्रेण। दाकेटी.

**'उत्सृजामि ब्राह्मणायोत्सृजामि क्षत्रियायोत्सृजामि वैश्याय धर्मो मे जनपदे चर्यताम्' इति ॥**

ततो राजा ब्रूते। दाकेटी.

**प्रतिपद्यते ॥**

**आशयति ॥**

राजानमाशयति। दाकेटी.

**अश्वमारोह्यापराजितां प्रतिपादयति ॥**

**सभामुदायाति ॥**

**मधुमिश्रं ब्राह्मणान् भोजयति ॥**

**रसानाशयति ॥**

राजानमाशयति। दाकेटी.

**महिषाण्युपयाति ॥**

स्त्रीणां गृहे याति। दाकेटी.

**कुर्युर्गामिति गार्ग्यपार्थश्रवसौ, नेति भागलिः ॥**

तत्र मधुपर्को देयः। महाभिषेकः समाप्तः। अतो भूप्रभृतिराजकर्माधिकारः। घृतावेक्षणम्, पुरोहितकर्म, आरात्रिकम्, नक्षत्रपूजाग्रहपूजादिकं कर्तव्यम्। दाकेटी.

**'इममिन्द्र वर्धय क्षत्रियं मे' इति क्षत्रियं प्रातः प्रातरभिमन्त्रयते ॥**

**उक्तं समासेचनं विपरिधानम् ॥**

**'सविता प्रसवानाम्' इति पौरोहित्ये वत्स्यन् वैश्वलोपीः समिध आधाय ॥**

शूद्रेणाऽऽहृताः समिध आदधाति। दाकेटी.

**'इन्द्र क्षत्रम्' इति क्षत्रियमुपनयीत ॥**

**तदाहुः— न क्षत्रियं सावित्रीं वाचयेदिति ॥**

**कथं नु तमुपनयीत यन्न वाचयेत् ॥**

**वाचयेदेव वाचयेदेव ॥**

अथ वाचयेदिति विकल्पं मन्यन्ते आचार्याः । समाप्तानि राजकर्माणि । दाकेटी.

## * आथर्वणपरिशिष्टम्

प्रकृतिद्रव्यपरीक्षा, राजप्रथमाभिषेके नव्यान्येव रथसिंहासनादीनि उपयोजनीयानि

[1]अथ राजप्रथमाभिषेके प्रकृतिद्रव्याणि परीक्षेत । तद्यथा– रथसिंहासनासिच्छत्रचामरध्वजगजवाजिवस्त्रालंकारसांवत्सरचिकित्सकपुरोहितादीन्युपयुक्तानि नोपयोजयेत् ॥

प्रथमाभिषेके विशेषान्तरविधिराथर्वणानुक्रमणिकायाम्– अथेत्यादि । अत्र पुरोहितग्रहणम् अन्यराजपुरोहितो न स्वीकार्यः, वृद्धैर्वृतस्यापि पुनर्वरणमवश्यं कार्यमित्येतदर्थम्, 'न पुनः कुर्यादन्यराजपुरोहितम्' इति वाक्यशेषात्, 'गुरुं वृणुयात् भूपतिर्मधुपर्काद्येन विधिना' इति नित्यवद्वाक्यशेषे वरणविधानाच्च । अयं चाभिषेकप्रयोगबहिर्भूतो वरणविधिः सर्वकर्मार्थः, याज्ञवल्क्येन मन्त्रिकरणानन्तरमृत्विग्वरणात्पूर्वम् 'पुरोहितं च कुर्वीत' इति, तथैवैतद्विधिः । परीक्षेतेति तल्लक्षणयुक्तानि ग्राह्याणीत्येतदर्थम् । राकौ. २४२

श्मशानानलदेवतानि निहितानि द्रव्याणीत्याचार्यपुरोहितवज्रमुखतेत्याह दुर्मतिः स भरद्वाजः । न ह्यग्नेरिवोपयुक्तस्योपयोगो विद्यत इति पराशरः । ब्रह्मा ब्रह्माण्डाग्निरिवाप्रमेयो नान्यकुलोपयुक्तः ॥

[2]वरिष्यन्न पुनः कुर्यादन्यं राजा पुरोहितम् ।
निर्माल्यमिव तं राजा नान्यो भूयः समाचरेत् ॥

[3]स्वजस्रं ह्यग्नौ हेतुर्भगवतो व्याधितपतितोन्मत्ताभिशस्तनिन्दितप्रहीणप्रध्वस्तसंप्रसारणमृत्विक् ॥

पुरोहितत्वेन वृताय गुरवे मधुपर्कादिना संपूज्य दक्षिणादानम्

[3]मधुपर्काद्येन विधिना यथार्थं संपाद्य दक्षिणां दद्यात् । कोटिमध्यात् तृतीयं भागम् । यथाभूमिप्रमाणेन वा । हस्त्यश्वं नरयानं दिव्यमाभरणमातपत्रं हिरण्यं क्षितिगोधनधान्यरत्नादिकं च गुरवे दद्यात् । येन वा परितुष्येत । अभिषेकः संहिताविधौ व्याख्यातः ॥

[4]हस्त्यश्वं गुरवे दद्यान्नरयानं तथैव च ।
दिव्यमाभरणं चैव आतपत्रादिमेव च ॥
उच्छिष्टार्थं न गृह्णीयान्मङ्गलार्थं महीपतिः ।
मन्त्रौषध्यो न सिध्यन्ति राजा तत्र विनश्यति ॥

## ऋग्विधानम्

राजाभिषेककालः, राजाभिषेके कर्तव्यानि कर्माणि

[5]राजानमभिषिञ्चेत्तु पुष्येण श्रवणेन वा ॥

---

* अत्र राजप्रथमाभिषेकपरिशिष्टगतः पुरोहितविषयकोऽशो राजनीतिकाण्डस्य तृतीये भागे पुरोहितप्रकरणे (पृ. १६१२-१६१३) संगृहीतः । तदानीं परिशिष्टपुस्तकानुपलम्भात् स निबन्धतो गृहीतः । तेन तत्र वचनानां स्वरूपे क्रमे च महान् पाठभेदः संवृत्तः ।

(१) आप. ३।१; राकौ. २४२ आथर्वणानुक्रमणिकायाम्.

(१) आप. ३।१; राक. २४२ (न पुनः कुर्यादन्यराजपुरोहितम्) एतावदेव, आथर्वणानुक्रमणिकायाम्.

(२) आप. ३।१.

(३) आप. ३।१; राप्र. ५६ यथार्थं (सर्वार्घं) श्वं नर (श्वरथ) च गुरवे (स्वगुरवे) (परि०) (अभि ... ख्यातः ०); राकौ. ३२५–३२६ यथार्थं संपाद्य दक्षिणां (सर्वार्धसंपादितदक्षिणां) तीयं भा (तीयभा) दिव्यमा (दिव्या) तुष्येत (तुष्येत्) शेषं राप्रवत्.

(४) आप. ३।२.

(५) ऋग्वि. ४।१०३ षिञ्चेत्तु (षिच्येत); राप्र. १०७ पुष्ये (तिष्ये) शेषं ऋग्विवत्; राकौ. ३३७ पुष्ये (तिष्ये).

[1]पौष्णसावित्रसौम्याश्विरोहिण्यामुत्तरासु च ।
हुत्वाऽग्निं राजलिङ्गाभिः सावित्र्या प्रयतः शुचिः ॥

[2]महाव्याहृतिभिश्चैव संपाताभिहुतो भवेत् ।
सर्वौषधिरसैः श्लक्ष्णैर्नदीनां सलिलेन च ॥

होमानन्तरं संपातयुक्तः कलशो भवेदित्यर्थः ।

राकौ. ३३७

[3]व्याघ्रचर्मण्यथाऽऽसीनमासन्द्यामभिषिच्य च ।
तिष्ठन् प्रत्यङ्मुखो ब्रूयाज्जय त्वं पृथिवीमिमाम् ॥

[4]धर्मस्ते निखिलो राजन् वर्धतां पालय प्रजाः ।
वर्धस्व च श्रियै पुष्ट्यै जयायाभ्युदयाय च ॥

[5]राजानः सन्तु ते गोत्रे ततोऽप्रतिरथं जपेत् ।
वैयाघ्रं तु भवेच्चर्म समिदौदुम्बरी भवेत् ॥

[6]त्रिरेनमभिषिच्यैवं दुन्दुभीनभिमन्त्रयेत् ।
प्राच्यां त्वा दिशि वसवो ह्यभिषिञ्चन्तु तेजसे ॥

[7]दक्षिणस्यां त्वा दिशि रुद्रा अभिषिञ्चन्तु वृद्धये ॥
प्रतीच्यां त्वा दिश्यादित्या अभिषिञ्चन्तु पुष्टये ॥

(१) ऋग्वि. ४।१०४ ; राप्र. १०७ ; राकौ. ३३७ सावित्र ( सावित्र्य ) राज ( यज्ञ ).

(२) ऋग्वि. ४।१०५ ; राप्र. १०७ भिहुतो ( भिर्हुतो ) ; राकौ. ३३७ भिहुतो ( ह्निर्हुतो ).

(३) ऋग्वि. ४।१०६ ; राप्र. १०७ षिच्य च ( षिञ्चयेत् ) ; राकौ. ३३७ मिमाम् ( पते ).

(४) ऋग्वि. ४।१०७ वर्धस्व ( वर्धं त्वं ) ; राप्र. १०७ ; राकौ. ३३७.

(५) ऋग्वि. ४।१०८ ; राप्र. १०७-१०८ ; राकौ. ३३७ जपेत् ( जयेत् ) याघ्रं ( याघ्र्यं ).

(६) ऋग्वि. ४।१०९ ; राप्र. १०८ त्वा ( तु ) ; राकौ. ३३७ त्वा ( तु ) तेजसे ( ते जये ).

(७) ऋग्वि. ४।११० ; राप्र. १०८ ( त्वा० ) त्वा दिश्या ( दिशि त्वा ) ; राकौ. ३३७ राप्रवत्.

[1]विश्वेदेवा उदीच्यां त्वा अभिषिञ्चन्तु श्रेयसे ।
अभिषिच्य च राजानमाशीर्भिरभिनन्द्य च ॥

[2]आ त्वाऽहार्षमन्तरेधीत्यथैनमभिमन्त्रयेत् ।
पतङ्गमिति वै नित्यं जपेदज्ञानभेदनम् ॥

[3]मायाभेदनमेतद्धि सर्वा मायाः प्रबाधते ।
शाम्बरीमिन्द्रजालां वा मायामेतेन वारयेत् ॥

[4]अदृष्टानां च सत्त्वानां मायामेतेन बाधते ॥

(१) पूर्वोक्तानां श्रौतानामभिषेकाणामविरुद्धानामेकत्रोपसंहारेणैकोऽभिषेकः कार्यः, 'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायादित्येके । अन्ये तु श्रौतानां स्मार्तानां च तत्तच्छ्रुतिस्मृतिपठितानामङ्गानामनुपसंहारेणैकैकप्रयोगमिच्छन्ति । तदेवं यस्य पुरोहितस्य स्वशाखाविहितत्वेन यः पक्षः संनिहितः तेनैव तेनाभिषेकः कार्यः ।

राप्र. ११२

(२) एवमभिषेकविधिषु बहुविधेष्वपि विष्णुधर्मोत्तरे धर्माणां मन्त्राणां भूयसां नाम्ना नक्षत्रोत्पन्नेऽभिषेकेऽन्यत्रविहितानामविरुद्धानां गुणानामुपसंहारेण प्रयोगावधारणं शक्तैः कार्यम् । अशक्तानां तु ऐच्छिको विकल्पः । यद्वा ऋग्विधानोक्तमृक्शाखिनाम्, सामविधानोक्तं सामशाखिनाम्, आथर्वणोक्तं तच्छाखिनाम्, पौराणं सर्वेषामिति बोध्यम् । राकौ. ३३९

(१) ऋग्वि. ४।१११ ; राप्र. १०८ त्वा ( तु ) ; राकौ. ३३७ त्वा ( तु ) पू.

(२) ऋग्वि. ४।११२ ; राप्र. १०८ वै नित्यं ( नित्यं तु ) ; राकौ. ३३७-३३८ रेधीत्यथैन ( रेवोत्पथैन ) शेषं राप्रवत्.

(३) ऋग्वि. ४।११३ ; राप्र. १०८ द्वितीयचरणे ( सर्वमाया प्रबाध्यते ) पू. ; राकौ. ३३८ द्वितीयचरणे ( सर्वमायाप्रभेदनम् ) पू.

(४) ऋग्वि. ४।११४.

## वृद्धवसिष्ठः

भद्रासनपूजा, नीराजनम्, पट्टबन्धनम्,
अभिषेकः, होमः

[1]प्राग्भागे मन्दिरस्याथ गोमयेन तु कारयेत्।
मण्डलं चतुरस्रं तद्वर्णिकैः समलंकृतम्॥

[2]तत्र भद्रासनं सम्यगर्चयेत्सुमनोरमम्।
गङ्गातोयसमापूर्णस्वर्णकुम्भोदकैः सह॥

[3]दिग्विदिक्षु स्थितैः शुक्लगन्धमाल्याम्बरार्चितैः।
शतौषधीमूलहेमरत्नसद्बीजपल्लवैः॥

[4]मृत्तिकावृषशृङ्गं च गजदन्तं च रोचनम्।
उत्पलं पद्मकं पद्ममुरारेणुककुङ्कुमम्॥

[5]राजसर्षपमुस्तं च देवदारुसमन्वितम्।
देवस्य त्वेति मन्त्रेण आयुःपुष्टियशस्करैः॥

समन्वितैः कलशैः। मुस्तान्तेषु कुम्भेषु क्षिपेदिति शेषः। राकौ. ३३४

[6]आभिषेकैर्वेदमन्त्रैः शुभलग्ने शुभान्विते।
भद्रासनस्थे नृपतावभिषेकं तु कारयेत्॥

[7]नीराजनं च कर्तव्यं शङ्खवादित्रनिःस्वनैः।
आशिषो वाचनं कृत्वा वाऽर्चयेच्च सुरान् पितॄन्॥

[8]आयुधानि च पट्टं च विप्रान् गन्धादिनाऽर्चयेत्।
शुक्लमाल्याम्बरवृतः प्राङ्मुखस्य महीपतेः॥

(१) राप्र. ५६–५७; राकौ. ३३४ तद्वर्णि (तद्दर्श).

(२) राप्र. ५७; राकौ. ३३४ रमम् (हरम्) पू.

(३) राप्र. ५७; राकौ. ३३४ उत्तरार्धे (शतौषधिमूलरत्नसद्बीजैः पल्लवैः सह॥).

(४) राप्र. ५७; राकौ. ३३४ कावृष (कां वृष) पद्ममु (पद्मं मु).

(५) राप्र. ५७; राकौ. ३३४ न्वितम् (न्वितैः).

(६) राप्र. ५७; राकौ. ३३४ आभिषेकैर्वे (अभिषेको वे) शुभ (शुभे).

(७) राप्र. ५७; राकौ. ३३५ वाऽर्च (चार्च).

(८) राप्र. ५७ पू.; राकौ. ३३५.

[1]पट्टं शिरसि बध्नीयात् सिंहासनगतस्य च।
विप्रेभ्यो दक्षिणां दद्यान्मानयेन्मन्त्रपूर्वकम्॥

[2]ब्रूयात्प्रत्यङ्मुखो राजा नमामि त्वोद्धरेति च।
प्राच्यां त्वामभिषिञ्चन्तु वसवस्तेजसे श्रियै॥

[3]याम्यायामभिषिञ्चन्तु त्वां रुद्रा विजयाय च।
आदित्या अभिषिञ्चन्तु प्रतीच्यां दिशि वृद्धये॥

[4]विश्वेदेवास्तथोदीच्यामभिषिञ्चन्तु पुष्टये।
दिगीशास्त्वभिषिञ्चन्तु त्वां सदा विजयाय च।
साम्राज्यमिति मन्त्रेण राजानं सम्यगर्चयेत्॥

एतेष्वेव मन्त्रेषु 'त्वाम्' इत्यस्य स्थाने 'माम्' इति केषांचित् पाठः। पूर्वपाठे पुरोहितस्य। राकौ. ३३५

व्याघ्रचर्मण्यथाऽऽसीनं नवालंकारभूषितम्।
भृत्यचामरसंयुक्तं राजचिह्नसमन्वितम्॥

[5]पुरोहितश्च जुहुयात्साविन्याऽसौ प्रयत्नतः।
उदुम्बरसमिद्भिश्च आज्येनाष्टोत्तरं शतम्॥

[6]विद्वत्पुरोहितामात्यवृद्धैर्बन्धुसमन्वितः।
तदा संचिन्त्य सप्ताङ्गं प्रजा धर्मेण पालयेत्।
एवं यः कुरुते सम्यक् स राजा वर्धते चिरम्॥

## महाभारतम्

धर्मराजयुधिष्ठिरस्य अभिषेकः

**वैशंपायन उवाच–**

[7]ततः कुन्तीसुतो राजा गतमन्युर्गतज्वरः।
काञ्चने प्राङ्मुखो हृष्टो न्यषीदत्परमासने॥

(१) राकौ. ३३५.

(२) राप्र. ५७; राकौ. ३३५ त्वोद्ध (त्वां ध) श्रियै (श्रिये).

(३) राप्र. ५७; राकौ. ३३५ त्वां (त्वा).

(४) राप्र. ५७; राकौ. ३३५.

(५) राप्र. ५७–५८; राकौ. ३३५ पू.

(६) राप्र. ५८; राकौ. ३३५ प्रथमार्धं नास्ति, वर्धते (रमते).

(७) भा. १२।४०।१; भासु. १२।४०।१.

गतमन्युः वीतदैन्यः । गतज्वरः वीतशोकः ।
नीटी.

[1]तमेवाभिमुखौ पीठे सेव्यास्तरणसंवृते ।
सात्यकिर्वासुदेवश्च निषीदतुररिंदमौ ॥

निषीदतुरिति निषेदतुरित्यर्थे आर्षम् । नीटी.

[2]मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ ।
निषीदतुर्महात्मानौ श्लक्ष्णयोर्मणिपीठयोः ॥

[3]दान्ते शय्यासने शुभ्रे जाम्बूनदविभूषिते ।
पृथाऽपि सहदेवेन सहाऽऽस्ते नकुलेन च ॥

दान्ते गजदन्तमये । नीटी.

[4]सुधर्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः ।
निषेदुर्ज्वलनाकारेष्वासनेषु पृथक्पृथक् ॥

सुधर्मा दुर्योधनपुरोहितः । नीटी.

[5]युयुत्सुः संजयश्चैव गान्धारी च यशस्विनी ।
धृतराष्ट्रो यतो राजा ततः सर्वे उपाविशन् ॥

[6]तत्रोपविष्टो धर्मात्मा श्वेताः सुमनसोऽस्पृशत् ।
स्वस्तिकानक्षतान्भूमिं सुवर्णं रजतं मणीन् ॥

स्वस्तिकान् सर्वतोभद्राद्यङ्कितानि देवतापीठानि ।
नीटी.

[7]ततः प्रकृतयः सर्वाः पुरस्कृत्य पुरोहितम् ।
ददृशुर्धर्मराजानमादाय बहु मङ्गलम् ॥
पृथिवीं च सुवर्णं च रत्नानि विविधानि च ।
आभिषेचनिकं भाण्डं सर्वसंभारसंभृतम् ॥

(१) भा. १२।४०।२ ; भामु. १२।४०।२ द्वितीयचरणे (प्रदीप्ते काञ्चने शुभे).

(२) भा. १२।४०।३ ; भामु. १२।४०।३.

(३) भा. १२।४०।४ ; भामु. १२।४०।४ शय्या (सिंहा).

(४) भा. १२।४०।५ ; भामु. १२।४०।५.

(५) भा. १२।४०।६ ; भामु. १२।४०।६ सर्वं उपा (सर्वे समा).

(६) भा. १२।४०।७ ; भामु. १२।४०।७ मणीन् (मणिम्).

(७) भा. १२।४०।८–९ ; भामु. १२।४०।८–९.

भाण्डम् उपकरणम् । नीटी.

[1]काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः ।
पूर्णकुम्भाः सुमनसो लाजा बर्हींषि गोरसाः ॥

औदुम्बराः ताम्रमयाः । नीटी.

[2]शमीपलाशपुंनागाः समिधो मधुसर्पिषी ।
स्रुव औदुम्बरः शङ्खास्तथा हेमविभूषिताः ॥

उदुम्बरकाष्ठमयः स्रुवः । नीटी.

[3]दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्यः पुरोहितः ।
प्रागुदक्प्रवणां वेदीं लक्षणेनोपलिप्य ह ॥

[4]व्याघ्रचर्मोत्तरे श्लक्ष्णे सर्वतोभद्र आसने ।
दृढपादप्रतिष्ठाने हुताशनसमत्विषि ॥

[5]उपवेश्य महात्मानं कृष्णां च द्रुपदात्मजाम् ।
जुहाव पावकं धीमान् विधिमन्त्रपुरस्कृतम् ॥

[6]तत उत्थाय दाशार्हः शङ्खमादाय पूजितम् ॥

[7]अभ्यषिञ्चत्पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरम् ।
धृतराष्ट्रश्च राजर्षिः सर्वाः प्रकृतयस्तथा ॥

(१) भा. १२।४०।१० ; भामु. १२।४०।१० रसाः (रसम्) ; राकौ. ३३३ काञ्चनौ (काञ्चनो) बर्हींषि गोरसाः (बर्हिषि गोरसम्).

(२) भा. १२।४०।११ ; भामु. १२।४०।११ पलाशपुंनागाः स (पिप्पलपालाशस) शङ्खा (शङ्ख) षिताः (षितः) ; राकौ. ३३४ सर्पिषी (सर्पिषा) शङ्खा (शाख) शेषं भामुवत्.

(३) भा. १२।४०।१२ ; भामु. १२।४०।१२ वणां (वणे) लिप्य ह (लिख्य च) ; राकौ. ३३४ वणां वेदीं (वणे वेदी) लिप्य ह (लक्षितः).

(४) भा. १२।४०।१३ ; भामु. १२।४०।१३ श्लक्ष्णे (शुक्ले) ; राकौ. ३३४ भामुवत्.

(५) भा. १२।४०।१४ ; भामु. १२।४०।१४ ; राकौ. ३३४ स्कृतम् (स्कृताम्).

(६) भामु. १२।४०।१५ ; राकौ. ३३४.

(७) भा. १२।४०।१५ ; भामु. १२।४०।१५–१६ ; राकौ. ३३४ पू.

[1]अनुज्ञातोऽथ कृष्णेन भ्रातृभिः सह पाण्डवः।
पाञ्चजन्याभिषिक्तश्च राजाऽमृतमुखोऽभवत् ॥

अमृतमुखः अत्यन्तं दर्शनीयः। नीटी.

[2]ततोऽनुवादयामासुः पणवानकदुन्दुभीः।
धर्मराजोऽपि तत्सर्वं प्रतिजग्राह धर्मतः ॥

[3]पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः।
ततो निष्कसहस्रेण ब्राह्मणान्स्वस्ति वाचयत्।
वेदाध्ययनसंपन्नाञ्शीलवृत्तसमन्वितान् ॥

[4]ते प्रीता ब्राह्मणा राजन्स्वस्त्यूचुर्जयमेव च।
हंसा इव च नर्दन्तः प्रशशंसुर्युधिष्ठिरम् ॥

युधिष्ठिर महाबाहो दिष्ट्या जयसि पाण्डव।
दिष्ट्या स्वधर्मं प्राप्तोऽसि विक्रमेण महाद्युते ॥

दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः।
त्वं चापि कुशली राजन् माद्रीपुत्रौ च पाण्डवौ ॥

[5]मुक्ता वीरक्षयादस्मात्सङ्ग्रामान्निहतद्विषः।
क्षिप्रमुत्तरकालानि कुरु कार्याणि पाण्डव ॥

[6]ततः प्रत्यर्चितः सद्भिर्धर्मराजो युधिष्ठिरः।
प्रतिपेदे महद्राज्यं सुहृद्भिः सह भारत ॥

---

(१) भामु. १२।४०।१६–१७.

(२) भा. १२।४०।१६ ; भामु. १२।४०।१७–१८ दुन्दुभीः (दुन्दुभीन्).

(३) भा. १२।४०।१७ ; भामु. १२।४०।१८–१९ चयत् (चयन्) ञ्शीलवृत्त (न्धृतिशील).

(४) भा. १२।४०।१८–२० ; भामु. १२।४०।२०–२२.

(५) भा. १२।४०।२१ ; भामु. १२।४०।२३ (मुक्ता वीरक्षयात्तस्मात्सङ्ग्रामाद्विजितद्विषः । क्षिप्रमुत्तरकार्याणि कुरु सर्वाणि भारत ।।).

(६) भा. १२।४०।२२ ; भामु. १२।४०।२४.



## वाल्मीकिरामायणम्

### रामस्य यौवराज्याभिषेकः

[1]तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः।
प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥

[2]अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥

[3]इति प्रत्यर्च्य तान्राजा ब्राह्मणानिदमब्रवीत्।
वसिष्ठं वामदेवं च तेषामेवोपशृण्वताम् ॥

[4]चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः।
यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥

[5]राज्ञस्तूपरते वाक्ये जनघोषो महानभूत्।
शनैस्तस्मिन्प्रशान्ते च जनघोषे जनाधिपः।
वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत् ॥

[6]अभिषेकाय रामस्य यत्कर्म सपरिच्छदम्।
तदद्य भगवन्सर्वमाज्ञापयितुमर्हसि ॥

---

(१) वारा. २।५।१ (तेषामञ्जलिमालास्ताः प्रतिगृह्य समन्ततः । हृष्टो दशरथो राजा प्रोवाचेदं वचस्तदा ।। ); वाराकु. २।३।१.

(२) वारा. २।५।२ (धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिः प्रियवादिभिः । यन्मे ज्येष्ठं प्रियं पुत्रं युवराजमिहेच्छथ ।। ); वाराकु. २।३।२.

(३) वारा. २।५।३ पूर्वार्धे (इति राजाऽनुभाष्यैतानिदं वचनमब्रवीत् । ); वाराकु. २।३।३.

(४) वारा. २।५।४ ; वाराकु. २।३।४.

(५) वाराकु. २।३।५ ; राक. १३–१४ च (तु) जना (नरा) तृतीयार्धे (प्रणम्य गुरुमासीनमित्युवाच पुरोहितम् ।। ) प्रथमार्धं नास्ति ; राप्र. ४६ राकवत् ; राकौ. ३३०.

(६) वारा. २।५।५ (आभिषेचनिकं द्रव्यं यत्किंचिज्ज्ञापयन्तु माम् । यन्मया चोपहर्तव्यं रामराज्याभिषत्तये ।। ); वाराकु. २।३।६ ; राक. १४ तदद्य (तदस्य) ; राप्र. ४६ राकवत् ; राकौ. ३३० राकवत्.

[1]तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः।
आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् ॥

युक्तान् नियोगिपुरुषान्। * राक. १४

[2]सुवर्णादीनि रत्नानि बलीन् सर्वौषधीरपि।
शुक्लमाल्यांश्च लाजांश्च पृथक्च मधुसर्पिषी ॥
[3]अहतानि च वासांसि रथं सर्वायुधान्यपि।
चतुरङ्गबलं चैव गजं च शुभलक्षणम् ॥
[4]चामरव्यजने श्वेते ध्वजं छत्रं च पाण्डुरम्।
शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम् ॥
[5]हिरण्यशृङ्गमृषभं समग्रं व्याघ्रचर्म च।
उपस्थापयत प्रातरग्न्यगारं महीपतेः ॥
यच्चान्यत्किंचिदेष्टव्यं तत्सर्वमुपकल्प्यताम् ॥
[6]अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च।
चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः ॥

* राप्र., राकौ. राकवत्।

(१) वाराकु. २।३।७ ; राक. १४ ; राप्र. ४६ ; राकौ. ३३०.

(२) वाराकु. २।३।८ ; राक. १४ बलीन् ( मणीन् ) शुक्लमाल्यांश्च ( शुक्लं च माल्यं ) ; राप्र. ४६ राकवत् ; राकौ. ३३० बलीन् (मणीन्) शुक्लमाल्यांश्च (शुक्तं च माल्य).

(३) वाराकु. २।३।९ ; राक. १४ धान्यपि ( धानि च ) तृतीयचरणे ( सितवर्णं च तुरगं ) ; राप्र. ४६ राकवत् ; राकौ. ३३०–३३१ राकवत्.

(४) वाराकु. २।३।१० ; राक. १४ श्वेते ( चोभे ) शातकु ( शातकौ ) ; राप्र. ४६ श्वेते ( चोभे ) ; राकौ. ३३१ राप्रवत्.

(५) वाराकु. २।३।११–१२ ; राक. १४ शृङ्गमृ ( शृङ्गं वृ ) गारं ( गारे ) तत्सर्वमुपकल्प्यताम् ( यच्च किंचिन्मनोनुगम् ) द्वितीयतृतीयार्धे व्यत्यासपठिते ; राप्र. ४७ उपस्था ( उपास्था ) शेषं राकवत् ; राकौ. ३३१ गारं ( गारे ) शेषं राकवत्.

(६) वाराकु. २।३।१३ ; राक. १४ उत्तरार्धे ( चन्दनैः स्रग्भिरर्च्यन्तां सुमनोदामभिस्तथा ॥ ) ; राप्र. ४७ राकवत् ; राकौ. ३३१ राकवत्.

[1]प्रशस्तमन्नं गुणवद्दधि क्षीरोपसेचनम्।
द्विजानां शतसाहस्रे यत्प्रकाममलं भवेत् ॥

अन्नमिति शेषः। राकौ. ३३१

[2]सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम्।
घृतं दधि च लाजाश्च दक्षिणाश्चापि पुष्कलाः ॥

अत्र ब्राह्मणेभ्यो घृतदधिलाजदानं पुण्यवाचनं चेति विशेषः। ब्राह्मणभोजनमप्यत्रैव 'ब्राह्मणाश्च निमन्त्र्यन्ताम्' इति। रार. ७५

[3]सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम्।
ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च।
आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम् ॥
[4]सर्वे च तालावचरा गणिकाश्च स्वलंकृताः।
कक्ष्यां द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनः ॥

(१) वाराकु. २।३।१४ ; राक. १४ ( प्रशस्तवस्तुगुणवद्धिक्षीरोपसेचनम्। द्विजानां शतसाहस्रं सत्प्रकारफलं लभेत् ॥ ) ; राप्र. ४७ मन्नं ( वस्तु ) धि क्षीरो ( धिक्षीरो ) साहस्रे ( साहस्रं ) ; राकौ. ३३१ ( प्रशस्तं वस्तुगुणवद्धिक्षीरोपसेचनम्। द्विजानां शतसाहस्रं सप्रकारं फलं लभेत् ॥ ).

(२) वाराकु. २।३।१५ ; राक. १५ ( सिद्धमन्त्राद्यसंभारः प्रत्यूषस्येव कल्प्यताम् ॥ ) एतावदेव ; रार. ७५ दधि च लाजाश्च (च दधिलाजांश्च) ; राप्र. ४७ (सिद्धमन्त्राद्यसंभारं प्रत्यूषस्येव कल्प्यताम् ॥ ) एतावदेव ; राकौ. ३३१ ( सिद्धमन्नाद्यसंभारः प्रत्यूषेषु च कल्प्यताम् ॥ ) एतावदेव.

(३) वाराकु. २।३।१६ ; राक. १५ आबध्यन्तां (आज्ञाप्यन्तां) ; रार. ७५ श्वो (तु) स्वस्ति ( पुण्य ) आद्यचरणत्रयमात्रम् ; राप्र. ४७ ; राकौ. ३३१ आबध्य ( आलम्ब्य ).

(४) वाराकु. २।३।१७ ; राक. १५ तालावचरा (नागराश्चैव) वेश्मनः ( वेश्मनि ) ; राप्र. ४७ तिष्ठन्तु ( तिष्ठेयुः ) शेषं राकवत् ; राकौ. ३३१ कक्ष्यां ( कक्षां ) शेषं राकवत्.

कक्ष्यां प्रकोष्ठम् । * राक. १५

[1]देवायतनचैत्येषु सान्नभक्षाः सदक्षिणाः ।
उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक्पृथक् ॥
[2]दीर्घासिबद्धा योधाश्च संनद्धा मृष्टवाससः ।
महाराजाङ्कणं सर्वे प्रविशन्तु महोदयम् ॥
[3]एवं व्यादिश्य विप्रौ तौ क्रियास्तत्र सुनिष्ठितौ ।
चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च ॥
[4]कृतमित्येव चाब्रूतामभिगम्य जगत्पतिम् ।
यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजर्षभौ ॥
[5]गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः ।
मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः स निश्चयम् ॥
[6]श्व एव पुष्यो भविता सुतो मे श्वोऽभिषिच्यताम् ।
रामो राजीवताम्राक्षो यौवराज्य इति प्रभुः ॥

* राप्र., राकौ. राकवत्.

(१) वाराकु. २।३।१८ ; राक. १५ सान्नभक्षाः (नानाभक्ष्याः) स्युर्माल्ययोग्याः (च माल्ययोगाः) ; राप्र. ४७ सान्नभक्षाः (जलभक्ष्याः) शेषं राकवत् ; राकौ. ३३१ राकवत्.

(२) वाराकु. २।३।१९ ; राक. १५ आद्यचरणे (बद्धदीर्घासयो योधाः) तृतीयचरणे (महाराजस्य भवनं) ; राप्र. ४७ राकवत् ; राकौ. ३३२ आद्यचरणे (बद्धदीर्घासयो योधाः) शेषं राकवत्.

(३) वारा. २।५।६ (तौ तथेति प्रतिज्ञाय नृपतेर्वचनात्तदा । लेखयांचक्रतुर्द्रव्यं भूपस्यैवोपशृण्वतः ॥) ; वाराकु. २।३।२०.

(४) वारा. २।५।७ जगत्पतिम् (नराधिपम्) उत्तरार्धे (सुप्रीतमनसौ प्रीतं हर्षयन्तौ पुनर्नृपम् ॥) ; वाराकु. २।३।२१ ; राक. १५ (एवमाज्ञाप्य तत्सर्वं कृतमित्यभ्यवेदयत् । सुप्रीतमनसे राज्ञे वसिष्ठो हर्षयन् पुनः ॥) ; राप्र. ४७ राकवत् ; राकौ. ३३२ (एवमाज्ञाप्य तत्सर्वं कृतमित्येव वेदयेत् । सप्रीतमनसे राज्ञे वशिष्ठो हर्षयन् पुनः ॥).

(५) वारा. २।६।१ ; वाराकु. २।४।१.

(६) वारा. २।६।२ ; वाराकु. २।४।२ द्वितीयचरणे (श्वोऽभिषेच्यस्तु मे सुतः).

[1]अद्य चन्द्रोऽभ्युपगतः पुष्यात्पूर्वं पुनर्वसुम् ।
श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥
[2]तत्र त्वमभिषिच्यस्व मनस्त्वरयतीव माम् ।
श्वस्त्वाऽहमभिषेक्ष्यामि यौवराज्ये परंतप ॥
[3]तस्मात्त्वयाऽद्य व्रतिना निशेयं नियतात्मना ।
सह वध्वोपवस्तव्या दर्भास्तरणशायिना ॥
[4]गते पुरोहिते रामः स्नातः प्रयतमानसः ।
सह पत्न्या विवेशाथ लक्ष्म्या नारायणो यथा ॥
[5]प्रगृह्य शिरसा पात्रं हविषो विधिवत्तदा ।
महते दैवतायाऽऽज्यं जुहाव ज्वलितेऽनले ॥
[6]शेषं च हविषस्तस्य प्राश्याऽऽशास्याऽऽत्मनो हितम् ।
ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥

(१) वारा. २।६।१९–२० ; वाराकु. २।४।२१ वंसुम् (वंसू).

(२) वारा. २।६।२०–२१ ; वाराकु. २।४।२२ आद्यचरणे (ततः पुष्येऽभिषिञ्चस्व).

(३) वारा. २।६।२१–२२ ; वाराकु. २।४।२३ द्य व्रतिना (द्यप्रभृति) दर्भास्तरण (दर्भप्रस्तर).

(४) वारा. २।८।१ ; वाराकु. २।६।१ प्रयत (नियत) उत्तरार्धे (सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥) ; राक. १७ स्नातः (ततो) शेषं वाराकुवत् ; राप्र. ४९ राकवत् ; राकौ. ३३३ राकवत्.

(५) वारा. २।८।२ ; वाराकु. २।६।२ पात्रं (पात्रीं) ; राक. १७ हविषो (हविर्ष्यं) त्तदा (त्ततः) ; राप्र. ४९ त्तदा (त्ततः) ; राकौ. ३३३ हविषो (हवींषि) त्तदा (त्ततः).

(६) वारा. २।८।३ ; वाराकु. २।६।३ नो हितम् (नः प्रियम्) ; राक. १७ नो हितम् (निश्चयम्) स्वास्तीर्णे (स्थण्डिले) ; राप्र. ४९ राकवत् ; राकौ. ३३३ संस्तरे (संस्थिते) शेषं राकवत्.

¹वाग्यतः सह वैदेह्या भूत्वा नियतमैथुनः ।
श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥

²एकयामावशिष्टायां रात्र्यां च प्रतिबुध्य सः ।
अलंकारविधिं कृत्स्नं कारयामास वेश्मनः ॥

³ततः शृण्वन् शुभा वाचः सूतमागधवन्दिनाम् ।
पूर्वां संध्यामुपासीनो जजाप यतमानसः ॥

⁴तुष्टाव प्रणतश्चैव प्रणम्य मधुसूदनम् ।
विमलक्षौमसंवीतो वाचयामास च द्विजान् ॥

⁵तेषां पुण्याहघोषोऽथ गम्भीरमधुरस्तदा ।
अयोध्यां पूरयामास तूर्यघोषविमिश्रितः ॥

⁶कृतोपवासं च तदा वैदेह्या सह राघवम् ।
अयोध्यानिलयः श्रुत्वा सर्वः प्रमुमुदे जनः ॥

⁷ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् ।
प्रभातां रजनीं दृष्ट्वा चक्रे शोभां परां पुनः ॥

(१) वारा. २।८।४ ; वाराकु. २।६।४ मैथुनः (मानसः); राक. १७ नियतमैथुनः (च नियतात्मवान्) ; राप्र. ४९ राकवत् ; राकौ. ३३३ राकवत्.

(२) वारा. २।८।५ ; वाराकु. २।६।५ च प्रति (प्रतिवि).

(३) वारा. २।८।६ ; वाराकु. २।६।६ ततः (तत्र) शुभा (सुखा).

(४) वारा. २।८।७ ; वाराकु. २।६।७ प्रणम्य (शिरसा).

(५) वारा. २।८।८ ; वाराकु. २।६।८ घोषविमिश्रितः (घोषानुनादितः).

(६) वारा. २।८।९ ; वाराकु. २।६।९ च (तु) मुदे (दितो) ; राक. १७ (कृतोपवासं रामं तु वैदेह्या सहितं तदा । सदर्भायां क्षितौ सुप्तं शुश्राव विधिवज्जनः ॥) ; राप्र. ४९ राकवत् ; राकौ. ३३३ तृतीयचरणे (सभार्यं तु क्षितौ सुप्तं) शेषं राकवत्.

(७) वारा. २।८।१० ; वाराकु. २।६।१० शोभां परां पुनः (शोभयितुं पुरीम्).

¹सिताभ्रशिखराग्रेषु देवतायतनेषु च ।
चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च ॥

²नानापण्यसमृद्धेषु वणिजामापणेषु च ।
कुटुम्बिनां समृद्धानां श्रीमत्सु भवनेषु च ॥

³सभासु च सुरम्यासु सभ्यानामालयेषु च ।
ध्वजाः समुच्छ्रिताश्चित्राः पताकाश्चाभवंस्तदा ॥

⁴नटनर्तकसंघानां गायकानां च गायताम् ।
मनःकर्णसुखा वाचः शुश्रुवुश्च समन्ततः ॥

⁵रामाभिषवसंयुक्ताः कथाश्चक्रुर्मिथो जनाः ।
रामाभिषेके संप्राप्ते चत्वरेषु गृहेषु च ॥

⁶बालाश्चापि क्रीडमाना गृहद्वारेषु सर्वशः ।
रामाभिषेकसंयुक्ताश्चक्रिरे ते मिथः कथाः ॥

⁷कृतपुष्पोपहारश्च धूपगन्धाधिवासितः ।
राजमार्गः कृतः श्रीमान् पौरै रामाभिषेचने ॥

⁸प्रकाशगमनार्थं च निशागमनशङ्कया ।
दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः ॥

(१) वारा. २।८।११ ; वाराकु. २।६।११ ग्रेषु (मेषु).

(२) वारा. २।८।१२ ; वाराकु. २।६।१२ द्धानां (द्धेषु).

(३) वारा. २।८।१३ ; वाराकु. २।६।१३ पूर्वार्धे (सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च ।).

(४) वारा. २।८।१४ ; वाराकु. २।६।१४ चतुर्थचरणे (शुश्रुवुश्च ततस्ततः).

(५) वारा. २।८।१५ ; वाराकु. २।६।१५ भिषव-संयुक्ताः (भिषेकयुक्ताश्च).

(६) वारा. २।८।१६ ; वाराकु. २।६।१६ श्चापि (अपि) सर्व (संघ) श्चक्रिरे ते (श्चक्रुरेवं).

(७) वारा. २।८।१७ ; वाराकु. २।६।१७.

(८) वारा. २।८।१८ ; वाराकु. २।६।१८ गमना (करणा).

[1]अलंकारं पुरस्यैवं कृत्वा तत्पुरवासिनः ।
आकाङ्क्षन्तो हि रामस्य यौवराज्याभिषेचनम् ॥

[2]समेत्य संघशः सर्वे चत्वरेषु सभासु च ।
कथयन्तो मिथस्तत्र प्रशशंसुर्नराधिपम् ॥

[3]ततस्ते मन्त्रिणः सूतं सुमन्त्रं सपुरोहिताः ।
ऊचुरभ्यागतानस्मान् राज्ञ आवेदयस्व ह ॥

(१) वारा. २।८।१९ ; वाराकु. २।६।१९ क्षन्तो हि (क्षमाणा).

(२) वारा. २।८।२० ; वाराकु. २।६।२० नेरा (जंना).

(३) वारा. २।१६।१ ; वाराकु. २।१५।१–१५ पञ्चदशानां वाराकुश्लोकानां प्रतिश्लोकं पाठनिर्देशस्य दुष्करत्वात् सर्वे ते श्लोका यथापाठमत्रैव संकलिताः– (ते तु तां रजनीमुष्य ब्राह्मणा वेदपारगाः । उपतस्थुरुपस्थानं सहराजपुरोहिताः ॥ अमात्या बलमुख्याश्च मुख्या ये निगमस्य च । राघवस्याभिषेकार्थे प्रीयमाणास्तु संगताः ॥ उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि । लग्ने कर्कटके प्राप्ते जन्म रामस्य च स्थिते । अभिषेकाय रामस्य द्विजेन्द्रैरुपकल्पितम् ॥ काञ्चना जलकुम्भाश्च भद्रपीठं स्वलंकृतम् । रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा ॥ गङ्गायमुनयोः पुण्यात्संगमादाहृतं जलम् । याश्चान्याः सरितः पुण्या ह्रदाः कूपाः सरांसि च ॥ प्राग्वाहाश्चोर्ध्ववाहाश्च तिर्यग्वाहाः समाहिताः । ताभ्यश्चैवाऽऽहृतं तोयं समुद्रेभ्यश्च सर्वशः ॥ [अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः । ] सलाजाः क्षीरिभिश्छन्ना घटाः काञ्चनराजताः । पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा ॥ क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः । वेश्याश्चैव शुभाचाराः सर्वाभरणभूषिताः । [लीलावत्यः सुभ्रुवश्च लोलनेत्राश्च सर्वशः ॥ ] चन्द्रांशुविकचप्रख्यं काञ्चनं रत्नभूषितम् । सज्जं तिष्ठति रामस्य बालव्यजनमुत्तमम् ॥ चन्द्रमण्डलसंकाशमातपत्रं च पाण्डुरम् । सज्जं द्युतिकरं श्रीमदभिषेकपुरस्कृतम् ॥ पाण्डुरश्च वृषः सज्जः पाण्डुरोऽश्वश्च संस्थितः । प्रस्रुतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते ॥ अष्टौ च कन्या माङ्गल्याः सर्वाभरणभूषिताः । वादित्राणि च सर्वाणि वन्दिनश्च तथाऽपरे ॥ इक्ष्वाकूणां यथा राज्ये संभ्रियेताभिषेचनम् । तथाजातीयमादाय राजपुत्राभिषेचनम् ॥ ते राजवचनात्तत्र समवेता महीपतिम् । अपश्यन्तोऽब्रुवन्को नु राज्ञो नः प्रतिवेदयेत् ॥ न पश्यामश्च राजानमुदितश्च दिवाकरः । यौवराज्याभिषेकश्च सज्जो रामस्य धीमतः ॥ ).

[1]पश्यामो न च राजानमुदितश्च दिवाकरः ।
आभिषेचनिकं सर्वं द्रव्यमेवोपकल्पितम् ॥

[2]औदुम्बरं भद्रपीठं शातकौम्भविभूषितम् ।
गङ्गायमुनयोश्चैव संगमादाहृतं पयः ॥

[3]याश्चान्याः सरितः पुण्यास्ताभ्यश्च जलमाहृतम् ।
समुद्रेभ्यश्च सर्वेभ्यः सलिलं समुपाहृतम् ॥

[4]सर्वबीजानि गन्धश्च रत्नानि विविधानि च ।
वाहनं नरसंयुक्तं दर्भाः सुमनसः प्रियाः ॥

[5]अहतानि च वासांसि भृङ्गारं च हिरण्मयम् ।
क्षीरिवृक्षप्रवालाश्च पद्मोत्पलविभूषिताः ॥

[6]पूर्णकुम्भाः स्वलंकृत्य काञ्चना उपकल्पिताः ।
मञ्जूकारोचना चैव लाजा दधि घृतं मधु ॥

(१) वारा. २।१६।२ ; राक. १५ सर्वं द्रव्य (द्रव्यं सर्वं) उत्त. ; राप्र. ४७ राकवत् ; राकौ. ३३२ (अभिषेचनकं द्रव्यं सर्वमेवोपकल्पितम् ॥ ) उत्त.

(२) वारा. २।१६।३ ; राक. १६ पयः (जलम्) उत्त. ; राप्र. ४७ राकवत् ; राकौ. ३३२ राकवत्.

(३) वारा. २।१६।४ ; राक. १६ पू. ; राप्र. ४८ पू. ; राकौ. ३३२ पू.

(४) वारा. २।१६।५ ; राक. १६ गन्ध (गन्धा) प्रियाः (पयः) ; राप्र. ४८ राकवत् ; राकौ. ३३२ राकवत्.

(५) वारा. २।१६।६ ; राकौ. १६ उत्तरार्धे (क्षीरवृक्षप्रवालैश्च पश्चात्फलविमिश्रितैः ॥ ) ; राप्र. ४८ राकवत् ; राकौ. ३३२ अह (आह) भृङ्गारं (शृङ्गाभ्यां) शेषं राकवत्.

(६) वारा. २।१६।७ ; राक. १६ मञ्जूका (रसोगो) ; राप्र. ४८ स्वलंकृत्य (सुलक्षण्याः) शेषं राकवत् ; राकौ. ३३२ राकवत्.

¹तथैव पुण्यतीर्थेभ्यो मृदापो मङ्गलानि च ।
चन्द्रांशुविमलं चाम्बु मणिदण्डे स्वलंकृते ॥

जङ्गमानि पुण्यपक्षिणः । राकौ. ३३२

²चामरव्यजने श्रीमद्रामार्थमुपकल्पिते ।
पूर्णेन्दुमण्डलाभं च श्रीमन्माल्यविभूषितम् ॥
³रामस्य यौवराज्यार्थमातपत्रं प्रकल्पितम् ।
मत्तो गजवरश्चैव रथश्चैव प्रतीक्षते ॥

औपवाह्यः राजवाह्यः । * राक. १६

⁴श्वेतस्तुरंगमश्चैव रामार्थमुपकल्पितः ।
अष्टौ कन्याश्च मङ्गल्याः सर्वाभरणभूषिताः ॥
रूपयौवनसंपन्ना गणिकाश्च स्वलंकृताः ।
⁵श्वेतपुष्पाणि वेणुश्च निस्त्रिंशो धनुरेव च ॥
⁶हेमदाम्नाऽभ्यलंकृत्य ककुद्मान् पाण्डुरो वृषः ।
सिंहासनं व्याघ्रचर्म संसिद्धश्च हुताशनः ॥
⁷वादित्राणि च सर्वाणि सूतमागधवन्दिनः ।
आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ॥

* राप्र., राकौ. राकवत् ।

(१) वारा. २।१६।८ ; राक. १६ मङ्गला (जङ्गमा) विमलं चाम्बु म (विमले चारुम) ; राप्र. ४८ राकवत् ; राकौ. ३३२ राकवत्.

(२) वारा. २।१६।९ ; राक. १६ ; राप्र. ४८ ; राकौ. ३३२.

(३) वारा. २।१६।१० ; राक. १६ रथश्चैव (औपवाह्यः) ; राप्र. ४८ राकवत् ; राकौ. ३३२ राकवत्.

(४) वारा. २।१६।११ ; राक. १६ आद्यचरणे (श्वेतश्च तुरगः श्रेष्ठो) ; राप्र. ४८ श्वेतस्तुरंगम (श्वेतश्च तुरग) ; राकौ. ३३२ सर्वा (दीर्घा) शेषं राप्रवत्.

(५) वारा. २।१६।१२ ; राक. १६ वेणु (धेनु) राप्र. ४८ राकवत् ; राकौ. ३३२–३३३ राकवत्.

(६) वारा. २।१६।१३ ; राक. १६–१७ म्नाऽभ्य (म्ना स्व) संसिद्ध (समिद्ध) ; राप्र. ४८ ककुद्मान् (ककुद्मी) शेषं राकवत् ; राकौ. ३३३ राप्रवत्.

(७) वारा. २।१६।१४ ; राक. १७ ; राप्र. ४८ आचार्या (अमात्या) ; राकौ. ३३३ राप्रवत्.

¹पौरजानपदश्रेण्यो नैगमानां गणैः सह ।
एते चान्ये च बहवः प्रीयमाणाः प्रियंवचः ॥

नैगमाः रत्नादीनां वाणिज्यकर्तारः । राप्र. ४८

²इक्ष्वाकुराजाभ्युदये यच्चान्यदपि किंचन ।
तत्सर्वं कृतमस्माभिः सूत राज्ञे निवेदय ॥

सुग्रीवस्य अभिषेकः

³प्रविश्य त्वभिनिष्क्रान्तं सुग्रीवं प्लवगेश्वराः ।
अभ्यषिञ्चन् सुबलिनं सहस्राक्षमिवामराः ॥
⁴तस्य पाण्डुरमाजह्रुश्छत्रं हेमविभूषितम् ।
शुक्ले च वालव्यजने हेमदण्डे महाधने ॥
⁵दिव्यानि मणिरत्नानि सर्वाश्चैवौषधीस्तथा ।
सक्षीराणां च वृक्षाणां प्ररोहान् कुसुमानि च ॥
⁶शुक्लानि चैव वस्त्राणि श्वेतं चैवानुलेपनम् ॥
⁷सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च ।
चन्दनानि च मुख्यानि गन्धांश्चैव नवान् बहून् ॥

(१) वारा. २।१६।१५ ; राक. १७ पदश्रेण्यो (पदाः श्रेणी) वचः (वदाः) ; राप्र. ४८ पदश्रेण्यो (पदाः श्रेणीर्) च (ऽपि) वचः (वदाः) ; राकौ. ३३३ पदश्रेण्यो नै (पदा श्रेणीनै) वचः (वदाः).

(२) वारा. २।१६।१६.

(३) वारा. ४।१९।२२ ; वाराकु. ४।२६।२२ श्वराः (श्वरम्) षिञ्चन् सुबलिनं (षिञ्चन्त सुहृदः).

(४) वारा. ४।१९।२३ ; वाराकु. ४।२६।२३ विभूषि (परिष्कृ) महाधने (यशस्करे).

(५) वारा. ४।१९।२४ प्ररोहान् (प्ररोहाः) ; वाराकु. ४।२६।२४ पूर्वार्धे (तथा सर्वाणि रत्नानि सर्वबीजौषधैरपि ।).

(६) वाराकु. ४।२६।२५.

(७) वारा. ४।१९।२५ ; वाराकु. ४।२६।२५–२६ मुख्या (दिव्या) श्चैव नवान् (श्च विविधान्).

[1]अक्षतान् लाजरूपांश्च प्रियङ्गुमधुसर्षपान् ।
दधि चर्म च वैयाघ्रं वाराहे चाप्युपानहौ ॥
[2]समालम्भनमादाय नार्यश्चाऽऽयतलोचनाः ।
आजग्मुस्तत्र सहिता वराः कन्याश्च षोडश ॥
[3]ततस्ते वानरश्रेष्ठा यथाकालं यथाविधि ।
रत्नैर्वस्त्रैश्च माल्यैश्च तर्पयित्वा द्विजर्षभान् ॥
[4]ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम् ।
मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो द्विजाः ॥
[5]ततो हेमपरिष्कारं दिव्यास्तरणसंश्रितम् ।
प्रासादशिखरे रम्ये चित्रमाल्योपशोभिते ।
प्राङ्मुखं विविधैर्मन्त्रैः स्थापयित्वा वरासनम् ॥
[6]नदीनदेभ्यः सर्वेभ्यस्तीर्थेभ्यश्चैव सर्वशः ।
आहृत्याम्भः समुद्रेभ्यः सर्वे ते वानरर्षभाः ॥
[7]अपः कनककुम्भेषु निधाय विमलाः शुभाः ॥
[8]शुभैर्ऋषभशृङ्गैश्च कलशैश्चापि काञ्चनैः ।
औषधैर्विविधैश्चैव कुसुमैश्च तथाविधैः ॥

(१) वारा. ४।१९।२६ ; वाराकु. ४।२६।२६ पूर्वार्धे (अक्षतं जातरूपं च प्रियङ्गुमधुसर्पिषी ।) वाराहे (वाराही).

(२) वारा. ४।१९।२७ ; वाराकु. ४।२६।२७ द्वितीयचरणे (रोचनां समनःशिलाम्) सहि (मुदि) न्याश्च (न्यास्तु).

(३) वारा. ४।१९।२८ ; वाराकु. ४।२६।२८ श्रेष्ठा (श्रेष्ठं) माल्यैश्च तर्प (भक्षैश्च तोष).

(४) वारा. ४।१९।२९ ; वाराकु. ४।२६।२९ द्विजाः (जनाः).

(५) वारा. ४।१९।३० ; वाराकु. ४।२६।३०-३१ परिष्कारं दिव्या (प्रतिष्ठाने वरा) संश्रितम् (संवृते) सनम् (सने).

(६) वारा. ४।१९।३१ ; वाराकु. ४।२६।३१-३२ पूर्वार्धे (नदीनदेभ्यः संहृत्य तीर्थेभ्यश्च समन्ततः ।) त्याम्भः (त्य च) सर्वे ते (सर्वेभ्यो).

(७) वाराकु. ४।२६।३२.

(८) वारा. ४।१९।३२ ; वाराकु. ४।२६।३३ भैर्ऋ (भैर्वृ) पू.

[1]मङ्गल्यैः पूर्णकुम्भैश्च लाजाभिश्च विभूषितैः ।
कन्याभिश्च प्रशस्ताभिः शातकौम्भैः सुमन्त्रितैः ॥
आभिषेचनिकैर्द्रव्यैः समन्तात् परिवारितैः ।
प्रणदद्भिश्च कपिभिर्मन्त्रवद्भिः समन्ततः ॥
[2]शास्त्रदृष्टेन विधिना महर्षिविहितेन च ।
गजो गवाक्षो गवयः शरभो गन्धमादनः ॥
[3]मैन्दश्च द्विविदश्चोभौ सुषेणो जाम्बवान् नलः ॥
[4]अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना ।
सलिलेन सहस्राक्षं वसवो वासवं यथा ॥

विभीषणस्य अभिषेकः

[5]अब्रवीच्च तदा रामः समीपपरिवर्तिनम् ।
सौमित्रिं सत्यसंपन्नं लक्ष्मणं दीप्ततेजसम् ॥
[6]विभीषणमिमं सौम्य लङ्कायामभिषेचय ।
अनुरक्तं च भक्तं च मम चैवोपकारिणम् ॥
[7]एष मे परमः कामो यदीमं रावणानुजम् ।
लङ्कायां सौम्य पश्येयमभिषिक्तं विभीषणम् ॥
[8]एवमुक्तस्तु सौमित्री राघवेण महात्मना ।
तथेत्युक्त्वा तु संहृष्टः सौवर्णं घटमाददे ॥

(१) वारा. ४।१९।३३-३४.

(२) वारा. ४।१९।३५ ; वाराकु. ४।२६।३३-३४.

(३) वारा. ४।१९।३६ ; वाराकु. ४।२६।३४ श्चोभौ सुषेणो (श्चैव हनुमान्).

(४) वारा. ४।१९।३७ ; वाराकु. ४।२६।३५.

(५) वारा. ६।९३।८ ; आद्यचरणे (अथोवाच स काकुत्स्थः) सत्य (सत्त्व) दीप्ततेजसम् (शुभलक्षणम्) ; वाराकु. ६।११५।८.

(६) वारा. ६।९३।९ मम चैवो (तथा पूर्वो) ; वाराकु. ६।११५।९.

(७) वारा. ६।९३।१० यदीमं (यदहं) ; वाराकु. ६।११५।१०.

(८) वारा. ६।९३।११ तु (स) ; वाराकु. ६।११५।११.

[1]तं घटं वानरेन्द्राणां हस्ते दत्त्वा मनोजवान् ।
आदिदेश महासत्त्वान् समुद्रसलिलानये ॥
इति शीघ्रं ततो गत्वा वानरास्ते महाबलाः ।
आगतास्तज्जलं गृह्य समुद्राद्वानरोत्तमाः ॥
[2]ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने ।
घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ॥
[3]लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ।
विधिना मन्त्रदृष्टेन सुहृद्गणसमावृतम् ।
अभ्यषिञ्चत् स धर्मात्मा शुद्धात्मानं विभीषणम् ॥
[4]अभ्यषिञ्चंस्तदा सर्वे राक्षसा वानरास्तदा ।
प्रहर्षमतुलं गत्वा तुष्टुवू राममेव हि ॥

रामस्य अभिषेकः

[5]तमुवाच महातेजाः सुग्रीवं राघवानुजः ।
अभिषेकाय रामस्य दूतानाज्ञापय स्वयम् ।
प्रभाते पुण्ययोगेन राघवः श्वोऽभिषिच्यताम्॥
[6]ततः स वानरश्रेष्ठः सौवर्णांश्चतुरो घटान् ।
चतुर्णां कपिमुख्यानां ददौ रत्नविभूषितान् ॥
[7]यथा प्रत्यूषसमये चतुर्णां सागराम्भसाम् ।
पूर्णैर्घटैरनूदिते शीघ्रमागम्यतामिति ॥

[1]एवमुक्ता महात्मानो वानराः पर्वतोपमाः ।
उत्पेतुर्गगनं शीघ्रं गरुडा इव वेगिनः ॥
[2]जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋषभश्च महाबाहुश्चत्वारोऽपि वनौकसः ॥
[3]नदीपतिभ्यश्चतुर्भ्यो जलं कुम्भैरुपाहरन् ।
मैन्दप्रभृतयस्तत्र वानरेन्द्रप्रचोदिताः ॥
[4]ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमाहरत् ।
रक्तचन्दनशाखाभिः संवृते काञ्चने घटे ॥
[5]जाम्बवान् पश्चिमात्तोयमाजहार स सागरात् ।
रत्नकुम्भेन महताऽगुरुपल्लवशोभिना ॥
[6]वेगदर्शी व्यतिक्रान्त उत्तरादुदधेर्जलम् ।
शोभितं फुल्लशाखाभिरचिरादानयच्छिवम् ॥
[7]सुषेणोऽङ्गदकेयूरैर्मण्डिते कलशे तथा ।
पानीयमानयत्तत्र समुद्रादितरात्त्वरन् ॥

---

(१) वाराकु. ६।११५।१२–१३.

(२) वारा. ६।९३।१२ घटेन (शुभेन) उत्त.; वाराकु. ६।११५।१४.

(३) वारा. ६।९३।१२ प्रथमार्धमात्रम्; वाराकु. ६।११५।१५.

(४) वारा. ६।९३।१३ पूर्वार्धे (अभिषिच्यमाने तु तदा सर्वे वानरराक्षसाः ।); वाराकु. ६।११५।१६.

(५) वारा. ६।१०९।६३; वाराकु. ६।१३१।४९ तमुवाच (उवाच च) स्वयम् (प्रभो) तृतीयार्धं नास्ति.

(६) वारा. ६।१०९।६४; वाराकु. ६।१३१।५० (सौवर्णान् वानरेन्द्राणां चतुर्णां चतुरो घटान् । ददौ क्षिप्रं स सुग्रीवः सर्वरत्नविभूषितान् ॥).

(७) वारा. ६।१०९।६५; वाराकु. ६।१३१।५१ उत्तरार्धे (पूर्णैर्घटैः प्रतीक्षध्वं तथा कुरुत वानराः ॥).

(१) वारा. ६।१०९।६६; वाराकु. ६।१३१।५२ पर्वतो (वारणो) वेगिनः (शीघ्रगाः).

(२) वारा. ६।१०९।६७; वाराकु. ६।१३१।५३ सुषेणश्च (हनूमांश्च) उत्तरार्धे (ऋषभश्चैव कलशाञ्जलपूर्णानथानयन् ॥).

(३) वारा. ६।१०९।६८; वाराकु. ६।१३१।५४ पूर्वार्धे (नदीशतानां पञ्चानां जलं कुम्भेषु चाऽऽहरन् ।) पू.

(४) वारा. ६।१०९।६९; वाराकु. ६।१३१।५६ चतुर्थचरणे (संवृतं काञ्चनं घटम्).

(५) वारा. ६।१०९।७०; वाराकु. ६।१३१।५७ जाम्बवान् (गवयः) स सागरात् (महार्णवात्) ऽगुरुपल्लवशोभिना (शीतं मारुतविक्रमः).

(६) वारा. ६।१०९।७१; वाराकु. ६।१३१।५८ (उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः । आजहार स धर्मात्माऽनलः सर्वगुणान्वितः ॥).

(७) वारा. ६।१०९।७२; वाराकु. ६।१३१।५५ (पूर्वात् समुद्रात्कलशं जलपूर्णमथानयत् । सुषेणः सत्त्वसंपन्नः सर्वरत्नविभूषितम् ॥).

[1]एवमाभिषेचनिकं शत्रुघ्नः सचिवैर्वृतः ।
पुरोहिताय श्रेष्ठाय गुरवे स न्यवेदयत् ॥
[2]ततः प्रभाते विमले मुहूर्तेऽभिजिति प्रभुः ।
वसिष्ठः पुण्ययोगेन ब्राह्मणैः परिवारितः ॥
[3]रामं रत्नमये पीठे प्राङ्मुखं सह सीतया ।
उपवेश्य महात्मानं महर्षिविदितेन च ॥
[4]शास्त्रदृष्टेन च तदा विधिना विधिवद्विभुः ।
राघवस्याभिषेकार्थं मन्त्रिभ्यः स न्यवेदयत् ॥
[5]वसिष्ठो वामदेवश्च जाबालिः कश्यपस्तथा ।
कात्यायनो भरद्वाजो विजयश्च महायशाः ॥
[6]अभ्यषिञ्चन्नरवरं प्रसन्नेन सुगन्धिना ।
सलिलेन सहस्राक्षं वसवो वासवं यथा ॥
[7]ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा ।
बलमुखैः( ? ख्यैः ) प्रहृष्टैश्च अभिषिक्तः स
राघवः ॥

(१) वारा. ६।१०९।७३ ; वाराकु. ६।१३१।५९ ( ततस्तैर्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम् । अभिषेकाय रामस्य शत्रुघ्नः सचिवैः सह । पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ॥ ).

(२) वारा. ६।१०९।७४ ; वाराकु. ६।१३१।६० ( ततः स प्रयतो वृद्धो वसिष्ठो ब्राह्मणैः सह ॥ ) उत्त.

(३) वारा. ६।१०९।७५ ; वाराकु. ६।१३१।६० द्वितीयचरणे ( सहसीतं न्यवेशयत् ) पू.

(४) वारा. ६।१०९।७६.

(५) वारा. ६।१०९।७७ ; वाराकु. ६।१३१।६१ लिः कश्यपस्त ( लिरथ काश्यपः ) उत्तरार्धे ( कात्यायनः सुयज्ञश्च गौतमो विजयस्तथा ॥ ).

(६) वारा. ६।१०९।७८ ; वाराकु. ६।१३१।६२ वरं ( व्याघ्रं ).

(७) वारा. ६।१०९।७९ ; वाराकु. ६।१३१।६३ उत्तरार्धे ( योधैश्चैवाभ्यषिञ्चंस्ते संप्रहृष्टाः सनैगमैः ॥ ).

[1]सर्वौषधिरसैश्चैव दैवतैर्नभसि स्थितैः ।
चतुर्भिर्लोकपालैश्च समेतैर्भूतभावनैः ।
अभिषिक्तो रराजाथ श्रिया परमया युतः ॥
[2]ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम् ।
अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ॥
तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः ।
सभायां हेमक्लृप्तायां शोभितायां महाजनैः ।
रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः ॥
नानारत्नमये पीठे कल्पयित्वा यथाविधि ।
किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना ।
ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत( ? ज्यत )
राघवः ॥
[3]छत्रं तस्य तु जग्राह शत्रुघ्नः पाण्डुरं शुभम् ।
शुक्लं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥
[4]अपरं चन्द्रसंकाशं वालव्यजनमुत्तमम् ।
हृष्टो रामस्य जग्राह राक्षसेन्द्रो विभीषणः ॥
[5]मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्कराम् ।
राघवाय ददौ वायुर्वासवेन प्रचोदितः ॥
[6]यक्षाध्यक्षः समागम्य मणिरत्नं महाद्युतिम् ।
मुक्ताहारं तु रामाय ददौ शक्रप्रचोदितः ॥

(१) वारा. ६।१०९।८० ; वाराकु. ६।१३१।६४ श्चैव ( र्दिव्यैर् ) चतुर्थचरणे ( सर्वैर्देवैश्च संगतैः ) तृतीयार्धं नास्ति.

(२) वाराकु. ६।१३१।६५–६७.

(३) वारा. ६।१०९।८१ ; वाराकु. ६।१३१।६८ तस्य तु (तु तस्य) शुक्लं च वाल (श्वेतं च बाल).

(४) वारा. ६।१०९।८२ ; वाराकु. ६।१३१।६८ द्वितीयचरणे (राक्षसेन्द्रो विभीषणः) पू.

(५) वारा. ६।१०९।८३ ; वाराकु. ६।१३१।६९ शात (शत).

(६) वारा. ६।१०९।८४ ; वाराकु. ६।१३१।७० पूर्वार्धे (सर्वरत्नसमायुक्तं मणिरत्नविभूषितम् । ) तु रामाय (नरेन्द्राय).

'ऋषिसंघैस्तदाऽऽकाशे देवैश्च समरुद्गणैः ।
स्तूयमानस्य रामस्य शुश्रुवे मधुरो ध्वनिः ।
प्रगीतं चापि गन्धर्वैः प्रनृत्तं चाप्सरोगणैः ॥
'अभिषेके प्रवृत्ते तु तदा रामस्य धीमतः ।
मही सस्यवती चैव रसवन्ति फलानि च ।
गन्धवन्ति च माल्यानि तदा रामाभिषेचने ॥
'ददौ सहस्रमश्वानां धेनूनां च शतं शतम् ।
शतं शतगुणं चैव वृषाणां ब्राह्मणेषु च ॥
'त्रिंशत्कोटीर्हिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः ।
यानाभरणवस्त्राणि शयनान्यासनानि च ।
ब्राह्मणेभ्यो ददौ हृष्टो ग्रामांश्च बहुशो वरान् ॥

## कश्यपः

राजाभिषेककालः

'अथातः संप्रवक्ष्यामि भूपानामभिषेचनम् ।
सौम्यायने क्ष(? ऽक्ष)ते जीवे नास्तगे न च वृद्धके ॥
स्वलग्नराशिगे लग्ने तदंशे वा बलान्विते ।
पट्टबन्धनलग्नेशे तदंशेशे च नास्तगे ॥
सुहृत्त्रिकोणस्वक्षेत्रतुङ्गसंस्था ग्रहा यदि ।
यस्याभिषेके कुर्वन्ति स्थिरां कीर्तिं श्रियं सुखम् ॥

(१) वारा. ६।१०९।८५ ; वाराकु. ६।१३१।७१ (प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥) तृतीयार्धमात्रम्.

(२) वारा. ६।१०९।८६ ; वाराकु. ६।१३१। ७१-७२ प्रवृत्ते तु (तदर्हस्य) द्वितीयतृतीयार्धयोः (भूमिः सस्यवती चैव फलवन्तश्च पादपाः । गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे ॥).

(३) वारा. ६।१०९।८७ ; वाराकु. ६।१३१।७३ (सहस्रशतमश्वानां धेनूनां च गवां तथा । ददौ शतं वृषान् पूर्वं द्विजेभ्यो मनुजर्षभः ॥).

(४) वारा. ६।१०९।८८ ; वाराकु. ६।१३१।७४ द्वितीयार्धे (नानाभरणवस्त्राणि महार्हाणि च राघवः ।) तृतीयार्धं नास्ति.

(५) राप्र. ३४.

## आश्वलायनः

ऐन्द्रविधिना राजाभिषेकः

'इन्द्रियाश्वं जयेद् वैरीन्(?) षड्रागादीन् पुरा बुधः ।
ततोऽभिषिञ्चेद्विधिना पुरोहितमते स्थितः ॥
शुभर्क्षतिथियोगेषु सर्वलोकप्रियो नृपः ॥
*एतद्विधानं कृत्वाऽऽदौ राजा पूज्य गुरुं द्विजान् ।
यथावद् भक्तितो विप्रानृत्विजश्चेतरानपि ॥
अभिषिञ्चेत्ततः पश्चादैतरेयोक्तवर्त्मना ।
ऐन्द्रेण विधिना राजा राज्ये विप्रानुमोदितः ॥

## विष्णुधर्मोत्तरपुराणम्

राजाभिषेके निषिद्धः प्रशस्तश्च कालः

पुष्कर उवाच-

'इति संभृतसंभारो राज्ञः सांवत्सरस्तथा ।
कालेऽभिषेचनं कुर्यात्तं कालं कथयामि ते ॥

अथ राजाभिषेके विहितकाला निरूप्यन्ते विष्णुधर्मोत्तरे- 'इति संभृत...' इति । इतीति । ‡ वक्ष्यमाणसंपादितसामग्रीकः । सांवत्सरः ज्योतिषिकः, 'सांवत्सरो ज्योतिषिको दैवज्ञगणकावपि' इत्यमरात् ।

† राप्र. ३३

* पूर्वश्लोकेषूक्तं ग्रहमखविधानमित्यर्थः । तत्तु विस्तरभिया नात्र संगृहीतम् ।

‡ त्रिपदबहुव्रीहिरयम् । असाध्व्याख्यानात् मूले इतिपदं समासघटकमिति प्रकाशाभिप्रायः प्रतीयते । सर्वत्र इति पदं छित्त्वैव मुद्रितम् ।

† नीम., राकौ., बाल. राप्रगतम् ।

(१) आश्वस्मृ. ८।२९-३०,२०८-२०९.

(२) विध. २।१८।१ ; राप्र. ३३ स्तथा (स्ततः) ; नीम. १ राप्रवत् ; राकौ. २३७ राप्रवत् ; बाल. १।३०९ पृ. ६१६ राप्रवत्, गारुडे.

[1]मृते राज्ञि न कालस्य नियमोऽत्र विधीयते ।
तत्रास्य स्नपनं कार्यं विधिवत्तिलसर्षपैः ॥
घोषयित्वा जयं चास्य सांवत्सरपुरोहितौ ।
अन्यासनोपविष्टस्य दर्शयेतां जनं शनैः ॥

[2]स सान्त्वयित्वा स्वजनं मुक्त्वा बन्धनगांस्तथा ।
अभयं घोषयित्वा च कालाकाङ्क्षी तथा भवेत् ॥

पूर्वराजमरणोत्तरं नूतनराजाभिषेके विशेष उक्तो विष्णुधर्मोत्तरे– 'मृते राज्ञि....' । विधिवत् प्राकृत-स्नानविधिना । मृत इति अस्वस्थस्याप्युपलक्षकम् । यदा पूर्वस्मिन् राज्ञि मृते अस्वस्थे वा उत्तरस्याभिषेकः, तदा स्नपनादौ न कालनियमः । तत्राभिषेक्तव्यस्य सांवत्सरपुरोहितौ तिलसर्षपैर्विधिवत् स्नपनं कारयित्वा 'अस्मिन् राष्ट्रे अयमिदानीं राजा' इति जयं घोषयित्वा पूर्वराजासनादन्यासनोपविष्टस्य मुख्यं मन्त्र्यादिकं नागरिकं च जनं दर्शयेताम् । ततः सर्वं जनं सत्कृत्य पूर्वराजबद्धान् मुक्त्वा स्वराष्ट्रे अभयं घोषयित्वा तदासनगत एव प्रजाः परिपालयन् वर्षानन्तराभिषेककालप्रतीक्षया तिष्ठेत् । पूर्वस्मिन् जीवति द्वितीयस्याभिषेके स्नपनादिकालप्रतीक्षान्तमकृत्वा शुभे काले अभिषेक एव कार्यः ।

* राप्र. ६१–६२

[3]नाभिषेच्यो नृपश्चैत्रे नाधिमासे च भार्गव ।
न प्रसुप्ते तथा विष्णौ विशेषात्प्रावृषि द्विज ॥

(१) प्रावृषो विशेषतो निषेधः अगतौ तद्भिन्न-विष्णुशयनकालाभ्यनुज्ञानार्थः । नीम. १

(२) अधिमासग्रहणं गुरुशुक्रास्तबाल्यवार्द्धकोप-लक्षणार्थम् , तन्निषेधस्य प्रसिद्धत्वात् । बाल. १।३०९

[1]न च भौमदिने राम चतुर्थ्यां न तथैव च ।
नवम्यां नाभिषेक्तव्यश्चतुर्दश्यां च भार्गव ॥
[2]ध्रुवाणि वैष्णवं शाक्रं हस्तपुष्ये तथैव च ।
नक्षत्राणि प्रशस्यन्ते भूमिपालाभिषेचने ॥

(१) ध्रुवाणि रोहिणी उत्तरात्रयं च । वैष्णवं श्रवणः । शाक्रं ज्येष्ठा । * राप्र. ३३

(२) दास्रम् अश्विनी । † नीम. १

[3]नागश्चतुष्पदं विष्टिः किंस्तुघ्नः शकुनिस्तथा ।
करणानि न शस्यन्ते व्यतीपातदिनं तथा ॥
[4]नक्षत्रमुल्काभिहतमुत्पाताभिहतं तथा ।
सौरसूर्यकुजाक्रान्तं परिविष्टिं च भार्गव ॥
[5]मुहूर्ताश्चोक्तनक्षत्राः सतां मानहितप्रदाः ।
कुजहोरा तथा नेष्टा सर्वत्र कुलिकस्तथा ॥

---

* नीम. राप्रगतम् ।

(१) विध. २।१८।२–३ ; राप्र. ६१ ; नीम. १.

(२) विध. २।१८।४ ; राप्र. ६१ स्वजनं (तु जनं) स्तथा (स्ततः) च (तु) तथा (ततो); नीम. १ राप्रवत्.

(३) विध. २।१८।५ ; राप्र. ३२ ; नीम. १ ; राकौ. २३८ ; बाल. १।३०९ पृ. ६१६ गारुडे.

* राकौ. , बाल. राप्रवत् ।

† शेषं. राप्रवत् ।

(१) विध. २।१८।६ ; राप्र. ३२ न तथैव (च तथैव) ; नीम. १ राप्रवत्; राकौ. २३८ राप्रवत्; बाल. १।३०९ पृ. ६१६ राप्रवत् , गारुडे.

(२) विध. २।१८।७; राप्र. ३३ पुष्ये (पुष्यौ); नीम. १ हस्तपुष्ये (दास्रपुष्यौ); राकौ. २३७ राप्रवत्; बाल. १।३०९ पृ. ६१६ राप्रवत् , गारुडे.

(३) विध. २।१८।८ ; राप्र. ३२ पूर्वार्धे (नागं चतुष्पदं विष्टिं किंस्तुघ्नं शकुनिं तथा ।); राकौ. २३८ राप्रवत् ; बाल. १।३०९ पृ. ६१६ पूर्वार्धे (नागं चतुष्पाद् विष्टिं च किंस्तुघ्नं शकुनिं तथा ।) गारुडे.

(४) विध. २।१८।९ ; राप्र. ३२ तथा (तु यत्) सौर (सोम) विष्टिं च (दृष्टं च); राकौ. २३८ राप्रवत्; बाल. १।३०९ पृ. ६१६ राप्रवत् , गारुडे.

(५) विध. २।१८।१० ; राप्र. ३२ होरा तथा नेष्टा (होरास्तथा नेष्टाः) कस्तथा (कोऽस्य च) उक्त ; राकौ. २३८ होरा तथा नेष्टा (होरास्तथाऽनिष्टाः) उक्त. ; बाल. १।३०९ पृ. ६१६ सर्वं राप्रवत् , गारुडे.

[1]वृषोऽथ कीटसिंहौ च कुम्भो लग्ने च शस्यते।
एतेषां जन्मलग्नाभ्यां यः स्यादुपचयस्थितः ॥
[2]तारा द्वितीया षष्ठी च चतुर्थी चाष्टमी च या।
नवमी च तथा शस्ता अनुकूलश्च चन्द्रमाः ॥
[3]सौम्याः केन्द्रगता लग्नाच्छुभाश्चैव त्रिकोणयोः।
पापाश्चोपचयस्थाने शस्तो लग्ने दिवाकरः ॥
[4]लग्ने नवांशे स्थितिरस्य वर्गे
वर्गस्तथा तस्य महानुभाव ।
सूर्यस्य वर्गः सकलः प्रशस्तो
राज्ञोऽभिषेके स नृपो ग्रहाणाम् ॥

सः सूर्यः, ग्रहाणां नृपः स्वामी । * राप्र. ३४.

पुरोहितेन कर्तव्या ऐन्द्री शान्तिः

पुष्कर उवाच–
[5]कार्या पौरंदरी शान्तिः प्रागेवास्य पुरोधसा।
प्रातेऽभिषेकदिवसे सोपवासः पुरोहितः ॥

---

* राकौ., बाल. राप्रगतम्।

(१) विध. २।१८।११; राप्र. ३३ च शस्य (प्रशस्य) चतुर्थचरणे (यस्मादुपचयोऽस्ततः); राकौ. २३७ लग्ने च (लग्नश्च) पू.; बाल. १।३०९ पृ. ६१६ कुम्भो (कुम्भे) च शस्य (प्रशस्य) पू., गारुडे.

(२) विध. २।१८।१२; राप्र. ३३ षष्ठी च (षष्ठी तु) च या (तथा); राकौ. २३७ च या (तथा) शस्ता (तारा); बाल. १।३०९ पृ. ६१६ च या (तथा) गारुडे.

(३) विध. २।१८।१३ लग्नात् (लग्नाः); राप्र. ३३; राकौ. २३७ लग्नात् (लग्नाः) णयोः (णगाः); बाल. १।३०९ पृ. ६१६ णयोः (णगाः) श्चोपचय (श्च पञ्चम) गारुडे.

(४) विध. २।१८।१४ नवांशे स्थितिरस्य वर्गे (नवांशः क्षितिजस्य वर्ज्यो) नृपो ग्रहाणाम् (ग्रहो नृपाणाम्); राप्र. ३३; राकौ. २३७ भाव (भावः) राज्ञो (राजा); बाल. १।३०९ पृ. ६१६ भाव (भावः) राज्ञो (राज्ञे) गारुडे.

(५) विध. २।१९।१; राप्र. ४९ (पुष्कर उवाच०); नीम. २ राप्रवत्; राकौ. २३९ री शान्तिः (रीशान्तिः) शेषं राप्रवत्, पू., ३१८ उत्त.

(१) विष्णुधर्मोत्तरे तु पुरंदरशान्तिपूर्वकः अभिषेकः उक्तः– 'कार्या......'। राप्र. ४९

(२) पौरंदरी ऐन्द्री। नीम. २

(३) पौरंदरी शान्तिः आथर्वणोक्तानाममृताभयादिशान्तीनां मध्ये प्रसिद्धा ऐन्द्रीशान्तिः* । राकौ. २३९

[1]सोष्णीषः श्वेतवसनः सितचन्दनभूषितः ।
सितमाल्योपवीतश्च सर्वाभरणभूषितः ॥
[2]वेदिमुल्लिख्य यत्नेन कृत्वा च विधिवत्ततः ।
जुहुयाद्वैष्णवान्मन्त्रांस्तथा शाक्रान्विचक्षणः ॥
[3]सावित्रान्वैश्वदेवांश्च सौम्यांश्च विधिवत्ततः।
शर्मवर्मगणं चैव तथा स्वस्त्ययनं गणम् ॥
[4]आयुष्यमभयं चैव तथा चैवापराजितम् ।
संपातवन्तं कलशं तथा कुर्याच्च काञ्चनम् ॥
[5]वह्नेर्दक्षिणपार्श्वस्थः श्वेतचन्दनभूषितः।
श्वेतानुलेपनः स्रग्वी सर्वाभरणभूषितः।
[6]आसनस्थः सुखं पश्येन्निमित्तानि हुताशने ॥

---

* अत्र 'उत्पाताद्यनिष्टसूचकानि तच्छान्तयश्च' इतिप्रकरणगतानि आथर्वणिकशान्तिकल्पस्थानि वचनानि तद्व्याख्यानं चानुसंधेयानि ।

(१) विध. २।१९।२; राप्र. ४९; नीम. २ उत्त.; राकौ. ३१८.

(२) विध. २।१९।३; राप्र. ४९ यत्नेन कृत्वा (मन्त्रेण हुत्वा); नीम. २ राप्रवत्, पू.; राकौ. ३१८ शाक्रान् (शाक्तान्) शेषं राप्रवत्.

(३) विध. २।१९।४; राप्र. ४९ देवांश्च (देवाद्यान्) शर्मवर्म (आयुःशर्म); नीम. २ उत्त.; राकौ. ३१८ राप्रवत्.

(४) विध. २।१९।५; राप्र. ४९; नीम. २ तथा चैवा (तथैव चा); राकौ. ३१८ तवन्तं (तयन्तं).

(५) विध. २।१९।६; राप्र. ४९; नीम. २; राकौ. ३१८.

(६) विध. २।१९।७; स्थः सुखं (स्थमुखं); राप्र. ४९; नीम. २; राकौ. ३१८.

¹पश्येयुरन्ये च तथा नृसिंह
देवज्ञवाक्यान्निपुणं स्वरूपम् ।
सांवत्सरस्याथ सदस्यमुख्याः
सदस्यमुख्याश्च पुरोहितस्य ॥

पुष्कर उवाच–

²प्रदक्षिणावर्तशिखस्तप्तजाम्बूनदप्रभः ।
रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥

³अनुलोमसुगन्धश्च स्वस्तिकाकारसंनिभः ।
वर्धमानाकृतिश्चैव नन्द्यावर्तनिभस्तथा ॥

स्वस्तिकं वर्धमानं नन्द्यावर्ताः राजगृहभेदाः ।

* नीम. २

⁴प्रसन्नार्चिर्महाज्वालः स्फुलिङ्गरहितो हितः ।
स्वाहावसाने ज्वलनः स्वयं देवमुखं हविः ॥

( १ ) ( देवमुखमिति ) ज्वलनविशेषणम् ।

राप्र. ५०

( २ ) देवमुखमिति ज्वलनविशेषणम् ।

राकौ. ३१९

¹यदा भुङ्क्ते महाभाग तदा राज्ञो हितं भवेत् ।
हविषस्तु यदा वह्नेर्न स्यात्सिमिसिमायितम् ॥

शब्दानुकरणमात्रमेतत् । नीम. २

²न व्रजेयुश्च मध्येन मार्जारमृगपक्षिणः ।
पिपीलकाश्च धर्मज्ञ तदा भूयाज्जयी नृपः ॥

मध्येन होतुरग्नेश्च । * राप्र. ५०

³मुक्ताहारमृणालाभे वह्नौ राज्ञां जयो भवेत् ।
तथैव च जयं ब्रूयात्प्रस्तरस्य प्रदायिनि ॥

प्रस्तरस्य दर्भमुष्टेः । * राप्र. ५०

⁴संक्षेपतस्तेऽभिहितं मयाऽद्य
यल्लक्षणं चारु हुताशनस्य ।
सर्वाग्निकर्मस्वथ तेन विद्वान्
भूयात् त्रिलोके तु जयी द्विजेन्द्र ॥

पुष्कर उवाच–

⁵स्नानं समाचरेद्राज्ञो होमकाले पुरोहितः ।
आदौ तु स्वेच्छया स्नातः पुनर्मृद्भिः समाचरेत् ॥

---

* राकौ. नीमवत् ।

( १ ) विध. २।१९।८ ; राप्र. ५० नृसिंह ( नृसिंहा ) वाक्यान्निपुणं स्वरूपम् ( वाक्यं निपुणं च भूयः ) मुख्याश्च पुरोहितस्य ( मुख्यश्च पुरोहितश्च ) ; नीम. २ ख्याः सदस्यमुख्याश्च ( ख्यः सदस्यमुख्यस्य ) शेषं राप्रवत् ; राकौ. ३१८ नृसिंह ( नृसिंहा ) वाक्यान्निपुणं स्वरूपम् ( वाक्यं निपुणं च भूयः ).

( २ ) विध. २।२०।१ ; राप्र. ५० ( पुष्कर उवाच० ); नीम. २ शिखस्तप्त ( शिखास्तदा ) शेषं राप्रवत् ; राकौ. ३१९ विधूम ( निर्धूम ) शेषं राप्रवत्.

( ३ ) विध. २।२०।२ ; राप्र. ५० लोमसुगन्ध ( लोमा सुगन्धि ) ; नीम. २ लोम ( लोमाः ) ; राकौ. ३१९ राप्रवत्.

( ४ ) विध. २।२०।३ ; राप्र. ५० ‘ ज्वलनः ’ इत्यादिः श्लोकांशः उत्तरे च चत्वारः श्लोका उच्छिन्नाः ; नीम. २ हितः ( हि सः ) ; राकौ. ३१९.

* राकौ. राप्रवत् ।

( १ ) विध. २।२०।४ ; नीम. २ भवेत् ( वदेत् ) उत्तरार्धे ( हविषश्च यदा वह्नौ न स्याच्छिमिशिमायितम् ॥ ) ; राकौ. ३१९ उत्तरार्धे ( हविषश्च यदा वह्नेर्न स्याच्छिमिशिमायितम् ॥ ).

( २ ) विध. २।२०।५ ; नीम. २ उत्तरार्धे ( पिपीलिकाश्च धर्मज्ञ तदा कुर्याज्जयं नृपे ॥ ) ; राकौ. ३१९ उत्तरार्धे ( पिपीलिकाश्च धर्मज्ञ तथा कुर्युः क्षयं नृपे ॥ ).

( ३ ) विध. २।२०।६ ; नीम. २ पूर्वार्धे ( अङ्गहारादिलाभे तु वह्ने राज्ञो जयं वदेत् । ) स्य प्रदायिनि ( स्याप्यदाहिनि ) ; राकौ. ३१९ ( अङ्गहारादिलाभेषु वह्ने राज्ञो जयं वदेत् । तथैव च जयं ब्रूयुः प्रस्तरस्यापि दाहिनि ॥ ).

( ४ ) विध. २।२०।७.

( ५ ) विध. २।२१।१ ; राप्र. ५० ( पुष्कर उवाच० ) चरेद्राज्ञो ( रमेत्प्राज्ञो ) चरेत् ( रमेत् ) ; नीम. २ ( पुष्कर उवाच ० ) चरेद्राज्ञो ( रमेद्राज्ञो ) चतुर्थचरणे ( पुनर्भिः समारमेत् ) ‘ पुनर्मृद्भिः ’ इत्यपि पाठः ; राकौ. ३१९ ( पुष्कर उवाच० ) चरेद्राज्ञो ( रमेत्प्राज्ञो ) चतुर्थचरणे ( पुनरद्भिः समाहरेत् ).

होमकाले होमसमाप्तौ । * राप्र. ५०

होमसमाप्तौ राज्ञः स्नपनम् अभिषेकश्च

[1]पर्वताग्रमृदा तावन्मूर्धानं शोधयेन्नृपः ।
वल्मीकाग्रमृदा कर्णौ वदनं केशवालयात् ॥

[2]चन्द्रालयमृदा ग्रीवां हृदयं तु नृपाजिरात् ।
करिदन्तोद्धृतमृदा दक्षिणं तु तथा भुजम् ॥

[3]वृषशृङ्गोद्धृतमृदा वामं चैव तथा भुजम् ॥

[4]सरोमृदा तथा पृष्ठं चोदरं सांगमे मृदा ।
नदीकूलद्वयमृदा पार्श्वे संशोधयेत्तथा ॥

[5]वेश्याद्वारमृदा राज्ञः कटिशौचं विधीयते ।
गजस्थानात्तथैवोरू गोस्थानाज्जानुनी तथा ॥

[6]अश्वस्थानात्तथा जङ्घे राजा संशोधयेद् बुधः ।
रथचक्रोद्धृतमृदा तथैव च करद्वयम् ॥

---

* राकौ. राप्रवत् ।

(१) विध. २।२११२ ; चतुर्थचरणे ( चन्दनैः केशवालकान् ) ; राप्र. ५० न्नृपः ( न्नृप ) ; नीम. २ ; राकौ. ३१९.

(२) विध. २।२११३ ; राप्र. ५० चन्द्रालयमृदा ( इन्द्रालयात्तदा ) ; नीम. २ चन्द्रा ( इन्द्रा ) ; राकौ. ३१९–३२० राप्रवत्.

(३) विध. २।२११४ तथा ( तदा ) ; राप्र. ५० ; राकौ. ३२०.

(४) विध. २।२११५ ; राप्र. ५० पूर्वार्धे ( सरोमृदा तथा पृष्ठमुदरं संगमान्मृदा । ) पार्श्वे ( पार्श्वौ ) ; नीम. २ राप्रवत् ; राकौ. ३२० राप्रवत्.

(५) विध. २।२११५ इति श्लोकानन्तरं टिप्पण्यां समुद्धृतः । वेश्या ( वेश्म ) ; राप्र. ५० ; नीम. २ ; राकौ. ३२०.

(६) विध. २।२११६ ; राप्र. ५० राजा ( राज्ञः ) च कर ( चरण ) ; नीम. २ राजा ( राज्ञः ) द्धृत ( द्भृत ) च कर ( चरण ) 'च कर' इत्यपि पाठः ; राकौ. ३२० राप्रवत्.

[1]मृत्स्नातः स्नपनीयः स्यात्पञ्चगव्यजलेन तु ।
ततो भद्रासनगतं मुख्यामात्यचतुष्टयम् ॥

[2]वर्णप्रधानं भूपालमभिषिञ्चेद्यथाविधि ।
पूर्वतो हेमकुम्भेन घृतपूर्णेन ब्राह्मणः ॥

(१) पञ्चगव्येन, जलेन कुशोदकेन च । वाडवः ब्राह्मणः । * राप्र. ५१

(२) 'भद्रासनं नरेन्द्रस्य क्षीरवृक्षेण कारयेत् । आयामस्तस्य कर्तव्यो विस्तारेणार्धसंमितः ॥ चतुरस्रं च कर्तव्यं राज्ञो भद्रासनं तथा । अष्टास्रं च तथा वृत्तं न च दीर्घं भृगूत्तम ॥ सुवर्णरूप्यताम्रैश्च चित्रं कार्यं विशेषवत् । रत्नैः प्रशस्तैश्च तथा न रत्नप्रतिरूपकैः ॥ चत्वारः पुरुषास्तत्र विन्यस्या भृगुनन्दन । द्विगुणाश्च तथा सिंहाः स्तम्भास्तद्द्विगुणा मताः ॥' ( विध. २।१४।१–५ ) इति भद्रासनलक्षणं बोद्धव्यम् ।

$ राकौ. ३२०

[3]रूप्यकुम्भेन याम्येन क्षीरपूर्णेन क्षत्रियः ।
दध्ना च ताम्रकुम्भेन वैश्यः पश्चिमतो द्विज ॥

[4]माहेयेन जलेनोदक्शूद्रामात्योऽभिषेचयेत् ।
ततोऽभिषेकं नृपतेर्बह्वृचप्रवरो द्विजः ॥

---

* नीम. राप्रवत् ।

$ शेषं राप्रवत् ।

(१) विध. २।२११७ ; राप्र. ५०–५१ मृत्स्नातः ( मृत्पूतः ) ; नीम. २ राप्रवत् ; राकौ. ३२० मृत्स्नातः ( मृत्पूतं ) नीयः (नीयं) तु ( च ).

(२) विध. २।२११८ ; राप्र. ५१ वर्ण (बल) ब्राह्मणः ( वाडवः ) ; नीम. २ राप्रवत् ; राकौ. ३२० राप्रवत्.

(३) विध. २।२११९ ; राप्र. ५१ पूर्वार्धे ( दक्षिणे क्षीरपूर्णेन रौप्यकुम्भेन क्षत्रियः । ) तो द्विज ( तस्तथा ) ; नीम. २ पूर्वार्धं राप्रवत् ; राकौ. ३२१ राप्रवत्.

(४) विध. २।२११।१० ; नीम. २ पतेर्ब ( पते ब ) ; राकौ. ३२१ पूर्वार्धे ( माहेयेन जलेनैव भद्रामात्योऽभिषिच्यते । ).

माहेयं गोशृङ्गपुच्छसंबन्धि । नीम. २

'कुर्वीत मधुना राम च्छन्दोगश्च कुशोदकैः ।
संपातवन्तं कलशं तथाऽऽहृत्य पुरोहितः ॥

मधुना कुशोदकैश्च छन्दोगः । * राप्र. ५१

'विधाय वह्निरक्षां तु सदस्येषु यथाविधि ।
राजसूयाभिषेके तु ये मन्त्राः परिकीर्तिताः ॥

विधाय वह्निरक्षाम् 'वह्निं रक्षध्वम्' इत्युक्त्वा । ते च मन्त्रा वक्ष्यन्ते । † राप्र. ५१

'तैस्तु दद्यान्महाभाग ब्राह्मणानां स्वनेन तु ।
ततः पुरोहितो गच्छेद्वेदिमूलं तदैव तु ॥

स्वरेण मन्त्रघोषेण । वेदिमूलं कुण्डम् ।

* राप्र. ५१

'विभूषितं तु राजानं सर्वतोभद्र आसने ।
शतच्छिद्रेण पात्रेण सौवर्णेन यथाविधि ॥
'अभिषिञ्चति धर्मज्ञ यजुर्वेदविशारदः ।
या ओषधीरौषधीभिः सर्वाभिः सुसमाहितः ॥

* राकौ. राप्रवत् ।

† नीम., राकौ. राप्रगतम् ।

(१) विध. २।२१।११ ऽऽहृत्य (नुत्वा); राप्र. ५१ पूर्वार्धे (कौबेर्यां मधुकेनाथ च्छन्दोगोऽथ कुशोदकैः ।); नीम. २ पूर्वार्धे (कौबेर्यां मधुना राम छन्दोगोऽथ कुशोदकः ।); राकौ. ३२१ पूर्वार्धे (कुर्वीत मधुना राम घृतेनाध्वर्युरेव च । क्षीरेण दध्नाऽथर्वा तु छन्दोगोऽथ कुशोदकैः ॥).

(२) विध. २।२१।१२ ; राप्र. ५१ ; नीम. २–३ ; राकौ. ६२१.

(३) विध. २।२३।१३ ; राप्र. ५१ स्वनेन (स्वरेण) तदैव (तथैव); नीम. ३ स्वनेन (स्वरेण); राकौ. ३२१ राप्रवत्.

(४) विध. २।२१।१४ ; राप्र. ५१–५२ सर्वतोभद्र (संस्थितं भद्र); नीम. ३ राप्रवत्; राकौ. ३२१ राप्रवत्.

(५) विध. २।२१।१५ ; राप्र. ५२ (अभिषिञ्चेत धर्मज्ञः सम्यग्वेदविशारदः । या ओषधीरोषधिभिः श्रुताभिः सुसमाहितः ॥); नीम. ३ राप्रवत्; राकौ. ३२१ (अभिषिञ्चेत्तु धर्मज्ञः सम्यग्वेदविशारदः । सा औषधिरौषधिभिः श्रुताभिः सुसमाहितः ॥).

भद्रासनलक्षणं देवीपुराणे– 'हैमं च राजतं ताम्रं क्षीरवृक्षमयं च वा । भद्रासनं च कर्तव्यं सार्धहस्तसमुच्छ्रितम् ॥ सपादहस्तमानं च राज्ञो माण्डलिकान्तरात् ॥' इति । वराहसंहितायामपि– 'त्रिविधस्तस्योच्छ्रायो हस्तः पादाधिकोऽर्धयुक्तश्च । माण्डलिकानन्तरजित् समस्तराज्यार्थिनां शुभदः ॥' (बृसं. ४८।४७) इति । तत्तु भद्रासनं नूतनमेव कार्यम् । तदुक्तं विष्णुधर्मोत्तरे– 'भद्रासनं च च्छत्रं च बालव्यजनमेव च । खड्गं चक्रं तथा चापं रत्नानि विविधानि च ॥ राज्ञो मृतस्य ये त्वासन् सर्व एते नराधिप । न ते कार्या नरेन्द्रस्य तेन दैवविदा तदा ॥ कामं सांवत्सरः कार्यो ह्यलाभेऽन्यस्य भूभुजा । गुणाधिकाश्चेन्नो कार्या येऽन्येऽत्राभिहिता मया ॥' (विध. २।४।१९–२२) इति । पूर्वे चेद् गुणाधिकाः तदा ये अन्ये कर्तव्या इत्यभिहिताः ते नो कार्या इत्यर्थः । ओषधीभिः अष्टौषधिगर्भकुम्भोदकेन । * राप्र. ५१–५२

'रथे अक्षेति गन्धैश्च आ ब्रह्मन् ब्राह्मणेति च ।
बीजैः पुष्पैस्तथा चैनं राम पुष्पवतीति च ॥

गन्धैः सर्वगन्धकुम्भोदकेन । बीजैः बीजपूर्णकुम्भोदकेन । पुष्पैः पुष्पपूर्णकुम्भोदकेन । पुष्पवतीति आथर्वणो मन्त्रः । ‡ राप्र. ५२

'तेनैव चाभिमन्त्रेण फलैस्तमभिषेचयेत् ।
आशुः शिशान इत्येव सर्वरत्नैश्च भार्गव ॥

* नीम., राकौ. राप्रगतम् ।

‡ राकौ. राप्रगतम् ।

(१) विध. २।२१।१६ ; राप्र. ५२ अक्षेति (तिष्ठेति) था चैनं (थाऽऽसीनं); नीम. ३ राप्रवत्; राकौ. ३२२ राप्रवत्.

(२) विध. २।२१।१७ ; राप्र. ५२ चाभिम (चैव म) इत्येव (इत्येवं); नीम. ३ राप्रवत्; राकौ. ३२२ राप्रवत्.

तदानीमेव फलपूर्णं कुम्भोदकं संपाद्यम्, (न) तु पूर्वसंपादितमिति ज्ञापनार्थो द्वितीय एवकारः । सर्वरत्नकुम्भोदकेन । राकौ. ३२२

[1]ये देवाः पुरःसदेति कुशाद्भिः परिमार्जयेत् ।
ऋग्वेदक्रतुतो राज्ञे रोचनाया यथाविधि ॥
[2]मूर्धानं च तथा कण्ठे गन्धद्वारेति संस्पृशेत् ।
ततो ब्राह्मणमुख्याश्च क्षत्रियाश्च विशस्तथा ॥
[3]शूद्राश्च वारमुख्याश्च नानातीर्थसमुद्भवैः ।
नादेयैः सारसैः कौपैर्नानाकलशसंस्थितैः ॥

(१) अवरमुख्याः मूर्धावसिक्तादयः । राप्र. ५३

(२) अवरमुख्याः मूर्धाभिषिक्तादयः । नादेयं नदीजलम् । राकौ. ३२२

[4]चतुःसागरजैर्लाभादलाभाद् द्विजकल्पितैः ।
गङ्गायमुनयोश्चैव निर्झरैश्च तथोद्भिजैः ॥
[5]छत्रपाणिर्भवेत्कश्चित्केचिच्चामरपाणयः ।
अमात्यमुख्यास्तं कालं केचिद्वेत्रकरास्तथा ॥
[6]शङ्खभेरीनिनादेन बन्दिनां निस्वनेन च ।
गीतवादित्रघोषेण द्विजकोलाहलेन च ॥

[1]राजानमभिषिञ्चेयुः समेत्य सहिता जनाः ।
सर्वैः स्तुतोऽभिषिक्तश्च संमिश्रजलमिश्रितम् ॥

संमिश्रजलानि नादेयादीनि दश । * राप्र. ५३

अभिषेकसमाप्त्यनन्तरं वस्त्रधारणम्, राजपूजा, सांवत्सरपुरोहितपूजा, पट्टमुकुटबन्धनम्, पुरोहितपौरवणिक्प्रकृतिदर्शनम्, पुरोहितादिभ्यो दानम्, मङ्गलालम्भनम्, गोस्पर्शः, स्वपुरपरिभ्रमणम्, देवतापूजनम्, स्वगृहप्रवेशश्च

[2]सर्वौषधियुतं पुण्यं सर्वगन्धयुतं तथा ।
रत्नबीजसमायुक्तं फलबीजयुतं तथा ॥
[3]ऊर्जितं सितसूत्रेण वेष्टितग्रीवमेव च ।
श्वेतवस्त्राम्रपत्रैश्च संवीतं सुविभूषितम् ॥

(१) पूजितं सर्वतो गन्धादिना अभ्यर्चितम् । अवकाः शैवालम् । राप्र. ५३

(२) 'वस्त्रावकर्तैश्च' इति क्वचित्पाठः । बिल्वपत्रकुन्दादिपुष्पकमलाद्याकारतया कर्तितवस्त्रैरिति तदर्थः । नीम. ३

(३) अवकाशः वालम्, तद्युक्तैः वस्त्रान्तैः । ‡ राकौ. ३३३

---

(१) विध. २।२१।१८ कुशाद्भिः (कुशाग्रैः); राप्र. ५३ क्रतुतो राज्ञे रोचनाया (वित्ततो राज्ञो रोचनया); नीम. ३ राप्रवत्; राकौ. ३२२ राप्रवत्.

(२) विध. २।२१।१९; राप्र. ५३ कण्ठे (कण्ठं); नीम. ३ राप्रवत्; राकौ. ३२२ राप्रवत्.

(३) विध. २।२१।२०; राप्र. ५३ श्च वार (श्चावर); नीम. ३ राप्रवत्; राकौ. ३२२ राप्रवत्.

(४) विध. २।२१।२१; राप्र. ५३ दलाभाद् (दलाभे) तथोद्भिजैः (तथा द्विजैः); नीम. ३ दलाभाद् (दलाभे) तथोद्भिजैः (तथाऽद्रिजैः): राकौ. ३२२ नीमवत्.

(५) विध. २।२१।२२; राप्र. ५३ स्तं कालं (स्तत्कालं) करा (धरा); नीम. ३ राप्रवत्; राकौ. ३२२ राप्रवत्.

(६) विध. ३।२१।२३ बन्दि (बन्दी); राप्र. ५३; नीम. ३; राकौ. ३२२–३२३ बन्दिनां (वेदवाङ्).

* राकौ. राप्रवत् ।

‡ शेषं राप्रगतम् ।

(१) विध. २।२१।२४; राप्र. ५३ उत्तरार्धे (सर्वलोकाभिषिक्तस्य संमिश्रजलसंयुतम् ॥); नीम. ३ राप्रवत्; राकौ. ३२३ राप्रवत्.

(२) विध. २।२१।२५; राप्र. ५३ फलबीज (फलपुष्प); नीम. ३ बीजयुतं तथा (पुष्पसमन्वितम्); राकौ. ३२३ राप्रवत्.

(३) विध. २।२१।२६; राप्र. ५३ ऊर्जि (पूजि) उत्तरार्धे (श्वेतवस्त्रावकान्तैश्च संवीतं शुचि भूषितम् ॥); नीम. ३ राप्रवत्; राकौ. ३२३ ऊर्जि (पूजि) उत्तरार्धे (श्वेतवस्त्रावकाशैश्च संवीतं शुचि भूषितम् ॥).

[1]क्षीरवृक्षलताछन्नं सुदृढं काञ्चनं नवम् ।
आदाय कलशं राज्ञा स्वयं सांवत्सरस्तथा ॥
[2]मन्त्रावसाने कलशं दद्याद् भृगुकुलोद्वह ।
ततः पश्येन्मुखं राजा दर्पणे चाथ सर्पिषि ॥

(१) मन्त्राः 'सुरास्त्वाम्' (विध. २।२२।४) इत्यादयो वक्ष्यमाणाः । * राप्र. ५४

(२) दद्यात् अभिषिञ्चेत् । ‡ नीम. ३

[3]सोष्णीषः सितवस्त्रश्च मङ्गलालम्भनं ततः ।
कृत्वा संपूजयेद्विष्णुं ब्रह्माणं शंकरं तथा ॥
[4]लोकपालान् ग्रहांश्चैव नक्षत्राणि च भार्गव ।
ततः स्वपूजां कुर्वीत शयनीयं ततो व्रजेत् ॥
[5]व्याघ्रचर्मोत्तरं रम्यं सितवस्त्रोत्तरच्छदम् ।
पुरोधा मधुपर्केण तत्रस्थं तं समर्चयेत् ॥
[6]राजा चैवार्चयेत्तत्र सांवत्सरपुरोहितौ ।
मधुपर्केण धर्मज्ञस्ततस्तस्य सदैव हि ॥

[1]पट्टबन्धं प्रकुर्वीत मुकुटस्य च बन्धनम् ।
ततः स बद्धमुकुटः काले पूर्वं मयेरितम् ॥

(१) पट्टलक्षणं तु देवीपुराणे— 'सर्वस्नानमलंकारं रोचनाख्यं च पट्टकम् । वृद्धयाऽध्यङ्गुलमङ्गुल्या षट्त्रिंशदङ्गुलावधि ॥ वृत्तं वा चतुरस्रं वा पञ्चकत्रिकगर्भितम् । वत्सेशपद्ममत्स्येभगोस्वस्तिकविनायकैः ॥ श्रीश्रीवृक्षवराहेभस्वामिदेवीशुभान्वितम् ॥'। अध्यङ्गुलं सप्ताङ्गुलम् अङ्गुल्या एकया सहितम् अष्टाङ्गुलम् इत्येकं पट्टलक्षणम् । तदारभ्य सप्ताङ्गुलकृतवृद्धया चत्वारि लक्षणानि । एवं पञ्चविधः । तस्य दैर्घ्यार्धेन मध्यदेशविस्तारः । तदर्धेन प्रान्तद्वयविस्तारः । स एवं वृत्तः कोणरहितः चतुरस्रो वा । वत्सेशः श्रीवत्सधारी विष्णुः । इभः हस्ती महामात्राधिष्ठितः । गौः स्त्रीगवी । केवल एव हस्ती वृषभश्च निषिद्धो विश्वकर्मणा— 'व्याघ्रव्यालगजसिंहा अश्वोष्ट्रौ महिषो वृषः । भूषणेषु त्यजेदष्टौ यदीच्छेद्दीर्घजीवितम् ॥' इति । श्रीवृक्षः बिल्वः । इभः गणेशः । स्वामी कार्तिकेयः । वराहसंहितायामपि दैर्घ्यादिमानं भङ्ग्यन्तरेणोक्तम् । मध्यविस्तारमुक्त्वा— 'सर्वे द्विगुणायामा मध्यादर्धेन तदर्धविस्ताराः । सर्वे विशुद्धकाञ्चनविनिर्मिताः श्रेयसो वृद्ध्यै ॥ पञ्चशिखो भूमिपतेस्त्रिशिखो युवराजमहिष्योः । एकशिखः सैन्यपतेः प्रसादपट्टो विना शिखया ॥' (बृसं. ४९।४–५) इति । * राप्र. ५४–५५

(२) एवं पट्टबन्धानन्तरं कार्यमुक्तम्— तत इति । † नीम. ४

---

* राकौ. राप्रवत् ।

‡ शेषं राप्रगतम् ।

(१) विध. २।२१।२७ छन्नं (छत्रं) ; राप्र. ५३ दृढं (हृष्टं) राज्ञा (राज्ञः) स्तथा (स्तदा) ; नीम. ३ राज्ञा (राज्ञः) स्तथा (स्तदा) ; राकौ. ३२३ दृढं (मृष्टं) राज्ञा (राज्ञः).

(२) विध. २।२१।२८ ; राप्र. ५३–५४ चाथ (वाऽपि) ; नीम. ३ चाथ (वाऽथ) ; राकौ. ३२३ द्वह (द्भव) चाथ (चापि).

(३) विध. २।२१।२९ ; राप्र. ५४ ; नीम. ३ उत्तरार्धे (ततः संपूजयेद्विष्णुं ब्राह्मणांश्च समर्चयेत् ॥) ; राकौ. ३२३ पूर्वार्धे (सोष्णीषं सितवस्त्रं च मङ्गलालम्भनं तथा ।).

(४) विध. २।२१।३० ; राप्र. ५४ पालान् (पालं) ; राकौ. ३२३ नीयं (नीये).

(५) विध. २।२१।३१ ; राप्र. ५४ ; राकौ. ३२३ चर्मोत्त (चर्मास्त).

(६) विध. २।२१।३२ ; राप्र. ५४ राजा चैवा (राजाऽऽदौ चा) सदैव हि (स दैववित्) ; नीम. ३ चैवा (द्वौ चा) सदैव हि (स दैववित्) ; राकौ. ३२३ चैवा (द्वौ चा) धर्मज्ञस्त (सर्वज्ञ त) सदैव हि (स दैववित्).

* राकौ. राप्रवत् ।

† शेषं राप्रगतम् ।

(१) विध. २।२१।३३ ; राप्र. ५४–५५ मयेरितम् (मयोदिते) ; नीम. ३–४ मुकुट (ततस्त) शेषं राप्रवत् ; राकौ. ३२३–३२५ स बद्ध (संबद्ध) शेषं राप्रवत्.

'परार्ध्यास्तरणोपेते पञ्चचर्मोत्तरच्छदे ।
भुवा द्यौरिति मन्त्रेण सोपवेश्यः पुरोधसा ॥
परार्ध्यं बहुमूल्यम् । * राप्र. ५५

²वृकस्य वृषदंशस्य द्वीपिनश्च भृगूत्तम ।
तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परम् ॥
(१) वृषदंशः मार्जारः । द्वीपी चित्रकः ।
* राप्र. ५५
(२) द्वीपी द्वीपान्तरगतो व्याघ्रः इति तातचरणाः । तरक्षुरिति केचित् । † नीम. ४

³तत्रोपविष्टस्य ततः प्रतीहारः प्रदर्शयेत् ।
अमात्यांश्च तथा पौरान्नैगमांश्च वणिग्वरान् ॥
⁴ततः प्रकृतयश्चान्या यथावदनुपूर्वशः ।
ततोऽग्रहारवस्त्रेभतुरंगकनकोत्तमैः ॥
⁵गोजाविगृहदानैश्च सांवत्सरपुरोहितौ ।
पूजयित्वा ततः पश्चात्पूजयेद् ब्राह्मणत्रयम् ॥
⁶अनेनैव विधानेन येन राजाऽभिषेचितः ।
ततस्त्वमात्यान्संपूज्य सांवत्सरपुरोधसः ॥

येन ब्राह्मणत्रयेण । राकौ. ३२५

¹ततो ब्राह्मणमुख्यानां पूजनं तु समाचरेत् ।
गोवस्त्रतिलरूप्यान्नफलकाञ्चनगोरसैः ॥

²मोदकाक्षतपुष्पैश्च महीदानैश्च पार्थिवः ।
मङ्गलालम्भनं कृत्वा गृहीत्वा सशरं धनुः ॥

आथर्वणपरिशिष्टे तु विशेषः– ' मधुपर्कादिना विधिना सर्वार्धं संपाद्य दक्षिणां दद्यात् । कोटिमध्यात् तृतीयं भागम् । यथाभूमिप्रमाणेन वा । हस्त्यश्वरथयानं दिव्यमाभरणमातपत्रं हिरण्यं क्षितिगोधनधान्यरत्नादिकं स्वगुरवे दद्यात् । येन वा तुष्येत ' इति । तदुत्तरकर्तव्यं च विष्णुधर्मोत्तरे अभिहितम्– 'मङ्गलालम्भनं......' ।
* राप्र. ५६

³वह्निं प्रदक्षिणीकृत्य प्रणिपत्य तथा गुरुम् ।
पृष्ठतो वृषमालभ्य गां सवत्सां च पार्थिव ॥

⁴पूजयित्वा च तुरगं मन्त्रितं चाभिषेचितम् ।
तमारुह्य ततो नागं पूजयेच्चाभिषेचितम् ।
मन्त्रितं दक्षिणे कर्णे स्वयं वेदविदा ततः ॥

---

* राकौ. राप्रवत् ।
† शेषं राप्रवत् ।

(१) विध. २।२११।३४ ; राप्र. ५५ पञ्चचर्मो (मध्ये वद्धो); नीम. ४ राप्रवत्; राकौ. ३२५ परार्ध्या (परार्धा) पञ्चचर्मो (मध्ये वृद्धो).

(२) विध. २।२११।३५ ; राप्र. ५५ वृक (वृष) त्तम (द्वह) ततः परम् (परं ततः); नीम. ४ वृक (वृष) त्तम (द्वह); राकौ. ३२५ राप्रवत्.

(३) विध. २।२११।३६ ; राप्र. ५५ ततः (तदा) श्च वणिग्व (श्चापणेऽऽश्व); नीम. ४ तथा (ततः) शेषं राप्रवत्; राकौ. ३२५ राप्रवत्.

(४) विध. २।२११।३७ ; राप्र. ५५ ततः (तथा); नीम. ४ राप्रवत्; राकौ. ३२५ राप्रवत्.

(५) विध. २।२११।३८ गृह (ग्रह); राप्र. ५५ ; नीम. ४ ; राकौ. ३२५ विधवत्.

(६) विध. २।२११।३९ ; राप्र. ५५ ततस्त्वमात्या (ततः सदस्या); नीम. ४ राप्रवत्; राकौ. ३२५ राप्रवत्.

* राकौ. राप्रवत् ।

(१) विध. २।२११।४० ; राप्र. ५६ ; नीम. ४ ; राकौ. ३२५.

(२) विध. २।२११।४१ ; राप्र. ५६ काक्षत (कैः श्वेत) पार्थिवः (सुव्रत); नीम. ४ मही (महा) शेषं राप्रवत्; राकौ. ३२५–३२६ राप्रवत्.

(३) विध. २।२११।४२ ; राप्र. ५६ णीकृत्य (णं कृत्वा) गुरुम् (गुरून्); नीम. ४ गुरुम् (गुरून्) पार्थिव (पार्थिवः); राकौ. ३२६ लभ्य (लम्भ्य) शेषं राप्रवत्.

(४) विध. २।२११।४३ द्वितीयार्धं नास्ति ; राप्र. ५६ च तुरगं (तुरंगं च) वेद (दैव); नीम. ४ च (तु) वेद (दैव); राकौ. ३२६ दा ततः (दात्ततः) शेषं राप्रवत्.

[1]आरुह्य राजमार्गेण स्वपुरं तु परिभ्रमेत् ।
मुख्यामात्यैश्च सामन्तैः सांवत्सरपुरोहितैः ॥
[2]सहितः कुञ्जरारूढैरभिगच्छेच्च देवताः ।
[3]तासां संपूजनं कृत्वा नगरे या निवेशिताः ॥
प्रविशेत गृहं राजा प्रहृष्टनरवाहनः ।
दानमानादिसत्कारैर्गृह्णीयात्प्रकृतीस्ततः ॥
[4]संपूजितास्तास्तु विसर्जयित्वा
गृहे स्वके स्यान्मुदितो महात्मा ।
विधानमेतत्समवाप्य राजा
कृत्स्नां स पृथ्वीं वशगां हि
कुर्यात् ॥

राजाभिषेकमन्त्राः , मन्त्रोक्तदेवतातीर्थादीनां कीर्तननमस्कारतर्पणपुष्पार्घ्यदीपहोम-बलिदानादिफलम्

श्रीराम उवाच–

[5]मन्त्रेण येन धर्मज्ञ कुर्याद्राज्ञोऽभिषेचनम् ।
तमहं श्रोतुमिच्छामि त्वत्तो वरुणनन्दन ॥

पुष्कर उवाच–

[1]शृणुष्वावहितो मन्त्रं राम कल्मषनाशनम् ।
येनाभिषिक्तो नृपतिश्चिरं यशसि तिष्ठति ॥
[2]राज्ञोऽभिषेकशब्दान्ते दैववित् कुशवारिणा ।
कुम्भादभ्युक्षणं कुर्यान्मन्त्रान्ते सकलं न्यसेत् ॥
[3]सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥
[4]प्रद्युम्नश्चानिरुद्धस्तु भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै नैर्ऋतिस्तथा ॥
[5]वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥
[6]भद्रो धर्मो मनुर्दक्षो रुचिः श्रद्धा च पार्थिव ।
भृगुरत्रिर्वसिष्ठश्च सनकश्च सनन्दनः ॥
[7]सनत्कुमारश्च तथा भगवानपि चाङ्गिराः ।
पुलहश्च पुलस्त्यश्च मरीचिः कश्यपः प्रभुः ॥

---

(१) विध. २।२११४४ ; राप्र. ५६ त्यैश्च सा ( त्यैः ससा ) ; नीम. ४ राप्रवत् ; राकौ. ३२६ राप्रवत् .

(२) विध. २।२११४५ ; राप्र. ५६ निवेशि (निषेवि); नीम. ४ चतुर्थचरणे ( नगरं याति वेष्टितः ) ; राकौ. ३२६.

(३) विध. २।२११४६ नादिस ( नानि स ) ; राप्र. ५६ प्रविशेत गृहं ( प्रविश्यान्तर्गृहं ) ; नीम. ४ राप्रवत् ; राकौ. ३२६ हृष्टन ( हृष्टं न ) तीस्ततः ( तींस्ततः ) शेषं राप्रवत् .

(४) विध. २।२११४७ ; राप्र. ५६ स्तास्तु (स्ताश्च) स पृथ्वीं ( च धात्रीं ) हि कुर्यात् ( विदध्यात् ) ; नीम. ४ स्तास्तु ( स्ताश्च ) स पृथ्वीं वशगां हि कुर्यात् ( तु धात्रीं वशगं विदध्यात् ) ; राकौ. ३२६ तास्तास्तु ( तांस्तांश्च ) स्यान्मु ( सन्मु ) स पृथ्वीं ( च धात्रीं ) हि कुर्यात् ( विदध्यात् ).

(५) विध. २।२२२।१ ; राप्र. ६६ धर्मज्ञ ( दैवज्ञः ) ; राकौ. ३४६ राप्रवत् .

(१) विध. २।२२२।२ ; राप्र. ६६ ; राकौ. ३४७.

(२) विध. २।२२२।३ ; राप्र. ६६–६७ सकलं ( कलशं ) ; राकौ. ३४७ शब्दा ( मब्दा ) कुश ( कुल ) सकलं ( कलशं ).

(३) विध. २।२२२।४ ; रार. ७५ प्रतीकमात्रम् (=) ; राप्र. ६७ ; नीम. २६ ; राकौ. ३४७.

(४) विध. २।२२२।५ ; राप्र. ६७ द्धस्तु ( द्धश्च ) नैर्ऋ ( निर्ऋ ) ; नीम. २६ राप्रवत् ; राकौ. ३४७ द्धस्तु ( द्धश्च ) ते ( च ) नैर्ऋति ( नैर्ऋत ).

(५) विध. २।२२२।६ ; राप्र. ६७ ; नीम. २६ ; राकौ. ३४७.

(६) विध. २।२२२।७ ; राप्र. ६७ भद्रो ( रुद्रो ) दक्षो ( दाक्षी ) च ( तु ) ; नीम. २६ राप्रवत् ; राकौ. ३४७ राप्रवत् .

(७) विध. २।२२२।८ ; राप्र. ६७ वानपि ( वानथ ); नीम. २६ ; राकौ. ३४७ राप्रवत् .

[1]एते त्वामभिषिञ्चन्तु प्रजाध्यक्षाः समागताः।
प्रभासुरा बर्हिषदो ह्यग्निष्वात्तास्तथैव च॥
[2]क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः।
एते त्वामभिषिञ्चन्तु पितरश्चाग्निभिः सह॥
[3]लक्ष्मीर्देवी सती ख्यातिरनसूया तथा स्मृतिः।
संभूतिः सन्नतिश्चैव क्षमा प्रीतिस्तथैव च॥
[4]स्वाहा स्वधा च त्वा राजन्नभिषिञ्चन्तु मातरः।
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा॥
[5]बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः सिद्धिश्च पार्थिव।
एतास्त्वामभिषिञ्चन्तु धर्मपत्न्यः समागताः॥
[6]अरुन्धती वसुर्जामी लम्बा भानुर्मरुत्वती।
संकल्पा च मुहूर्ता च साध्या विश्वास्तथैव च॥
[7]धर्मपत्न्यस्तथाऽन्यास्त्वामभिषिञ्चन्तु पार्थिव।
अदितिश्च दितिस्ताम्रा ह्यरिष्टा सुरसा मुनिः॥

(१) विध. २।२२।९ ; राप्र. ६७ सुरा (करा) ह्यग्नि (अग्नि); नीम. २६ राप्रवत्; राकौ. ३४७ राप्रवत्.

(२) विध. २।२२।१० ; राप्र. ६७ ; नीम. २६ ; राकौ. ३४७.

(३) विध. २।२२।११ ; राप्र. ६७ देवी सती (वेंदी शची); नीम. २६ राप्रवत्; राकौ. ३४७ देवी सती (वेंदः शची).

(४) विध. २।२२।१२ ; राप्र. ६७ ; त्वा (ते) क्रिया तथा (तथा क्रिया); नीम. २७ ते (त्वा) श्रद्धा क्रिया तथा (लक्ष्मीस्तथा क्रिया); राकौ. ३४७-३४८ राप्रवत्.

(५) विध. २।२२।१३ ; राप्र. ६७ ; नीम. २७ ; राकौ. ३४८ शान्ति (क्षान्ति).

(६) विध. २।२२।१४ ; राप्र. ६७ जामी (यामी) विश्वास्त (विश्वा त) ; नीम. २७ राप्रवत्; राकौ. ३४८ वसुर्जामी लम्बा भानु (वसुमती लम्बभानु) संकल्पा (संकल्या) मुहूर्ता (मुहूर्त्या).

(७) विध. २।२२।१५ ; राप्र. ६७ पत्न्यस्तथा (पत्न्यो दशा) उत्तरार्धे (अदितिर्दितिर्दनुः काला सुदंष्टा नायुषा मुनिः॥) ; नीम. २७ राप्रवत्; राकौ. ३४८ पत्न्यस्तथा (पत्न्यो दशा) उत्तरार्धे (अदितिर्दितिर्दनुस्ताम्रा ह्यरिष्टातापुषा मुनिः॥).

[1]कद्रूः क्रोधवशा प्राधा विनता सुरभिस्त्रिभिः।
एतास्त्वामभिषिञ्चन्तु कश्यपस्य प्रियाः स्त्रियः॥
[2]पत्नी ते बहुपुत्रस्य सुप्रभा या च भामिनी।
समायात्वभिषेकाय विजयाय च पार्थिव॥
[3]कृशाश्वपत्नी च तथा सुप्रभा च जया तथा।
अस्त्रग्रामस्तयोः पुत्रो विजयं विदधातु ते॥
[4]मनोरमा भानुमती विशाला या च बाहुदा।
अरिष्टनेमी पत्न्यस्त्वामभिषिञ्चन्तु पार्थिव॥
[5]कृत्तिका रोहिणी देवी इल्वला बाहुरेव च।
पुनर्वसुश्च तिष्यश्च तथाऽऽश्लेषा च पार्थिव॥

(१) विध. २।२२।१६ ; राप्र. ६८ प्राधा (प्राची) त्रिभिः (स्तथा); नीम. २७ राप्रवत्; राकौ. ३४८ राप्रवत्.

(२) विध. २।२२।१७ ; राप्र. ६८ ते (तु) सुप्रभा (सपुत्रा); नीम. २७ सुप्रभा (सुपुत्रा); राकौ. ३४८ सुप्रभा या च (सुपुत्रायाश्च).

(३) विध. २।२२।१८ ; राप्र. ६८ च जया (तु जया) अस्त्रग्राम (सुदर्शन) विदधातु (च ददातु); नीम. २७ च जया (तु जया) अस्त्रग्रामस्त (सुदर्शना त); राकौ. ३४८ च जया (सुजया) अस्त्रग्राम (सुदर्शन).

(४) विध. २।२२।१९ ; राप्र. ६८ नेमी प (नेमिप); नीम. २७ राप्रवत्; राकौ. ३४८ राप्रवत्.

(५) विध. २।२२।२०-२१ ; राप्र. ६८ इल्वला बाहु (इला रुद्राणि) तिष्य (पुष्य) तथैवोत्तरफाल्गुनी (उत्तरा च क्षितीश्वरा) स्वातिर्वि (स्वाती वि) नराधिप (तथा नृप) ; नीम. २७ (कृत्तिका रोहिणी देवी विशाखा च तथा नृप॥); राकौ. ३४८ इल्वला बाहु (इला रुद्राणि) तिष्य (पुष्य) चतुर्थार्धे (हस्ता चित्रा तथा स्वाती विशाखा च तथा नृप॥).

मघा च फाल्गुनी पूर्वा तथैवोत्तरफाल्गुनी ।
हस्तश्चित्रा तथा स्वातिर्विशाखा च नराधिप ॥
[1]अनुराधा तथा ज्येष्ठा मूलं च वसुधाधिप ।
आषाढा च तथा पूर्वा तथैव नृप चोत्तरा ॥
[2]अभिजिच्च तथा श्रुत्या धनिष्ठा च नराधिप ।
तथा शतभिषक् चैव पूर्वाभाद्रपदा च या ॥
[3]उत्तरा रेवती राजन्नश्विनी भरणी तथा ।
एतास्त्वामभिषिञ्चन्तु सोमपत्न्यः समागताः ॥
[4]मृगी च मृगमन्दा च श्वेता भद्रासना हरिः ।
भूता च कपिशा दंष्ट्री सुरसा सरमा तथा ॥
[5]एताः पुलहपत्न्यस्त्वामभिषिञ्चन्तु पार्थिव ।
श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा ॥

(१) विध. २।२२।२२ ; राप्र. ६८ चतुर्थचरणे (तथाऽन्या चोत्तरा द्वया) ; नीम. २७ अनु (अनू) चतुर्थचरणे (तथा या चोत्तराह्वया) ; राकौ. ३४८–३४९ मूलं च (मूलश्च) चतुर्थचरणे (तथाऽन्ये चोत्तराह्वया).

(२) विध. २।२२।२३ तथा श्रुत्या (तथाऽश्वथो) ; राप्र. ६८ नराधिप (तथैव च) भिषक् (भिषा) ; नीम. २७ नराधिप (तथैव च) च या (तथा) ; राकौ. ३४९ श्रुत्या (श्रुत्यो) पूर्वा (पूर्व) शेषं राप्रवत्.

(३) विध. २।२२।२४ ; राप्र. ६८ ; नीम. २७ ; राकौ. ३४९.

(४) विध. २।२२।२५ ; राप्र. ६८ उत्तरार्धे (पूता च कपिता दंष्ट्रा सुरसा सरसा तथा ॥) ; नीम. २७ (मृगी च मृगचर्मा च श्वेतभद्रचरा हरिः । पूता च कपिता दंष्ट्रा सुरभा सुलभा तथा ॥) ; राकौ. ३४९ उत्तरार्धे (प्लुता च कपिला दंष्ट्री सुरसा सारसा तथा ॥).

(५) विध. २।२२।२६ ; राप्र. ६८ पुलह (पुलस्त्य) शुकी तथा (तथा शुकी) ; नीम. २७ राप्रवत् ; राकौ. ३४९ राप्रवत्.

[1]पत्न्यस्त्वामभिषिञ्चन्तु अरुणस्यार्कसारथेः ।
आयतिर्नियतिश्चैव रात्रिर्निद्रा तथैव च ॥
[2]एतास्त्वामभिषिञ्चन्तु लोकसंस्थानहेतवः ।
उमा मेना शची चैव धूम्रोर्णा निवृतिस्तथा ॥
[3]गौरी शिवा च सिद्धिश्च वेला चैवाथ नड्वला ।
असिक्नी च तथा ज्योत्स्ना या च देवी वनस्पतेः ॥
[4]एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
महाकल्पश्च कल्पश्च मन्वन्तरयुगानि च ॥
[5]संवत्सराणि सर्वाणि तथा चैवायनद्वयम् ।
ऋतवश्च तथा मासाः पक्षौ रात्र्यहनी तथा ॥
[6]संध्याश्च तिथयश्चैव मुहूर्ताः करणानि च ।
एते त्वामभिषिञ्चन्तु कालस्यावयवाः शुभाः ॥

(१) विध. २।२२।२७ ; राप्र. ६८–६९ तथैव च (च पार्थिव) ; नीम. २७ चतुर्थचरणे (रात्रिनिद्रा च पार्थिव) ; राकौ. ३४९ राप्रवत्.

(२) विध. २।२२।२८ ; राप्र. ६९ मेना (सेना) धूम्रोर्णा निवृति (धूमोर्णा निर्ऋति) ; नीम. २७ राप्रवत् ; राकौ. ३४९ मेना (सेना) निवृति (निर्ऋति).

(३) विध. २।२२।२९ ; राप्र. ६९ पूर्वार्धे (गौरी शिवा च बुद्धिश्च वलया चैव नन्दना ।) असिक्नी (आनृक्या) स्पतेः (स्पतिः) ; नीम. २७ राप्रवत् ; राकौ. ३४९ पूर्वार्धे (गौरी शिवा च बुद्धिश्च वलया चैव नन्दना ।) असिक्नी (अवृक्षा) स्पतेः (स्पतिः).

(४) विध. २।२२।३० ; राप्र. ६९ कल्पश्च कल्प (कालश्च काल) ; राकौ. ३४९ कल्पश्च कल्प (कल्यश्च कल्य).

(५) विध. २।२२।३१ ; राप्र. ६९ पक्षौ (पक्षा) ; राकौ. ३४९ राप्रवत्.

(६) विध. २।२२।३२ ; राप्र. ६९ ; नीम. २७ एते त्वा (एतास्त्वा) उत्त. ; राकौ. ३४९.

[1]आदित्यश्चन्द्रमा भौमो बुधो जीवः सितार्कजौ।
ग्रहास्त्वामभिषिञ्चन्तु राहुकेतू च पार्थिव ॥

[2]स्वायंभुवो मनुः पूर्वो मनुः स्वारोचिषस्तथा ।
औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥

[3]वैवस्वतोऽथ सावर्णो दक्षब्रह्मसुतावुभौ ।
धर्मपुत्रो रुद्रपुत्रो रौच्यो भौत्यश्च यो मनुः ॥

[4]एते त्वामभिषिञ्चन्तु मनवश्च चतुर्दश ।
विश्वभुक् च विपश्चिच्च सुशान्तिश्च शिखी विभुः ॥

[5]मनोजवस्तथौजस्वी बहिरद्भुतशान्तिकौ ।
वृषश्च ऋतधामा च दिवस्पाच्छुचिरेव च ॥

(१) विध. २।२२।३३ ; राप्र. ६९ द्वितीयचरणे ( बुधजीवसितार्कजाः ) ; नीम. २७ चतुर्थचरणे (राहुः केतुश्च तर्पिताः) शेषं राप्रवत् ; राकौ. ३४९–३५० राहुकेतू च (राहुः केतुश्च) शेषं राप्रवत्.

(२) विध. २।२२।३४ पूर्वो मनुः (पूर्वमनुः) ; राप्र. ६९ ; नीम. २७ मनुः पूर्वो (मनोः पुत्रो) ; राकौ. ३५०.

(३) विध. २।२२।३५ पूर्वार्धे ( वैवस्वतो यथाकर्णो दक्षो ब्रह्मसुतावुभौ । ) रौच्यो ( रोच्यो ) ; राप्र. ६९ भौत्यश्च ( भौसश्च ) ; नीम. २७ ; राकौ. ३५० भौत्यश्च ( भौमश्च ).

(४) विध. २।२२।३६ ; राप्र. ६९ वश्च (वस्तु) उत्तरार्धे (विश्वभुग्विश्वपश्चित्रः स्वचित्तश्च शिखी विभुः ॥) ; नीम. २७ उत्तरार्धे (विश्वभुग्विश्वपश्चित्रसुशान्तः सुसुखी विभुः ॥) ; राकौ. ३५० वश्च (वस्तु) उत्तरार्धे (विश्वभुग्विश्वपाश्चित्रः सुशातः सुशिखी विभुः ॥).

(५) विध. २।२२।३७ ; राप्र. ६९ द्वितीयचरणे (बलिरङ्कतिमान्तिकौ) दिवस्पाच्छु (दिविस्पृक् शु) ; नीम. २७ द्वितीयचरणे (बलिरङ्कतमान्तिकौ) उत्तरार्धे (वृषश्च कतिधामा च दिविस्पृक् शुचिरेव च ॥) ; राकौ. ३५० द्वितीयचरणे ( बलिरन्तिकमान्तिकौ ) उत्तरार्धे ( वृषश्चक्रस्तधामाश्च दिवस्पृक् शुचिरेव च ॥).

[1]एते त्वामभिषिञ्चन्तु देवनाथाश्चतुर्दश ।
रैवतश्च कुमारश्च तथा वर्चा विनायकः ॥

[2]वीरभद्रश्च नन्दी च विश्वकर्मा मनोजवः ।
एते त्वामभिषिञ्चन्तु सुरमुख्याः समागताः ॥

[3]नासत्यौ देवभिषजौ भवेतां विजयाय ते ।
धरो रुद्रश्च सोमश्च आपश्चैवानलानिलौ ॥

[4]प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ महाप्रभाः ।
एते त्वामभिषिञ्चन्तु देवमुख्याः समागताः ॥

[5]आत्मा चाऽऽयुर्मनो दक्षो ह्यापः प्राणस्तथैव च ।
हविष्मांश्च गविष्ठश्च ऋतः सत्यश्च पार्थिव ॥

[6]अभिषिञ्चन्तु राजंस्त्वां देवा ह्याङ्गिरसा दश ।
क्रतुर्दक्षो वसुः सत्यः कालः कामो मुनिस्तथा ॥

(१) विध. २।२२।३८ ; राप्र. ६९ नाथा (पाला) रैवत ( रेवन्त ) वर्चा विनायकः ( वर्चाः कुमारकः ); नीम. २७ राप्रवत् ; राकौ. ३५० रैवत ( रैवत ) शेषं राप्रवत् .

(२) विध. २।२२।३९ ; राप्र. ६९–७० मनो (पुरो) ; नीम. २७ राप्रवत् ; राकौ. ३५० मनो (पुरो) सुर (वसु).

(३) राप्र. ७० ; राकौ. ३५० रुद्र (ध्रुव).

(४) राप्र. ७० ; राकौ. ३५० भास (भात).

(५) विध. २।२२।४० ; राप्र. ७० चाऽऽयु (ह्यायु) दक्षो ह्यापः ( दक्षः पटुः ) ष्मांश्च (ष्यश्च) ; ऋतः (क्रतः) ; नीम. २७ चाऽऽयुर्मनो दक्षो ह्यापः (ह्यासुमन्तो दक्षः पटुः) ष्मांश्च (ष्यश्च) ; राकौ. ३५० (आत्मा ह्यायुर्मनो दक्षः पटुः प्राणास्तथैव च । हविष्यश्च गरिष्ठश्च क्रतः सत्यश्च पार्थिव ॥).

(६) विध. २।२२।४१ ; राप्र. ७० ह्याङ्गिरसा (ह्याङ्गिरसो ); नीम. २७ दक्षो ( दक्षा ) कालः कामो ( कालकामौ ) शेषं राप्रवत् ; राकौ. ३५० क्रतु ( ऋतु ) शेषं राप्रवत् .

[1]कुरवान्मनुजश्चैव रोचमानस्तथैव च।
एते त्वामभिषिञ्चन्तु विश्वेदेवास्तथा दश॥
[2]अङ्गारकस्तथा सर्पो निर्ऋतिश्च तथा घसः।
अजैकपादहिर्बुध्न्यो धूमकेतुस्तथा द्विजः॥
[3]भरतश्च तथा मृत्युः कापालिरथ किङ्किणिः।
एकादशैते रुद्रास्त्वामभिषिञ्चन्तु पार्थिव॥
[4]भुवनो भावनश्चैव सुजन्यः सुजनस्तथा।
क्रतुः सर्वश्च मूर्धा च त्याज्यश्चैव स्तुतस्तथा॥
[5]प्रसवश्चाव्ययश्चैव दक्षश्च मनुजाधिप।
एते त्वामभिषिञ्चन्तु भृगवो नाम देवताः॥
[6]मनो मन्ता च प्राणश्च नरोऽपानश्च वीर्यवान्।
विनिर्भयो नयश्चैव हंसो नारायणस्तथा॥
[7]विभुश्चापि प्रभुश्चापि देवश्रेष्ठा जगद्धिताः।
एते त्वामभिषिञ्चन्तु साध्या द्वादश पार्थिव॥

[1]धाता मित्रोऽर्यमा पूषा शक्रेशौ वरुणो भगः।
त्वष्टा विवस्वान्सविता विष्णुर्द्वादशमस्तथा॥
[2]एते त्वामभिषिञ्चन्तु कश्यपादितिसंभवाः।
एकज्योतिश्च द्विज्योतिस्त्रिचतुर्ज्योतिरेव च॥
[3]एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः।
इन्द्राश्च गत्या दृश्यन्ते ततः प्रतिसकृत्तथा॥
[4]मितश्च संमितश्चैव अमितश्च महाबलः।
ऋतजित्सत्यजिच्चैव सुषेणः श्येनजित्तथा॥
[5]अतिमित्रो नमित्रश्च पुरुमित्रः पुरानितः।
ऋतश्च ऋतधाता च विधाता धारणो ध्रुवः॥
[6]विधारणो महातेजा वासवस्य परः सखा।
ईदृक्षश्चाप्यदृक्षश्च एतादृगमिताशनः॥

---

(१) विध. २।२२।४२; राप्र. ७० कुरवा (धृतिमा); नीम. २७ राप्रवत्; राकौ. ३५१ राप्रवत्.

(२) विध. २।२२।४३; राप्र. ७० सर्पो (शर्वो) घसः (स्वरा) ध्न्यो धूम (ध्न्यः पुष्प) द्विजः (बुधः); नीम. २७ राप्रवत्, उत्त.; राकौ. ३५१ सर्पो (सर्वो) घसः (स्वराट्) बुध्न्यो धूम (ब्राध्न्या पुष्प) द्विजः (बुधः).

(३) विध. २।२२।४४; राप्र. ७०; नीम. २७; राकौ. ३५१ द्वितीयचरणे (कपालिरथ किङ्किणी).

(४) विध. २।२२।४५; राप्र. ७० उत्तरार्धे (क्रतुः सुवर्णवर्णश्च व्यजश्च व्यसुतस्तथा॥); नीम. २७ राप्रवत्; राकौ. ३५१ सुजन्यः (सुजन्म) उत्तरार्धे (ऋतुः सुवर्णवर्णश्च वाज्यश्च व्यसुतस्तथा॥).

(५) विध. २।२२।४६; राप्र. ७० दक्ष (दत्त); नीम. २७; राकौ. ३५१.

(६) विध. २।२२।४७; राप्र. ७० मन्ता च (मरुच) विनिर्भयो (चित्तिर्हयो); नीम. २७ मनो मन्ता च (मनोप्ररुश्च) विनिर्भयो (चितिर्हयो); राकौ. ३५१ मन्ता च (मरुच) विनिर्भयो (विनिर्हयो).

(७) विध. २।२२।४८; राप्र. ७० पूर्वार्धे (विभुश्चापि दिविश्रेष्ठस्तथाऽन्यश्च जगद्धितः।); नीम. २७ पूर्वार्धे (विभुश्चापि दिविश्रेष्ठस्तथाऽन्यश्च जगद्धितः।); राकौ. ३५१ नीमवत्.

(१) विध. २।२२।४९; राप्र. ७० शक्रेशौ (शक्रोंऽशो) मस्तथा (मः स्मृतः); नीम. २७ राप्रवत्; राकौ. ३५१ शक्रेशौ (शक्रोंऽशो) दशमस्तथा (दश यः स्मृतः).

(२) विध. २।२२।५०; राप्र. ७१ कश्य (काश्य) उत्तरार्धे (एकद्वित्रिचतुर्ज्योतिः पञ्चज्योतिस्तथैव च॥); नीम. २८ राप्रवत्; राकौ. ३५१ उत्तरार्धे राप्रवत्.

(३) विध. २।२२।५१ कृत्तथा (कृत्तया); राप्र. ७१ इन्द्रा (इन्द्र); नीम. २८ राप्रवत्; राकौ. ३५१ इन्द्रा (इन्द्र) कृत्तथा (रस्तथा).

(४) विध. २।२२।५२ श्येन (सत्य); राप्र. ७१ उत्त.; नीम. २८; राकौ. ३५१.

(५) विध. २।२२।५३; राप्र ७१ (अतिमित्रस्तथाऽमित्रः पुरुजिच्चापराजितः। ऋतश्च ऋतवान् धाता वरुणो विधृतो ध्रुवः॥); नीम. २८ राप्रवत्; राकौ. ३५२ राप्रवत्, ऋतवान् (ऋतवाग्) इति विशेषः.

(६) विध. २।२२।५४; राप्र. ७१ तृतीयचरणे (ईदृगन्यादृशश्चैव); नीम. २८ राप्रवत्; राकौ. ३५२ परः सखा (परस्य वा) शेषं राप्रवत्.

[1]क्रीतिनः प्रसदक्षश्च सरभश्च महायशाः ।
धातुरुग्रो ध्वनिर्भीमो ह्यतियुक्तः क्षिपः सहः ॥
[2]द्युतिर्वपुरनाधृष्यो वासः कामो जयो विराट् ।
एते त्वामभिषिञ्चन्तु मरुतस्ते समागताः ॥
[3]देवा एकोनपञ्चाशन्महाबलपराक्रमाः ।
चित्राङ्गदश्चित्ररथश्चित्रसेनश्च वीर्यवान् ॥
[4]ऊर्णायुरनघश्चैव उग्रसेनश्च वीर्यवान् ।
धृतराष्ट्रश्च गोपश्च सूर्यावर्तस्तथैव च ॥
[5]युगपस्तृणयः कार्ष्णिर्नन्दश्चित्रस्तथैव च ।
कलिः शालिः शिरा राजन्पर्जन्यो नारदस्तथा ॥

(१) विध. २।२२।५५ ; राप्र. ७१ आद्यचरणे ( क्रीडनश्च तथा शक्तिः ) ध्वनि ( मुनि ) तियुक्तः ( मिमुक्तः ) ; नीम. २८ पूर्वार्धे ( क्रीडनश्च तथा शक्तिः सभरश्च महायशाः । ) ध्वनि ( मुनि ) ह्यतियु ( अतिमु ); राकौ. ३५२ पूर्वार्धे ( क्रीडनश्च तथा शक्तिः भरतश्च महायशाः । ) रुग्रो ध्वनि ( रुग्रो मुनि ) ह्यति (अभि).

(२) विध. २।२२।५६ ; राप्र. ७१ तस्ते (तश्च); नीम. २८ राप्रवत् ; राकौ. ३५२ द्युति ( धृति ) शेषं राप्रवत् .

(३) विध. २।२२।५७ ; राप्र. ७१ एको (ह्येको); नीम. २८ राप्रवत् ; राकौ. ३५२ राप्रवत् .

(४) विध. २।२२।५८ ; राप्र. ७१ गोपश्च सूर्यावर्त (सोमश्च सूर्यवर्चा) ; नीम. २८ राप्रवत् ; राकौ. ३५२ ऊर्णा (पूर्णा) शेषं राप्रवत् .

(५) विध. २।२२।५९ ; राप्र. ७१ (दुराधस्तृणपः कीर्णिर्नन्दिश्चित्ररथस्तथा। कलिश्चाप्यङ्गिरा राजन् पर्जन्यो नारदस्तथा ॥ ) ; नीम. २८ (दुराधस्तृण्णयः कीर्णिर्नन्दिश्चित्रस्तथैव च। कलिश्चाप्यङ्गिरा राजन् पर्जन्यो नारदस्तथा ॥ ) ; राकौ. ३५२ ( दुराधस्तृणवः कीर्णिर्वन्दिश्चित्ररथस्तथा । कालश्चाप्यन्तको राजन् पर्जन्यो नारदस्तथा ॥ ).

[1]वृषपर्वा च हंसश्च तथा चैव हहा हुहूः ।
विश्वावसुस्तुम्बुरुश्च तथा च सुरुचिश्च यः ॥
[2]एते त्वामभिषिञ्चन्तु गन्धर्वाः पृथिवीपते ।
आह्लुत्यस्ता भवत्यश्च वर्गवत्यस्तथैव च ॥
[3]आयुर्वत्यस्तथोर्जाश्च तथा वै कुरवाः स्तवाः ।
बह्वायुश्चामृतायुश्च भुवश्चैव रुचस्तथा ॥
[4]भीरवः शोभयन्त्यश्च दिव्या याश्चाप्सरोगणाः ।
एते त्वामभिषिञ्चन्तु समागत्य महीपते ॥
[5]अनवद्या सत्यकामा चानूना वरुणा प्रिया ।
अनूपा सुभगा चैव सुकेशा च मनोवती ॥

(१) विध. २।२२।६० ; राप्र. ७१ स्तुम्बुरु (स्ताम्रक) च सुरु (वसुरु) ; नीम. २८ द्वितीयचरणे (हाहा हूहूस्तथैव च ) स्तुम्बुरु ( स्ताम्रक ) ; राकौ. ३५२ हहा हूहूः ( हाहा हुहू: ) शेषं राप्रवत् .

(२) विध. २।२२।६१ ; राप्र. ७१ उत्तरार्धे ( आह्लुत: शोभयन्त्यश्च वेगवत्यस्तथैव च ॥ ) ; नीम. २८ राप्रवत् ; राकौ. ३५२ उत्तरार्धे ( आह्लुत: सोमवन्त्यश्च वेगवत्यस्तथैव च ॥ ).

( ३ ) विध. २।२२।६२ ; राप्र. ७१ ( आप्नुवत्यस्तथोर्जश्च तथा वेकुरयः शुभाः । बभ्रवश्चामृतरुचो भुवश्चैव रुचस्तथा ॥ ) ; नीम. २८ ( आप्नुवत्यस्तथोर्जश्च तथा वेकुरुपच्छुभाः । बभ्रवश्चामृतरुचो भुवश्चैव रुचस्तथा ॥ ) ; राकौ. ३५२ (आध्रुवत्यस्तथोर्जाश्चस्तथा वेकुरयः शुभाः । बभ्रावश्चामृतरुचो भुवश्चैव रुचस्तथा॥).

(४) विध. २।२२।६३ ; राप्र. ७२ ( भीरवः शोचयन्त्यश्च दिव्या ह्यप्सरसां गणाः । एतास्त्वामभिषिञ्चन्तु कामिन्यस्तरुणप्रियाः ॥ ) ; नीम. २८ राप्रवत् ; राकौ. ३५२ ( भीरवः शोचयन्त्यश्च दिव्याश्चाप्सरसां गणाः । एते त्वामभिषिञ्चन्तु कामिन्यस्तरुणप्रियाः ॥ ).

(५) विध. २।२२।६४ ; राप्र. ७२ उत्तरार्धे ( अनुत्तमा सुरूपा च सुकेशी च मनोवती ॥ ) उत्त. ; नीम. २८ सर्वं राप्रवत् ; राकौ. ३५३ सर्वं राप्रवत् .

[१]मेनका सहजन्या च पर्णाशा पुञ्जिकस्थला ।
कृतस्थला घृताची च विश्वाची पूर्वचित्त्यपि ॥
[२]प्रम्लोचा चाप्यनुम्लोचा रम्भा चैवोर्वशी तथा ।
पञ्चचूडा सानुमती चित्रलेखा च पार्थिव ॥
[३]मिश्रकेशी मरीचिश्च विद्युत्पर्णा तिलोत्तमा ।
अद्रिका लक्ष्मणा क्षेपा असिता रुचिका तथा ॥
[४]सुहेमा चाथ हेमा च शाड्वली च वपुस्तथा ।
सुव्रता च सुबाहुश्च सुगन्धा सुवपुस्तथा ॥
[५]पुण्डरीका सुदाना चासुदाना सुरसा तथा ।
हेमा शारद्वती चैव सूनृता कमलालया ॥
[६]सुमुखी हंसपादी च वारुणी रतिलालसा ।
एतास्त्वामभिषिञ्चन्तु राजन्नप्सरसः शुभाः ॥

(१) विध. २।२२।६५ त्यपि (त्वपि); राप्र. ७२ कस्थला (कस्थली) कृत (क्रतु); नीम. २८ कस्थला (कास्थला) कृत (क्रतु) त्यपि (त्वपि); राकौ. ३५३ पर्णाशा (वर्णाका) कृत (क्रतु) त्यपि (त्वपि).

(२) विध. २।२२।६६; राप्र. ७२ चा चाप्य (चाथाप्य) सानुमती (सामवती); नीम. २८ च (तु) शेषं राप्रवत्; राकौ. ३५३ राप्रवत्.

(३) विध. २।२२।६७; राप्र. ७२ मरीचि (सुगन्धि) अद्रि (अद्दृ) क्षेपा (क्षेमा); नीम. २८ मरीचि (सुगन्धि) तृतीयचरणे (अदृष्टलक्ष्मणा क्षेमा); राकौ. ३५३ मरीचिश्च (सुगन्धा च) उत्तरार्धे (अदृका लक्ष्मणा क्षेमा अतिसाचिश्रकं तथा ॥).

(४) विध. २।२२।६८; राप्र. ७२ उत्त.; नीम. २८ गन्धा (बोधा) उत्त.; राकौ. ३५३ उत्त.

(५) विध. २।२२।६९; राप्र. ७२ (पुण्डरीका सुदारा च सुराधा सुरसा तथा । हेमा सरस्वती चैव कमला सूनृताऽभया ॥); नीम. २८ (पुण्डरीकासुदारा च सुराधा सुरसा तथा । हेमा सरस्वती चैव कामला सूनृतालया ॥); राकौ. ३५३ राप्रवत्, ताऽभया (तालया) इति विशेषः.

(६) विध. २।२२।७०; राप्र. ७२; नीम. २८ मुखी (मुखा) वारुणी (वासोली); राकौ. ३५३ पादी (पादा) सः शुभाः (सस्तथा).

[१]प्रह्लादश्च महातेजास्तथा राजन्विरोचनः ।
बलिर्बाणस्तथाऽन्ये च दितिपुत्राः समागताः ॥
[२]अभिषिञ्चन्तु दैत्यास्त्वां दिव्येनाप्यम्भसा स्वयम् ।
विप्रचित्तिमुखाः सर्वे दानवास्त्वां समागताः ॥
[३]अभिषिञ्चन्तु राजेन्द्र राजराज्येन सत्वराः ।
हेतिश्चैव प्रहेतिश्च माली शङ्कुस्तथैव च ॥
[४]सुकेशी पौरुषेयश्च यज्ञहा पुरुषाधमः ।
विद्युत्स्फूर्जस्तथा व्याघ्रो वधश्च रसनस्तथा ॥
[५]एते त्वामभिषिञ्चन्तु समागम्याद्य राक्षसाः ।
सिद्धार्थो मणिभद्रश्च सुमनो नन्दनस्तथा ॥
[६]कण्डूतिः पञ्चमश्चैव मणिमान् वसुमांस्तथा ।
सर्वानुभूतिः शङ्खश्च पिङ्गाक्षश्चतुरस्तथा ॥

(१) विध. २।२२।७१; राप्र. ७२ ह्लाद (ह्राद); नीम. २८ बलिर्बा (धन्वी बा) ह्लाद (ह्राद); राकौ. ३५३.

(२) विध. २।२२।७२; राप्र. ७२ स्त्वां दिव्येनाप्य (श्च दिव्येन ह्य); नीम. २८ दैत्यास्त्वां (दैत्याश्च); राकौ. ३५३ स्त्वां दिव्येनाप्य (श्च दिवेत...).

(३) विध. २।२२।७३; राप्र. ७२ (अभिषिञ्चन्तु राजानं राज्यं कर्तुं सुसत्वराः । हेत्यश्चैव प्रहेत्यश्च सलिलेन्द्रस्तथैव च ॥); नीम. २७ राप्रवत्; राकौ. ३५३ राप्रवत्.

(४) विध. २।२२।७४; राप्र. ७२ धमः (दकः) उत्तरार्धे (विद्युत्सूर्यस्तथा व्यासो वधः श्वरसनस्तथा ॥); नीम. २८ धमः (दकः) स्फूर्जस्तथा व्याघ्रो (सूर्यस्तथा व्यासो); राकौ. ३५३ (सुकेशः पौरुषेयश्च यज्ञहासुरवादकः । विद्युत्सूर्यस्तथा व्यासो वचश्च रसनस्तथा ॥).

(५) विध. २।२२।७५; राप्र. ७२ म्याद्य (म्याथ); नीम. २८ सिद्धार्थो मणि (सुसिद्धो माणि); राकौ. ३५३ राप्रवत्.

(६) विध. २।२२।७६ कण्डूतिः (काण्डभिः) मान् वसु (मानुय) भूतिः (भूतः) श्चतुर (श्चस्तर);

[1]यशो मन्दरशोभी च पद्मचन्द्रप्रभंकराः ।
मेघवर्णः सुभद्रश्च प्रद्योतश्च महाघसः ॥
[2]द्युतिमान्केतुमांश्चैव मौलिमांश्च सुदर्शनः ।
श्वेतश्च विपुलश्चैव पुष्पदन्तो जयावहः ॥
[3]पद्मवर्णो बलाकश्च कुमुदश्च बलाहकः ।
पद्मनाभः सुगन्धश्च प्रवीरो विजयः कृतिः ॥
[4]पूर्णमासो हिरण्याक्षः शतजिह्वश्च वीर्यवान् ।
एते त्वामभिषिञ्चन्तु राजन् यक्षेन्द्रसत्तमाः ॥
[5]शङ्खः पद्मश्च राजेन्द्र मकरः कच्छपस्तथा ।
महापद्मश्च नीलश्च खर्वः कुन्दो मुकुन्दकः ।
एते त्वामभिषिञ्चन्तु निधयस्तु समागताः ॥
[6]छागलाश्चैकवक्त्राश्च ये च सूचीमुखा नृप ।
दुष्पूरणा विषादाश्च ज्वलनाङ्गारकास्तथा ॥

राप्र. ७२–७३ ; नीम. २८ कण्डूतिः पन्नम ( कन्दूतिः पन्नग) ; राकौ. ३५३ भूतिः ( भूतः ).

( १ ) विध. २।२२।७७ ; राप्र. ७३ (यमो मन्दरसो भीमः पद्मचन्द्रः प्रभाकरः । मेघवर्णश्च मन्यश्च प्रदोषश्च प्रभाकरः ॥ ) ; नीम. २८ राप्रवत् , चतुर्थचरणे (प्रद्योतश्च महायशाः ) इति विशेषः ; राकौ. ३५४ राप्रवत् , पद्मच ( पद्मश्च ) प्रदोष ( खद्योत ) इति विशेषः .

( २ ) विध. २।२२।७८ ; राप्र. ७३ द्युति ( भूति ) पुष्पदन्तो (प्रद्युम्नश्च) ; नीम. २८ सुदर्शनः (चतुर्दशः) शेषं राप्रवत् ; राकौ. ३५४ द्युति (भूति) पुष्पदन्तो (खद्युम्नश्च).

( ३ ) विध. २।२२।७९ ; राप्र. ७३ वर्णो ( पक्षो ) प्रवी ( सुवी ) ; नीम. २८ पद्मवर्णो ( पक्षयक्षो ) चतुर्थचरणे ( सुवीरो विजयाकृतिः ) ; राकौ. ३५४ राप्रवत् .

( ४ ) विध. २।२२।८० ; राप्र. ७३ चतुर्थचरणे (राजवृद्धाश्च सत्तमाः ) ; नीम. २८ पूर्ण ( पौर्ण ) शेषं राप्रवत् ; राकौ. ३५४ राप्रवत् .

( ५ ) विध. २।२२।८१ शङ्खः पद्मश्च ( शङ्खपद्मस्तु ) द्वितीयार्धं नास्ति ; राप्र. ७३ ; नीम. २९ शङ्खः ( शङ्खं ) ; राकौ. ३५४ शङ्खः ( शेषः ) यस्तु ( यश्च ) .

( ६ ) विध. २।२२।८२ आद्यचरणे ( पलगाश्चैव वक्त्राश्च ) ; राप्र. ७३ ; नीम. २९ छाग ( छग ) नृप ( नृपाः ) ; राकौ. ३५४ दुष्पू ( द्युः पू ).

[1]कुम्भपाताः प्रतुण्डाश्च तपवीरा उलूखलाः ।
अकर्णाश्च कुषण्डाश्च तथा ये पात्रपाणयः ॥
[2]पांसवश्च वितुण्डाश्च निपुणाः स्कन्दनास्तथा ।
एते त्वामभिषिञ्चन्तु पिशाचानां च जातयः ॥
[3]ब्रह्मचर्ये स्थिता दान्ताः सर्वज्ञाः सर्वदर्शिनः ।
नानाप्रकारवदना नानाबाहुशिरोधराः ॥
[4]चतुष्पथपुराट्टालशून्यालयनिकेतनाः ।
मधुरत्वे भवेदेवं ये गता मनुजेश्वराः ॥
[5]ते त्वामद्याभिषिञ्चन्तु भूता भूतपतेः स्वयम् ।
महाकालं पुरस्कृत्य नरसिंहं च मातरः ॥
[6]सर्वास्त्वामभिषिञ्चन्तु राजराज्ये नराधिप ।
गुहः स्कन्दो विशाखश्च नैगमेयस्तथैव च ॥
[7]अभिषिञ्चन्तु राजंस्त्वां सर्वे स्कन्दग्रहाः शुभाः ।
डाकिन्यो याश्च योगिन्यः खेचरीभूचरीश्च याः ॥

( १ ) विध. २।२२।८३ ; राप्र. ७३ पाताः (मात्राः) तप ( उप ) श्च कुषण्डा ( श्चक्रखण्डा ) ; नीम. २९ पात्र ( यात्र ) शेषं राप्रवत् ; राकौ. ३५४ राप्रवत् .

( २ ) विध. २।२२।८४ ; राप्र. ७३ एते त्वा ( एतास्त्वा ) च ( तु ) ; नीम. २९ निपु ( विपु ) च ( तु ) ; राकौ. ३५४.

( ३ ) विध. २।२२।८५ ; राप्र. ७३ दर्शिनः ( दर्शनाः ) वदना ( वचना ) ; नीम. २९ ; राकौ. ३५४.

( ४ ) विध. २।२२।८६ ; राप्र. ७३ उत्तरार्धे ( त्रिपुरारिं भवं देवं ये गता मनुजेश्वर ॥ ) ; नीम. २९ पुरा ( परा ) शेषं राप्रवत् ; राकौ. ३५४ तृतीयचरणे ( त्रिपुरारिं भवं देवं ).

( ५ ) विध. २।२२।८७ ; राप्र. ७३ भूता (गणा) ; नीम. २९ राप्रवत् ; राकौ. ३५४ राप्रवत् .

( ६ ) विध. २।२२।८८ ; राप्र. ७३–७४ गुहः ( ग्रहः ) ; नीम. २९ गुहः ( ग्रहः ) विशाख ( पिशाच ); राकौ. ३५४–३५५.

( ७ ) विध. २।२२।८९ ; राप्र. ७४ ग्रहाः शुभाः ( ग्रहा इमे ) चतुर्थचरणे ( खेचर्यो भूचरास्तथा ) ;

[1]सर्वास्त्वामभिषिञ्चन्तु समेत्य मनुजेश्वर ।
गरुडश्चारुणश्चैव आरुणिश्च महाखगः ॥
[2]संपाती विनतश्चैव विष्णुगन्धः कुमारकः ।
एते त्वामभिषिञ्चन्तु सुपर्णाः पृथिवीपते ॥
[3]अनन्तश्च महानागः शेषो वासुकितक्षकौ ।
सपर्णीरश्च कुम्भश्च वामनश्चाञ्जनस्तथा ॥
[4]ऐरावतो महानागः कम्बलाश्वतरावुभौ ।
ऐलमन्त्रश्च शङ्खश्च कर्कोटकधनंजयौ ॥
[5]महाकर्णमहानीलौ धृतराष्ट्रबलाहकौ ।
कुमारः पुष्पदन्तश्च सुमुखो दुर्मुखस्तथा ॥
[6]सूचीमुखो दधिमुखः कालियः शालिपिण्डकः ।
बिल्वपादः पाण्डुरको नागश्चापूरणस्तथा ॥

[1]कपिलश्चाम्बरीषश्च कुमारश्चाथ कश्यपः ।
प्रह्लादः पुष्पदन्तश्च गन्धर्वश्च मनस्विकः ॥
[2]नहुषः खररोमा च शङ्खपालस्तथैव च ।
पद्मश्च कुलिकश्चैव पाणिरित्येवमादयः ॥
[3]नागास्त्वामभिषिञ्चन्तु राजराज्येन पार्थिव ।
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ॥
[4]सुप्रतीकोऽञ्जनो नीलः पान्तु त्वां सर्वतः सदा ।
चक्रं त्रिशूलं वज्रश्च नन्दकोऽस्त्राणि चाप्यथ ॥
[5]पैतामहास्तथा हंसा वृषभः शांकरस्य च ।
दुर्गासिंहश्च पान्तु त्वां यमस्य महिषस्तथा ॥
[6]उच्चैःश्रवाश्चाश्वपतिस्तथा धन्वन्तरिर्नृप ।
कौस्तुभः शङ्खराजश्च पान्तु त्वां सर्वतः सदा ॥

---

नीम. २९ स्कन्द (स्कन्ध) चतुर्थचरणे (खेचर्यो भूचरास्तथा); राकौ. ३५५ राप्रवत्.

(१) विध. २।२२।९० ; राप्र. ७४ श्चारुण (श्चारण); नीम. २९ आरुणि (अरुणि); राकौ. ३५५.

(२) विध. २।२२।९१ ; राप्र. ७४ विष्णुगन्धः कु (विष्णुर्गन्धकु); नीम. २९ राप्रवत्; राकौ. ३५५ पाती (पातो) शेषं राप्रवत्.

(३) विध. २।२२।९२ ; राप्र. ७४ (अनन्तश्च महानागो वासुकिः शेषतक्षकौ । सुपर्णारिश्च कुम्भश्च वामनोऽथाञ्जनोसमः ॥); नीम. २९ राप्रवत्; राकौ. ३५५.

(४) विध. २।२२।९३ ; राप्र. ७४ नागः (पद्मः) तृतीयचरणे (एलापत्रश्च खण्डश्च); नीम. २९ राप्रवत्, एला (ऐला) इति विशेषः ; राकौ. ३५५ राप्रवत्.

(५) विध. २।२२।९४ ; राप्र. ७४ कर्णमहानीलौ (कर्णो महानीलो); नीम. २९ चतुर्थचरणे (गन्धर्वश्च मनस्विकः) शेषं राप्रवत् ; राकौ. ३५५ राप्रवत्.

(६) विध. २।२२।९५ ; राप्र. ७४ सूचीमुखो (सोमनाथो) रको ना (रकना); राकौ. ३५५ सूचीमुखो (सोमनाथो) पूर (पुर).

(१) विध. २।२२।९६ ; राप्र. ७४ थ कश्यपः (प्यकच्छकः) प्रह्ला (प्रह्ला); राकौ. ३५५ राप्रवत्.

(२) विध. २।२२।९७ ; राप्र. ७४ ; नीम. २९ ; राकौ. ३५५ रोमा च (रोमाश्च) कुलिक (कुलिश).

(३) विध. २।२२।९८ ; राप्र. ७४ राज्येन पार्थिव (राज्ये नराधिप) रावणौ (रावतौ); नीम. २९ राप्रवत्; राकौ. ३५५ राप्रवत्.

(४) विध. २।२२।९९ ; राप्र. ७४–७५ तः सदा (तो द्विपाः) उत्तरार्धं विध. २।२२।१०१ श्लोकानन्तरं विद्यते ; नीम. २९ सर्वं राप्रवत् ; राकौ. ३५५–३५६ तः सदा (तो द्विषाम्) चाप्यथ (वाऽप्यथ) उत्तरार्धक्रमः राप्रवत्.

(५) विध. २।२२।१०० ; राप्र. ७४ पूर्वार्धे (पैतामहस्तथा हंसो वृषभः शांकरस्तथा ।) महिषस्तथा (महिषासनम्); नीम. २९ शंकरस्य च (शांकरस्तथा) पू. ; राकौ. ३५५ पूर्वार्धे (पैतामहस्तथा हंसो वृषभः शांकरस्तथा ।).

(६) विध. २।२२।१०१ ; राप्र. ७४–७५ ; नीम. २९ ; राकौ. ३५६.

[1]सर्वेऽभिषेकं दत्त्वा ते दिशन्तु विजयं ध्रुवम् ।
धर्मश्च व्यवसायश्च सत्यो दानं तपस्तथा ॥
[2]यमो यज्ञस्तथा वायुर्ब्रह्मचर्यं दमः शमः ।
एते त्वामभिषिञ्चन्तु चित्रगुप्तश्च पार्थिव ॥
[3]दण्डश्च पिङ्गलश्चैव मृत्युकालावुभौ तथा ।
वालखिल्यास्तथा सर्वे भवन्तु विजयाय ते ॥
[4]दिग्धेनवश्चतस्रस्त्वां सुरभिश्च तथा नृप ।
अभिषिञ्चन्तु सर्वाभिर्गोभिः सार्धं नरेश्वर ॥
[5]वेदव्यासश्च वाल्मीकिः कमठोऽथ पराशरः ।
देवलः पर्वतश्चैव दुर्वासाश्च तथा मुनिः ॥
[6]याज्ञवल्क्यश्च जाबालिर्जमदग्निः शुचिश्रवाः ।
विश्वामित्रः स्थूलशिराश्च्यवनोऽत्रिर्विदूरथः ॥
[7]एकतश्च द्वितश्चैव त्रितो गौतमगालवौ ।
शाण्डिल्यश्च भरद्वाजो मौद्गल्यो वेदवाहनः ॥

[1]बृहदश्वः कुटिशठो जटाजानुर्घटोदरः ।
यवक्रीतोऽथरैत्यश्च आत्मवानथ जैमिनिः ॥
[2]ऋषिः शार्ङ्गरवश्चैव तथाऽगस्त्यो महातपाः ।
उन्मुचुर्मुमुचुश्चैव इध्मबाहुर्महोदयः ॥
[3]कात्यायनश्च कण्वश्च वल्वकाम्बोरुनन्दनः ।
एते त्वामभिषिञ्चन्तु ऋषयः पार्थिवोत्तम ॥
[4]पृथुर्दिलीपो भरतो दुष्यन्तः शत्रुजिद्बली ।
मनुः ककुत्स्थश्चानेना युवनाश्वो जयद्रथः ॥
[5]मांधाता मुचुकुन्दश्च तथा राजा पुरूरवाः ।
आयुश्च नहुषश्चैव ययातिरपराजितः ॥
[6]इक्ष्वाकुश्च यदुश्चैव पुनर्भूरिश्रवास्तथा ।
अम्बरीषश्च नाभागो बृहदश्वो महाहनुः ॥

---

(१) विध. २।२२।१०२ ; राप्र. ७५ ते (च) सत्यो (सत्यं) ; नीम. २९ व्यवसायश्च (वृद्धशाखाश्च) शेषं राप्रवत् ; राकौ. ३५६ राप्रवत्.

(२) विध. २।२२।१०३ ; राप्र. ७५ आद्यचरणे (यशो यज्ञास्तथैवाऽऽयुर्) ; नीम. २९ राप्रवत् ; राकौ. ३५६ था वायु (थैवाऽऽयु).

(३) विध. २।२२।१०४ ; राप्र. ७५ पूर्वार्धे (दण्डः पिङ्गलकश्चैव मृत्युः कालान्तकावुभौ । ) ; नीम. २९ राप्रवत् ; राकौ. ३५६ पूर्वार्धे (दण्डपिङ्गलकश्चैव मृत्यु-कालान्तकावुभौ । ).

(४) विध. २।२२।१०५ ; राप्र. ७५ ; नीम. २९ ; राकौ. ३५६.

(५) विध. २।२२।१०६ ; राप्र. ७५ कमठो (शमनो) साश्च तथा मुनिः (सा भागुरिः शुचिः) ; नीम. २९ राप्रवत् ; राकौ. ३५६ राप्रवत्.

(६) विध. २।२२।१०७ ; राप्र. ७५ ल्क्यश्च जा (ल्क्यः सजा) ; नीम. २९ ल्क्यश्च जा (ल्क्यः सजा) शिराश्च्यवनो (कच्छो वर्धनो) ; राकौ. ३५६ राप्रवत्.

(७) विध. २।२२।१०८ ; राप्र. ७५ ; नीम. २९ ; राकौ. ३५६.

(१) विध. २।२२।१०९ ; राप्र. ७५ कुटिशठो जटा (कुविभवो जय) उत्तरार्धे (यवक्रीतोऽथ रैभ्यश्च आत्मा-धानश्च जैमिनिः ॥ ) ; नीम. २९ कुटिशठो जटा (कुदि-मडो जप) उत्तरार्धे (यवक्रीतोऽथ रैभ्यश्च आत्मा धामश्च जैमिनिः ॥ ) ; राकौ. ३५६ (बृहदश्वस्तु विभवो जय-जानुर्घटोदरः । यवक्रीतोऽथ रैभ्यश्च आत्माधामश्च जैमिनिः ॥ ).

(२) विध. २।२२।११० ; राप्र. ७५ शार्ङ्गरव (सारङ्गव) उत्तरार्धे (दुदुर्मृदुर्मिशश्चैव वृद्धबाहुर्महो-दयः ॥ ) ; नीम. २९ राप्रवत्, वृद्ध (इन्द्र) इति विशेषः ; राकौ. ३५६ शार्ङ्गरव (शारङ्गव) उत्तरार्धे (दुर्मृदुर्मिशश्चैव वृद्धबाहुर्महोदयः ॥ ).

(३) विध. २।२२।१११ ; राप्र. ७५ वल्वकाम्बोरु (वलाकश्चेभ) ऋषयः (मनुयः) ; नीम. २९ राप्रवत् ; राकौ. ३५६–३५७ वल्वकाम्बोरुन (वलाकश्चैव न) ऋषयः (मुनयः).

(४) विध. २।२२।११२ ; राप्र. ७५ ; नीम. २९ ; राकौ. ३५७ दुष्य (दुष्म) नेना यु (नेन यौ).

(५) विध. २।२२।११३ ; राप्र. ७५–७६ ; नीम. ३० पू. ; राकौ. ३५७.

(६) विध. २।२२।११४ ; राप्र. ७६ पुन (पुरु) ; नीम. ३० राप्रवत् ; राकौ. ३५७ पुन (वपु).

[1]प्रद्युम्नश्चाथ सुद्युम्नो भूरिद्युम्नश्च सृञ्जयः ।
एते चान्ये च राजानस्तव राजन् दिवं गताः ॥
[2]समायान्त्वभिषेकाय विजयाय तथा श्रिये ।
पर्जन्याद्यास्तथा सर्वे वास्तुदेवाः समासतः ॥
[3]द्रुमाश्चौषधयो रत्नबीजानि विविधानि च ।
सर्वे त्वामभिषिञ्चन्तु राजन् राज्येन सत्वराः ॥
[4]पुरुषश्चाप्रमेयात्मा महाभूतानि यानि च ।
पृथिवी वायुराकाशमापो ज्योतिस्तथैव च ॥
[5]मनो बुद्धिस्तथैवाऽऽत्मा अव्यक्तश्च महीपते ।
एते त्वामभिषिञ्चन्तु समेता वसुधाधिप ॥
[6]रुक्मभौमः शिलाभौमः पातालो नीलमृत्तिकः ।
पीतो रक्तक्षितिश्चैव श्वेतभौमस्तथैव च ॥

(१) विध. २।२२।११५ ; राप्र. ७६ ; नीम. ३९ सञ्ज (संज) ; राकौ. ३५७ नीमवत्.

(२) विध. २।२२।११६ ; राप्र. ७६ उत्तरार्धे (पर्जन्याख्यास्तथा भूप मेघाः सर्वे समागताः ॥) ; नीम. ३० श्रिये (श्रियै) उत्तरार्धे (पर्जन्याद्यास्तथा भूप मेघाः सर्वे समागताः ॥) ; राकौ. ३५७ उत्तरार्धे (पर्जन्याद्यास्तथा भूप मेघाः सर्वे समागताः ॥).

(३) विध. २।२२।११७ ; राप्र. ७६ रत्नदी (रत्नं बी) राजन् राज्येन स (राजराज्ये सुस) ; नीम. ३० राप्रवत् ; राकौ. ३५७ रत्नबी (रत्नं दी) राजन् राज्येन (राजराज्येषु).

(४) विध. २।२२।११८ ; राप्र. ७६ ; नीम. ३० ; राकौ. ३५७.

(५) विध. २।२२।११९ ; राप्र. ७६ क्तश्च (क्तं च) ; नीम. ३० ; राकौ. ३५७.

(६) विध. २।२२।१२० ; राप्र. ७६ पीतो रक्तक्षिति (पीतरक्तासिता) ; नीम. ३० उत्तरार्धे (पीतरक्तासिताश्चैव श्वेतभौमास्तथैव च ॥) ; राकौ. ३५७ मृत्तिकः (मृत्तिका) रक्तक्षिति (रक्तः सित).

[1]एते त्वामभिषिञ्चन्तु विजयाय महीपते ।
भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः ॥
[2]तपः सत्यश्च राजेन्द्र विजयाय भवन्तु ते ।
जम्बूशाककुशक्रौञ्चाः शाल्मलिद्वीप एव च ॥
[3]गोमेधः पुष्करश्चैव स्वसाम्यं प्रदिशन्तु ते ।
उत्तराः कुरवः पुण्या रम्या हैरण्वतस्तथा ॥
[4]भद्राश्वः केतुमालश्च वर्षश्चैव इलावृतः ।
हरिवर्षः किंपुरुषो वर्षो भारतसंज्ञकः ॥
[5]एते त्वामभिषिञ्चन्तु समेत्य वसुधाधिप ।
इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान् ॥
[6]नागद्वीपस्तथा सौम्यो गान्धर्वो वारुणस्तथा ।
अयं चरुवसस्तेषां स्वसाम्यं प्रदिशन्तु ते ॥

(१) विध. २।२२।१२१ भूर्लोको (भूलोको) महर्जनः (महज्जनः) ; राप्र. ७६ ; नीम. ३० ; राकौ. ३५७.

(२) विध. २।२२।१२२ ; राप्र. ७६ सत्यश्च (सत्यं च) जम्बूशाककुशक्रौञ्चाः (जम्बूः शाकः कुशः क्रौञ्चः) ; नीम. ३० सत्यश्च (सत्यं च) उत्तरार्धे (जम्बू शाकः कुशः क्रौञ्चः शाल्मलीद्वय एव च ॥) ; राकौ. ३५७ सत्यश्च (सत्यं च) उत्तरार्धे (जम्बूः शाकः कुशः क्रौञ्चः शाल्मलीद्वय एव च ॥).

(३) विध. २।२२।१२३ ; राप्र. ७६ गोमेधः (प्लक्षश्च) साम्यं (स्वाम्यं) ण्वत (ण्वता) ; नीम. ३० राप्रवत् ; राकौ. ३५७–३५८ ण्वत (ण्यगा) शेषं राप्रवत्.

(४) विध. २।२२।१२४ ज्ञकः (ज्ञिकः) ; राप्र. ७६ ; नीम. ३० इलावृतः (इलाव्रतः) ; राकौ. ३५८ भद्राश्वः (भद्राश्व).

(५) विध. २।२२।१२५ ; राप्र. ७६ इन्द्र (इक्षु) कशे (कसे) ; नीम. ३० राप्रवत् ; राकौ. ३५८ राप्रवत्.

(६) विध. २।२२।१२६ ; राप्र. ७७ गान्धर्वो वारुण (गन्धर्वो वरुण) चरुवस (च नवम) साम्यं (स्वाम्यं) ; नीम. ३० राप्रवत् ; राकौ. ३५८ राप्रवत्.

[1]हिमवान् हेमकूटश्च निषधो नीलपर्वतः ।
श्वेतश्च शृङ्गवान्मेरुर्माल्यवान् गन्धमादनः ॥
[2]महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवांस्तथा ।
विन्ध्यश्च पारियात्रश्च सर्वे एव महीधराः ॥
[3]समागम्याभिषिञ्चन्तु त्वामद्य वसुधाधिप ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदस्तथैव च ॥
[4]अथर्ववेदो वेदास्त्वामभिषिञ्चन्तु पार्थिव ।
इतिहासो धनुर्वेदो गन्धर्वश्चाऽऽयुःसंज्ञितः ॥
[5]वेदोपवेदाश्च तथा विजयाय भवन्तु ते ।
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ॥
[6]छन्दोविचितिषष्ठानि विजयं प्रदिशन्तु ते ।
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥
[7]धर्मशास्त्रं पुराणं च विद्या एताश्चतुर्दश ।
सांख्ययोगः पञ्चरात्रं वेदाः पाशुपतं तथा ॥

(१) विध. २।२२।१२७ ; राप्र. ७७ नीलपर्वतः (नील एव तु) उत्तरार्धे ( श्वेतशृङ्गोऽगवान् मेरुर्माल्यवद्गन्धमादनौ ॥ ) ; नीम. ३० राप्रवत् ; राकौ. ३५८ नीलपर्वतः ( नील एव तु ) श्वेतश्च शृङ्गवान् ( श्वेतशृङ्गो गवां ).

(२) विध. २।२२।१२८ ; राप्र. ७७ ; नीम. ३० ; राकौ. ३५८ मानृक्ष ( मान् वृक्ष ).

(३) विध. २।२२।१२९ ; राप्र. ७७ ; नीम. ३० ; राकौ. ३५८.

(४) विध. २।२२।१३० ; राप्र. ७७ गन्ध (गान्ध) श्चाऽऽयुः ( श्चाऽऽयु) ; नीम. ३० राप्रवत् ; राकौ. ३५८ श्चाऽऽयुः ( श्चाऽऽयु ).

(५) विध. २।२२।१३१ ; राप्र. ७७ वेदोप ( सतोप ) ; नीम. ३० राप्रवत् ; राकौ. ३५८ राप्रवत् .

(६) विध. २।२२।१३२ ; राप्र. ७७ ; नीम. ३० पूर्वार्धे ( छन्दोविवितिषष्ठानि विजयाय भवन्तु ते । ) ; राकौ. ३५७ .

(७) विध. २।२२।१३३ ; राप्र. ७७ एता ( ह्येता ) तृतीयचरणे ( सांख्यं योगः पाञ्चरात्रो ) ; नीम. ३० एता ( ह्येता ) पञ्चरात्रं वेदाः ( पाञ्चरात्रो वेदः ) ; राकौ. ३५८ एता ( ह्येता ) रात्रं ( रात्रो ).

[1]कृतान्तपञ्चकं ह्येतच्छास्त्राणि विविधानि च ।
गायत्री पापशमनी दुर्गा देवी महाशिवा ॥
[2]गन्धारी च तथा विद्या विजयं प्रदिशन्तु ते ।
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥
[3]ऋषयो मनवो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥
[4]शस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवास्तथा ॥
[5]स्थानानि च समस्तानि पुण्यान्यायतनानि च ।
जीमूतानि च सर्वाणि तद्विकाराश्च ये तथा ॥
[6]उक्तानि चाप्यनुक्तानि विजयाय भवन्तु ते ।
लवणः क्षारतोयश्च घृतमण्डोदकस्तथा ॥

(१) विध. २।२२।१३४ ; राप्र. ७७ कृतान्त ( कृतान्त ) ह्येतच्छा ( चैव शा ) दुर्गा देवी ( गङ्गादेवी ) ; नीम. ३० दुर्गा देवी ( गङ्गा देवी ) शेषं राप्रवत् ; राकौ. ३५८ राप्रवत् .

(२) विध. २।२२।१३५ ; राप्र. ७७ गन्धा ( गान्धा ) गन्धर्वय ( गन्धर्वा य ) ; नीम. ३० विद्या ( नारी ) शेषं राप्रवत् ; राकौ. ३५९ तथा वि ( महावि ) शेषं राप्रवत् .

(३) विध. २।२२।१३६ ; राप्र. ७७ ; नीम. ३० ; राकौ. ३५९ मनवो ( मुनयो ) .

(४) विध. २।२२।१३७ ; राप्र. ७७ आद्यचरणे ( अस्त्राणि सर्वशस्त्राणि ) वास्तथा ( वाश्च ये ) ; नीम. ३० राप्रवत् ; राकौ. ३५९ शस्त्रा ( अस्त्रा ) च रत्ना ( समस्ता ) वास्तथा ( वाश्च ये ) .

(५) विध. २।२२।१३८ ; राप्र ; ७७–७८ ये तथा ( सर्वशः ) ; नीम. ३० राप्रवत् ; राकौ. ३५९ राप्रवत् .

(६) विध. २।२२।१३९ ; राप्र. ७८ उत्तरार्धे ( लवणक्षीरतोयाश्च घृतमण्डोदकास्तथा ॥ ) ; नीम. ३० उत्तरार्धे ( लवणक्षारतोयाश्च घृतमण्डोदकास्तथा ॥ ) ; राकौ. ३५९ लवणः क्षार ( लवणक्षीर ) घृतम ( घृतं म ).

[1]दधिमण्डोदकश्चैव सुरोदश्च नराधिप ।
तथैवेक्षुरसोदश्च तथा स्वादूदकश्च यः ॥
[2]गर्भोदश्च स्वतोयैस्त्वामभिषिञ्चन्तु पार्थिव ।
चत्वारः सागराश्चैव स्वेन तोयेन पार्थिव ॥
[3]समागम्याभिषिञ्चन्तु विजयं प्रदिशन्तु ते ।
पुष्करश्च प्रयागश्च प्रभासो नैमिषस्तथा ॥
[4]तथा ब्रह्मसरः पुण्यं गयाशीर्षं च पार्थिव ।
कालोदको नन्दिकुण्डस्तथैवोत्तरमानसः ॥
[5]स्वर्गमार्गप्रदश्चैव तथा पञ्चनदश्च यः ।
भृगुतीर्थं चौजसश्च तथैवामरकण्टकः ॥
[6]आश्रमः कालिकायाश्च तृणबिन्दोस्तथाऽऽश्रमः ।
गोपतीर्थं चापतीर्थं विमलः स्वर्ग एव च ॥
[7]जम्बूमार्गश्च राजेन्द्र पुण्यस्तण्डुलिकाश्रमः ।
कपिलस्य तथा तीर्थं तीर्थं वाटिकषण्डिके ॥

[1]महासरस्तथाऽगस्त्यः कुमारीतीर्थं एव च ।
गङ्गातीरः कुशावर्तो बिल्वको नीलपर्वतः ॥
[2]वराहपर्वतश्चैव तीर्थः कनखलस्तथा ।
स्वर्गन्धा वशकुम्भा च तथा शाकंभरी च या ॥
[3]भृगुतुङ्गः सकुब्जाम्रः कपिलस्य तथाऽऽश्रमम् ।
चमसोद्भेदनः पुण्यस्तथा विनशनः शुभः ॥
[4]अजतुङ्गश्च सोमश्च अजोगन्धश्च पार्थिव ।
कालिंजरश्च केदारो रुद्रकोटिस्तथैव च ॥
[5]महालयश्च राजेन्द्र वदनाश्रम एव च ।
नन्दा च सूर्यतीर्थं च सोमतीर्थं शतक्रतोः ॥

---

(१) विध. २।२२।१४० ; राप्र. ७८ दकश्चैव (दकाश्चैव) ; नीम. ३० राप्रवत् ; राकौ. ३५९ राप्रवत्.

(२) विध. २।२२।१४१ ; राप्र. ७८ दश्च स्वतो (दकश्च तो) ; नीम. ३० राप्रवत् ; राकौ. ३५९ गर्भोदश्च (गर्भोदकः).

(३) विध. २।२२।१४२ ; राप्र. ७८ ; नीम. ३० षिञ्चन्तु (षेके तु) षस्तथा (षं तथा) ; राकौ. ३५९.

(४) विध. २।२२।१४३ ; राप्र. ७८ च (तु) ; नीम. ३० ; राकौ. ३५९ राप्रवत्.

(५) विध. २।२२।१४४ ; राप्र. ७८ चौजस (प्रभास) कण्ट (कण्ठ) ; नीम. ३०–३१ चौजस (प्रभास) ; राकौ. ३५९ नीमवत्.

(६) विध. २।२२।१४५ ; राप्र. ७८ तृतीयचरणे (गोतीर्थं चाग्नितीर्थं च) च (तु) ; नीम. ३१ तृतीयचरणे (गोतीर्थं चाग्नितीर्थं च) ; राकौ. ३५९ तृतीयचरणे (गोतीर्थश्चाग्नितीर्थश्च) च (तु).

(७) विध. २।२२।१४६ ; राप्र. ७८ राजेन्द्र (विमलः) स्तण्डु (स्तन्दु) वाटिकषण्डिके (वातिकखण्डिकौ) ; नीम. ३१ राजेन्द्र (विमलः) उत्तरार्धे (कपिलश्च तथा तीर्थस्तीर्थौ वातिकखण्डिकौ ॥) ; राकौ. ३५९–३६० नीमवत्, कपि (कापि) इति विशेषः.

(१) विध. २।२२।१४७ ; राप्र. ७८ स्त्यः कु (स्त्यकु) र्थं एव च (र्थमेव तु) तीरः कुशावर्तो (द्वारकुशावर्तौ) ; नीम. ३१ स्त्यः कु (स्त्यकु) र्थं एव (र्थमेव) गङ्गातीरः (अङ्गद्वारः) ; राकौ. ३६० स्त्यः कुमारीतीर्थं एव च (स्त्यकुमारी तीर्थमेव तु) तीरः (द्वारं).

(२) विध. २।२२।१४८ ; राप्र. ७८ (वाराहः पर्वतश्चैव तीर्थं कनखलं तथा । सुगन्धा च धराकुम्भा तथा शाकंभरीति या ॥) ; नीम. ३१ राप्रवत्, धराकुम्भा त (धरा कुम्भास्त) इति विशेषः ; राकौ. ३६० (वाराहपर्वतश्चैव तीर्थं कनखलं तथा । सुगन्धा च धराकुम्भास्तथा शाकंभरीति च ॥).

(३) विध. २।२२।१४९ ; राप्र. ७८ श्रमम् (श्रमः) शनः शुभः (शनं शुभम्) ; नीम. ३१ श्रमम् (श्रमः) शनः (शनं) ; राकौ. ३६० सकु (सुकु) श्रमम् (श्रमः).

(४) विध. २।२२।१५० ; राप्र. ७८ सोमश्च अजो (मोचश्च अश्व) कालिंजरश्च के (कालंजरः सके) ; नीम. ३१ कोटि (कोणि) शेषं राप्रवत् ; राकौ. ३६० सोमश्च अजो (मोदश्च अश्व) कालिंजरश्च के (कालंजरः सके).

(५) विध. २।२२।१५१ ; राप्र. ७९ पूर्वार्धे (महालयश्च राजेन्द्र बदर्याश्रम एव तु ।) सूर्य (सोम) सोम (सूर्य) ; नीम. ३१ राप्रवत्, तु (च) इति विशेषः ;

[१]अश्विनोर्वरुणस्यापि वायोर्वैश्रवणस्य च ।
ब्रह्मणश्चैव शर्वस्य यमस्य च्यवनस्य च ॥
[२]विरूपाक्षस्य धर्मस्य तथा चाप्सरसां नृप ।
ऋषीणां च वसूनां च साध्यानां मरुतां तथा ॥
[३]आदित्यानां च रुद्राणां तथा चाङ्गिरसां नृप ।
विश्वेदेवभृगूणां च गन्धर्वाणां च मानद ॥
[४]प्लक्षप्रस्रवणश्चैव सुषेणश्च नराधिप ।
शालिग्रामसरश्चैव वाराहो वामनस्तथा ॥
[५]कामाश्रमस्त्रिकूटश्च चित्रकूटस्तथैव च ।
सप्तर्चः क्रतुसारश्च तथा विष्णुपदं सरः ॥
[६]कपिलस्य तथा तीर्थं वासुकेस्तीर्थमेव च ।
सिन्धूत्तमं तपो दानं तथा शूर्पाकरः शुभः ॥

राकौ. ३६० (महाकालश्च राजेन्द्र बदर्याश्रम एव तु । नदी च सोमतीर्थं च सूर्यतीर्थं शतक्रतोः ॥ ).

(१) विध. २।२२।१५२ ; राप्र. ७९ स्यापि (स्याथ) च (तु) ; नीम. ३१ स्यापि (स्याथ) ; राकौ. ३६० स्यापि (स्याथ) णस्य च (णस्य तु) शर्व (सर्व).

(२) विध. २।२२।१५३ ; राप्र. ७९ ; नीम. ३१; राकौ. ३६०.

(३) विध. २।२२।१५४ ; राप्र. ७९ गन्धर्वाणां च (तथाऽन्येषां तु) ; नीम. ३१ गन्धर्वाणां (तथाऽन्येषां); राकौ. ३६० विश्वे (वैश्व) शेषं राप्रवत् .

(४) विध. २।२२।१५५ ; राप्र. ७९ सुषेणश्च (सुषुम्ना च) शालि (शाल) वामन (मानस) ; नीम. ३१ सुषेणश्च (सुपुत्रा च) शेषं राप्रवत् ; राकौ. ३६० प्लक्षप्र (प्लक्षः प्र) वारा (वरा) शेषं राप्रवत् .

(५) विध. २।२२।१५६ कामा (काम) ; राप्र. ७९ सप्तर्चः (सपूर्वः) ; नीम. ३१ राप्रवत् ; राकौ. ३६० राप्रवत् .

(६) विध. २।२२।१५७ ; राप्र. ७९ कपिलस्य (कापिलं च) उत्तरार्धे (सिन्धूत्तमस्तपोद्वारोऽप्यथ सूर्पारकुम्भकः ॥ ) ; नीम. ३१ कपिलस्य (कापिलं च) च (तु) उत्तरार्धे (सिन्धूत्तमस्तपोद्वारोऽप्यथ सूर्पारकुम्भकः ॥); राकौ. ३६० कपिलस्य (कापिलं च) उत्तरार्धे (सिन्धूत्तमस्तपोद्वारोऽप्यथ सूर्पापकुम्भकः ॥ ).

[१]पौण्डीरकश्च राजेन्द्र गङ्गासागरसंगमः ।
सिन्धुसागरयोश्चैव संगमः सुमनोहरः ॥
[२]तथा कुन्दावसुन्धश्च मानसं च महत्सरः ।
तथा बिन्दुसरः पुण्यं सरश्चाच्छोदकं तथा ॥
[३]धर्मारण्यं फल्गुतीर्थं सविमुक्तं तथैव च ।
लौहित्यश्च तथा पुण्यो बदरीपावनः शिवः ॥
[४]तीर्थं सप्तऋषीणां च वह्नितीर्थं च पार्थिव ।
वस्त्रापथस्ततो मेषश्छागलेशश्च पार्थिव ॥
[५]पुष्पन्यासः सकामेशस्तीर्थो हंसपदस्तथा ।
अश्वशीर्षः स कृष्णाख्यो मणिभद्रस्तथैव च ॥

(१) विध. २।२२।१५८ ; राप्र. ७९ पौण्डीरक (पुण्डरीक) ; नीम. ३१ राप्रवत् ; राकौ. ३६०–३६१ राप्रवत् .

(२) विध. २।२२।१५९ ; राप्र. ७९ कुन्दावसुन्ध (कुम्भावसुन्द) च महत् (तु तथा) सरश्चा (सर अ) ; नीम. ३१ कुन्दावसुन्ध (कुम्भामसुन्द) महत्सरः (तथा सरः) सरश्चा (सरस्त्व) ; राकौ. ३६१ कुन्दा (कुम्भा) च महत् (तु तथा) सरश्चा (सरो अ).

(३) विध. २।२२।१६० ; राप्र. ७९ तीर्थं सवि (तीर्थमवि) ; नीम. ३१ राप्रवत् ; राकौ. ३६१ चतुर्थचरणे (बदरी पापनाशिनी).

(४) विध. २।२२।१६१ ; राप्र. ७९ च (तु) उत्तरार्धे (पुण्यवस्त्रापथो मेषच्छागलेशस्तु पार्थिव ॥ ) ; नीम. ३१ तीर्थं च (तीर्थं तु) उत्तरार्धं राप्रवत् ; राकौ. ३६१ तीर्थं च (तीर्थं तु) पू.

(५) विध. २।२२।१६२ ; राप्र. ७९ (पुष्पन्यासस्तथा चैव तीर्थं हंसपदं तथा । अश्वतीर्थं च कर्णाश्वो मणिमन्थस्तथैव च ॥ ) ; नीम. ३१ (पुष्पन्यासस्तथा चैव तीर्थो हंसपदस्तथा । अश्वतीर्थश्च कर्णाश्वो मणिमन्थस्तथैव च ॥ ) ; राकौ. ३६१ नीमवत् .

[1]देविका सिन्धुमार्गश्च स्वर्णबिन्दुस्तथैव च ।
आहल्यकस्तथा तीर्थस्तीर्थश्चैरावतस्तथा ॥
[2]ऐरावतीसमुद्रेद्वे तीर्थं भोगयशस्तथा ।
करवीराश्रमश्चैव नागमोदानिकस्तथा ॥
[3]पापमोचनिकश्चैव ऋणमोचनिकस्तथा ।
उद्वेजनस्तथा पुण्यः पुण्यश्च हरिशेश्वरः ॥
[4]देवब्रह्मसरः पुण्यं सर्पिर्दर्वी च पार्थिव ।
एते चान्ये च बहवः पुण्यसंकीर्तनाः शुभाः ॥
[5]तोयैस्त्वामभिषिञ्चन्तु सर्वपातकनाशनैः ।
गङ्गा महानदी पुण्या ह्लादिनी ह्लादिनी तथा ॥
[6]पावनी च तथा सीता चक्षुः सिन्धुश्च नर्मदा ।
सुप्रभा कातराक्षी च शिथिला मानसी ह्रदा ॥

[1]सरस्वत्योघनादा च सुवेणुर्विमलोदका ।
सिप्रा शोणः शतद्रुश्च सरयूर्गण्डकी तथा ॥
[2]अच्छोदा च विपाशा च चन्द्रभागा इरावती ।
वितस्ता देविका रम्भा कोशी देवह्रदा शिवा ॥
[3]तथैवेक्षुमती पुण्या कौशिकी यमुना तथा ।
गोमती धूतपापा च बाहुदा च दृषद्वती ॥
[4]निःशीरा च तृतीया च लौहित्यश्च महानदः ।
वेदस्मृतिर्वेदसिनी वेत्रघ्नी वरदा तथा ॥
[5]वर्णा मा चन्दना चैव बहुनीरा कुमुद्वती ।
पारा चर्मण्वती रूपा विदिशा वेणुवत्यपि ॥
[6]अवन्ती च तथा कुन्ती सुरसा च पलाशिनी ।
मन्दाकिनी दशार्णा च चित्रकूटा दृषद्वती ॥

---

(१) विध. २।२२।१६३; राप्र. ७९–८० सिन्धु (इन्द्र) उत्तरार्धे (आहल्यकं तथा तीर्थं तीर्थं चैरावतं तथा ॥); नीम. ३१ सिन्धु (इन्द्र) आहल्य (आहल्य); राकौ. ३६१ देविका सिन्धु (वेदिका इन्द्र).

(२) विध. २।२२।१६४ वती (वति); राप्र. ८० यशस्तथा (यशःपदम्) उत्तरार्धे (करवीराह्वयं चैव नागमोवणिकस्तथा ॥); नीम. ३१ यशस्तथा (यशः परम्) उत्तरार्धं राप्रवत्; राकौ. ३६१ (ऐरावती समुद्रे द्वे तीर्थे भोगयशःप्रदे । करवीराह्वयं चैव नागमोचनिकस्तथा ॥).

(३) विध. २।२२।१६५; राप्र. ८० चतुर्थचरणे (संपूज्यः सरसीवरः); नीम. ३१ चतुर्थचरणे (संपूज्यः सरसां वरः); राकौ. ३६१ जन (लन) शेषं राप्रवत्.

(४) विध. २।२२।१६६; राप्र. ८० दर्वी (दधि) च (तु); नीम. ३१ दर्वी च (दधि तु); राकौ. ३६१ राप्रवत्.

(५) विध. २।२२।१६७; राप्र. ८० ह्लादिनी ह्लादिनी (ह्रदिनी ह्लादिनी); नीम. ३१ राप्रवत्; राकौ. ३६१ राप्रवत्.

(६) विध. २।२२।१६८; राप्र. ८० सिन्धुश्च न (सिन्धुः सुन) कातरा (काञ्चना) शिथि (विशा); नीम. ३१ कातरा (काञ्चना) शिथि (विशा); राकौ. ३६१ सीता (पुण्या) शेषं राप्रवत्.

(१) विध. २।२२।१६९; राप्र. ८० वेणुर्वि (वेषा वि) तृतीयचरणे (शिप्रा शोणश्च तर्षश्च); नीम. ३१ त्योघनादा (त्योघनादी) शेषं राप्रवत्; राकौ. ३६१ वेणुर्वि (वेशा वि) तृतीयचरणे (क्षिप्रा शोणश्च तर्षश्च).

(२) विध. २।२२।१७० कोशी (सीता); राप्र. ८० पाशा (भागा); नीम. ३१ पाशा (भागा) कोशी (केशा); राकौ. ३६२ पाशा (भागा) कोशी (कौशी).

(३) विध. २।२२।१७१; राप्र. ८० तथैवेक्षु (तथा चेक्षु) दृषद्वती (सरस्वती); नीम. ३१ च दृष (तु दृष) शेषं राप्रवत्; राकौ. ३६२, ३६१ राप्रवत्, उत्तरार्धं विध. २।२२।१६९ इति श्लोकादूर्ध्वं पठितम्.

(४) विध. २।२२।१७२; राप्र. ८० निःशीरा (निर्विन्ध्या) लौहित्य (लोहित) सिनी (माता); नीम. ३१ पूर्वार्धं राप्रवत्, उत्तरार्धे (देवस्मृतिर्वेदमाता वेदघुर्घुरदा तथा ॥); राकौ. ३६२ राप्रवत्.

(५) विध. २।२२।१७३; राप्र. ८० (पर्णाशा वन्दना चैव सदानीरा कुमुद्वती । पीता चर्मण्वती धूमा विदर्भा वेणुमत्यपि ॥); नीम. ३१ राप्रवत्; राकौ. ३६२ (वर्णाशा वन्दना चैव सदानीरा कुमुद्वती । पीताऽमरावती धूम्रा विदर्भा वेणुमत्यपि ॥).

(६) विध. २।२२।१७४; राप्र. ८० चतुर्थचरणे (सिन्धुरेखा कुमुद्वती); नीम. ३१ राप्रवत्; राकौ. ३६२ चतुर्थचरणे (सिन्धुरेव कुमुद्वती).

[1]तमसा पिप्पला सेनी करमोदा पिशाचिका।
चित्रोपला चित्रवर्णा मञ्जुला वालुकावती॥
[2]शुक्तीमती सिली रन्ध्रा सङ्कुणात्यथकाततः।
तापी पयोष्णी निर्विन्ध्या सिता च निषधावती॥
[3]वेणा वैतरणी भीमा चर्मा रामा तथा कुहूः।
तोया चैव महागौरी दुर्गा मतुशिला तथा॥
[4]गोदावरी भीमरथी कृष्णा वेणा च वञ्जुला।
तुङ्गभद्रा सुप्रकारा बाह्या कावेरिरेव च॥
[5]कृतमाला ताम्रपर्णी पुष्पजा ह्युत्पलावती।
त्रिसमा ऋषिकुल्या च इक्षुका त्रिदिवालया॥

(१) विध. २।२२।१७५; राप्र. ८० तमसा (तपती) सेनी (श्येनी) मोदा (तोया) पला (त्पला) वती (मती); नीम. ३१ पूर्वार्धे (तपती पिप्पली श्येनी करतोया पिशाचिकी।) वालुकावती (वाकुलामती); राकौ. ३६२ पूर्वार्धे (तपनी पिप्पला श्येनी करतोया पिपासिका।) पला (त्पला) वती (मती).

(२) विध. २।२२।१७६; राप्र. ८१ पूर्वार्धे (शुक्तिमती सिनीवाली मण्डूणी कृपिका कपूः।); नीम. ३१ पूर्वार्धे (शुक्तिमती सिनीवाली मण्डूणी तृपिका कपूः।) सिता (ऽसिता); राकौ. ३६२ पूर्वार्धे (शुक्तिमती सिनीवाली मण्डली कृपिकाकपूः।) योष्णी (योज्ञी).

(३) विध. २।२२।१७७; राप्र. ८१ चर्मा रामा (मन्दुरा च) दुर्गा मतुशिला (दुर्गेतिर्मिङ्गिला); नीम. ३१–३२ चर्मा रामा (मन्द एव) शेषं राप्रवत्; राकौ. ३६२ वेणा (वेण्या) चर्मा रामा (मन्दरा च) मतुशिला (तिमिङ्गिला).

(४) विध. २।२२।१७८; राप्र. ८१ द्वितीयचरणे (कृष्णवेणाऽथ वञ्जरा); नीम. ३२ द्वितीयचरणे (कृष्णवर्णा भयंकरा) बाह्या (वात्या); राकौ. ३६२ वेणा च वञ्जुला (वेण्याऽथ कञ्जरा) बाह्या (वाह्या).

(५) विध. २।२२।१७९; राप्र. ८१ पुष्पजा ह्यु (पुष्पभद्रो) त्रिसमा (नृसमा); नीम. ३२ पर्णी (वर्णी) शेषं राप्रवत्; राकौ. ३६२ पुष्पजा ह्यु (पुष्पभद्रो) त्रिसमा (तृसमा) इक्षु (इक्ष).

[1]लाङ्गूलिनी वंशधरा सुकुमारा कुलावती।
ऋषिका करिवेगा च मन्दगा मन्दवाहिनी॥
[2]कृपी दर्वी दया व्योमा परोष्णी कोलवाहिनी।
कम्पना च विशल्या च करतोयांऽशुवाहिनी॥
[3]ताम्राऽरुणा वेत्रवती गोमती चाथ नद्यपि।
अद्रिणी त्रिकसा चैव सुप्रकारा हिरण्वती॥
[4]आपगा चालका भासी संध्या च मडवा नदी।
महेन्द्रवाणी शाला च मालिका वलयावती।
नीलोद्धतकरा चैव बाहुदा वनवासिनी।
नन्दा चालकनन्दा च शुद्धा च वसुवाहिनी॥
[5]एताश्चान्याश्च राजेन्द्र नद्यस्त्वां विमलोदकाः।
सर्वपापप्रशमनाः सर्वलोकस्य मातरः।
स्वतोयपूर्णैः कलशैरभिषिञ्चन्तु पार्थिव॥

(१) विध. २।२२।१८०; राप्र. ८१ पूर्वार्धे (लाङ्गुलिनी वंशधरी जम्बूश्च सुकलावती।) करि (वर); नीम. ३२ राप्रवत्; राकौ. ३६२ राप्रवत्, सुकला (मुकुला) इति विशेषः.

(२) विध. २।२२।१८१; राप्र. ८१ (क्षमा देवी दया व्योमा पयोष्णी कालवाहिनी। कम्पनी च विशाला च करतोया सुवाहिनी॥); नीम. ३२ (क्षमा देवी दया व्योमा पयोष्णी कालवाहिनी। कम्पना च विशाला च करतोया सुवाहिनी॥); राकौ. ३६२–३६३ नीमवत्.

(३) विध. २।२२।१८२; राप्र. ८१ (ताम्राऽरुणा वेत्रवती सुभद्रा चाश्ववत्यपि। अहिणीका इमा चैव सुप्रकारा हिरण्मयी॥); नीम. ३२ राप्रवत्, अहिणीका (अद्रिका च) इति विशेषः; राकौ. ३६३ (ताम्राऽरुणा वेत्रवती सुभद्रा च स्रवन्त्यपि। अहिनीका उमा चैव सुप्रकारा हिरण्मयी॥).

(४) विध. २।२२।१८३ द्वितीयतृतीयार्धे न स्तः; राप्र. ८१ प्रथमार्धे (आपगा लोपलाभासी संध्या तु वडवा नदी।) वाणी (वाणा) मालि (मीलि) चतुर्थार्धे (नन्दा चैवोपनन्दा च वरदा च सुवासिनी॥); नीम. ३२ प्रथमार्धे राप्रवत्, चतुर्थार्धे (नन्दा चाऽपरनन्दा च च सुनन्दा वसुवासिनी॥); राकौ. ३६३ प्रथमार्धे राप्रवत्, वलयावती (बलपार्वती) द्धत (द्धूत) चतुर्थार्धे (नन्दा चैवोपनन्दा च वरदा वसुवासिनी॥).

(५) विध. २।२२।१८४; राप्र. ८१ विमलो (विविधो); नीम. ३२ स्वतोय (सतोय) शेषं राप्रवद्; राकौ. ३६३ तोयपूर्णैः (तीर्थपुण्यैः) शेषं राप्रवत्.

[1]एतैर्यथोक्तैर्नृपराजराज्ये
दत्ताभिषेकः पृथिवीं समग्राम् ।
ससागरां भुङ्क्ष्व चिरं च जीव
धर्मे च ते बुद्धिरतीव चास्तु ॥
[2]जय त्वं पृथिवीपाल जय विक्रमभूषण ।
धर्मस्ते निखिलो राजन् वर्धतां पालय प्रजाः ॥
वर्धस्व त्वं श्रियै गुप्त्यै जयायाभ्युदयाय च ।
यशस्ते श्रेयसे चैव शत्रूणां निधनाय च ॥
ततः पुरोधा नृपतेरग्रतस्तिष्ठन् ब्रूयात्—जयेति ।
राकौ. ३६३

पुष्कर उवाच—
[3]मन्त्रा ये कीर्तिता राम मयाऽस्मिंस्तव भार्गव ।
तेषां संकीर्तनं धन्यं सर्वपापप्रणाशनम् ॥

अथ विष्णुधर्मोत्तर एवैतदभिषेकमन्त्रप्रतिपाद्यदेवतातीर्थादीनां कीर्तननमस्कारादौ फलविशेष उक्तः— 'पुष्कर उवाच— मन्त्रा ये ...' । * राप्र. ८२

[4]एतेषां कल्यमुत्थाय यः कुर्यात्कीर्तनं नरः ।
सर्वपापविनिर्मुक्तः स्वर्गलोकमवाप्नुयात् ॥
[5]तिर्यग्योनिं न गच्छेत्तु नरकं संकराणि च ।
न च दुःखं न च भयं मरणं न च मुह्यति ॥
[6]एतेषां च नमस्कारं यः कुर्यात्प्रयतो नरः ।
न तस्य तिष्ठते पापमब्बिन्दुरिव पुष्करे ॥

* राकौ. राप्रवत् ।

(१) विध. २।२२।१८५ ; राप्र. ८१ ; नीम. ३२ ; राकौ. ३६३.

(२) राकौ. ३६३ क्रमेण विष्णुधर्मोत्तरे.

(३) विध. २।२३।१ ; राप्र. ८२ ; राकौ. ३६४.

(४) विध. २।२३।२ ; राप्र. ८२ लोकमवाप्नुयात् ( लोके महीयते ) ; राकौ. ३६४ राप्रवत् .

(५) विध. २।२३।३ ; राप्र. ८२ गच्छेत्तु ( गच्छेत ) कराणि ( कटानि ) भयं मरणं न च ( सुखं मरणे न तु ) ; राकौ. ३६४ गच्छेत्तु ( गच्छेत ) संकराणि ( संकटानि ) भयं मरणं ( सुखं मरणे ).

(६) विध. २।२३।४ ; राप्र. ८२ ; राकौ. ३६४ मब्बिन्दु ( मब्धीन्दु ).

[1]एतेषां तर्पणं कृत्वा स्नातः प्रयतमानसः ।
महापातकयुक्तोऽपि त्वचेवाहिर्विमुच्यते ॥
[2]एतेषां पुष्पदानेन महतीं श्रियमश्नुते ।
एतेषां चार्घ्यदानेन पूज्यो भवति मानवः ॥
[3]एतेषां दीपदानेन भ्राजते चन्द्रवद्दिवि ।
एतेषामाहुतिं दत्त्वा कामानाप्नोति पुष्कलान् ॥
[4]नैवेद्यं च बलिं दत्त्वा भोगान् प्राप्नोत्यनुत्तमान् ।
एतानुद्दिश्य विप्रेषु दत्त्वा भार्गव भोजनम् ॥
[5]संतर्प्य दक्षिणाभिश्च त्रिदिवं प्राप्नुयाच्चिरम् ।
अभिषेकदिने राज्ञां पुष्यस्नाने तथैव च ॥
[6]तथा संवत्सरग्रन्थौ सर्वे पूज्या हितैषिणा ।
यानि तीर्थानि चोक्तानि सरितश्च समासतः ॥
[7]तेषां गमेन पूज्यन्ते येऽपि पातकिनो जनाः ।
स्नानं महाफलं तेषां तपः श्राद्धक्रियास्तथा ॥
[8]दानं बहुफलं प्रोक्तं दर्शनं पापनाशनम् ।
कीर्तनं भार्गवश्रेष्ठ न मे चास्ति विचारणा ॥

(१) विध. २।२३।५ ; राप्र. ८२ ; राकौ. ३६४.

(२) विध. २।२३।६ ; राप्र. ८२ उत्तरार्धे ( एतेषामर्घ्यदानेन सर्वपापैर्विमुच्यते ॥) ; राकौ. ३६४ उत्तरार्धे (एतेषामर्घ्यदानेन सर्वपापैः प्रमुच्यते ॥ ).

(३) विध. २।२३।७ जते ( जन्ते ) ; राप्र. ८२ ; राकौ. ३६४.

(४) विध. २।२३।८ ; राप्र. ८२ गान् प्रा ( गाना ) ; राकौ. ३६४ गान् प्राप्नोत्यनु ( गानाप्नोति चो ) .

(५) विध. २।२३।९ पुष्य ( पुष्प ) ; राप्र. ८२ ; राकौ. ३६४–३६५ राज्ञां पुष्य ( राज्ञा पुण्य ).

(६) विध. २।२३।१० ; राप्र. ८२ सरि ( सार ) ; राकौ. ३६५.

(७) विध. २।२३।११ ; राप्र. ८२–८३ पूज्य ( पूय ) यास्तथा ( या तथा ) ; राकौ. ३६५ पूज्य ( पूर्य ) तपः ( ततः ) यास्तथा ( या तथा) .

(८) विध. २।२३।१२ ; राप्र. ८३ चास्ति ( ऽत्रास्ति ) ; राकौ. ३६५ भार्गवश्रेष्ठ न मे चास्ति (भार्गव श्रेष्ठं न मेऽत्रास्ति).

[1]तीर्थेष्वथैतेषु भृगुप्रधान
स्नाता नरा यान्ति नरेन्द्र सद्यः।
तीर्थानि गम्यानि ततः प्रयत्नात्
पुण्याश्च सर्वाः सरितश्च राम॥
[2]भविष्यत्यभिषेके च परचक्रभयेषु च।
स्वराष्ट्रभेदेऽरिवधे शान्तिरैन्द्री प्रशस्यते॥

## गरुडपुराणम्

अभिषेककालः

[3]रोहिण्यार्द्रा तथा पुष्या धनिष्ठा चोत्तरात्रयम्॥
वारुणं श्रवणं चैव नव चोर्ध्वमुखाः स्मृताः।
एषु राज्याभिषेकं च पट्टबन्धं च कारयेत्॥

वारुणं शतभिषा। राप्र. ३३

## ब्रह्मपुराणम्

अभिषेककालः

[4]सुतिथौ च सुनक्षत्रे स्नानं नक्षत्रनामकम्।
मुहूर्ते सुगुणोपेते सर्वोत्पातविवर्जिते॥
[5]स्थिरे राशौ शुभयुते केन्द्रे चोपचयान्विते।
काश्मीरायां तु पार्वत्यां शंकरात्मा महीपतिः॥
[6]सर्वलक्षणसंयुक्तस्त्वभिषेच्यो नवस्तदा॥

सुतिथौ चतुर्थीनवमीचतुर्दशीभिन्नतिथौ। सुनक्षत्रे 'ध्रुवाणि वैष्णवं शाक्रम्' (विध. २।१८।७) इत्यादिना विहितनक्षत्रे। नक्षत्रनामकं स्नानम्, विधाय इति शेषः। तच्च विष्णुधर्मोत्तरे जन्मनक्षत्रे विहितमग्रे अभिधास्यते। पुष्यस्नानं वा विधाय। 'मुहूर्ते सुगुणोपेते' इत्यनेन गुरुशुक्रास्तादिरहितशुद्धमासादिरूपः काल उपलक्ष्यते। स्थिरे राशौ वृषसिंहवृश्चिककुम्भेषु। शुभयुते शुभग्रहयुते। केन्द्रे प्रथमचतुर्थसप्तमदशमभवने। तदा पूर्वोक्ते काले नवो महीपतिः पार्वत्यां पर्वतभवायां काश्मीरायां श्रीपर्ण्यां तन्निर्मिते भद्रपीठे उपवेश्य इत्यर्थः। अत एवाग्रे अभिषेकसंभारमध्ये श्रीपर्णीपीठमाहृतमस्ति।

राप्र. ३४–३५

अभिषेकपूर्वं नगरशोभनं राजस्नानं च, महाशान्त्यादिशान्तिपूर्वकः पुरोहितेन कर्तव्यो होमः, राज्ञः पुनः चातुर्वर्ण्यकृतं स्नपनम्, राज्ञा कर्तव्या देवपूजा, विप्रेभ्यो दक्षिणादानम्, बन्धनस्थानां विमोचनम्, प्रकृतिदर्शनम्, गृहप्रवेशः, सभासदपूजा, ब्राह्मणदीनानाथादिभोजनम्, राजभोजनं विहारश्च

[1]नगरं तत्र कर्तव्यं पताकाध्वजसंकुलम्।
नीरजस्कास्तथा कार्या राजमार्गाः शुभैर्जलैः।
पौरैः स्नातैः सुवस्त्रैश्च भाव्यं मङ्गलपाणिभिः॥
[2]गन्तव्यं वारमुख्याभिस्तथा राजनिवेशनम्।
पौरमुख्यैस्तथा वाद्यैर्गुणमुख्यैस्तथैव च॥
[3]शोभनीयं च नगरं सविलासैश्च नर्तकैः।
स्नानकाले च कर्तव्यो महाकोलाहलस्तथा॥
वादित्रशङ्खपुण्याहैः सूतमागधवन्दिभिः।
सामन्तैर्मन्त्रिभिर्भाव्यं छत्रचामरपाणिभिः॥
[4]आदौ कृत्वा महाशान्तिं पुण्यां वैनायिकीं शुभाम्।
ग्रहशान्तिं तथा श्रेष्ठां तृतीयामाहुतिं तथा॥

---

(१) विध. २।२३।१३; राप्र. ८३ न्द्र सद्यः (न्द्रसद्म); राकौ. ३६५ राप्रवत्.
(२) विध. २।१३३।१० ; राकौ. २३९ भयेषु (भयेऽपि).
(३) गरुड. १।५९।२३–२४ ; राप्र. ३३ पुष्या (पुष्यो) नव (एते); राकौ. २३७ नव (एते); बाल. १।३०८ पृ. ६१६ राप्रवत्.
(४) राक. ९ ; राप्र. ३४ ; राकौ. ३२६ सुगु (सगु).
(५) राक. ९ ; राप्र. ३४–३५ ; राकौ. ३२७ पू.
(६) राक. ९ ; राप्र. ३५ ; राकौ. ३२७ नवस्तदा (नृपस्तदा).

(१) राक. ९ ; राप्र. ४३ ; राकौ. ३२७ संकुलम् (संयुतम्).
(२) राक. १० ; राप्र. ४३ वाद्यैर्गुण (बाह्यैर्गण); राकौ. ३२७ वेशनम् (वेशने) वाद्यैर्गुण (ऽऽचार्यैर्गुणि).
(३) राक. १० ; राप्र. ४३ ; राकौ. ३२७.
(४) राक. १० ; राप्र. ४३ ; राकौ. ३२७ यिकीं (यकीं).

¹पुरोधाः सोपवासश्च श्रुतिस्मृतिसमन्वितः ।
त्रयोदश महामन्त्रान् तर्पयेज्जातवेदसि ॥

²गणं चैवाप्रतिरथं सत्यधर्मगणौ तथा ।
आयुष्यमभयं चैव तथा स्वस्त्ययनं परम् ॥

³वैष्णवानथ मन्त्रांश्च तथा पौरंदरानपि ।
सावित्रब्राह्मरौद्रांश्च वारुणानथ सर्वदा ॥

(१) 'ऋताषाड्' (तैसं. ३।४।७।१) इति त्रयोदश महामन्त्राः । गणः 'इदगन्या गृह (? ईदङ् चान्यादङ् च)' (तैसं. १।८।१३।२) इत्यादयः । अप्रतिरथः 'आशुः शिशानः' (तैसं. ४।६।४।१) इति । सत्यगणः 'आगात् सत्यम्' (तैब्रा. ३।१२।३।२) इति । धर्मगणः 'यास्ते अग्ने घोरास्तनुवः' (तैब्रा. १।१।७।३) इति । अभयस्वस्त्ययने 'यत इन्द्र, स्वस्तिदा' (तैब्रा. ३।७।११।४) इति । † राक. १०

(२) अधर्मगणः 'यास्ते अग्ने घोरास्तनुवः' इति । आयुष्यम् 'आयुष्यम्' (शुसं. ३४।५०) इति सूक्तम् । * राप्र. ४४

⁴राजा स्नातः पुनः स्नाप्यः पञ्चगव्येन देववत् ।
मृत्ताम्ररौप्यहेमोत्थैर्जलपूर्णैस्ततो घटैः ॥

⁵तोयेन शूद्रैः स्नाप्यश्च पश्चिमां दिशमाश्रितैः ।
ततः क्षीरेण वैश्यैश्च दक्षिणस्यां दिशि स्थितैः ॥

⁶क्षत्रियैश्च ततो दध्ना पूर्वस्यां दिश्यवस्थितैः ।
अमृतेन ततो विप्रैर्घृतेनोत्तरतः स्थितैः ॥

† राकौ. राकवत् ।

* शेषं राकवत् ।

(१) राक. १० ; राप्र. ४३ ; राकौ. ३२७.

(२) राक. १० ; राप्र. ४३-४४ सत्य (सत्या) ; राकौ. ३२७ गणौ (गणैस्).

(३) राक. १० ; राप्र. ४४ ; राकौ. ३२७ ब्राह्म (ब्रह्म).

(४) राक. ११ ; राप्र. ४४ रौप्यहेमो (हेमरौप्यो) ; राकौ. ३२८ हेमोत्थै (हेमाद्यै) स्ततो (स्तथा).

(५) राक. ११ ; राप्र. ४४ श्रितैः (स्थितैः) ; राकौ. ३२८.

(६) राक. ११ ; राप्र. ४४ ; राकौ. ३२८.

¹पर्वतोत्थमृदा पश्चाद्राज्ञः शोध्यं शिरो द्विजैः ।
वल्मीकमृदया कर्णौ शोधितव्यौ प्रयत्नतः ॥

²शक्रस्थानाच्च मृदया ग्रीवा शोध्या च भूभृतः ।
राजवेश्मगृहद्वारमृदया हृदयं तथा ॥

³देवालयमृदा पृष्ठं शोध्यं तस्याऽथ राजभिः ।
गजदन्तोद्धृतमृदा दक्षिणस्तु तथा भुजः ॥

⁴शोधनीया शनैर्नासा वृषभशृङ्गलग्नया ।
कटिदेशस्ततो वैश्यैर्वैश्याद्वारमृदा तथा ॥

⁵नदीकूलमृदा पार्श्वे शोधितव्ये यथाक्रमम् ।
अश्वशालामृदा शूद्रैः शोध्ये तस्याथ जानुनी ॥

⁶गोकुलान्मृदया जङ्घे पादौ च सरसो मृदा ।
सर्वौषधैः सर्वबीजैर्गन्धै रत्नैश्च सर्वदा ॥

⁷सर्वपुष्पैः सर्वफलैः स्नाप्यो रोचनया तथा ।
अथ भद्रासनगतः सर्वतोयैः शुभास्वरैः ॥

⁸यथाशक्त्या समानीतैः पुरस्कृत्य पुरोहितम् ।
नृपतिस्त्वभिषेक्तव्यो दैवज्ञवचनान्नरैः ॥

⁹ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रमुख्यैस्तथैव च ।
पतिव्रताभिर्नारीभिः पुत्रिणीभिश्च पुत्रवत् ॥

(१) राक. ११ ; राप्र. ४४ ; राकौ. ३२८ तोत्थ (तोर्ध्व).

(२) राक. ११ ; राप्र. ४४ ; राकौ. ३२८ वेश्म (वेश्या) मृदया (मृदाऽस्य).

(३) राक. ११ ; राप्र. ४४ ; राकौ. ३२८ णस्तु (णं तु).

(४) राक. ११ ; राप्र. ४४ भशृङ्ग (शृङ्गवि) कटि (कटी); राकौ. ३२८ शृङ्ग (स्कन्ध) तो वैश्यैर्वै (तः शोध्यो वे).

(५) राक. ११ ; राप्र. ४४ ; राकौ. ३२८ शोध्ये तस्याथ (शोधितव्ये च).

(६) राक. १२ ; राप्र. ४४-४५ गन्धै रत्नै (गन्धैरत्नै) ; राकौ. ३२८ गन्धै रत्नै (गन्धरत्नै).

(७) राक. १२ ; राप्र. ४५ सुभास्वरैः (शुभाम्बरैः) ; राकौ. ३२८ फलैः (जलैः) यैः सुभा (यैस्तु भा).

(८) राक. १२ ; राप्र. ४५ हितम् (हितैः) ; राकौ. ३२९ राप्रवत्, पू.

(९) राक. १२ ; राप्र. ४५ ; राकौ. ३२९.

[1]ततः स्नातो विलिप्ताङ्गः कृतदेवाग्नितर्पणः।
आबद्धमुकुटः स्रग्वी बद्धपट्टो विभूषितः॥

[2]मङ्गलानां शतं पश्येत् पुण्यमष्टोत्तरं शतम्।
शान्त्यै प्राधानिके स्थाने सर्वमेतद्यथाक्रमम्॥

[3]कृत्वा शेषं ततो हुत्वा दद्यात्पूर्णाहुतिं ततः।
अभिषिक्तस्ततो राजा संपूज्याऽऽदौ विनायकम्॥

[4]ततः क्रमेण देवांश्च ब्रह्मविष्णुमहेश्वरान्।
ग्रहान्नीलं च नागेन्द्रमग्निं विप्रान् पुरोहितम्॥

[5]देवान् पितॄन् समुद्दिश्य दद्याद्विप्रेषु दक्षिणाम्।
अभयं सर्वभूतेभ्यः सम्यक् तत्र ददाति च॥

[6]आघातस्थानगान्सर्वान् पशूनपि विमोचयेत्।
बन्धनस्थानसंस्थांश्च प्रमोचयति शास्त्रवत्॥

आघातस्थानं हननस्थानम्। राप्र. ४५

[7]गोब्राह्मणादिहन्तॄंश्च कण्टकान् दारुणानपि।
जहाति हस्तिहन्तॄंश्च क्रूरांश्चाऽपि सुशिक्षितान्॥

[8]व्याघ्रचर्मोत्तरे रम्ये तथा सिंहासने शुभे।
उपवेश्यो भवेद्राजा स्वयमेव पुरोधसा॥

(१) राक. १२; राप्र. ४५; राकौ. ३२९ ततः स्नातो वि (सुस्नातोऽनु) पट्टो (पादो).

(२) राक. १२; राप्र. ४५; राकौ. ३२९ शान्त्यै प्राधानिके (शान्तिप्रधानके).

(३) राक. १२; राप्र. ४५ संपूज्या (साम्राज्या); राकौ. ३२९.

(४) राक. १२; राप्र. ४५; राकौ. ३२९ न्नीलं (नलं).

(५) राक. १२; राप्र. ४५ भूतेभ्यः (भूतेषु); राकौ. ३२९.

(६) राक. १२ आघात (अथातः); राप्र. ४५ चयेत् (चयन्); राकौ. ३२९ स्थानगान् (स्थानकात्) वत् (वित्).

(७) राक. १२-१३; राप्र. ४५ कण्टका (पापिष्ठा); राकौ. ३२९ शिक्षि (रक्षि).

(८) राक. १३; राप्र. ४५; राकौ. ३२९.

[1]सिंहासनस्थः संपश्येत् प्रकृतींश्च समागताः।
छत्रायुधानि संपूज्य गणमुख्यांस्तुरंगमान्॥

[2]आरुह्यालंकृतं नागं विसृजन् धनसंचयम्।
प्रदक्षिणीकृत्य पुरं प्रविश्य च पुनर्गृहम्॥

[3]सभास्थान्पौरमुख्यांश्च कृत्वा पूजां विसर्जयेत्।
गतेषु तेषु च [4]धनैस्तर्पयेन्नटनर्तकान्॥

[5]ब्राह्मणान्भोजयेत्सर्वान्दीनानाथांश्च बान्धवान्।
ततो महाजनैः सार्धं पूर्वराजक्रमादिभिः॥

[5]आहारं कुरुते राजा राजभृत्यान् विभज्य च।
आचम्य ताम्बूलमुखो विहरेत ततः क्षणम्॥

[6]ततः कतिपयैः सार्धमन्तःपुरनिवासिभिः।
रक्षेत् प्रयत्नादात्मानं भूयो भुङ्क्ते यथासुखम्॥

## अग्निपुराणम्

राज्ञि मृते न कालनियमः राजाभिषेकस्य, पुरोहितेन कार्या ऐन्द्री शान्तिः, पुरोहितादिभिः कर्तव्यो राजाभिषेकः, राजकर्तव्यं देवतापूजनम्, पट्टमुकुटबन्धः, भद्रासने स्थितिः, अमात्यादिदर्शनम्, पुरोहितादिद्विजपूजा, वृषस्पर्शनम्, गोपूजनम्, अश्वगजपूजा, वाहनारोहणम्, राजमार्गपरिभ्रमणम्, सर्वपरिजनपूजा, गृहप्रवेशः

[7]सांवत्सरं नृपः कालेससंभारोऽभिषेचनम्॥

(१) राक. १३; राप्र. ४५-४६ गताः (सतः); राकौ. ३२९.

(२) राक. १३; राप्र. ४६ पुनर्गृ (पुरं गृ); राकौ. ३२९-३३० प्रविश्य च पुनर्गृ (प्रविशेच्च शुभं गृ).

(३) राक. १३; राप्र. ४६ सभास्थान् (समस्तान्); राकौ. ३३० राप्रवत्.

(४) राक. १३; राप्र. ४६; राकौ. ३३०.

(५) राक. १३; राप्र. ४६ भज्य (सृज्य); राकौ. ३३० हरेत (हरेच्च).

(६) राक. १३; राप्र. ४६ प्रयत्ना (सपत्ना); राकौ. ३३० भूयो भुङ्क्ते (भुक्तं चैव).

(७) अग्नि. २१८।४-३५.

कुर्यान्मृते नृपे नात्र कालस्य नियमः स्मृतः ।
तिलैः सिद्धार्थकैः स्नानं सांवत्सरपुरोहितैः ॥
घोषयित्वा जयं राज्ञो राजा भद्रासने स्थितः ।
अभयं घोषयेद्बद्धान् मोचयेद्राज्यपालके ॥
पुरोधसाऽभिषेकात्प्राक् कार्यैन्द्री शान्तिरेव च ।
उपवास्याभिषेकाहे वेद्यग्नौ जुहुयान्मनून् ॥
वैष्णवानैन्द्रमन्त्रांस्तु सावित्रान् वैश्वदैवतान् ।
सौम्यान्स्वस्त्ययनं शर्म आयुष्याभयदान्मनून् ॥
अपराजितां च कलशं वह्नेर्दक्षिणपार्श्वगम् ।
संपातवन्तं हैमं च पूजयेद्गन्धपुष्पकैः ॥
प्रदक्षिणावर्तशिखस्तप्तजाम्बूनदप्रभः ।
रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥
अनुलोमः सुगन्धिश्च स्वस्तिकाकारसंनिभः ।
प्रसन्नार्चिर्महाज्वालः स्फुलिङ्गरहितो हितः ॥
न व्रजेयुश्च मध्येन मार्जारमृगपक्षिणः ।
पर्वताग्रमृदा तावन्मूर्धानं शोधयेन्नृपः ॥
वल्मीकाग्रमृदा कर्णौ वदनं केशवालयात् ।
इन्द्रालयमृदा ग्रीवां हृदयं तु नृपाजिरात् ॥
करिदन्तोद्धृतमृदा दक्षिणं तु तथा भुजम् ।
वृषशृङ्गोद्धृतमृदा वामं चैव तथा भुजम् ॥
सरोमृदा तथा पृष्ठमुदरं संगमान्मृदा ।
नदीतटद्वयमृदा पार्श्वे संशोधयेत्तथा ॥
वेश्याद्वारमृदा राज्ञः कटिशौचं विधीयते ।
यज्ञस्थानात्तथैवोरू गोस्थानाज्जानुनी तथा ॥
अश्वस्थानात्तथा जङ्घे रथचक्रमृदाऽङ्घ्रिके ।
मूर्धानं पञ्चगव्येन भद्रासनगतं नृपम् ॥
अभिषिञ्चेदमात्यानां चतुष्टयमथो घटैः ।
पूर्वतो हेमकुम्भेन घृतपूर्णेन ब्राह्मणः ॥
रूप्यकुम्भेन याम्ये च क्षीरपूर्णेन क्षत्रियः ।
दध्ना च ताम्रकुम्भेन वैश्यः पश्चिमगेन च ॥
मृन्मयेन जलेनोदक्शूद्रामात्योऽभिषेचयेत् ।
ततोऽभिषेकं नृपतेर्बह्वृचप्रवरो द्विजः ॥
कुर्वीत मधुना विप्रश्छन्दोगश्च कुशोदकैः ।
संपातवन्तं कलशं तथा गत्वा पुरोहितः ॥
विधाय वह्निरक्षां तु सदस्येषु यथाविधि ।
राजश्रियाऽभिषेके च ये मन्त्राः परिकीर्तिताः ॥
तैस्तु दद्यान्महाभाग ब्राह्मणानां स्वनैस्तथा ।
ततः पुरोहितो गच्छेद्वेदिमूलं तदेव तु ॥
शतच्छिद्रेण पात्रेण सौवर्णेनाभिषेचयेत् ।
या ओषधीत्योषधीभी रथेत्युक्त्वेति गन्धकैः ॥
पुष्पैः पुष्पवतीत्येव ब्राह्मणेति च बीजकैः ।
रत्नैराशुः शिशानश्च ये देवाश्च कुशोदकैः ॥
यजुर्वेद्यथर्ववेदी गन्धद्वारेति संस्पृशेत् ।
शिरः कण्ठं रोचनया सर्वतीर्थोदकैर्द्विजाः ॥
गीतवाद्यादिनिर्घोषैश्चामरव्यजनादिभिः ।
सर्वौषधिमयं कुम्भं धारयेयुर्नृपाग्रतः ॥
तं पश्येद्दर्पणं राजा घृतं वै मङ्गलादिकम् ।
अभ्यर्च्य विष्णुं ब्रह्माणमिन्द्रादींश्च ग्रहेश्वरान् ॥
व्याघ्रचर्मोत्तरां शय्यामुपविष्टः पुरोहितः ।
मधुपर्कादिकं दत्त्वा पट्टबन्धं प्रकारयेत् ॥
राज्ञो मुकुटबन्धश्च पञ्चचर्मोत्तरं ददेत् ।
ध्रुवा द्यौरिति च विशेद् वृषजं वृषभांशजम् ॥
द्वीपिजं सिंहजं व्याघ्रजातं चर्म तदासने ।
अमात्यसचिवादींश्च प्रतीहारः प्रदर्शयेत् ॥
गोजाविग्र(? गृ)हदानाद्यैः सांवत्सरपुरोहितौ ।
पूजयित्वा द्विजान् प्रार्च्य ह्यन्यान् भूगो-
नमुख्यकैः ॥
वह्निं प्रदक्षिणीकृत्य गुरुं नत्वाऽथ पृष्ठतः ।
वृषमालभ्य गां वत्सं पूजयित्वाऽथ मन्त्रितम् ॥
अश्वमारुह्य नागं च पूजयेत्तं समारुहेत् ।
परिभ्रमेद्राजमार्गे बलयुक्तः प्रदक्षिणम् ॥
पुरं विशेच्च दानाद्यैः प्रार्च्य सर्वान्विसर्जयेत् ॥

अभिषेकमन्त्राः

पुष्कर उवाच—

[1]राजदेवाद्यभिषेकमन्त्रान् वक्ष्येऽघमर्दनान् ।
कुम्भात्कुशोदकैः सिञ्चेत्तेन सर्वं हि सिध्यति ॥

---

(१) अग्नि. २१९।१-७२.

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।
वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः॥
भवन्तु विजयायैत इन्द्राद्या दश दिग्गताः।
रुद्रो धर्मो मनुर्दक्षो रुचिः श्रद्धा च सर्वदा॥
भृगुरत्रिर्वसिष्ठश्च सनकश्च सनन्दनः।
सनत्कुमारोऽङ्गिराश्च पुलस्त्यः पुलहः क्रतुः॥
मरीचिः कश्यपः पातु प्रजेशं पृथिवीपतिम्।
प्रभासुरा बर्हिषद अग्निष्वात्ताश्च पान्तु ते॥
क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः।
अग्निभिश्चाभिषिञ्चन्तु लक्ष्म्याद्या धर्मवल्लभाः॥
आ( ? अ )दित्याद्याः कश्यपस्य बहुपुत्रस्य वल्लभाः।
कृशाश्वस्याग्निपुत्रस्य भार्याश्चारिष्टनेमिनः॥
अश्विन्याद्याश्च चन्द्रस्य पुलहस्य तथा प्रियाः।
भूता च कपिशा दंष्ट्री सुरसा सरमा दनुः॥
श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा।
एतास्त्वामभिषिञ्चन्तु अरुणश्चार्कसारथिः॥
आयतिर्नियती रात्रिर्निद्रा लोकस्थितौ स्थिताः।
उमा मेना शची पान्तु धूमोर्णा निर्ऋतिर्जया॥
गौरी शिवा च ऋद्धिश्च वेला या चैव नड्वला।
असिक्नी च तथा ज्योत्स्ना देवपत्न्यो वनस्पतिः॥
महाकल्पश्च कल्पश्च मन्वन्तरयुगानि च।
संवत्सराणि वर्षाणि पान्तु त्वामयनद्वयम्॥
ऋतवश्च तथा मासाः पक्षा रात्र्यहनी तथा।
संध्यातिथिमुहूर्ताश्च कालस्यावयवाश्च ये॥
सूर्याद्याश्च ग्रहाः पान्तु मनुः स्वायंभुवादिकः।
स्वायंभुवः स्वारोचिष उत्तमस्तामसो मनुः॥
रैवतश्चाक्षुषः षष्ठो वैवस्वत इहेरितः।
सावर्णिर्ब्रह्मपुत्रश्च धर्मपुत्रश्च रुद्रजः॥
दक्षजो रौच्यभौत्यौ च मनवस्तु चतुर्दश।
विश्वभुक्च विपश्चिच्च सुचित्तिश्च शिखी विभुः॥

मनोजवस्तथौजस्वी बलिरद्भुतशान्तयः।
वृषश्च ऋतधामा च दिवस्पृक्कविरिन्द्रकः॥
रैवन्तश्च कुमारश्च तथा वत्सविनायकः।
वीरभद्रश्च नन्दी च विश्वकर्मा पुरोजवः॥
एते त्वामभिषिञ्चन्तु सुरमुख्याः समागताः।
नासत्यौ देवभिषजौ ध्रुवाद्या वसवोऽष्ट च॥
दश चाङ्गिरसो वेदास्त्वाऽभिषिञ्चन्तु सिद्धये।
आत्मा ह्यायुर्मनो दक्षो मदः प्राणस्तथैव च॥
हविष्मांश्च गरिष्ठश्च ऋतः सत्यश्च पान्तु वः।
क्रतुर्दक्षो वसुः सत्यः कालकामो धुरिर्जये॥
पुरूरवा आर्द्रवाश्च विश्वे देवाश्च रोचनः।
अङ्गारकाद्याः सूर्यस्त्वां निर्ऋतिश्च तथा यमः॥
अजैकपादहिर्बुध्न्यो धूमकेतुश्च रुद्रजाः।
भरतश्च तथा मृत्युः कापालिरथ किङ्किणिः॥
भवनो भावनः पान्तु स्वजन्यः स्वजनस्तथा।
क्रतुश्रवाश्च मूर्धा च याजनोऽभ्युशनास्तथा॥
प्रसवश्चाव्ययश्चैव दक्षश्च भृगवः सुराः।
मनोनुमन्ता प्राणश्च नवोऽपानश्च वीर्यवान्॥
वीतिहोत्रो नयः साध्यो हंसो नारायणोऽवतु।
विभुश्चैव प्रभुश्चैव देवश्रेष्ठा जगद्धिताः॥
धाता मित्रोऽर्यमा पूषा शक्रोऽथ वरुणो भगः।
त्वष्टा विवस्वान् सविता विष्णुर्द्वादश भास्कराः॥
एकज्योतिश्च द्विज्योतिस्त्रिश्च( ? च )तुर्ज्योतिरेव च।
एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः॥
इन्द्रश्च मेत्यादिशतु ततः प्रतिमकृत्तथा।
मितश्च संमितश्चैव अमितश्च महाबलः॥
ऋतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा।
अतिमित्रोऽनुमित्रश्च पुरुमित्रोऽपराजितः॥
ऋतश्च ऋतवाग्धाता विधाता धारणो ध्रुवः।
विधारणो महातेजा वासवस्य परः सखा॥
ईदृक्षश्चाप्यदृक्षश्च एतादृगमिताशनः।
क्रीडितश्च सदृक्षश्च सरभश्च महातपाः॥

धर्ता धुर्यो धुरिर्भीम अभिमुक्तोऽक्षपात्सहः ।
धृतिर्वसुरनाधृष्यो रामः कामो जयो विराट् ॥
देवा एकोनपञ्चाशन्मरुतस्त्वामवन्तु ते ।
चित्राङ्गदश्चित्ररथश्चित्रसेनश्च वै कलिः ॥
ऊर्णायुरुग्रसेनश्च धृतराष्ट्रश्च नन्दकः ।
हाहा हूहूर्नारदश्च विश्वावसुश्च तुम्बुरुः ॥
एते त्वामभिषिञ्चन्तु गन्धर्वा विजयाय ते ।
पान्तु ते मुनयो मुख्या दिव्याश्चाप्सरसां गणाः ॥
अनवद्या सुकेशी च मेनका सह ज(? हज)-न्यया ।
क्रतुस्थला घृताची च विश्वाची पुञ्जिकस्थला ॥
प्रम्लोचा चोर्वशी रम्भा पञ्चचूडा तिलोत्तमा ।
चित्रलेखा लक्ष्मणा च पुण्डरीका च वारुणी ॥
प्रह्लादो विरोचनोऽथ बलिर्बाणोऽथ तत्सुतः ।
एते चान्येऽभिषिञ्चन्तु दानवा राक्षसास्तथा ॥
हेतिश्चैव प्रहेतिश्च विद्युत्स्फूर्जथुरग्रकाः ।
यक्षः सिद्धात्मकः पातु मणिभद्रश्च नन्दनः ॥
पिङ्गाक्षो द्युतिमांश्चैव पुष्पवन्तो जयावहः ।
शङ्खः पद्मश्च मकरः कच्छपश्च निधिर्जये ॥
पिशाचा ऊर्ध्वकेशाद्या भूता भूम्यादिवासिनः ।
महाकालं पुरस्कृत्य नरसिंहं च मातरः ॥
गुहः स्कन्दो विशाखस्त्वां नैगमेयोऽभिषिञ्चतु ।
डाकिन्यो याश्च योगिन्यः खेचरा भूचराश्च याः ॥
गरुडश्चारुणः पान्तु संपातिप्रमुखाः खगाः ।
अनन्ताद्या महानागाः शेषवासुकितक्षकाः ॥
ऐरावतो महापद्मः कम्बलाश्वतरावुभौ ।
शङ्खः कर्कोटकश्चैव धृतराष्ट्रो धनंजयः ॥
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नागाः पान्तु त्वां सर्वतः सदा ॥
पैतामहस्तथा हंसो वृषभः शंकरस्य च ।
दुर्गासिंहश्च पान्तु त्वां यमस्य महिषस्तथा ॥
उच्चैःश्रवाश्चाश्वपतिस्तथा धन्वन्तरिः सदा ।
कौस्तुभः शङ्खराजश्च वज्रं शूलं च चक्रकम् ॥

नन्दकोऽस्त्राणि रक्षन्तु धर्मश्च व्यवसायकः ।
चित्रगुप्तश्च दण्डश्च पिङ्गलो मृत्युकालकौ ॥
वालखिल्यादिमुनयो व्यासवाल्मीकिमुख्यकाः ।
पृथुर्दिलीपो भरतो दुष्यन्तः शत्रुजिद्बली ॥
मनुः कुकुत्स्थश्चानेना युवनाश्वो जयद्रथः ।
मांधाता मुचुकुन्दश्च पान्तु त्वां च पुरूरवाः ॥
वास्तुदेवाः पञ्चविंशत्तत्त्वानि विजयाय ते ।
रुक्मभौमः शिलाभौमः पातालो नीलमृत्तिकः ॥
पीतरक्तः क्षितिश्चैव श्वेतभौमो रसातलम् ।
भूर्लोकोऽथ भुवर्मुख्या जम्बूद्वीपादयः श्रिये ॥
उत्तराः कुरवः पान्तु रम्यो हिरण्यकस्तथा ।
भद्राश्व(? श्वः) केतुमालश्च वर्षश्चैव बलाहकः ॥
हरिवर्षः किंपुरुष इन्द्रद्वीपः कशेरुमान् ।
ताम्रवर्णो गभस्तिमान्नागद्वीपश्च सौम्यकः ॥
गान्धर्वो वारुणो यश्च नवमः पातु राज्यदः ।
हिमवान् हेमकूटश्च निषधो नील एव च ॥
श्वेतश्च शृङ्गवान्मेरुर्माल्यवान्गन्धमादनः ।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवान् गिरिः ॥
विन्ध्यश्च पारियात्रश्च गिरयः शान्तिदास्तु ते ।
ऋग्वेदाद्याः षडङ्गानि इतिहासपुराणकम् ॥
आयुर्वेदश्च गान्धर्वधनुर्वेदोपवेदकाः ।
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ॥
छन्दोऽङ्गानि च वेदाश्च मीमांसा न्याय-विस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
सांख्यं योगः पाशुपतं वेदा वै पञ्चरात्रकम् ।
कृतान्तपञ्चकं ह्येतद्गायत्री च शिवा तथा ॥
दुर्गा विद्या च गान्धारी पान्तु त्वां शान्तिदाश्च ते ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलाब्धयः ॥
चत्वारः सागराः पान्तु तीर्थानि विविधानि च ।
पुष्करश्च प्रयागश्च प्रभासो नैमिषः परः ॥

गयाशीर्षो ब्रह्मशीरस्तीर्थमुत्तरमानसम्।
कालोदको नन्दिकुण्डतीर्थं पञ्चनदस्तथा ॥
भृगुतीर्थं प्रभासं च तथा चामरकण्टकम्।
जम्बूमार्गश्च विमलः कपिलस्य तथाऽऽश्रमः ॥
गङ्गाद्वारकुशावर्तौ विन्ध्यको नीलपर्वतः।
वराहपर्वतश्चैव तीर्थं कनखलं तथा ॥
कालंजरश्च केदारो रुद्रकोटिस्तथैव च।
वाराणसी महातीर्थं बदर्याश्रम एव च ॥
द्वारका श्रीगिरिस्तीर्थं तीर्थं च पुरुषोत्तमः।
शालग्रामोऽथ वाराहः सिन्धुसागरसंगमः ॥
फल्गुतीर्थं बिन्दुसरः करवीराश्रमस्तथा।
नद्यो गङ्गासरस्वत्यः शतद्रुर्गण्डकी तथा ॥
अच्छोदा च विपाशा च वितस्ता देविका नदी।
कावेरी वरुणा चैव निश्चिरा गोमती नदी ॥
पारा चर्मण्वती रूपा मन्दाकिनी महानदी।
तापी पयोष्णी वेणा च गौरी वैतरणी तथा ॥
गोदावरी भीमरथी तुङ्गभद्राऽरणी तथा।
चन्द्रभागा शिवा गौरी अभिषिञ्चन्तु पान्तु च ॥

## कालिकापुराणम्

राजाभिषेकः युवराजाभिषेकश्च

*[1]अनेनैव विधानेन नृपतेरभिषेचनम्।
युवराज्याभिषेकं च कुर्याद्राजपुरोहितः ॥

## अनिर्दिष्टकर्तृकवचनानि

राज्ञा कर्तव्यः राजपुत्रस्य राजाभिषेकः

[2]कृतनित्यक्रियो राजा स्वयं वाऽस्य पुरोहितः।
शुक्ले वसानो वसने प्रविशेद्यज्ञमण्डपे ॥

सौवर्णं स्थापयेत्तत्र कलशं दृढमग्रतः।
पूरयेत्सर्वतीर्थाद्भिर्गाङ्गेन पयसाऽथवा ॥

गाङ्गेन गङ्गाजलेन। पयसा गोक्षीरेण। गाङ्गेन पयसा गङ्गाजलेन। वाशब्दोऽत्र व्यवस्थितविभाषा इति केचित्। रार. ७५

वारुणेनाभिमन्त्र्यान्तः क्षिपेत्सर्वौषधीस्ततः।
पञ्चभिः पल्लवैश्छन्नमुखं वरुणमर्चयेत् ॥
श्रियं विष्णुमुमामीशं गणग्रहदिगीश्वरान्।
पूजयेज्जुहुयान्मन्त्रैराज्येनैव सकृत्सकृत् ॥

वारुणेन (वरुणेन ?) मन्त्रेण। गणः गणपतिः। ग्रहपदेन नवग्रहाः। मन्त्रैः तत्तद्देवतामन्त्रैः। रार. ७५

विसृज्य तान् सभामध्ये व्याघ्रचर्मोपरि स्थितम्।
सुहृद्विप्रवणिग्वीथीमन्त्रिसंबन्धिसंनिधौ ॥
अभिषिञ्चेच्छान्तिमन्त्रैः पल्लवानीततज्जलैः।
ततः सिंहासने राजा कुमारमुपवेशयेत् ॥

'सुरास्त्वामभिषिञ्चन्तु' (विध. २।२२।४-१८५) इत्यादिशान्तिमन्त्रैः। पल्लवानीततज्जलैः कलशमुखक्षिप्तपञ्चपल्लवाहृतजलैः। सिंहासनं राजासनम्। कुमारमित्यस्य अभिषिञ्चेत् (इति) तात्पर्यम्। रार. ७५

स्रक्चन्दनपटोष्णीषमणिमुक्तादिभूषणैः।
चामरव्यजनच्छत्रपत्नद्धीपादुकादिभिः ॥
अलंकृत्य मुदा तस्मै षडङ्गं राज्यमर्पयेत्।
पादाङ्गुष्ठेन तिलकं त्रिवारमलिके न्यसेत् ॥
मूर्ध्नि दूर्वाक्षतं दद्याद्दधिलाजांश्च दर्शयेत्।
अद्याऽऽरभ्य न मे राज्यं राजाऽयं रक्षतु प्रजाः ॥
इति सर्वं प्रजाविष्णुं साक्षिणं श्रावयेन्मुहुः ॥

पत्नद्धी उपानत्। षडङ्गं मन्त्रिसुहृत्कोषदुर्गराष्ट्रबलात्मकम्। अलिके ललाटे। न्यसेत् दद्यादित्यर्थः। 'अद्य' इत्याद्यर्धं श्रावयेत्। रार. ७५

---

* अनेन पुष्याभिषेकविधिनेत्यर्थः।

(१) कालिका. ८९।१।१४२.

(२) रार. ७४.

# पुष्याभिषेकः

## आथर्वणपरिशिष्टम्

राज्ञः पुष्याभिषेकः

[1]अथ पुष्याभिषेकस्य विधिं वक्ष्यामि सांप्रतम् ।
धर्मार्थकामसंयुक्तं राजा कुर्यात्पुरोहितम् ॥
[2]सौवर्णै राजतैस्ताम्रैः कलशैः पार्थिवैरपि ।
सहस्रेण शतेनाथ तोयग्रहणमिष्यते ॥
[3]चतुर्णां सागराणां तु नदीनां च शतस्य तु ।
अभिषेकाय राज्ञस्तु तोयमाहृत्य यत्नतः ॥
[4]एकद्वित्रिचतुर्णां वा सागरस्य तु पञ्चमम् ।
ओषधीस्तेषु सर्वेषु कलशेषूपकल्पयेत् ॥
[5]सहा च सहदेवी च बला चातिबला तथा ।
मदयन्ती वचा श्वेता व्याघ्रदन्ती सुमङ्गला ॥
[6]शतावरी जयन्ती च शतपुष्पा सचन्दना ।
प्रियङ्गू रोचनोशीरममृता च ससारिवा ॥
[7]अश्वत्थप्लक्षबिल्वानां न्यग्रोधपनसस्य च ।
शिरीषाम्रकपित्थानां पल्लवैः समलंकृतान् ॥

(१) आप. ५।१ सांप्रतम् (सांपदम्) ; राप्र. ११२ ; राकौ. ३७५.

(२) आप. ५।१ वर्णै रा (वर्णरा) ; राप्र. ११२ ; राकौ. ३७५.

(३) आप. ५।१ ; राप्र. ११२–११३ ; राकौ. ३७५.

(४) आप. ५।१ ; राप्र. ११३ ; राकौ. ३७५ षूपक (षु प्रक).

(५) आप. ५।१ ; राप्र. ११३ (बला चाति ०) ; राकौ. ३७५.

(६) आप. ५।२ सारिवा (सारिका) ; राप्र. ११३ यङ्गू रो (यङ्गुरो) ; राकौ. ३७५ राप्रवत्.

(७) आप. ५।२ ; राप्र. ११३ ; राकौ. ३७५.

हेमरत्नौषधीबिल्वपुष्पगन्धाधिवासितान् ।
आच्छादितान् सितैर्वस्त्रैरभिमन्त्र्य पुरोहितः ॥
[1]सावित्र्युभयतः कुर्याच्छं नो देवी तथैव च ।
हिरण्यवर्णाः सूक्तं च अनुवाकाद्यमेव च ॥
[2]धरणी पादपीठं स्याद् दूर्वामूलाङ्कुराञ्छुभान् ।
तस्योपरि न्यसेत्पीठं हैमं रौप्यमथापि वा ॥
[3]अनडुद्व्याघ्रसिंहानां मृगस्य च यथाक्रमम् ।
चत्वारि चर्माण्येतानि पूर्वादारभ्य विन्यसेत् ॥
[4]चातुर्होत्रविधानेन जुहुयाच्च पुरोहितः ।
चतुर्दिक्षु स्थितैर्विप्रैर्वेदवेदाङ्गपारगैः ॥
[5]बिल्वाहारः फलाहारः पयसा वाऽपि वर्तयेत् ।
सप्तरात्रं घृताशी वा ततो होमं प्रयोजयेत् ॥
[6]गव्येन पयसा कुर्यात्सौवर्णेन स्रुवेण तु ।
वेदानामादिभिर्मन्त्रैर्महाव्याहृतिपूर्वकैः ॥
[7]शर्मवर्मा गणश्चैव तथा स्यादपराजितः ।
आयुष्यश्चाभयश्चैव तथा स्वस्त्ययनो गणः ॥

(१) आप. ५।२ ; राप्र. ११३ कुर्याच्छं नो देवी त (कृत्वा शं नो देवीस्त) वर्णाः सू (वर्णासू) ; राकौ. ३७५ त्र्युभ (त्र्योभ) कुर्याच्छं (कृत्वा शं) वर्णाः सू (वर्णं सू).

(२) आप. ५।२ ; राप्र. ११३ न्यसे (भवे) ; राकौ. ३७५–३७६ धरणी (धरण्यां) न्यसे (भवे) हैमं रौ (हेमरौ).

(३) आप. ५।३ ; राप्र. ११३ ; राकौ. ३७६ रि चर्माण्येतानि (र्येतानि चर्माणि).

(४) आप. ५।३ ; राप्र. ११३ ; राकौ. ३७६.

(५) आप. ५।३ ; राप्र. ११३ ; राकौ. ३७६ वा (च).

(६) आप. ५।३ ; राप्र. ११३ ; राकौ. ३७६ भिर्मन्त्रैर्म (मन्त्रेण म).

(७) आप. ५।३ ; राप्र. ११३ वर्मा ग (वर्मग) ; राकौ. ३७६ राप्रवत्.

[1]एतान् पञ्च गणान् हुत्वा वाचयेत द्विजोत्तमान् ।
हिरण्येनाक्षतार्घेण फलैश्च मधुसर्पिषा ॥

[2]पुण्याहं वाचयित्वाऽस्य प्रारम्भं कारयेद् बुधः ।
तिष्यनक्षत्रसंयुक्ते मुहूर्ते करणे शुभे ॥

[3]उच्चैर्घोषयते तूर्याण्यभिमन्त्र्य पुरोहितः ।
सर्वतूर्यनिनादेन अभिषिक्तो ह्यलंकृतः ॥

[4]सिंहासनं समारुह्य पीठिकां वा यथाक्रमम् ।
चामरच्छत्रसंयुक्तं प्रतिहारविभूषितम् ॥

[5]मत्तद्विपचतुष्कं च चतुर्दिक्षु प्रकल्पयेत् ।
उपविष्टस्ततो राजा प्रजानां कारयेद्धितम् ।
अकरा ब्राह्मणा गावः स्त्रीबालजडरोगिणः ॥

प्रजा एवाऽऽह–आकारेति । राकौ. ३७६

[6]ततस्तु दर्शनं देयं ब्राह्मणानां नृपेण तु ।
श्रेणीप्रकृतिमुख्यानां स्त्रीजनं च नमस्करेत् ॥

[7]आशिषस्ते हि दास्यन्ति तुष्टा जनपदा भुवि ।
एवं प्रजाऽनुरज्येत पृथिवी च वशा भवेत् ॥

[1]पुरोहितं मन्त्रिणं च सेनाध्यक्षं तथैव च ।
अश्वाध्यक्षं गजाध्यक्षं कोष्ठागारपतिं तथा ॥

[2]भाण्डागारपतिं वैद्यं दैवज्ञं च यथाक्रमम् ।
यथार्हेण च योगेन सर्वान् संपूजयेन्नृपः ॥

[3]राज्यं पुरोहिते न्यस्य शेषाणां च यथाक्रमम् ।
स्थानान्तराणि चान्यानि दत्त्वा सुखमवाप्नुयात् ॥

[4]दूर्वासिद्धार्थकान् सर्पिः शमीर्व्रीहियवौ तथा ।
शुक्लानि चैव पुष्पाणि मूर्ध्नि दद्यात्पुरोहितः ॥

[5]अथर्वविहितो ह्येष विधिः पुष्याभिषेचने ।
राजा स्नातो महीं भुङ्क्ते शक्रलोकं स गच्छति ॥

## *कालिकापुराणम्

पुष्यस्नानकालाः स्थानं च, पुष्यस्नानं शान्तिकर्मैव, स्थानाधिवासनम्

और्व उवाच–

[6]शृणु राजन् प्रवक्ष्यामि पुष्यस्नानविधिक्रमम् ।
येन विज्ञातमात्रेण विघ्ना नश्यन्ति संततम् ॥
पौषे पुष्यर्क्षगे चन्द्रे पुष्यस्नानं नृपश्चरेत् ।
सौभाग्यकल्याणकरं दुर्भिक्षमरणापहम् ॥
विष्ट्यादिदुष्टकरणे व्यतीपाते च वैधृतौ ।
वज्रे शूले हर्षणादौ योधे तु यदि (?योगे यदि न) लभ्यते ॥

(१) आप. ५१४ ; राप्र. ११४ येत (येत्तु) तार्घेण (ताढ्येन) ; राकौ. ३७६ तार्घेण (ताघ्र्येण).

(२) आप. ५१४ ; प्रार (आर) ; राप्र. ११४ तिष्य (तिथि) ; राकौ. ३७६ राप्रवत्.

(३) आप. ५१४ षयते (ष इति) ; राप्र. ११४ ; राकौ. ३७६.

(४) आप. ५१४ ; राप्र. ११४ द्वितीयचरणे (पीठकं वा क्रमागतम्) प्रति (प्रती) ; राकौ. ३७६ संयुक्तं (सहितं) शेषं राप्रवत्.

(५) आप. ५१४ ; राप्र. ११४ ; राकौ. ३७६ अकरा ब्रा (आकारब्रा).

(६) आप. ५१५ ; राप्र. ११४ ; राकौ. ३७७ स्तु दर्श (स्तद्दर्श).

(७) आप. ५१५ ; राप्र. ११४ ; राकौ. ३७७ स्ते हि दास्यन्ति (स्तैर्हि दास्यन्ते).

* अत्रत्यमशुद्धिसंशोधनं शुद्धिसूचनं च शब्दकल्पद्रुमकोशधृतकालिकापुराणप्रघट्टकमनुसृत्य कृतम् ।

(१) आप. ५१५ ; राप्र. ११४ ; राकौ. ३७७ ध्यक्षं त (ध्यक्षम).

(२) आप. ५१५ ; राप्र. ११४ ; राकौ. ३७७ योगेन (योग्येन).

(३) आप. ५१५ ; राप्र. ११४ ; राकौ. ३७७ शेषाणां च (शेषमृणं).

(४) आप. ५१५ ; राप्र. ११४ शमीर्व्रीं (शमी व्री) ; राकौ. ३७७ दूर्वासि (दूर्वाः सि) तथा (यथा) राप्रवत्.

(५) आप. ५१५ ; राप्र. ११४ ; राकौ. ३७७.

(६) कालिका. ८९।१–१४५.

तृतीयायुक्तपुष्यर्क्षे रविशौरिकुजेऽहनि।
तदा समस्तदोषाणां तत्स्नानं हानिकारकम्॥
ग्रहदोषाश्च जायन्ते यदि राज्येषु चेतयः।
तदा पुष्यर्क्षमात्रे तु कुर्यान्मासान्तरेऽपि च॥
इयं तु ब्रह्मणा शान्तिरुद्दिष्टा गुरवे पुरा।
शक्रादिसर्वदेवानां शान्त्यर्थं च जगत्पते॥
तुषकेशास्थिवल्मीककीटदेशादिवर्जिते।
शर्कराकृमिकूष्माण्डबहुकुष्टविवर्जिते॥
काकोलूकैश्च कङ्कैश्च काकोलैर्गृध्रशौ(? श्ये)नकैः।
वर्जिते कण्टकिवनबिभीतकविवर्जिते॥
शिग्रुश्लेष्मातकाभ्यां तु जलौकाद्यैर्विवर्जिते।
स्व(? सु)स्थाने चम्पकाशोकबकुलादिविराजिते॥
हंसकारण्डवाकीर्णे सरस्तीरेऽथवा शुचौ।
पुष्यस्नानाय नृपतिर्गृह्णीयात् स्थानमुत्तमम्॥
ततः पुरोहितो राजा नानावादित्रनिःस्वनैः।
प्रदोषसमये गच्छेत् तत्स्थानं पूर्ववासरे॥
तस्य स्थानस्य कौबेर्यां दिशि स्थित्वा पुरोहितः।
सुगन्धचन्दनैः पानैः कर्पूरद(? राद्य)धिवासितैः॥
गोरोचनाभिः सिद्धार्थैरक्षतैः सफ(? तैश्च फ)लादिभिः।
गन्धद्वारेत्यादिभिस्तु मन्त्रैः सर्वाधिसिक्तकैः(? वासकैः)॥
अधिवास्य तु तत्स्थानं पूजयेत्तत्र देवताः।
गणेशं केशवं शक्रं ब्रह्माणं चापि शंकरम्॥
उमया सहितं देवं सर्वाश्च गणदेवताः।
मातॄश्च पूजयेत्तत्र नृपतिः सपुरोहितः॥
मङ्गलान् कलशान् कृत्वा नानानैवेद्यसंचयान्।
प्रदद्यात्पायसं स्वादु फलं मोदकयावकौ॥
अधिवास्य च तत्स्थानं दूर्वासिद्धार्थकाक्षतैः।
तत्स्थानाच्चापि भूतानि सारयेन्मन्त्रमीरयन्॥
'अपसर्पन्तु ते भूता ये भूता भूमिपालकाः।
भूतानामविरोधेन पूजाकर्म करोम्यहम्॥'

ततः करौ पुटीकृत्य मन्त्रेणानेन पार्थिवः।
आवाहयेदिमान् देवान् पूज्यान् पुष्याभिषेकतः॥
'आगच्छन्तु सुराः सर्वे येऽत्र पूजाभिलाषिणः।
दिशो हि पालकाः सर्वे ये चान्येऽप्यंशभागिनः॥'
ततः पुष्पाञ्जलिं दत्त्वा पुनर्मन्त्रं पठेदिमम्।
'अद्य तिष्ठन्तु विबुधाः स्थानमासाद्य मामकम्।
स्वपूजां प्राप्य पातारो दत्त्वा शान्तिं महीभुजे॥'
ततस्तां नृपती रात्रिं नयेत्तु सपुरोहितः॥

पुष्यस्नानरात्रौ राज्ञा दृष्टस्वप्नशुभाशुभं विज्ञेयम्, अशुभस्वप्नदर्शने कर्तव्यं कर्म च

स्वप्ने शुभाशुभं विद्यान्नृपस्तु सपुरोहितः।
कृत्वा पूजां तु देवानां रात्रौ स्थाने नृपः स्वपेत्॥
शुभाशुभफलं स्वप्ने ज्ञेयं दोषज्ञसंमते।
दुःस्वप्नदर्शनं चेत् स्यात्तदा पुष्याभिषेचने॥
होमं चतुर्गुणं कुर्याद्दत्त्वा चापि गवां शतम्।
गोवाजिकुञ्जराणां तु प्रासादस्य गिरेस्तरोः॥
आरोहणं शुभकरं राज्यश्रीवृद्धिकारकम्।
दधिदेवसुवर्णानां ब्राह्मणस्य प्रदर्शनम्॥
वीणादूर्वाक्षतफलं पुष्पच्छत्रविलेपनम्।
शीतांशुचक्रशत्रूणां(? शङ्खानां) पद्मस्य सुहृदां तथा॥
लाभाः क्षयकराः शत्रौ रत्नकारस्य भूभृतः।
दर्शनं चोपरागस्य निगडेन च बन्धनम्॥
मांसस्य भोजनं चैव पर्वतस्य विवर्तनम्।
नाभिमध्ये तरूत्पत्तिर्मृतं प्रत्यनुरोदनम्॥
अगम्यागमनं कूपपङ्कगर्भा(? गर्ता)वतीर्णता।
पर्वतस्य तथा नद्याः स्रोतसां लङ्घनं तथा॥
सपुत्रमरणं चैव पानं रुधिरमद्ययोः।
भोजनं पायसस्यापि मनुष्यारोहणं तथा॥
कल्याणसुखसौभाग्यराज्यशत्रुक्षयं तथा।
एते स्वप्नाः प्रकुर्वन्ति नृपस्य नृपसत्तम॥

खरोष्ट्रमहिषाणां च आरोहो राज्यनाशनः ।
नृत्यं गीतं तथा हास्यं पाठश्चाप्यशुभप्रदः ॥
रक्तवस्त्रपरीधानं रक्तमाल्यानुलेपनम् ।
रक्तां कृष्णां स्त्रियं चैव कामयन् मृत्युमाप्नुयात् ॥
कूपान्तरे प्रवेशः स्याद्दक्षिणाशागतिस्तथा ।
पङ्के निमज्जनं स्नानं भार्यापुत्रविनाशनम् ॥
लाभस्तस्य भवेत् स्वप्ने नुरुत्पत्तिर्नृपस्य च ।
आदाय गर्भनाडीं तु स कुले(? शकुनो) याति खं दुनम्(? द्रुतम्) ।
स तु राज्यान्तरं प्राप्य महाकल्याणमाप्नुयात् ॥

पुष्याभिषेकस्वरूपम्, पुष्यस्नानविधिना राजाभिषेको युवराजाभिषेकश्च कर्तव्यः

दीर्घं विंशतिहस्तं तु हस्तषोडशविस्तृतम् ।
कुर्यात्तु लक्षणोपेतं यज्ञमण्डलमुत्तमम् ।
ततोऽपरेऽह्नि पूर्वाह्णे मातॄणां पूजनं चरेत् ॥
कुड्यलग्नां वसोर्धारां वृद्धिश्राद्धं तथैव च ।
चन्दनागुरुकस्तूरीधूम(? प)कर्पूरचूर्णकैः ॥
संपूज्य मण्डलस्थानं तस्मिन् ह्रौं शंभवे नमः ।
अस्त्राय हुं फडित्येवं लिखेन्मन्त्रद्वयं बुधः ॥
मन्त्रविन्मण्डलज्ञश्च सूत्रैः कम्बलसंभवैः ।
कौशेयैर्वा स्वस्तिकाख्यं प्रथमं मण्डलं लिखेत् ॥
चतुर्हस्तप्रमाणं तु मण्डलं विलिखेत्ततः ।
हस्तप्रमाणं पद्मं तु मण्डलस्य प्रकीर्तितम् ॥
द्वाराणि सार्धहस्तानि कर्णिकाकेशरोज्ज्वलम् ।
सितं रक्तं च पीतं च कृष्णं हरितमेव च ॥
शालिचूर्णैश्च कौसुम्भैर्हारिद्रैर्हरिदुद्भवैः ।
कुर्यात्तथाश्च(? अ)नैश्चूर्णै राजा मण्डलवृद्धये ॥
पद्मान्ततः समारभ्य नालं पश्चिमगामिनम् ।
पश्चिमद्वारमध्ये च चतुर्हस्तं विनिर्दिशेत् ॥
प्रत्येकं द्वारमध्ये तु पद्मं चैवाष्टपत्रकम् ।
कुर्यान्मण्डलभागज्ञश्चूर्णैरेव पृथक्पृथक् ॥
चूर्णैस्तु मण्डलं कृत्वा सूत्राण्युत्सारयेत्ततः ।
उत्सार्य सूत्रं प्रथमं मण्डलं पूजयेत्ततः ॥

भवनाय नम इति ततो हस्तं वियोजयेत् ।
सव्यावलम्बहस्तं तु रजःपातं समाचरेत् ॥
मध्यमानामिकाङ्गुष्ठैरुपरिष्टाद्यथेच्छया ।
अधोमुखाङ्गुली कृत्वा पातयेच्च विचक्षणः ॥
समा रेखा तु कर्तव्याऽविच्छिन्ना पुष्परञ्जिता ।
अङ्गुष्ठपर्वनैपुण्यात् समा कार्या विजानता ॥
संसक्तविषमं स्थूलं विच्छिन्नं कृसराकृतम् ।
पर्यन्तमर्पितं ह्रस्वमालिखेन्न कदाचन ॥
संसक्ते कलहं विद्यादूर्ध्वरेखे तु विग्रहम् ।
अतिस्थूले भवेद्व्याधिर्नित्यं पीडा विमिश्रिते ॥
बिन्दुभिर्भयमाप्नोति शत्रुपक्षान्न संशयः ।
कृशायां चार्थहानिः स्याच्छिन्नायां मरणं ध्रुवम् ॥
वियोगो वा भवेत्तस्य इष्टद्रव्यसुतस्य वा ।
अविदित्वा लिखेद्यस्तु मण्डलं तु यथेच्छया ॥
सर्वदोषानवाप्नोति ये दोषाः पूर्वमीरिताः ।
सितसर्षपदूर्वाद्या रेखाः कार्या विजानता ॥
विमलं विजयं भद्रं विमानं शुभदं शिवम् ।
वर्धमानं च देवं च शताक्षं कामदायकम् ॥
रुचिकं स्वस्तिकं चैव द्वादशैते तु मण्डलाः ।
यथास्थानं यथायज्ञं योजनीया विचक्षणैः ॥
सागरे मथ्यमाने तु पीयूषार्थं सुरोत्करैः ।
पीयूषधारणार्थाय निर्मिता विश्वकर्मणा ॥
कलां कलां तु देवानामसित्वा ते पृथक् पृथक् ।
यतः कृतास्तु कलशा(? सा)स्ततस्ते परिकीर्तिताः ॥
नवैव कलशाः प्रोक्ता नामतस्तान्निबोधत ।
गोह्योपगोह्यो मरुतो मयूखश्च तथाऽपरः ॥
मनोहाऽऽचार्यभद्रश्च विजय(? रुज)स्तनुदूषकः ।
इन्द्रियघ्नोऽथ विजयो नवमः परिकीर्तितः ॥
तेषामेव क्रमाद् भूप नव नामानि यानि तु ।
शृणु तान्यपराण्येव शान्तिदानि सदैव हि ॥

क्षितीन्द्रः प्रथमः प्रोक्तो द्वितीयो जलसंभवः।
पवनाग्नी ततो द्वौ तु यजमानस्ततः परः॥
कोषसंभवनाभ्यां(? नामा) तु षष्ठः स परिकीर्तितः।
सोमस्तु सप्तमः प्रोक्त आदित्यस्तु तथाऽष्टमः॥
विजयो नाम कलशो योऽसौ नवम उच्यते।
स तु पञ्चमुखः प्रोक्तो महादेवस्वरूपधृक्॥
घटस्य पञ्चवक्त्रेषु पञ्चवक्त्रः स्वयं तथा।
यथा काष्ठां स्थितः सम्यग्वामदेवादिनामतः॥
मण्डलस्य तु पद्मान्तः पञ्चवक्त्रं घटं न्यसेत्।
क्षितीन्द्रं पूर्वतो न्यस्य पश्चिमे जलसंभवम्॥
वायव्ये वायवं न्यस्य आग्नेये ह्यग्निसंभवम्।
नैर्ऋत्ये यजमानं तु ऐशान्यां कोषसंभवम्॥
सोममुत्तरतो योज्यं(? न्यस्य) सौरं दक्षिणतो न्यसेत्।
न्यस्यैवं कलशांश्चैव तेषु चैतान् विचिन्तयेत्॥
कलशानां मुखे ब्रह्मा ग्रीवायां शंकरः स्थितः।
मूले तु संस्थितो विष्णुर्मध्ये मातृगणाः स्थिताः॥
दिक्पाला देवताः सर्वा वेष्टयन्ति दिशो दश।
कुक्षौ तु सागराः सप्त सप्त द्वीपाश्च संस्थिताः॥
नक्षत्राणि ग्रहाः सर्वे तथैव कुलपर्वताः।
गङ्गाद्याः सरितः सर्वा वेदाश्चत्वार एव च॥
कलशे संस्थिताः सर्वे तेषु तानि विचिन्तयेत्।
रत्नानि सर्वबीजानि पुष्पाणि च फलानि च॥
वज्रमौक्तिकवैदूर्यमहापद्मेन्द्रस्फाटिकैः।
सर्वधाममयं बिल्वं नागरोदुम्बरं तथा॥
बीजपूरकजम्बीरकाश्मीराम्रातदाडिमम्।
यवं शालिं च नीवारं गोधूमं सितसर्षपम्॥
कुङ्कुमागुरुकर्पूरमदनं रोचनं तथा।
चन्दनं च तथा मांसीमेलां कुष्ठं तथैव च॥
कस्तूरिपत्रचूर्णं च जलनिर्यासकाम्बुदम्(?)।
शैलेयं बदरं जातीपत्रपुष्पे तथैव च॥
कालशाकं तथा पृक्कां देवीपर्णकमेव च।
त्वचां धात्रीं समञ्जिष्ठां तुरुष्कं मङ्गलाष्टकम्॥

दूर्वां मोहनिकां भद्रां शतमूलीं शतावरीम्।
वर्णानां(?) सरलां क्षुद्रां सहदेवां गजाह्वयाम्॥
पूर्णकोषां सितां पीठां(? पाठां) गुञ्जां शिरसिकानलौ॥
व्यामकं(?) गजदन्तं च शतपुष्पां पुनर्नवाम्।
ब्राह्मीं देवीं शिवां रुद्रां सर्वसंधानिकां तथा॥
समाहृत्य शुभानेतान् कलशेषु निधापयेत्।
कलशस्य यथादेशं विधिं शंभुं गदाधरम्॥
यथाक्रमं पूजयित्वा शंभुं मुख्यतया यजेत्।
प्रासादेन तु मन्त्रेण शंभुतन्त्रेण शंकरम्॥
प्रथमं पूजयेन्मध्ये नानानैवेद्यवेदनैः।
दिक्पालानां घटेष्वेव दिक्पालानपि पूजयेत्॥
पूर्वं बहिःस्थापितेषु ग्रहाणां कलशेषु च।
नवग्रहान् पूजयेत्तु मातृर्मातृघटेषु च॥
सर्वे देवा घटे पूज्या घटास्तेषां पृथक् पृथक्।
नवैव तत्र पूर्वोक्ताः स्मृता मुख्यतया नृप॥
भक्ष्यैर्भोज्यैश्च पेयैश्च पुष्पैर्नानाविधैः फलैः।
यावकैः पायसैश्चैव यथासंभवयोजितैः॥
पुष्यस्नानाय नृपतिः पूजयेत् सकलान् सुरान्।
दक्षिणे मण्डलस्याथ कुण्डं निर्माय पायसैः॥
समिद्भिः शालिसिद्धार्थैर्घृतैर्दूर्वाक्षतैस्तथा।
केवलैश्च तथैवाऽऽज्यैः पूजितान्सकलान्सुरान्॥
होमेन तोषयेद् वृद्ध्यै नृपः सर्त्विक्पुरोहितः।
होमान्ते मण्डलोदीच्यां वेदिकायां सपट्टकम्॥
रोचनाख्यमलंकारांस्तथा सर्वान्नियोजयेत्।
वृद्धावङ्गुलमङ्गुल्या षड्विंशाङ्गुलिकावधि॥
वृत्तं वा चतुरस्रं वा पद्मं त्रिकोणसंज्ञकम्।
रत्नेशानपद्ममध्ये तु गोमुष्टिकविनायकैः॥
श्रीश्रीवृक्षवरारोहामुमादेवीं शुभान्विताम्।
रत्नैः सर्वैरलंकारैः पट्टं कार्यं द्विहस्तकम्॥
हस्तविस्तारमुच्छ्रायं नवहस्तं(? कर्तव्यं तु) दशाङ्गुलम्।
स्नानार्थं सार्धहस्तं च पट्टं वृत्तं गुणान्वितम्॥

शय्या चतुर्गुणा दीर्घा धनुर्मानं तु पीठकम् ।
गजसिंहकृताटोपं हेमरत्नविभूषितम् ॥
सिंहाख्यं सार्धविस्ताराद्दण्डासनमथापि वा ।
व्याघ्रचित्रकपट्टैर्वा उपधानानि कारयेत् ॥
अन्यैर्वा निर्मितैश्चर्ममृदुतूलकपूरिता ।
शय्या दीर्घार्धविस्तीर्णा चतुर्हस्ता सुलक्षणा ॥
वितस्त्यधिकमिच्छन्ति नृपस्य गुरुविद्यया ।
अर्धचन्द्रसमं कुर्यादासनं चतुरस्त्रकम् ॥
उपधानानि शय्यायाः कर्णादिमूलभेदतः ।
षोडशैवात्र कार्याणि वर्णचित्रयुतानि च ॥
यानं सिंहासनं पट्टं शय्योपकरणादिकम् ।
राज्ञो नूतनयोग्यं तद्वेद्या उत्तरतो न्यसेत् ॥
तेषां तु पश्चिमे स्वर्णरत्नौघखचिते वरे ।
पर्यङ्के यज्ञदावौघनिर्मिते महदास्तरे ॥
ऊर्ध्वाच्छादनसंयुक्ते चर्मावृतचतुष्टये ।
वृषभस्य तथोर्णायाः(? योः) सिंहशार्दूलयोरपि ॥
पादपीठे रत्नयुते पादावारोप्य पार्थिवः ।
तस्मिन् पर्यङ्कपीठस्थे चर्मखड्ग(? ण्ड)-चतुष्टये ॥
नानालंकारभूषाढ्यं नृपतिं रत्नशालिनम् ।
स्नापयेद् ब्राह्मणैः सार्धं राजानं सुखसंगतम् ॥
संवीतकम्बलं कृष्णं बहुवस्त्रैश्च शोभितम् ।
कलशैर्बलिपुष्पाद्यैः शालिचूर्णैश्च स्नापयेत् ॥
अष्टौ षोडश विंशाष्ट शतमष्टाधिकं च वा ।
कलशानां समाख्याता अधिकस्योत्तरोत्तरम् ॥
जयकल्याणदैर्मन्त्रैर्मङ्गलोत्थैश्च शांभवैः ।
वैष्णवैरथ दिक्पालैर्ग्रहमन्त्रैश्च मातृकैः ॥
'आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम् ।
आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः ॥
भौमान्तरिक्षं दिव्यं वा यत्ते कल्मषमागतम् ।
सर्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छतु ॥'

ततोऽपनीय गात्रात्तु कम्बलं वस्त्रमेव च ।
कलशैः स्नापयेद् भूप पुण्यस्नानाय पूरितैः ।
एभिर्मन्त्रैर्नरश्रेष्ठ तनुतत्त्वार्थसाधकैः ॥
'सुरास्त्वामभिषिञ्चन्तु ये च सिद्धाः पुरातनाः ।
ब्रह्मा विष्णुश्च रुद्रश्च साध्याश्च समरुद्गणाः ।
आदित्या वसवो रुद्रा आश्विनौ यौ भिषग्वरौ ॥
अदितिर्देवमाता च स्वाहा लक्ष्मीः सरस्वती ।
कीर्तिर्लक्ष्मीर्धृतिः श्रीश्च सिनीवाली कुहूस्तथा ॥
दितिश्च सुरसा चैव विनता कद्रुरेव च ।
देवपत्न्यश्च याः प्रोक्ता देवमातर एव च ।
सर्वास्त्वामभिषिञ्चन्तु सिद्धाश्चाप्सरसां गणाः ।
नक्षत्राणि मुहूर्ताश्च पक्षाहोरात्रसंधयः ।
संवत्सरा निमेषाश्च कलाः काष्ठाः क्षणा लवाः ।
सर्वे त्वामभिषिञ्चन्तु कालस्यावयवास्तथा ॥
वैमानिकाः सुरगणा मनवः सागरैः सह ।
सरितश्च महानागा नागाः किंपुरुषास्तथा ॥
वैखानसा महाभागा द्विजा वैहायसाश्च ये ।
सप्तर्षयः सदाराश्च ध्रुवस्थानानि यानि तु ॥
मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः ॥
भृगुः सनत्कुमारश्च सनकश्च सनन्दनः ॥
सनातनश्च दक्षश्च जैगीषव्योऽभिनन्दनः ।
एकतश्च द्वितश्चैव त्रितो जाबालिकाश्यपौ ॥
दुर्वासा दुर्विनीतश्च कण्वः कात्यायनस्तथा ।
मार्कण्डेयो दीर्घतपाः शुनःशेपो विदूरथः ॥
और्वः संवर्तकश्चैव च्यवनोऽत्रिः पराशरः ।
द्वैपायनो यवक्रीतो देवरातः सहात्मजः ॥
एते चान्ये च बहवो वेदव्रतपरायणाः ।
सशिष्यास्तेऽभिषिञ्चन्तु सदाराश्च तपोधनाः ॥
पर्वतास्तरवो नद्यः पुण्यान्यायतनानि च ।
प्रजापतिः क्षितिश्चैव गावो विश्वस्य मातरः ॥
वाहनानि च दिव्यानि सर्वे लोकाश्चराचराः ।
अग्नयः पितरस्तारा जीमूताः खं दिशो जलम् ॥
एते चान्ये च बहवः पुण्यसंकीर्तनाः शुभाः ।
तोयैस्त्वामभिषिञ्चन्तु सर्वोत्पातनिबर्हणैः ॥'

इत्येवं शुभदैरेतैर्दिव्यैर्मन्त्रैस्तथा परैः ।
सौरैर्नारायणै रौद्रैर्ब्रह्मशक्रसमुद्भवैः ॥

आपो हि ष्ठा हिरण्येति संभवेति सुरेति च ।
मा नस्तोकेति मन्त्रेण गन्धद्वारेत्यनेन च ।
सर्वमङ्गलमाङ्गल्ये श्रीश्च ते ग्रहयोगिभिः ॥

इत्येवं स्नानमासाद्य गात्रमावृत्य कम्बलैः ।
सर्वमङ्गलमन्त्रेण वस्त्रं कार्पासकं भ्रियात् ।
आचम्य च ततो देवान् गुरुं विप्रांश्च पूजयेत् ॥

ध्वजं छत्रं चामरं च घण्टां चाश्वान् गजांस्तथा ।
मन्त्रं जप्त्वा धारयेत्तु ततो गच्छेद्धुताशनम् ॥

तत्र गत्वा वह्निमध्ये वह्नेः श्रीर्वीक्ष्य पार्थिवः ।
सुनिमित्तान्यनित्तानि(? अनिमित्तनिमित्तानि) लक्षयेत्तत्र बिन्दुभिः ॥

दैवज्ञकञ्चुक्यमात्यबन्दिपौरजनैर्वृतः ।
वादित्रघोषैस्तुमुलैस्तथा तौर्यत्रिकैः शुभैः ॥
कृत्वा शेषे पुनः शान्तिमाशीर्वाच्य च वै द्विजान् ।
पूर्णां विधाय विधिवद्दक्षिणां कनकान्विताम् ॥
धान्यानि चाथ वासांसि दत्त्वा कुर्याद्विसर्जनम् ।
ततः शेषजलैः सर्वानमात्यादीन् पुरोहितः ॥

सेचयेच्चतुरङ्गं च बलं चापि सराष्ट्रकम् ।
एवं कृत्वा नृपः पश्चात् त्रिरात्रं संयतो भवेत् ।
मांसमैथुनहीनश्च कुर्यान्माङ्गल्यसेवनम् ॥

पुष्यनक्षत्रयुक्ता तु तृतीया यदि लभ्यते ।
तस्यां पूज्या सदा देवी चण्डिका शंकरेण ह ।
पाञ्चालिकाविहाराद्यैः शिशूनां कौतुकैस्तथा ॥

वैवाहिकेन विधिना मोहयेच्चण्डिकां शिवाम् ।
चतुष्पथेषु सर्वेषु देवदेवीगृहेषु च ।
पताकाभिरलंकुर्यादेवं कुर्वन्न सीदति ॥

एवं कृत्वा शान्तियागं तथा पुष्याभिषेचनम् ।
चतुरङ्गैः समं राजा भार्याभिस्तनयैः सह ।
राज्यमण्डलसंयुक्तः परत्रेह न सीदति ॥

नातः परतरो यज्ञो नातः परतरोत्सवः ।
नातः परतरा शान्तिर्नातः परतरं शिवम् ॥

अनेनैव विधानेन नृपतेरभिषेचनम् ।
युवराज्याभिषेकं च कुर्याद्राजपुरोहितः ॥

नृपाभिषेककरणमादौ यदि समाचरेत् ।
अनेनैव विधानेन स्थिरः स्यान्नृपतिस्तदा ॥

अयं यज्ञः समुद्दिष्टः शक्रार्थं ब्रह्मणा पुरा ।
एवं यज्ञं नृपः कृत्वा परत्रेह न सीदति ॥

# संवत्सराभिषेकः

## विष्णुधर्मोत्तरपुराणम्

राजाभिषेकनक्षत्रे प्रतिसंवत्सरं संवत्सराभिषेकः

**राम उवाच–**

**[1]संवत्सराभिषेकं च कथयस्व महीभृतः ।**
**तत्र मे संशयो देव त्वं हि सर्वं विपश्यसि ॥**

**पुष्कर उवाच–**

**[2]राजाभिषेकनक्षत्रे प्रतिसंवत्सरं द्विजैः ।**
**पूर्वाभिषेकविधिना कर्तव्यमभिषेचनम् ॥**

---

(१) विध. २।१६२।१ शयो (शयं) ; राप्र. ११५ भृतः (क्षितः) सर्वं विपश्यसि (सर्वविदुच्यसे) ; राकौ. ३७९ राप्रवत्.

(२) विध. २।१६२।२ ; राप्र. ११५ ; राकौ. ३७९ द्विजैः (द्विज).

**[1]धन्यं यशस्यं रिपुनाशनं च**
**सौभाग्यदं पुष्टिविवर्धनं च ।**
**वर्षाभिषेकं नृपतेः प्रदिष्टं**
**सौख्यावहं राज्यविवृद्धिदं च ॥**

## ब्रह्मपुराणम्

राजाभिषेकदिवसे राजाभिषेकविधिना वर्धापनम्

**[2]अनेन विधिना यस्तु कुर्याद्वर्धापनं सदा ।**
**अभिषेकाह्नि यत्नेन प्रतिसंवत्सरं नृपः ॥**
**[3]स चिरायुर्जितामित्रो लभते विपुलां श्रियम् ॥**

ब्रह्मपुराणेऽपि राजाभिषेकमुक्त्वा–अनेनेति । 

* राप्र. ११५

---

* राकौ. राप्रवत् ।

(१) विध. २।१६२।३ ; राप्र. ११५ ; राकौ. ३७९.

(२) राक. १३ प्रथमचरणे (अनेनैव विधानेन) ; राप्र. ११५–११६ ; राकौ. ३३० राकवत् : ३७९ नृपः (नृप).

(३) राकौ. ३७९.

# जयाभिषेकः

## विष्णुधर्मोत्तरपुराणम्

राजाभिषेकविधिना यात्रापूर्वदिने कर्तव्यो जयाभिषेकः

[1]षष्ठेऽहनि जयस्नानं कर्तव्यं च तथा भवेत् ।
विधिरस्याभिषेकार्थः सर्व एव विधीयते ॥

अथ राज्ञो युद्धार्थं प्रस्थितस्य षड्दिनपर्यन्तं प्रस्थानमभिहितम् । सप्तमे दिने यात्रा । तत्र विष्णुधर्मोत्तरे षष्ठे दिने जयस्नानमभिहितम्— 'षष्ठेऽहनि ... ' इत्यादिना ।
राप्र. ३५०–३५१

## लिङ्गपुराणम्

युद्धे समुपस्थिते राज्ञा कर्तव्यो जयाभिषेकविधिः

ऋषय ऊचुः–

[2]प्रभावो नन्दिनश्चैव लिङ्गपूजाफलं श्रुतम् ।
श्रुतिभिः संमितं सर्वं रोमहर्षण सुव्रत ॥
जयाभिषेक ईशेन कथितो मनवे पुरा ।
हिताय मेरुशिखरे क्षत्रियाणां त्रिशूलिना ॥
तत्कथं षोडशविधं महादानं च शोभनम् ।
वक्तुमर्हसि चास्माकं सूत बुद्धिमतां वर ॥

सूत उवाच–

जीवच्छ्राद्धं पुरा कृत्वा मनुः स्वायंभुवः प्रभुः ।
मेरुमासाद्य देवेशमस्तवीन्नीललोहितम् ॥
तपसा च विनीताय प्रहृष्टः प्रददौ भवः ।
दिव्यं दर्शनमीशानस्तेनापश्यत्तमव्ययम् ॥
नत्वा संपूज्य विधिना कृताञ्जलिपुटः स्थितः ।
हर्षगद्गदया वाचा प्रोवाच च ननाम च ॥
देवदेव जगन्नाथ नमस्ते भुवनेश्वर ।
जीवच्छ्राद्धं महादेव प्रसादेन विनिर्मितम् ।
पूजितश्च ततो देवो दृष्टश्चैव मयाऽधुना ॥

(१) विध. २।१७६।३० ; राप्र. ३३९, ३५१ स्या ( स्तस्या ).
(२) लिङ्ग. २।२७।१–८.

[1]शक्राय कथितं पूर्वं धर्मकामार्थमोक्षदम् ।
जयाभिषेकं देवेश वक्तुमर्हसि मे प्रभो ॥

तद्विधिश्च लिङ्गपुराणेऽभिहितः । तथा हि महादेवं प्रति मनोः प्रश्नः— शक्रायेति । राप्र. ३५१

सूत उवाच–

[2]तस्मै देवो महादेवो भगवान्नीललोहितः ।
जयाभिषेकमखिलमवदत्परमेश्वरः ॥

श्रीभगवानुवाच–

[3]जयाभिषेकं वक्ष्यामि नृपाणां हितकाम्यया ।
अपमृत्युजयार्थं च सर्वशत्रुजयाय च ॥
[4]युद्धकाले तु संप्राप्ते कृत्वैवमभिषेचनम् ।
स्वपतिं चाभिषिच्यैव गच्छेद् योद्धुं रणाजिरे ॥
[5]विधिना मण्डपं कृत्वा प्रपां वा कूटमेव वा ।
नवधा स्थापयेद्वह्निं ब्राह्मणो वेदपारगः ॥
[6]ततः सर्वाभिषेकार्थं सूत्रपातं च कारयेत् ।
प्रागाद्यं वर्णसूत्रं च दक्षिणाद्यं तथा पुनः ॥
[7]सहस्राणां द्वयं तत्र शतानां च चतुष्टयम् ।
शेषमेकं तथा कोष्ठं तेषु कोष्ठानि संहरेत् ॥

(१) लिङ्ग. २।२७।८–९ ; राप्र. ३५१ मोक्ष ( मुक्ति ).
(२) लिङ्ग. २।२७।९–१० ; राप्र. ३५१.
(३) लिङ्ग. २।२७।१०–११ ; राप्र. ३५१ श्रीभगवानु ( शिव उ ) च सर्व ( तु सर्व ).
(४) लिङ्ग. २।२७।११–१२ ; राप्र. ३५१ तु ( च ) कृत्वैव ( कृत्वेद ) पतिं ( पत्नीं ) च्यैव ( च्यैवं ).
(५) लिङ्ग. २।२७।१२–१३ ; राप्र. ३५१ : ३७५ मेव वा ( मेव च ).
(६) लिङ्ग. २।२७।१३–१४ ; राप्र. ३५१ कार्थं ( कार्थे ), ३७५ पू.
(७) लिङ्ग. २।२७।१४–१५ मेकं तथा ( मेव शुभं ) कोष्ठानि ( कोष्ठं तु ) ; राप्र. ३५१.

[1]बाह्ये वीथ्यां पदं चैकं समन्तादुपसंहरेत् ।
अङ्गसूत्राणि संगृह्य विधिना पृथगेव तु ॥
[2]प्रागाद्यं वर्णसूत्रं च दक्षिणाद्यं तथा पुनः ।
प्रागाद्यं दक्षिणाद्यं च षट्त्रिंशत् संहरेत् क्रमात् ॥
[3]प्रागाद्याः पङ्क्तयः सप्त दक्षिणाद्यास्तथा पुनः ।
तस्मादेकोनपञ्चाशत् पङ्क्तयः परिकीर्तिताः ॥
[4]नव पङ्क्तीर्हरेन्मध्ये गन्धगोमयवारिणा ।
कमलं चाऽऽलिखेत्तत्र हस्तमात्रेण शोभनम् ॥
अष्टपत्रं सितं वृत्तं कर्णिकाकेसरान्वितम् ॥
[5]अष्टाङ्गुलप्रमाणेन कर्णिका हेमसंनिभा ।
चतुरङ्गुलमानेन केसरस्थानमुच्यते ॥
[6]धर्मं ज्ञानं च वैराग्यमैश्वर्यं च यथाक्रमम् ।
आग्नेयादिषु कोणेषु स्थापयेत् प्रणवेन तु ॥
[7]अव्यक्तादीनि वै दिक्षु गात्राकारेण वै न्यसेत् ।
अव्यक्तं नियतः कालः काली चेति चतुष्टयम् ॥
[8]सितरक्तहिरण्याभकृष्णा धर्मादयः क्रमात् ।
हंसाकारेण वै गात्रं हेमाभासेन सुव्रताः ॥

(१) लिङ्ग० २।२७।१५–१६ ; राप्र. ३५१.

(२) लिङ्ग. २।२७।१६–१७ ; राप्र. ३५१–३५२ षट्त्रिंशत् ( षड्रेखाः ).

(३) लिङ्ग० २।२७।१७–१८ ; राप्र. ३५२.

(४) लिङ्ग. २।२७।१८–१९ ; राप्र. ३५२ नव पङ्क्तीर्ह ( न च पङ्क्ति ह ) चाऽऽलि ( चा लि ) त्रेण शो ( त्रं सुशो ).

(५) लिङ्ग. २।२७।२० ; राप्र. ३५२.

(६) लिङ्ग. २।२७।२१ धर्मं ( धर्मो ) ; राप्र. ३५२.

(७) लिङ्ग. २।२७।२२ ; राप्र. ३५२ द्वितीयचरणे ( गोत्राचारेण विन्यसेत् ) व्यक्तं ( व्यक्तो ) काली ( कला ).

(८) लिङ्ग. २।२७।२३ ; राप्र. ३५२ व्रताः (व्रत).

[1]आधारशक्तिमध्ये तु कमलं सृष्टिकारणम् ।
बिन्दुमात्रं कलामध्ये नादाकारमतः परम् ॥
[2]नादोपरि शिवं ध्यायेदोंकाराख्यं जगद्गुरुम् ।
मनोन्मनीं च पद्माभं महादेवं च भावयेत् ॥
[3]वामादयः क्रमेणैव प्रागाद्याः केसरेषु वै ।
वामा ज्येष्ठा तथा रौद्री काली विकरणी तथा ॥
[4]बला प्रमथिनी देवी दमनी च यथाक्रमम् ।
वामदेवादिभिः सार्धं प्रणवेनैव विन्यसेत् ॥
[5]"नमोऽस्तु वामदेवाय नमो ज्येष्ठाय शूलिने ॥
[6]रुद्राय कालरूपाय कलाविकरणाय च ।
बलाय च तथा सर्वभूतस्य दमनाय च ॥
[7]मनोन्मनाय देवाय मनोन्मन्यै नमो नमः ।'
मन्त्रैरेतैर्यथान्यायं पूजयेत्परिमण्डलम् ॥
[8]प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
द्वितीयावरणे चैव शक्तयः षोडशैव तु ॥
[9]तृतीयावरणे चैव चतुर्विंशदनुक्रमात् ।
पिशाचवीथिवैं मध्ये नाभिवीथिः समन्ततः ॥

(१) लिङ्ग. २।२७।२४ ; राप्र. ३५२ आधारशक्ति ( शक्तिराधार ).

(२) लिङ्ग. २।२७।२५ ; राप्र. ३५२ च पद्माभं ( पदान्तस्थां ).

(३) लिङ्ग. २।२७।२६ ; राप्र. ३५२ काली ( कला ).

(४) लिङ्ग. २।२७।२७ ; राप्र. ३५२ बला प्रमथि ( बलप्रमथ ) नैव ( न तु ).

(५) लिङ्ग. २।२७।२८ ; राप्र. ३५२.

(६) लिङ्ग. २।२७।२९ ; राप्र. ३५२ बलाय ( बलानां ).

(७) लिङ्ग. २।२७।३० ; राप्र. ३५३ त्परिमण्डलम् ( न्मण्डलोपरि ).

(८) लिङ्ग. २।२७।३१ ; राप्र. ३५३.

(९) लिङ्ग. २।२७।३२ ; राप्र. ३५३ थिवैं ( थी वै ) वीथिः ( वीथी ).

[1]मन्त्रैरेतैर्यथान्यायं पिशाचानां प्रकीर्तिता ।
अष्टोत्तरसहस्रं तु पदमष्टारसंयुतम् ॥

[2]तेषु तेषु पृथक्त्वेन पदेषु कमलं क्रमात् ।
कल्पयेच्छालिनीवारगोधूमैश्च यवादिभिः ॥

[3]तण्डुलैश्च तिलैर्वाऽथ गौरसर्षपसंयुतैः ।
अथवा कल्पयेदेतैर्यथाकालं विधानतः ॥

अष्टपत्रं लिखेत्तेषु कर्णिकाकेसरान्वितम् ।
शालीनामाढकं प्रोक्तं कमलानां पृथक् पृथक् ॥

[4]तण्डुलानां तदर्धं स्यात्तदर्धं च यवादयः ।
द्रोणं प्रधानकुम्भस्य तदर्धं तण्डुलाः स्मृताः ॥

[5]तिलानामाढकं मध्ये यवानां च तदर्धकम् ।
अथाम्भसा समभ्युक्ष्य कमलं प्रणवेन तु ॥

[6]तेषु सर्वेषु विधिना प्रणवं विन्यसेत् क्रमात् ।
एवं समाप्य चाभ्युक्ष्य पदसाहस्रमुत्तमम् ॥

[7]कलशानां सहस्राणि हैमानि च शुभानि च ।
उक्तलक्षणयुक्तानि कारयेद्राजतानि वा ॥

[8]ताम्रजानि यथान्यायं प्रणवेनार्घ्यवारिणा ।
द्वादशाङ्गुलविस्तारमुदरे समुदाहृतम् ॥

(१) लिङ्ग. २।२७।३३ ; राप्र. ३५३ पूर्वार्धे (पिशाचानां हि मध्ये तु महावीथी प्रकीर्तिता ।).

(२) लिङ्ग. २।२७।३४ ; राप्र. ३५३ मैश्च य (माणुय).

(३) लिङ्ग. २।२७।३५–३६ ; राप्र. ३५३.

(४) लिङ्ग. २।२७।३७ ; राप्र. ३५३ च (तु).

(५) लिङ्ग. २।२७।३८ ; राप्र. ३५३ अथा (अर्घ्या).

(६) लिङ्ग. २।२७।३९ ; राप्र. ३५३ विन्य (च न्य) भ्युक्ष्य (भ्यर्च्य).

(७) लिङ्ग. २।२७।४० ; राप्र. ३५३ भानि च (भानि तु).

(८) लिङ्ग. २।२७।४१ ; राप्र. ३५४.

[1]वर्तितं तु तदर्धेन नाभिस्तस्य विधीयते ।
कण्ठं तु द्व्यङ्गुलोत्सेधं विस्तारं चतुरङ्गुलम् ॥

[2]ओष्ठं च द्व्यङ्गुलोत्सेधं निर्गमं द्व्यङ्गुलं स्मृतम् ।
तत्तद्वै द्विगुणं दिव्यं शिवकुम्भे प्रकीर्तितम् ॥

[3]यवमात्रान्तरं सम्यक् तन्तुना वेष्टयेद्धि वै ।
अवगुण्ठ्य तथाऽभ्युक्ष्य कुशोपरि यथाविधि ॥

[4]पूर्ववत् प्रणवेनैव पूरयेद्गन्धवारिणा ।
स्थापयेच्छिवकुम्भाढ्यं वर्धनीं च विधानतः ॥

मध्यपद्मस्य मध्ये तु सकूर्चं साक्षतं क्रमात् ।
आवेष्ट्य वस्त्रयुग्मेन प्रच्छाद्य कमलेन तु ॥

हैमेन चित्ररत्नेन सहस्रकलशं पृथक् ।
शिवकुम्भे शिवं स्थाप्य गायत्र्या प्रणवेन च ॥
'विद्महे पुरुषायैव महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥'
मन्त्रेणानेन रुद्रस्य सांनिध्यं सर्वदा स्मृतम् ।
वर्धन्यां देविगायत्र्या देवीं संस्थाप्य पूजयेत् ॥
'गणाम्बिकायै विद्महे महातपायै धीमहि ।
तन्नो गौरी प्रचोदयात् ॥'
प्रथमावरणे चैव वामाद्याः परिकीर्तिताः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
शक्तयः षोडशैवात्र पूर्वाद्यन्तेषु सुव्रत ।
ऐन्द्रव्यूहस्य मध्ये तु सुभद्रां स्थाप्य पूजयेत् ॥

(१) लिङ्ग. २।२७।४२ ; राप्र. ३५४ तं तु (तस्तु) तु (च) स्तारं (स्तारं).

(२) लिङ्ग. २।२७।४३ ; राप्र. ३५४ च (तु) द्व्यङ्गुलं स्मृतम् (तु द्विरङ्गुलम्) तत्त (तसा) कुम्भे (कुम्भं).

(३) लिङ्ग. २।२७।४४ ; राप्र. ३५४ वेष्टयेद्धि वै (ऽऽवेष्ट्य कीर्तिताः) पू.

(४) लिङ्ग. २।२७।४५–५९.

भद्रामाग्नेयचक्रे तु याम्ये तु कनकाण्डजाम् ।
अम्बिकां नैर्ऋते व्यूहे मध्यकुम्भे तु पूजयेत् ॥
श्रीदेवीं वारुणे भागे वागीशां वायुगोचरे ।
गोमुखीं सौम्यभागे तु मध्यकुम्भे तु पूजयेत् ॥
रुद्रव्यूहस्य मध्ये तु भद्रकर्णां समर्चयेत् ।
ऐन्द्राग्निविदिशोर्मध्ये पूजयेदणिमां शुभाम् ॥
याम्यपावकयोर्मध्ये लघिमां कमले न्यसेत् ।
राक्षसान्तकयोर्मध्ये महिमां मध्यतो यजेत् ॥
वरुणासुरयोर्मध्ये प्राप्तिं वै मध्यतो यजेत् ।
वरुणानिलयोर्मध्ये प्राकाम्यं कमले न्यसेत् ॥
वित्तेशानिलयोर्मध्ये ईशित्वं स्थाप्य पूजयेत् ।
वित्तेशेशानयोर्मध्ये वशित्वं स्थाप्य पूजयेत् ॥
ऐन्द्रं( ? न्द्रा )शेशानयोर्मध्ये यजेत् कामावसायकम् ।
द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु ॥
[1]शक्तयस्तु चतुर्विंशत् प्रधानकलशेषु च ।
पूजयेद् व्यूहमध्ये तु पूर्ववद् विधिपूर्वकम् ॥
[2]दक्षां दक्षायिकां चैव चण्डां चण्डांशुनायिकाम् ॥
[3]हरां हरायिकां चैव शौण्डां शौण्डायिकां तथा ।
प्रथमां प्रथमायिकां मन्मथां मन्मथायिकाम् ॥
[4]भीमां भीमायिकां चैव शकुनिं शकुनायिकाम् ।
सुमतिं च सुमत्यार्यीं गोपां गोपायिकां तथा ॥
[5]अथ नन्दं च नन्दार्यीं पितामहमतः परम् ।
पितामहार्यीं पूर्वाद्यं विधिना स्थाप्य पूजयेत् ॥

[1]एवं संपूज्य विधिना तृतीयावरणं शुभम् ।
सौभद्रं व्यूहमासाद्य प्रथमावरणे क्रमात् ॥
[2]प्रागाद्यं विधिना स्थाप्य शक्त्यष्टकमनुक्रमात् ।
द्वितीयावरणे चैव प्रागाद्यं शृणु शक्तयः ॥
[3]षोडशैव समभ्यर्च्य पद्ममुद्रां तु दर्शयेत् ।
*बिन्दुका बिन्दुगर्भा च नादिनी नादगर्भजा ॥
[4]शक्तिका शक्तिगर्भा च परा चैव परापरा ।
प्रथमावरणेऽष्टौ च शक्तयः परिकीर्तिताः ॥
[5]चण्डा चण्डमुखी चैव चण्डवेगा मनोजवा ।
चण्डाक्षी चण्डनिर्घोषा भृकुटी चण्डनायिका ॥
[6]मनोत्सेधा मनोध्यक्षा मानसी माननायिका ।
मनोहरी मनोह्लादी मनःप्रीतिर्महेश्वरी ॥
[7]द्वितीयावरणे चैव षोडशैव प्रकीर्तिताः ।
सौभद्रः कथितो व्यूहो भद्रं व्यूहं शृणुष्व मे ॥

---

(१) लिङ्ग. २।२७।६० ; राप्र. ३५५ प्रथमचरणे ( पूर्वं या देवताः सर्वाः ) तु ( च ).

(२) लिङ्ग. २।२७।६१ दक्षां द ( दीक्षां दी ) ; राप्र. ३५५ चण्डांशुनायिकाम् ( चण्डायिकां तथा ).

(३) राप्र. ३५५.

(४) लिङ्ग. २।२७।६१ च सुमत्यार्यीं ( सुमत्यार्यीं च ) उत्त ; राप्र. ३५५ गोपां ( गोपीं ).

(५) लिङ्ग. २।२७।६२ ; राप्र. ३५५ पूर्वाद्यं विधिना ( पूर्वाद्यां विधिवत् ).

* इत आरभ्य चत्वारिंशद्व्यूहानां प्रत्येकं प्रथमावरणेऽष्टौ द्वितीयावरणे च षोडश देवता उक्ताः । किंतु तासु क्वचित् न्यूनाधिकभावो दृश्यते । आधिक्यस्थले शिवतोषिण्याख्यटीकायां क्वचित्पदार्थयोर्विशेषणविशेष्यभावं परिकल्प्य इष्टसंख्याकत्वं संपादितम् । क्वचित् न्यूनाधिकभावपरिहारायास्माभिः राप्रपाठः स्वीकृतः । एवमपि क्वचिन्न्यूनाधिकभावो विद्यत एव ।

(१) लिङ्ग. २।२७।६३ ; राप्र. ३५५ द्रं व्यूह ( द्रव्यूह ).

(२) लिङ्ग. २।२७।६४ ; राप्र. ३५५ विधिना स्थाप्य ( स्थाप्य विधिना ).

(३) लिङ्ग. २।२७।६५ सम ( तु अ ) ; राप्र. ३५५ तु दर्श ( प्रदर्श ).

(४) लिङ्ग. २।२७।६६ ; राप्र. ३५५.

(५) लिङ्ग. २।२७।६७ ; राप्र. ३५५ वेगा ( वेषा ).

(६) लिङ्ग. २।२७।६८ ; राप्र. ३५५ त्सेधा ( द्भवा ) हरी ( हारी ).

(७) लिङ्ग. २।२७।६९ ; राप्र. ३५५–३५६ उत्तरार्धे ( सौभद्रं कथितं व्यूहं भद्रव्यूहं शृणुष्व मे ॥ ).

[1]ऐन्द्री हौताशनी याम्या नैर्ऋती वारुणी तथा।
वायव्या चैव कौबेरी ऐशानी चाष्टशक्तयः ॥

[2]प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
हरिणी च सुवर्णा च काञ्चनी हाटकी तथा॥

[3]रुक्मिणी सत्यभामा च सुभगा जम्बुनायिका।
वाग्भवा वाक्पथा वाणी भीमा चित्ररथा सुधीः ॥

[4]वेदमाता हिरण्याक्षी द्वितीयावरणे स्मृता।
भद्राख्यः कथितो व्यूहः कनकाख्यं शृणुष्व मे ॥

[5]वज्रं शक्तिश्च दण्डश्च खड्गं पाशो ध्वजस्तथा।
गदा त्रिशूलं क्रमशः प्रथमावरणे स्मृताः ॥

[6]बुद्धा प्रबुद्धा चण्डा च मुण्डा चैव कपालिनी।
मृत्युहन्त्री विरूपाक्षी कपर्दा कमलासना ॥

[7]दंष्ट्रिणी रङ्गिणी चैव लम्बाक्षी कङ्कभूषणी।
संभावा भाविनी चैव षोडशैव प्रकीर्तिताः ॥

[8]कथितः कनकव्यूहो ह्यम्बिकाख्यं शृणुष्व मे।
खेचरी सर्वनामा च भवानी वह्निरूपिणी ॥

(१) लिङ्ग. २।२७।७० ; राप्र. ३५६ हौता (हुता).
(२) लिङ्ग. २।२७।७१ ; राप्र. ३५६.
(३) लिङ्ग. २।२७।७२ ; राप्र. ३५६ सत्यभामा (च नमस्या).
(४) लिङ्ग. २।२७।७३ ; राप्र. ३५६ स्मृता (स्मृताः) ख्यः कथितो व्यूहः (ख्यं कथितं व्यूहं).
(५) लिङ्ग. २।२७।७४ पूर्वार्धे (वज्रं शक्तिं च दण्डं च खड्गं पाशं ध्वजं तथा ।) गदा (गदां); राप्र. ३५६.
(६) लिङ्ग. २।२७।७५ बुद्धा (युद्धा); राप्र. ३५६ कपर्दा (कपर्दी).
(७) लिङ्ग. २।२७।७६ ; राप्र. ३५६ भावा भाविनी (भवा शार्ङ्गिणी) शैव (शैताः).
(८) लिङ्ग. २।२७।७७ सर्वनामा (चाऽऽत्मना सा); राप्र. ३५६ थितः (थितं) व्यूहो ह्य (व्यूहम) भवानी वह्नि (शमनी ब्रह्म).

[1]वह्निनी वह्निनाभा च महिमाऽमृतलालसा।
प्रथमावरणे चाष्टौ शक्तयः सर्वसंमताः ॥

[2]क्षमा च शिखरा देवी ऋतुरत्ना शिला तथा।
छाया भूतपनी धन्या इन्द्रमाता च वैष्णवी ॥

[3]तृष्णा रागवती मोहा कामकोपा मदोत्कटा।
इन्द्रा च बधिरा देवी षोडशैताः प्रकीर्तिताः ॥

[4]कथितश्चाम्बिकाव्यूहः श्रीव्यूहं शृणु सुव्रत।
स्पर्शा स्पर्शवती गन्धा प्राणाऽपाना समानिका॥

[5]उदाना व्याननामा च प्रथमावरणे स्मृताः।
तमोहता प्रभाऽमोघा तेजिनी दहिनी तथा ॥

[6]भीमास्या जालिनी चोषा शोषिणी रुद्रनायिका।
वीरभद्रा गणाध्यक्षा चन्द्रहासा च गह्वरा ॥

[7]गणमाताऽम्बिका चैव शक्तयः सर्वसंमताः।
द्वितीयावरणे प्रोक्ताः षोडशैव यथाक्रमात् ॥

[8]श्रीव्यूहः कथितो भद्रं वागीशं शृणु सुव्रत।
धारा वारिधरा चैव वह्निकी नाशकी तथा ॥

(१) लिङ्ग. २।२७।७८ ; राप्र. ३५६ प्रथमचरणे (चलिनी बलनामा च).
(२) लिङ्ग. २।२७।७९ ; राप्र. ३५६ पूर्वार्धे (शङ्खिनी शिखरा देवी मृदुरत्ना सुशीतला ।) पनी (धनी).
(३) लिङ्ग. २।२७।८० मदो (महो); राप्र. ३५६.
(४) लिङ्ग. २।२७।८१ ; राप्र. ३५६–३५७ तश्चा (तं चा) व्यूहः (व्यूहं) ना समानिका (नसमनका).
(५) लिङ्ग. २।२७।८२ ; राप्र. ३५७ ऽमोघा (मोघा) जिनी (जनी) हिनी (हनी).
(६) लिङ्ग. २।२७।८३ ; राप्र. ३५७ जालिनी चोषा (ज्वालिनी शेषा) चन्द्र (चन्द्रा).
(७) लिङ्ग. २।२७।८४ ; राप्र. ३५७.
(८) लिङ्ग. २।२७।८५ ; राप्र. ३५७ हः कथितो (हं कथितं) वह्निकी नाशकी (वाह्निकी वायसी).

[1]मर्त्यातीता महामाया वज्रिणी कामधेनुका ।
प्रथमावरणेऽप्येवं शक्तयोऽष्टौ प्रकीर्तिताः ॥
पयोष्णी वारुणी शान्ता जयन्ती च वरप्रदा ।
प्लाविनी जलमाता च पयोमाता महाम्बिका ॥
[2]रक्ता कराली चण्डाक्षी महोच्छुष्मा पयस्विनी ।
माया विद्येश्वरी काली कालिका च यथाक्रमम् ॥
[3]षोडशैव समाख्याताः शक्तयः सर्वसंमताः ।
व्यूहो वागीश्वरः प्रोक्तो गोमुखो व्यूह उच्यते ॥
[4]शङ्खिनी हालिनी चैव लम्बकर्णा च कल्किनी ।
यक्षिणी मालिनी चैव वमनी च रसात्मनी ॥
[5]प्रथमावरणे चैव शक्तयोऽष्टौ प्रकीर्तिताः ।
चण्डा घण्टा महानादा सुमुखी दुर्मुखी बला ॥
[6]रेवती प्रथमा घोरा सैन्या लीना महाबला ।
जया च विजया चैव अपरा चापराजिता ॥
[7]द्वितीयावरणे चैव शक्तयः षोडशैव तु ।
कथितो गोमुखीव्यूहो भद्रकर्णी शृणुष्व मे ॥
[8]महाजया विरूपाक्षी शुक्लाभाऽऽकाशमातृका ।
संहारी जातहारी च दंष्ट्राली शुष्करेवती ॥
[9]प्रथमावरणे चाष्टौ शक्तयः परिकीर्तिताः ।
पिपीलिका पुण्यहारी अशनी सर्वहारिणी ॥

(१) लिङ्ग. २।२७।८६–८७ ; राप्र. ३०७.

(२) लिङ्ग. २।२७।८८ ; राप्र. ३५७ रक्ता (रुक्ता).

(३) लिङ्ग. २।२७।८९ ; राप्र. ३५७ उत्तरार्धे (व्यूहं वागीश्वरं प्रोक्तं गोमुखं व्यूहमुच्यते ॥ ).

(४) लिङ्ग. २।२७।९० लम्बकर्णा (लङ्कावर्णा) ; राप्र. ३५७ हालि (हलि) च रसात्मनी (वरमानिनी).

(५) लिङ्ग. २।२७।९१ ; राप्र. ३५७.

(६) लिङ्ग. २।२७।९२ ; राप्र. ३५७ सैन्य (सौम्या) अपरा (अजिता).

(७) लिङ्ग. २।२७।९३ ; राप्र. ३५७–३५८ चैव (चैताः) तृतीयचरणे (कथितं गोमुखं व्यूहं).

(८) लिङ्ग. २।२७।९४ ; राप्र. ३५८ जया (घण्टा) शुक्ला (शुष्का).

(९) लिङ्ग. २।२७।९५ ; राप्र. ३५८ पुण्य (पुष्प),

[1]भद्रहा विश्वहारी च हिमा योगेश्वरी तथा ।
चित्रा भानुमती छिद्रा सैंहिकी सुरभी समा ॥
[2]सर्वभव्या च वेगाख्या शक्तयः षोडशैव तु ।
महाव्यूहाष्टकं प्रोक्तमुपव्यूहाष्टकं शृणु ॥
[3]अणिमाव्यूहमावेष्ट्य प्रथमावरणे क्रमात् ।
ऐन्द्रा तु चित्रभानुश्च वारुणी दण्डिरेव च ॥
[4]प्राणरूपी तथा हंसः स्वात्मशक्तिः पितामहः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
[5]केशवो भगवान् रुद्रश्चन्द्रमा भास्करस्तथा ।
महात्मा च तथा ह्यात्मा ह्यन्तरात्मा महेश्वरः ॥
[6]परमात्मा ह्यणुर्जीवः पिङ्गलः पुरुषः पशुः ।
भोक्ता भूतपतिर्भीमो द्वितीयावरणे स्मृताः ॥
[7]कथितश्चाणिमाव्यूहो लघिमाख्यं वदामि ते ।
श्रीकण्ठोऽन्तश्च सूक्ष्मश्च त्रिमूर्तिः शशकस्तथा ॥
[8]अमरेशः स्थितीशश्च भारभूतस्तथाऽष्टमः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

(१) लिङ्ग. २।२७।९६ चित्रा (छिद्रा) ; राप्र. ३५८ हा विश्वहारी च हि (हारी शुभाचारी हे) समा (यमा).

(२) लिङ्ग. २।२७।९७ ; राप्र. ३५८ प्रथमचरणे (सर्वानन्दा खगाख्या च).

(३) लिङ्ग. २।२७।९८ ; राप्र. ३५८ ऐन्द्रा तु (ऐन्द्री च).

(४) लिङ्ग. २।२७।९९ ; राप्र. ३५८.

(५) लिङ्ग. २।२७।१०० ; राप्र. ३५८ महात्मा च (ईश्वरश्च).

(६) लिङ्ग. २।२७।१०१ ; राप्र. ३५८ भूतपतिर्भीमो (च भूपतिर्भावो).

(७) लिङ्ग. २।२७।१०२ ; राप्र. ३५८ (कथितं चाणिमाव्यूहं लघिमाख्यं वदामि ते । श्रीकण्ठः श्रीधरः श्रीशः सत्यकश्च तथा वरः ॥ ).

(८) लिङ्ग. २।२७।१०३ आरभूतस्त (दारतश्च त) ; राप्र. ३५८.

[1]स्थाणुर्हरश्च दण्डेशो भौक्तीशः सुरपुंगवः ।
सद्योजातोऽनुग्रहेशः क्रूरसेनः सुरेश्वरः ॥
[2]क्रोधीशश्च तथा चण्डः प्रचण्डः शिव एव च ।
एकरुद्रस्तथा कूर्मश्चैकनेत्रश्चतुर्मुखः ॥
[3]द्वितीयावरणे रुद्राः षोडशैव प्रकीर्तिताः ।
कथितो लघिमाव्यूहो महिमां शृणु सुव्रत ॥
[4]अजेशः क्षेमरुद्रश्च सोमेशो लाङ्गली तथा ।
दण्डारुश्चार्धनारी च एकान्तश्चान्त एव च ॥
[5]प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
शिखीशः शकलश्चण्डो द्विरण्डः कल एव च ॥
[6]पाली भुजङ्गनामा च पिनाकी खड्गिरेव च ।
काम ईशस्तथा श्वेतो भृगुः षोडश वै स्मृताः ॥
[7]कथितो महिमाव्यूहः प्राप्तिव्यूहं शृणुष्व मे ।
संवर्तो लकुलीशश्च वाडवो हस्तिरेव च ॥
[8]चण्डयक्षो गणपतिर्महात्मा भृगुजोऽष्टमः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
[9]त्रिविक्रमो महाजिह्वो ध्वाङ्क्षः श्रीभद्र एव च ।
महादेवो दधीचश्च कुमारश्च परावरः ॥

(१) लिङ्ग. २।२७।१०४ ; राप्र. ३५९ दण्डेशो भौक्ती ( चण्डेशो भूती ) ऽनुग्रहेशः क्रूर ( गुहेशश्च सूर ).

(२) लिङ्ग. २।२७।१०५ ; राप्र. ३५९ कूर्मश्चै ( कूर्चस्त्वे ).

(३) लिङ्ग. २।२७।१०६ ; राप्र. ३५९ थितो (थितं) व्यूहो ( व्यूहं ).

(४) लिङ्ग. २।२७।१०७ सोमेशो ( सोमोंऽशो ) ; राप्र. ३५९ दण्डा ( चण्डा ) नारी च ( नारीश ).

(५) राप्र. ३५९.

(६) लिङ्ग. २।२७।१०८ ; राप्र. ३५९.

(७) लिङ्ग. २।२७।१०९ ; राप्र. ३५९ थितो ( थितं ) व्यूहः ( व्यूहं ).

(८) लिङ्ग. २।२७।११० ; राप्र. ३५९ त्मा भृगुजो ( भृगुरजो ).

(९) लिङ्ग. २।२७।१११ ध्वाङ्क्षः ( ऋक्षः ) ; राप्र. ३५९.

[1]महादंष्ट्रः करालश्च सूचकश्च सुवर्धनः ।
महाध्वाङ्क्षो महानन्दो दण्डी गोपालकस्तथा ॥
[2]प्राप्तिव्यूहः समाख्यातः प्राकाम्यं शृणु सुव्रत ।
पुष्पदन्तो महानागो विपुलानन्दकारकः ॥
[3]शुक्लो विशालः कमलो बिल्वश्चारुण एव च ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
[4]रतिप्रियः सुरेशानश्चित्राङ्गश्च सुदुर्जयः ।
विनायकः क्षेत्रपालो महामोहश्च जङ्गलः ॥
[5]वत्सपुत्रो महापुत्रो ग्रामदेशाधिपस्तथा ।
सर्वावस्थाधिपो देवो मेघनादः प्रचण्डकः ॥
[6]कालदूतश्च कथितो द्वितीयावरणं स्मृतम् ।
प्राकाम्यः कथितो व्यूह ऐश्वर्यं कथयामि ते ॥
[7]मङ्गला चर्चिका चैव योगेशा हरदायिका ।
भासुरा सुरमाता च सुन्दरी मातृकाऽष्टमी ॥
[8]प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ।
गणाधिपश्च मन्त्रज्ञो वरदेवः षडाननः ॥

(१) लिङ्ग. २।२७।११२ ; राप्र. ३५९ नन्दो दण्डी ( नन्दी गण्डो ).

(२) लिङ्ग. २।२७।११३ ; राप्र. ३६० व्यूहः ( व्यूहं ) ख्यातः ( ख्यातं ) नागो ( नन्दो ).

(३) लिङ्ग. २।२७।११४ ; राप्र. ३६० शुक्लो विशालः ( शुल्को विडालः ).

(४) लिङ्ग. २।२७।११५ ; राप्र. ३६० जङ्ग ( जाङ्ग ).

(५) लिङ्ग. २।२७।११६ ; राप्र. ३६० पस्तथा ( पौ तथा ) सर्वावस्था ( सर्वस्थाना ).

(६) लिङ्ग. २।२७।११७ ; राप्र. ३६० म्यः कथितो व्यूह ऐ ( म्यं कथितं व्यूहमै ).

(७) लिङ्ग. २।२७।११८ ; राप्र. ३६० गेशा हर ( गीशा वर ).

(८) लिङ्ग. २।२७।११९ ; राप्र. ३६० रणे ( रणं ) प्रोक्ता ( प्रोक्तं ) वरदे ( वामदे ).

[1]विदग्धश्च विचित्रश्च अमोघो मोघ एव च ।
अश्वी रुद्रश्च सोमेशश्चोत्तमोदुम्बरस्तथा ॥

[2]नारसिंहश्च विजयस्तथा इन्द्रगुहः प्रभुः ।
अपांपतिश्च विधिना द्वितीयावरणं स्मृतम् ॥

[3]ऐश्वर्यः कथितो व्यूहो वशित्वं पुनरुच्यते ।
गगनो भवनश्चैव विजयो ह्यजयस्तथा ॥

[4]महाजयस्तथाऽङ्गारो व्यङ्गारश्च महायशाः ।
प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ॥

[5]सुन्दरश्च प्रचण्डेशो महावर्णो महासुरः ।
महारोमा महागर्भः प्रथमः कनकस्तथा ॥

[6]खरजो गरुडश्चैव मेघनादोऽथ गर्जकः ।
गजश्च च्छेदको बाहुस्त्रिशिखो मारिरेव च ॥

[7]वशित्वं कथितो व्यूहः शृणु कामावसायिकम् ।
विनादो विकटश्चैव वसन्तोऽभय एव च ॥

[8]विद्युन्महाबलश्चैव कमलो दमनस्तथा ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

---

(१) लिङ्ग. २।२७।१२० ; राप्र. ३६० अश्वी रुद्र (अश्वो भद्र).

(२) लिङ्ग. २।२७।१२१ ; राप्र. ३६० गुहः (ग्रहः).

(३) लिङ्ग. २।२७।१२२ ; राप्र. ३६० पूर्वार्धे (ऐश्वर्यं कथितं व्यूहं वशित्वं कथयाम्यतः ।) भव (भुव).

(४) लिङ्ग. २।२७।१२३ ; राप्र. ३६० रके (रणं) प्रोक्ता (प्रोक्तं).

(५) लिङ्ग. २।२७।१२४ ; राप्र. ३६१ सुन्दरश्च (महाहर्षः).

(६) लिङ्ग. २।२७।१२५ ; राप्र. ३६१ गर्ज (गर्भ) श्च च्छेदको बाहु (त्वक्छेदको बाहु).

(७) लिङ्ग. २।२७।१२६ ; राप्र. ३६१ तो व्यूहः (तं व्यूहं).

(८) लिङ्ग. २।२७।१२७–१२८ ; राप्र. ३६१.

धर्मश्चातिबलः सर्पो महाकायो महाहनुः ।
सबलश्चैव भस्माङ्गी दुर्जयो दुरतिक्रमः ॥

[1]वेतालो रौरवश्चैव दुर्धराभोग एव च ।
वज्रः कालाग्निरुद्रश्च सद्योनादो महागुहः ॥

[2]द्वितीयावरणं प्रोक्तं व्यूहश्चैवावसायिकः ।
कथितः षोडशो व्यूहो द्वितीयावरणं शृणु ॥

[3]द्वितीयावरणे चैव दक्षव्यूहे च शक्तयः ।
प्रथमावरणे चाष्टौ बाह्ये षोडश एव च ॥
मनोहरा महानादा चित्रा चित्ररथा तथा ।
रोहिणी चैव चित्राङ्गी चित्ररेखा विचित्रिका ॥

[4]प्रथमावरणे प्रोक्ता द्वितीयावरणं शृणु ।
चित्रा विचित्ररूपा च शुभदा कामदा शुभा ॥

[5]क्रूरा च पिङ्गला देवी खड्गिका लम्बिका सती ।
दंष्ट्राली राक्षसी ध्वंसी लोलुपा लोहितामुखी ॥

[6]द्वितीयावरणे प्रोक्ताः षोडशैव समासतः ।
दक्षव्यूहः समाख्यातो दाक्षव्यूहं शृणुष्व मे ॥

[7]सर्वासती विश्वरूपा लम्पटा चाऽऽमिषप्रिया ।
दीर्घदंष्ट्रा च वज्रा च लम्बोष्ठी प्राणहारिणी ॥

[8]प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
गजकर्णाऽश्वकर्णा च महाकाली सुभीषणा ॥

---

(१) लिङ्ग. २।२७।१२९ राभोग (रो भोग) ; राप्र. ३६१ सद्यो (सिंह).

(२) लिङ्ग. २।२७।१३० ; राप्र. ३६१ व्यूहश्चै... व्यूहो (व्यूहं कामावसायिकम् । कथितं षोडशव्यूहं).

(३) लिङ्ग. २।२७।१३१–१३२ ; राप्र. ३६१.

(४) लिङ्ग. २।२७।१३३ ; राप्र. ३६१ रणं (रणे).

(५) लिङ्ग. २।२७।१३४ ; राप्र. ३६१.

(६) लिङ्ग. २।२७।१३५ ; राप्र. ३६२ व्यूहः (व्यूहं) ख्यातो (ख्यातं).

(७) लिङ्ग. २।२७।१३६ ; राप्र. ३६२ सती (शिनी) उत्तरार्धे (लम्बोष्ठी दीर्घदंष्ट्रा च लम्बजानुः प्रहारिणी ॥).

(१) लिङ्ग. २।२७।१३७ ; राप्र. ३६२.

[1]वातवेगरवा घोरा घना घनरवा तथा ।
वरघोषा महावर्णा सुघण्टा घण्टिका तथा ॥

[2]घण्टेश्वरी महाघोरा घोरा चैवातिघोरिका ।
द्वितीयावरणे चैव षोडशैव प्रकीर्तिताः ॥

[3]दाक्षव्यूहः समाख्यातश्चण्डव्यूहं शृणुष्व मे ।
अतिघण्टा चातिघोरा कराला करभा तथा ॥

[4]विभूतिर्भोगदा कान्तिः शङ्खिनी चाष्टमी स्मृता ।
प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ॥

[5]पत्रिणी चैव गान्धारी योगमाता सुपीवरा ।
रक्ता मालांशुका वीरा संहारी मांसहारिणी ॥

[6]फलहारी जीवहारी स्वेच्छाहारी च तुण्डिका ।
रेवती रङ्गिणी सङ्गा द्वितीये षोडशैव तु ॥

[7]चण्डव्यूहः समाख्यातश्चण्डाव्यूहस्तथोच्यते ।
चण्डी चण्डमुखी चण्डा चण्डवेगा महारवा ॥

[8]भ्रुकुटी चण्डभूश्चैव चण्डरूपाऽष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

(१) लिङ्ग. २।२७।१३८ ; राप्र. ३६२ वर (घोर) वर्णा (घण्टा).

(२) लिङ्ग. २।२७।१३९ ; राप्र. ३६२.

(३) लिङ्ग. २।२७।१४० ; राप्र. ३६२ (दाक्षव्यूहं समाख्यातं चण्डाव्यूहं शृणुष्व मे । अतिघण्टाऽतिघोरा च कराला करका तथा ॥).

(४) लिङ्ग. २।२७।१४१ ; राप्र. ३६२ रणे (रणं) प्रोक्ता (प्रोक्तं).

(५) लिङ्ग. २।२७।१४२ ; राप्र. ३६२ उत्तरार्धे (उत्तालकोत्सुका वीरा संहारी रमणी तथा ॥).

(६) लिङ्ग. २।२७।१४३ ; राप्र. ३६२.

(७) लिङ्ग. २।२७।१४४ ; राप्र. ३६२ पूर्वार्धे (चण्डाव्यूहं समाख्यातं चण्डायीव्यूहमुच्यते ।).

(८) लिङ्ग. २।२७।१४५ ; राप्र. ३६२ भूश्चैव (रूपा च) रूपा (भ्रूश्चा).

[1]चन्द्रघ्राणा बला चैव बलजिह्वा बलेश्वरी ।
बलवेगा महाकाया महाकोपा च विद्युता ॥

[2]कङ्काली कलशी चैव विद्युता चण्डघोषिका ।
महाघोषा महारावा चण्डभाऽनङ्गचण्डिका ॥

[3]चण्डायाः कथितो व्यूहो हरव्यूहं शृणुष्व मे ।
चण्डाक्षी कामदा देवी सूकरी कुक्कुटानना ॥

[4]गान्धारी दुन्दुभिर्दुर्गा सौमित्रा चाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

[5]मृतोद्भवा महालक्ष्मीर्वर्णदा जीवरक्षिणी ।
हरिणी क्षीणजीवा च दण्डवक्त्रा चतुर्भुजा ॥

[6]व्योमचारी व्योमरूपा व्योमव्यापी शुभोदया ।
गृहचारी सुचारी च विषाहारी विषार्तिहा ॥

[7]हरव्यूहः समाख्यातो हराया व्यूह उच्यते ।
जम्भाऽच्युता च कङ्कारी देविका दुर्धरा वहा ॥

[8]चण्डिका चपला चेति प्रथमावरणे स्मृताः ।
चण्डिका चामरी चैव भण्डिका च शुभानना ॥

(१) लिङ्ग. २।२७।१४६ ; राप्र. ३६२–३६३ बला (चला) बल (चल) बले (चले) कोपा (माया).

(२) लिङ्ग. २।२७।१४७ ; राप्र. ३६३ कलशी चैव विद्युता (च कृशाङ्गी च किंशुका) घोषा (हासा).

(३) लिङ्ग. २।२७।१४८ ; राप्र. ३६३ याः कथितो व्यूहो (व्याः कथितं व्यूहं) सूक (शूक).

(४) लिङ्ग. २।२७।१४९ भिर्दुर्गा (भी दुर्गा); राप्र. ३६३.

(५) लिङ्ग. २।२७।१५० ; राप्र. ३६३ मृतो (अमृतो) दण्ड (चन्द्र).

(६) लिङ्ग. २।२७।१५१ ; राप्र. ३६३ षार्तिहा (षान्तिका).

(७) लिङ्ग. २।२७।१५२ ; राप्र. ३६३ पूर्वार्धे (हरव्यूहं समाख्यातं हरायीव्यूहमुच्यते ।).

(८) लिङ्ग. २।२७।१५३ ; राप्र. ३६३.

[1]पिण्डिका मुण्डिनी मुण्डा शाकिनी शाङ्करी तथा।
कर्तरी भर्तरी चैव भागिनी यज्ञदायिनी॥
[2]यमदंष्ट्रा महादंष्ट्रा कराला चेति शक्तयः।
हरायाः कथितो व्यूहः शौण्डव्यूहं शृणुष्व मे॥
[3]विकराली कराली च कालजङ्घा यशस्विनी।
वेगा वेगवती यज्ञा वेदाङ्गा चाष्टमी स्मृता॥
[4]प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
वज्रा शङ्खवती शङ्खा बला चैवाबला तथा॥
[5]अञ्जनी मोहिनी माया विकटाङ्गी नली तथा।
गण्डकी दण्डकी घोणा शोणा सत्यवती तथा॥
[6]कल्लोला चेति क्रमशः षोडशैव यथाविधि।
शौण्डव्यूहः समाख्यातः शौण्डाया व्यूह उच्यते॥
[7]दन्तुरा रौद्रभागा च अमृता सकुला शुभा।
चलजिह्वाऽऽर्यनेत्रा च रूपिणी दारिका तथा॥

[1]प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
खादिका रूपनामा च संहारी च क्षमाऽन्तका॥
[2]कण्डिनी पेषिणी चैव महात्रासा कृतान्तिका।
दण्डिनी किङ्करी बिम्बा वर्णिनी चामलाङ्गिनी॥
[3]द्रविणी द्राविणी चैव शक्तयः षोडशैव तु।
कथितो हि मनोरम्यः शौण्डाया व्यूह उत्तमः॥
[4]प्रथमाख्यं प्रवक्ष्यामि व्यूहं परमशोभनम्।
प्लविनी प्लावनी शोभा मन्दा चैव मदोत्कटा॥
[5]मदाऽक्षेपा महादेवी प्रथमावरणे स्मृताः।
कामसंदीपिनी देवी अतिरूपा मनोहरा॥
[6]महावशा मदग्राहा विह्वला मदविह्वला।
अरुणा शोषणा दिव्या रेवती भाण्डनायिका॥
[7]स्तम्भिनी घोररक्ताक्षी स्मररूपा सुघोषणा।
व्यूहः प्रथम आख्यातः स्वायंभुव यथा तथा॥
[1]कथितं प्रथम(?मा)व्यूहं प्रवक्ष्यामि शृणुष्व मे।
घोरा घोरतराऽघोरा अतिघोराऽघनायिका॥

---

(१) लिङ्ग. २।२७।१५४ ; राप्र. ३६३ पिण्डिका (पिण्डिनी) शाकिनी शाङ्क (डाकिनी शार्ङ्ग) भर्त (हर्त) भागि (भामि)।

(२) लिङ्ग. २।२७।१५५ ; राप्र. ३६३ याः कथितो व्यूहः शौण्ड (य्याः कथितं व्यूहं शौण्डा)।

(३) लिङ्ग. २।२७।१५६ ; राप्र. ३६३ यज्ञा (विद्या) ष्टमी स्मृता (ष्ट शक्तयः)।

(४) लिङ्ग. २।२७।१५७ शङ्खवती शङ्खा (शङ्खाऽतिशङ्खा वा); राप्र. ३६३ चैवा (चैक) तथा॥ + (बला चातिबला लोला कुम्भिनी स्तम्भिनी तथा।)।

(५) लिङ्ग. २।२७।१५८ ; राप्र. ३६४ मोहि (मोह) पू.

(६) लिङ्ग. २।२७।१५९ ; राप्र. ३६४ (शौण्डाव्यूहं समाख्यातं शौण्डायीव्यूहमुच्यते॥) उत्त.

(७) लिङ्ग. २।२७।१६० ; राप्र. ३६४ सकुला शुभा (सकुला तथा) ऽऽर्यनेत्रा (ऽर्धनेत्रा)।

(१) लिङ्ग. २।२७।१६१ ; राप्र. ३६४ (प्रथमावरणस्यैता द्वितीयावरणे शृणु। खादका रूपनाशा च संहारी चाक्षयाऽन्तका॥)।

(२) लिङ्ग. २।२७।१६२ ; राप्र. ३६४ कण्डिनी पेषि (कण्डनी पेष) त्रासा (ग्रासा)।

(३) लिङ्ग. २।२७।१६३ ; राप्र. ३६४ (विद्राणी द्रविणी चेति शक्तयः षोडशैव तु। कथितं हि मनोरम्यं शौण्डायीव्यूहमुत्तमम्॥)।

(४) लिङ्ग. २।२७।१६४ ; राप्र. ३६४ परम (रम्यं सु) प्लवि (प्लव)।

(५) लिङ्ग. २।२७।१६५ मदा (मन्दा) ; राप्र. ३६४ क्षेपा (क्षया) दीपि (दीप)।

(६) लिङ्ग. २।२७।१६६; राप्र. ३६४ शोषणा (घोषणी)।

(७) लिङ्ग. २।२७।१६७ ; राप्र. ३६४ स्तम्भि (स्तम्भ) स्मर (घोर) तृतीयचरणे (व्यूहं तु प्रथमाख्यं ते)।

(१) लिङ्ग. २।२७।१६८ ; राप्र. ३६४ म(?मा)व्यूहं (माव्याख्यं) राऽघोरा (रा घोरा)।

[1]धावनी क्रोष्टुका मुण्डा चाष्टमी परिकीर्तिता।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

[2]भीमा भीमतराऽभीमा शस्ता चैव सुवर्तुला।
स्तम्भिनी रोदनी रौद्रा रुद्रवत्यचलाचला ॥

[3]महाबला महाशान्तिः शाला शान्ता शिवा-शिवा।
बृहत्कक्षा महानासा षोडशैव प्रकीर्तिताः ॥

[4]प्रथमायाः समाख्यातो मन्मथव्यूह उच्यते।
तालकर्णी च बाला च कल्याणी कपिला शिवा ॥

[5]इष्टिस्तुष्टिः प्रतिज्ञा च प्रथमावरणे स्मृताः।
ख्यातिः पुष्टिकरी तुष्टिर्जला चैव श्रुतिर्धृतिः ॥

[6]कामदा शुभदा सौम्या तेजिनी कामतन्त्रिका।
धर्मा धर्मवशा शीला पापहा धर्मवर्धिनी ॥

[7]मन्मथः कथितो व्यूहो मन्मथायाः शृणुष्व मे।
धर्मरक्षा विधाना च धर्मा धर्मवती तथा ॥

(१) लिङ्ग. २।२७।१६९ ; राप्र. ३६४–३६५ ष्टुका (ष्टुकी).

(२) लिङ्ग. २।२७।१७० ; राऽभीमा (रा भीमा) चलाचला (चला चला) ; राप्र. ३६५ शस्ता... रौद्रा (शस्त्री चैव सुवर्चला। स्तम्भनी मोहनी रौद्री).

(३) लिङ्ग. २।२७।१७१ ; राप्र. ३६५ शाला शान्ता (शिवाशीला) त्कक्षा महानासा (त्कुक्षी बृहन्नासा).

(४) लिङ्ग. २।२७।१७२ ; राप्र. ३६५ (प्रथमायी समाख्याता मन्मथाख्यं वदामि ते। कालकर्णी कराला च कल्याणी कपिला शिवा ॥ ).

(५) लिङ्ग. २।२७।१७३ ; राप्र. ३६५ प्रतिज्ञा (प्रतिष्ठा) ख्यातिः (शान्तिः) जला (जया).

(६) लिङ्ग. २।२७।१७४ ; राप्र. ३६५ शुभदा (सुभगा) तेजि (तेज) धर्मा धर्मवशा (धार्मिकी धर्मिणी).

(७) लिङ्ग. २।२७।१७५ ; राप्र. ३६५ पूर्वार्धे (मान्मथं कथितं व्यूहं मान्मथायिकमुच्यते।) विधाना (निवाता).

[1]सुमतिर्दुर्मतिर्मेधा विमला चाष्टमी स्मृता।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

[2]शुद्धिर्बुद्धिर्द्युतिः कान्तिर्वर्तुला मोहवर्धिनी।
बला चातिबला भीमा प्राणवृद्धिकरी तथा ॥

[3]निर्लज्जा निर्घृणा मन्दा सर्वपापक्षयंकरी।
कपिला चातिविधुरा षोडशैताः प्रकीर्तिताः ॥

[4]मन्मथायिक उक्तस्ते भीमव्यूहं वदामि च।
रक्ता चैव विरक्ता च उद्वेगा शोकवर्धिनी ॥

[5]कामा तृष्णा क्षुधा मोहा चाष्टमी परिकीर्तिता।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

[6]जया निद्रा भयाऽऽलस्या जलतृष्णोदरी दरा।
कृष्णा कृष्णाङ्गिनी वृद्धा शुद्धोच्छिष्टाशनी वृषा ॥

[7]कामना शोभिनी दग्धा दुःखदा सुखदा तथा।
भीमव्यूहः समाख्यातो भीमायीव्यूह उच्यते ॥

[8]आनन्दा च सुनन्दा च महानन्दा शुभंकरी।
वीतरागा महोत्साहा जितरागा मनोरथा ॥

[9]प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
मनोन्मनी मनःक्षोभा मदोन्मत्ता मदाकुला ॥

(१) लिङ्ग. २।२७।१७६ ; राप्र. ३६५.

(२) लिङ्ग. २।२७।१७७ ; राप्र. ३६५ र्द्युतिः (र्मतिः) वर्धि (वर्ध).

(३) लिङ्ग. २।२७।१७८ ; राप्र. ३६५.

(४) लिङ्ग. २।२७।१७९ ; राप्र. ३६५ पूर्वार्धे (मान्मथायिकमुक्तं ते भीमाव्यूहं वदामि ते।) वर्धि (वर्ध).

(५) लिङ्ग. २।२७।१८० ; राप्र. ३६५.

(६) लिङ्ग. २।२७।१८१ ; राप्र. ३६५ भया (ऽभया) जलतृष्णोदरी (सुतृष्णा रोदनो) कृष्णा कृ (कृष्णाकृ).

(७) लिङ्ग. २।२७।१८२ दा तथा (दापली) ; राप्र. ३६६ (कामदा भोगिनी दग्धा दुःखदा सुखदा तथा। भीमाव्यूहं मया प्रोक्तं भीमायीव्यूहमुच्यते ॥ ).

(८) लिङ्ग. २।२७।१८३ ; राप्र. ३६६ रथा (रमा).

(९) लिङ्ग. २।२७।१८४ ; राप्र. ३६६ न्मत्ता (न्मादा).

[1]मन्दगर्भा महाभासा कामानन्दा सुविह्वला ।
महावेगा सुवेगा च महाभोगा क्षयावहा ॥
[2]क्रमिणी क्रामिणी वक्रा द्वितीयावरणे स्मृताः ।
कथितं तव भीमाया व्यूहं परमशोभनम् ॥
[3]शाकुनं कथयाम्यद्य स्वायंभुव मनोत्सुकम् ।
योगा वेगा सुवेगा च अतिवेगा सुवासिनी ॥
[4]देवी मनोरथावेगा जलावर्ता च धीमती ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
[5]रोधिनी क्षोभिणी बाला विप्राशेषासुशोषिणी ।
विद्युता भासिनी देवी मनोवेगा च चापला ॥
[6]विद्युज्जिह्वा महाजिह्वा भ्रूकुटीकुटिलानना ।
फुल्लज्वाला महाज्वाला सुज्वाला च क्षयान्तिका ॥
[7]शाकुनः कथितो व्यूहः शाकुनायाः शृणुष्व मे ।
ज्वालिनी चैव भस्माङ्गी तथा भस्मान्तगा तता ॥
[8]भाविनी च प्रजा विद्या ख्यातिश्चैवाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

[1]उल्लेखा च पताका च भोगा भोगवती खगा ।
भोगभोगव्रता योगा भोगाख्या योगपारगा ॥
[2]ऋद्धिर्बुद्धिर्धृतिः कान्तिः स्मृतिः साक्षाच्छ्रुतिर्धरा ।
शाकुनाया महाव्यूहः कथितः कामदायकः ॥
[3]स्वायंभुव शृणु व्यूहं सुमत्याख्यं सुशोभनम् ।
परेष्टा च परादित्या ह्यमृता फलनाशिनी ॥
[4]हिरण्याक्षी सुवर्णाक्षी देवी साक्षात्कपिञ्जला ।
कामरेखा च कथितं प्रथमावरणं शृणु ॥
[5]रत्नद्वीपा च सुद्वीपा रत्नदा रत्नमालिनी ।
रत्नशोभा सुशोभा च महाशोभा महाद्युतिः ॥
[6]शांबरी बन्धुरा ग्रन्थिः पादकर्णा करानना ।
हयग्रीवा च जिह्वा च सर्वभासेति शक्तयः ॥
[7]कथितः सुमतिव्यूहः सुमत्या व्यूह उच्यते ।
सर्वाशी च महाभक्षा महादंष्ट्राऽतिरौरवा ॥
[8]विस्फुलिङ्गा विलिङ्गा च कृतान्ता भास्करानना ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

---

(१) लिङ्ग. २।२७।१८५ ; राप्र. ३६६ प्रथमचरणे (मदोद्भर्भा मदारामा).

(२) लिङ्ग. २।२७।१८६ ; राप्र. ३६६ क्रमि (क्रम) वक्रा (चक्रा).

(३) लिङ्ग. २।२७।१८७ ; राप्र. ३६६ द्वितीयचरणे (व्यूहं परमशोभनम्) योगा वे (योगावे).

(४) लिङ्ग. २।२७।१८८ थावेगा (या वेगा) ; राप्र. ३६६ द्वितीयचरणे (रुद्रावर्तवती मतिः).

(५) लिङ्ग. २।२७।१८९ ; राप्र. ३६६ पूर्वार्धे (रोधनी क्षोभणी बाला चातिघोषा सुघोषिणी ।) भासि (त्रास).

(६) लिङ्ग. २।२७।१९० ; राप्र. ३६६ फुल्ल (स्फुरज्).

(७) लिङ्ग. २।२७।१९१ ; राप्र. ३६६ पूर्वार्धे (शाकुनं कथितं व्यूहं शाकुनायीं शृणुष्व मे ।) गा तता (कान्तका).

(८) लिङ्ग. २।२७।१९२ ; राप्र. ३६६.

(१) लिङ्ग. २।२७।१९३ ; राप्र. ३६६ उत्तरार्धे (योगव्रता योगमाता योगाख्या योगपारगा ॥ ).

(२) लिङ्ग. २।२७।१९४ ; राप्र. ३६७ उत्तरार्धे (शाकुनाय्या महाव्यूहं कथितं कामदायकम् ॥ ).

(३) लिङ्ग. २।२७।१९५ परादित्या (परा दृष्टा) ; राप्र. ३६७ शृणु (तथा) मत्या (मता).

(४) लिङ्ग. २।२७।१९६ ; राप्र. ३६७ हिरण्या (हरिणा) शृणु (शुभम्).

(५) लिङ्ग. २।२७।१९७ ; राप्र. ३६७ च सु (वसु).

(६) लिङ्ग. २।२७।१९८ ; राप्र. ३६७ पूर्वार्धे (शबरी शाम्बरी ग्रन्थिपादकर्णकरानना । ) भासे (ग्रासे).

(७) लिङ्ग. २।२७।१९९ ; राप्र. ३६७ पूर्वार्धे (कथितं सुमतव्यूहं सुमत्या व्यूहमुच्यते । ).

(८) लिङ्ग. २।२७।२०० ; राप्र. ३६७ विस्फुलिङ्गा वि (स्फुलिङ्गा विस्फु).

[1]रागा रङ्गवती श्रेष्ठा महाक्रोधा च रौरवा।
क्रोधनी वसनी चैव कलहा च महाबला॥
[2]कलन्तिका चतुर्भेदा दुर्गा वै दुर्गमानिनी।
नाली सुनाली सौम्या च इत्येवं कथितं मया॥
[3]गोपव्यूहं वदाम्यत्र शृणु स्वायंभुवाखिलम्।
पाटली पाटवी चैव पाटी विटिपिटा तथा॥
[4]कङ्कटा सुपटा चैव प्रघटा च घटोद्भवा।
प्रथमावरणं चात्र भाषया कथितं मया॥
[5]नादाक्षी नादरूपा च सर्वकारी गमाऽगमा।
अनुचारी सुचारी च चण्डनाडी सुवाहिनी॥
[6]सुयोगा च वियोगा च हंसाख्या च विलासिनी।
सर्वगा सुविचारा च वञ्चनी चेति शक्तयः॥
[7]गोपव्यूहः समाख्यातो गोपायीव्यूह उच्यते।
मेदिनी छेदिनी चैव सर्वकारी क्षुधाशनी॥
[8]उच्छुष्मा चैव गान्धारी भस्माशी वडवानला।
प्रथमावरणं चैव द्वितीयावरणं शृणु॥

[1]अन्धा बाह्वासिनी बाला दीपाक्षामा तथैव च।
अक्षा त्र्यक्षा च हृल्लेखा हृद्गतामायिकाऽपरा॥
[2]आमयासादिनी भिल्ली सह्यासह्या सरस्वती।
रुद्रशक्तिर्महाशक्तिर्महामोहा च गोनदी॥
[3]गोपाय्याः कथितो व्यूहो नन्दव्यूहं वदामि ते।
नन्दिनी च निवृत्तिश्च प्रतिष्ठा च यथाक्रमम्॥
[4]विद्यानासा खग्रसिनी चामुण्डा प्रियदर्शिनी।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु॥
[5]गुह्या नारायणी मोहा प्रजा देवी च चक्रिणी।
कङ्कटा च तथा काली शिवा घोषा ततः परम्॥
[6]वीरा माया च वागीशी वाहिनी भीषणी तथा।
सुगमा चैव निर्दिष्टा द्वितीयावरणे स्मृता॥
[7]नन्दव्यूहो मया ख्यातो नन्दाया व्यूह उच्यते।
विनायकी पूर्णिमा च रङ्कारी कुण्डली तथा॥

---

(१) लिङ्ग. २।२७।२०१; राप्र. ३६७ रङ्गवती श्रेष्ठा (रागवती क्रोधा) वस (सूद) च महाबला (कलहावती).

(२) लिङ्ग. २।२७।२०२; राप्र. ३६७ कल (कला) मानिनी (मानगा) सुना (कुना).

(३) लिङ्ग. २।२७।२०३; राप्र. ३६७ गोप (गोपा) म्यत्र (म्यद्य).

(४) लिङ्ग. २।२७।२०४; राप्र. ३६७ पटा (घटा) भाषया (गोपायाः).

(५) लिङ्ग. २।२७।२०५; राप्र. ३६७ री गमाऽगमा (रागमागमा) अनु (अग्र).

(६) लिङ्ग. २।२७।२०६; राप्र. ३६७–३६८ हंसाख्या (हंसाक्षी) चारा च वञ्च (रावा च बन्ध).

(७) लिङ्ग. २।२७।२०७; राप्र, ३६८ पूर्वार्धे (गोपाव्यूहं मया ख्यातं गोपायीव्यूहमुच्यते।) छेदि (छेद).

(८) लिङ्ग. २।२७।२०८; राप्र. ३६८ चैव (प्रोक्तं).

(१) लिङ्ग. २।२७।२०९ दीपाक्षा (दीपा क्षा); राप्र. ३६८ (अनन्वज्वालिनी ज्वाला दीपाक्षामा तथैव च। अन्तरीक्षा च हृल्लेखा हृद्गमा मायिकापरा॥).

(२) लिङ्ग. २।२७।२१० आमयासा (आमया सा); राप्र. ३६८ गोनदी (रोदिनी).

(३) लिङ्ग. २।२७।२११ गोपाय्याः (गोपायी); राप्र. ३६८ तो व्यूहो नन्द (तं व्यूहं नन्दा).

(४) लिङ्ग. २।२७।२१२; राप्र. ३६८ नासा (नाशी) सिनी (सनी) र्शिनी (र्शनी).

(५) लिङ्ग. २।२७।२१३; गुह्या (गूह्या) शिवा घो (शिवाघो); राप्र. ३६८ प्रजा (प्रज्ञा) चक्रि (वज्रि).

(६) लिङ्ग. २।२७।२१४ वीरा माया (विरामा या); राप्र. ३६८ वागीशी वा (कामेशी व) सुगमा चैव (स्वर्गा माला च) स्मृता (स्मृताः).

(७) लिङ्ग. २।२७।२१५; राप्र. ३६८ (नन्दाव्यूहं समाख्यातं नन्दायीव्यूहमुच्यते। विनायकी पूर्णिमा च रङ्गिणी कूर्दनी तथा॥).

[1]इच्छा कपालिनी चैव द्वीपिनी च जयन्तिका।
प्रथमावरणे चाष्टौ शक्तयः परिकीर्तिताः ॥
[2]प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु।
पावनी चाम्बिका चैव सर्वात्मा पूतना तथा ॥
[3]छगली मोदिनी साक्षाद्देवी लम्बोदरी तथा।
संहारी कालिनी चैव कुसुमा च यथाक्रमम् ॥
[4]शुक्ला तारा तथा ज्ञाना क्रिया गायत्रिका तथा।
सावित्री चेति विधिना द्वितीयावरणं स्मृतम् ॥
[5]नन्दायाः कथितो व्यूहः पैतामहमतः परम्।
नन्दिनी चैव फेत्कारी क्रोधहासा षडङ्गुला ॥
[6]आनन्दा वसुदुर्गा च संहारा ह्यमृताऽष्टमी।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
[7]कुलान्तिकाऽनला चैव प्रचण्डा मर्दिनी तथा।
सर्वभूताभया चैव दया च वडवामुखी ॥
[8]लम्पटा पन्नगा देवी कुसुमा विपुलान्तका।
केदारा च तथा कूर्मा दुरिता मन्दरोदरी ॥

(१) लिङ्ग. २।२७।२१६; राप्र. ३६८ द्वीपि (दीप).

(२) लिङ्ग. २।२७।२१७; राप्र. ३६८ सर्वात्मा (सर्वाशा) उत्त.

(३) लिङ्ग. २।२७।२१८; राप्र. ३६८ छग (छाग) तथा (शुभा).

(४) लिङ्ग. २।२७।२१९; राप्र. ३६९ तथा ज्ञाना (तथाज्ञाना) णं स्मृतम् (णे स्मृताः).

(५) लिङ्ग. २।२७।२२० क्रोधहासा (क्रोधा हंसा); राप्र. ३६९ याः कथितो व्यूहः (य्याः कथितं व्यूहं) परम् (शृणु) नन्दिनी (दन्तुरी).

(६) लिङ्ग. २।२७।२२१; राप्र. ३६९ वसु (च सु) हारा (हारी).

(७) लिङ्ग. २।२७।२२२; राप्र. ३६९ मर्दिनी तथा (मर्दनी शुभा) दया (देवी).

(८) लिङ्ग. २।२७।२२३; राप्र. ३६९ लान्त (लान्ति).

[1]खड्गचक्रेति विधिना द्वितीयावरणं स्मृतम्।
व्यूहः पैतामहः प्रोक्तो धर्मकामार्थमुक्तिदः ॥
[2]पितामहाया व्यूहं च कथयामि शृणुष्व मे।
वज्रा च नन्दना चोरा विकारा रिपुभेदिनी ॥
[3]रूपा चतुर्था योगा च प्रथमावरणे स्मृताः।
भूताभया महाबाला खर्परा च तथाऽपरा ॥
[4]भस्मा कान्ता तथा वृष्टिर्द्विभुजा ब्रह्मरूपिणी।
सैद्या वैकारिका जाता कर्ममोटी तथाऽपरा ॥
[5]महामोहा महामाया गान्धारी पुष्पमालिनी।
शब्दापी च महाघोषा षोडशैव तथाऽन्तिमे ॥
[6]सर्वाश्च द्विभुजा देव्यो बालभास्करसंनिभाः।
पद्मशङ्खधराः शान्ता रक्तस्रग्वस्त्रभूषणाः ॥
[7]सर्वाभरणसंपूर्णा मुकुटाद्यैरलंकृताः।
मुक्ताफलमयैर्दिव्यै रत्नचित्रैर्मनोरमैः ॥

(१) लिङ्ग. २।२७।२२४; राप्र. ३६९ चक्रे (चण्डे) उत्तरार्धे (व्यूहं पैतामहं प्रोक्तं धर्मकामार्थमोक्षदम् ॥).

(२) लिङ्ग. २।२७।२२५ चोरा विकारा (शावाराविका); राप्र. ३६९ पूर्वार्धे (पितामहायीव्यूहं च शृणुष्व कथयामि ते।) नन्दना (मन्मथा).

(३) लिङ्ग. २।२७।२२६ भूताभया (भूता नादा); राप्र. ३६९ चतुर्था योगा च (चतुर्भुजा योगा) तथाऽपरा (ततः परम्).

(४) लिङ्ग. २।२७।२२७; राप्र. ३६९ वृष्टि (सृष्टि) उत्तरार्धे (सद्यःफेत्कारिका नाम कर्णमोटी तथाऽपरा ॥).

(५) लिङ्ग. २।२७।२२८; राप्र. ३६९ शब्दापी (शब्दायी) शैव त (शैतास्त).

(६) लिङ्ग. २।२७।२२९; राप्र. ३६९: ३७७ भूषणाः (भूषिताः).

(७) लिङ्ग. २।२७।२३०; राप्र. ३६९-३७०, ३७७.

[1]'विभूषिता गौरवर्णा ध्येया देव्यः पृथक् पृथक् ।
एवं सहस्रकलशं ताम्रजं मृन्मयं तु वा ॥

[2]'पूर्वोक्तलक्षणैर्युक्तं रुद्रक्षेत्रे प्रतिष्ठितम् ।
भवाद्यैर्विष्णुना प्रोक्तैर्नाम्नां चैव सहस्रकैः ॥

[3]'संपूज्य विन्यसेदग्रे सेचयेद्बाणविग्रहम् ।
अभिषिच्य च विज्ञाप्य सेचयेत्पृथिवीपतिम् ॥

[4]'एवं सहस्रकलशं सर्वसिद्धिफलप्रदम् ।
चत्वारिंशन्महाव्यूहं सर्वलक्षणलक्षितम् ॥

[5]'सर्वेषां कलशं प्रोक्तं पूर्ववद्धेमनिर्मितम् ।
सर्वे गन्धाम्बुसंपूर्णपञ्चरत्नसमन्विताः ॥

[6]'तथा कनकसंयुक्ता देवस्य घृतपूरिताः ।
क्षीरेण वाऽथ दध्ना वा पञ्चगव्येन वा पुनः ॥

[7]'ब्रह्मकूर्चेन वा मध्यमभिषेको विधीयते ।
रुद्राध्यायेन रुद्रस्य नृपतेः शृणु सत्तम ॥

[8] 'अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥'

(१) लिङ्ग. २।२७।२३१ ; राप्र. ३७० पूर्वार्धे (भूषिता हारकेयूरैर्गौरा ध्येयाः पृथक् पृथक् ।) : ३७७ पूर्वार्धे (भूषिता हारकेयूरैर्याविदेव्यः पृथक् पृथक् ।) पू.

(२) लिङ्ग. २।२७।२३२ ; राप्र. ३७० लक्षणैर्युक्तं रु (दक्षिणायुक्तं रौ).

(३) लिङ्ग. २।२७।२३३ ; राप्र. ३७०.

(४) लिङ्ग. २।२७।२३४ ; राप्र. ३७० सर्वसि (सद्यःसि).

(५) लिङ्ग. २।२७।२३५ ; राप्र. ३७० गन्धाम्बु... रत्न (गन्धोदकैः पूर्णास्तीर्थतोय).

(६) लिङ्ग. २।२७।२३६ ; राप्र. ३७०.

(७) लिङ्ग. २।२७।२३७ ; राप्र. ३७० मध्य (मेध्य) सत्तम (सुव्रत).

(८) लिङ्ग. २।२७।२३८ ; राप्र. ३७० शर्वेभ्यो नमस्ते अस्तु (सर्वेभ्यो नमस्तेऽस्तु).

[1]'मन्त्रेणानेन राजानं सेचयेदभिषेचितम् ।
होमं च मन्त्रेणानेन अघोरेणाघहारिणा ॥
प्रागाद्यं देवकुण्डे वा स्थण्डिले वा घृतादिभिः ।
समिदाज्यचरुं लाजशालिनीवारतण्डुलैः ॥

[2]'अष्टोत्तरशतं हुत्वा राजानमधिवासयेत् ।
पुण्याहं स्वस्ति रुद्राय कौतुकं हेमनिर्मितम् ।
भसितं च मृणालेन बन्धयेद्दक्षिणे करे ॥

[3]'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥'
मन्त्रेणानेन राजानं सेचयेद्वाऽथ होमयेत् ॥
सर्वद्रव्याभिषेकं च होमद्रव्यैर्यथाक्रमम् ।
प्रागाद्यं ब्रह्मभिः प्रोक्तं सर्वद्रव्यैर्यथाक्रमम् ॥
'तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥'

[4]'स्वाहान्तं पुरुषेणैवं प्राक्कुण्डे होमयेद् द्विजः ।
अघोरेण च याम्ये च होमयेत्कृष्णवाससा ॥

[5] 'वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः ।'
इत्याद्युक्तक्रमेणैव जुहुयात्पश्चिमे नरः ॥

[6]'सद्येन पश्चिमे(? चोत्तरे) होमः सर्वद्रव्यैर्यथाक्रमम् ।
'सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥'

(१) लिङ्ग. २।२७।२३९–२४० ; राप्र. ३७०.

(२) लिङ्ग. २।२७।२४१–२४२ ; राप्र. ३७० – ३७१ रुद्राय (रिलाचैः) मृणालेन (मृदा चैव).

(३) लिङ्ग. २।२७।२४२–२४५ ; राप्र. ३७१.

(४) लिङ्ग. २।२७।२४६ क्कुण्डे (क्कुण्डं) ; राप्र. ३७१ याम्ये च (याम्येऽथ).

(५) लिङ्ग. २।२७।२४७ ; राप्र. ३७१ नरः (पुनः).

(६) लिङ्ग. २।२७।२४८–२४९ (नमो०) ; राप्र. ३७१.

[1]स्वाहान्तं जुहुयादग्नौ मन्त्रेणानेन बुद्धिमान्।
आग्नेय्यां च विधानेन ऋचा रौद्रेण होमयेत्।
जातवेदसे सुनवाम सोममित्यादिना ततः॥

[2]नैर्ऋते पूर्ववद् द्रव्यैः सर्वैर्होमो विधीयते।
मन्त्रेणानेन दिव्येन सर्वसिद्धिकरेण च॥

[3]"निशि निशि दिश स्वाहा खड्ग राक्षसभेदन।
रुधिराज्यार्द्रनैर्ऋत्यै स्वाहा नमः स्वधा नमः॥'
यथेष्टं विधिना द्रव्यैर्मन्त्रेणानेन होमयेत्॥

*[4]यम्यां हि विविधैर्द्रव्यैरीशानेन द्विजोत्तमाः।
'समीर समीर स्वाहा स्वधा नमः।'
ईशान्यामथ पूर्वोक्तैर्द्रव्यैर्होमं समाचरेत्॥

[5]"ईशानाय कद्रुद्राय प्रचेतसे त्र्यम्बकाय शर्वाय।
तन्नो रुद्रः प्रचोदयात्॥'

[6]प्रधानं पूर्ववद् द्रव्यैरीशानेन द्विजोत्तमाः।
प्रतिद्रव्यं सहस्रेण जुहुयान्नृपसंनिधौ॥

[1]स्वयं वा जुहुयादग्नौ भूपतिः शिववत्सलः।
'ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्॥'

[2]प्रायश्चित्तमघोरेण शेषं सामान्यमाचरेत्।
कृताधिवासं राजानं शङ्खभेर्यादिनिस्वनैः॥

[3]जयशब्दरवैर्दिव्यैर्वेदघोषैः सुशोभनैः।
सेचयेत्कूर्चतोयेन प्रोक्षयेद्वा नृपोत्तमम्॥

[4]रुद्राध्यायेन विधिना रुद्रभस्माङ्गधारिणम्।
शङ्खचामरभेर्याद्यं छत्रं चन्द्रसमप्रभम्॥

[5]शिबिकां वैजयन्तीं च साधयेन्नृपतेः शुभाम्।
राज्याभिषेकयुक्ताय क्षत्रियायेश्वराय वा॥

[6]नृपचिह्नानि नान्येषां क्षत्रियाणां विधीयते।
प्रमाणं चैव सर्वेषां द्वादशाङ्गुलमुच्यते॥

[7]पलाशोदुम्बराश्वत्थवटाः पूर्वादितः क्रमात्।
तोरणाद्यानि वै तत्र पट्टमात्रेण पट्टिकाः॥

[8]अष्टमाङ्गुलसंयुक्तदर्भमालासमावृतम्।
दिग्ध्वजाष्टकसंयुक्तं द्वारकुम्भैः सुशोभनम्॥

---

* 'यमयतीति यमः सर्वनियन्ता वायुः, तस्मै हिता यम्या वायव्येत्यर्थः। तस्याम् ईशानेन तन्मन्त्रेण। होमयेदित्यनुषङ्गः।' इति शिवतोषिण्यां व्याख्यातम्।

(१) लिङ्ग. २।२७।२४९–२५०; राप्र. ३७१ (ना ततः०).

(२) लिङ्ग. २।२७।२५०–२५१; राप्र. ३७१ पूर्ववद् द्र (च तथा द्र).

(३) लिङ्ग. २।२७।२५१–२५२ निशि निशि (निमि निशि); राप्र. ३७१ दिश (जय) यथेष्टं (यथेदं).

(४) लिङ्ग. २।२७।२५३ मं समा (ममथाऽऽ) द्वितीयार्धं नास्ति; राप्र. ३७२ यम्यां हि (याम्यायां) त्तमाः (त्तमः).

(५) लिङ्ग. २।२७।२५४; राप्र. ३७२ कद्रुद्राय + (रुद्राय).

(६) लिङ्ग. २।२७।२५५; राप्र. ३७२ नेन द्विजोत्तमाः (ने च द्विजोत्तमः).

(१) लिङ्ग. २।२७।२५६; राप्र. ३७२ द्वितीयचरणे (पुरोहितमुखेन वा).

(२) लिङ्ग. २।२७।२५७; राप्र. ३७२ निस्व (निःस्व).

(३) लिङ्ग. २।२७।२५८; राप्र. ३७२.

(४) लिङ्ग. २।२७।२५९; राप्र. ३७२ भस्मा... भेर्याद्यं (भस्मप्रभारुणम्। शलाकाशतसंपन्नं).

(५) लिङ्ग. २।२७।२६०; राप्र. ३७२ शुभाम् (समम्).

(६) लिङ्ग. २।२७।२६१; राप्र. ३७२ नान्ये (यान्ये) प्रमाणं चैव (वेदीप्रमाणं).

(७) लिङ्ग. २।२७।२६२; राप्र. ३७२ पट्टिकाः (पट्टिका).

(८) लिङ्ग. २।२७।२६३; राप्र. ३७२–३७३ शोभनम् (शोभितम्).

[1]हेमतोरणकुम्भैश्च भूषितं स्नापयेन्नृपम् ।
सर्वोपरि समासीनं शिवकुम्भेन सेचयेत् ॥
[2]'तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि ।
तन्नः शिवः प्रचोदयात् ॥'
[3]मन्त्रेणानेन विधिना वर्धन्या गौरिगीतया ।
रुद्राध्यायेन वा सर्वमघोरेणापि वा पुनः ॥
[4]दिव्यैराभरणैः शुक्लैर्मुकुटाद्यैः सुकल्पितैः ।
क्षौमवस्त्रैश्च राजानं भूषयेन्नियतं शनैः ॥
[5]अष्टषष्टिपलेनैव हेम्ना कृत्वा सुदर्शनम् ।
नवरत्नैरलंकृत्य दद्याद्वै दक्षिणां गुरोः ॥
[6]दशधेनु सवस्त्रं च दद्यात् क्षेत्रं सुशोभनम् ।
शतद्रोणतिलं चैव शतद्रोणांश्च तण्डुलान् ॥
[7]शयनं वाहनं शय्यां सोपधानां प्रदापयेत् ।
होतॄणां चैव सर्वेषां त्रिंशत्पलमुदाहृतम् ॥
[8]अध्येतॄणां तदर्धेन ब्रह्मणां च तदर्धतः ।
महापूजां ततः कुर्यान्महादेवस्य वै नृपः ॥

(१) लिङ्ग. २।२७।२६४; राप्र. ३७३ सर्वो (चर्मो).

(२) लिङ्ग. २।२७।२६५; राप्र. ३७३.

(३) लिङ्ग. २।२७।२६६; राप्र. ३७३ गौरि (गौरी).

(४) लिङ्ग. २।२७।२६७ भूष (तोष); राप्र. ३७३ क्षौमव (क्षौमैर्व) तं शनैः (तः शुभैः).

(५) लिङ्ग. २।२७।२६८; राप्र. ३७३ हेम्ना (हैमं) सुदर्शनम् (सुरद्रुमम्).

(६) लिङ्ग. २।२७।२६९; राप्र. ३७३ प्रथमचरणे (दश धेनूः सवस्त्राश्च) णतिलं (णं तिलं) द्रोणांश्च (द्रोणं च).

(७) लिङ्ग. २।२७।२७० होतॄणां (योगिनां); राप्र. ३७३ पूर्वार्धे (शयनं वाहनं छत्रं शय्यां सोपस्करां शुभाम् ।).

(८) लिङ्ग. २।२७।२७१ पूर्वार्धे (अशेषांश्च तदर्धेन शिवभक्तांस्तदर्धतः ।); राप्र. ३७३.

[1]एवं समासतः प्रोक्तं जयसेचनमुत्तमम् ।
एवं पुराऽभिषिक्तस्तु शक्रः शक्रत्वमागतः ॥
ब्रह्मा ब्रह्मत्वमापन्नो विष्णुर्विष्णुत्वमागतः ।
अम्बिका चाम्बिकात्वं च सौभाग्यमतुलं तथा ॥
[2]सावित्री च तथा लक्ष्मीर्देवी कात्यायनी तथा ।
नन्दिनाऽथ पुरा मृत्यू रुद्राध्यायेन वै जितः ॥
[3]अभिषिक्तोऽसुरः पूर्वं तारकाख्यो महाबलः ।
विद्युन्माली हिरण्याक्षो विष्णुना वै विनिर्जितः ॥
[4]नृसिंहेन पुरा दैत्यो हिरण्यकशिपुर्हतः ।
स्कन्देन तारकाद्याश्च कौशिक्या च पुराऽम्बया ॥
[5]सुन्दोपसुन्दतनयौ जितौ दैत्येन्द्रपूजितौ ।
वसुदेवसुदेवौ तु निहतौ कृतकृत्यया ॥
[6]स्नानयोगेन विधिना ब्रह्मणा निर्मितेन तु ।
देवासुरे दितिसुता जिता देवैरनेकशः ॥
[7]स्नाप्यैव सर्वभूपैश्च तथाऽन्यैरपि भूसुरैः ।
प्राप्ताश्च सिद्धयो दिव्या नात्र कार्या विचारणा ॥
[8]अहोऽभिषेकमाहात्म्यमहो शुद्धसुभाषितम् ।
येनैवमभिषिक्तेन सिद्धैर्मृत्युर्जितस्त्विति ॥

(१) लिङ्ग. २।२२७।२७२–२७३; राप्र. ३७३.

(२) लिङ्ग. २।२७।२७४; राप्र. ३७३ च तथा (च धरा) नाऽथ (ना च) जितः (द्विज).

(३) लिङ्ग. २।२७।२७५; राप्र. ३७३ सुरः (सुरैः).

(४) लिङ्ग. २।२७।२७६; राप्र. ३७४.

(५) लिङ्ग. २।२७।२७७; राप्र. ३७४ दैत्ये (देवे) कृत्य (काम्य).

(६) लिङ्ग. २।२७।२७८ नेकशः (निन्दिताः); राप्र. ३७४ प्रथमचरणे (पुरा स्नानविधानेन) देवा (देवा).

(७) लिङ्ग. २।२७।२७९; राप्र. ३७४ प्यैव (प्यैवं).

(७) लिङ्ग. २।२७।२८०; राप्र. ३७४ शुद्धसु (सुष्ठु सु).

[1]कल्पकोटिशतेनापि यत्पापं समुपार्जितम् ।
स्नात्वैवं मुच्यते राजा सर्वपापैर्न संशयः ॥
[2]व्याधितो मुच्यते राजा क्षयकुष्ठादिभिः पुनः ।
स नित्यं विजयी भूत्वा पुत्रपौत्रादिभिर्युतः ॥
[3]जनानुरागसंपन्नो देवराज इवापरः ।
मोदते पापहीनश्च प्रियया धर्मनिष्ठया ॥

[4]उद्देशमात्रं कथितं फलं परमशोभनम् ।
नृपाणामुपकाराय स्वायंभुव मनो मया ॥

अयं च जयाभिषेकः त्रैवर्णिकेन नृपेण अपमृत्युजयार्थे सर्वशत्रुजयार्थे वैरिविशेषेण युद्धोपस्थितौ यात्रातः पूर्वं तज्जयार्थे च कर्तव्यः । तत्र संभाराः— राजाभिषेककलशस्थापनार्थं नवकुण्डहोमार्थं च मण्डपः प्रपा कूटो वा । बहुस्तम्भः सभाकारः समशीर्षकसंनिवेशः प्रपा । सैव मध्योन्नता वंशावलम्बितपटलद्वयान्विता मण्डपः । स एव गिरिशृङ्गाकारः मध्ये, समन्ततोऽवलम्बितचतुष्पटलः कूटः । ते च मण्डपादयः पञ्चसप्ततिहस्तायामविस्तारास्तावदर्थात् भवन्ति, लिङ्गपुराणे 'विधिना मण्डपं कृत्वा प्रपां वा कूटमेव च । नवधा स्थापयेद् वह्निं ब्राह्मणो वेदपारगः । ततः सर्वाभिषेकार्थं सूत्रपातं च कारयेत् ॥' ( लिङ्ग. २।२७।१२–१३ ) इत्यभिधानात्, चकारेण मण्डपादिमध्य एव मण्डलरचनाप्रतीतेः, मण्डलरचनायाश्च सर्वतडागोत्सर्गादौ मण्डपप्रागपरदक्षिणोत्तरसूत्रयोस्त्रेधाविभक्तयोर्मध्यमतृतीयभागाश्रितवेद्यधिकरणकत्वदर्शनात्, अत्रत्यमण्डलप्रकृतिपञ्चाशद्रेखाणां च पदानां द्वादशाङ्गुलप्रमाणत्वोक्त्या प्रत्येकं तावदन्तरत्वात् । तथा च प्रत्येकद्वादशाङ्गुलान्तरालपञ्चाशद्रेखानिर्वर्त्यमण्डलसिद्ध्यर्थं शुक्लरक्तकृष्णतत्परिधिरेखासिद्ध्यर्थं च वेदियोग्यः पञ्चविंशतिहस्तस्तावन्मण्डपादिमध्यतृतीयभागोपेतः( १ ग उपेयः ) इति मण्डपादेः पूर्वोक्तपरिमाणसिद्धिः । ततश्च तदनुरूपा स्तम्भपरिमाणविवृद्धिः । पटलनिवेशनार्थं तिर्यक्काष्ठनिवेशनार्थं चार्थात् स्तम्भविवृद्धिरपि कल्प्या मण्डपकूटयोः । तत्र मध्यस्तम्भास्तावन्मण्डपविस्तारदलोच्चा एव, प्रान्तस्तम्भाश्च पञ्चहस्ता एव, अन्यत्र तथा दर्शनात् । आर्थिकमध्यस्तम्भास्तु आर्थिकपरिमाणा एव इति दिक् ।

अस्मिंश्च मण्डपादौ प्रागपरदक्षिणोत्तरमध्यसूत्रत्रेधाविभागेन नवभागे कृते अष्टसु दिग्भागेषु अष्टौ पूर्वैशान्यन्तराले चैकमिति नव कुण्डानि स्थण्डिलानि वा । तानि च तत्तदाकृतिकानि वर्णभेदेन चतुरस्रादीन्येव वा । मध्यमभागे च वेदिरायामतृतीयांशोच्चा । तत्र च राजाभिषेककलशस्थापनार्थं मण्डलम् । तद्यथा–प्रागपरायताः प्रत्येकं द्वादशाङ्गुलान्तरालाः पञ्चाशद्रेखा लिखित्वा तादृशीभिरेव दक्षिणोत्तराभिः पञ्चाशद्रेखाभिस्ता भेदयेत् । ततः प्रागपरायतासु दक्षिणोत्तरायतासु च रेखासूपान्त्यरेखामारभ्य षड् रेखाः संगृह्य सप्तमीं सप्तमीं रेखां परिमार्जयेत् । तथा च प्रागपरायता अष्टौ तत्संभिन्नाश्च दक्षिणोत्तरायता अष्टौ एवं षोडशान्तरा वीथ्यः संपद्यन्ते । ततश्च तन्मध्यवर्तिनः प्रत्येकं पञ्चविंशतिकोष्ठका एकोनपञ्चाशद्व्यूहा भवन्ति । तेषु मध्यगतं व्यूहनवकं परिमृज्य अष्टदलं कमलं कार्यम् । तत्समन्तात् नाभिवीथीमध्यस्थपद्मदलेषु परिशिष्टेषु चत्वारिंशद्व्यूहेषु च प्रतिकोष्ठं कमलानि । तत्र मध्यकोष्ठेषु मुख्याः शक्तयः सुभद्राद्या दाक्षाद्याश्च शिवस्य द्वितीयतृतीयावरणयोः । तत्प्रथमावरणे तु वामादिमिथुनाष्टकं केसरदलेषु प्रधानकमलस्य । मध्यमकोष्ठेभ्यो बहिरष्टकोष्ठकं प्रथमावरणं षोडशषोडशकोष्ठकं द्वितीयं प्रत्येकं शक्तीनाम् । तत्र नाभिवीथ्यनन्तरबाह्यषोडशव्यूहसंलग्ना पिशाचवीथी । तत्संलग्नचतुर्विंशतिव्यूहबाह्या महावीथीति । सर्वाणि च पद्मानि शालिनीवारगोधूमाणुयवतण्डुलगौरसर्षपान्विततिलानामन्यतरेण धान्येन यथालाभं समुदितैर्वा कार्याणि । तत्र मध्य-

(१) लिङ्ग. २।२७।२८१ ; राप्र. ३७४ पापैर्न ( पापान्न ).

(२) लिङ्ग. २।२७।२८२ ; राप्र. ३७४ स नित्यं ( नित्यं च ) भिर्युतः ( भिर्वृतः ).

(३) लिङ्ग. २।२७।२८३ ; राप्र. ३७४ प्रियया धर्मनि ( क्रियाधर्मे च नि ).

(४) लिङ्ग. २।२७।२८४ ; राप्र. ३७४.

वर्तिनि नवव्यूहाष्टदले शालयो द्रोणमिताः, तदर्धं तण्डुलाः, आढकमितास्तिलाः, तदर्धं यवादयः। अन्येषु आढकमिताः शालयः, तदर्धं तण्डुलाः, तदर्धं यवतिलादयः। प्रधानकमलं च हस्तमात्रमष्टाङ्गुलप्रमाणसुवर्णकर्णिकं चतुरङ्गुलकेसरस्थानमवशिष्टपत्रस्थानं कार्यम्। अन्यानि द्वादशाङ्गुलेषु कोष्ठेषु यथासंभवम्। प्रधानकमलकेसराष्टकदलाष्टकचत्वारिंशद्व्यूहान्तर्गतसहस्रपदेषु च स्थापनीयं षोडशाधिकं कलशसहस्रम्। तच्च द्वादशाङ्गुलायामोदरं षडङ्गुलवर्तितनाभिकं द्व्यङ्गुलोत्सेधचतुरङ्गुलविस्तारकण्ठं द्व्यङ्गुलोत्सेधनिर्गमौष्ठं कार्यम्। प्रधानकमलकर्णिकायां स्थापनीयश्चैकः। स च उदरादिषु पूर्वोक्तद्विगुणपरिमाणः तन्तूनां परस्परान्तरालं यवमात्रं यथा स्यात्तथा जालवत् वेष्टनीयश्च। तद्वामभागस्थाप्या करकापरपर्याया चैका वर्धनी। सर्वे चैते हैमा राजतास्ताम्रमया वा। सर्वेषां पूरणार्थं गन्धोदकम्, तन्मध्ये च निक्षेप्याणि पञ्चरत्नानि कनकशकलानि ब्रह्मकूर्चश्च। साधारणानि च पञ्चपल्लवसप्तमृदादीनि। शिवकुम्भोपरिस्थाप्यं च आग्नेयादिकोणेषु क्रमेण सितरक्तपीतकृष्णवर्णसिंहयुक्तं पूर्वादिदिक्षु सुवर्णवर्णगात्रयुतं सुवर्णादिमयं सिंहासनम्, सर्वेषां प्रत्येकं वेष्टनार्थानि वस्त्रयुग्मानि, प्रच्छादनार्थानि च हैमानि रत्नचित्राणि कमलानि, शिवप्रतिमा देवीप्रतिमा। तयोर्लक्षणमुक्तं मत्स्यपुराणे— 'पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनम्। कपालशूलखट्वाङ्गी चन्द्रमौलिः सदा शिवः॥ अक्षसूत्रं च कमलं दर्पणं च कमण्डलुम्। उमा बिभर्ति हस्तेषु पूजिता त्रिदशैरपि॥' इति। अष्टाधिकं सहस्रमन्यप्रतिमाः। तत्र स्त्रीप्रतिमाः— 'सर्वाश्च द्विभुजा देव्यो बालभास्करसंनिभाः। पद्मशङ्खधराः शान्ता रक्तस्रग्वस्त्रभूषिताः॥ सर्वाभरणसंपूर्णा मुकुटाद्यैरलंकृताः। मुक्ताफलमयैर्दिव्यै रत्नचित्रैर्मनोरमैः। भूषिता हारकेयूरैर्यावद्देव्यः पृथक् पृथक्॥' (लिङ्ग २।२७।२२९–२३१) इति लिङ्गपुराणोक्तलक्षणलक्षिताः कार्याः। पुंप्रतिमाश्च रुद्ररूपाः। बाणलिङ्गं तदभिषेकार्थं चान्यत् कलशसहस्रं ताम्रमयं मृन्मयं वा पूर्वोक्तलक्षणलक्षितं हैमकमलाच्छादितं रुद्रक्षेत्रे स्थापनीयम्। रुद्रक्षेत्राभावे तदर्थमप्येको मण्डपः कार्यः। तत्कलशपूरणार्थं घृतं क्षीरं दधि पञ्चगव्यं वा। घृतपलाशसमिदाज्यचरुलाजशालिनीवारतण्डुलरूपाण्यष्टौ होमद्रव्याणि प्रतिकुण्डम्। घृतं लौकिकम्, आज्यं संस्कृतमिति भेदः। प्रतिकुण्डं होता ब्रह्मा चेति द्वौ द्वौ ब्राह्मणौ। तत्र याम्ये कृष्णवासा होता। ऐन्द्रेशान्यन्तरालगते प्रधानकुण्डे आचार्यो नृपः पुरोहितो वा होता। द्वारजापकाश्चाष्टौ। रुद्राभिषेककर्ता तु पुरोहित एव, अनुक्तान्यकर्तृकेषु राजसंबन्धिकार्येषु तस्यैव कर्तृत्वदर्शनात्। साहाय्यार्थं चान्येऽपि यथासंभवम्। हैमं मृणालभासितं कौतुकम्। द्वारदेशात् पदमात्रे निखातैः पूर्वादिक्रमेण पलाशोदुम्बराश्वत्थवटमयैर्हैमकुम्भान्वितैस्तोरणैर्युक्तं दर्भमालासमावृतं द्वारदेशादौ निक्षिप्ताष्टमङ्गलद्रव्यमावाहितदिग्गजाष्टकं द्वारकुम्भभूषितं राजाभिषेकमण्डपं दशहस्तं कुर्यात्। तन्मध्ये वेदिकायां भद्रासनम्। अष्टमङ्गलानि च — 'इक्षवः सवराजं च निष्पावाजाजिधान्यकम्। विकारवच्च गोक्षीरं कुसुम्भकुसुमं तथा॥ लवणं चाष्टमं तत्र सौभाग्याष्टकमुच्यते॥' इति मत्स्यपुराणोक्तानि। भद्रासनं च सौवर्णं रौप्यं ताम्रमयं क्षीरिवृक्षजं वा माण्डलिकानन्तरजिन्महाराजानां क्रमेणैकसपादसार्धहस्तोच्छ्रायं तावदायामं राजाभिषेकप्रकरणे विष्णुधर्मोत्तरोक्तं ग्राह्यम्, आकांक्षितत्वात्, अवान्तरसामान्येन च बुद्धिस्थत्वात्। राज्ञो धारणार्थमाहवनीयादिजं भस्म। श्वेतच्छत्रशिबिकावैजयन्तीशङ्खचामरभेर्यादीनि नृपचिह्नानि राजभूषणानि च प्रभूतानि। अभिषेककाले च नानाविधानि वाद्यानि। दक्षिणाद्रव्याणि च यथा— अष्टषष्टिपलहेमनिर्मितो नवरत्नालंकृतः सुरद्रुमः, दश धेनुशतानि, सुशोभनं क्षेत्रम्, शतद्रोणमितास्तिलास्तण्डुलाश्च, सोपधानं शयनम्, वाहनमश्वादि, यानं रथादि च गुरवे। परिमाणतो मूल्यतश्च एतदर्धमितानि सुरद्रुमादीनि सर्वाणि मिलितेभ्यः सर्वेभ्यो होतृभ्यः। तथैव तदर्धमितानि सर्वाणि मिलितेभ्यो द्वारजापकेभ्यः। तदर्धमितानि ब्रह्मभ्यः। अन्यब्राह्मणदीनानाथादिभ्यो भूयसी यथाशक्ति। ब्राह्मणभोजनं च

सहस्रावरं यथाशक्ति । महादेवमहापूजासामग्री, राजोपचारादि । ' पलं सुवर्णाश्चत्वारः पञ्च वाऽपि प्रकीर्तितम् । पलं च कुडवः प्रस्थ आढको द्रोण एव च । धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः ॥ ' । इत्यसाधारणाः । साधारणाश्च मण्डपकाष्ठध्वजपताकादि, तत्तद्देवतापूजासामग्री, द्वारतोरणकलशादि, कुण्डोपयोगीष्टकादि, नवग्रहपीठतत्प्रतिमातत्पूजोपकरणादि, मण्डपवास्तूपशमसामग्री, ब्राह्मणवरणसामग्र्यादिकाः संभारा उपकल्पनीयाः ।

राप्र. ३७४–३७९

# परिशिष्टम्

## राजदिनकृत्यम्

### ब्रह्मपुराणम्

राज्ञः संध्याकालकृत्यम्

[1]नित्यं संनिहितान् देवान् मुनीन्नागांश्च पूजयेत् ।
पिशाचेभ्यो बलिं दद्यात्संध्याकाले च नित्यशः ॥

(१) राक. १७६ ; राप्र. १४५.

## राजकर्तव्यानि

### वाल्मीकिरामायणम्

राजकर्तव्यं शरणागतरक्षणम्

[1]श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्यायं स्वमांसैश्च निमन्त्रितः ॥
[2]स हि तं प्रतिजग्राह भार्याहर्तारमागतम् ।
कपोतो वानरश्रेष्ठ किं पुनर्मद्विधो जनः ॥
[3]ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा ।
शृणु गाथाः पुरा गीता धर्मिष्ठाः सत्यवादिना ॥
[4]बद्धाञ्जलिपुटं दीनं याचन्तमपराधिनम् ।
न हन्याच्छरणं प्राप्तं सतां धर्ममनुस्मरन् ॥

(१) वारा. ५।९३।५ ; वाराकु. ६।१८।२४ पूजि (अर्चि) स्वमांसैश्च (स्वैश्च मांसैर्).

(२) वारा. ५।९३।६ (स तावत् प्रत्यगृह्णात् [?ह्णीत] खगो भार्यानिसूदकम् । कपोतो वानरश्रेष्ठ किमुताहं विभीषणम् ॥ ); वाराकु. ६।१८।२५.

(३) वारा. ५।९३।७ ; वाराकु. ६।१८।२६ उत्तरार्धे (शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिनीम् ॥ ).

(४) वारा. ५।९३।८ ; वाराकु. ६।१८।२७ न्तमपराधिनम् (न्तं शरणागतम् ) उत्तरार्धे (न हन्यादानृशंस्यार्थमपि शत्रुं परंतप ॥ ).

[1]आर्तो वा यदि वा त्रस्तः परेषां शरणागतः ।
अपि प्राणान्परित्यज्य रक्षितव्यः कृतात्मना ॥
[2]स चेद्भयाद्वा मोहाद्वा द्वेषाद्वाऽपि न रक्षति ।
स्वयं शक्त्या यथान्यायं तमाहुः पुरुषाधमम् ॥
[3]विनष्टः पश्यतो यस्य रक्षितुः शरणागतः ।
आदाय सुकृतं तस्मात् सर्वं गच्छत्यरक्षितः ॥
[4]एष दोषो महानत्र प्रपन्नानामरक्षणे ।
अस्वर्ग्यश्चायशस्यश्च बलवीर्यविनाशनः ॥
[5]सुपर्याप्तं विसृष्टस्य नाश्वमेधस्य तत्फलम् ।
यत्फलं जातसंत्रासे रक्षिते शरणागते ॥

(१) वारा. ५।९३।९ ; वाराकु. ६।१८।२८ त्रस्तः (दृप्तः) अपि (अरिः).

(२) वारा. ५।९३।१० ; वाराकु. ६।१८।२९ द्वेषा (कामा) उत्तरार्धे (स्वया शक्त्या यथासत्त्वं तत्पापं लोकगर्हितम् ॥ ).

(३) वारा. ५।९३।११ ; वाराकु. ६।१८।३० यस्य रक्षितुः (तस्यारक्षिणः) तस्मात् (तस्य) गच्छत्य (गच्छेद).

(४) वारा. ५।९३।१२ ; वाराकु. ६।१८।३१-३२ एष (एवं) उत्तरार्धे (अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम् ॥ ).

(५) वारा. ५।९३।१३.

## प्रकृतयः- स्वामी

### वाल्मीकिरामायणम्

सेनाप्रियराजगुणाः

**[1]हीनं क्लीबगुणैः सर्वैररिहन्तारमाहवे ।
सेना भजति राजानमेतद्भूमिपतेर्व्रतम् ॥**

**[1]धर्मार्थविदुषं वीरमतिदातारमार्जवम् ।
योधा भजन्ति राजानमेतद् भूमिपतेर्व्रतम् ॥**

क्लीब ( रति ) ररि ( रमि ) उत्तरार्धे ( त्यजन्ति नृपतिं सैन्याः संविग्नास्तं नरेश्वरम् ॥ ).

(१) वारा. ६।१०३।१० ; वाराकु. ६।१२५।९

(१) वारा. ६।१०३।११.

## उपायाः- दानम्

### नीतिवाक्यामृतम्

बहुलाभार्थमल्पदानं श्रेयः

**[1]अल्पव्ययभयात् सर्वनाशं करोति मूर्खः ॥**

अथ मूर्खस्य स्वरूपमाह— अल्पेति । यो मर्त्यो मूर्खो भवति स स्वल्पव्ययभयात् सर्वनाशं करोति । एतदुक्तं भवति— यो बलवता स्नेहेन याचितः स्वल्पं न प्रयच्छति स सर्वस्वं तस्मै ददाति । यतो बलात्कारेण भूभुजा गृह्यते । तथा च वल्लभदेवः— 'हीनो नृपोऽल्पं महते नृपाय यायाचितो नैव ददाति साम्ना । कदर्यमाणेन ददाति खारिं तेषां स चूर्णस्य पुनर्ददाति ॥ ' । नीवाटी.

**को नाम कृतधीः शुल्कभयाद् भाण्डं परित्यजति ॥**

अथ मन्दमतेः स्वरूपमाह— क इति । नाम अहो, कः पुरुषः कृतधीः बुद्धिमान् शुल्कभयात् दानभीतेः भाण्डं वर्भरं(?) परित्यजति ? यो नष्टबुद्धिर्भवति तस्य (?स) एवं करोति, नो विज्ञः । तथा च कौशिकः— ' यस्य बुद्धिर्भवेत् काचित् स्वल्पाऽपि हृदये स्थिता । न भाण्डं त्यजते सारं स्वल्पदानकृताद् भयात् ॥ ' । नीवाटी.

**स किं व्ययो यो महान्तमर्थं रक्षति ॥**

अथ व्ययस्य स्वरूपमाह— स इति । स किं व्ययः कथ्यते ? येन कृतेन महान् प्रभूतः अर्थः रक्ष्यते । उपकारद्वारेण यो बलवतां क्रियते शेषार्थस्य रक्षार्थमिति । तथा च शौनकः— ' उपचारपरित्राणाद्दत्त्वा वित्तं सुबुद्धयः । बलिनो रक्षयन्ति स्म यच्छेषं गृहसंस्थितम् ॥ ' । नीवाटी.

**पूर्णसरःसलिलस्य हि न परीवाहादपरोऽस्ति रक्षणोपायः ॥**

अथ संपूर्णविभवस्य यद् भवति तदाह— पूर्णसर इति । यथा पूर्णसरोजलस्य परीवाहात् प्रणालात् अपरोऽस्ति न रक्षणोपायः , तथा संपूर्णविभवस्य गृहस्थस्य त्यागादपरो नास्ति वित्तरक्षणोपायः । तथा च विष्णुशर्मा— ' उपार्जितानां वित्तानां त्याग एव हि रक्षणम् । तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ ' । नीवाटी.

**अप्रयच्छतो बलवान् प्राणैः सहार्थं गृह्णाति ॥**

अथ बलवता साम्ना प्रार्थितो यो न ददाति तस्य यद् भवति तदाह— अप्रयच्छत इति । यो बलवता प्रार्थितः साम्ना न प्रयच्छति किंचित्पदार्थं तत्तस्य प्राणैः सह अर्थं गृह्णाति । तथा च भागुरिः— ' बलाढ्यप्रार्थितः साम्ना यो न यच्छति दुर्बलः । किंचिद्वस्तु समं प्राणैस्तत्तस्यासौ हरेद् ध्रुवम् ॥ ' । नीवाटी.

(१) नीवा. ३०।२७-३३.

**बलवति सीमाधिपेऽर्थं प्रयच्छन् विवाहोत्सवगृहगमनादिमिषेण प्रयच्छेत् ॥**

अथ बलवता(? ते) यैरुपायैः प्रदातव्यं तानाह— बलवतीति । सीमाधिपस्य बलवतः दुर्बलेन मिषान्तरेण विवाहोत्सवव्याजेन गृहगमनकारणेन उपचारः कर्तव्यः, येन न तं सर्वं परिहरति । तथा च शुक्रः— 'वृद्ध्युत्सवगृहातिथ्यव्याजैर्देयं बलाधिके । सीमाधिपे सदैवात्र रक्षार्थं स्वधनस्य च ॥' । नीवाटी.

**आमिषमर्थमप्रच्छतोऽनवधिः स्यान्निबन्धः शासनम् ॥**

अथ बलवति सीमाधिपेऽत्यागेऽस्य यद् भवति तदाह — आमिषमिति । किंचिन्मिषान्तरं कृत्वा बलवति सीमाधिपे यो नोपचारं करोति दुर्बलस्तस्य(अनु?) भवेत् । कोऽसौ ? निबन्धः । किंविशिष्टो निबन्धः ? अनवधिः न विद्यते अवधिः परिमाणं यस्य । तस्मात् बलवतः उपचारः कर्तव्यः । तथा च गुरुः— 'सीमाधिपे बलाढ्ये तु यो न यच्छति किंचन । व्याजं कृत्वा स तस्याथ संख्याहीनं समाचरेत् ॥' । नीवाटी.

---

# संघवृत्तम्

## महाभारतम्

गणविश्लेषकारणानि, गणरक्षणविवृद्धिकरा उपायाः

**युधिष्ठिर उवाच—**

**[1]गणानां वृत्तिमिच्छामि श्रोतुं मतिमतां वर ॥**

गणानां शूरजनस्तोमानाम् । नीटी.

**[2]यथा गणाः प्रवर्धन्ते न भिद्यन्ते च भारत ।**
**अरीन् हि विजिगीषन्ते सुहृदः प्राप्नुवन्ति च ॥**

**[3]भेदमूलो विनाशो हि गणानामुपलभ्यते ।**
**मन्त्रसंवरणं दुःखं बहूनामिति मे मतिः ॥**

**[4]एतदिच्छाम्यहं श्रोतुं निखिलेन परंतप ।**
**यथा च ते न भिद्येरंस्तच्च मे ब्रूहि पार्थिव ॥**

**भीष्म उवाच—**

**[1]गणानां च कुलानां च राज्ञां च भरतर्षभ ।**
**वैरसंदीपनावेतौ लोभामर्षौ जनाधिप ॥**

**[2]लोभमेको हि वृणुते ततोऽमर्षमनन्तरम् ।**
**तौ क्षयव्ययसंयुक्तावन्योन्यजनिताश्रयौ ॥**

एकः राजा लोभं वृणुते, गणः तदा असभ्यं न ददातीति अमर्षं वृणुते । नीटी.

**[3]चारमन्त्रबलादानैः सामदानविभेदनैः ।**
**क्षयव्ययभयोपायैः कर्शयन्तीतरेतरम् ॥**

इतरेतरं गणा राजानश्च प्रकर्षन्ति । नीटी.

**[4]तत्र दानेन भिद्यन्ते गणाः संघातवृत्तयः ।**
**भिन्ना विमनसः सर्वे गच्छन्त्यरिवशं भयात् ॥**

---

(१) भा. १२।१०८।६ ; भामु. १२।१०७।६.

(२) भा. १२।१०८।७ ; भामु. १२।१०७।७ अरीन् हि (अरींश्च).

(३) भा. १२।१०८।८ ; भामु. १२।१०७।८ लभ्यते (लक्षये).

(४) भा. १२।१०८।९ ; भामु. १२।१०७।९ ब्रूहि (वद).

(१) भा. १२।१०८।१० ; भामु. १२।१०७।१० च भरतर्षभ (भरतसत्तम) जना (नरा).

(२) भा. १२।१०८।११ ; भामु. १२।१०७।११ न्यजनिताश्रयौ (न्यं च विनाशिनौ).

(३) भा. १२।१०८।१२ ; भामु. १२।१०७।१२ कर्शय (प्रकर्ष).

(४) भा. १२।१०८।१३ ; भामु. १२।१०७।१३ तत्र दा (तत्रादा).

[1]भेदाद् गणा विनश्यन्ति भिन्नाः सूपजपाः परैः ।
तस्मात् संघातयोगेषु प्रयतेरन् गणाः सदा ॥
संघातयोगेन ऐकमत्यप्रयोगेण । नीटी.

[2]अर्था ह्येवाभिगम्यन्ते संघातबलपौरुषात् ।
बाह्याश्च मैत्रीं कुर्वन्ति तेषु संघातवृत्तिषु ॥

[3]ज्ञानवृद्धान् प्रशंसन्तः शुश्रूषन्तः परस्परम् ।
विनिवृत्ताभिसंधानाः सुखमेधन्ति सर्वशः ॥
विनिवृत्ताभिसंधानाः विघटितसंघाः । नीटी.

[4]धर्मिष्ठान् व्यवहारांश्च स्थापयन्तश्च शास्त्रतः ।
यथावत् संप्रवर्तन्तो विवर्धन्ते गणोत्तमाः ॥

[5]पुत्रान् भ्रातॄन् निगृह्णन्तो विनये च सदा रताः ।
विनीतांश्च प्रगृह्णन्तो विवर्धन्ते गणोत्तमाः ॥

[6]चारमन्त्रविधानेषु कोशसंनिचयेषु च ।
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः ॥

[7]प्राज्ञाञ्शूरान्महेष्वासान्कर्मसु स्थिरपौरुषान् ।
मानयन्तः सदा युक्ता विवर्धन्ते गणा नृप ॥

[8]द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु संमूढान् गणानुत्तारयन्ति ते ॥

(१) भा. १२।१०८।१४ ; भामु. १२।१०७।१४ पूर्वार्धे (भेदे गणा विनश्युर्हि भिन्नास्तु सुजयाः परैः ।) योगेषु (योगेन).

(२) भा. १२।१०८।१५ ; भामु. १२।१०७।१५ ह्येवा (श्चैवा) रुषात् (रुषैः).

(३) भा. १२।१०८।१६ ; भामु. १२।१०७।१६ वृद्धान् प्रशंसन्तः (वृद्धाः प्रशंसन्ति).

(४) भा. १२।१०८।१७ ; भामु. १२।१०७।१७ संप्रवर्त (प्रतिपश्य).

(५) भा. १२।१०८।१८ ; भामु. १२।१०७।१८ द्वितीयचरणे (विनयन्तश्च तान् सदा).

(६) भा. १२।१०८।१९ ; भामु. १२।१०७।१९.

(७) भा. १२।१०८।२० ; भामु. १२।१०७।२० महेष्वासान् (महोत्साहान्).

(८) भा. १२।१०८।२१ ; भामु. १२।१०७।२१ गणानुत्ता (गणान् संता).

[1]क्रोधो भेदो भयो दण्डः कर्शनं निग्रहो वधः ।
नयन्त्यरिवशं सद्यो गणान् भरतसत्तम ॥

[2]तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः ।
लोकयात्रा समायत्ता भूयसी तेषु पार्थिव ॥

[3]मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्शन ।
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत ॥

[4]गणमुख्यैस्तु संभूय कार्यं गणहितं मिथः ।
पृथग्गणस्य भिन्नस्य विमतस्य ततोऽन्यथा ।
अर्थाः प्रत्यवसीदन्ति तथाऽनर्था भवन्ति च ॥

[5]तेषामन्योन्यभिन्नानां स्वशक्तिमनुतिष्ठताम् ।
निग्रहः पण्डितैः कार्यः क्षिप्रमेव प्रधानतः ॥

[6]कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः ।
गोत्रस्य राजन् कुर्वन्ति गणसंभेदकारिकाम् ॥

[7]आभ्यन्तरं भयं रक्ष्यं सुरक्ष्यं बाह्यतो भयम् ।
अभ्यन्तराद् भयं जातं सद्यो मूलं निकृन्तति ॥

[8]अकस्मात्क्रोधलोभाद्वा मोहाद्वाऽपि स्वभावजात् ।
अन्योन्यं नाभिभाषन्ते तत्पराभवलक्षणम् ॥

(१) भा. १२।१०८।२२ ; भामु. १२।१०७।२२ कर्शनं (कर्षणं) नयन्त्य (नयन्त).

(२) भा. १२।१०८।२३ ; भामु. १२।१०७।२३.

(३) भा. १२।१०८।२४ ; भामु. १२।१०७।२४ कर्शन (कर्षण).

(४) भा. १२।१०८।२५ ; भामु. १२।१०७।२५–२६ विमत (वितत).

(५) भा. १२।१०८।२६ ; भामु. १२।१०७।२६–२७.

(६) भा. १२।१०८।२७ ; भामु. १२।१०७।२७–२८ उत्तरार्धे (गोत्रस्य नाशं कुर्वन्ति गणभेदस्य कारकम् ॥).

(७) भा. १२।१०८।२८ ; भामु. १२।१०७।२८–२९ रक्ष्यं सुरक्ष्यं (रक्ष्यमसारं) उत्तरार्धे (आभ्यन्तरं भयं राजन् सद्यो मूलानि कृन्तति ॥).

(८) भा. १२।१०८।२९ ; भामु. १२।१०७।२९–३० लोभाद्वा मोहाद्वाऽपि (मोहाभ्यां लोभाद्वाऽपि).

**[1]जात्या च सदृशाः सर्वे कुलेन सदृशास्तथा।**
**न तु शौर्येण बुद्ध्या वा रूपद्रव्येण वा पुनः॥**
**[2]भेदाच्चैव प्रमादाच्च नाम्यन्ते रिपुभिर्गणाः।**
**तस्मात् संघातमेवाऽऽहुर्गणानां शरणं महत्॥**

## कौटिलीयमर्थशास्त्रम्

गणविश्लेषणोपायप्रयोगाः, गणप्रकाराः,
गणस्वायत्तीकरणविधिः

**[3]संघलाभो दण्डमित्रलाभानामुत्तमः। संघा हि संहतत्वादधृष्याः परेषाम्।ताननुगुणान् भुञ्जीत सामदानाभ्याम्। विगुणान् भेददण्डाभ्याम्॥**

अथ संघवृत्तं नामैकादशमधिकरणमारभ्यते। विजिगीषुभूमौ तदन्तरभूमौ वा वास्तव्यानां प्रत्येकक्षुद्रत्वेऽपि संघीभावासादितशक्तीनां वार्ताशस्त्रोपजीविनामभटानामेव स्वायत्तीकरणोपाया अस्मिन्नधिकरणे सूत्रद्वयेनाभिधीयन्ते। तत्र प्रथमं 'भेदोपादानानि' इति सूत्रम्। भेदानां संघविश्लेषोपायानाम् उपादानानि प्रयोगाः उच्यन्ते इति सूत्रार्थः।

संघलाभ इत्यादि। संघस्य यथोक्तरूपस्य मुख्याधिष्ठितस्य लाभः सहायत्वेन प्राप्तिः दण्डमित्रलाभानाम् उत्तमः दण्डमित्रोभयलाभा ये बहुरूपास्तेषां मध्ये प्रशस्तः। सैन्यत्वेन मित्रत्वेन चोपयोक्तुं योग्यत्वादित्यभिप्रायः। अस्त्वेवं संघलाभो दण्डमित्रोभयलाभप्रकारः कश्चित्, तस्य कथं तदुत्तमत्वम्? तत्राऽऽह– संघा हीति। ते हि संहतत्वात् संघातासादितशक्तित्वात् अधृष्याः परेषां शत्रूणामजय्याः। यद्यपि भृतादिभटानामपि संहतत्वमस्ति, तथाऽपि तत् अन्यकारितम्, संघस्य तु तत् स्वोत्साहकारितमित्यन्यापेक्षाया शक्तिमत्तरमिति भावः। तानिति। संघान् अनुगुणान् अविरुद्धान् सामदानाभ्यां भुञ्जीत स्वायत्तीकुर्यात्। विगुणान् प्रतिकूलान् भेददण्डाभ्याम्। भुञ्जीतेति संबध्यते। श्रीमूला.

**काम्बोजसुराष्ट्रक्षत्रियश्रेण्यादयो वार्ताशस्त्रोपजीविनः। लिच्छिविकवृजिकमल्लकमद्रककुकुरकुरुपाञ्चालादयो राजशब्दोपजीविनः॥**

के ते संघिन इत्याह–– काम्बोजेत्यादि। काम्बोजेषु सुराष्ट्रेषु च जनपदविशेषयोर्याः क्षत्रियश्रेण्यस्तदादयः। आदिग्रहणात् वैश्यादिश्रेण्योऽपि गृह्यन्ते। तदन्तर्गता जना इत्यर्थः। वार्ताशस्त्रोपजीविनः। लिच्छिविकेत्यादि। लिच्छिविकादिदेशसप्तकवास्तव्याः, आदिपदादन्धकवृष्ण्यादयश्च राजशब्दोपजीविनः राजनाममात्रं वहन्तः संघमुपजीवन्तीत्यर्थः। श्रीमूला.

**सर्वेषामासन्नाः सत्रिणः संघानां परस्परन्यङ्गद्वेषवैरकलहस्थानान्युपलभ्य क्रमाभिनीतं भेदमुपचारयेयुः– 'असौ त्वा विजल्पति' इति। एवमुभयतः। बद्धरोषाणां विद्याशिल्पद्यूतवैहारिकेष्वाचार्यव्यञ्जना बालकलहानुत्पादयेयुः। वेशशौण्डिकेषु वा प्रतिलोमप्रशंसाभिः संघमुख्यमनुष्याणां तीक्ष्णाः कलहानुत्पादयेयुः। कृत्यपक्षोपग्रहेण वा॥**

सर्वेषामिति। उक्तानां वार्ताशस्त्रोपजीविनां राजशब्दोपजीविनां चेत्युभयविधानां संघानाम् आसन्नाः केनापि निमित्तेनाऽऽसत्तिं प्राप्ताः भूत्वा, सत्रिणः परस्परन्यङ्गद्वेषवैरकलहस्थानानि– परस्परस्य न्यङ्गं दोषवचनम्, द्वेषः वाक्पारुष्यादिकृतो रोषः, वैरम् अपकारादिनिमित्तं द्रोहचिन्तनम्, कलहस्थानं परप्रार्थितैकामिषप्रार्थित्वादि, एतानि उपलभ्य छिद्रभूतान्यासाद्य क्रमाभिनीतं क्रमेणाभिमुखतां नीतं संघिनं भेदं विश्लेषम् उपचारयेयुः प्रापयेयुः। कथमिति? असौ त्वा त्वां विजल्पति अपवदति इति। उक्त्वेति शेषः। एवमुभयत इति। अनेन प्रकारेण भेद्यावुभावपि भेदमुपचारयेयुरित्यर्थः। बद्धरोषाणामिति। अन्योन्यरूढामर्षाणां संघिनां विद्याशिल्पद्यूतवैहारिकेषु– विद्या आन्वीक्षिक्यादिः, शिल्पम् अस्त्रशिक्षादि, द्यूतं

(१) भा. १२।१०८।३०; भामु. १२।१०७।३०–३१ तु शौर्येण (चोद्योगेन).

(२) भा. १२।१०८।३१; भामु. १२।१०७।३१–३२ मादाच्च नाम्य (दानाच्च भिद्य).

(३) कौ. ११।१.

प्रसिद्धम्, वैहारिकं प्रश्नोत्तरादि, एतेषु विषये आचार्यव्यञ्जनाः आचार्यवेषाः सत्रिणः बालकलहान् बालानां पुत्राणामध्याप्यमानानां कलहान् उत्पादयेयुः। 'असौ त्वामज्ञमाचष्ट' इत्यादिभिर्भेदवचनैरित्यभिप्रायः। वेशशौण्डिकेषु वेति। वेशशब्द इह वेश्यावृत्तिः। वेश्यासु सुराविक्रयिषु च। प्रसक्तानामिति शेषः। संघमुख्यमनुष्याणां संघेषु ये मुख्यपुरुषास्तेषां प्रतिलोमप्रशंसाभिः प्रतीपश्लाघाभिः अर्थात् स्वप्रेरितवेश्याशौण्डिककृताभिः तीक्ष्णाः कलहान् परस्परवाक्कलहान् उत्पादयेयुः। कृत्यपक्षोपग्रहेण वेति। संघमुख्यमनुष्याणां ये कृत्याः क्रुद्धलुब्धभीतावमानिताः तेषामुपग्रहेण स्वानुकूलीकरणेन वा कलहान् उत्पादयेयुः। श्रीमूला.

**कुमारकान् विशिष्टच्छन्दिकया हीनच्छन्दिकानुत्साहयेयुः॥**

हीनच्छन्दिकान्– इष्टभोग्यवृत्तिः छन्दिका, सा हीना अल्पा प्रभूतवृत्त्यपेक्षया येषां तांस्तथाभूतान् कुमारकान् संघेषु मुख्येभ्यः किंचिदवराः राजपुत्रकल्पाः कुमारकाः तान् विशिष्टच्छन्दिकया विशिष्टया उत्कृष्टया छन्दिकया तत्तुल्येन कुमारान्तरेणानुभूयमानया उत्साहयेयुः अमर्षवतः कुर्युः। 'समाने कुमारत्वे त्वं हीनवृत्तिरन्यो विशिष्टवृत्तिः' इत्याद्युक्त्वेति भावः। श्रीमूला.

**विशिष्टानां चैकपात्रं विवाहं हीनेभ्यो वारयेयुः। हीनान् वा विशिष्टैरेकपात्रे विवाहे वा योजयेयुः। अवहीनान् वा तुल्यभावोपगमने कुलतः पौरुषतः स्थानविपर्यासतो वा व्यवहारमवस्थितं वा प्रतिलोमस्थापनेन निशामयेयुः। विवादपदेषु वा द्रव्यपशुमनुष्याभिघातेन रात्रौ तीक्ष्णाः कलहानुत्पादयेयुः। सर्वेषु च कलहस्थानेषु हीनपक्षं राजा कोशदण्डाभ्यामुपगृह्य प्रतिपक्षवधे योजयेत्, भिन्नानपवाहयेद् वा। एकदेशे समस्तान् वा निवेश्य भूमौ चैषां पञ्चकुलीं दशकुलीं वा कृष्यां निवेशयेत्। एकस्था हि शस्त्रग्रहणसमर्थाः स्युः। समवाये चैषामत्ययं स्थापयेत्॥**

विशिष्टानां चेति। उत्कृष्टानाम् एकपात्रम् एकपङ्क्तिभोजनं विवाहं कन्यादानादानसंबन्धं हीनेभ्यः वारयेयुः। वारणे ह्युभयेषां विरोधः स्यादिति भावः। भेदप्रकारान्तरमाह– हीनान् वेति। निकृष्टान् विशिष्टैः सह एकपात्रे विवाहे वा योजयेयुः निर्बन्धवतः कुर्युरित्यर्थः। तथाकरणे हि विशिष्टास्तन्मतमननुवर्तमानास्तेभ्यो भिन्नाः स्युरित्यभिप्रायः। कुलेन पौरुषेण स्थानभेदेन वा हीनान् विशिष्टतुल्यत्वाङ्गीकारणायां निर्बन्धवतः कुर्युरित्याह– अवहीनान् वेत्यादि। व्यवहारमवस्थितमित्यादि। संघेषु यं कमपि व्यवहारमुत्पन्नं तन्मुख्यकृतनिर्णयमित्यर्थः, प्रतिलोमस्थापनेन निर्णयविपरीतन्यायसमर्थनेन निशामयेयुः बोधयेयुः अर्थाद् व्यवहर्तारम्। विवादपदेषु वेति। तीक्ष्णा रात्रौ द्रव्यपशुमनुष्याभिघातेन संघिसंबन्धिनां द्रव्यादीनामभिघातेन स्वयंकृतेन संघिपरस्परकृततया मिथ्याख्यापितेनेत्यर्थः, विवादपदेषु कलहान् साहसादिविवादपदप्रयोजकान् परस्परकलहान् उत्पादयेयुः। ईदृशेषु सर्वप्रकारेषु कलहस्थानेषु राजा हीनपक्षं हिरण्यादिदानेन दण्डेन च स्वपक्षे प्रवेश्य प्रतिपक्षवधे प्रेरयेत्, भिन्नान् संघादन्यत्र नयेदित्याह– सर्वेषु चेत्यादि। ये भिन्नास्तान् सर्वान् वा एकस्मिन् देशे निवेश्य एषां भूमौ कुलपञ्चकं कुलदशकं वा कृषिकर्मणि नियोजयेदित्याह– एकदेश इत्यादि। समस्तानामेकस्थानस्थितेः फलमाह– एकस्था हीत्यादि। अविप्रकीर्णा हि शस्त्रग्रहणकाले लघुसमुत्थाः स्युरिति भावः। समवाये चैषामिति। अपवाहितनिवेशितानां संघिनां संघीभावे अत्ययं दण्डं स्थापयेत्। श्रीमूला.

**राजशब्दिभिरवरुद्धमवक्षिप्तं वा कुल्यमभिजातं राजपुत्रत्वे स्थापयेत्। कार्तान्तिकादिश्चास्य वर्गो राजलक्षण्यतां संघेषु प्रकाशयेत्। संघमुख्यांश्च धर्मिष्ठानुपजपेत् – 'स्वधर्मममुष्य राज्ञः पुत्रे भ्रातरि वा प्रतिपद्यध्वम्' इति। प्रतिपन्नेषु कृत्यपक्षोपग्रहार्थमर्थं दण्डं च प्रेषयेत्। विक्रमकाले शौण्डिकव्यञ्जनाः पुत्रदारप्रेतापदेशेन 'नैषेचनिकम्' इति मदनरसयुक्तान् मद्यकुम्भाञ्शतशः प्रयच्छेयुः॥**

राजशब्दोपजीविनां संघविश्लेषणोपायमाह— राजशब्दिभिरिति । राजनामधारकैर्लिच्छिविकादिभिः अवरुद्धम् अवक्षिप्तं वा परिभूतं वा कुल्यं कुलोत्पन्नम् अभिजातं गुणवन्तं राजपुत्रत्वे स्थापयेत् 'असौ राजपुत्रः' इति कल्पयेत् । कार्तान्तिकादिश्च दैवज्ञसामुद्रिकादिश्च वर्गः अस्य राजपुत्रत्वे स्थापितस्य राजलक्षण्यतां राजलक्षणयुक्तत्वं संघेषु राजशब्दयधिष्ठितेषु प्रकाशयेत् । संघमुख्यांश्च धर्मिष्ठान् उपजपेत् । कथमिति ? अमुष्य राज्ञः पुत्रे भ्रातरि वा राजशब्दयवरुद्धे विषये स्वधर्मम् अवरोधादिक्लेशनिवारणलक्षणं प्रतिपद्यध्वं स्वीकुरुध्वम् इति अनेन प्रकारेण । प्रतिपन्नेषु अभ्युपेतोपजापेषु संघमुख्येषु कृत्यपक्षोपग्रहार्थं कृत्यानां क्रुद्धलुब्धभीतादीनां स्वपक्षेऽनुप्रवेशनार्थम् अर्थं द्रव्यं दण्डं च सैन्यं च प्रेषयेत् । अनेनोपायेन राजशब्दिनः संघेभ्यो भिन्ना भवेयुरित्यभिप्रायः । विक्रमकाल इति । विक्रमावसरे प्राप्ते शौण्डिकव्यञ्जनाः सौरिकवेषाः सत्रिणः पुत्रदारप्रेतापदेशेन पुत्राणां दाराणां च स्वीयानां मरणं निमित्तं कल्पयित्वेत्यर्थः, नैषेचनिकमिति मृतोद्देशेन देयमिदं मद्यं नैषेचनिकाख्यमिति, वदन्त इति शेषः, मदनरसयुक्तान् मदकरविषयुक्तान् मद्यकुम्भान् शतशः प्रयच्छेयुः दद्युः । अर्थात् संघेभ्यः । श्रीमूला.

**चैत्यदैवतद्वाररक्षास्थानेषु च सत्रिणः समयकर्मनिक्षेपं सहिरण्याभिज्ञानमुद्राणि हिरण्यभाजनानि च प्ररूपयेयुः । दृश्यमानेषु च संघेषु 'राजकीयाः' इत्यावेदयेयुः । अथावस्कन्दं दद्यात् ॥**

उपायान्तरमाह— चैत्यदैवतद्वाररक्षास्थानेषु चेति । देवालयदैवतद्वारेषु रक्षास्थानेषु च सत्रिणः समयकर्मनिक्षेपं संघपतिना सह संवित्करणार्थं निक्षेपद्रव्यं सहिरण्याभिज्ञानमुद्राणि हिरण्यैरभिज्ञानमुद्रया च सहितानि हिरण्यभाजनानि च प्ररूपयेयुः संघा यथा जानीयुस्तथा प्रकाशयेयुः । दृश्यमानेषु संघेषु, 'कस्यैते हिरण्यभाराः ?' इति साक्षात् पृच्छत्स्विति शेषः, 'राजकीयाः' इति आवेदयेयुः कथयेयुः । तत्त्वगोपनाभिनयार्थमिति भावः । इह 'राजकीयाः' इत्यस्य स्थाने 'विक्रीताः' इति पाठो दृश्यते । स तु न हृद्यः । अथ एवं भेदसंविधानानन्तरम् अवस्कन्दं दद्यात् संघस्य बलाक्रमणं कुर्यात् ।

श्रीमूला.

**संघानां वा वाहनहिरण्ये कालिके गृहीत्वा संघमुख्याय प्रख्यातं द्रव्यं प्रयच्छेत् । तदेषां याचिते 'दत्तममुष्मै मुख्याय' इति ब्रूयात् ॥**

अन्यं भेदोपायमाह— संघानां वेति । तेषां वाहनहिरण्ये वाहनं हिरण्यं च कालिके गृहीत्वा— नियतकालप्रतिदेयमृणं कालिकम्, तत्त्वेनाऽऽदाय संघमुख्याय द्रव्यं कालप्रत्यर्पणीयं हिरण्यादि प्रख्यातं प्रयच्छेत् बहुजनसमक्षं प्रत्यर्पयेत् । तदिति । तत् द्रव्यम् एषां संघानां याचिते प्रत्यर्पयेति संघैर्याच्ञायां कृतायामित्यर्थः, 'दत्तममुष्मै मुख्याय' इति ब्रूयात् । तेन हि मुख्यसंघयोर्भेदो भवेदिति भावः । श्रीमूला.

**एतेन स्कन्धावाराटवीभेदो व्याख्यातः ॥**

य एष राजशब्द्यादिभेदने उपायविधिरुक्तस्तमेव स्कन्धावारप्रविष्टाटविकभेदनेऽप्यतिदिशति— एतेनेत्यादि ।

श्रीमूला.

**संघमुख्यपुत्रमात्मसंभावितं वा सत्री ग्राहयेत् —'अमुष्य राज्ञः पुत्रस्त्वं शत्रुभयादिह न्यस्तोऽसि' इति । प्रतिपन्नं राजा कोशदण्डाभ्यामुपगृह्य संघेषु विक्रमयेत् । अवाप्तार्थस्तमपि प्रवासयेत् ॥**

'उपांशुदण्डः' इति सूत्रम् । रहोवधः उच्यते इति सूत्रार्थः ।

संघमुख्यपुत्रमिति । तम् आत्मसंभावितम् 'अहं महान्' इत्यहंकारवन्तं सत्री ग्राहयेत् बोधयेत् । कथमिति ? 'अमुष्य राज्ञः विजिगीषोः पुत्रः त्वं शत्रुभयात् इह संघे न्यस्तः असि' इति । प्रतिपन्नमिति । अभ्युपगतोपजापं तं राजा कोशदण्डाभ्याम् आत्मदत्ताभ्याम् उपगृह्य ससहायं कृत्वा संघेषु विक्रमयेत् । अवाप्तार्थ इत्यादि । संघमुख्यपुत्रविक्रमणेन संघनिग्रहरूपे स्वार्थे सिद्धे तमपि हन्यादित्यर्थः ।

श्रीमूला.

**बन्धकीपोषकाः प्लवकनटनर्तकसौभिका वा प्रणिहिताः स्त्रीभिः परमरूपयौवनाभिः संघमुख्यानुन्मादयेयुः। जातकामानामन्यतमस्य प्रत्ययं कृत्वाऽन्यत्र गमनेन प्रसभहरणेन वा कलहानुत्पादयेयुः। कलहे तीक्ष्णाः कर्म कुर्युः– 'हतोऽयमित्थं कामुकः' इति॥**

प्रकारान्तरमाह– बन्धकीपोषका इति। कुलटापोषकाः प्लवकादयो वा व्याख्यातचराः प्रणिहिताः गूढपुरुषकर्मणि व्यापारिताः स्त्रीभिः परमरूपयौवनाभिः संघमुख्यान् उन्मादयेयुः मोहयेयुः। जातकामानामिति। तथाभूतानां संघमुख्यानाम् अन्यतमस्य प्रत्ययं कृत्वा तत्कामितस्त्रीसमागमसंकेतविश्वासं जनयित्वा अन्यत्र ततोऽपरस्मिन् संघमुख्ये गमनेन प्रसभहरणेन वा अर्थात् 'त्वदभिसरणप्रस्थितामसावन्यः संघमुख्यो बलादपहृतवान्' इति मिथ्याकल्पितेन कलहान् उत्पादयेयुः। कलह इत्यादि। संघमुख्यमिथःकलहे प्रवृत्ते तीक्ष्णाः कर्म संघमुख्यरहोवधलक्षणं कुर्युः, स्वयं हत्वा च 'कामुकोऽयं प्रतिकामुकेनैवं हतः' इति ख्यापयेयुरित्यर्थः। श्रीमूला.

**विसंवादितं वा मर्षयमाणमभिसृत्य स्त्री ब्रूयात्– 'असौ मां मुख्यस्त्वयि जातकामां बाधते। तस्मिञ्जीवति नेह स्थास्यामि' इति घातमस्य प्रयोजयेत्॥**

विसंवादमसहमाने संघमुख्ये विधिरेष उक्तः। सहमाने विधिमाह– विसंवादितं वा मर्षयमाणमित्यादि। अभिसृत्य स्वयमुपगम्य। मुख्यः संघमुख्यः। बाधते वारयति। इह त्वदन्तिके। इति, उक्त्वेति शेषः।

श्रीमूला.

**प्रसह्यापहृता वा वनान्ते क्रीडागृहे वाऽपहर्तारं रात्रौ तीक्ष्णेन घातयेत्। स्वयं वा रसेन। ततः प्रकाशयेत् – 'अमुना मे प्रियो हतः' इति॥**

प्रकारान्तरमाह – प्रसह्यापहृता वेति। एकेन कृतसंकेता तदन्येन बलादपहृता वा वनान्ते वनसमीपे क्रीडागृहे वा संकेतस्थानभूते अपहर्तारं रात्रौ गूढमित्यर्थः, तीक्ष्णेन घातयेत्। स्वयं वा रसेन पानादौ विषमिश्रणेन घातयेत्। ततः घातानन्तरं प्रकाशयेत् प्रख्यापयेत्। कथमिति? अमुना प्रतिकामुकेन मे प्रियो हत इति।

श्रीमूला.

**जातकामं वा सिद्धव्यञ्जनः सांवननिकीभीरोषधीभिः संवास्य रसेनातिसंधायापगच्छेत्। तस्मिन्नपक्रान्ते सत्रिणः परप्रयोगमभिशंसेयुः॥**

जातकामं वेति। स्त्रियामुत्पन्नोत्कण्ठं सिद्धव्यञ्जनः सिद्धवेषः सत्री सांवननिकीभिः वशीकरणप्रयोजनाभिः ओषधीभिः संवास्य रसेन विषेण मिश्रिताभिरोषधीभिरित्यर्थः, अतिसंधाय हत्वा अपगच्छेत्। तस्मिन् सिद्धव्यञ्जने अपक्रान्ते हत्वाऽपगते सति सत्रिणः परप्रयोगमभिशंसेयुः प्रतिकामुकप्रेरितः स सिद्ध इति प्रख्यापयेयुः।

श्रीमूला.

**आढ्यविधवा गूढाजीवा योगस्त्रियो वा दायनिक्षेपार्थं विवदमानाः संघमुख्यानुन्मादयेयुरिति। अदितिकौशिकस्त्रियो नर्तकीगायना वा। प्रतिपन्नान् गूढवेश्मसु रात्रिसमागमप्रविष्टांस्तीक्ष्णा हन्युर्बद्ध्वा हरेयुर्वा॥**

प्रकारान्तरमाह– आढ्यविधवा इति। ताः, गूढाजीवाः सधवा अपि दारिद्र्यवशात् व्यभिचारेण या जीवन्ति ताः, योगस्त्रियो वा कपटस्त्रियो वा स्त्रीवेषाः पुरुषा वेत्यर्थः, दायनिक्षेपार्थे दायार्थे निक्षेपार्थे च विवदमानाः संघमुख्यान् उन्मादयेयुः विवादनिर्णयापदेशेन संघमुख्यानुपगम्य व्यामोहयेयुरित्यर्थः। अदितिकौशिकस्त्रिय इति। अदितयः नानादेवालेख्यप्रदर्शनवृत्तयः स्त्रियः कौशिकस्त्रियः व्यालग्राहिस्त्रियश्च नर्तकीगायना वा संघमुख्यान् उन्मादयेयुः। प्रतिपन्नानिति। अभ्युपेतसमागमसंकेतान् संघमुख्यान् गूढवेश्मसु रात्रिसमागमप्रविष्टान् रात्रौ स्त्रीसमागमार्थं प्रविष्टान्। 'प्रविष्टाः' इति पाठे तीक्ष्णविशेषणं व्याख्येयम्। तीक्ष्णाः हन्युः बद्ध्वा हरेयुर्वा।

श्रीमूला.

**सत्री वा स्त्रीलोलुपं संघमुख्यं प्ररूपयेत्– 'अमुष्मिन् ग्रामे दरिद्रकुलमपसृतम्। तस्य स्त्री राजार्हा। गृहाणैनाम्' इति। गृहीतायामर्ध-**

**मासान्तरं सिद्धव्यञ्जनो दूष्यः संघमुख्यमध्ये प्रक्रोशेत्– 'असौ मे मुख्यां भार्यां स्नुषां भगिनीं दुहितरं वाऽधिचरति' इति। तं चेत् संघो निगृह्णीयात्, राजैनमुपगृह्य विगुणेषु विक्रमयेत्। अनिगृहीते सिद्धव्यञ्जनं हि रात्रौ तीक्ष्णाः प्रवासयेयुः। ततस्तद्व्यञ्जनाः प्रक्रोशेयुः – 'असौ ब्रह्महा ब्राह्मणीजारश्च' इति ॥**

प्रकारान्तरमाह – सत्री वेति। सः स्त्रीलोलुपं स्त्रीचपलं संघमुख्यं प्ररूपयेत् आवेदयेत्। कथमिति? अमुष्मिन् ग्रामे दरिद्रकुलम् अपसृतं वृत्त्यर्थमन्यदेशं गतम्, तस्य कुलप्रधानस्य स्त्री राजार्हा रूपादिना राजोपभोगयोग्या, एनां गृहाण भार्यात्वेन स्वीकुरुष्व इति। गृहीतायामिति। तथा तस्यां स्वीकृतायाम् अर्धमासान्तरम् अर्धमासः अन्तरं व्यवधानकालो यस्मिन् कर्मणि तत् यथा भवति तथा सिद्धव्यञ्जनः दूष्यः राजावग्रहचारी संघमुख्यमध्ये संघमुख्यानां मध्ये प्रक्रोशेत् आक्रन्देत्। कथमुक्त्वा? असौ संघमुख्यविशेषः मे मुख्यां भार्यां स्नुषां पुत्रभार्यां भगिनीं दुहितरं वा अधिचरति बलात् स्वीकृत्योपभुङ्क्ते इत्युक्त्वा। तमिति। तमधिचरन्तं निवेदितं मुख्यं संघः निगृह्णीयाच्चेत्, राजा एनं निगृह्यमाणं संघमुख्यम् उपगृह्य स्वपक्षेऽनुप्रवेश्य विगुणेषु स्वप्रतिकूलेषु विक्रमयेत् उद्योजयेत्। अनिगृहीत इति। तस्मिन् संघमुख्ये संघेनाकृतनिग्रहे सति सिद्धव्यञ्जनं सिद्धवेषं प्रक्रोष्टारं तं दूष्यं रात्रौ तीक्ष्णाः प्रवासयेयुः हन्युः। तत इति। अनन्तरं तद्व्यञ्जनाः सिद्धव्यञ्जनाः प्रक्रोशयेयुः। कथमिति? असौ अनिगृहीतः संघमुख्यः ब्रह्महा सिद्धब्राह्मणस्य हन्ता ब्राह्मणीजारश्च सिद्धब्राह्मणभार्याजारश्च इति।

श्रीमूला.

**कार्तान्तिकव्यञ्जनो वा कन्यामन्येन वृतामन्यस्य प्ररूपयेत् – 'अमुष्य कन्या राजपत्नी राजप्रसविनी च भविष्यति। सर्वस्वेन प्रसह्य वैनां लभस्व' इति। अलभ्यमानायां परपक्षमुद्धर्षयेत्। लब्धायां सिद्धः कलहः ॥**

पक्षान्तरमाह– कार्तान्तिकव्यञ्जनो वेति। दैवज्ञवेषो वा कन्याम् अन्येन संघमुख्येष्वन्यतमेन वृताम् अन्यस्य प्ररूपयेत् बोधयेत्। कथमिति? अमुष्य कन्या अन्येन वृता राजपत्नी राजप्रसविनी च भविष्यति यमियं पतित्वेन वरयति यं च प्रसूते तावुभौ राजभावं प्राप्स्यतः, सर्वस्वेन सर्वस्वदानेन प्रसह्य वा बलात्कारेण वा एनां लभस्व स्वायत्तीकुरुष्व इति। अलभ्यमानायामिति। एवं बोधितेन संघमुख्येन कृतयत्नेन तस्यामनासाद्यमानायां सत्यां परपक्षं परस्य पूर्ववरयितुः पक्षम् उद्धर्षयेत् उत्साहयेत् उत्तरकालकन्यायाचित्रा भग्नाशेन सह विरोधयेत्। लब्धायां सत्यां सिद्धः कलहः, अर्थात् तत्पूर्ववरयितुः संघमुख्यस्य पश्चात् तत्सकाशात् तां लब्धवतश्च।

श्रीमूला.

**भिक्षुकी वा प्रियभार्यं मुख्यं ब्रूयात्– 'असौ ते मुख्यो यौवनोत्सिक्तो भार्यायां मां प्राहिणोत्। तस्याहं भयाल्लेख्यमाभरणं गृहीत्वाऽऽगताऽस्मि। निर्दोषा ते भार्या। गूढमस्मिन् प्रतिकर्तव्यम्। अहमपि तावत् प्रतिपत्स्यामि' इति। एवमादिषु कलहस्थानेषु स्वयमुत्पन्ने वा कलहे तीक्ष्णैरुत्पादिते वा हीनपक्षं राजा कोशदण्डाभ्यामुपगृह्य विगुणेषु विक्रमयेदपवाहयेद् वा ॥**

प्रकारान्तरमाह – भिक्षुकी वेति। सा वा प्रियभार्यं मुख्यं संघमुख्यम् ब्रूयात्। कथमिति? असौ मुख्यः यौवनोत्सिक्तः यौवनदृप्तः ते भार्यायां मां प्राहिणोत् त्वद्भार्यासमागमघटनार्थं मां दूतीं प्रेषितवान्। अहं भयात् तस्य लेख्यं कामलेखम् आभरणं कामप्राभृतरूपं भूषणं च गृहीत्वा आगता अस्मि। निर्दोषा ते भार्या। गूढम् अस्मिन् प्रतिकर्तव्यम् अयं हन्तव्यः। अहमपि तावत् एतद्धननावधिकं कालं प्रतिपत्स्यामि त्वदन्तिकावस्थानलक्षणां प्रतिपत्तिमास्थास्ये इति। तङोऽकरणमनित्यत्वात्। एवमादिष्विति। एवंजातीयेषु कलहस्थानेषु कलहकारणेषु स्वयं गूढपुरुषोपजापं विनैव उत्पन्ने वा तीक्ष्णैरुत्पादिते वा कलहे हीनपक्षं राजा कोशदण्डाभ्यां धनेन सैन्येन च उपगृह्य स्वीकृत्य विगुणेषु स्वप्रतिकूलेषु

विक्रमयेत् उद्योजयेत् अपवाहयेद्वा विक्रमणाशक्तौ स्वविषयान्निर्वासयेद्वा । श्रीमूला.

**संघेष्वेवमेकराजो वर्तेत । संघाश्चाप्येवमेकराजादेतेभ्योऽतिसंधानेभ्यो रक्षयेयुः ॥**

संघेष्विति । तेषु विषये एवम् उक्तेन प्रकारेण एकराजः एको राजा वर्तेत चेष्टेत । एवं वर्तमाने राज्ञि संघानां वृत्तिमाह— संघाश्चापीत्यादि । तेऽपि एवं चेष्टमानान्नृपालात् तदुत्पादितेभ्यो वञ्चनेभ्य आत्मानं रक्षेयुरित्यर्थः । तदेवं संघेषु राज्ञो राज्ञि च संघानां वृत्तिरुक्ता । श्रीमूला.

**संघमुख्यश्च संघेषु न्यायवृत्तिहितः प्रियः ।**
**दान्तो युक्तजनस्तिष्ठेत् सर्वचित्तानुवर्तकः ॥**

अथ संघमुख्यस्य संघेषु वृत्तिमाह— संघमुख्यश्चेति । स च संघेषु विषये न्यायवृत्तिहितः न्याययुक्तया वृत्त्या हितकारी, प्रियः इष्टानुष्ठायी, दान्तः अनुद्धतः, युक्तजनः युक्ताः आत्मना समवेताः स्वचित्तानुवर्तिनो जना यस्य स तथाभूतः, सर्वचित्तानुवर्तकः सर्वसंघिमतानुवर्ती तिष्ठेत् । श्रीमूला.

## नीतिवाक्यामृतम्

### संघातस्य बलीयस्त्वम्

**[१]कृतसंघातविघातोऽरिभिर्विशीर्णयूथो गज इव कस्य न भवति साध्यः ॥**

कृतसंघातविघातोऽरिभिर्भूयः परदेशादागतो यादृग् भवति तत्स्वरूपमाह— कृतेति । यो राजा कृतसंघातविघातोऽरिभिः विहितसैन्यविनाशः शत्रुभिः कस्य साध्यः वशः न भवति ? अपि तु नीचानामपि साध्यो भवति । वनगज इव अरण्यहस्तीव । किंविशिष्टो वनगजः ? विशीर्णयूथः भ्रष्टयूथः । एकाकीत्यर्थः । तथा च नारदः— ' उच्चाटितोऽरिभी राजा परदेशसमागतः । वनहस्तीव साध्यः स्यात् परिग्रहविवर्जितः ॥ ' । नीवाटी.

**विनिःस्रावितजले सरसि विषमोऽपि ग्राहो जलव्यालवत् ॥**

अथ जलव्यालदर्शनेन विनाशपरिग्रहभूतस्य यद् भवति तदाह— विनिःस्राविततेति । यथा विनिःस्रावितजले निःसारितोदके सरसि ह्रदे पुष्टोऽपि ग्राहः जलचरविशेषः जलव्यालसदृशः जलसर्पतुल्यो निर्विषो भवति, तथा राजाऽपि शून्यराष्ट्रकृतो गतदर्पो भवति । तथा च रैभ्यः— ' सरसः सलिले नष्टे यथा ग्राहस्तुलां व्रजेत् । जलसर्पस्य तद्वच्च स्थानहीनो नृपो भवेत् ॥ ' । नीवाटी.

**वनविनिर्गतः सिंहोऽपि शृगालायते ॥**

अथ भूयोऽपि सिंहदृष्टान्तद्वारेण स्थानभ्रष्टस्य नृपस्य स्वरूपमाह— वनेति । यदा वनान्निर्गच्छति सिंहः तदा शृगालायते शृगालसमो नष्टवीर्यो भवति । तथा राजा यदा स्थानभ्रष्टो भवति तदा नष्टवीर्यः स्यात् । तथा च शुक्रः— ' शृगालतां समभ्येति यथा सिंहो वनच्युतः । स्थानभ्रष्टो नृपोऽप्येवं लघुतामेति सर्वतः ॥ ' । नीवाटी.

**नास्ति संघातस्य निःसारता । किं न स्खलयति मत्तमपि वारणं कुथिततृणसंघातः ॥**

अथ संघातस्य माहात्म्यमाह— नास्तीति । नास्ति न विद्यते । काऽसौ? निःसारता दुर्बलत्वम् । कस्य ? संघातस्य । केन दृष्टान्तेन । यतः किं न स्खलयति किं न गतिभङ्गान्वितं करोति ? कम् ? मत्तवारणं मदोन्मत्तहस्तिनम् । कः ? तृणसंघातः तृणसमूहः । तथा च विष्णुशर्मा— ' बहूनामप्यसाराणां समवायो बलाधिकः । तृणैरावेष्ट्यते रज्जुर्यया नागोऽपि बध्यते ॥ ' । नीवाटी.

**संहतैर्बिसतन्तुभिर्दिग्गजोऽपि नियम्यते ॥**

अथ भूयोऽपि संघातमाहात्म्यमाह— संहतैरिति । नियम्यते वशीक्रियते । कोऽसौ ? दिग्गजोऽपि दिङ्नागोऽपि । कैः ? बिसतन्तुभिः मृणालसूत्रैः सूक्ष्मतरैरपि । एवं राजाऽपि बहुपरिवारकापुरुषैर्बहुभिर्युक्तोऽपि बलाढ्यैर्न वशीक्रियतेऽरिभिः । तथा च हारीतः— ' अपि सूक्ष्मतरैर्भृत्यैर्बहुभिर्वश्यमानयेत् । अपि वीर्योत्कटं शत्रुं पद्मसूत्रैर्यथा गजम् ॥ ' । नीवाटी.

---

(१) नीवा. ३०।३४–३८.

## राज्ञो धार्मिककृत्यानि

## राज्ञो विविधानि कर्माणि

### विष्णुधर्मोत्तरपुराणम्

प्रतिमासं कर्तव्योऽभिषेकः, मासविशेषतिथि-
विशेषेषु कर्तव्या देवताविशेषपूजा

**पुष्कर उवाच–**

**[1]राजा तु जन्मनक्षत्रे प्रतिमासं समाचरेत् ।**
**जन्मनः क्षालनं कर्म यत्तत्पूर्वं मयेरितम् ॥**

अथ राज्ञो जन्मनक्षत्रे प्रतिमासमभिषेक उक्तो विष्णुधर्मोत्तरे– राजेति । * राप्र. ११५

**[2]पुष्यस्नानं ततः कुर्यात् प्रतिमासं नराधिपः ।**
**संक्रान्तौ पूजयेत् सूर्यं बालमिन्दुं तथैव च ॥**
**[3]ग्रहं संपूजयेद्राजा निर्गतं रविमण्डलात् ।**
**अगस्त्यस्योदये कार्या तथा पूजा नराधिपैः ॥**

निर्गतम् उदितम् । * राप्र. ११५

**[4]पूजयेच्चतुरो मासान् प्रसुप्तं मधुसूदनम् ।**
**प्रोष्ठपादामले पक्षे पूजयेच्च शतक्रतुम् ॥**

अथ सामान्यतस्तिथिविशेषमासविशेषविहितो देवताविशेषपूजनविधिः । विष्णुधर्मोत्तरे–पूजयेदिति । प्रौष्ठपादः भाद्रपदः । राप्र. ४१५

**[1]नवम्यामाश्वयुक्छुक्ले भद्रकालीं च पूजयेत् ।**
**रवौ स्वातिमनुप्राप्ते कुर्यान्नीराजनं तथा ॥**

**[2]संवत्सरात्कोटिहोमं कुर्याच्च घृतकम्बलम् ।**
**राज्यसंवत्सरग्रन्थौ कुर्यात् तद्रुद्रपूजनम् ॥**

**[3]कर्माण्यथैतानि नराधिपस्य**
**नित्यानि ते राम मयोदितानि ।**
**एतानि कृत्वा विधिवन्नरेन्द्र-**
**श्चिरं समग्रां वसुधां प्रशास्ति ॥**

प्रौष्ठपादामले पक्षे शतक्रतुपूजाऽभिहिता । सा च तत्पक्षीयायामष्टम्यामिन्द्रध्वजोच्छ्रायदिने कर्तव्येत्यभिधास्यते । एवं भद्रकालीपूजानीराजनघृतकम्बला अग्रेऽभिधास्यन्ते । राज्येति । राज्याभिषेकनक्षत्रपूजनं राज्ञो जन्मदिनविहितसंवत्सरग्रन्थिनक्षत्रपूजनं च प्रतिसंवत्सरं कुर्यादित्यर्थः । राप्र. ४१६

---

* राकौ. राप्रवत्.

(१) विध. २।१५२।१; राप्र. ११५ क्षालनं (क्षालकं); राकौ. ३७८ राप्रवत्.

(२) विध. २।१५२।२ पुष्य (पुष्प); राप्र. ११५ धिपः (धिप) क्रान्तौ (क्रान्तं); राकौ. ३७८ क्रान्तौ (क्रान्त्यां).

(३) विध. २।१५२।३; राप्र. ११५; राकौ ३७८.

(४) विध. २।१५२।४ पक्षे (रक्षेत्); राप्र. ४१५ प्रसुप्तं मधुसू. (सुप्तं मधुनिषू) प्रोष्ठ (प्रौष्ठ).

(१) विध. २।१५२।५; राप्र. ४१५ च (तु).

(२) विध. २।१५२।६ कम्ब (केव); राप्र. ४१५ ग्रन्थौ कुर्यात्तद्रुद्र (ग्रन्थ्योः कुर्यात्तदुड्ड).

(३) विध. २।१५२।७; राप्र. ४१६.

## ॥ राजनीतिकाण्डं समाप्तम् ॥